आर्हतमतप्रभाकरस्य
चतुर्थो मयूखः

श्रीमद्वादिदेवसूरिविरचितः

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः

---

पुण्यपत्तनस्थ
ओसवालवंशश्रेष्ठिलाधाजीतनूजमोतीलाल इत्येते टिप्पणी-
निर्णयोद्धातेन च परिष्कृत्य संशोधित ।

यह ग्रंथ श्री रतनाजी रूगनाथजी शिलदर,
(जि सिरोही-मारवाड) वाले तरफ से भेट

वीरसंवत् २४५३

प्रथमेयमङ्कनावृत्ति ।

मूल्य रूप्यकद्वयम् ।

इदं पुस्तकं 'मोतीलाल लाधाजी' इत्येतैः पुण्यपत्तने ( १०९ भवानी पेठ ) प्रकाशितम्। 

तत्र,

पुण्यपत्तने सदाशिवश्रेण्यां 'लक्ष्मण भाऊराव कोकाटे' इत्यनेन स्वकीये 'हनुमान प्रिंटिंग प्रेस' मुद्रणालये मुद्रितम्।



वागड (कच्छ) देशोद्धारक दादा श्री जीतविजयजी महाराजना प्रशिष्य
प्रातःस्मरणीय शान्तमूर्ति परमपूज्य आचार्यदेव
**श्री विजयकनकसूरीश्वरजी महाराज**

श्री

# प्रास्ताविकं किंचित्।

वीर सर्वसुरासुरेन्द्रमहितो वीर बुधा सश्रिता ।
वीरेणाभिहत स्वकर्मनिचयो वीराय नित्य नम ॥
वीरात्तीर्थमिद प्रवृत्तमतुल वीरस्य घोर तपो ।
वीरे श्रीधृतिकीर्तिकान्तिनिचय श्रीवीर ! भद्र दिश ॥ १ ॥

आर्हतमतप्रभाकरस्याथाश्चतुर्थो मयूख स्याद्वादरत्नाकराभिध शासनदेवकृपया प्रकाश्यते। सोऽय ग्रन्थ (८४०००) चतुरशीतिसहस्रग्रन्थसंख्यात्मको निरमायि श्रीवादिदेवसूरिभिरिति कर्णपरम्परात समागता प्रथिति। बहुश प्रयतमानैरस्माभिस्तत्तज्ज्ञानाचार्याणा सूरीणा च कृपया लम्भि सप्तपरिच्छेदात्मको भागो ग्रन्थराजस्यास्य। अस्य मुद्रापितग्रन्थान्तरक्रमेण समुद्र्यते चेदय तर्हि व्याप्नुयाद् द्वादशशतीं पृष्ठानामिति समाचयाम। सपूर्णो ग्रन्थ एकस्मिन् विभागे सग्रथ्यते चेद्भवेद् वरस्थाय पिपठिषूणामनो विभागश समुद्र्य प्रकाशयितुमारब्ध एष। तत्र प्रथमो भाग प्रथमपरिच्छेदात्मको मुद्रित। अय च द्वितीयो विभाग। प्राय इयतैव प्रमाणेन भागान्तराणा प्रत्येक प्रतिमास मुद्रण स्यादिति समीहामहे। ग्रन्थराजोऽय बौद्धयौगादिमताना परामर्शकोऽतोऽवश्यमध्ययनार्हो न केवल स्याद्वादमतानुयायिना किन्तु भिन्नमतस्थानामपि स्याद्वादमतजिज्ञासूनाम्। अत पूर्वमयूखवदस्यापि मूल्याल्पत्वपरिशिष्टविस्तारग्रन्थान्तर्गतपरिचयादिक माविस्तरमादृतम्। सन्ति चास्य ग्रन्थस्य द्वादशपरिशिष्टानि। किन्तु परिशिष्टादिकमन्तिमे विभाग एव मुद्रयितुमर्हम्। अग्रतनपनाणा मुद्रयिष्यमाणा निर्देशस्य पूर्वं कर्तुमशक्यत्वात्। केवल टिप्पण्यादिकमथावसायोपयोगि तत्तत्स्थलेऽधोभागे निरदेशि। प्रतिपन्नपरस्त्यक्ता निर्दिष्टा येषामुपयोग परिशिष्टदर्शनसौकर्याय। अन्यच्च पुस्तकाना वस्त्रात्मक ग्रन्थनमस्तु न पत्रात्मकमिति सूचयन्ति केचिन्महाभागा पर तद्यावित्तो ग्राहकै स्वयमनुष्ठेयम्। अस्माभिस्तथा सपादने येर्नाभिमतस्तदर्थं द्रव्याधिक्यव्ययस्ते मुधर पीडितचेतसो भवेयुरिति यथापूर्वं सरणिरादृता। इतिविनिवेदक।

आर्हतमतप्रभाकरकार्यालय पुण्यपत्तनम्।
वी स २४५३ दीपावलापर्व।

विद्वद्वशवद —
मोतीलाल लाधानी

अस्ति पुस्तकमिदम्

# ॥ अथ द्वितीयः परिच्छेदः ॥

विनयश्रियः

## ॥ नमः श्रीगुरुपादपङ्कजेभ्यः ॥

प्रयत्नेण यन्नेकतानमनस साक्षात्पुरोवर्तिन
नामानशनिनेत्रनिश्चलदृश पश्यन्ति य योगिन ॥
य चाद्यापि परोक्षमानवशतो निश्चिन्वते मादृशा-
स्त सर्वज्ञमुपास्महे प्रतिकृत कल्याणसम्पत्तये ॥ २६५ ॥

प्रतिपादित प्रमाणस्य स्वरूपमथ तत्सख्यामाह—

## तत् द्विभेद प्रत्यक्ष च परोक्ष चेति ॥ १ ॥

यत् स्वपरव्यवसायीत्यादि लक्षणत स्वरूपेण प्रतिपन्न प्रमाण तद्विभेद द्विप्रकारम् । तद्विभेद प्रत्यक्षानुमानप्रकारेणापि सावोधीत्य-भिमत समग्रप्रमाणभेदसङ्ग्राहकपर सख्याप्रकार स्पष्टयन्नाह प्रत्यक्ष च परोक्ष चेति ॥ अक्षमिन्द्रिय प्रति गत कार्यत्वेनाश्रित प्रत्यक्ष "कुगतिप्रादय " इति तत्पुरुष । ततश्च " द्विगुप्राप्तापन्नाल पूर्वगतिसमासेषु " परवल्लिङ्गताप्रतिषेधादभिधेयवल्लिङ्गताया त्रिलिङ्ग प्रत्यक्षशब्द सिद्ध । एव च प्रत्यक्ष ज्ञान प्रत्यक्षो बोध प्रत्यक्षा बुद्धिरित्यादयो व्यपदेशा प्रवर्तन्ते । अक्षमक्ष प्रति वर्तत इति प्रत्यक्ष-मिति त्वव्ययीभावे "अव्ययीभावश्च" इत्यनेन सदा नपुसकत्व स्यात् ।

1 गुरुपादुकाभ्य ' इति भ प पुस्तकयो पाठ । २ अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ता कला इत्यमर १ ४ ११ कला स्यात्काष्ठाशिल्पयो इत्यनेकार्थ २ ४६५ ३ पाणिनिसू २ २ १८ ४ 'अभि प्रति प्रत्यक्ष इति अव्ययीभाव' इति पाणिनि ५ ४ १०७ ५ द्विगुप्राप्तापन्नालपूर्वगतिसमासेषु प्रतिषेधो वाच्य ' इति कात्यायनवार्तिकम् २ ४ २६ ६ पा सू २ । ४ । १८

*मानसप्रत्यक्षे प्रवृत्तिनिमित्तद्वारा प्रत्यक्षव्यपदेशोपपादनम् ।*

नन्वेवं प्रत्यक्षशब्दस्य व्युत्पत्तौ कथमिन्द्रियानाश्रितस्य मानसस्याव[1]ध्यादेश्च प्रत्यक्षव्यपदेशः स्यादिति चेत् । उच्यते । प्रवृत्तिनिमित्तस्य तत्रापि सद्भावात् । अक्षाश्रितत्वं हि प्रत्यक्षशब्दस्य व्युत्पत्तिनिमित्तं गतिक्रियेव गोशब्दस्य । प्रवृत्तिनिमित्तं त्वेकार्थसमवायिनाऽक्षाश्रितत्वेनोपलक्षितमर्थसाक्षात्कारित्वं गतिक्रियोपलक्षितं गोत्वमिव गोशब्दस्य । अन्यद्धि शब्दस्य व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । इतरथा गच्छन्नेव गौर्गौरिति व्यपदिश्येत नापरो व्युत्पत्तिनिमित्ताभावात् । जात्यन्तरविशिष्टं च तुरगादिकं गतिक्रियापरिणतं व्युत्पत्तिनिमित्तसद्भावाद्गोशब्दाभिधेयं स्यात् ।

*परोक्षशब्दस्य व्युत्पत्ति ।*

तथाऽक्षेभ्यः परतो वर्तत इति परोक्षमिति निपातनात्[2] सिद्धिः । अक्षव्यापारनिरपेक्षं मनोव्यापारेणासाक्षादर्थपरिच्छेदकं यज्ज्ञानं तत्परोक्षमित्यर्थः । चशब्दौ प्रत्यक्षपरोक्षयोस्तुल्यकक्षतां लक्षयतः । द्वयोरपि तयोः स्वपरव्यवसायिज्ञानत्वेन प्रामाण्यं प्रति विशेषाभावात् । तेन यदेके व्याकुर्वन्ति प्रत्यक्षं सकलप्रमाणज्येष्ठमिति । तत्प्रत्यादिष्टं भवति ।

*प्रत्यक्षं सकलप्रमाणज्येष्ठमिति मतस्य खण्डनम् ।*

अथोच्यते प्रत्यक्षं ज्येष्ठं प्रमाणं स्वार्थनिर्णीतावन्यानपेक्षत्वादिति । तर्ह्यनुमानमपि ज्येष्ठमस्तु तत एव । न हि तदपि तस्यामन्यापेक्षम् । स्वोत्पत्तौ तदन्यापेक्षमिति चेत् । प्रत्यक्षमपि स्वोत्पत्तावन्यापेक्षमेव । तत्स्वनिमित्तमक्षादिकं तत्रापेक्षते न पुनः प्रमाणमन्यदिति चेत् । अनुमानमपि तथैव । न हि तदपि निश्चितं लिङ्गं हेतुमपेक्ष्य जायमानमन्यत्प्रमाणमपेक्षते । यत्तु लिङ्गस्वरूपग्राहिप्रमाणं तदनुमानोत्पत्तिकारणमेव न भवति । लिङ्गपरिच्छित्तावेव चरितार्थत्वात् । अथ

---

१ अवधिमनःपर्ययकेवलानि मानसज्ञानानि । लक्षणानि अग्रे २१-२२-२३ सूत्रेषु द्रष्टव्यानि । २ 'परोक्षे लिट्' पा. सू. ३-२-११५ इति निपातनात् ।

प्रत्यक्षपूर्वकं प्रमाणान्तरं प्रवर्त्तत इति प्रत्यक्षं ज्येष्ठम्। मैवम्। कस्यचित्प्रत्यक्षस्यापि प्रमाणान्तरपूर्वकत्वात्। तथा हि । वयस्य विलोकय भयादतितरलतारकः कुरङ्गपोतकोऽयं तरसा धरित्रीतलमात्रामतीत्यायाप्तशब्दात् कुरङ्गपोतकगोचरं तथा स्मृत्यादेः कुतूहलाकुलितस्य प्रतिपत्तुर्नन्द्यावर्तवकुलादिपदार्थविषयं प्रत्यक्षं शब्दपूर्वकं स्मृत्यादिपूर्वकं च प्रवर्तमानं दृष्टमिति। अथ प्रत्यक्षपूर्वकमेव प्रमाणान्तरं प्रवर्त्तते। प्रत्यक्षं तु प्रमाणान्तरपूर्वकमन्यथापीति तदेव ज्येष्ठम्। नैतदपि साधिष्ठम्। अनवधारणस्यासिद्धेः। अनुमानस्य तर्कपूर्वकत्वेन व्यवस्थितेः। अथ तर्कस्यापि प्रत्यक्षपूर्वकत्वात्तत्पूर्वकस्यानुमानस्यापि परम्परया प्रत्यक्षपूर्वकत्वमिति चेत्। मैवम्। अनुमाने तर्कस्य प्रत्यक्षपूर्वकत्वासम्भवात्। अथ विशदावभासित्वात् प्रत्यक्षं ज्येष्ठम्। तर्हि द्विचन्द्राद्यवभासिसंवेदनस्यापि ज्येष्ठत्वापत्तिरिति।

प्रत्यक्षमेवैकं प्रमाणमिति चार्वाकमतस्योपपादनपूर्वकं खण्डनम्।

चार्वाकचर्चाचतुरोऽथ कश्चि-
देवं ब्रवीति स्फुरिताभिमानः ॥
प्रत्यक्षमेकं घटते प्रमाणं
निरूप्यमाणं न पुनः परोक्षम् ॥२६६॥

तथाहि नानुमानं तावत्प्रमाणं गौणत्वात्। पक्षधर्मत्वं हि तज्जनकस्य हेतोः स्वरूपम्। पक्षश्च धर्मधर्मिसमुदायात्मा। तदनिश्चये कथं तद्धर्मताया हेतौ निश्चयः। तन्निश्चये वानुमानवैफल्यम्। ततोऽस्य पक्षधर्मत्वव्यवहारसिद्धये धर्मधर्मिसमुदाये रूढोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचरणीयः। तस्मादित्थं पक्षस्य गौणत्वम्। तद्गौणत्वे च हेतोरपि गौणता। तद्धर्मत्वलक्षणत्वात्तस्य। तस्माद्गौणकारणजन्यत्वेन गौणमनुमानम्। गौणत्वाच्च न प्रमाणम्। अपि चार्थव्यवसायहेतुः प्रमाणं भवतीति सकलहृदयप्रतीतम्। अनुमानाच्चार्थव्यवसायो दुःशकः। तथा हि प्रतीयमानादर्थादर्थान्तरप्रतीतिरनुमानम्। प्रतीयमानश्चार्थोऽर्थान्तरेण सम्बद्ध-

१ व्यवसायो-नि रत्न ।

स्तस्य गमको भवेदसम्बद्धो वा । न तावदसम्बद्धः । अतिप्रसक्तेः । अथ सम्बद्धः । ननु कुतस्तस्य तेन सम्बन्धसिद्धिः प्रत्यक्षादनुमानाद्वा । न तावत्प्रत्यक्षात् । अस्य प्रतिनियतदेशकालाकारगोचरचारितया सार्वत्रिकतत्सम्बन्धग्रहणशक्तेरभावात् । नाप्यनुमानात् । अनवस्थाप्रसक्तेः । तदपि सम्बन्धग्रहणे सति यतः प्रवर्तते सम्बन्धग्रहश्च तत्राप्यनुमानान्तरादिति । किं चावस्थादेशकालभेदाद्भिन्नशक्तित्वेन भिन्नार्थक्रियाकारिणां भावानां सामस्त्येन स्वभावप्रतिबन्धः केनापि न निश्चेतुं शक्यः । शतशोऽप्यामलक्यादिफलानां कषायरसे स्वाद्यमाने क्षीरादेरवसेकेन माधुर्योपलम्भात् । तदुक्तम् । "अवस्थादेशकालानां भेदाद्भिन्नासु शक्तिषु । भावानामनुमानेन प्रतीतिरतिदुर्लभा ॥ १ ॥" इति । न च साध्ये सत्येव साधनस्योपलम्भादसति चानुपलम्भादेव साध्यसाधनसम्बन्धसिद्धिरिति वाच्यम् । साधनानुपलम्भस्य साधनसद्भावे साधनाभावे च सम्भवात् । यत्र ह्यनग्नौ धूमो न दृश्यते तत्र प्रमातुः शक्त्यभावः करणस्य सामर्थ्यविरहो धूमस्याभावो वानुपलम्भे कारणमिति । अपि चानुमानस्य धर्मी धर्मस्तत्समुदायो वा साध्यः स्यात् । तत्राद्यपक्षोऽनुपपन्नः । धर्मिणः प्रसिद्धत्वेन साधनवैफल्यप्रसक्तेः । हेतोरनन्वयत्वानुषङ्गाच्च । न खलु यत्र यत्र धूमस्तत्र तत्र पर्वतनितम्ब इत्यन्वयः सम्भवति । द्वितीयपक्षेऽपि धर्मः सामान्यरूपो विशेषरूपो वा साध्यः स्यात् । तत्र सामान्यरूपे सिद्धसाधनम् । न च तन्मात्रप्रतीतौ किञ्चित्फलमुपलभामहे । न हि वह्नित्वं दाहपाकादावुपयुज्यमानं प्रतीतम् । किं च सामान्यात्प्रतीतात्प्रवर्त्तमानः प्रतिपत्ता कथं नियतदिगभिमुखमेव प्रवर्त्तते । न हि सामान्यं नियतदिक्कम् । सकलव्यक्तिव्यापित्वाभावप्रसक्तेः । अथ सामान्यस्य व्यक्तिं विनानुपपत्तेः प्रतीते तस्मिन्नन्यथानुपपत्त्या व्यक्तिप्रतीतेर्नियमेन प्रवृत्तिरित्युच्यते । ननु सामा-

---

१ 'स नियतः' इति प. पुस्तके पाठः । २ वा प का १०

न्यमभिमतया व्यक्त्या विना नोपपद्येत व्यक्तिमात्रेण वा । न तावदभिमतया, व्यक्त्यन्तरेऽप्यस्य सम्भवात् । द्वितीयपक्षे तु व्यक्तिमात्रप्रतीतावप्यभिमतव्यक्तिप्रतीत्यर्थं पुनरनुमानान्तरमाधेयमिति । विशेषरूपस्य च धर्मस्य साध्यत्वे नान्वयः सम्भवेत् । न ह्यत्रत्येदानीन्तनेन सानुमदादिस्वभावेन वह्निना वह्निमान्पर्वतनितम्ब इत्यत्र विशेषे साध्ये अन्वयः सङ्घटते । महानसादौ दृष्टान्ते तथाविधसाध्येन सह धूमस्य व्याप्त्यप्रतीतेः । तत्र धर्मोऽपि साध्यः । नापि तत्समुदायः । तस्याप्यन्वयाननुगमात् । न हि यत्र यत्र धूमस्तत्र तत्र वह्निमान्पर्वतनितम्ब इत्यन्वयः प्रतीतिपथमधिरोहति । मूलानुमानविषयापहारिणोऽनुमानविरोधस्य विशेषविरुद्धापराभिधानस्येष्टविघातकृतः सन्दिग्धहेतोर्विरुद्धाव्यभिचारिणो वा सर्वत्रानुमाने सम्भाव्यमानत्वाच्च नास्य प्रामाण्यम् । तदुक्तम् ।

“ विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥ १ ॥
अनुमानविरोधो वा यदि चेष्टविघातकृत् ।
विरुद्धाव्यभिचारस्तु सर्वत्र सुलभोऽस्य ॥ २ ॥ ”

इति । किंच ।

[1]देशकालदशाभेद-विचित्रात्मसु वस्तुषु ॥
अविनाभावनियमो न शक्यो वक्तुमञ्जसा ॥ २६७ ॥
सततप्यविनाभाव परिच्छेत्तु न शक्यते ॥
जगत्त्रयगताशेषपदार्थालोचनाद्विना ॥ २६८ ॥
न चार्वागदृशा यावद्धूमाग्निव्यक्तयोऽखिलाः ।
तावन्त्यानपि धूमोऽसौ याऽनलेऽगिति शक्यते ॥ २६९ ॥
ये तु प्रत्यक्षतो विश्वं पश्यन्ति हि भवादृशाः ।
किं दिव्यचक्षुषा तेषामनुमाने प्रयोजनम् ॥ २७० ॥

---

1 अविनाभावो-व्याप्तिः । 2 ' प्रपश्यदृशा ' इति प पुस्तके पाठः ।

सामान्यद्वारकोऽप्यस्ति नाविनाभावनिश्चयः ।
वास्तवं हि न सामान्यं नाम किंचन विद्यते ॥ २७१ ॥

भूयोदर्शनगम्यापि न व्याप्तिरवकल्पते ।
सहस्रशोऽपि ने दृष्टे व्यभिचारावधारणात् ॥ २७२ ॥

बहुकृत्वोऽपि वस्त्वात्मा तथेति परिनिश्चितः ।
देशकालादिभेदेन दृश्यते पुनरन्यथा ॥ २७३ ॥

भूयोदृष्टया च धूमोऽग्निसहचारीति गम्यताम् ।
अनग्नौ तु स नास्तीति न भूयोदर्शनाद्गतिः ॥ २७४ ॥

न चाप्यदृष्टिमात्रेण गमकः सहचारिणः ।
तत्रैव नियतत्व हि तदन्याभावपूर्वकम् ॥ २७५ ॥

नियमस्यानुमांगत्वं गृहीत्वा प्रतिपद्यते ।
ग्रहणं चास्य नान्यत्र नास्तितानिश्चय विना ॥ २७६ ॥

दर्शनादर्शनाभ्यां तु नियमग्रहणं यदि ।
तदप्यसदनग्नौ हि धूमस्येष्टमदर्शनम् ॥ २७७ ॥

अनग्नि च क्रिया सर्वं जगज्ज्वलनवर्जितम् ।
तत्र धूमस्य नास्तित्व नैव पश्यन्ति योगिन. ॥ २७८ ॥

तदेवं नियमाभावात्सत्यपि ज्ञप्त्यसम्भवात् ।
अनुमानप्रमाणत्वदुराशा परिमुच्यताम् ॥ २७९ ॥

स्मृत्यादिकेऽपि विज्ञाने प्रमाणत्वमनोरथः ।
त्यज्यतां येन संवादः स्वार्थे तस्यातिदुर्लभः ॥ २८० ॥

एवं चाध्यक्षमेकं कलयति जगतीमण्डले मानमुद्रा-
मन्यत्स्वर्गापवर्गप्रकटननिपुणं नैव किंचित् प्रमाणम् ॥
तस्मात्स्वान्तानुकूलं कवलयत सदा दत्त वित्तं प्रियेभ्यो
मा मा धूर्तोपदेशैर्वत कुरुत वृथा वञ्चनीं स्वस्य मुग्धा. ॥२८१॥

---

१ 'हि दृष्टो' इति म. पुस्तके पाठः । २ 'च स्वात्मा' इति म पुस्तके पाठः । ३ 'नान्य' इति म. पुस्तके पाठ. ४ 'पश्यन्त्ययोगिन.' इति प. पुस्तके पाठः ।

चार्वाकतस्कर किमित्थमरे निकामं
निर्लज्ज गर्जसि विमर्षदनल्पदर्पात् ।
किं नेत्र पश्यसि पुरः पततः परोक्ष-
प्रामाण्यसाधकसुयुक्तिदृढप्रहारान् ॥ २८२ ॥

तथा हि यत्तावदूचे प्रत्यक्षमेकं घटते प्रमाणमिति । तन्न सुघटम् । यतः स्वपरव्यवसायिज्ञानत्वं प्रमाणस्य स्वरूपं, तस्य च परोक्षेऽप्यनुमानादौ विद्यमानत्वात्कथं प्रत्यक्षमेकं प्रमाणमिति नियमः साधीयान् । तथा हि अनुमानादिकं प्रमाणं स्वपरव्यवसायित्वात्प्रत्यक्षवदिति युक्तिमाकलयन् कः सचेताः प्रामाण्यमनुमानादेर्निह्नुवीत । यच्चोक्तं नानुमानं तावत्प्रमाणं गौणत्वादित्यादि । तत्र यदि नाम संक्षिप्ताभिमतचेतोभिः शास्त्रकारैर्धर्मधर्मिसमुदाये संकेतितोऽपि पक्षशब्दस्तदेकदेशे धर्मिण्युपचारेण प्रयुक्तो भवेन्नैतावता शास्त्रे पक्षशब्दात्प्रतिपत्तौ धर्मिणो गौणता । अनुमानसमये पुनः शाब्दैरिव तार्किकैरप्यप्रयुक्तपक्षशब्दैरेव धर्मिणः स्वरूपतः प्रतीयमानत्वे कथं गौणता । तदगौणतायां च तदधिकरणस्य हेतोरप्यगौणत्वात्कथं तज्जन्यस्यानुमानस्य गौणत्वं वक्तुमनुगुणम् । यच्चोक्तं तत्त्ववृत्तावुद्भटेन "लक्षणकारिणा लौकिकत्वेनैव शब्दनिर्वचनव्यवस्था, न चैतावताऽनुमानस्य गौणता, यदि च साध्यैकदेशधर्मिधर्मत्वं हेतो रूपं ब्रूयुस्ते, तदा न काचिल्लक्षणेऽपि गौणी वृत्तिः" इति । यत्तु तेनैव परमलोकायतम्मन्येन लोकव्यवहारैकपक्षपातिना लोकप्रसिद्धधूमाद्यनुमानानि पुरस्कृत्य शास्त्रीयस्वर्गादिसाधकानुमानानि निराचिकीर्षता "प्रमाणस्य गौणत्वादनुमानादर्थनिश्चयो दुर्लभः" इति पौरन्दरं सूत्रं पूर्वाचार्यव्याख्यानतिरस्कारेण व्याख्यानयता इदमभिहितं "हेतोः स्वसाध्यनियमग्रहणे प्रकारत्रयमिष्टं दर्शनाभ्यामविशिष्टाभ्यां दर्शनेन

---

१ [illegible] । २ लक्षणकाराणां इति स पुस्तके पाठः । ३ पुरन्दरनाम्नः कश्चित् ग्रन्थकारः ।

विशिष्टानुपलब्धिसहितेन भूयोदर्शनप्रवृत्त्या च लोकव्यवहारपतितया, तत्राद्येन ग्रहणोपायेन ये हेतोर्गमकत्वमिच्छन्ति तान् प्रतीदं सूत्रं लोकप्रसिद्धेष्वपि हेतुषु व्यभिचारादर्शनमस्ति तन्त्रसिद्धेष्वपि तेन व्यभिचारादर्शनलक्षणगुणसाधर्म्येण तन्त्रसिद्धहेतूनां तथाभावो व्यवस्थाप्यत इति गौणत्वमनुमानस्य। अव्यभिचारावगमो हि लौकिकहेतूनामनुमेयावगमे निमित्तं स नास्ति तन्त्रसिद्धेष्विति न तेभ्यः परोक्षार्थावगमो न्याय्योऽत इदमुक्तमनुमानादर्थनिश्चयो दुर्लभ इति" इति। तदेतत्तस्य वचनं दर्शनादर्शनमात्रेण हेतुव्याप्तिग्रहणवादिनो जैमिनीयान्दुनोति न पुनस्तर्काख्यसुदृढप्रमाणेन सर्वत्र साधनसंबन्धबोधाभिधायिनो जैनान्। यथैव हि तर्कप्रमाणेन लौकिकहेतूनामव्यभिचारनिश्चयः कर्तुं शक्यस्तथा तन्त्रप्रसिद्धहेतूनामपीति कथं न तेभ्योऽपि स्वसाध्यप्रतिपत्तिः। न वाऽवश्यं बौद्धैरिवास्माभिरपि पक्षधर्मत्वं हेतोः स्वरूपमिष्यते। येन गौणहेतोर्जायमानमनुमानमपि गौणं स्यात्। अन्यथानुपपत्तेरेव तत्स्वरूपत्वेन स्वीकरणात्। तन्न गौणत्वादनुमानस्याप्रामाण्यं वक्तुं युक्तमिति।

अथास्पष्टस्वरूपत्वात्, स्वार्थनिश्चये परापेक्षत्वात्, प्रत्यक्षपूर्वकत्वात्, अर्थादनुपजायमानत्वात्, अवस्तुविषयत्वात्, बाध्यमानत्वात्, साध्यसाधनयोः प्रतिबन्धसाधकप्रमाणाभावाद्वा तस्याप्रामाण्यमुच्यते। तदप्यनुचितम्। यतो न तावदस्पष्टस्वरूपत्वादप्रामाण्यमनुमानस्य घटते। यदि हि स्पष्टत्वं प्रमाणलक्षणं भवेत्तदिदानीमनुमानान्निवर्तमानं प्रामाण्यमादाय निवर्तेत इत्यप्रामाण्यमस्योपपन्नं स्यात्। न चैतत्प्रमाणलक्षणलक्षणम्। द्विचन्द्रादिज्ञाने स्पष्टत्वस्य सद्भावेऽपि प्रामाण्यासम्भवात्। स्वार्थनिश्चये परापेक्षत्वमप्यनुमानस्य नावश्यंभावि। प्रत्यक्षवत्तस्य तन्निश्चयेऽभ्यासावस्थायां परनिरपेक्षत्वात्। अनभ्यासावस्थायां तु स्वार्थनिश्चये परापेक्षत्वं प्रत्यक्षस्यापि विद्यते।

---

१ तत्स्वरूपत्वेन—हेतुस्वरूपत्वेन। २ 'लक्षण' इति नास्ति प. म. पुस्तकयोः।

प्रत्यक्षपूर्वकत्वं चानुमानस्यासिद्धम् । तत्कार्यप्रमाणपूर्वकत्वेन तस्याभिधास्यमानत्वात् । अस्तु वा प्रत्यक्षादेवानुमानस्य जन्म तथापि नाप्रामाण्यम् । प्रत्यक्षं ह्यनुमानस्य जन्मनि निमित्तम् । स्वसामग्रीतश्चोपजायमानस्य तस्याप्रामाण्ये प्रत्यक्षस्यापि तत एवाप्रामाण्यापत्तिः । किं च प्रत्यक्षपूर्वकत्वेनानुमानस्याप्रामाण्ये प्रत्यक्षस्यापि कस्यचिदनुमानपूर्वकत्वेनाप्रामाण्यानुषङ्गः । दृश्यते हि सामान्यमनुमानान्निश्चित्य प्रवर्तमानस्य प्रमातुरनुमानपूर्विका प्रत्यक्षप्रवृत्तिः । अथानुपजायमानत्वमप्यनुमानस्याघटमानम् । प्रत्यक्षवत्तस्याप्यर्थादुत्पत्तेरनुभूयमानत्वात् । अवस्तुविषयत्वं चास्यासिद्धम् । प्रत्यक्षवत्सामान्यविशेषात्मकार्थगोचरत्वात्तस्य । न ह्यवस्तुभूतापोहगोचरमनुमानं सौगतवज्जैनैरिष्टम् । तत्र तद्गोचरत्वस्य निराकरिष्यमाणत्वात् । बाध्यमानत्वं च सम्यगनुमानस्यानुमानाभासस्य वा । प्रथमपक्षोऽनुपपन्नः । सत्यधूमादिसाधनात्स्यादनुमाने बाध्यमानत्वस्यासम्भवात् । अनुमानाभासस्य तु तत्सम्भवे तस्यैवाप्रामाण्यं युक्तं न सम्यगनुमानस्य । अन्यथा प्रत्यक्षाभासस्य बाध्यमानत्वेनाप्रामाण्योपलम्भात्सम्यक्प्रत्यक्षस्याप्यप्रामाण्यापत्तिः । साध्यसाधनयोः प्रतिबन्धग्राहकप्रमाणाभावश्चासिद्धः । तत्कार्यप्रमाणस्य तद्ग्राहकस्य सद्भावात् । तथा च सति ननु तत्तस्य तेन सम्बन्धसिद्धिः प्रत्यक्षादनुमानाद्वेत्यादि प्रागुद्दिष्टं प्रत्यादिष्टम् । सार्वत्रिकसम्बन्धप्रतीतौ च यथा तर्कस्य सामर्थ्यं तथा कथयिष्यत इति ।

तस्माद्बृहस्पतिमतोपनिषत्प्रियेण
प्रोक्ता प्रमाविमुखताऽनुमितावपि या ।
इत्थं विकल्पपरशुप्रबलप्रहारैः
सा चिच्छिदे सपदि मूलत एव सम्या ॥ २८३ ॥

किं च यथार्थं प्रमाणं नायथार्थमिति यत्नं परं प्रतिपाद्यते त्वया । तन्न काश्चिदयथार्था प्रामाण्यव्यक्तीः परित्यज्य यथार्थाश्चाभ्युपगम्य

यदीदृशं तत्प्रमाणं नान्यादृशमिति तं प्रति प्रतिपादनीयम् । एतच्चानुमानाद्विना न प्रतिपादयितुं शक्यम् । न खलु पुरोवर्त्तिवर्त्तमानप्रतिनियतरूपत्वादिविषयोपारूढेन प्रत्यक्षेणैतत्प्रतिपादयितुं पार्यते । परश्च बुद्धिमत्त्वेन स्तम्भादिभ्यो विलक्षणः प्रतिपाद्यमानार्थग्रहणसमर्थो निश्चितः सन् प्रतिपाद्यो भवति । न च तन्निश्चयेऽनुमानादन्यस्य सामर्थ्यम् । प्रत्यक्षस्य रूपादिविषयप्रतिपत्तावेव सामर्थ्यात् । कथं चानुमानानभ्युपगमे स्वस्याप्यवस्थापितप्रमाणप्रमेयव्यतिरिक्तप्रमाणप्रमेयस्य निषेधः । प्रत्यक्षस्यात्रासामर्थ्यात् । तदुक्तं कीर्त्तिना[1], "प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः । प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ॥ १ ॥" इति । अस्यार्थः । अवश्यमयं चार्वाकोऽनुमानमपवदमानः प्रमाणाप्रमाणयोः स्थितिं स्थापयितुमनुमानं मन्येत । तदपवादे सैव तयोः स्थितिर्न घटते । तदा हि न घटेत यदि न सामान्येन क्रियते । सामान्येन च कर्त्तव्या । अनुभूताननुभूतस्वपरसन्तानवर्त्तिप्रमाणाप्रमाणव्यक्तिव्याप्त्या क्रियते यतः । तादृशी च प्रत्यक्षमात्रप्रमाणवादिनः शक्यक्रिया । प्रमाणेतरलक्षणयोगिनीनां विज्ञानव्यक्तीनां सर्वासामप्रत्यक्षत्वात् । प्रत्यक्षाणां च परेभ्योऽनुपदेश्यत्वात् । अत उक्तम् । प्रमाणेतरसामान्यस्थितेः प्रमाणान्तरसद्भाव इति तथाऽन्यधियो गतेः परचित्तज्ञानात् । अन्यदीया हि धीः कायवाग्व्यापारव्यवहाराभ्यां कार्यलिङ्गाभ्यामनुमीयते न प्रत्यक्षेणेष्यते । कस्यचिच्च प्रतिषेधात् । न ह्यनुपलब्धिलिङ्गमनुमानमन्तरेण क्वचित् किंचित्प्रतिषेद्धुं शक्यते । तदनेन सूत्रेण त्रिविधत्रिरूपस्वभावकार्यानुपलब्धिलिङ्गानुमानसद्भावः परेणा[2]प्यभ्युपगतोऽन्यथा व्यवहारविलोपप्रसंगादित्युक्तमिति । किं चानुमानस्यापह्नवस्तत्स्वरूपाभावान्निरवद्यतल्लक्षणाभावाद्वा स्यात् । न तावत्तत्स्वरूपाभावात् । तत्स्वरूपस्य सकलजनप्रतीतत्वात् । न चेदमसिद्धम्, यतः

१ धर्मकीर्त्तिना । २ परेण-चार्वाकेन ।

गोपालोऽपि प्रबलविगलद्बाष्पनिस्तुप्रवन्धे ।
नेत्रे कर्तुर्मधुरमधुमञ्जरीम्लानिहेतो ॥
धूमोत्तीडात्कचिदपि समालोक्यमानात्प्रदेशे ।
जानात्येव ज्वलनमखिलक्षिप्तशङ्कानकाश ॥ २८४ ॥

कथ चानुमानस्वरूपापलापे प्रत्यक्षमेव प्रमाणमगौणत्वादित्यनुमानमुद्रया परप्रतिपादयतस्तव स्ववचनविरोधो न स्यात् । तथा च ।

सद्भावमस्यति सताऽनुमितेर्मतस्य
स्वीयस्य सिद्धिमनयैव च सन्तनोति ॥
आमात्यलौकिकममुष्य मनीषिलोके
लोकायतस्य सकलं चरित तदेतत् ॥ २८५ ॥

निरवयतल्लक्षणाभावादित्यप्ययुक्तम् । हेतुग्रहणसम्बन्धस्मरणकारणक साध्यविज्ञानमित्यादेर्निरवद्यतल्लक्षणस्याग्रे वक्ष्यमाणत्वात् । यदप्यवस्थादेशकालभेदादित्याद्यभिहितम् । तदप्यभिधानमात्रम् । तत्कार्यप्रमाणमाहात्म्यत सम्यगवगताया व्याप्तौ लिङ्गस्य स्वसाध्ये व्यभिचाराभावात् । यत्र तु व्यभिचारस्तत्र प्रमातुरेवापराधो नानुमानस्य । तदाहु । " प्रमातुरपराधोऽय विशेष यो न पश्यति । नानुमानस्य दोषोऽस्ति प्रमेयाव्यभिचारिण. ॥१॥ " यदप्युक्त तत्र प्रमातु शक्त्यमान करणस्य सामर्थ्यविरहो धूमस्याभावो वानुपलम्भे कारणमिति । तदप्यसत् । प्रमातु करणस्य च सामर्थ्यसद्भावनिश्चये यो धूमानुपलम्भस्तस्य धूमाभावेनैव प्रयुक्तत्वाद्धूमाभावस्य चाग्न्यभावप्रयुक्तत्वेन निर्णयात्साध्यसाधनमनर्थैसिद्धि । यच्चान्यज्जल्पित अनुमानस्य धर्मी धर्मस्तत्समुदायो वा साध्य स्यादित्यादि । तदपि न युक्तिमाक्रन्ति । प्रयोगकालापेक्षया साध्यस्य भेदात् । व्याप्तौ हि साध्य धर्मसामान्य प्रयोगकाले तु तद्विशिष्टो धर्मीति वक्ष्यति । तत कथं सिद्धसाधन

१ ' असूत्र् क्षपणे अस्यति क्षिपति । हैमधा पा ४ ७८ २ तस इति न पुस्तके पाठ । ३ ' सिद्धे ' इति प पुस्तक पाठ ।

हेतोरनन्वयो वा भवेत् । यदपि मूलानुमानविषयापहारिणि इत्यादि प्रत्यपादि । तदपि न चतुरस्रम् । सम्यक्साधने प्रयुक्तेऽनुमानविरोधादिपांसुप्रकरपातानामसम्भवात् । उक्तं च तन्त्रवृत्तौ भट्टोद्भटेन " सर्वत्र दूषणोपनिपातोऽप्रयोजकहेतुमाक्रामतीत्यप्रयोजकविषया विरुद्धानुमानविरोधविरुद्धाव्यभिचारिण " इति । एवं च देशकालदशाभेदेत्यादिकारिकाकदम्बकमपि विडम्बितमवबोद्धव्यम् । यदप्युक्तं स्मृत्यादिकेऽपीत्यादि । तदप्यनुपपन्नम् । स्वार्थे संवादस्य स्मृत्यादिकेऽपि प्रमाणे समर्थयिष्यमाणत्वात् ।

एवं स्वर्गापवर्गप्रकटनविहितौ वृद्धकक्षे परोक्षे
सम्प्राप्ते मानभावं झटिति विघटितो नास्तिकस्याभिसन्धिः ॥
तस्मादास्तिक्यमेकं मनसि शुभलतोल्लासजीमूतकल्पं
मत्वा सद्धर्मकर्म प्रतनुत सततं स्वेष्टसिद्ध्यै विदग्धाः ॥२८६॥"

अत्राह सौगतः । "प्रत्यक्षं च परोक्षं च द्वित्वमेवं न युज्यते ।
प्रत्यक्षमनुमानं चेत्येतत्तु घटततराम् ॥ १ ॥

प्रत्यक्षमनुमानमिति द्वयमेव प्रमाणमिति सौगतमतस्योपपादनपूर्वकं खण्डनम् ।

आ कुमते मैवं वोचः । यतः स्वलक्षणसामान्यात्म्यप्रमेयद्वैविध्यात्प्रमाणद्वैविध्यमित्याकूतं भवतः. तदनुचितम् । तथाविधप्रमेयद्वैविध्यस्यासम्भवात् । एक एव हि सामान्यविशेषात्मार्थः प्रमेयः प्रमाणस्येति पुरस्तादुपपादयिष्यते । यदि च प्रत्यक्षस्य स्वलक्षणमात्रविषयत्वमिष्यते । तदा ततः स्थिरस्थूराद्याकाराध्यवसायेन प्रवृत्तिर्न स्यात् ।

विज्ञानमन्यगोचरमन्यत्रार्थे प्रवर्तकमितीदम् ॥
व्यक्तं भवता कैतवमभ्यस्तं सौगत कुतोऽपि ॥ २८७ ॥

भवतु वा प्रमेयद्वित्वं तथापि तत्प्रमाणद्वित्वस्य ज्ञातमज्ञातं वा ज्ञापकं भवेत् । यद्यज्ञातम्, तर्हि तस्य सर्वत्राविशेषात्सर्वेषामप्यविशेषेण[1] तत्प्रतिपत्तिप्रसङ्गतो विप्रतिपत्तिर्न स्यात् । ज्ञातं चेत्, कुतस्तस्य

१ 'विशेषेण' इति भ. पुस्तके पाठः ।

ज्ञप्ति । प्रत्यक्षादनुमानाद्वा । न तावत्प्रत्यक्षात् । तेन सामान्यस्याग्रहणात् । ग्रहणे वा तस्य सविकल्पकत्वप्रसक्तेर्विपर्ययसकरश्च प्रमाणद्वित्वविरोधी भवत प्रसज्येत । नाप्यनुमानात्, तेन स्वलक्षणस्याग्रहणात् । स्वलक्षणपराङ्मुखतया हि भवतानुमानमभ्युपगतम् । द्वाभ्या प्रमेयद्वित्वस्याज्ञानेऽन्यतरस्यापि प्रमाणद्वित्वज्ञापकत्वायोग । अन्यथा देवदत्तयज्ञदत्ताभ्या प्रतिपन्नाद्धूमद्वित्वाद्यदन्यतरस्याग्निद्वित्वप्रतिपत्ति स्यात् । द्वैविध्यमिति द्विष्ठो धर्म । स च द्वयोर्ज्ञाने ज्ञायते नान्यथा । न ह्यज्ञातसह्यविन्ध्यस्य प्रतिपत्तुस्तद्गतद्वित्वप्रतिपत्तिरस्ति । प्रमाणद्वित्वात्तु प्रमेयद्वित्वनिश्चयस्वीकारे परस्पराश्रयस्योपानुषङ्ग । सिद्धे हि प्रमेयद्वित्वेऽस्य प्रमाणद्वित्वसिद्धिस्तस्याश्च प्रमेयद्वित्वसिद्धिरिति । अथान्यत प्रमाणाद्द्वित्वस्य सिद्धि । व्यर्थस्तर्हि प्रमेयद्वित्वोपन्यास । ननु प्रत्यक्षानुमानयो स्वसंवेदनप्रत्यक्षसिद्धत्वात्प्रत्यक्षसिद्धमेव प्रमाणद्वित्वम् । केवल यस्तथाप्रतिपद्यमानोऽपि न व्यवहरति स प्रसिद्धेन प्रमेयद्वैविध्यव्यवहारेण प्रवर्त्यते इति चेत । तदप्यसारम् । प्रमेयद्वैविध्यस्यासिद्धत्वेनाभिहितत्वात् । ननु मा सिध्यतु प्रमेयद्वैविध्य तथापि न प्रमाणद्वित्व व्याहन्यते रागादीनामनुमानान्तर्भावात्वात् । शब्दो हि परोक्षेणार्थेन सह सम्बद्धमसम्बद्धं वा तस्य गमकम् । न तावदसम्बद्धम् । अतिप्रसङ्गात । सम्बद्ध चेत, तर्हि तल्लिङ्गमेव । तज्जनित च ज्ञानमनुमानमेवेति चेत । तदप्यनुचितम् । प्रत्यक्षस्याप्येवमनुमानत्वप्रसङ्गात् । तदपि स्वविषयेण सम्बद्ध सत्तस्य गमक नान्यथा । सर्वस्य प्रमातु सर्वार्थप्रत्यक्षत्वापत्ते । अथ स्वविषयसम्बद्धत्वाविशेषेऽपि प्रत्यक्षानुमानयो सामग्र्यादिभेदात्प्रमाणान्तरत्वम् ।

शाब्दस्य मीमांसकमतेन प्रत्यक्षादनुमानाच्च पार्थक्यप्रतिपादनम् ।

भिन्नो तदानीं बत दुर्निवारा
　शाब्दोपमाद्यैरपि जैमिनीया ॥
प्रमान्तरत्व प्रतिपादयन्त
　कथं त्वयैते प्रतिषेधनीया ॥ २८८ ॥

---

१ हि इत्यधिक प पुस्तके । २ व्याहन्यत रागादीनां इति प म पुस्तकयो पाठ ।

तथा हि ते सङ्गिरन्ते शाब्दं तावच्छब्दसामग्रीतः प्रभवति न चास्य प्रत्यक्षता। सविकल्पकस्वभावत्वात्। नाप्यनुमानता, त्रिरूपलिङ्गाप्रभवत्वात् अनुमानगोचरार्थाविषयत्वाच्च। तदुक्तम्।

"तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद्भवेत्।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ १ ॥"

इति। यादृशो धूमादिलिङ्गजस्यानुमानस्य विषयो धर्म्मविशिष्टो धर्म्मी तादृशेन विषयेण रहितत्वं शाब्दे सामान्यमात्रविषये सुप्रसिद्धं त्रैरूप्यरहितत्वं च। तथा हि न शब्दस्य पक्षधर्म्मत्वम्। धर्मिणोऽसम्भवात्। न वाऽर्थस्य धर्मित्वम्। तेन तस्य सम्बन्धासिद्धेः। न चाप्रतीतेऽर्थे तद्धर्मतया शब्दस्य प्रतीतिः सम्भविनी। प्रतीते वाऽर्थे तद्धर्मतया शब्दस्य प्रतीतिर्नोपयोगिनी। तामन्तरेणाप्यर्थस्य प्रागेव प्रतीतेः। अथ शब्दो धर्म्मी अर्थवानिति साध्यो धर्म्मः शब्द एव च हेतुरिति चेत्, न। प्रतिज्ञार्थैकदेशत्वप्राप्तेः। शब्दो हि धर्म्मितयोपात्तः स एव हेतुरिति। अथ शब्दत्वं हेतुरिति न प्रतिज्ञार्थैकदेशत्वम्। न। शब्दत्वस्यागमकत्वात्। अवान्तरसामान्यं तर्हि गोशब्दत्वं हेतुर्भविष्यतीति चेत्। न। तस्यासिद्धत्वात्। उक्तं च।

"विषयोऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः॥ सामान्यविषयत्वं च पदस्य स्थापयिष्यते ॥ १ ॥ धर्म्माधर्म्मविशिष्टश्च लिङ्गीत्येतच्च साधितम्। न तावदनुमानं हि यावत्तद्विषयं न तत् ॥ २ ॥

तद्विषयमिति धर्म्मविशिष्टधर्म्मिविषयम्। "अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ३ ॥ प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते। शब्दत्वं गमकं नात्र गोशब्दत्वं निपेत्स्यते ॥"

शब्दत्वं गमकं नात्रेति, अर्थविशेषो ह्यत्रानुमित्सितो न चास्य

---

१ मीमांसाश्लोकवार्तिके सू. ५ शब्दपरिच्छेदे श्लो. ९८. २ मीमांसाश्लो. सू. ५ श. परि. श्लो. ५५–५६. ३ मी. श्लो. वा. सू. ५ शब्दप. श्लो. ६२. ४ मी. श्लो. वा, सू. ५ श. प. श्लो ६३-६४.

शब्दत्व गमकमनैकान्तिकत्वादिति भाव । " व्यतिरेक विशेष्यातो हेतुर्थको प्रमज्यते ॥ ४ ॥ " अस्यार्थ –अत शब्द गोशब्दत्वसामान्ययोरगमकत्वासिद्धत्वाभ्या हेतुत्वनिषेधाद्व्यतिरेक शब्दलक्षणा एकार्थवत्त्वेन साध्यधर्मेण विशेष्या, हेतुतया चाऽभिधा तव्या इति दुष्परिहर प्रतिज्ञार्थैकदेशत्वम् । शब्दस्यैव धर्मित्वेन हेतुत्वेन चाऽभिधानादिति । न चार्थान्वय शब्दस्यास्ति । विद्यमानस्य ह्यन्वेतृत्व नाविद्यमानस्य । यत्र हि धूमस्तत्रावश्य वह्निरस्तित्वेन प्रसिद्धो ऽन्वेता भवति धूमस्य । नचैव शब्दस्यार्थेनान्वयोऽस्ति । न हि तत्त्व शब्दाभावे नैयत्यंस्य सद्भाव । न खलु यत्र मृद्वीकादिशब्द समाकर्ण्यते तत्र मृद्वीकादिरर्थोऽप्यस्ति । नापि शब्दकालेऽर्थोऽवश्य भवति । तथा हि । " चक्रु सर्वे यदा वा करकमलमिलन्मौलयो भूमिपाला । सोऽय शौण्डीर्यवर्या सुरनिकरचयन्यत्र विश्रम्भबुद्धिम् ॥ लङ्कालङ्कारकल्प सकलकुवलयप्रोद्धतैकातपत्र । अस्यादौ चक्रवर्ती भ्रमयति म पुरा गगन शङ्खनादु ॥ १ ॥ अभिनेव महीतले हि स्थित पालापुरो भूमिभृन्मौलिविशिष्टकिरीटकोटिघटनानृत्यादिपीठ सदा ॥ नि शेषाविरक्षणक्षमभुज पुसा शिरोभूषण । श्रीमघो भविताभि रामकामिमान्याचितपद्मभूत् ॥ २ ॥' इत्यादिशब्दा सम्प्रति श्रूयमाणेन वर्तमानास्तदर्थस्तु भूतो भविष्यश्चेति कुतोऽर्थ शब्दस्या-न्वेतृता । अथ मतम्, नित्यत्वाच्छब्दाना सर्वकालार्थसन्निधान सत् न भिन्नकालता । नापि भिन्नदेशता । व्यापित्वात्सर्वगतत्वात्सर्व-मतीन्द्रिये । अतो नित्यविभुत्वाद्भवेदन्वय शब्दानामिति । तत्र सर्वशब्देषु हरित्व विभुत्व च तुल्यमिति कृत्वा प्रतिनियतेन शब्देन प्रतिनियतार्थाभिधान न प्राप्नोति । किं तर्हि येन केनचि च्छब्देन सर्वस्यार्थस्याभिधान स्यात् । तेनाधुना सह सर्वत्र तेन

१ सी अ १ का ग सू ५ ग पृ श्लो १४

काले वा तस्य शब्दस्य दृष्टत्वात् । तन्नान्वयस्य निश्चयः । नापि व्यतिरेकस्य, स हि साध्याभावे साधनाभावरूपः । न चासौ शब्दे सम्भवति । नित्यविभुत्वादेव । तदुक्तम् ।

"अन्वयो न च शब्दस्य प्रमेयेण निरूप्यते ।
व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते ॥ १ ॥"

व्यापारेणेति सद्भावेन सत्तयेति यावत् ।

"यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः ॥
नत्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चयः ॥ १ ॥
न तावद्यत्र देशेऽसौ न तत्काले च गम्यते ।
भवेन्नित्यविभुत्वाच्चेत्सर्वार्थेष्वपि यत्समम् ॥ २ ॥
तेन सर्वत्र दृष्टत्वाद्व्यतिरेकस्य चागतेः ॥
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ ३ ॥" इति ।

मीमांसकमतेनोपमानस्य प्रमाणान्तरत्वव्यवस्थापनम् ।

सामग्रीभेदतो मेयभेदतश्चागमस्ततः ॥
अन्तर्भवति नैवेत्थमनुमाने कथंचन ॥२८९॥
प्रमाणं चैष मन्तव्यः प्रमेयाव्यभिचारतः ।
यथा प्रत्यक्षविज्ञानं यथा च लैङ्गिकी मतिः ॥२९०॥

उपमानमपि प्रमाणान्तरमेव । तस्य हि लक्षणम्, यथा,

"दृश्यमानाद्यदन्यत्र विज्ञानमुपजायते ॥
सादृश्योपाधि तत्त्वज्ञैरुपमानमिति स्मृतम् ॥ १ ॥"

येन हि प्रतिपत्रा गौरुपलब्धो न गवयो न चातिदेशवाक्यं गौरिव गवय इति श्रुतं तस्यारण्ये पर्यटतो गवयदर्शने प्रथमे समुत्पन्ने सति यत्परोक्षे गवि सादृश्यज्ञानमुत्पद्यते अनेन सदृशो गौरित्येव तदुपमानमिति । तस्य च विषयः सादृश्यविशिष्टः परोक्षो गोपिण्डस्तद्विशिष्टं वा सादृश्यम् । तच्च वस्तुभूतमेव । यदाह ।

---

१ मी. श्लो. वा. सू. ५ श. प. श्लो. ८५. २ मी. श्लो. वा. सू. ५ श. प. श्लो ८६, ८७, ८८. ३ ' यथा ' इति नास्ति प. पुस्तके ।

"सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १ ॥"

भूयसामवयवसामान्यानां जात्यन्तरोपलक्षितेऽन्यस्मिन् योगो यस्तत्सादृश्यम् । तच्च सदृशप्रत्ययोत्पादकत्वेनार्थक्रियाकारित्वाद्वस्त्वित्यर्थः । समानेऽपि सर्वावयवसामान्यसद्भावात्सादृश्यं नास्तीति ज्ञापनार्थं जात्यन्तरग्रहणमिति । अस्य चानधिगतार्थाधिगन्तृतया प्रामाण्यम् । गवयविषयेण हि प्रत्यक्षेण गवयो विषयीकृतो न त्वसन्निहितोऽपि सादृश्यविशिष्टो गौस्तद्विशिष्टं वा सादृश्यम् । यच्च पूर्वं गोरिति प्रत्यक्षमूलस्यापि गवयोऽयमत्यन्तप्रत्यक्ष एवेति कथं गवि तदपेक्षं तत्सादृश्यज्ञानम् । उक्तं च । "तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम् । प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥१॥ प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते । विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥ २ ॥ प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके ॥ विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥ ३ ॥" इति । न चेदं प्रत्यक्षम् । परोक्षविषयत्वात् सविकल्पकत्वाच्च । नाप्यनुमानम् । पक्षधर्मान्वयव्यतिरेकिणामसम्भवात्प्रत्यक्षवत् । तथा हीतत्सदृशो गौरिति गवयसादृश्यविशिष्टे गव्यनुमेये सादृश्यं वा लिङ्गं परिकल्प्येत गवयो वा । सादृश्यमपि गोगतं गवयगतं वा । न तावद्गोगतम् । तद्धि गवयसादृश्यविशिष्टगोज्ञानात्पूर्वं प्रमेयैकदेशस्य गोधर्मिणो लिङ्गं परिकल्पितं न धर्मत्वेन गृह्यते । तथाप्रतीतेरभावात् । तत्प्रमेयत्वाच्च तस्य प्रतिज्ञार्थैकदेशत्वेन पक्षधर्मत्वासम्भवान्न लिङ्गता । नापि गवयगतम् । तत्र हि गृह्यमाणं सादृश्यं न गोसम्बन्धिनः सादृश्यस्यानुमापकम् । वैयधिकरण्येन पक्षधर्मत्वासम्भवात् । नापि च गवयो लिङ्गम् । गवा सह सम्बन्धाभावात्पक्षधर्मत्वानुपपत्तेः । न च

१ श्लो० वा० सू० ५ उ० प० श्लो० १८ २ श्लो० वा० सू० ५ उ० प० श्लो० ३७ ३८ ३९
१८

गवयगतं सादृश्यं सर्वेण प्रमात्रा सादृश्यविशिष्टगोज्ञानात्पूर्वं गव्यनुगतं दृष्टम् । न हि गोगवयौ युगपत्सर्वैः सदृशौ लक्ष्येते । अपि त्वेकस्मिन्ननुपलक्षितसादृश्ये पूर्वं गवि दृष्टेऽपि द्वितीयं गवयलक्षणमर्थं पश्यतो वने सादृश्यसहित एवास्मिन् गवि तस्मिन्नेव काले बुद्धिरुत्पद्यते । न चापि गवयः । कैरपि गवान्वयी दृष्टपूर्वः । येन गोस्तत्सादृश्यस्य वा लिङ्गता प्रतिपद्येत । न च गवयस्तत्सादृश्यं वा विपक्षाद्व्यावृत्त दृष्टम् । गोरभावेऽपि तयोः प्रवृत्तिदर्शनात् । यदाह भट्टः । "[1] न चैतस्यानुमानत्वं पक्षधर्म्माद्यसम्भवात् ॥ प्राक्प्रमेयस्य सादृश्यं धर्म्मत्वेन न गृह्यते ॥ १ ॥ गवये गृह्यमाणं च न गवामनुमापकम् । प्रतिज्ञार्थैकदेशत्वाद्गोगतस्य न लिङ्गता ॥ २ ॥ गवयश्चाप्यसम्बन्धान्न गोर्लिङ्गत्वमृच्छति ॥ सादृश्यं न च सर्वेण पूर्वं दृष्टं तदन्वयि ॥३॥ एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ॥ सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥ ४ ॥ न चापि गवयः कैश्चिद्दृष्टपूर्वो गवान्वितः । येन गोर्लिङ्गता गच्छेत्तत्सादृश्यस्य वा तदा ॥ ५ ॥ गवयश्च ससादृश्यो गोरभावे प्रवर्त्तते । विपक्षात्तेन नास्त्येव व्यावृत्तिरुभयोरपि ॥ ६ ॥ " इति ॥

सामग्र्यादिविभिन्नत्वात्प्रत्यक्षादिप्रमाणतः ॥
मतान्तरतया[2] सिद्धमुपमानं तत. स्फुटम् ॥ २९१ ॥

मीमांसकमतेनार्थापत्तेः प्रमाणान्तरत्वव्यवस्थापनम्

अर्थापत्तिरपि प्रमाणान्तरम् । यदाह भाष्यकारः, " दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यदृष्टकल्पना[3]ऽर्थापत्तिः" इति । दृष्टः शाब्दव्यतिरिक्तप्रमाणपञ्चकाधिगतः । श्रुतः शाब्दप्रमाणाधिगतः । कुमारिलोऽप्येतदेव भाष्यकारवचो विवृण्वन्प्राह । "[4] प्रमाणषट्कवि-

१ मी. श्लो वा. सू ५ उ प. श्लो. ४३, ४४, ४५, ४६. २ 'मानान्तरतया' इति म. पुस्तके पाठ' । ३ ' इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ' इति शबरस्वामिना मीमांसादर्शनशाबरभाष्ये १-१-५. ४ मी. श्लो वा. सू. ५ अर्था. प. श्लो. १.

ज्ञातो यत्रार्थोऽनन्यथाभवन् । अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥ १ ॥ " यत्र देशकालादौ प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावलक्षणैः षड्भिः प्रमाणैः परिच्छिन्नोऽर्थोऽन्यथा नोपपद्यते यद्येवंभूतोऽर्थो न भवेत्परोक्ष इति या परोक्षार्थविषया कल्पना सार्थापत्तिः प्रमाणम् । उदाहृतेति शबरस्वामिना प्रतिपादिता । तत्र प्रत्यक्षपूर्विकाऽर्थापत्तिर्यथा । प्रत्यक्षेण प्रतिपन्नाद्दाहाद्वह्नेर्दहनशक्तिकल्पना । न हि शक्तिः प्रत्यक्षेण परिच्छेद्या । अतीन्द्रियत्वात् । नाप्यनुमानेन । अस्य प्रत्यक्षावगतप्रतिबन्धलिङ्गप्रभवत्वेनाभ्युपगमात् । अर्थापत्तिगोचरस्य चाऽर्थस्य सदैव प्रत्यक्षाविषयत्वात् । अनुमानपूर्विका यथा । सूर्ये गमनात्तच्छक्तियोगकल्पना । अत्र हि देशाद्देशान्तरप्राप्त्या सूर्ये गमनमनुमीयते । तस्माच्च तत्र गमनशक्तिसम्बन्धोऽर्थापत्त्या कल्प्यते । शाब्दप्रमाणपूर्विका यथा । पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यप्रतिपन्नदिनाधिकरणभोजनाभावविशिष्टपीनत्वाख्यकार्यान्यथानुपपत्त्या कारणभूतरात्रिभोजनाभिधायकं रात्रौ भुङ्क्त इति वाक्यखण्डलकं कल्प्यते । रसायनोपयोगादेस्तु तत्कारणस्याभिधायकं तत्र कल्पनार्हम्[1] । दिनाधिकरणभोजनाभावविशिष्टत्वेन पीनत्वस्य रसायनोपयोगादिनाऽघटितत्वात् । रसायनोपयोगादौ हि सर्वथा भोजनं निषिध्यते न तु दिनाधिकरणतया । उपमानपूर्विका यथा । गवयोपमितस्य गोपिण्डस्योपमानप्रमाणग्राह्यताशक्तिकल्पना । अर्थापत्तिपूर्विका यथा । शब्दकर्तृकार्थप्रत्यायनानुपपत्तिप्रतिपन्नवाचकशक्त्यन्यथानुपपत्त्या शब्दे नित्यत्वकल्पना । शब्दोच्चारणे हि सत्यन्यथानुपपत्त्या वाचिका शक्तिस्तावत्प्रतीयते । पुनरर्थापत्तिप्रमितवाचकशक्त्यन्यथानुपपत्त्या शब्दस्य स्थायित्वं प्रतीयते । अभावपूर्विका यथा । प्रमाणाभावप्रमिताद्गेहे[...] जीवच्चैत्राभावाच्चैत्रबहिर्भावकल्पना । चैत्रो बहिरस्ति जीवतो वेश्मन्यभावान्यथानुपपत्तेरिति । यथोक्तं भट्टेन " तत्र प्रत्य-

---

1 ' अधिकरणक ' इति न पुस्तक पाठ ।

क्षतो ज्ञानाद्दाहाद्दहनशक्तिता ॥ वह्नेरनुमिता सूर्ये यानात्तच्छक्तियोग्यता ॥ १ ॥ [1]पीनो दिवा न भुंक्ते चेत्येवमादिवचः श्रुते ॥ रात्रिभोजनविज्ञानं शब्दार्थापत्तिरुच्यते ॥ २ ॥"

रात्रिभोजनविज्ञानमिति रात्रिभोजनाभिधायकवाक्यशकलविज्ञानम् । "[2]गवयोपमिताया गोस्तज्ज्ञानग्राह्यशक्तता ॥१॥ अभिधानप्रसिद्ध्यर्थमर्थापत्त्यावबोधिता ॥ शब्दे वाचकसामर्थ्यात्तन्नित्यत्वप्रमेयता ॥२॥ अभिधानान्यथाऽसिद्धेरिति वाचकशक्तता । अर्थापत्त्यवगम्यैव तदनन्यगतेः पुनः ॥ ३ ॥ अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः ॥ ४ ॥ प्रमाणाभावनिर्णीताच्चैत्राभावविशेषितात् । गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥ ५ ॥ तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् ॥ ६ ॥" इति । एतेषु चार्थापत्तिनिदर्शनेषु प्रत्यक्षानुमानोपमानपूर्विकाणामर्थापत्तीनां शक्तिः प्रमेयत्वेन दर्शिता । शब्दार्थापत्त्यभावप्रमाणपूर्विकाणां तु यथाक्रमं वाक्यशकलशब्दनित्यत्वचैत्रबहिर्भावाः । न च प्रत्यक्षानुमानोपमानपूर्विकाणामेवार्थापत्तीनां शक्तिः प्रमेयेति नियमः । अन्यासामपि शक्तिगोचरत्वेन क्वचिद्दर्शनात् । तथा चार्थापत्तिपूर्विकयाऽर्थापत्त्या रूपप्राकट्यान्यथानुपपत्तिप्रतिपन्नरूपोपलम्भान्यथानुपपत्तिरूपया चक्षुषो रूपपरिच्छेदनशक्तिः कल्प्यते ।

अर्थापत्तिः षोढा सेयं मानान्तरत्वमुपयान्ती ॥
सामग्रीविषयभिदा मनस्सु चेतस्विनां वसतु ॥ २९२ ॥

अभावप्रमाणमपि प्रमाणान्तरम् । तथा हि । तस्य स्वरूपं प्रत्यक्षादेः सदुपलम्भकप्रमाणपञ्चकस्यानुत्पत्तिः । तदुक्तम् । "[3]प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ॥ सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ १ ॥" इति । अस्यार्थः । प्रत्यक्षादेरर्थापत्तिपर्यन्तस्य

मीमांसकमतेनाभावस्य प्रमाणान्तरत्वव्यवस्थापनम् ।

१ मी. श्लो. वा. सू. ५ अर्था प श्लो. ३, ५१. २ मी. श्लो. वा. सू. ५ अर्था प श्लो. ४, ५, ६, ७, ८, ९. ३ मी. श्लो वा सू ५ अभा प श्लो. ११.

यथाविषयमनुत्पत्तिरभावप्रमाणलक्षणमित्यर्थ । तामेव प्रत्यक्षाद्यनुत्पत्तिं विवृणोति नीलम इत्यादि । उत्तरपदार्थप्रतिषेधमात्रविवक्षायामात्मनोऽपरिणामो वेत्यादि । घटज्ञानरूपतया परिणतस्यात्मनो घटसद्भाव प्रमेय । तद्रूपेणापरिणतस्य तु तदभाव इत्यर्थ । उत्तरपदार्थपर्युदस्तवस्त्वन्तरविवक्षाया विज्ञान वाऽन्यवस्तुनीत्यादि । भूप्रदेशे घटव्यतिरिक्ते वस्तुनि घटविविक्तताख्यो इह प्रदेशे घटो नास्तीति यद्विज्ञान तदभावसञ्ज्ञक प्रमाणमित्यर्थ । अयमाशय । इह प्रदेशे दृश्यादर्शन चाऽस्ति तदनन्तर घटो नास्तीति ज्ञान चोत्पद्यते । तत्र घटाभावे प्रमेये दृश्यादर्शनमेव कदाचित्प्रमाणत्वेन विवक्ष्यते । तदा सात्मनोऽपरिणामो वेति पक्ष । अथ तदनन्तर नास्तीति ज्ञान प्रमाणत्वेन विवक्ष्येत बोधकत्वेन वाचकप्रत्ययाभावेन च । तदा विज्ञान चाऽन्यवस्तुनीति पक्ष । प्रथमपक्षे नास्तीति ज्ञान फलम्, द्वितीयपक्षे तु हानादिबुद्धिरिति । विषय पुनरस्य प्रमाणपञ्चकप्रवृत्त्ययोग्योऽमदश । यदुक्तम् । "प्रमाणपञ्चक यत्र वस्तुरूपे न जायते ॥ वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १ ॥" इति ॥ अस्यार्थ । सदसद्रूपेणोभयात्मके वस्तुनि व्यवस्थिते सति यस्मिन्वस्तुरूपे वस्त्वशे सद्रूपे प्रमाणपञ्चकमर्थापत्तिपर्यन्त न जायते । किमर्थम् । वस्तुसत्तावबोधार्थम् । तत्राभावांशे प्रमेयेऽभावस्य प्रमाणता । औचित्येन व्याख्यातवान् । "यत्र घटाख्ये वस्तुनि प्रत्यक्षादि सद्भावग्राहक नोपजायते । तस्य नास्तिता भूप्रदेशाधिकरणाभावप्रमाणस्य प्रमेयेति" । न चेदमभावज्ञान प्रत्यक्षम् । अक्षानपेक्षया केवलात्ममन सन्निकर्षादिव समुत्पद्यमानत्वात् । उक्त

---

१ 'सात्मन' इति म पुस्तके पाठ । २ 'यत्' इति प पुस्तके पाठ । ३ 'घटो' इति म पुस्तके पाठ । ४ 'तदनन्तर इत्यादि पक्ष' इत्यन्त नास्ति प म पुस्तकयो । ५ 'प्रथमपक्षे इत्यादि 'जायते' इत्यन्त म पुस्तके नास्ति । ६ मी श्लो वा सू ५ अभा प श्लो १ ७ मी श्लो वा सू ५ अभा प श्लो २७

च "गृहीत्वावस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥ १ ॥" अविकलस्फारिते चक्षुषि प्रदेशज्ञानं चोत्पद्यते नास्तीति ज्ञानं च इह प्रदेशे घटो नास्तीति । निमीलिते तु चक्षुष्युभयोरप्यभावः । तत्र समाने तद्भावभावित्वे कथं प्रदेशज्ञानमेवाक्षजं नतु नास्तीति ज्ञानमपीत्याशङ्क्याभ्युपगम्य तद्भावभावित्वमन्यथासिद्धतामस्य दर्शयितुमियं कारिका भट्टेनाभिदधे । इदं चात्र तात्पर्यम् । भूप्रदेशग्रहणसापेक्षमभावग्रहणम् । भूप्रदेशग्रहणं चेन्द्रियजमिति तद्भावभावित्वमन्यथासिद्धमभावज्ञानस्य । यथा हि विस्फारिते चक्षुषि दूरव्यवस्थितेऽग्नौ रूपज्ञानं चोत्पद्यते स्पर्शज्ञानं च तत्र रूपज्ञानमेवाक्षजमिष्यते । स्पर्शज्ञानं त्वेकार्थसमवायिनो रूपादानुमानिकमिति तद्भावभावित्वं तत्रान्यथासिद्धम् । एवमिहापि । गृहीत्वा स्मृत्वेति च ज्ञातृज्ञानयोरभेदात्समानकर्तृत्वाभिधानमिति । अभावांशेन सहेन्द्रियस्य सम्बन्धायोग्यत्वाच्च नेदमभावज्ञानं प्रत्यक्षम् । यदाह । न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः ॥ भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १ ॥" अस्यार्थः । योग्यता हि कार्यदर्शनसमधिगम्या । सा चेन्द्रियाणां भावांशग्रहण एवोपलभ्यते नाभावांश इति । न च धर्म्यभेदाद्भावांशेन सहाभावांशस्याभेदे सति योग्यतासिद्धेरिन्द्रियेण सम्प्रयोगतासम्भवात्तद्विषयं ज्ञानमध्यक्षमेवेत्यभिधेयम् । अभिन्ने धर्मिणि रूपरसयोरिव भावाभावांशयोरन्योन्यं भेदात् । तदुक्तम् । "ननु भावादभिन्नत्वात्सम्प्रयोगोऽस्ति तेन च ॥ न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ॥ १ ॥" अत्र पूर्वार्धेन प्रश्नः । उत्तरार्द्धेन तूत्तरम् । यदि हि भावाभावयोरैकान्तेनाभेदः स्यात्ततो भावेनेन्द्रियसन्निकर्षे तदभिन्नस्य तस्यापि स स्यात् । न त्वेवमस्ति । अभावस्यापि रूपा-

---

१ मी. श्लो. वा. सू. ५ अभा प. श्लो १८. २ मी श्लो. वा. सू. ५ अभा. प. श्लो. १९.

दिवत्यन्तमभेदाभावादिति । न चैतद्भावनानमनुमानम् । लिङ्गाभावात् । तदुक्तम् । " न चाप्यस्यानुमानत्वं लिङ्गाभावात्प्रतीयते ॥ भावांशो ननु लिङ्गं स्यात्तदानीमनिरूपणात् ॥ १ ॥ अभावांशे गतेर्जन्म भावांशे ह्यनिवृत्तिते । तस्मिन् प्रतीयमाने च नाभावे जायते मतिः[1] ॥ २ ॥ न चैव तस्य धर्मत्वं पक्षवत्प्रतिपद्यते ॥ " इति । अत्र भावांशो ननु लिङ्गं स्यादिति प्रश्न । शेषं तु समाधानम् । अयमाशय । भूप्रदेशाख्ये धर्मिणि घटाभावे प्रमेयेऽघटाभावस्य वा लिङ्गत्वं स्याद्भूप्रदेशस्य वा । न तावत् घटाभावस्येत्याह तदानीमनिरूपणादिति । घटाभावप्रतिपत्तिवेलायामप्रतीयमानस्य घटस्य कथं लिङ्गत्वम् । तत्प्रतिपत्तिवेलायां च तदभावप्रतिपत्तिर्नास्तीत्यर्थः । नापि भूप्रदेशस्येव लिङ्गत्वम् । घटाभावे प्रमेये भूप्रदेशस्य पक्षवद्धर्मतया ग्रहणाभावादित्याह । न चैव तस्य धर्मत्वमिति । एष इति पुरोवस्थितं भावमपरोक्षं निर्दिशति । यथार्थे पक्षीकृते पक्षमतद्धर्मतया न हेतुरित्युक्तमेनमेषोऽपि भूतलभावो न घटाभावस्य धर्म इति । न चाभावस्य भावरूपेण प्रत्यक्षादिना प्रमाणेन परिच्छित्तिर्युक्ता । प्रयोग । यो यथाविधविषय स तथाविधेनैव प्रमाणेन परिच्छिद्यते । यथा रूपादिभावो भावरूपेण प्रत्यक्षादिना । विवादास्पदीभूतश्चाभावस्तस्मादभावप्रमाणपरिच्छेद्य इति । यदाह । "मेयो यद्वदभावो हि मानमप्येवमिष्यताम्[2] ॥ भावात्मके यथा मेये नाभावस्य प्रमाणता ॥ १ ॥ तथैवाभावमेयेऽपि न भावस्य प्रमाणता ॥ " इति । चतुःप्रकारश्चाभावो व्यवस्थित । प्रागभावप्रध्वंसाभावेतरेतराभावात्यन्ताभावभेदात् । उक्तं च, "[3] क्षीरे दध्यादि यन्नास्ति प्रागभाव स उच्यते ॥ नास्तिता पयसो दधि प्रध्वंसाभावलक्षणम् ॥ १ ॥ गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥ शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ॥ २ ॥

---

१ मी श्लो वा सू ५ अभा प श्लो ३, ३, ३१ २ मी श्लो वा सू ५ अभा प श्लो ४५, ४६ ३ मी श्लो वा सू ५ अभा प श्लो २ ३ ४

शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥ " इति । आसामर्थः। क्षीरमृदादौ कारणे दधिघटादिलक्षणं कार्यं नास्तीत्येवं यत् प्रतीयते लोके स प्रागभाव उच्यते । एव दध्नि क्षीरस्य यन्नास्तित्वमयं प्रध्वंसाभावः । यस्तु गवादावश्वाद्यभाव सोऽन्योऽन्याभाव उच्यते । शशशृङ्गादिरूपेणालोच्यमानाः शशमूर्ध्नोऽवयवा वृद्धिकाठिन्याभ्यां रहिता अत्यन्ताभावः । स्वरूपेण तु ते भावा एवेति । अभावप्रमाणाभावे तु प्रागभावादिचतुष्प्रकाराऽभावव्यवस्था न स्यात् । यदाह ॥ "[1] **क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः । शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि ॥ १ ॥ अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह । व्योम्नि सस्पर्शकास्ते च न चेदस्य प्रमाणता ॥ २ ॥**" एवमिति यथा क्षीरे दधि एवं दध्न्यपि क्षीरमित्यर्थः । शशे शृङ्गमित्यत प्रभृति अत्यन्ताभावासिद्धौ परेषां दोषप्रसञ्जनम् । आभावप्रामाण्यानाश्रयणे हि न शशादिपु शृङ्गादीनामत्यन्ताभावः सिद्ध्यति । परिपन्थिनश्च भूतचैतन्यवादिनो[2] न निराकर्त्तुं शक्यन्ते । महाभूताना वाय्वादीनामात्यन्तिको गन्धाद्यभावो न सिद्ध्येत् । यथोत्तर हि चत्वारि महाभूतान्येकैकगुणरहितानीति स्थितिरिति[3] । न चाभावस्यावस्तुत्वम् । द्रव्यादिवद्भिद्यमानत्वात् । तदुक्तम् । "[4] **न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता** " इति । कारणादिस्वरूपत्वाच्च प्रागभावादेर्नावस्तुत्वम् । तदाह " **कार्यादीनामभावः को भावो यः कारणादिनः** " इति। वस्त्वेव हि सदसदात्मकमिति सिद्धान्त. । तत्र कथं वस्तुरूपस्यैवाभावस्य निस्स्वभावत्वं भविष्यति । स एव हि कार्यस्य दध्नोऽभावो यस्तत्कारणस्य क्षीरस्य भावः । स एव च क्षीरस्याभावो यस्तत्कार्यस्य दध्नो भावः । किमिदानीं भावाभावयोरभेद एव । नेति वदामः । भेदोऽपि ह्यनयोर्धर्म्मधर्म्मितया कियानप्यस्त्येव रूपादीनामिवेति । इत-

---

१ मी श्लो. वा सू ५ अभा. प श्लो ५,६ २ भूतचैतन्यवादिन·—चार्वाकाः।
३ स्थितिः—शास्त्रमर्यादा । ४ मी श्लो. वा. सू ५ अभा प श्लो. ८.

श्चानुमानद्वयात्प्रतीयते वस्तुत्वमभावस्य । अभावो वस्तु अनुवृत्ति-व्यावृत्तिबुद्धिग्राह्यत्वात् प्रमेयत्वाद्वा घटवत् । यदुक्तम् । “ यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् । तस्माद्गवादिवद्वस्तु प्रमेयत्वाच्च गृह्यताम् ॥ १ ॥ ” तत्रानुवृत्तिबुद्धि । चतुर्विधोऽप्यभावोऽभाव इत्येकाकार प्रत्यय । व्यावृत्तिबुद्धि । प्रागभावोऽयं न प्रध्वंसाभाव इत्यादिभिन्नाकारप्रत्यय इति ।

एवं स्वरूपभेदाद्गोचरभेदात्फलस्य भेदाच्च ।
भिन्नं सिद्धमभावप्रमाणमपरप्रमाणेभ्य ॥ २९३ ॥

ततश्च—

सामग्र्यादिभेदत शाब्दमुख्यं भिन्नं मानं भट्टनीत्या प्रसिद्धम् ॥
मानद्वित्वं सांगतं कथ ते तस्माद्यातु न्यायनिष्ठा प्रतिष्ठाम् ॥२९४॥

नन्वेवं प्रत्यक्षपरोक्षभेदात्कथ जैनानामपि प्रमाणद्वैविध्यव्यवस्था । जैनसिद्धान्ते आगमादीनामागमादीना प्रमाणान्तरत्वप्रसिद्धेरविशेषादिति चेत् । तेषां परोक्षेऽन्तर्भावादिति ब्रूम । यथा यदेकलक्षणलक्षितं तद्व्यक्तिभेदेऽप्येकमेव । यथा वैशद्यैकलक्षणलक्षितं चक्षुरादिप्रत्यक्षम् । अवैशद्यैकलक्षणलक्षितं च शाब्दादीनि । यथा हि चक्षुरादिसामग्रीभेदेऽपि तज्ज्ञाने वैशद्यैकलक्षणलक्षितत्वेनैवाभेद प्रसिद्ध तद्वच्छब्दादिसामग्रीभेदेऽप्यवैशद्यैकलक्षणलक्षितत्वेनैवाभेद शाब्दादीनामस्तु । ननु परोक्षस्य स्मरणादिभेदेनाग्रे परिगणयिष्यमाणत्वादुपमानादीना प्रमाणान्तरत्वमस्यवैयर्थ्यप्रसञ्जितमभिधानम् । यस्मादुपमानं प्रत्यभिज्ञानेऽन्तर्भावयिष्यते । अर्थापत्तिस्त्वनुमानेऽन्तर्भवति । तथाहि अर्थापत्त्युत्थापकोऽर्थोऽन्यथानुपपद्यमानत्वेनानवगतोऽवगतो वाऽदृष्टार्थपरिकल्पनानिमित्तं स्यात् । न तावदनवगत । अतिप्रसङ्गात् । येन

जैनसिद्धान्ते आगमादीनां परोक्षेऽन्तर्भावात् प्रत्यक्षपरोक्षभेदेन द्वैविध्यं नास्तीति निर्णीय भासा सर्वसमस्तप्रमाणानां तत्र तत्रान्तर्भावनिरूपणम् ।

१ मी श्लो वा अभा प श्लो ९ २ तत्र इति प पुस्तक पाठ ।

हि विनोपपद्यते तमपि परिकल्पयेदनवगतत्वाविशेषात् । अथ तं[1] न कल्पयति, तर्हि येन विना नोपपद्यते तमपि न कल्पयेत् । अथावगतः, तर्ह्यर्थापत्तेरनुमानादभिन्नत्वम् । अन्यथानुपपद्यमानत्वेन प्रतिपन्नादेकस्मात्सम्बन्धिनो द्वितीयस्य प्रतीतेरत्राप्यविशेषात् । किं चार्थापत्त्युत्थापकस्यार्थस्यान्यथानुपपद्यमानत्वावगमोऽर्थापत्तेरेव प्रमाणान्तराद्वा । प्रथमपक्षेऽन्योन्याश्रयः । तथा ह्यन्यथानुपपद्यमानत्वेन । प्रतिपन्नादर्थादर्थापत्तिप्रवृत्तिस्तत्प्रवृत्तेश्चास्यान्यथानुपपद्यमानत्वप्रतिपत्तिरिति । अथ प्रमाणान्तरादर्थापत्त्युत्थापकस्यार्थस्यान्यथानुपपद्यमानत्वावगमः । तत्किं भूयोदर्शनं विपक्षेऽनुपलम्भो वा । आद्यकल्पे क्वास्य भूयोदर्शनं साध्यधर्मिणि दृष्टान्तधर्मिणि वा । यदि साध्यधर्मिणि, तदा भूयोदर्शनेनैव साध्यस्यापि तत्र प्रतिपन्नत्वादर्थापत्तेर्वैयर्थ्यम् । अथ दृष्टान्तधर्मिणि, तर्हि तत्र प्रवृत्तं भूयोदर्शनं साध्यधर्मिण्यप्यस्यान्यथानुपपद्यमानत्वं निश्चाययति तत्रैव वा । तत्रोत्तरपक्षोऽयुक्तः । न खलु दृष्टान्तधर्मिणि निश्चितान्यथानुपपद्यमानत्वार्थोऽन्यत्र साध्यधर्मिणि तथात्वेनानिश्चितस्स्वसाध्यं प्रसाधयति । अतिप्रसङ्गात् । प्रथमपक्षे तु लिङ्गार्थापत्त्युत्थापकार्थयोर्भेदाभावः । ननु लिङ्गस्य दृष्टान्तधर्मिणि प्रवृत्तप्रमाणात्स्वसाध्यान्यथानुपपद्यमानत्वनिश्चयोऽर्थापत्त्युत्थापकार्थस्य तु साध्यधर्मिणि प्रवृत्तप्रमाणादित्यनयोर्भेदः । नैतद्युक्तम् । अर्थापत्तेर्वैयर्थ्यस्य तदवस्थत्वात् । न च लिङ्गं सपक्षानुगममात्रेण गमकं वज्रस्य लोहलेख्यत्वे पार्थिवत्वादिवत् । किं तर्हि व्याप्तिबलेन । तत्र च किं सपक्षानुगमेनेति प्रतिपादयिष्यते । तदभावे गमकत्वमेवास्य कथमिति चेत् । उच्यते । यथार्थापत्त्युत्थापकार्थस्य । तथा चार्थापत्तिरेवाखिलमनुमानमिति प्रमाणसंख्याव्याघातः । भवतु वा सपक्षानुगमाननुगमरूपो विशेषः । तथापि नैतावता तयोर्भेदः । अन्यथा पक्षधर्मत्वसहितादनुमानात्तद्रहितमनुमानं प्रमाणान्तरं स्यादिति प्रमाण-

---

१ 'न तत्कल्पयति' इति म, पुस्तके पाठः ।

सत्याव्याघात । अस्ति चानुमान पक्षधर्मत्वरहितम् । नदीपूरोऽप्यधोदेशे दृष्ट' सन्नुपरिस्थिताम् । नियम्यो गमयत्येव वृत्ता वृष्टिं नियामिकाम् ॥ १ ॥ पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा । सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते ॥ २ ॥ एव यत्पक्षधर्मत्व स्येष्ट हेत्वङ्गमिष्यते । तत्पूर्वोक्तान्यधर्मत्वदर्शनाव्द्यभिचार्यते ॥ ३ ॥" इति भट्टेनाभिधानात् । नियमवतोऽर्थादर्थान्तरप्रतिपत्तेरविशेषात्तयोरभेदे स्वसाध्याविनाभाविनोऽर्थादर्थान्तरप्रतिपत्तेरत्राप्यविशेषात्कथमनुमानार्थापत्त्योर्भेद स्यात् । अथ विपक्षेऽनुपलम्भात्तस्यान्यथानुपपद्यमानत्वावगम । न । पार्थिवत्वादेरप्येव स्वसाध्याविनाभावित्वावगमप्रसङ्गात् । विपक्षेऽनुपलम्भस्याविशेषात् । सर्वात्मसम्बन्धिनोऽनुपलम्भस्यासिद्धानैकान्तिकत्वाच्च । नन्वेव सकलानुमानोच्छेद अस्तु नाम तस्यान यो भूयोदर्शनाद्विपक्षेऽनुपलम्भाद्वा व्याप्तिं प्रसाधयति । नास्माकम् । प्रमाणान्तरात्तत्प्रसिद्ध्यभ्युपगमात्, मीमासकस्यापि नतत्तदभ्युपगमे प्रमाणसख्याव्याघात ।

प्रत्यक्षाद्युपलक्षितादधिगतिर्याथात्म्यहार्यान्तर–
स्यार्थापत्तिरियं न किन्तु सुमखे सैषाऽनुमान ध्रुवम् ॥
तन्मीमासकपड्प्रमाणगणनात्यन्तानव नोचित
छेकाना परिपन्न नाम किमिय न्याता त्वयाद्यापि भो ॥२९७॥

अत्र यौगा साङ्गिरन्ते ।

---

नैयायिकमतेन शक्ते खण्डनम् ।

अर्थापत्तिर्या प्रतिष्ठानुमाने
युष्मन्नीत्या हन्त तस्या कदाचित् ॥
माद्या शक्तिर्मन्यतेऽतीन्द्रिया या
श्लाघ्या नेय न्यायमुद्रादरिद्रा ॥२९६॥

---

१ प्रथमतात्पर्यद्योतक स्यात् उपन्यस्त कवलम् । मी श्लो वा अ प
सा १७

तथाहि । दहनादिषु तत्प्रसिद्धये स्फोटाद्यन्यथानुपपत्त्यानुमानमायुष्मता सम्मतम् । तच्च न सङ्गतम् । दृष्टकारणादेव स्वरूपसहकारिशक्तिरूपात्स्फोटाद्युत्पत्तेर्घटनात् । दहनस्य हि स्वरूपं दहनत्वं देहसंयोगादिस्तु सहकारी । तदुभयसम्भवेऽवश्यंतया सम्पद्यमानं स्फोटकार्यं कथमतीन्द्रियशक्तिकल्पनाकौशलमवलम्बेत । न चैवं प्रतिबन्धकमणिमन्त्रौषधादिसन्निधानेऽपि धनञ्जयस्य स्फोटादिकार्यकारित्वप्रसक्तिरिति वाच्यम् । प्रतिबन्धकाभावस्यापि सहकारित्वात्तस्य च तदानीमभावात् । प्रयोगश्चैतन्निषेधे दहनादयः स्वरूपसहकारिरूपदृष्टशक्त्यतिरिक्तशक्तिभाजो न भवन्ति कार्योत्पादकत्वात् । यदित्थं तदित्थं यथा कर्म । तथा चैते तस्मात्तथा । उत्क्षेपणादिकं हि कर्म विभागेन निर्वर्तिते पूर्वसंयोगे उत्तरसंयोगोत्पादं स्वरूपलक्षणायाः पूर्वसंयोगप्रध्वंसलक्षणसहकारिरूपायाश्च दृष्टशक्तेरतिरिक्तशक्तिभाग् न भवत्येवेत्युभयसम्प्रतिपन्नोऽयमर्थः । विष्णुभट्टस्त्वाह । "स्वरूपसहकारिव्यतिरिक्ता शक्तिरस्तीति वाक्यमनर्थकं सर्वप्रमाणैरनुपलभ्यमानार्थत्वाद्यदित्थं तत्तथा यथाङ्गुल्यग्रे करिशतमास्त इति वाक्यं यथोक्तसाधनं चैतत्तस्माद्यथोक्तसाध्यम्" । विमलशिवः पुनरन्यथा प्राह ।"वह्न्यादिकं न स्वैकसमवेतातीन्द्रियकार्यकृच्चाक्षुषत्वे सति हेतुत्वात् यदित्थं तत्तथा यथा गोत्वं तथा च विवादास्पदं तस्मात्तथा । वह्न्यादिकं नातीन्द्रियकार्यकृदित्युच्यमाने प्राणिसमवेतादृष्टरूपातीन्द्रियकार्यकृत्त्वस्यापि प्रतिषेधः स्यात्तदपोहाय स्वसमवेतेति । वह्न्यादिकं हि प्राणिनामदृष्टं निमित्तकारणत्वेन करोति न तु तत्तत्र समवेतम् । प्राणिसमवेतत्वात्तस्य । एवमपि वह्न्यादेराकाशादिनापि संयोगकृत्त्वस्वभावः स्यात्तन्निषेधायाह एकेति । संयोगो हि न वह्न्यादावेव समवेतः हेतुत्वादित्युच्यमाने आत्मादिना स्वैकसमवेतातीन्द्रियाद-

---

1 स्फोट.–वंशादीनां सशब्दं स्फुटनम् । अथवाऽग्निसंयोगेन शरीरे स्फोटोत्पत्तिः ।

घटादिकार्ये जनकेन व्यभिचार स्यात्तत्परिहाराय चासुपत्त्व इति। अपि चासौ शक्तिर्नित्याऽनित्या वा। आद्यपक्षे सर्वदा कार्योत्पादप्रसङ्गः तस्याः सदा सत्त्वात्। ननु तन्नित्यत्वेऽपि सहकारिणां कादाचित्कत्वप्रयुक्तं कार्यस्य कादाचित्कत्वम्। तदपेक्षयास्तस्याः कार्यकारित्वप्रतिनानात्" इति। एतदप्यनुपपन्नम्। शक्तिकल्पनावैयर्थ्यप्रसक्तेः। स्वरूपस्यैव सहकारिकारणापेक्षस्य कार्योत्पादकत्वोपपत्तेः। अनित्यत्वे तु स्वरूपसहकारिलक्षणसामर्थ्यसम्पाद्येयमतीन्द्रियशक्त्यन्तरनिष्पाद्या वा। प्रथमपक्षे कार्यमेव स्वरूपसहकारिलक्षणसामग्र्यसम्पाद्यमस्तु। पर्याप्तमप्रातीतिकातीन्द्रियशक्तिकल्पनया। अतीन्द्रियशक्त्यन्तरनिष्पाद्यत्वेऽनवस्था। तस्यापि कादाचित्कतया तदन्तरनिष्पाद्यत्वप्रसक्तेः। तथा प्रतिकार्यमेका शक्तिरनेका वा। न तावदेका, तद्भेदात्कार्यभेदाङ्गीकरणात्। अथानेका, तर्हि किं शक्तिशक्तिमतोर्भेदोऽभेदो भेदाभेदो वा। भेदेऽपसिद्धान्तप्रसङ्गः। अभेदेऽपि स एव दोषः। किंच। किं शक्तिभ्यस्तद्वानभिन्नस्तद्वतो वा शक्तयः। प्रथमपक्षे शक्तिस्वरूपवच्छक्तिमतोऽप्यनेकत्वमतीन्द्रियत्वं च स्यात्। तादात्म्ये तस्यापि तावद्धा भेदादतीन्द्रियस्वरूपस्वीकाराच्च। अन्यथा तत्तादात्म्यानुपपत्तिः। द्वितीयविकल्पे तु शक्तिमत्स्वरूपवच्छक्तीनामप्येकत्वप्रसक्तिः। एकस्मादभिन्नानां तत्स्वरूपवदनेकत्वानुपपत्तेः। कुतः कार्यनानात्वसम्भवः। भेदाभेदपक्षस्तु विरोधादिदोषसमर्शीति।

तत्कार्ये मानानां स्वरूपसहकारिलक्षणा शक्तिः ॥
उपपत्तिमेति न पुनः परोक्षरूपा पराभिमता ॥ २९७ ॥

सैव व्यक्तीक्रियते नश्चापलमङ्गीकुर्वतामिह योगाः ॥
शक्तिमत्त्वानुवर्ती तया विषयस्य गमनम्। यस्मादतीन्द्रियायां शक्तौ युक्तिः स्फुरत्येव ॥ २९८ ॥

तथा हि। यदा यदुत्पादि दृष्टकारणादेव स्वरूपसहकारिरूपात्स्यादिति। तदयम्। प्रतिबन्धकोपढौकनावस्थायामपि तत्र कार्यो

1 'आत्मनःसकाशात्सम द्रव्य क्षणमगुण निवृत्ति' इति न्यायसम्प्रदायग्रन्थे ग्रन्थवत्सुन्दरम्। २ तत् इत्यधिक स पुस्तके।

त्पत्तिप्रसक्तेः । यत्पुनरिहोक्तं प्रतिबन्धकाभावस्यापि सहकारित्वादिति । तदप्यनौपयिकम् । यतः कोऽत्र प्रतिबन्धकस्याभावः सहकारी । किं प्रागभावः प्रध्वंसोऽन्योन्याभावोऽत्यन्ताभावो वा । यदि प्रागभावः, तर्हि प्रतिबन्धकस्य प्रध्वंसे सत्यपि वा तस्मिन्नुत्तम्भकमणिसन्निधौ ततो दाहोत्पत्तिर्न स्यात् । एतेन यत्कन्दलीकारः प्राह "मन्त्रादिसन्निधौ कार्यानुत्पत्तिरदृष्टं रूपमाक्षिपति यथाह्यन्वयव्यतिरेकाभ्यामवधारितसामर्थ्यो वह्निर्दाहस्य कारणं तथा प्रतिबन्धकमन्त्रादेः प्रागभावोऽपि कारणं स च मन्त्रादिप्रयोगे सति निवृत्त इति सामग्रीवैगुण्यादेव दाहस्यानुत्पत्तिर्न शक्तिवैकल्यात्" इति । तदपि प्रत्युक्तम् । उक्तनीत्या प्रतिबन्धकप्रागभावस्य दाहं प्रति कारणत्वासम्भवात् । नापि प्रध्वंसः सहकारी । तत्प्रागभावे तत्सत्त्वेऽपि चोत्तम्भकमण्युपनिपाते दाहानुत्पत्तिप्रसङ्गात् । उभयदशायामपि तत्प्रध्वंसस्य सहकारिणोऽसम्भवात् । नाप्यन्योन्याभावः । प्रतिबन्धकमण्यादिसद्भावेऽप्यस्य सम्भवेन दाहोदयानुषङ्गात् । तत्प्रागभावप्रध्वंसाभावयोश्च समयेऽन्योन्याभावासम्भवेन दाहानुदयप्रसक्तेश्च । अत्यन्ताभावस्य च प्रतिबन्धकमण्यादावसम्भवादेव सहकारित्वं प्रत्याख्यातम् । अथ कदापि प्रतिबन्धकस्य प्रागभावः कदापि प्रध्वंसः शिखिनि साखित्वमाश्रयति । तथा चाभिदधे विष्णुभट्टेन "प्रतिबन्धकप्रागभावप्रध्वंसाभावयोश्च नीलपीताद्यनेकविधानामिव यथासम्भवं कारणत्वं विशेषत" इति । तदपि नोपादेयम् । कार्यस्यैवमनियतहेतुकत्वप्रसङ्गात् । अनियतहेतुकं चाहेतुकमेव । ननु किमिदममर्यादमुच्यते । अनियतहेतुकं नैकहेतुर्भवति न पुनरहेतुकमेव । युक्तिरिक्तस्यैतद्वचः । यत्र खल्वसति कार्यं नोपजायत एव सत्येव तु जायते तदेव कारणमिति कार्यकारणकथासु कथयन्ति तार्किकाः । यदि तु तदन्तरेणापि कारणान्तरादुपजायमानं कार्यमुपलभ्यते तदा कथं तत्कार्यता । असत्यपि

१ न्यायकन्दल्या पृ. १४५ पं. १५

तस्मिंस्तद्भावादिति को हेतुः स्यात् । अथ कोऽयं प्रसङ्गोऽस्माकम् । अभ्युपगम्यत एव भवद्भिरप्यनियतहेतुकत्वम् । तथा हि कदलीबीजादिव दावपावकप्लुष्टबीजादपि रम्भास्तम्भारम्भो वृश्चिकादिव गोमयादपि वृश्चिकडिम्भारम्भः सम्प्रतिपन्न उभाभ्याम् । तन्न युक्तम् । अनियतहेतुकत्वस्यास्माभिरनभ्युपगमात् । कदलीकार्यजननसामर्थ्यात्मिकया शक्त्यैकया कदलीबीजादिवत्कारणानामशेषाणामधिष्ठितत्वात् । वृश्चिकगोमयादिवृश्चिककारणानामपि तज्जननसामर्थ्यमनुर्थैकया शक्त्या समलङ्कृतत्वात् । न च प्रतिबन्धकप्रागभावप्रध्वंसयोरपि स्फोटादिकार्यजनकत्वमेकं रूपमस्तीति वाच्यम् । यतः किमिदं सामान्यं धर्मो वा कश्चित् । नाद्यः पक्षः । अभावेषु भवता सामान्यानभ्युपगमात् । नापि द्वितीयः । यतोऽयं धर्मो दृश्यः स्यादतीन्द्रियो वा । न तावद् दृश्यः, तस्य तत्र कस्यचिदपि प्रत्यक्षेणाप्रेक्षणात् । अतीन्द्रियस्य तु तस्य स्वीकारे प्रतिबन्धकप्रागभावादिनिरुक्तिनिरुक्त्यापरित्यागकारणं शक्तिरेव भावेषु स्वीक्रियताम् । किं च, यद्यपि प्रतिबन्धकसंनिधिमधिवसति कृशानुस्तदाप्युत्तम्भकमणिमन्त्रौषधसांनिध्यमध्यासीनस्य तस्य दहननिर्माणनैपुण्यमेवेक्ष्महे । तत्कथं प्रतिबन्धकाभावः सहकारी स्यात् । अथासत्प्रतिपक्षस्य मणिमन्त्रादेः प्रतिबन्धकत्वं प्रतिज्ञायते । यदाहोदयनः कुसुमाञ्जलौ । " असत्प्रतिपक्षो हि प्रतिबन्धकाभिमतो मन्त्रः प्रतिपक्षः " इति । उत्तम्भकसंनिधौ च सत्प्रतिपक्षत्वान्नायं प्रतिबन्धक इति । नन्वेवं वक्तस्ते कुण्टकारकस्येवैकं संधित्सोरपरमप्रच्यवते । तथा हि यदा जानवेदसः प्रथमं प्रतिबन्धकः समनन्तरमुत्तम्भकस्तदुत्तरमपरः प्रौढप्रतिबन्धकः संनिधिमास्कन्दति । तत्र तावन्निर्विवादमस्यावसीयते तद्भावात्कार्याकरणम् । न चेदं त्वन्मतेनोपपद्यते । उत्तम्भकरूपप्रतिपक्षसत्त्वेनापरप्रौढप्रतिबन्धकस्य प्रतिबन्धकत्वासिद्धेः ।

---

१ 'प्रागभावाधविकुथिन' इति प म पुस्तकयो पाठ । २ सह भवति इति सर्धीचीन । उत्तम्भकमणयादिसहितस्येत्यर्थ । ३ न्यायकुसुमाञ्जली पृ ४२ प १

अथासिद्धं विवक्षितोत्तम्भकस्य प्रतिपक्षत्वम् । यतः कश्चिदेवोत्तम्भकः कस्यचिदेव प्रतिबन्धकस्य प्रतिपक्ष । तदयमुत्तम्भकः प्रथमोपस्थायिन एव प्रतिबन्धकस्य प्रतिपक्षो न त्वपरस्य । तद्रूपक्षयोत्तम्भकान्तरस्यैव प्रतिपक्षत्वादिति चेत् । सोऽय पक्षोऽनुन्नतरुशिखरालम्बिपेशलफलादानदोहदः । सपक्षप्रतिपक्षव्यवस्था हि भावानामविरुद्धाविरुद्धकार्यकारित्वावसेया । तत्र प्रतिबन्धकस्य कार्यं वह्निप्रतिबन्धनं उत्तम्भकस्य पुनस्तदुत्तम्भनम् । तदिह यथा प्रथमप्रतिबन्धकम्प्रति तदुत्तम्भनाख्यविरुद्धकार्यकारित्वात्प्रतिपक्षतयोत्तम्भकः स्वीक्रियते । तथा परप्रौढप्रतिबन्धकमपि प्रति किं न तथाऽसौ स्वीक्रियते । विशेषाभावात् । अथोत्तम्भनस्वभावं कार्यं कुर्वन्नेवोत्तम्भक उत्तम्भकतां प्रतिपद्यते । प्रौढप्रतिबन्धकसन्निधौ चोत्तम्भकस्य तदुत्तम्भनरूपकार्यकारित्वाभावान्नोत्तम्भकत्वमिति कथं तत्प्रतिपक्षत्वव्यवस्थेति चेत् । तत्किमिदानीं दहनसन्निधाने शान्तिमनादधानस्य तुषारस्यापि प्रतिपक्षता न प्रतिपन्नवान् भवान् । क्वापि कदापि तस्मिँस्तज्जातं यदा शीतकार्यदर्शनात्तुषारस्य प्रतिपक्षतोपगमे तद्वदेवोत्तम्भकेऽपि जाङ्गले पादिकया किं न कोविदैः कक्षीकार्यसे । अपि चैवमुच्यमाने प्रतिबन्धकनिकटतायां करतलमदहतो दहनस्यापि दहनत्वं न व्यवतिष्ठेत । अथ तदाप्यसौ स्वाश्रयमिन्धनं दहत्येवान्यथा निर्वाणत्वापत्तिस्तत्कथमदहनः । तर्हि दहनद्वयमुत्तम्भयितुमेकस्मिन्नुत्तम्भके प्रयुक्ते तदन्यतरदहनोद्देशप्रयुक्तप्रौढापरप्रतिबन्धकनिकटतायामुत्तम्भकोऽप्युत्तम्भयत्येव दहनान्तरमिति कथं नोत्तम्भक । अथास्तु दहनान्तरापेक्षयाऽयमुत्तम्भक. का नः क्षतिः । प्रकृततदपेक्षया तावदनुत्तम्भकः एवासौ । तर्हि दहनोऽपि दाह्यान्तरापेक्षयैव दहनः करतलापेक्षया त्वदहन एवास्तु । अस्त्वेमिति चेत् ।

---

१ ' शिखरावलम्बि ' इति प. पुस्तके पाठः । २ ' जातीये वा ' इति म पुस्तके पाठ. ।

अहह नैयायिक त्व स्वकाशयसिद्धिमात्रलाम्पटयात् ॥
लोकव्यवहारमनु कथमवधारयसि नि शङ्क ॥ २९९ ॥

लोको हि प्रतिबद्धमपि दहन दहनमेव व्यवहरति । अथ न दहनस्य दाहनिबन्धनो दहनव्यवहारस्तस्य दहनत्वसामान्यनिबन्धनत्वात् । इतरत्रापि किं न तथा । अथोत्तम्भके नास्त्युत्तम्भकत्वसामान्यमनुत्तम्भनक्रियानिबन्धनत्वात्तद्व्यपदेशस्य पाचकादिवदिति चेत् । दहनेऽप्येवमस्तु । अथोत्तम्भके तत्सामान्याभ्युपगमे प्रौढापरप्रतिबन्धककालेऽपि तस्य तन्नामत्वात्कार्यात्पत्तिप्रसङ्ग । वह्नावपि तुल्यमिदम् । किं च समाचक्ष्महे च हेतुरित्येव जनक किं तु युतोऽप्रयत्नया शक्त्या ।

तत्प्रतिबन्धककाले च शक्तिरुत्तम्भकस्य सा ध्वस्ता ॥
तदनुत्तम्भितवह्नेस्तत्र कथ भवतु कार्यजनि ॥ ३०० ॥
येन तु नोपगताऽसौ तस्येदृशि सङ्कटे निपतितस्य ॥
निस्सरणोपाय स्यात्पलायन यदि पर नान्य ॥ ३०१ ॥
नोत्तम्भकस्त्वमित्थ पुराणस्यैव कार्यमेति घटाम् ॥
अस्मि प्रतिपक्षत्व प्रौढप्रतिबन्धकेऽस्य तत ॥ ३०२ ॥

किं चोत्तम्भकापेक्षया प्रौढप्रतिबन्धके प्रतिपक्षत्व कथीकरोषि तत्पेक्षया पुनरुत्तम्भके न स्वीकरोषीति नास्त्येव नैयायिकोऽसि । उभयाविधानतयाऽप्योभयत्रोपगमाहस्यैकत्रैवोपगमान । अथ यमभिसन्धाय यस्य प्रयोग स तस्य प्रतिपक्ष । न च प्रौढापरप्रतिबन्धकस्याभिसन्धायानेनैतदुत्तम्भकप्रयोग किन्तु प्रथमप्रतिबन्धकस्येति चेन्, परिभाषामात्रमेतत । विरुद्धकार्यकारित्वेनैव प्रतिपक्षत्व यथास्थितेस्तत्त्वात् । यत्र च विद्यमाने बलीयसि प्रतिबन्धके तमभिसन्धाय दुर्बल उत्तम्भक केनापि सन्धीयते तत्र क कुशलोपायस्ते । तदा हि तस्य

१ नेत इत्यधिकं म पुस्तके । २ केवलं पुस्तिकेति दहनमित्यर्थः ।

१९

त्वन्नीत्या समस्ति प्रतिपक्षत्वम् । तथा च सत्प्रतिपक्षस्य प्रतिबन्धकस्याप्रतिबन्धकत्वेन तदभावनिबन्धनः कार्योदयः किं न स्यात् । यत्तु हरिहरः प्राह "न च दुर्बल उत्तेजकमन्त्रः स्तम्भकमन्त्रस्य प्रतिपक्षः । तस्मिन् सत्यपि स्तम्भकमन्त्रस्य कार्यकरणदर्शनात्" इति । तदस्यातिमनीषिमानितया लोकातिक्रान्तप्रतिपक्षस्वरूपप्रतिपादनम् । लोके हि किमपि दुर्बलोऽपि तिमिरपरिकरः खरतरकरनिरन्तराक्रान्तदिग्मण्डलस्य मार्तण्डमण्डलस्योत्पत्तौ बलीयसः क्षोदीयानपि च प्रत्यर्थी प्रौढप्रतापाक्रान्तदिक्चक्रस्य सम्राजो महीयसः प्रोच्यते प्रतिपक्षः । किं च, यत एव प्रौढस्तम्भकमन्त्रः सत्यप्युत्तम्भके तद्विरुद्धं कार्यं कुर्वन् दृश्यतेऽत एवोत्तम्भकः प्रतिपक्षो भवति प्रौढस्तम्भकस्य । लोकोऽपि खल्वपचिकीर्षुः प्रतिपक्षस्यैव विरुद्धमाचेष्टते नानुकूलस्योदासीनस्य वा । तदेवमुत्तम्भकमणिसन्निधाने प्रतिबन्धकाभावस्याभावेऽपि कार्योत्पादान्नासौ सहकारी । अपि चोत्तम्भकसन्निधौ प्रतिबन्धकस्याभावः प्रध्वंसरूपः सहकारित्वेन त्वया व्याक्रियते । स च किं प्रतिबन्धकधर्मिणः स्यादुत तद्धर्मस्योपचारात्तु प्रतिबन्धकस्येत्युच्यते । नाद्यः पक्षः । मणिप्रमुखप्रतिबन्धकधर्मिणोऽप्रध्वस्तस्यैव प्रत्यक्षेण वीक्षणात् । नापि द्वितीयः । यतः प्रत्यक्षोपलक्षितस्य रूपादेः कस्यचिदसौ स्यादतीन्द्रियस्य वा । प्रथमपक्षे प्रत्यक्षविरोधः । रूपादेरशेषस्याक्षुण्णतयाऽध्यक्षेण प्रेक्ष्यमाणत्वात् । अतीन्द्रियस्य तु कस्यचित्तस्य प्रध्वंसस्वीकारे निष्कारणोऽत्यक्षशक्तिनिराकरणप्रयासः । किं च अकिञ्चित्करः किञ्चित्करो वा प्रतिबन्धकः स्वीक्रियेत । नाद्यः पक्षः । अन्तरिक्षादिवदकिञ्चित्करस्य प्रतिबन्धकत्वस्यायोगात् । तथापि प्रतिबन्धकत्वे न कदाचित्कृपीटयोनिः स्फुटं स्फोटघटनपाटवं प्रकटयेत् । नापि द्वितीयः । अतीन्द्रियशक्तिस्वीकारप्रसङ्गात् । यदिहोदयनः पुनरुदीरयामास, "सामग्रीवैकल्यं

---

१ 'मन्त्र' इत्यधिकं प. म. पुस्तकयोः । २ न्यायकु. पृ. ४७ प. १३,

हि प्रतिबन्धपदार्थो मुख्य । स चात्र मन्त्रादिरेव । न त्वसौ प्रतिबन्धक । तत किं तस्याकिञ्चित्करत्वेन । तत्प्रयोक्तारस्तु प्रतिबन्धार । ते च किञ्चित्करा एवेति किमसमञ्जसम् ” इति । सोऽयमघमर्णस्येव मणिमन्त्रादिविशेषस्य नामान्तरमारचयन्नप्युत्तमर्णान्वि गर्तिदूषणात्र त परित्रातुमीश । यथा ह्यत्वकिञ्चित्करस्यास्मरारिव किञ्चिदपि प्रति प्रतिबन्धकत्वमपि कथ कल्प्यते । अथ कथये परहृत्यानभिनतयैतदुक्त मणिमन्त्रादिप्रतिबन्ध इति प्रतिबन्धनक्रिया व्याख्यायते । सा चाकिंचित्करैव । क्रियाणा निष्क्रियत्वात । तेनेतद्भवतो भावस्वभावानभिज्ञतामाविर्भावयति । मण्यादिर्हि द्रव्य तत्कथमसो प्रतिबन्धक्रियोच्यते । द्रव्यक्रिययोरैक्यानुपपत्तेरिति । उपचारादुच्यत एवेति चेत्, ननु कुत उपचार । कार्यकारणभावादिति चेत्, तर्हि प्रतिबन्धक्रियाकरणान्मणिमन्त्रादे प्रतिबन्धकत्व निश्चित्करत्व चायातमित्यस्य प्रतिबन्धकत्वाभावात्र किञ्चित्करत्व च स्वोपन प्रत्यापयन् कथ न लज्जसे । कथ च तत्प्रयोक्तार प्रतिबन्धार त्वयोपि । तत्प्रयोक्तृत्वान्यमुपचारेण प्रतिबन्धकोऽभिधीयते इति चेत । सोऽय पारमार्थिक पशु पृष्टस्तदितरमुपचरितपशुत्व पुमास पशुतत्वे पि प्रतिपादयन्नियत स्वयमेव पशु । यदा च केनचित्परिपन्थिना तत्राप्यविदिता भवद्भवनसन्निविसमुद्धता दिग्यामापथिमनवबुध्यमानेन तदुपरि दाहाय दहनो निहितस्तदा कथमसा न दाह निर्व्यात । तदा हि न भवान् प्रतिबन्धको नापि त्वत्परिपन्थी । त्वत्परिज्ञानेनोभयोरपि तत्प्रयोक्तृत्वासम्भवात् । अथाय परिपन्थी प्रतिबन्धमजानन्नपि तत्सविधे धूमध्वज नियोजयन प्रतिबन्धक एव । हन्त तर्हि किमिति कोऽपि पाटलचटुले चक्षुषी समारचयन्नतिविकटभ्रूकुटिसमाटोपमकट च ललाटपट्ट प्रकटयन् रेरे दुराचारविचारगोचराङ्गत्वपरमारदुरागते ष यासीति नैयायिकनायकोऽपि भूत्वा त प्रति कुपितोऽपि न पुनर्निर्गत एव सकललोकोपचारिकरसिक मन्मन्दिरप्रदीपपावकप्रति-

बन्धबन्धो विधीयतां स्नेहानुबन्धः । समनुभूयतां सज्जनसमालिङ्गनादिप्रमोदसत्पर्यः किमत्र सत्रासेनेति प्रमोदनिर्भरं भाषसे । किं च इक्ष्वामकुक्षिकुम्भभुजगाकर्षणादिव्यमपि नासौ प्रतिबन्धकः किन्तु प्रदीपभिन्न एवायमित्यर्थे साक्षिभावं भजते । अथ येषु देशकालादृष्टेषु सन्निहितेषु सत्सु पुरुषादिदृष्टकारणेनानुपढौकितः प्रतिबन्धस्तिष्ठति तत्र तेषां प्रतिबन्धकत्वं प्रतिपद्यामहे । यत्र तु तदुपढौकितस्तत्र तस्य तेषां तदिह च देशकालादृष्टाः प्रतिबन्धका भविष्यन्ति मा भूत्पुरुष इति चेत्, तर्हि यस्मिन् दहने सन्निहिते सति प्रतिबन्धस्तिष्ठति स स्वयमेव प्रतिबन्धक इत्यपि किं नास्थीयते । अथ प्रतिबन्धक्रियाविदधानस्य प्रतिबन्धस्योपध्यादेः प्रतिबन्धकक्रियाविषयतया सहकारिकारणं दहनः कथं प्रतिबन्धकः स्यात् । तर्हि देशकालादृष्टा अपि तस्य तामादधतः स्ववस्थानहेतुतया सहकारिणः कथं प्रतिबन्धकाः स्युः । ततो न मणिमन्त्रादिप्रतिबन्धप्रयोक्ता प्रतिबन्धको युक्तः । अपि च यो यस्यान्वयव्यतिरेकावनुविधत्ते स तस्य कार्यम् । नच स्फोटादिकार्यं प्रतिबन्धकाभावस्य तावनुविधत्ते । प्रतिबन्धकासद्भावेऽपि ह्युत्तम्भकप्रयोक्तृसन्निधाने कार्यं जायते । यदा च कश्चित्प्रतिबन्धकमणिं वह्निसन्निधौ विधाय स्वयमयासीद्देशान्तरम् । तदा तत्र प्रतिबन्धकाभावसद्भावेऽपि नोपजायते । अथ मा भूद्देशान्तरेऽपि सन्नसौ प्रतिबन्धको भविष्यति । एवं तर्हि केनचित्प्रतिबन्धकमणेरुत्सारणेऽपि तस्य देशान्तरे सत्त्वात्कुतस्त्यः कार्योत्पादः । अथ यावद्यत्प्रयुक्तः प्रतिबन्धः सन्निहितो भवति तावदसौ तत्रस्थो अन्यदेशस्थो वा प्रतिबन्धक एवेति चेत् तर्हि सति सन्निहिते प्रयुक्ते प्रतिबन्धे यदोत्तम्भक उपढौक्यते तदापि प्रतिबन्धकसद्भावाद्दाहः

१ 'सत्पर्यातमल' इति प. भ. पुस्तकयोः पाठः । २ 'कुक्षिकुम्भभुजङ्ग' इति भ पुस्तके पाठः । ३ 'हन्त' इत्यधिकः प. भ. पुस्तकयोः । ४ 'प्रतिबन्धकः' इति प. भ. पुस्तकयोः पाठः । ५ 'प्रतिबन्ध' इति प. पुस्तके पाठः । ६ 'प्रतिबन्धकपुरुषसद्भावे' इति प. भ. पुस्तकयोः पाठः ।

कार्योत्पादे । असत्प्रतिपक्ष एव प्रतिबन्धो भवतीति चासत्प्रतिपक्षप्रतिबन्धकपराकरणेनैव निरस्तम् । तेन समानयोगक्षेमत्वात् । तस्मान्न मणिमन्त्रादेः प्रतिबन्धत्वं तत्प्रयोक्तुः प्रतिबन्धकत्वं युक्तम् । अपरः पुनराह । “ मन्त्रोच्चारणव्यापारावच्छिन्नमान्त्रिकाभिप्रायावच्छिन्नः कालविशेषः प्रतिबन्धकः ” इति । सोऽपि स्वगृहसारं विस्मृत्यैव व्याजहार । तद्गृहे कालस्यैकत्वेन वर्णनात्तद्विशेषाणामनुपपत्तेः । अथैवमेवैतत्स्वरूपापेक्षयोपाधिविशेषापेक्षया पुनर्दुरपह्नवा अस्य विशेषा इति चेत् । न । स्वरूपतः सर्वथा विशेषाभावे उपाधिविशेषसहस्रापेक्षयापि विशेषासम्भवात् । न हि विहाय स्वभावेनादाहकः पावकः प्रभूतोपाधिसंसर्गतोऽपि दाहको भवति । कल्पिता विशेषाः स्युः किं पुनस्तेभ्यः पारमार्थिकार्थव्यवस्था सङ्गच्छते । न खलु कल्प्यपावकत्वान्माणवकात्पारमार्थिकपाकादिक्रियानिष्पत्तिरुपलभ्यते । ननु किं विशिष्टादृष्टाधिष्ठितकर्णशष्कुल्यवच्छिन्ननभोदेशस्वभावं श्रोत्रमपि शब्दोपलम्भार्थक्रियां माकार्षीत् । ओमिति ब्रूमः । दृष्टा तावदियमभ्रान्ता चेति चेत् । ननु न वयमेतामपह्नुमहे । किन्तु नैतादृशेन श्रोत्रेणासौ कर्तुं पार्यत इत्याचक्ष्महे । यादृशं च श्रोत्रं तत्र कल्प्यते तादृशमचिरेणैव वक्ष्यामः । तथा प्रतिबन्धकेन स्तम्भितस्य विषस्य भक्षणे पश्चात्प्रतिबन्धकनिवृत्तौ मरणप्रसङ्गः । अत्र हि प्रतिबन्धकेन रसाभावः क्रियते अतिशयान्तरं वा । नाद्यः पक्षः । नीरसत्वस्य विषेऽनुपलम्भाद्रसस्य तत्र प्रत्यभिज्ञायमानत्वात् । नाप्यतिशयान्तरम् । अदृष्टकल्पनाप्रसक्तेः । यदि त्वतिशयः कश्चिदतीन्द्रियः कल्प्यते तदा तथाविधशक्तिकल्पने को विद्वेषः । ततो न प्रतिबन्धकाभावः सहकारी वक्तुं युक्तः । अथ माभूदयं सहकारी उत्तम्भकसद्भाव एव सहकारी भविष्यति । नन्वेवं कथं केवलावस्थायां स्थूलज्वालाकलापकरालोऽपि ज्वलनो जनयतु देहदहनम् । उत्तम्भकस्य सहकारिणस्तदानीमभावात् । अथ प्रतिबन्धकाभावोत्तम्भकसद्भावाख्यमुभयमपि

१ च इत्यधिकं भ पुस्तके । २ स इत्यधिकं प पुस्तके ।

ततोऽभिमन्त्रितस्यैव तस्यादाह इति चेत् । तदसम्बद्धम् । निवर्तितदहनादाहस्य करतलस्य दहनान्तरेणाप्यदाहप्रसङ्गात् । अथ नान्यदहनाभिप्रायप्रयुक्तमन्त्राभिमन्त्रितकरतलस्य प्रतिनियतदहनापेक्षयैव क्षीणा शक्तिः । अस्त्वेव तथापि प्रतिबन्धकाभावे सति कुतस्तेनैव कृशानुना तस्यैव करतलस्य दाहः स्यात् । तदानीमन्यैव शक्तिः समाजेति चेत्, ननु सा जायमाना प्रतिबन्धकाभावाद्वा इतरदृष्टदेशादिकारकचक्राद्वा दृष्टार्थान्तराद्वा समाजेत, न प्रथमः पन्थाः । तत एव स्फोटोत्पत्तिसिद्धेः शक्तिकल्पनावैयर्थ्यात् । नापि द्वितीयः । तदितरदृष्टदेशादिकारकचक्रस्य प्रतिबन्धककालेऽपि सद्भावेन शक्त्यन्तरप्रादुर्भावप्रसङ्गात् । नापि तृतीयः । अदृष्टार्थान्तरनिमित्तकल्पने तत एव स्फोटोत्पत्तिप्रसङ्गात् इति । तदेतत्स्य तुण्डमण्डपाडम्बरपाण्डित्यमात्रम् । तथाहि प्रतिबन्धकेन दहनस्यैव शक्तिर्विनाश्यते । न च दारुतृणादीनामपि दहनशक्तिः । तासामनेकत्वेन शक्तीनामनेकत्वस्याभ्युपगमात् । न च कल्पनागौरवातङ्कः कर्तव्यः । प्रमाणोपपन्नवस्तुविषयत्वेन कल्पनागौरवस्याप्रदोषत्वात् । तथा चाहुः, " प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ' इति । यद्वाऽस्तु करतलस्यैव दाह्यताशक्तिविनाशः । तत्पुनरस्याः पुनरुत्पत्तौ कारणं निरूप्यतम् । न प्रकटयिष्यमाणरूपीदृशोनिस्फोटघटनपटीयः शक्तिमनुपाल्यकारणानुसारेण निश्चिन्तनीयम् ।

यत्पुनरत्र यतेन व्यगादि, " किं प्रतिबन्धकेन शक्तिर्विनाश्यते तद्धर्मो वा धर्मान्तरं वा जन्यते न वा किमपीति पक्षाः । तत्राद्ये किंचित्करस्य प्रतिबन्धकत्वानुपपत्तिः । विपरीतधर्मान्तरजनने

उत्पन्नस्य विनाश्य मरणम् ।

तत्सद्भावे सत्येव कार्यमियमास्य कारणत्वस्वीकारः, प्रागभावादि-

---

१ तदस्या इति न पुस्तके पाठः । २ निमित्तकल्पनेति न पुस्तके पाठः । ३ न्यायक प्र मा पृ ४१५ ।

विकल्पावकाशश्च । तद्धर्मविनाशे वा पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वम् । पूर्वं स्वरूपोत्पादकादिदानीमुत्तम्भकात्तदुत्पत्तेः । न च समानशक्तिकतया तुल्यजातीयतया नैवमिति साम्प्रतम् । विजातीयेषु समानशक्तिनिषेधात् । न च प्रतिबन्धकशक्तिरेवोत्तम्भको निरुणद्धि न तु भावशक्तिमुत्पादयतीति साम्प्रतम् । तदनुत्पादप्रसङ्गात् । कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वं सम्पद्यते" इति । तत्र शक्तिनाशपक्ष एव कक्षीक्रियते । यत्पुनः पुनस्तदुत्पादेऽनियतहेतुकत्वमकथि । तत्र तथ्यम् । उत्तम्भकाच्छक्त्युत्पत्तेरनभ्युपगमात् । तस्य प्रतिबन्धकशक्तिसंहार एव व्यापारात् । शक्तसप्तार्चिः स्वरूपादेव हि परिणामिकारणादसौ सम्पद्यत इति वक्ष्यते । नन्वस्तु सप्तार्चिरेव परिणामिकारणं शक्तेः किन्तु तत्र कालोऽपि सहकारी कथ्यते सकलकार्योत्पत्तावेतस्य सहकारित्वेन स्वीकृतत्वान्न चास्याग्निना साकमेकं किञ्चिद्रूपं शक्तिजनकमस्ति विजातीयत्वादिति कुतो नियतहेतुकत्वमिति चेत् । असदेतत् । कालस्याग्निना साकं समानशक्तिकतया तुल्यजातीयत्वसम्भवात् । यत्तु विजातीयेषु समानशक्तिनिषेधादित्यभिधायि । तत्र विजातीयत्वं सर्वथा घटितं कथञ्चिद्वाभिप्रेतम् । नाद्यः पन्थाः । सर्वथा विजातीयस्य कस्यचिदभावात् । जलज्वलनयोरपि द्रव्यत्वादिना समानजातीयत्वात् । द्वितीये तु पथि न कथंचित्समानजातीयताप्रतिक्षेपः । कथंचिद्विजातीयतायाः कथंचित्समानजातीयत्वाविनाभावित्वात् ।

हन्त नूतनतमोक्तिमुद्रया किं तवोदयन तत्सखेऽनया ॥
या विदग्धघटित न मृष्यते तर्ककर्कशवितर्कबर्बरम् ॥२०३॥

विकल्पप्रदर्शनपूर्वकमुद्भाविताना परकीयाविक्षेपाणा खण्डनम् ।

ननु प्राप्य शक्तिं प्रतिबन्धकः प्रतिबध्नात्यप्राप्य वा । न तावत्प्राप्य । शक्तिमतो मणिमन्त्रादिनाऽप्राप्तौ तेनास्याः प्राप्तेरयोगात् । न हि हस्तेन पटाप्राप्तौ तद्गतरूपादेः प्राप्तिः सम्भवति । अप्रा-

सस्य प्रतिबन्धे चकस्मादेव मणिमन्त्रादे सम्बन्धा शक्ते प्रतिबन्ध स्यादिति चेत् । नैतच्चतुरस्रम । योग्यतालक्षणसम्बन्धवशाद्योग्याया एवास्यास्तेन प्रतिबन्धोपपत्ते । न खलु चुम्बकस्यापि प्रतिनियत लोहाकर्षणे तेन सम योग्यतातोऽन्य सन्निकर्षादि सम्बन्धोऽस्ति । योग्यताया अनङ्गीकारे च कथमेतदपि घटेत । यदुत,

कश्चिद्योगसमृद्धिलब्धनिखसन्नि सीममाहात्म्यवान्
　　विद्याविशेषसिद्धतिलककालङ्कारसम्स्कारत ॥
एका कामपि कामकामुकलतासम्पादिनी कामिनी-
　　माकर्षयविलास्तु न त्रिभुवननोडान्तरान्यासिनी ॥३०४॥

ननु वह्ने शक्तिनष्टा सती प्रतिबन्धकोत्तरकाल कुत समुत्पद्यते । यत एव शक्त्यन्तरसहिताद्वह्निस्वरूपात्परिणामिकारणात्प्रथम तत एवेति ब्रूम । यदि शक्त्यन्तररहितादेव प्रतिबन्धकोत्तरकालविशिष्टाद्वह्निस्वरूपात्समुत्पत्स्यते तदा को दोष इति चेत् । न कश्चिदन्योऽनियतहेतुकत्वात । एव हि कल्पने दाहशक्तिजनकशक्त्यन्तरस्य सर्वथाऽभावात्पूर्वं वह्न्युत्पादककारणेभ्य सम्प्रति तु वह्निस्वरूपात्तदुत्पत्तिप्रसक्त्याऽनियतहेतुकत्वम । देशकालयोश्च यदि न शक्त्यन्तरमस्ति तदा कथ तौ सहकारिणौ स्याताम् । कुम्भादेरपि सहकारित्वापत्ते । शक्त्यन्तरसाहित्ये तु यान्येव कारणानि दहनस्वरूप देशकालादीनि तैरेकेन शक्त्यन्तरेण शृङ्खलेनेव समाकलितान्येव स्फोटादिका शक्ति घटयतीति कुतोऽनियतहेतुकत्वम् । ननु तच्छक्त्यन्तर प्रतिबन्धकोपस्थानावस्थायामप्यस्ति न वा । नास्ति चेत् । कुत प्रतिबन्धकोत्तरकालमुत्पद्येत । कालादे शक्त्यन्तरशालिनो ज्वलनादेर्वा । कालादेश्चेत । दाहोत्पादकशक्तिरपि तत एवास्तु किं शक्त्यन्तरसङ्गतेन दहनेन । शक्त्यन्तरशालिनो ज्वलनादेव तदुत्पादस्वीकारे तु तदपि शक्त्यन्तरसङ्गतोऽग्निर्वह्नेस्वभावमङ्गीकर्तव्यम् । तदप्येवमित्यनवस्थानात कदाचित्प्रतिबन्धकोत्तरकाल कार्यानापत्ति

स्यात् । अथ दाहकारिशक्त्युत्पादिका शक्तिः प्रतिबन्धकावस्थायामप्यस्ति । तर्हि तदानीमेवासौ स्फोटघटनलम्पटां शक्तिं किमिति नोत्पादयति । किं प्रतिबन्धकाभावस्य सहकारिणोऽभावादभिभूतत्वाद्वा । आद्ये कल्पे प्रतिबन्धकाभाव एव सर्वत्र सहकारी कल्प्यतां किमतीन्द्रियशक्तिकल्पनाकलङ्केन । द्वितीये तु कोऽस्या अभिभवः । कार्योत्पत्त्यनाभिमुख्यमिति चेत् । तदपि पदार्थस्वरूपस्यैवास्तु किमनया । यदि चास्मत्पक्षे प्रकामं प्रद्विष्टाः शक्तिकल्पनेऽवगाढमभिनिविष्टाः । तथापि स्फोटोत्पादिकैव शक्तिस्तदानीमभिभूतास्तु किमनेनाञ्जनातनयलाङ्गूलदण्डाडम्बरविडम्बिना शक्त्यन्तरेण ।

भाति तवैष वयस्य वितर्कः कर्कशतर्कवितर्कपटूनाम् ॥
निर्भरदुर्गमदुर्गतरामाविभ्रमभङ्गिशतेन समानः ॥ २०५ ॥

तथा हि यदुक्तम्, प्रतिबन्धकावस्थायां शक्त्यन्तरमस्ति न वेति । तत्रास्तीति नः पक्षः । यत्तूक्तं तदानीमेवासौ स्फोटघटनलम्पटां शक्तिं किमिति नोत्पादयतीति । तदप्युक्तम् । तदानीमपि तस्यास्तया समुत्पादनात् । यदि तदानीमपि तयाऽसौ समुत्पाद्यते कथं न कार्यजन्मेति चेत् । कार्यकरणक्षणे प्रतिबन्धकेन तस्याः प्रध्वंसात् । तज्जनिकाऽपि शक्तिः कथं न तेन प्रध्वस्यते इति चेत्, तदा कुड्यकाण्डपटादिना प्रभावयवीव तज्जनको रत्नावयव्यपि किमिति न प्रध्वस्यते इत्यभिधेयम् । तस्य ततो दूरदेशस्थत्वादिति चेत् । निकटस्थे तस्मिन् किमुत्तरं वितरसि । प्रभावयविनैव सार्द्धं तस्य विरोधित्वादिति चेत् । तर्हि स्फोटोत्पादकशक्त्यैव साकं प्रतिबन्धकस्य विरोधात् तस्या एव तेन निरोध इति तुल्यम् । कथमसौ तदानीं तामुत्पादयतीति निश्चीयते इति चेत् । अविकलत्वात्तस्याः । यदा हि कारणमविकलन्तदा स्वकार्यमर्ज्जयत्येव । अविकलत्वमपि कुतो निश्चितमिति चेत् । तस्याः शक्तिस्वरूपकार्योपार्ज्जने स्वोत्पाद्यशक्त्यनास्कन्दितदहनसत्तामात्रापेक्षत्वात् । तस्य च प्रतिबन्धकाव-

स्थायामपि भावात् । ननु किमियं शक्तिरपि प्रेक्षावती । यत्स्वोत्पाद्यमन्त्यनाक्रन्दित एव दहने तामादधाति । ननु किं बीजमपि प्रेक्षावत् पुर्नसहकारिनिकरपरिकरितमेवाङ्कुरं करोति । स्वभाव एवायमीदृगस्येति पुनरत्रापि सुप्रापम् । नन्वसौ शक्तिमनुत्पादिका शक्तिः कुतः समुत्पद्यते । यत एव आत्मनो । स हि तथा सहित एव स्वहेतोरुत्पद्यते । यत एतामो निरुत्पत्ति तत एव सापि । ततो न प्रतिबन्धकाद्यभावाद्यपेक्षानिवृत्तिरस्याः ।

ननु स्फोटादिजनिका शक्तिः शक्त्यन्तरसहकृता कार्यं करोत्यन्यथा वा । आद्ये कल्पेऽनवस्था । द्वितीये तु शक्तिवत्पदार्थस्वरूपमेव निःशक्तिकं कार्यकारि समस्तु किं शक्त्या कृत्यम् । एतदप्यसत्यम् । क्षित्यादिसहकारिण्यपि समानत्वात् । तथाहि

स्फोटादिजनिका शक्तिः शक्त्यन्तरसहकृता कार्यं करोत्यन्यथा वेति विकल्पपूर्वकं खण्डयितुः पराकरणम् ।

क्षितिः क्षित्यन्तरसहकृताङ्कुरं करोत्यन्यथा वा । प्रथमेऽनवस्था । द्वितीये क्षितिवद्बीजमेव क्षितिगुणमङ्कुरकारि समस्तु किं क्षित्या कृत्यम् । अथ सैव विश्वम्भरास्वरूपमहकारिपरिचितं बीजमङ्कुरमारचयद्विलोकितमिति कथं तामन्तरेण तस्याङ्कुरकरणकौशलमित्युपगममहासाहसं कर्तुमीश्महे इति चेत् । ननु भवतु क्षितिरूपे प्रत्यक्षे सहकारिणीदमुत्तरम् । अप्रत्यक्षे पुनरदृष्टे किं वक्ष्यसि । न च सहकारीदमङ्कुरोत्पत्ताविति वाच्यम् । सर्वासामितामदृष्टसहकारिवशात्पत्तेस्त्वया स्वीकारात् । अपि च शक्तिः शक्त्यन्तरसहकृतेत्यादिविकल्पपरिकल्पनेन शक्तेरुन्मूलने क्रियायामपि का ते प्रतिक्रिया । तथा हि यदा कयाचित्क्रियया कश्चित्किमपि फलमुत्पादयितुमभिलषति तदासौ क्रियापि क्रियावती फलोत्पादाय कल्प्यते अन्यथा वा । आद्येऽनवस्था । द्वितीये तु देवदत्तादिव फलोत्पादकोऽस्तु किं क्रियया । अथ क्रियाया अभावे निरीक्षितकालान्तरेऽपि फलोत्पत्तिः स्यादतोऽस्त्येव क्रिया । न चास्या क्रियान्तरमुपेयम् । तदुपगमे हि तस्या अप्यन्यप्रसङ्गो बाधक

प्रमाणं क्रियाया द्रव्याश्रितत्वादिति चेत्। इदं शक्तावपि तुल्यम्। शक्तेरभावे हि वह्न्यादेर्विवक्षितकालादन्यदापि दाहोत्पत्तिः स्यादतोऽस्त्येव शक्तिर्न चास्या शक्त्यन्तरमुपेयं तदुपगमे हि तस्या द्रव्यत्वप्रसङ्गो बाधकं प्रमाणं शक्तीनां द्रव्याश्रितत्वात्। शक्तिर्हि पर्यायो न च पर्यायः पर्यायाश्रितो भवतीति। तत्किमशक्त एव शक्तिपर्यायः कार्यं कुरुते। क्रियापि किमक्रियैव कार्यं कुरुते इति समानम्। ननु क्रिया प्रत्यक्षसिद्धैव। शक्तिस्तु कार्यान्यथानुपपत्त्या परिकल्प्यते। सा च व्यभिचारिणी। द्रव्यस्य सहकारितया व्याप्रियमाणेभ्यः पर्यायेभ्यः शक्तिरहितेभ्योऽपि कार्योत्पादात्। न हि पर्यायेषु शक्तिरस्ति। तस्याः पर्यायत्वेन तदनाधारत्वादिति चेत्। तर्हि परमाण्वाद्यतीन्द्रियद्रव्यवर्त्तिनीषु कार्याऽन्यथानुपपत्त्यैव प्रतीयमानासु क्रियासु का वार्त्ता। ततः क्रियेव शक्तिरपि स्वीकर्त्तव्या।

पल्लवग्रन्थे जयन्तेन कृतस्य शक्तिखण्डनस्य खण्डनम्।

तदपि चात्र प्लवते यदजल्पि जयन्तेन पल्लवे[1] "स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात्॥ न हि कल्पयितुं शक्तं शक्तिमन्यामतीन्द्रियाम्॥ १॥ सर्वदा न च सर्वेषां सन्निधिः सहकारिणाम्॥ स्वरूपसन्निधानेऽपि न तदा कार्यसम्भवः॥ २॥ मन्त्रे सति विषादीनां स्वकार्याकरणं तु यत्॥ न शक्तिप्रतिबन्धात्तत्किन्तु हेत्वन्तरागमात्॥ ३॥ मन्त्राभावो हि तद्धेतुर्धर्म्मादिसहकारिवत्॥ मन्त्रभावस्ततस्तत्र हेत्वन्तरतया मतः॥ ४॥ तेषामम्लानरूपाणां ननु मन्त्रेण किं कृतम्॥ कार्योदासीनतामात्रं शक्तौ चैष नयः समः॥ ५॥ न हि मन्त्रप्रयोगेण शक्तिस्तत्र विनाश्यते॥ मन्त्रवादिन्युदासीने पुनस्तत्कार्यदर्शनात्॥ ६॥" इति। किं चेदमुदासीनतामात्रं यदि धर्म्मः कश्चिदसौ दृश्योऽदृश्यो वा। नाद्यः। तस्य क्वचिददर्शनात्। द्वितीये

---

१ न्यायमञ्जर्यां पृ ४१.

तु नातीन्द्रियकल्पनया परिणीताभिनातकान्तयेव त्यज्येत तद्वर शक्तिकल्पितास्तु । न चेद् शक्तावपि ममम । तस्यास्तस्या प्रागमस्योक्तत्वात् ।

यत्रास्या शक्तिससिद्धौ मज्जत्युदयनद्विप ॥
जयन्त हन्त का तत्र गणना त्वयि कीटके ॥ ३०६ ॥

तेन स्वरूपसहकारिशक्तिरूपादृष्टहेतोरेव स्फोटादिकार्यमघटमानमतीन्द्रिया शक्ति सत्यार्थिव समर्पयति । ये त्वस्यामन्यथानुपपत्तौ सत्या न ता स्वीकुरुते महासाहसिकास्ते । यद्वा,

मेघे चारुरुचीशचापरचनारोचिष्णुचित्राञ्चिते
चञ्चरकुञ्जलकालकान्तिकलिते काम तथा गजति ॥
किं काक कुरुते क्वापि किमपि प्रोल्लासिलास्योत्सव
किं वा कोमलकण्ठनालललित केकीव केकायितम् ॥३०७॥

यच्च दहनादय स्वरूपसहकारिरूपदृष्टशक्त्यतिरिक्तभाजो न भवन्तीति रेपकानुमानस्य नीत्याद्यनुमानमवादि । तत्र स्वरूपसहकारिस्वरूपम् । शक्त्योर्दृष्टत्व प्रत्यक्षापेक्षया विवक्षित प्रमाणान्तरापेक्षयापि वा । प्रथमपक्षे सकलकार्योत्पत्तिसहकारित्वेन स्वीकृतस्य प्रामाण्यहेतोरस्यापि प्रत्यक्षानुपलक्ष्यत्वेन दृष्टत्वाभावात् प्रतिषेध स्यात् । अथ प्रमाणान्तरापेक्षयापि दृष्टत्व विवक्षितम् । तथा चास्यानुमानप्रमाणेन दृष्टत्वात्तदतिरिक्ताया एव शक्तेरभाव साध्यत इति चेत् । तर्हि सिद्धसाध्यता । प्रमाणपरिदृष्टेभ्योऽनतिरिक्तशक्तेरस्माभिरप्यमानाभ्युपगमात् । न खलु प्रामाणिक कश्चित्प्रमाणपरिदृष्टादतिरिक्त वस्तु स्वीकरोति । क्वचित् च तत्साधनाय स्फोटाद्यन्यथानुपपत्तिरनुमानमनन्तरमेव । कार्योत्पादकरूपो हेतुरपि सोपाधि । अतीन्द्रियशक्यमाने द्रव्यत्वाभावस्यैव प्रयोजकत्वात् । श्यामत्व इव शाकाद्याहारपरिणते ।

१ अतिरिक्त प म पुस्तकयो ।

ततो यथा यत्रैव शाकाद्याहारपरिणतेः सद्भावः सत्यपि तत्पुत्रत्वे तत्रैव श्यामत्वमेवमिहापि यत्रैव कर्मादौ द्रव्यत्वाभावः सत्यपि कार्योत्पादकत्वे तत्रैव शक्त्यभाव इति । द्वितीयानुमानेऽपि सर्वप्रमाणैरनुपलभ्यमानार्थत्वादिति हेतुरसिद्धः । तत्साधकस्यानुमानस्य दर्शितत्वात् अपि च सर्वप्रमाणैर्भवानेव नोपलभेत[1] शक्तिशब्दस्यार्थं किं वा सर्वमपि जगत् । प्रथमपक्षे व्यभिचारी हेतुः । यदि नाम भवतस्तत्र न प्रमाणानि प्रवृत्तानि तत् किमेतावता तस्या अभावो भवतु । भावत्कप्रमाणसत्तायाः पदार्थसत्तां प्रति व्यापकत्वाभावात् । द्वितीयपक्षे तु सन्दिग्धासिद्धः । सर्वस्यापि प्रमातुस्तत्र प्रमाणं न प्रवर्त्तत इति अस्मदादिना निश्चेतुमशक्तेः । तृतीयानुमानेऽपि पार्थिवाप्यद्रव्याभ्यां व्यभिचारी हेतुः । ते हि चाक्षुषत्वे सति हेतू भवतो न च स्वैकसमवेतातीन्द्रियकार्याकर्त्तृणी । गुणत्वगुणस्य तादृशस्य ताभ्यां निर्वर्त्तनात् । व्यर्थविशेष्यश्चायम् । चाक्षुषत्वविशेषणमात्रादेव साध्यसिद्धेः । न खलु चाक्षुषं किंचित् स्वैकसमवेतातीन्द्रियकार्यकारि समुपलब्धं यद्व्यवच्छेदाय हेतुत्वमुपन्यस्येत । वह्न्यादिकमित्यत्राप्यादिशब्देन समस्तं विवादास्पदं द्रव्यं धर्मित्वेन यद्यभीप्सितम् । तदा पक्षैकदेशासिद्धता हेतुविशेषणस्य । पक्षीकृताशेषद्रव्याणामेकदेशे वायुव्योमादौ चाक्षुषत्वविशेषणाभावात् । अथ पृथ्वीपाथोरूपमेव द्रव्यमादिशब्देनाभिप्रेतमिति नोक्तदोषावकाश इति चेत्, तर्ह्यव्यापिनी शक्त्यभावसिद्धिः । तन्नेदमप्यनुमानं साधु ।

हंहो न्याय्यं न्यायशास्त्रप्रवीणाः शक्तेर्यूयं बाढमत्र द्विषन्तः ॥
सर्वेभ्यो यद्भीतभीतेव युष्मत्स्रष्टा शक्तिः शक्त्यभावप्रसिद्धौ ॥ ३०८ ॥

नित्यानित्येति पक्षखण्डनपूर्वकं शक्तेर्नित्यानित्यरूपताया व्यवस्थापनम्।

यच्चोक्तं शक्तिर्नित्याऽनित्या वेत्यादि । तत्र नित्यानित्या शक्तिरिति ब्रूमः । द्रव्यरूपतया नित्यत्वस्य पर्यायरूपतयाऽनित्यत्वस्य तत्र जैनैरभ्युपगमात् । यत्पुनरस्या उत्पत्तौ[2] कारणं विकल्पितम् । तत्र दहनस्वरू-

---

१ 'उपलभते' इति प पुस्तके पाठः । २ 'उत्पत्ति' इति प. भ. पुस्तकयोः पाठः ।

पमेव तत्कारणमित्युच्यते । ननु तदपि शक्तिमदेव तदुत्पादे व्याप्रियते सापि तत्र शक्तिः कुतः समुत्पन्नेति चेत् । येभ्य एव शक्तकारणेभ्यः पावकः कारणशक्तिरपि च तेभ्य एव समुत्पद्यते । न चैवमनवस्थापि दूषणाय । बीजाङ्कुरादिवत् । यत्पुनरुक्तं प्रतिकार्यमेका शक्तिरनेका वेत्यादि । तत्र कारणस्य प्रतिकार्यमनेकैव शक्तिः । तथा हि कारणमनेकशक्तियुक्तं विचित्रकार्यत्वात् नानाकारणवत् । विचित्रकार्याणि वा कारणस्य शक्तिभेदनिमित्तकानि तत्त्वाद्विभिन्नकारणकार्यवत् । यथैव हि सहकारफलादौ रूपादिनानानि रूपादिस्वभावभेदनिबन्धनानि । तथैकस्मादपि प्रदीपादेर्भाजनाद्वर्त्तिकादाहतैलशोषादिविचित्रकार्याणि तावच्छक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । अन्यथा रूपादिनानात्वं न स्यात् । चक्षुरादिसामग्रीभेदादेव हि तज्ज्ञानप्रतिभासभेदः स्यात् । सहकारफलादिद्रव्यं तु रूपादिस्वभावरहितमेकमनंशमेव भवेत् । चक्षुरादिबुद्धौ प्रतिभासमानत्वात् रूपादेः कथं सहकारफलादिद्रव्यस्य तद्रहितत्वमिति चेत्, तर्हि तैलशोषादिविचित्रकार्यानुमानबुद्धौ शक्तिनानात्वस्य प्रदीपाद्यथाना प्रतीतेः कथं तद्रहितत्वं स्यात् । प्रत्यक्षबुद्धौ प्रतिभासमाना रूपादय एव परमार्थसन्तो नत्वनुमानमता परिस्फुरन्त्यः शक्तय इत्यप्यसुन्दरम् । अदृष्टेश्वरादिपरमार्थसत्त्वप्रसङ्गात् । प्रदीपादिद्रव्यस्यैकस्य वर्त्तिकादिसामग्रीभेदाद्दाहादिकार्यनानात्वं न पुनस्तच्छक्तिस्वभावभेदादित्यप्यविचारितरमणीयम् । रूपादेरप्यभावानुषङ्गात् । तस्य हि वक्तुं सहकारफलादिद्रव्ये चक्षुरादिसामग्रीभेदाद्रूपादिप्रतिभासभेदो न पुना रूपाद्यनेकस्वभावभेदादिति । तत्र प्रमाणप्रतिपन्नत्वाद्रूपादिवच्छक्तीनामपलापो युक्तः ।

---

१ तत् इत्यधिकं प पुस्तके ।

शक्तिः शक्तिमतो भिन्ना अभिन्ना वेति पक्षखण्डनपूर्वकं भेदाभेदपक्षस्य व्यवस्थापनम् ।

यच्चान्यदुक्तं किमसौ शक्तिमतोऽभिन्ना भिन्ना वेत्यादि । तत्राद्यपक्षद्वयमनभ्युपगतमेव । भेदाभेदपक्षस्यैव स्वीकारात् । शक्तिमतो हि शक्तिर्भिन्ना । तत्प्रत्यक्षत्वेऽप्यस्याः प्रत्यक्षत्वाभावात् । कार्यान्यथानुपपत्त्या तु प्रतीयमानासौ तद्वतो विवेकेन प्रत्येतुमशक्यत्वादभिन्नेति । न चात्र विरोधाद्यवतारः । भेदाभेदात्मकवस्तुनो जात्यन्तरत्वात् । मेचकज्ञानवत्सामान्यविशेषवच्चेति । ततः कार्यकारणभावप्रतिनियमं प्रतिजानानैः प्रतिपदार्थं स्वात्मभूतमतीन्द्रियकार्यैकसमधिगम्यं विचित्रं रूपान्तरं शक्त्यपराभिधानं प्रेक्षादक्षैः प्रतिपत्तव्यम् । एवं च

सत्प्रतीतिनिःश्रेणिवशात्प्रसिद्धिप्रासाद[1]मारूढवती कथञ्चित् ॥
नित्या विभिन्ना च विचित्ररूपा शक्तिः परोक्षा निखिलार्थसार्थे ॥२०२॥

तस्या चार्थापत्तेरनुमानान्तःप्रतिष्ठरूपाया नापह्नोतुं शक्यं प्रतीयमानं प्रमाणत्वम् ।

मीमांसकसम्मतार्थापत्तेः खण्डनम् ।

यत्पुनः शाब्दप्रमाणपूर्विकाया अर्थापत्तेः पीनो देवदत्तो दिवा न भुङ्क्ते इति निदर्शनमदर्शि जैमिनीयैः । तत्र वाक्यखण्डलककल्पनमनुपपन्नम् । अर्थस्यैव कार्यलिङ्गद्वारतः कल्पयितुमुपपन्नत्वात् । यथैव हि प्रत्यक्षतः स्थूलं[2] कञ्चिद्धूममालोक्य तत्कारणं धूमकेतनमनुगच्छन्ति ते तथैवागमादिनाधिकरणभोजनाभावविशिष्टं पीनत्वाख्यं कार्यमवधार्य तत्कारणं रजनिभोजनमप्यनुमिन्वन्तु । कोऽत्र विशेषः । लिङ्गस्य तु क्वचित् प्रत्यक्षात्प्रतिपत्तिः कुत्रचिद्विवचनादिति नायं गरीयान् विशेषः । अथापरिपूर्णवचनं यथोचितां प्रतीतिमेव कर्तुमशक्तमिति चेत् । तत्किं पीनो देवदत्तो दिवा न भुङ्क्ते

---

१ 'प्रसाद' इति प. पुस्तके पाठः । २ 'स्थूलं' इति नास्ति प. पुस्तके ।

इत्यनन्तरयोनिरप्रतीतिर्न भवति । ननु भवति साकाङ्क्षा तु भवति न च साकाङ्क्षप्रतीतिकारिणस्तस्य प्रामाण्यमिति तदेव तावत्पूरयितु युक्तमिति चेत् । तदपि न परीक्षाक्षमम । यत कस्यात्र साकाङ्क्षत्व शब्दस्य तदर्थस्य तदवगमस्य वा । शब्दस्य तावदर्थनिरपेक्षस्य न कदाचिदाकाङ्क्षा । अनभिव्यक्तशब्दवत् । अर्थस्तु साकाङ्क्ष सन्नर्थान्तर मेव कल्पयतु किं फल वचनकल्पनाया । अवगमोऽप्यर्थगोचर एव साकाङ्क्षो भवति न शब्दगोचर श्रवणकरणक । तस्मादवगमनैराकाङ्क्ष्यसिद्धये तदर्थकल्पनैव साधीयसी । वाक्यखण्डककल्पनापि ह्यर्थावगतिसिद्ध्यर्थमित्यर्थकल्पनेवास्तु किं सामान्यान्तरेण । अथ कल्प्यमानस्यार्थस्यानागमिकत्व प्राप्नोतीत्युच्यते । तर्हि वाक्यशकलकल्पनापक्षे सुतरामनागमिक सोऽर्थ स्यात् । कल्प्यमानस्य तस्यागमादन्यत्वात् । श्रुतोऽनुमितश्च द्वेधाऽप्यागम एवायमिति चेत्, श्रौतश्च श्रातानुमितश्च द्विप्रकारोऽप्यागमार्थ एव भविष्यत्यसा किं वाक्यशकलेनानेन । तेन श्रूयमाणागमवचनप्रतिपाद्यार्थसामर्थ्यलभ्यत्वादस्य तस्यागमार्थता भविष्यतीत्यर्थ एव कल्पयितुमुचित । अपि च यस्मिन्नकल्पितेऽनुपपत्तिस्तदर्थापत्त्या प्रमीयते । रात्रिसम्बन्धे चानवगते भोजनस्यानुपपत्ति । कालसम्बन्धाभावेन ह्यपानुपपत्ति सा कालान्तरसम्बन्धमेव कल्पयितुमलम् । अथार्थमङ्गावमेव कल्पयितुमर्थापत्ति प्रवर्तमाना तस्य सनिर्विकल्पकज्ञानवेद्यत्वात् सविकल्पकज्ञानाना च शब्दपुरस्सरत्वात् पुरोवर्तिनि शब्द एव पर्यवस्यति । स च शब्द स्वार्थमुपस्थाप्य पर्यवस्यतीति । तदसम्यक् । एव सविकल्पकप्रत्यक्षानुमानोपमानादेरपि प्रामाण्यस्य सकलस्य शाब्द एव पर्यवसानप्रसङ्गात् । यदि च शब्दमात्रमुपपादकमुच्यते । तर्हि पीनो देवदत्तो दिवा न भुङ्क्त इति यदा प्रयुज्य पुनरेवमुच्यते यामिन्यामत्तीति । तदा यामिनीशब्देऽत्तिशब्दे

1 पतिताग्रनिपाति इति प पुस्तके पाठ । 2 अथास्तु इति प भ पुस्तकयो पाठ । 3 च इति नास्ति प भ पुस्तकयो ।

वाऽव्युत्पन्नस्य पूर्वश्रुतवाक्यार्थाविषयानुपपत्तिरुपरमेत । न चैवम् । ततः शब्दाद्भोजनस्य रात्रिसम्बन्धेऽवगत एव तदुपरतेः । ततोऽर्थस्यैव साक्षादुपपादकत्वमिति न सर्वथा वाक्यखण्डलकविषया श्रुतार्थापत्तिः श्रेयसीति । यच्चार्थापत्तिपूर्विकायां अर्थापत्तेरुदाहरणं शब्दकर्तृकार्थप्रत्यायनान्यथानुपपत्तिप्रतिपन्नवाचकशक्त्यन्यथानुपपत्त्या शब्दे नित्यत्वकल्पनेति मीमांसकैर्दर्शितम्, तदपि न[3] मीमांसासहम् । वाचकशक्तेर्नित्यत्वकल्पनां प्रत्यन्यथानुपपत्तेरभावात् । पराकरिष्ये च पुरतः शब्दस्य नित्यत्वमित्यलमिह प्रपञ्चेन । अथ भवत्वन्यासामर्थापत्तीनामनुमानान्तःपातोऽभावपूर्विकार्थापत्तेस्तु कथमयमुपपद्यते । उच्यते । जीवतो गृहाभावेन लिङ्गभूतेन बहिर्भावानुमानात् । तथाहि जीवतश्चैत्रस्य सद्मन्यभावो बहिस्तद्भावपूर्वको जीवतस्सद्मन्यभावत्वात् प्राङ्गणे स्थितस्य गृहे जीवदभाववत् । यद्वा चैत्रो बहिरस्ति गृहासंसृष्टजीवनाधारत्वात् स्वात्मवदिति । ननु साधनप्रतीतिसमय एव साध्यस्य प्रतीयमानत्वेन प्रमेयानुप्रवेशाख्यदोषप्रसङ्गान्नेदमनुमानम् । तथा ह्यागमावगतजीवनस्य गृहाभावेन चैत्रस्य बहिर्भावः परिकल्प्यते[4] । इतरथा मृतेनानैकान्तिको हेतुः स्यात् । अभावश्च गृहीतः सन् बहिर्भावं गमयति नागृहीतो धूमवत् । अभावग्रहणं च सकलसदुपलम्भकप्रमाणप्रत्यस्तमयपूर्वकम् । इह च सदुपलम्भके आगमप्रमाणे सति कथमभावः प्रवर्त्ततेति सद्मनि प्रवर्त्तमान एवासौ सदुपलम्भकं प्रमाणं पृथग्विषयमवस्थापयति बहिरस्य भावो गृहे त्वभाव इति । तेन जीवतो बहिर्भावव्यवस्थापनपूर्वकगृहाभावग्रहणोपपत्तेः स्पष्टं[5] प्रमेयानुप्रवेशलक्षणो दोषः । अनुमाने तु धूमादिलिङ्गग्रहणसमये मनागपि तदनुमेयदहनादिलिङ्गिन्यनुप्रवेशस्पर्शो न विद्यत इति । नैतदुपपन्नम्[6]

१ ' यथार्थापत्ति ' इति प. भ पुस्तकयोः पाठः । २ ' पूर्विका ' इति भ पुस्तके पाठ । ३ ' न ' इति नास्ति भ पुस्तके । ४ ' परिकल्प्य ' इति प. भ पुस्तकयोः पाठः । ५ 'स्पष्ट.' इति प. पुस्तके पाठ । ६ 'एतद्' इति नास्ति प पुस्तके ।

यत किं प्रमेयमभिमतमत्र भवता येन तदनुप्रवेशो दोष स्यात् । किं सत्तामात्रमुत वह्निदेशविशेषणम् । सत्तामात्र तावदागमादेवावगतमिति न प्रमाणान्तरप्रमेयतामवलम्बते । वह्निदेशविशेषित तु सत्त्व भवति प्रमेयम् । तस्य जीवद्गृहाभावग्रहणकालेऽनुप्रवेश कुतस्त्य इति चिन्त्यम् । गृहाभावग्राहक हि प्रमाण गृह एव सदुपलम्भकप्रमाणाभावात्मकमपाकरोति न वहि सदसत्त्वचिन्ता प्रस्तौति । मृतस्य जीवतो वा दूरे प्राङ्गणेऽपि वा तिष्ठतश्चैतस्य गृहाभावपरिच्छेदे विशेषाभावात् । जीवनविशिष्टस्तु गृहाभाव प्रतीयमानो लिङ्गतामश्नुते । व्यभिचारनिरासात् । न च विशेषणग्रहणमेव प्रमेयग्रहणम् । जीवनमन्यदन्यच्च वहिर्भावाख्य प्रमेयम् । ननु जीवनवत्त्वविशिष्टगृहाभावप्रतीतिरेव वहिर्भावप्रतीति । न हि दहनाधिकरणधूमप्रतीतिरेव दहनप्रतीति । ननु धूमादन्य एव दहन । इहापि गृहाभावजीवनाभ्यामन्य एव वहिर्भाव । पक्षहेतुद्वयी सिद्धत्वात् सत्त्वमात्र हि तत्रापूर्वमनुमेयमेवमिहापि वहिर्देशयोगमात्रम् । यदि तु तदधिक प्रमेय मिह नेष्यते । तदा गृहाभावजीवनयोरभावागमाख्यप्रमाणाभ्यामवधारणादानर्थक्यमर्थापत्ते । तस्मात्प्रमेयान्तरसद्भावाच्चास्य च जीवद्गृहाभावलक्षणाल्लिङ्गग्रहणसमयेऽननुप्रवेशात् प्रमेयानुप्रवेशो दोष । अथापत्तावपि तुल्य एवाय दोष । तत्राप्यर्थान्तरकल्पनाभ्युपगमात् ।" दृष्ट श्रुतो वार्थो नोपपद्यत " इत्यर्थकल्पनेनैव अर्थापत्तिनिर्वचनात् । तस्य तस्मात्प्रतीतिरिति हि यत्र व्यवहारस्तत्रास्य तत्र नैवायं तदनुप्रवेशो दोष एव । स्वभावहेताविव तद्बुद्धिसिद्धया तत्साध्यसिद्धे प्रमाणान्तरैरन्यथेति ।

1 सत्त्व' इति नास्ति प भ पुस्तकयो । 2 'अधिकरणात्' इति प पुस्तके पाठ । 3 मीमांसाभाष्ये पृ ८५ १० 4 'अन्यथा' इत्यधिक भ पुस्तके । 5 'नास्य' इति प पुस्तके पाठ ।

अभावप्रमाणं तु प्रत्यक्षादावेवान्तर्भवतीति न तद्द्वारेणाप्यभिमतप्रमाणसङ्ख्याव्याघातः । यत्तु तत्समर्थनाय प्रत्यक्षादेरनुत्पत्तिरित्यादि जैमिनीयैरजल्पि । तत्र सात्मनोऽपरिणामो वेति प्रथमपक्षे किमात्मा सर्वथा ज्ञानरूपेणापरिणत. कथञ्चिद्वा । तत्राद्यविकल्पे माता मे वन्ध्येत्यादिवत् स्ववचनविरोध । सर्वथा हि यद्यात्मा ज्ञानरूपतया न परिणतः कथमभावपरिच्छेदकः । परिच्छेदस्य ज्ञानधर्मत्वात् । परिच्छेदकत्वे वा कथमसौ सर्वथा ज्ञानरूपतया न परिणतः । अथ कथञ्चित् । तथा हि अभावविषयं ज्ञानमस्ति निषेध्यविषयं तु नास्तीति । तर्हि तज्ज्ञानमेवाभावप्रमाण स्यान्नात्मा । तच्चेन्द्रियान्वयव्यतिरेकानुविधायित्वात्प्रत्यक्षमेव । द्वितीयपक्षे यदन्यवस्तुनि अभावांशे विज्ञानं तत्प्रत्यक्षमेव । भावांशवदभावांशेऽप्यक्षाणा प्रवृत्त्यविरोधात् । एतेन यदभावप्रमाणस्यासाधारणविषयप्रदर्शनाय प्रमाणपञ्चक यत्रेत्याद्युक्तम् । तदपि प्रत्युक्तम् । प्रत्यक्षादेरभावांशग्राहकत्वोपपत्तेस्तत्राभावप्रमाणकल्पनाया निरुपयोगादिति । यदप्यभावज्ञानस्य प्रत्यक्षताप्रतिक्षेपाय गृहीत्वावस्तुसद्भावमित्याद्यभिहितम् । तदप्यवद्यम् । अक्षापेक्षया जायमानत्वेन प्रत्यक्षताया एव तत्रोपपद्यमानत्वात् । यत्तु भूदेशग्रहणजन्मन्येवाक्षाणामुपयोगित्वादक्षापेक्षित्वमन्यथासिद्धमभावज्ञानस्येत्युक्तम्। तदनुपपन्नम् । न खलु ज्ञानद्वयं क्रमेणोत्पद्यमानमिदमनुभूयते प्रथममिन्द्रियज भूप्रदेशज्ञान तत प्रतियोगिस्मरणे सति मानसमिन्द्रियानपेक्षं नास्तिताज्ञानं च । एकस्यैव कुम्भादिविविक्तभूप्रदेशग्राहिणो ज्ञानस्याभावग्राहित्वेनाप्यनुभूयमानत्वात् तस्य चेन्द्रियजत्वेन त्वयापि प्रतिपन्नत्वात् नान्यथासिद्धमक्षापेक्षित्वमभावज्ञानस्य । एवं च भूतलादिवस्तुग्रहणघटादिप्रतियोगिस्मरणलक्षणाऽभावप्रमाणजनिका सामग्री निर-

मीमांसकमतेनाभाव-प्रमाणस्य सविस्तरं खण्डनम् ।

१ 'किमात्मबुद्धयसर्वथा' इति प भ पुस्तकयो' पाठ' । २ ' परिणत ' इति प. पुस्तके पाठ । ३ 'अपि इत्यधिक ' प. म पुस्तकयो. । ४ अथेत्यधिक प म. पुस्तकयोः ।

स्ता । तज्जन्यत्वेनाभ्युपेतस्य प्रत्यक्षातिरिक्तस्याभावप्रमाणस्य प्रतिक्षिप्तत्वात् । किं च भूतलादिकं वस्तु प्रत्यक्षेण घटपटादिभिः प्रतियोगिभिः संसृष्टं प्रतीयतेऽसंसृष्टं वा । तत्राद्यः पक्षोऽनुपपन्नः । प्रतियोगिसंसृष्टस्य भूतलादिवस्तुनः प्रत्यक्षेण प्रतीतौ तत्र प्रतियोग्यभावग्राहकत्वेनाभावप्रमाणस्य प्रवृत्तिविरोधात् । प्रवृत्तौ वा न प्रामाण्यम् । प्रतियोगिनः सत्त्वेऽपि तत्प्रवृत्तेः । द्वितीयपक्षे त्वभावप्रमाणवैयर्थ्यम् । प्रत्यक्षेणैव प्रतियोगिना कुम्भादीनामभावप्रतिपत्तेः । अथोच्यते न संसृष्टं नाप्यसंसृष्टं प्रतियोगिभिर्भूतलादिवस्तु प्रत्यक्षेण गृह्यते वस्तुमात्रस्य तेन ग्रहणाभ्युपगमादिति । तदपि दुष्टम् । संसृष्टत्वासंसृष्टत्वयोः परस्परपरिहारस्थितिरूपत्वेनैकतरप्रतिषेधेऽपरविधानस्य परिहर्तुमशक्यत्वात् । प्रतियोगिनश्च घटादेः स्मरणमनुभूतस्यैव नान्यथा । अतिप्रसक्तेः । तदनुभवश्चान्यासंसृष्टतयाभ्युपगन्तव्यः । तस्याप्यन्यासंसृष्टताप्रतिपत्तिस्तदन्यप्रतियोगिस्मरणात् । तत्राप्ययमेव न्याय इत्यनवस्था । अथ प्रतियोगिनो भूतलस्य स्मरणाद्घटस्यान्यासंसृष्टता प्रतीयते तत्स्मरणाच्च भूतलस्य तदितीतराश्रयः । तथाहि न यावद्घटासंसृष्टभूभागप्रतियोगिस्मरणाद्घटस्य भूतलासंसृष्टताप्रतिपत्तिर्न तावत्स्मरणाद्भूतलस्य घटासंसृष्टताप्रतिपत्तिः यावच्च भूतलस्य घटासंसृष्टता न प्रतीयते न तावत्स्मरणेन घटस्येति । तस्मादन्यप्रतियोगिस्मरणमन्तरेणैवाभावांशो भावांशवत्प्रत्यक्षोऽभ्युपगन्तव्यः । भूतलासंसृष्टघटदर्शनाहितसंस्कारस्य च पुनर्घटासंसृष्टभूभागदर्शनानन्तरं तथाविधघटस्मरणे सत्यस्यात्राभावप्रतिपत्तिः प्रत्यभिज्ञानमेव । यदा तु सर्वं सर्वत्र विद्यते इति दुरागमाहितसंस्कारः सांख्यः प्रतिबोध्यते । यद्यत्रोपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदत्रासदिति व्यवहर्तव्यं यथा सत्त्वे रत्नस्मी तथा चात्र घट इति । तदप्यनुमानमेवेति क्वाभावप्रमाणस्यावकाशः । यच्च न तावदिन्द्रियैरेवास्याग्रहणम् । तदपि न युक्तम् ।

१ इति नास्ति प. म. पुस्तके ।

यस्मादिन्द्रियाणामभावज्ञानाजनकतायामभावांशेन सह सम्बन्धाभावो निबन्धनमभिधीयते । तत्र कस्य सम्बन्धस्याभावः । किं संयोगलक्षणस्य योग्यतारूपस्य वा । नाद्यः कल्पः श्रेयान् । संयोगस्येन्द्रियाणां ज्ञानजनकत्वं प्रत्यप्रयोजकत्वात् । चक्षुषः संयोगाभावेऽपि भावांशे ज्ञानजनकत्वस्य प्रसाधयिष्यमाणत्वात् । नापि द्वितीयः । योग्यतालक्षणस्य सम्बन्धस्येन्द्रियाणामभावांशेऽपि सद्भावाविरोधात् । योग्यता हि कार्यदर्शनावसेया । कार्यं च ज्ञानाख्यमिन्द्रियाणां भावांशवदभावांशेऽपि उपलभ्यत एवेति । एतेन 'ननु भावादभिन्नत्वात्सम्प्रयोगोऽस्ति तेन चेत्' इत्याशङ्क्य 'न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः' इति यत्समाहितं तदपि प्रतिहतम् । अनभ्युपगतोपालम्भत्वात् । भावांशेऽपीन्द्रियाणां ज्ञानजनकत्वं प्रति संयोगस्याप्रयोजकत्वेनाभिहितत्वात् । न चाप्यनुमानत्वमित्याद्यनुपपन्नमुक्तम् । वह्न्यादिकारणाभावज्ञानाज्जायमानस्य धूमादिकार्याभावज्ञानस्यानुमानत्वसम्भवात् । यत्त्विन्द्रियादिसामग्रीसमुद्भूतं कुम्भाद्यभावज्ञानं तस्य प्रत्यक्षत्वेनानुमानत्वमस्माभिरभ्युपगतमेव । यच्चान्यदवाचि मेयो यद्वदभावो हीत्यादि । तत्र भावरूपेण प्रत्यक्षेण नाभावो वेद्यत इति प्रतिज्ञाऽन्यासंसृष्टभूतलग्राहिणा प्रत्यक्षेण निराक्रियते । अनुष्णाग्निप्रतिज्ञेव तदौष्ण्यग्राहिणा प्रत्यक्षेण । भावात्मके यथा मेये इत्यसम्बद्धम् । अभावादपि भावप्रतिपत्तेः । यथा गगनतले पत्रादीनामधःपाताभावाद्वाय्योरिति । भावाच्च वह्न्यादेः शीताभावस्य प्रतीतिः सकललोकप्रतीता । यो यथाविधः स तथाविधेनैव गृह्यत इत्यभ्युपगमे चाभावस्य मुद्गरादिभावजन्यत्वाभावः स्यात् । शक्यं हि वक्तुं यो यथाविधः स तथाविधेन[1] जन्यते यथा भावो भावेन अभावश्चाभावस्तस्मादभावेनैव जन्यते । प्रत्यक्षबाधा चान्यत्रापि समाना । प्रागभावादिचतुर्विधाभावस्य चाभावप्रमाणविषयतया परैः परिकल्पितस्य

१ एवेत्यधिक प. भ. पुस्तकयोः ।

यथा निरासस्तथाग्रे वक्ष्यते। ततश्च क्षीरे दध्यादि यन्नास्तीत्यादिकारिकाग्रन्थः प्रतिक्षिप्तोऽवगन्तव्यः। यच्च वस्त्वसंकरसिद्धेश्च तेनाभावप्रमाणतेत्यादि। तदपि न। तस्यापि प्रत्यक्षादिप्रमाणत एव प्रसिद्धत्वात्। कथं प्रत्यक्षादेरभावस्य परिच्छित्तिरिति चेत्। ननु भावस्यापि कथं तत्र परिच्छित्तिः। प्रतिभासाच्चेत्, तदितरत्रापि तुल्यम्। न खलु प्रत्यक्षेणान्यसंसृष्टः प्रथमतोऽर्थोऽनुभूयते पश्चादभावप्रमाणादन्यासंसृष्ट इति क्रमप्रतीतिरस्ति। प्रथममेवान्यासंसृष्टस्य भूतलादेरर्थस्य प्रत्यक्षे प्रतिभासनात्। न चान्यासंसृष्टार्थवेदनादन्यत्तदभाववेदनं नाम। एवं च।

प्रत्यक्षादेर्भिन्नरूपत्वमाप्तं नाभावाख्यं मानमस्तीह षष्ठम्॥
यस्य प्रख्या प्रागभावादिभेदा श्रद्धाजिह्मैर्जैमिनीयैर्न्यगादि॥ ३१०॥

उक्तयुक्त्यनिर्देशेन वैशेषिकसांख्यनैयायिकप्राभाकराणां खण्डनम्।

एतेन प्रत्यक्षानुमानागमोपमानार्थापत्तिषु यथाक्रमं द्वित्रिचतुःपञ्चप्रमाणवादिनां वैशेषिकसांख्यनैयायिकप्राभाकराणां प्रमाणसंख्याव्याख्याप्रत्याख्यानं कृतमवसेयम्। उक्तन्यायस्याविशेषात्।

सम्भवैतिह्ययोः प्रमाणान्तरत्वस्य खण्डनम्।

ननु तथापि प्रत्यक्षपरोक्षभेदेन प्रमाणद्वैविध्यमवतिष्ठते। सम्भवैतिह्ययोः प्रमाणान्तरभावात्। सम्भवो नाम समुदायेन समुदायिनोऽवगमः। यथा सम्भवति सहस्रे शतं सम्भवति खार्यां द्रोण इति। अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमितिहोचुर्वृद्धाः इत्यैतिह्यम्। यथेह वटे यक्षः प्रतिवसतीति। तदशोभनम्। सम्भवस्यानुमानेऽन्तर्भावात्। यतो हि सहस्रं शतावयवं विना सम्भवतीत्यन्यथानुपपत्त्यैव ग्रहणात्। तथा हि सहस्रं समुदायि शतवत् सहस्रत्वात् पूर्वोपलब्धसहस्रवत्। एवं खार्यामपि द्रोणानुमानम्। ऐतिह्यं तु न प्रमाणम्। अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्। आप्तप्रवक्तृकत्वनिश्चये त्वागम इति।

१ 'दृशविष्य' इति प म पुस्तकयोः पाठः।

यदपि प्रातिभमक्षलिङ्गशब्दव्यापारानपेक्षमकस्मादेवाद्य मे महीपतिप्रसादो भवितेत्याद्याकारं स्पष्टतया वेदनमुदयते । तदप्यतीन्द्रियनिबन्धनतया[1] मानसमिति प्रत्यक्षकुक्षिनिक्षिप्तमेव । यत्पुनः प्रियप्राप्तिप्रभृतिफलेन सार्द्धं गृहीतान्यथानुपपत्तिकान्मनःप्रसादादेर्लिङ्गादुदेति । तत्पिपीलिकापटलोत्सर्पणोत्थज्ञानवदस्पष्टमनुमानमेवेति परोक्षान्तर्गतमेव । प्रतिभातमेव न तु निश्चितं[2] इति लौकिकव्यपदेशादनवधारणात्मकमप्रमाणमेवैतत्किं तदन्तर्भावचिन्तयेति कश्चित् । नासौ विपश्चित् । यतः सकलमेवेदमनवधारणात्मकमुच्येत किञ्चिद्वा । नाद्यः पक्षः । प्रायशोऽवधारणात्मकस्यैवास्योत्पादात् । अनवधारणात्मकस्य तु तस्य प्रामाण्यमेव नास्तीति नास्यान्तर्भावं वयमपि ब्रूमः ।

प्रातिभस्य प्रत्यक्षादावन्तर्भावकथनम् ।

तस्मादवस्थितमिदं प्रत्यक्षपरोक्षभेदतो द्वेधा ॥
एतत्प्रमाणतत्त्वं सर्वभिदां संग्रहप्रवणम् ॥ २११ ॥ १ ॥

तत्राद्यं भेदं व्याचष्टे—

## ॥ स्पष्टं प्रत्यक्षमिति ॥ २ ॥

स्पष्टं विशदं यद्विज्ञानं तत्प्रत्यक्षमिति प्रत्येयम् । अत्र च प्रयोगः । प्रत्यक्षं स्पष्टज्ञानात्मकं प्रत्यक्षत्वाद्यत्तु न च[3] स्पष्टज्ञानात्मकं तन्न प्रत्यक्षं यथानुमानं प्रत्यक्षं च विवादाध्यासितं ततः स्पष्टज्ञानात्मकमिति ।

अनेनाकस्माद्धूमदर्शनाद्वह्निरत्रेति ज्ञानं यावान् कश्चिद्धूमवान् प्रदेशः स सर्वोऽग्निमानित्यादिव्याप्तिज्ञानं चास्पष्टमपि प्रत्यक्षमाचक्षाणः प्राज्ञमानी प्रज्ञाकरगुप्तादिरवज्ञातः[4], अनुमानस्याप्येवं प्रत्यक्षतापत्त्या प्रत्यक्षमेवैकं प्रमाणं स्यात् । अपि च । अकस्माद्धूमदर्शनाद्वह्निरत्रेति ज्ञाने सामान्यं वा प्रतिभासेत विशेषो वा । यदि सामान्यम् । न

प्रज्ञाकरगुप्तादेः खण्डनम् ।

१ अनिन्द्रियेति प भ पुस्तकयोः पाठः । २ 'निश्चय' इति प भ. पुस्तकयोः पाठः । ३ 'च' इति नास्ति प पुस्तके । ४ अवज्ञातः-खण्डितः ।

तर्हि तज्ज्ञानं प्रत्यक्षम् । तस्य सामान्यगोचरत्वमङ्गीकृतम् । तदङ्गीकारे वा प्रमेयद्वैविध्यात्प्रमाणद्वैविध्यमिति स्वीकारस्य भङ्गप्रसङ्गः । सविकल्पकत्वानुषङ्गश्च प्रत्यक्षस्य । अथ विशेषस्तत्र ज्ञाने प्रतिभासते । तर्हि तत्र प्रवर्तमानस्य प्रतिपत्तुर्वह्निविशेषसंशयो न प्रादुर्भवेत्तार्णो वाऽग्निः पार्णो वेति यथा सन्निहिते वह्निविशेषे । न खलु पावकं सन्निहितमवलोकमानस्य तत्र संशयः समुल्लसति । समुल्लासे वा तस्य शब्दादिज्ञानाद्वा विशेषं प्रतिपाद्यमानस्यापि प्रमातुरसौ समुल्लसेत् । तथा चेदसङ्गतं भवेत् शब्दादिज्ञानाद्वा विशेषप्रतिपत्तौ न तत्र सन्देह इति । तदेवमस्मात्सामान्यदर्शनाद्वह्निरत्रेति ज्ञानं प्रत्यक्षम् । किं तर्हि लिङ्गदर्शनसमुत्थत्वादनुमानम् । दृष्टान्तावष्टम्भं विनाप्यनुमानं प्रवर्तत एवेति च पुरस्तादुपपादयिष्यते । व्याप्तिज्ञानमप्यस्पष्टत्वेनाप्रत्यक्षं व्यवहारिणां प्रतीतम् । व्यवहारानुकूल्येन प्रमाणचिन्ता प्रवर्त्यते भवद्भिः । प्रामाण्यं व्यवहारेणेत्यभिधानात् । न च व्यवहारिणां सर्वोऽप्यग्न्यो धूमान्यो वा स्पष्टज्ञानगोचर इत्यभ्युपगमोऽस्ति । अनुमानस्य वैयर्थ्यप्रसक्तेः । समस्तं हि व्याप्यं व्यापकं च स्पष्टत्वेन युगपन्निश्चिन्वतः प्रमातुः किमिदनुमानेन साध्यं सम्भवति । अन्यथा योगिनामप्यनुमानज्ञानस्यार्थनिश्चयप्रसङ्गः । समारोपनिषेधार्थमनुमानस्य प्रवर्तनान्नास्य वैयर्थ्यमिति चेत् । तदप्यनुचितम् । निश्चिते समारोपस्यासम्भवात् निश्चयसमारोपयोः परस्परं विरुद्धत्वात् । अथ कालान्तरभाविसमारोपनिषेधकत्वेन नानुमानस्य वैयर्थ्यम् । एवं तर्हि कश्चिदुपलब्धेऽर्थस्य पुनः पुनः कालान्तरेऽनुपलम्भाद्व्यवसमारोपसम्भवतो यत्प्रमाणादिकं तस्याप्यवैयर्थ्यं स्यात् । तथा च प्रमाणान्तरमेव तदापद्येत । तत्र व्याप्तिज्ञानमप्यस्पष्टत्वान्न प्रत्यक्षं युक्तम् ।

ननु सामान्यं ज्ञानधर्मोऽर्थधर्मो वा । यदि ज्ञानधर्मः । कथमथ

१ दृश्यत्व । २ प्रत्यक्षस्य । ३ 'गम्यत्वादिति पाठः' इति प पुस्तके पाठः । ४ दि इति नास्ति प पुस्तके । ५ 'च' इत्यधिकं प पुस्तके । ६ ... स्य शर्ते प पुस्तके पाठः ।

स्यास्पष्टत्वम्। अन्यास्पष्टत्वादन्यस्यास्पष्टत्वेऽतिप्रसक्तिः। अर्थधर्मत्वे पुनरस्य कथमतो व्याप्त्यादिज्ञानस्याप्रत्यक्षत्वं प्रसिध्येत्। व्यधिकरणाद्धि हेतोः साध्यसिद्धौ काकस्य कार्ष्ण्याद्धवलः प्रासाद इत्यादेरपि गमकत्वप्रसङ्ग इति चेत्। तदपि दुराशामात्रम्। स्पष्टत्वेऽप्येतस्य तुल्यत्वात्। स्पष्टत्वमपि हि यदि ज्ञानधर्मस्तर्हि कथमर्थे स्पष्टता। अतिप्रसक्तेः। विषये विषयिधर्मस्योपचाराददोषोऽत एवान्यत्राप्यदोषोऽस्तु। संवेदनस्यैव ह्यस्पष्टता धर्मः स्पष्टतावत्। यदि तु तस्याः परिच्छेद्यपदार्थधर्मत्वं स्वीक्रियते। तर्हि सर्वदा तथा प्रतिभासप्रसङ्गात्कुतः प्रतिभासपरावृत्तिर्भवेत्। ननु विषयिधर्मस्य विषयेषूपचारात्तत्र स्पष्टत्वास्पष्टत्वव्यवहारे विषयिणोऽपि ज्ञानस्य स्पष्टत्वधर्मतासिद्धिः कुतः। किं तज्ज्ञानगोचरज्ञानान्तरगतस्पष्टत्वास्पष्टत्वाभ्यां स्वतो वा। प्रथमपक्षेऽनवस्था। द्वितीयपक्षे त्वविशेषेण निखिलज्ञानानां स्पष्टत्वमस्पष्टत्वं वा प्रसज्येतेति चेत्। तदप्यचारु। अन्यथैव ज्ञाने स्पष्टत्वास्पष्टत्वधर्मतासिद्धेः। तथा हि प्रबलतरज्ञानावरणवीर्यान्तरायकर्मक्षयोपशमविशेषात्काचिद्विज्ञानस्य स्पष्टत्वं विपरीतात्तु तस्मादस्पष्टत्वम्।

स्पष्टज्ञानस्वरूपत्वं तत्प्रत्यक्षस्य लक्षणम्॥
व्यवस्थितमिदं युक्तिप्रतीतिभ्यामबाधितम्॥३१२॥२॥

अथ स्पष्टत्वमेव प्रकटयन्नाह—

**॥अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वमिति ॥ ३ ॥**

अनुमानादिभ्यो वक्ष्यमाणभेदेभ्यः[1] सकाशादाधिक्येनातिरेकेण विशेषाणां नियतवर्णसंस्थानाद्याकाराणां[2] प्रकाशनं प्रतिभासनं यस्य ज्ञानस्य तत्स्पष्टत्वं वैशद्यमित्यर्थः। तदुक्तम् '**अनुमानाद्यतिरेकेण विशेषप्रतिभासनम्॥ तद्वैशद्यं मतं बुद्धेरवैशद्यमतः परम्॥१॥**' इति।

---

१ 'परोक्षप्रमाण' इत्यधिकं प. पुस्तके। २ 'संस्थानाद्यर्था' इति प. पुस्तके पाठः।

केचित्तु तार्किकम्मन्याः प्रतीत्यन्तराव्यवधानेन प्रतिभासनमपि ज्ञानस्य वैशद्यं वदन्ति । अनुमानादिपरोक्षप्रमाण-भेदेषु हि धूमादिगोचरप्रतीतिव्यवधानेन धूमध्वजादिवस्तुनि प्रतीतिरित्यवैशद्यं तेषाम् । प्रत्यक्षे तु नैवं प्रतीत्यन्तरव्यवधानमस्तीति वैशद्यं तस्य । न ते जैनदर्शनोपनिषदं स्वप्नेऽपि प्रापुः । एवं प्रकारं वैशद्यं वदन्तस्ते कथमीहादिज्ञानस्य सन्देहाद्यपेक्षिणः प्रत्यक्षता व्यवस्थापयिष्यन्ति । अथ नूपुरपरापरेन्द्रियव्यापारादेवेहादीनामुत्पत्तेः सन्देहाद्यनपेक्षत्वात्प्रतीत्यन्तराव्यवधानेन प्रत्यक्षतेति । तदपि प्रतीतिपराङ्मुखत्वम् । ईहादयो हि सन्देहादिभ्यः समुपजायमाना प्रतीयन्त एवेति कथं तदनपेक्षत्वम् । प्रतीयमानस्यापि कार्यकारणभावस्यात्रापह्नवे सर्वत्र तदपह्नवः किं न स्यात् । अथैकस्मिन् संवेदनमवग्रहाद्यतिशयोपेतमित्यत्रापि प्रतीत्यन्तराव्यवधानमस्तीति । ननु तथापि तदनेकत्वपक्षे प्रतीत्यन्तरव्यवधानमलब्ध-समाधानम् । स्याद्वादिना ह्यवग्रहादीनामेकत्वमिवानेकत्वमपि वक्तव्यम् । तदेवं परोदितस्य वैशद्यलक्षणान्तरस्यानुपपत्तेर्यथोदितलक्षणमेव वैशद्यं स्पष्टतापरपर्यायं स्वीकार्यम् ।

प्रतीत्यन्तराव्यवधानेन प्रतिभासनमपि ज्ञानस्य वैशद्यमिति वदतां ताकिकम्मन्यानां जैनमतानभिज्ञत्वम् ।

निरवद्यं चेदं स्पष्टत्वं प्रत्यक्षस्य लक्षणम् । साकल्येनाखिलासु प्रत्यक्षव्यक्तिषु सम्भवेनाव्याप्त्यसम्भवदोषानास्पदत्वात् । अतिव्याप्तिस्तु दूरोत्सारितैव । अप्रत्यक्षत्वानभिमते क्वचिदप्येतल्लक्षणस्यासम्भवात् । समस्तकारणकलापाभिकलितस्य तु नैव रक्षणम् । सम्भावनमात्रे तस्यापि स्पष्टत्वात् । ननु च परोक्षेऽपि स्मृतिप्रत्यभिज्ञादिस्वरूपसंवेदनेऽस्याध्यक्षलक्षणस्य सम्भवादतिव्याप्तिरेवेति चेत्, नैवम् । तस्य परोक्षत्वासम्भवात् ।

स्पष्टत्वलक्षणस्याव्याप्त्यसम्भवादिदोषरहितत्वम् ।

१ आदिशब्दात् अवायधारणापरिग्रहः । स्मृत्यादिस्वरूपं तु प्रत्यक्षं परि १ सू ८, १०, इत्यत्र द्रष्टव्यम् । २ आदिशब्दात् उत्तरार्धं परिग्रहः । अवग्रहलक्षणं परि २ सू ७ इत्यत्र द्रष्टव्यम् ।

क्षायोपशमिकसंवेदनानां स्वरूपसंवेदनस्यानिन्द्रियप्रधानतयोत्पत्तेरनिन्द्रियाध्यक्षव्यपदेशसिद्धेः । बहिरर्थग्रहणापेक्षया हि विज्ञानानां प्रत्यक्षपरोक्षव्यपदेशो न तु स्वरूपापेक्षया । स्वरूपे सर्वज्ञानानां स्पष्टप्रतिभासत्वेन प्रत्यक्षतयैव व्यवस्थितत्वात् ।

तस्मान्निर्दोषत्वात्स्पष्टत्वं प्रत्यक्षलक्षणं प्रेक्षावद्भिरङ्गीकर्त्तव्यं नेन्द्रियसन्निकर्षोत्पन्नमित्यादि नैयायिककल्पितम् । चाक्षुषसंवेदने तस्यासत्त्वेनाव्यापकत्वात् । चक्षुषोऽर्थेन सन्निकर्षाभावात् ।

चक्षुषोऽर्थेन सन्निकर्षाभावसमर्थनान्तं नैयायिकस्य खण्डनम् ।

इदमस्मदुदीरितं निशम्य प्रोद्यत्कोपविपाटलीकृताक्षम् ॥
निगदति नितराममृष्यमाणं तदिदं यौगकदम्बकं मिलित्वा ॥ ३१२ ॥

आः किमिदमुच्यते चक्षुषोऽर्थेन सन्निकर्षाभावादिति । अस्ति हि तत्सद्भावग्राहकमनुमानम् । तथा च व्योमशिवः “ चक्षुः प्राप्तार्थपरिच्छेदकं व्यवहिताप्रकाशकत्वात् यद्यद्व्यवहिताप्रकाशकं तत्तत्प्राप्तार्थपरिच्छेदकं यथा प्रदीपः व्यवहिताप्रकाशकञ्च चक्षुः तस्मात्प्राप्तार्थपरिच्छेदकम् ” इति । किरणावलीकारोऽपि ‘यदि त्वप्राप्यकारि चक्षुस्तेषामप्राप्तत्वाविशेषादव्यवहितमिव व्यवहितमपि किन्न गृह्णीयात्’ इति वदति तदेव समर्थयते श्रीधरोऽप्येतत् ‘बाह्येन्द्रियत्वात्त्वगिन्द्रियवत्’ इति द्वितीयं च प्राह ।

चक्षुषः प्राप्तार्थपरिच्छेदकत्वमित्यर्थं साधकानुमानानां खण्डनम् ।

कश्चित्पुनरुवाच । चक्षुः प्राप्यकारि भौतिकत्वाद्यदेवं तदेवं यथा परशुस्तथा चेदं ततस्तथा । अथ चक्षुषः प्राप्यकारित्वे कथं भूधरचन्द्रमसोर्युगपद्ग्रहणम् । तदसत् । युगपत्तद्ग्रहणस्याप्रसिद्धेः । प्रथमतो हि चक्षुः सन्निहितं महीधरं प्राप्य प्रकाशयति । पश्चाद्दूरचारिणं

१ ‘ च ’ इति नास्ति प भ पुस्तकयोः । २ किरणावल्यां पृ २८८ पं ९. ३ न्यायकन्दल्यां पृ २३ पं. १५

हरिणलक्ष्माणम् । युगपत्प्रतिपत्त्यभिमानस्तु शतपत्रपत्रशतव्यतिभेदवदा- शुत्पत्तिनिमित्तकः ।

एवं च लोचनस्य प्रसिध्यत् प्राप्यकारिता श्रुतिरत्र ॥
तन्नयनसन्निकर्षाभावतश्च सङ्गतिं कथमुपैतु ॥ ३१४ ॥
एषा मतौ जगत्पूर्वपदार्थसिद्धौ
कोऽप्येष दुर्धरतरः खलु पक्षपातः ॥
किन्त्वन्यथापि स न कश्चन युक्तिलेशं
प्राप्नोति यः किमपि हन्त तदानुरूप्यम् ॥ ३१५ ॥

तथा हि यत्परस्यानुमानम् । तत्र भावचक्षुर्द्रव्यचक्षुर्वा धर्मितया वक्ष्येत । न तावद्भावचक्षुः । त्वया तस्यानङ्गीकारेण धर्मिणोऽसिद्धौ साधनस्याश्रयासिद्धताप्रसक्तेः । अङ्गीकारेऽपि नास्य पदार्थेन प्राप्तिः सिद्ध्यति । भावचक्षुः खल्वात्मनो बुद्धिलक्षणो गुणः प्राप्तिरपि पदार्थेन संयोगो गुणः । न च गुणे गुणान्तरमस्ति । निर्गुणत्वात् तद्गुणानाम् । द्रव्यचक्षुरपि गोलकरूपमन्यद्वा किञ्चिद्भवेत् । आद्यपक्षे प्रत्यक्षबाधः प्रतिज्ञायाः । प्रत्यक्षेण परिच्छित्तिकाले पदार्थासम्बद्धस्यैव गोलकस्योपलब्धेः । अन्यथा तदानीं पुंसः पक्ष्मप्रदेशे मर्कटकोटरोपलम्भः स्यात् । पदार्थस्य वा गोलकप्रदेशे प्रतीतिः स्यात् । अथान्यत् किञ्चिच्चक्षुरिन्द्रियं धर्मितया तदधिष्ठाननियमेव पटिष्ठमर्थपरिच्छेदे स्वीक्रियते । तदा स एव तद्देशे पदार्थस्योपलम्भः स्यात् ।

अथाधिष्ठानदेशात् प्रसरद्रश्मिरूपतया तत्समवेतं चक्षुः प्रसृत्यार्थेन सम्ब- द्धमेव सम्बद्धं चोपलम्भयति । तदयुक्तम् । चक्षुः प्रसृत्य नार्थेन सम्बध्यते प्रत्यक्षानुमानबाधापातात् चक्षुषो रश्मिवत्त्वासिद्धेः । अथ रश्मिवच्चक्षुस्तैजसत्वात् यत् तैजसं तद्रश्मिवत् यथा ज्योतिस्तथा चेदं तस्मात् तथेत्यतस्तत्सिद्धिः । न चासिद्धं तैजसत्वम् । चक्षुस्तैजसं रूपादिषु मध्ये नियमेन रूपस्याभिव्यञ्जकत्वाद्यदेवं तदेवं यथा दीपस्तथा

१ [illegible] इति प म पुस्तकयोः पाठः ।

चेद तस्मात्तथेत्यतस्तत्सिद्धे. । रूपस्याभिव्यञ्जकत्वादित्युक्ते मनसा व्यभिचारो भवेत् । ताद्धि रूपव्यञ्जकं न च तैजसमिति तद्व्यवच्छेदार्थं नियमेनेति पदम् । न हि मनो रूपस्यैव व्यञ्जकं गन्धादीनामपि व्यञ्जकत्वात् । एवमपि रूपत्वद्रव्यादिव्यञ्जकत्वोपलब्धेरसिद्धत्व स्यादिति रूपादिषु मध्ये इत्युक्तमिति चेत् । तदसुन्दरम् । इन्दुदीधितिप्रति-बन्धे तदिति प्रतिबन्धे रूपादिष्वित्यादिहेतोरनैकान्तिकत्वात् । न च शुचिरोचिःशोचि.सञ्चयस्यापि तैजसत्वान्न व्यभिचार इति वाच्यम् । उष्णस्पर्शशून्यत्वेन तैजसत्वासम्भवात् । तथा तेजःप्रकरणे वैशेषिक-भाष्यम् । ' उष्ण एव स्पर्शः ' इति ।

यत्पुनरुदयनोऽत्राह ' एवंकारश्चन्द्रचामीकरचक्षुरादिष्वनुपलम्भ-हेतुकां विप्रतिपत्तिमपनेतुं, तेषां तैजसत्वेनोष्णत्वानुमानात्' इति । तदवन्धुरम् । शशधरेऽद्यापि तैजसत्वासिद्धेः । अथ प्रस्तुतहेतुत एवात्रापि तत्सिद्धिरभिधीयते । तदशस्यम् । अस्यानुमानबाधितपक्षा-नन्तरोपन्यस्तत्वेन कालात्ययापदिष्टत्वात् । तथाहि न चन्द्रस्तैजसः शैत्यहेतुत्वात् पाथोवदिति । सति च सुधांशोरतैजसत्वे सुतरां तन्मरी-चीनामतैजसत्वम् ।

यस्त्वत्र कस्यचिदागम । ' जलकल्लोलश्चन्द्रस्तत्र प्रतिहतास्तप-नांशवः प्रद्योतन्ते शिशिराश्च भवन्ति तत एव शैत्यहेतव ' इति । सोऽपि स्वैरालापः । कस्य पयोराशेरयं कल्लोल. । कथं तं विहाय विहायस्तलमालम्बे । कुत. परिमण्डल एव कथं न स्पन्दते । काठिन्य-माप्तो वा । तत्प्रतिफलितास्तपनांशा. शिशिराः सुखालोकाः सकल-दिक्प्रसारिणश्च भवन्ति । कथं च न दिवापि तत्प्रतिफ-लनमित्यादि विचारचतुःपथासञ्चारिष्णुत्वात् । तथाविधस्यापि स्वीकारे

१ ' प्रबन्धे ' इति म. पुस्तके पाठ । २ ' तदिति प्रतिबन्धे' इति नास्ति म. पुस्तके । ३ वैशेषिकदर्शने प्रशस्तपादभाष्ये पृ. १५ प. ८. ४ किरणावल्यां पृ. २८३ प २. ५ ' बन्धुर तून्नतानतम् ' न चतुरस्रमित्यर्थः । ६ अप्रशस्यमित्यर्थ । ७ ' तथा च ' इति प. भ पुस्तकयोः पाठ । ८ आकाशतलम् । ९ ' विचार-यितु पथा ' इति म. पुस्तके पाठ. ।

परस्परस्यापि चेष्टसिद्धया स्वमतव्याघात । तेनोक्तनयनसान्निकर्षेणापि व्यभिचारी प्रवृत्तहेतु । अथ हि रूपादिषु रूपस्यैवाभिव्यञ्जकोऽग्नि न च तैजस ।

अथ द्रव्यत्वे रूपादिषु नियमेन रूपस्याभिव्यञ्जकत्वादिति विशिष्य हेतुरुच्यते । तदप्यञ्जनादिनानेकान्त । अथ तैजसमेवाञ्जन न पुन पार्थिवम् । तत्रानुद्भूतस्य तेजोद्रव्यस्य भावादिति चेत् । तदयुक्तम् । प्रमाणाभावात् । तत्तमञ्जन रूपावभासने नयनस्य सहकारित्वान्यथानुपपत्तेति प्रमाणमस्तीति चेत् । तदचतुरस्रम् । चेतसा व्यभिचारस्य दुष्परिहारत्वात् । अथ रूपस्यैवावभासने नयनस्यैव वा सहकारित्वादित्यवधारणगर्भसाधनोपदर्शनेन सकलाना विषयाणामिन्द्रियाणा वा साधारणस्यान्त करणस्य व्यवच्छेदेन व्यभिचारपरिहार क्रियते । तदाऽऽद्यपक्षे हेतुरसिद्ध । द्रव्यादेरपि व्यञ्जनेऽञ्जनस्य नयनसहकारित्वात् । द्वितीये तु दृष्टान्तस्य साधनवैकल्यम् । रूपेऽपि स्वविषयज्ञानावभास जनयति प्रदीपस्य सहकारितया नयन प्रत्येव सहकारित्वासम्भवात् । अथ रूपादिषु मध्य इत्यादिहेतोरेवाञ्जनस्य तैजसत्वसिद्धिरुच्यते । तर्हि निदर्शन वाच्यम् । प्रदीप एवेति चेत् । न । अस्य साधनशून्यत्वात् ।

अहो किमिदमुच्यते किं प्रदीप प्रबोधितो न रूपमभिव्यनक्ति रसादीनपि चाभिव्यनक्ति । उच्यते । अभिव्यञ्जयत्येवाय स्वान्तर्निमग्नानामगुरुकर्पूरकस्तूरिकादीना सुरभिपरिमलोद्गार नागकर्णिकाविमिदक्करतलमिव नागकर्णिकादे । एव चक्षुष्मत्तैजसत्वसिद्धयनुमानेऽपि साधनवैकल्य दृष्टान्तस्य वाच्यम् । अपि च यदि चक्षुष्मत्तेजस्तत्र स्यात्तदा कथ न तत्र भास्वररूपोपलम्भ । तेजसि तस्य स्वाभाविकत्वात् । अनुद्भूतमादिति चेत् , नन्वेव रूपाभिव्यञ्जकत्वमस्य रूप

१ 'रूपावा' इति प भ पुस्तकयो पाठ ।

पादम् । तथा हि[1] यदनुद्भूतभासुररूपरहितं तन्न रूपाभिव्यञ्जकं यथा पाथःसंयुक्तस्तनूनपात्तथा चक्षुः कक्षीकृतं त्वयेति ।

अनुद्भूतरूपस्यापि चक्षुषः प्रदीपादिसहकारेणार्थप्रकाशकत्वमिति भूषणमतस्योपपत्तिपूर्वकं खण्डनम् ।

यत्तु भूषणेनावभाषि । 'कथमनुद्भूतरूपाणामर्थप्रकाशकत्वमिति चेत् । न । प्रदीपादिप्रकाशरहितानां तदुपपत्तेः । अत एव येषामदृष्टसामर्थ्यादुद्भूतरूपा नायना रश्मय उत्पन्नास्तेषां बाह्यप्रकाशनिरपेक्षा एवार्थं प्रकाशयन्ति यथा नक्तञ्चराणाम् । तथा च केषाञ्चिन्नक्तञ्चराणां नायना रश्मयः प्रत्यक्षेणैव दृश्यन्ते' इति । तदपि न कमनीयम् । कुम्भादेरप्यनुद्भूतभासुररूपपरिकल्पनया प्रदीपादिसहकृतस्य प्रकाशकत्वोपपत्तेः । तस्यातैजसत्वेन भासुररूपमेव नास्तीति कुतस्तत्र तस्यानुद्भूतत्वकल्पनोपपत्तिमतीति चेत् । ननु चक्षुषोऽपि कुतस्तैजसत्वसिद्धिः । रूपादिषु नियमेनेत्यादिहेतोरेवेति चेत् । तत एवान्यस्यापि सास्तु । अत्रायं हेतुरसिद्ध इति चेत् । लोचनेऽपि कथं सिद्धः । प्रदीपादिसहकृतस्य प्रकाशकत्वोपलब्धेरिति चेत् । तदन्यत्रापि न नाम नास्ति ।

अथ [2]वृषदंशादिचक्षुरालोकासहकृतमपि प्रकाशकमुपलब्धं नत्वेवं कुम्भादिरिति चेत् । तत्किमयमाशयस्ते यदालोकसहकृतमेव प्रकाशकं तन्न तैजसमिति । तर्हि नरनारीनयनानां तादृगतैजसत्वप्रसक्तिः । यदप्यवाचि केषाञ्चिन्नक्तञ्चराणां नायना रश्मयः प्रत्यक्षेण दृश्यन्त इति । तदपि यदि परममांसचक्षुषामपेक्षया प्रोक्तम् । अस्मदादिभिस्तत्र रश्मीनामप्रतिपत्तेः । वृषदंशदृशः प्रतीयन्त एवेति चेत् । न । तद्गोलकप्रदेशविशेष एव हि तथा प्रतिभासते न तु रश्मयः काचित् । यदि तु ते तत्र स्युः तदा [3]प्रदीपादिवत्तेऽपि प्रसरन्तो दृश्येरन् । न च यमर्थं निशि निशाचरः पश्यति स तल्लोचनरुचिनिचयविच्छुरितो [4]दीप-

१ 'च' इति प. पुस्तके पाठः । २ वृषदंशः—मार्जारः । ३ 'दीपादिवत्' इति प. पुस्तके पाठः । ४ 'प्रदीप' इति प. भ. पुस्तकयोः पाठः ।

प्रभाप्राग्भारपरिरब्ध इव निकटोपटीकमानमनुष्येण दृश्येत । न च तेषामतितनुतरतया न नरा प्रत्यभिव्यञ्जकत्वमिति वाच्यम् । रात्रिञ्चरानपि प्रति तदभिव्यञ्जननिरोधात् । उद्भूतभासुररूपत्वेन हि तेषामभिव्यञ्जकत्वं तच्चोभयत्र तुल्यम् । यद्वा सन्तु मार्जारनेत्रयोर्मरीचयो यत्र चाकचक्यायमानतास्ति काचित् । यत्र तु गृहगोधिकादिचक्षुषि न किञ्चिदिति चकास्ति तत्रोद्भूतभासुररूपा रश्मयः सन्तीति कः स्वस्थः कथयेत् । दर्शनयोग्यं हि रूपमुद्भूतमुच्यते । अन्यथा मनुष्यनेत्रेषु तदनुद्भूतताभ्युपगमः किंनिमित्तकः स्यात् । अनुद्भूतताभ्युपगमे तु गृहगोधिकादिचक्षूरश्मीनामालोकनिरपेक्षाणामेव प्रकाशकत्वमवलोकितमिति कथं प्रदीपादिप्रकाशसहितानां तदुपपत्तेरिति प्रागुक्तमुपपद्यते ।

यत्तु तेनैव नेत्ररश्मिष्वनुद्भूतरूपतामनिच्छतावाचि । अथवालोकावयवसहितेभ्यस्तदवयवेभ्य उद्भूतरूपा एव नायना रश्मय उत्पद्यन्ते । दृष्टौ हि तेनसामाशुतरविनाशोत्पादौ । रूपस्पर्शौ चोद्भूतानुद्भूतत्वधर्मविकल्पोपेतानित्युद्भूतरूपत्वेनोत्पन्नानामपि रश्मीनामन्यस्मिन्समावेशादविवेकेनाग्रहणम् । यथाऽनेकप्रदीपरश्मीनामेकार्थसम्बद्धानामिति । तदपि नोपपद्यते । यतो यदि नामालोकमिलितमनुष्यलोचनेष्वेवम् । तथापि वहुलनिर्गाथे निरन्तरमञ्जनपुञ्जलयन्कज्जलश्यामलान्धकारकरम्बितेऽपि सातिशयसङ्घटितविकटकपाटसम्पुटापवरककोडे विचरता गृहगोधिकादिपिपीलिकादिप्राणिना साक्षादपि पश्यता कथं रश्मीनामुपलम्भो न भवेत् । तत्रालोकमिलनस्यासम्भवात् । अथ यत्रालोकमिलनं तत्रैव तेषामुद्भूतानामुत्पत्तिः । तर्हि गृहगोधिकादिनेत्ररश्मीनामप्रकाशकत्वं स्यात् । अनुद्भूतभासुररूपत्वादिति प्रागुक्तमेव मुच्यते ।

---

१ अभिव्यञ्जक ' इति म पुस्तके पाठ । २ भित्तिविभेदको महाकायो मूषकविशेष । ३ मन्दाग्नित्वलय इति प म पुस्तकयो पाठ । ४ अपवरक -गृहम् ।

भाषमाणेन निःसारमित्येवं भूषण त्वया ॥
सत्यं सत्यापयांचक्रे भूषणं भस्मभाङ्गिभिः ॥ ३१६ ॥

ततोऽनुद्भूतभासुररूपस्याभिव्यञ्जकत्वाघटनादसिद्धं ते रूपाभिव्यञ्जकत्वं चक्षुषि । अनुमानबाधितं च चक्षुषस्तैजसत्वम् ।

चक्षुषस्तैजसत्वस्यानुमानेन बाधनम् ।

चक्षुषस्तैजसं न भवति तमःप्रकाशकत्वाद्यन्नैवं न तदेवं यथा प्रदीपस्तथा चेदं तस्मात्तथेति । न च तमसोऽसत्त्वेनासिद्धं तत्प्रकाशकत्वम् । अस्य प्रसाधयिष्यमाणत्वात् । तदेवं तैजसत्वस्यासिद्धत्वान्न चक्षुषि रश्मिवत्त्वसिद्धिनिबन्धनत्वम् ।

अथ क्वचन निरन्तरतिमिरनिकरकरम्बितापवरककोणे निषण्णस्य जरन्मार्जारस्येक्षणे प्रत्यक्षतो रश्मिवत्त्वप्रतीतिस्तन्निदर्शनेनान्यत्रापि नेत्रत्वहेतुना तत्सिद्धिरभिधीयते । तर्हि तरुणरमणीवीक्षणे कटाक्षलक्षप्रक्षेपाः प्रेक्ष्यन्ते तत एव करभादिलोचनेऽपि तत्सिद्धिः किं न स्यात् । तस्मान्न साधर्म्यमात्रेण हेतोर्गमकत्वमपि त्वन्यथानुपपन्नत्वेन । न चात्र तदस्ति । तद्ग्राहकप्रमाणस्यासम्भवात् । न च मार्जारनेत्रेऽपि रश्मिवत्त्वं नः सिद्धमिति प्रागुक्तम् । तदित्थं दृशो रश्मिवत्त्वाप्रसिद्धेरसम्बद्धमुक्तमधिष्ठानदेशात्प्रसरद्रश्मिरूपावयवसमवेतमित्यादि । अनुमानबाधितश्च चक्षुषः प्राप्तार्थपरिच्छेदनपक्ष । तथा हि चक्षुः प्राप्तार्थपरिच्छेदि न भवत्यत्यासन्नार्थाप्रकाशकत्वाद्यत्पुनर्नैवं न तदेवं यथा घ्राण तथा चैतत्तस्मात्तथेति । न चात्र हेतुरसिद्धः । गोलकसंसर्गिणोऽञ्जनस्य लोचनेनाप्रकाशनात् । अथात्यासन्नोऽर्थो योग्योऽयोग्यः सामान्यतो वा विवक्षितः । आद्यपक्षे हेतोरसिद्धिः । योग्यस्यात्यासन्नस्य सर्वस्य तेन प्रकाशनात् । अञ्जनस्य तु न योग्यता । प्रसरतो हि नयनरश्मिसमूहस्य यत्तत्प्रगुणदेशेऽवस्थितं तदेव चक्षुर्ग्रहणे योग्यम् । न चाञ्जनं तथा । तस्य पक्ष्मपुटतटोद्घट्टितस्य गोलकान्तर्निःसरतां मूले मृणालसूत्रसूक्ष्मेण रश्मिसमूहेन सार्धं प्रगुणत्वायोगात् । द्वितीये तु पक्षे व्यभिचारः ।

स्पर्शनादीनामाकाशपरमाणुप्रमुखात्यासन्नायोग्यपदार्थाप्रकाशकत्वेऽपि प्राप्तार्थपरिच्छेदकत्वात्। तृतीयेऽप्ययमेव कलङ्कः। तदखिलं प्रलापमात्रम्। यतो यदि नाम सूक्ष्मरश्मि दृष्टिं स्वकीयाटीककल्पनयाञ्जनमयोग्यं पर्यकल्पि तथापि सकलगोलकव्यापितिमिरकामलादिषु कः प्रतीकारः। ते हि तद्व्यापित्वादेव तद्रश्मीनां प्रगुणदेशस्थिताः। यथा स्फुटस्फटिककाचादिकूपिकाक्रोडोपगतप्रदीपरश्मीनां स्फाटिकादिकूपिका इति। न च स्पर्शनेन प्राप्तार्थप्रकाशकेनाप्यत्यासन्नस्याभ्यन्तरशरीरावयवस्पर्शस्याप्रकाशनात्स्पर्शनार्थाप्रकाशकत्वस्यानेकान्तः। आभ्यन्तरशरीरावयवानां स्पर्शनेन्द्रियकारणत्वेन तत्सम्बन्धिस्पर्शस्य तदविषयत्वात्। अकारणस्य तु जलादेः पीयमानस्य शिशिरस्पर्शोऽभ्यन्तरमनुभूयत एव। व्यवहिताप्रकाशकत्वादिति हेतुरप्यसिद्धः। कुलिशकाचाभ्रपटलस्वच्छसलिलस्फटिकोपलान्तरितानामपि पदार्थानामुपलम्भात्। अथ चक्षूरश्मयः कुलिशादिकं निर्भिद्य तदन्तरितपदार्थदेशमुपसर्पन्ति ततस्तदुपलम्भः तर्हि तूलपटलान्तरितपदार्थोपलम्भः सुतरां भवेत्तस्य सुभेदत्वात्। ये हि किमपि कर्कशमतिशयनिशितशस्त्रासेद्यं दम्भोलिस्फाटिकादिकमपि भिन्दन्ति न ते तूलपटलीं भेदयितुमलमिति कः सकर्णः कर्णेऽपि कुर्वीत।

स्फटिकादीनां प्रसादस्वभावतया तेजोगतेरप्रतिबन्धकत्वमित्युदयनमतस्य खण्डनम्।

यत्पुनरुदयन उच्चचरत्। "स्फटिकाद्यन्तरितोपलब्धिः प्रमादस्वभावतया स्फटिकादीनां तेजोगतेरप्रतिबन्धकतया प्रदीपप्रभावद्भेदुपपन्ना" इति। तदपि नोपपन्नम्। न हि प्रसन्नतानिमित्तको मूर्तद्रव्यस्य मूर्तद्रव्यान्तरेण गतेरप्रतिबन्धः क्वापि प्रतीतः। किन्तु प्रशिथिलावयवारब्धत्वनिमित्तकः। यथा तूलादिभिरेव जलादीनां न पुनः स्फटिकादिभिः। तद्वदिहापि तूलादय एव नयनरश्मिगतेः प्रतिबन्धकाः। न स्फटिकादयः। स्फटिकान्तर्गतप्रदीपरश्मयस्तु न तं भित्त्वा प्रसरन्ति। किन्तु तत्सम्पर्कमासाद्य स्फटिकपरमाणुपुञ्ज एव

---

१ 'न' इति प पुस्तके नास्ति।

तथा परिणतः सर्वतः प्रसरति । अत एव पीतरक्तादिकाचकूपिकातो रश्मयोऽपि तच्छायाः प्रसरन्तो दृश्यन्ते । अथ यथा पारदस्यायस्पात्रभेदे सामर्थ्यं न पुनरलाबुपात्रभेदे तथा लोचनरोचिषामपि स्फटिकादेर्भेदे शक्तिर्भविष्यति न तूलपटलीभेद इति चेत् । तदप्रतीतिकम् । सोऽयं स्फटिकादिरिति निर्णयाद्विनाशव्यवहारस्य तत्र कस्यचिदभावाच्च । अथ पूर्व्वपूर्व्वकाचादिव्यूहवृत्तावुत्तरोत्तरतद्रूपव्यूहान्तरस्योपपत्तेः प्रदीपज्वालावन्निरन्तरताभ्रान्तिरित्युच्यते । हन्तैवम् ।

कलशकुलिशप्राकाराद्य त्रिविष्टपकन्दरा-
कुहरकलितं विश्वं वस्तु प्रतिक्षणभङ्गुरम् ॥
ज्वलनकलिकावत्किन्त्वास्मिन्निरन्तरताभ्रमः
प्रभवति वदन्नित्थं शाक्यः कथं प्रतिहन्यते ॥ ३१७ ॥

अथात्मादिपदार्थाना क्षणिकत्वमाचक्षाणं भिक्षुं प्रतिक्षेप्स्यति । प्रत्यभिज्ञैवेति चेत् । स्फटिकादावप्यस्त्येवासौ । सान्यत्र दृढेति चेत् । किंकृत तत्रास्य दार्ढ्यम् । वाधाभावकृतमिति चेत् । प्रकृतेऽपि तत्समानम् । न हि स्फटिकादौ प्रत्यभिज्ञानस्यैकत्वपरामर्शिनः किंचिद्बाधकमस्त्यात्मादिवत् । स्फाटिकान्तरितार्थोपलम्भेन तद्भेदसिद्धिरेकत्वग्राहकप्रत्यभिज्ञानस्य बाधिकेति चेत् । नैवम् । इतरेतराश्रयापत्तेः । भेदसिद्धौ हि स्फटिकादेस्तदन्तरितार्थोपलम्भः सिद्ध्यति तत्सिद्धौ च भेदसिद्धिरिति । यदि च तथा स्फाटिकादेराशूत्पादविनाशौ स्वीक्रियेते तदा चैवं दर्शनान्तरितमदर्शनमपि स्यात् । न च तत्र तदा कस्यचित् तदनुभूयते । तद्विनाशस्य पूर्वोत्तरोत्पादाभ्यामाशुभाविभ्या तिरोहितत्वान्न तत्रादर्शनं स्यादिति चेत् । नन्वेवं तदुत्पादस्य पूर्वोत्तरविनाशाभ्यामाशुभाविभ्यामेव तिरोधानाद्दर्शनमपि माभूत् । तदुत्पादयोः स्वमध्यगतविनाशतिरोधाने सामर्थ्यं भावस्वभावत्वेन बलीयस्त्वात् । ननु निस्स्वभावयोस्तन्नाशयोः स्वमध्यगतोत्पादतिरोधाने । अभावस्वभावत्वेन दुर्बलत्वादिति चेत् नैतद्भाव्यम् । भावाभावस्वभावयोः समानबलत्वात् ।

तयोरन्यतरबलीयस्त्वे युगपद्भावाभावात्मकवस्तुप्रतीतिविरोधात् । न हि वस्तुनो भाव एव कदाचित्प्रतीयते । स्वरूपादिचतुष्टयेनेव पररूपादिचतुष्टयेनापि भावप्रतीतिप्रसक्तेः । न चानाद्यनन्तं सदात्मकं वस्तु प्रतिभाति । यतस्तथाभ्युपगमः श्रेयान् । नाप्यभाव एव वस्तुनोऽनुभूयते । पररूपादिचतुष्टयेनेव स्वरूपादिचतुष्टयेनाप्यभावप्रतिपत्तिप्रसङ्गात् । न च सर्वथाप्यसत्प्रतिभाति । यतस्तदभ्युपगमोऽपि कस्यचित्प्रतितिष्ठेत । प्ररूपयिष्यते च भावाभावप्रतिभासनम् । ततः सर्वथोत्पादे विनाशे च पुनः पुनः स्फटिकादेः दर्शनमान्तरस्यादर्शनस्य प्रसञ्जनं दुर्निवारमिति स्थितम् । न चैव प्रदीपे कथं नैरन्तर्यभ्रम इति वाच्यम् । सर्वथोत्पादविनाशयोस्तत्राघटमानत्वादिति वक्ष्यते । सन्निधव्यतिरेकि च व्यवहिताप्रकाशकत्वम् । अप्राप्तार्थपरिच्छेदित्वेऽपि व्यवहिताप्रकाशकत्वस्याविरोधात् ।

यदुक्तमप्राप्तत्वाविशेषाद्व्यवहितवत्सुव्यादिव्यवहितमपि किं न गृह्णीयादिति । तदप्यसङ्गतम् । योग्यतावशेनेव तेन प्रकाशनात् । अभ्युपगतं च भवताप्येतत् । कथमन्यथा स्फटिकान्तरितस्येव समलजलान्तरितस्यापि भावस्योपलम्भो न भवेत् । अथ पाथो निव्यसितत्वालोचनतेजो न तद्भित्त्वाऽर्थेन सम्बध्यते इति कथं तदुपलम्भः । तर्हि स्वच्छसलिलान्तरितस्यापि तस्यानुपलम्भः स्यात् । कथं वा कुड्यादेर्न रश्मिभिर्भेदः । नहि तत्तेजो विरोधि । स्फटिकादावपि तद्विरोधित्वापत्तेः । प्रसन्नतानिमित्तस्तु तद्भेदः पूर्वमेव व्यपास्तः । किं च घ्राणं यथा केरवस्येव परमाणोरपि गन्धं कुतो न प्रकाशयेत् । अथ प्रकाशयत्येव योगिनो घ्राणं परमाणुगन्धमपि । नास्मदादेः । तादृगदृष्टविशेषस्याभावात् । महत्त्वाद्युपेतद्रव्यगन्धादि तु प्रकाशयति । तादृगदृष्टविशेषस्य सद्भावात् । इत्यदृष्ट-

अप्राप्तार्थपरिच्छेदपक्षे व्यवहितस्यापि प्रकाशकमिति किरणावलिकारोक्तप्रसङ्गस्यापाकरणम् ।

१ ' स्वभावतस्तु प्रतिभासनम् ' इति प पुस्तके पाठः ।

वैचित्र्यात्तद्विज्ञानभावाभाववैचित्र्यम् । तदितरत्रापि तुल्यम् । स्याद्वादिनामपि चक्षुरप्राप्यकारि केषाञ्चिदतिशयज्ञानभृतामस्मदाद्यगोचरविप्रकृष्टस्वविषयस्य परिच्छेदकम् । तादृशतदावरणक्षयोपशमविशेषसद्भावात् । अस्मदादीनां तु यथाप्रतीति पदार्थप्रकाशकत्व स्वानुरूपतदावरणक्षयोपशमविशेषादित्युभाभ्यामभ्युपगन्तव्या योग्यता । अधिकश्चास्माकमनुभवः साक्षी । अनुमान चानन्तरं निरूपितम् ।

कन्दलीकारोक्तयोग्यताखण्डनस्य खण्डनम् ।

यत्तु कन्दलीकारो व्याकरोति । "योग्यताभावाद्व्यवहिताग्रहणमिति चेत् । इन्द्रियस्य तावद्योग्यता विषयग्रहणसामर्थ्यमस्त्येव तदानीमव्यवहितग्रहणात् । विषयस्यापि योग्यता महत्त्वानेकद्रव्यवत्त्वरूपविशेषाद्यात्मिका व्यवधानेऽप्यनिवृत्तैव । आर्जवावस्थानमपि तदवस्थमिति" । तदप्येतेन निरस्तम् । प्रमातुस्तादृशक्षयोपशमरूपतद्ग्रहणयोग्यताया अभावात् । कथमन्यथा निशीथिनीनाथरूपस्येव तद्गतेरुपलम्भो न भवेत् । अथ भास्वरत्वाद्दूरादपि रूपं तस्योपलभ्यते नतु गतिस्तद्विपरीतत्वात् तर्हि तदुत्सङ्गसङ्गतः कुरङ्गकलङ्क[1] सैंहिकेयनिकेतनैकदेशश्च नोपलभ्येत । तद्रूपाभावेन सितत्वेन तदुपलम्भे कतरो गतावपराधः । यत्रासौ दृश्यते । तदेवं न व्यवहिताप्रकाशकत्वानुमानं साधीयः । नापि बाह्येन्द्रियत्वानुमानम् । तत्रापि प्रतिपादितदोषाणा प्रायः प्रसर्प्पणात् ।

किं च किमिदं बाह्येन्द्रियत्वं चक्षुषः । किं बहिरर्थग्रहणाभिमुख्यं, बहिर्देशावस्थायित्व, बहिष्कारणप्रभवत्वं वा स्यात् । तत्र प्राचीनं चेतसा व्यभिचारि । तस्याप्राप्तसुपर्व्वपर्व्वतस्वर्गादिपरिच्छेदकत्वेऽपि बहिरर्थग्रहणाभिमुख्यतया बाह्येन्द्रियत्वात् । द्वितीयपक्षेऽप्यर्थदेशः शरीराद्बहिर्वा बहिर्देशो विवक्षितः । व्यवस्थायित्वमपि पौरस्त्यपक्षेऽर्थदेशाश्रितत्वमर्थाभिमुख्येन प्रवृत्तिर्वा स्यात् । आद्यपक्षे उभयासिद्धिः । चक्षुषो गोलकान्तर्देशसमाश्रितत्वेन वादिप्रतिवादिभ्यामभ्युपगतत्वात् । दृष्टा-

१ 'हि' इत्यधिक प. पुस्तके । २ न्या. क. पृ २३ पं. ७.

न्तश्च साधनविकल । त्वगिन्द्रियस्यार्थदेशानाश्रितत्वात् । द्वितीयपक्षेऽपि प्रवृत्तिरर्थाभिमुख्येन प्रसर्पणरूपो व्यापार प्रतीत्युत्पादकत्व वा । प्रथमे प्रतिवाद्यसिद्धि । न खलु प्रतिवादिना नयनरश्मयोऽर्थदेशेऽपसर्पन्त स्वीकृता । तेन नयनस्यातैजसत्वेन प्रतिपादनात् । तत्साधकस्य रूपाद्विषु नियमेनेत्यादिप्रमाणस्य प्राक्पराकृतत्वेन बाधकस्य चोपन्यस्तत्वे नोभयासिद्धिर्वा । साधनविकलतात्रापि दृष्टान्तस्य स्पष्टैव । अर्थाभिमुख्येन प्रतीत्युत्पादकत्व पुनर्मनसैवानैकान्तिकम् । अथ शरीराद्बहिर्देशे गोलकस्वरूपे समाश्रितत्व बहिर्देशावस्थायित्वम् । चेतसा च व्यभिचारोत्सारणाय बाह्येति विशेषणम् । तद्धि देहान्तर्देशसमाश्रितमिति । तदप्यचतुरम् । इन्द्रियबाह्यत्वस्याप्राप्तार्थपरिच्छेदेनापि साद्धमविरोधात् । न चाविरुद्ध विशेषण विपक्षेण ततो हेतु निवर्तयति । न च विरोधसाधनसावधान किञ्चिदिह प्रमाणमस्ति ।

अथ मनसि प्राप्तार्थपरिच्छेदव्यावृत्त्या बाह्येन्द्रियत्वस्यापि व्यावृत्ते विरोधसिद्धिरभिधीयते । नैवम् । क्वचित साध्यनिवृत्तौ साधननिवृत्तावपि विरोधस्यासिद्धे । अन्यथा चक्षुरप्राप्तार्थपरिच्छेदि स्पर्शनरसननासाश्रोत्रान्येन्द्रियत्वात् मनोवदित्यत्र कश्चिच्चक्षुषोऽप्राप्तार्थपरिच्छेद प्रसाधयन् कथ प्रतिरोत्स्यते । समस्ति ह्यत्राप्यप्राप्तार्थपरिच्छेदव्यावृत्त्या स्पर्शनरसननासाश्रोत्रान्येन्द्रियत्वस्यापि व्यावृत्ति स्पर्शनादाविति । तस्माद्व्यतिरेकानिश्चयात्संदिग्धव्यतिरेको हेतु । बहिष्कारणप्रभवत्वमपि मनसैव व्यभिचारि । आत्मापेक्षया हि बहिष्कारण पुद्गलतत्त्व तत्प्रभवत्व च चक्षुरादीन्द्रियवन्मनसोऽप्यस्त्येव । तस्यापि पौद्गलिकत्वेन षट्पदार्थपरीक्षाया समर्थयिष्यमाणत्वात् । चक्षु प्राप्यकारि भौतिकत्वादित्यत्रापि प्राप्यकारीति कोऽर्थ । प्राप्य सयुज्य स्वकार्य करोतीति चेत । ननु प्राप्तिरपि स्वकार्यं तदपि च प्राप्य करोत्यन्यथा वा । प्राप्य

१ 'मध्य' इत्यधिक प भ पुस्तकयो । २ च' इति नास्ति प भ पुस्तकयो । ३ इत्यन इति भ पुस्तके पाठ ।

चेत्, तर्हि सापि प्राप्तिः प्राप्यैव कर्त्तव्येति प्राप्तिपरम्परोत्पाद एवोपशान्तशक्तित्वात्प्रस्तुतकार्यानिष्पत्तेरनवस्था । अन्यथेति पक्षे त्वनयैव व्यभिचारः ।

अथ ज्ञानरूपकार्यापेक्षयैव चक्षुषः प्राप्यकारित्वसाधनान्नोक्तदोषानुषङ्गः । ननु कुत एतदाप्तमायुष्मता । प्राप्यकारीति शब्दस्य प्राप्तिपूर्वक्रियामात्राभिधानपर्यवसितत्वात् । न च शब्दान्तरमस्ति यत्सान्निधानादयं " देवस्य शृंगारिणः " इत्यादिवदभिमतार्थवृत्तिः स्यात् ।

अथ सैन्धवादिवत्प्रकरणवशादस्याभीष्टार्थनिष्ठाभिधीयते । तथाहि प्राप्य वा चक्षुर्ज्ञप्तिं कुर्यादप्राप्य वेत्यत्र प्रस्तावे प्रोच्यते चक्षुः प्राप्येत्यादि । तदपि नोपपन्नम् । एवं सति निदर्शनस्य साध्यशून्यतापत्तेः । परश्वधो हि पादपं प्राप्य द्वैधीभावमेव विधत्ते न तु ज्ञप्तिम् ।

अथाभिदध्यात्कश्चित्, स्वविषयज्ञप्तिकरणापेक्षया परशुर्निदर्शनमुपदर्शितो न च्छिदपेक्षया । तथा च न साध्यवैकल्यं दोषः । प्राप्यैवेन्द्रियं तेन ज्ञप्तिकरणादिति । सोऽपि नोपपन्नवक्ता । यतश्चाक्षुषीं स्पार्शनीं वा ज्ञप्तिमपेक्ष्य तेनैतदुच्येत । यदि पौरस्त्यम् । तदा सैव साध्यशून्यता निदर्शनस्य । चक्षुरर्थयोः प्राप्तेरद्याप्यसिद्धेः । अथ स्पार्शनीं तामपेक्षोच्यते । अस्त्वेवम् । किन्तु हेतोर्मरुणा मनःपरिच्छेद्येन व्यभिचारः । भौतिकेनापि तेन मनोऽप्राप्तेनैव स्वपरिच्छित्तिकरणात् ।

अथ करणभूतेन येन परिच्छित्तिर्जन्यते स एव प्राप्यकारीह सङ्गतो न विषयत्वेनापि । तर्हि दृष्टान्तान्तरं वक्तव्यम् । न प्रकृतम् । अस्तु प्रदीपादिरेवासौ तेन हि करणभूतेन रश्मिद्वारेण प्राप्त एवार्थः प्रकाश्यत इति चेत् । नैवम् । एवमपि हेतोः प्रतिबन्धानिश्चयात् । साधर्म्यमात्रेण तन्निश्चयायोगात् । अप्राप्यकारित्वमपि स्पृशतो भौतिकत्वस्य न किञ्चित्परिपन्थिप्रमाणमिति । एतेन कारकत्वादिति साधनं

---

१ 'निष्ठता' इति प. पुस्तके पाठ. । २ 'तथापि' इति प. भ. पुस्तकयोः पाठः ।

यत्केनचिदुच्यते । तदपि परास्तम् । अयस्कान्तेन च व्यभिचारात् । तेनाप्राप्तस्यैव लोहस्याकर्षणात् ।

- अथ तस्यापि प्राप्तस्यैवाकर्षणम् । अयस्कान्तो हि वायुद्वारेण तदा कर्षति यथा पुरुषो नालान्तर्वायुप्रयोगेण पानीयादि । संयुक्तसंयोगश्चात्र प्राप्तिः । तदसत् । वायोस्तत्राप्रमाणत्वात् । न तावत्प्रत्यक्षं तद्ग्राहकम् । अननुभवात् । अनुमानमपि नास्ति । समाकर्षणस्यान्यथानुपपत्तिरस्ति इति चेत्, न । अप्राप्तस्याप्याकर्षणोपपत्त्यास्या उपक्षीणत्वात् । अप्राप्तस्याप्याकर्षणे कथं न सकललोहाकर्षणम् । प्राप्तस्याप्याकर्षणे कथं न तद्देशवर्तितृणतूलादिसमाकर्षणम् । तस्यायोग्यत्वादिति चेत् । अनयैवोक्त्यामृतमास्वादय । सकललोहानामयोग्यत्वादप्राप्तत्वाविशेषेऽपि नाकर्षणं भवेदस्ति चेतसीति तुल्यम् । वायन्तरं प्रत्येतस्य योग्यतेति चेत्, किमेतदेवान्यत्रापि न पश्यसि । किं च कुतोऽयससमाकर्षणान्यथानुपपत्तिः । कारकत्वात्याद्धेतोरिति चेत् । अयमभिसन्धिः । सकलं कारकं प्राप्तं सत् वस्तुनि फलमुत्पादयत्यवलोकितं कारक एवायस्कान्त इति । तदसुन्दरम् । इतरेतराश्रयप्रसङ्गात् । कारकत्वस्य हेतुत्वसिद्धावयस्कान्तस्य प्राप्तायससमाकर्षणसिद्धिस्तत्सिद्धौ च कारकत्वस्य हेतुत्वसिद्धिरिति । यदि च वायुद्वारेण तदाकर्षणमुच्यते । तदा तिर्यगेव तदाकर्षणं भवेन्न पुनरूर्ध्वम् । वायोस्तिर्यक्पवनस्वभावत्वात् । वात्यादौ तु स्निग्धस्निग्धवायुद्वयसंयोगनिमित्तत्वेनोर्ध्वगतेर्भवद्भिरभ्युपस्थापितत्वात् । न चात्रापि तथाविधा कल्पना ज्यायसी । तथाननुभवात् । अनुमानबाधितं च तत्र वायुपरिकल्पनम् । तथा हि चुम्बको नायसो वायुद्वारेणाकर्षकस्तत्रावस्थितलघुतरतृणतूलाद्यनाकर्षणान्यथानुपपत्तेः । कथं च तिलकादिना कान्तादीनामाकर्षणम् । तत्रापि पवनोऽस्तीति महासाहसिकस्योल्लापः । न खलु यथा वात्यादिना परवशीभूता कान्ता समानीयते । तथात्रापि पवनविशेषेणेति प्रतीतिरस्तीति ।

---

१ 'च' इति प भ पुस्तकयोः पाठः ।

परेण भूधरशशधरयोर्युगपद्ग्रहणाभाव प्रदर्शितः तत्खण्डनम्।

यदप्यवादि प्रथमतो हि चक्षुः सन्निहितमित्यादि, यदपि च संसर्गिद्रव्यतया निःसरदेव नायनं तेजो बाह्यालोकेनैकतामितं युगपदेव तावदर्थः संसृष्टमिन्द्रियमुत्पादितवदिति भूधरशशधरयोस्तुल्यकालग्रहणमुपपद्यत इति केनचित् उच्यते तदपि चक्षुषो रश्मिवत्त्वपराकरणादपाकृतम्। उत्तरमते च पृष्ठस्थितस्य व्यवहितस्य चार्थस्योपलम्भः प्रसज्यते। अथानार्जवावस्थितस्य व्यवहितस्य कथं ग्रहणमस्तु। मैवम्। आर्जवावस्थितस्य व्यवधानाश्रयणस्येन्द्रियप्राप्त्यर्थत्वात्तस्याश्च तथास्थितेऽप्यर्थे सञ्जातत्वात्।

चक्षुषः प्राप्यकारित्वे संशयविपर्यययोरनुत्पत्तिप्रसजनम्।

यदि च चक्षुः प्राप्यकारि। तदा कथं संशयविपर्ययप्रादुर्भावः। सामान्यवद्विशेषाणामपि सन्निकृष्टानामुपलम्भसम्भवात्। तथा च कथं विशेषानुपलब्धिनिबन्धनौ संशयविपर्ययौ स्याताम्। यत्पुनरात्रेयभाष्यकारः प्राह।

"यथा सामान्यस्य विशेषाणां च प्रदीपालोकेन सन्निकृष्टत्वेन दूरात्सामान्यमुपलभ्यते न विशेषा इति प्रदीपालोककारितौ संशयविपर्ययौ भवतः तथा सामान्यस्य विशेषाणां च चक्षुषा सन्निकृष्टत्वेऽपि दूरात्सामान्यमुपलभ्यते न विशेषा इति चाक्षुषौ संशयविपर्ययौ भवतः। तत्र महाविषयत्वात्सामान्यं दूरादप्युपलभ्यतेऽल्पविषयत्वात्तु विशेषा न दूरादुपलभ्यन्त इति संशयविपर्यययोरुपपत्तिः" इति। तदपि न क्षोदक्षमम्। महाविषयत्वस्योपलम्भं प्रत्यप्रयोजकत्वात्। न खलूपलभ्यमानादितरे विषयाः कणिकयापि तत्सामान्यग्रहणावुपयुज्यन्ते। यतस्तद्भूयस्त्वं दूरात्तत्स्थसामान्योपलब्धौ निमित्तं स्यात्। यस्तु प्रदीपो दृष्टान्ततयोपदिष्टः सोऽपि न श्रेष्ठः। येन हि सन्निकर्ष उपलम्भकारणतया कथ्यते तस्य प्रदीपेऽपि सामान्यवद्विशेषाणामुपलम्भकत्वप्रसक्ति-

दुर्निवारा । अस्माभिस्तु प्रदीप एवोपलम्भ प्रति निमित्तमुच्यते । स च स्वयोग्यतावशेन दूरात्सामान्यमेवोपलम्भयतीति युक्तम् । तद्वदेव यदि चक्षुषोऽपि योग्यता स्वीक्रियते कृत सन्निकर्षेण । सन्निकर्षाभावे योग्यमपि कथमुपलम्भ करोति चक्षु । न हि योग्योऽपि प्रदीपोऽप्राप्त पटादि प्रकटयतीति चेत्, ननु कुत एतत् । तस्य व्यवहिताप्रकाशकत्वादिति चेत् । न । अस्य निराकृतत्वात् । अनुमानबाधित च चक्षुष प्राप्तार्थप्रकाशनम् । तथा हि चक्षुरप्राप्तार्थप्रकाशक व्यवहितस्यापि प्रकाशकत्वात् यत्तु नैव न तदेव यथा श्रोत्र तथा चेद ततस्तथा । प्रमाधिन च काचाद्यन्तरितस्यापि चक्षुष प्रकाशकत्वमिति न साधनासिद्धि ।

योग शाम्यतु तवैष दोहद प्राप्यकारिणि तदीक्षणे क्षणात् ॥
हन्त यत्किमपि कर्कगोचरे कीलिता सकलयुक्तिमण्डली ॥ ३१८ ॥

श्रावणस्याप्राप्यकारित्वमिति स्वीकुर्वता बौद्धस्य मतमुपपाद्य तन्निरसनम् ।

दर्पाध्मात शाक्यसिंहस्य शिष्यो
जल्पत्येव प्रस्तुतार्थोपघाति ॥
दृष्टान्तत्व नेत्र कर्णेन्द्रियस्या
भाति न्यायोपेतमुक्तप्रयोगे ॥ ३१९ ॥

तथा हि चक्षुषोऽप्राप्तार्थप्रकाशकत्वे साध्ये श्रवणेन्द्रियस्य विपक्षताऽनुपपत्ता । चक्षुष इव तस्याप्यप्राप्तार्थप्रकाशकत्वात् । "चक्षु श्रोत्रमनसामप्राप्तार्थप्रकाशकत्वम्" इत्यभिधानात् । प्राप्यकारित्वे च श्रोत्रस्य तद्गोचरे शब्दे दूरादिव्यवहारो न स्यात् । अस्ति चायाय दूरे शब्दो निकटे शब्द श्रूयत इति प्रतीति । अतोऽप्राप्यकारित्वमेवास्योपपन्नम् । तथा च प्रयोग । यो दूरादिप्रत्ययग्राह्य स स्वग्राहकेणासन्निकृष्ट एव गृह्यते यथा तथाविधशब्दो दूरादिप्रत्ययग्राह्यश्च शब्द इति । न चासन्निकृष्टस्य शब्दस्य ग्रहणे कथ तत्र श्रोत्राभिघात इत्यभिधानयम् । भासुररूपस्यासन्निकृष्टस्य ग्रहणेऽप्यतश्चक्षुषोऽभिघातोपलम्भात् । इयांस्तु विशेषोऽत्र तेजस्विताऽभिघातहेतु । शब्दे तु तीव्रतेति ।

एवमप्राप्यकारित्वं श्रवणस्य स्थितं ततः ॥
वैधर्म्येणास्य नो युक्तं दृष्टान्तत्वप्रदर्शनम् ॥ ३२० ॥

प्रामाणिकेषु प्रवरस्त्वमेव त्वमेव नाथागत वावदूक ॥
सखे यदेतां जगतोऽप्यपूर्वां प्रमेयमुद्रां प्रकटीकरोषि ॥ ३२१ ॥

तत्र यदुक्तमनुमानं यो दूरादिप्रत्ययग्राह्य इत्यादि । तत्र शब्दः स्वग्राहकेणासन्निकृष्ट एव गृह्यत इत्येवंविधस्य गम्यमानपक्षस्य प्रत्यक्षबाधा । कर्णशतप्रविष्टस्य मशकादिशब्दस्य सन्निकृष्टस्यैव प्रत्यक्षेण प्रतीतेः । दूरादिप्रत्ययग्राह्यत्वलक्षणो हेतुश्च गन्धेनानैकान्तिकः । तस्य स्वग्राहकेण सन्निकृष्टस्य ग्रहणेऽपि दूरादिप्रत्ययग्राह्यत्वप्रतीतेः । न च तथा प्रतीयमाने गन्धे दूरनिकटादिव्यवहारोऽसिद्धः । यतः

दूरादुच्छृङ्खलोऽयं बहुलपरिमलः काममभ्येति भूयान्
गन्धोद्गारातिरेकं किमपि जलरुहां जृम्भतेऽसौ समीपे ॥
मध्यस्थाः प्रोद्वमन्ति प्रकृतिसुरभयः सौरभं सत्कदम्बाः
सुव्यक्तेयं प्रतीतिर्निखिलतनुभृतां निर्विवादा समस्ति ॥ ३२२ ॥

किं च दूरादिप्रत्ययग्राह्यत्वं शब्दे साकारज्ञानवादिनः सौगतस्यानुपपन्नम् । श्रावणज्ञानेन स्वगते शब्दाकारे गृह्यमाणे दूरनिकटादिव्यवहारस्यायुज्यमानत्वात् । निराकारं हि यस्य ज्ञानं भिन्नदेशमर्थं परिच्छिनत्ति तस्येदं दूरमिदं निकटमिति वक्तुमुचितम् । साकारज्ञानवादिनः पुनर्यद्दूरादि न तज्ज्ञानवेद्यमवेद्ये च न दूरादिव्यवहारो युक्तः । न हि नष्टनयनस्येदं दूरमिदं निकटं चेति व्यवहारस्तात्त्विकोऽस्ति । यच्च वेद्यं ज्ञानस्य स्वाकारमात्रं न तद्दूरादिस्वरूपम् । ज्ञानस्वरूपादभिन्नत्वात् ।

अथाकारधायकस्य दूरादित्वाद्दूरादिव्यवहारः तर्हि व्यर्थः श्रोत्रस्याप्राप्यकारित्वसाधनप्रयासः । श्रोत्रेण सन्निकृष्टस्यापि शब्दस्य ग्रहणे

तत्र दूरादिव्यवहारस्य दूरादिदेशादागतत्वेनोपपद्यमानत्वात्। दृश्यते हि गन्धस्य घ्राणेन्द्रियेण सन्निकृष्टस्यापि घ्राणे दूरादिदेशादागतत्वेन दूरे वकुलपरिमल इत्यादिव्यवहारः।

अथ यदि देशापेक्षया शब्दस्य दूरादित्वं तत्किं देशस्याग्रहणे स्याद्ग्रहणे वा। न तावदग्रहणे। देशस्य विशेषणत्वात्। यत्खलु विशेषणं तद्गृहीतमेव विशेष्ये विशिष्टप्रतीतिनिबन्धनम्। यथा दण्डादि। विशेषणं च शब्दस्य दूरादिप्रतीतौ देश इति। नापि ग्रहणे। यतः कथं तद्ग्रहणं श्रोत्रेण चक्षुरादिना वा। यदि श्रोत्रेण, तदा देशस्यापि शब्दत्वमसङ्गः। श्रोत्रग्रहणलक्षणत्वात्तस्य। चक्षुरादिना तु तद्ग्रहणं न सर्वत्र सम्भवती। व्यवहितदेशस्यापि शब्दस्य श्रूयमाणत्वात्। तदखिलमफलम्। अव्यवहितदेशसमुद्भवे ध्वनौ देशस्य चाक्षुषप्रत्यक्षेण लक्ष्यमाणत्वात्। इतरस्मिंस्तु तस्मिन् आनुमानिकी देशप्रतिपत्तिः। तथाहि यावतो दूरादन्यक्षागमोपलब्धकारणव्यापारभाजिनि शब्दस्य समागतस्य यान्विशेषानुपलब्धवांस्तानदृष्टकारणस्यापि शब्दस्य विशेषानुपलभमानस्तावति दूरे शब्दोत्पादं प्रतिपद्यते। यथा कैश्चिदेव विशेषैः शङ्खादिकं च वक्तृविशेषं च प्रतिपद्यते। यस्तु तथाभूतान्विशेषान्न लक्षयति तस्य संशय एव दृश्यते। कस्य कुतो वायं शब्द इति। देशविशेषे चानुमिते ग्रामादिकं सम्भाव्य तत्र शब्दोत्पादं व्यपदिशति।

भवतापि यद्येवं नोपेयते। तदा कुतस्तत्र प्रतीयमाने दूरादिताप्रतीतिः। किं स्वभावत एवास्य दूरादित्वाद्दूरादिकारणप्रभवत्वात् दूरादिदेशे स्थितत्वाद्वा। न तावदाद्यः पक्षः, प्रतिनियतदूरनिकटादिव्यवहाराभावप्रसङ्गात्। दूरादिकारणप्रभवत्वेन चास्य दूरादिव्यवहारहेतो नैव दृश्यस्थलस्थितमुक्ताफलकलापे प्रेक्ष्यमाणे दूरत्वव्यवहारः स्यात्।

१ घ इति भ पुस्तके नास्ति।

तत्कारणस्य पारावारकुहरसञ्चारिशुक्तिसम्पुटादेर्दूरत्वात् । निकटकारणकुट्टम्बघटितस्य घटादेर्दूरं नीतस्य दूरतया प्रतीतिश्च न स्यात् । दूरदेशस्थितत्वादेव तस्य तु दूरादित्वे स्वोत्पत्तिदेशस्था एव शब्दाः श्रोत्रैर्गृह्यन्ते नत्वागता इत्यभ्युपगन्तव्यं स्यात् । तथा च निर्वाते दूरस्थेन मनागपि न श्रूयते यः शब्दस्सोऽनुकूलवाते कथं श्रूयेत । यश्चासन्नेन प्रमात्रा श्रूयते स एव प्रतिवाते कस्मान्न श्रूयते । प्रतिवातेन श्रोत्राभिघाताच्छब्दस्य नाशितत्वाद्वा । यदि श्रोत्राभिघातात, तर्हि निर्वातप्रदेशस्थेन दूरादपि श्रूयेत । प्रतिवाताभावेन तच्छ्रोत्रस्यानभिघातात् । शब्दस्य नाशितत्वे तु यस्याप्यसौ वातोऽनुकूलस्तेनापि न श्रूयेत । नाशितत्वाविशेषात् ।

अथ च

मुरजमधुरध्वानाधीनं विकस्वरवल्लकी
क्षणितकलित तालैस्तारन्तराङ्कितपञ्चमम् ॥
स्थितवति जनस्पन्दे मन्देऽनुकूलसमीरणे
विलसति तथा दूराद्गीतं निशासु निशम्यते ॥ २२२ ॥

दूरदेशवर्तिप्रमातारं प्रति तेनास्य प्रेरणे तु तच्छ्रोत्रेण प्राप्तोऽसौ गृह्यते इति सिद्धमस्य प्राप्यकारित्वम् । अन्यच्च यदि स्वोत्पत्तिदेश एव सर्वे शब्दाः प्रलयभाजः । कथ तर्हि नलिकाशब्दस्य भेर्यादिशब्दस्य वा कर्णशष्कुलीगृहादिप्रपूरणेन प्रतिपत्तिः स्यात् । कथं वा धवलगृहादौ प्रतिशब्दप्रादुर्भावः । न हि लोष्टादयः कांस्यपात्रादिभिरसंसृष्टाः शब्दमुपजनयन्त प्रतीयन्ते । यदि स्वोत्पत्तिदेशस्था एव शब्दाः श्रोत्रेण गृह्यन्ते । तदा तत्रस्थैर्भेर्यादिशब्दैर्महद्भिरल्पीयसोऽपि मशकादिशब्दस्यानभिभवादनाकुलमिव ग्रहणं स्यात् । तथा च प्रयोगः । ये स्वोत्पत्तिदेशस्था एवेन्द्रियेणासन्निकृष्टा गृह्यन्ते न तेषु महद्भिरल्पीयसामभिभवो यथा पर्वतेन पादपादीनाम् । स्वोत्पत्तिदेशस्था एवेन्द्रियेणासन्निकृष्टा गृह्यन्ते च शब्दा इति ।

ननु दूरदेशवर्त्तिना प्रमातणा पवत पादपादीनभिभूयात्मानमेवोपदर्शयत्यत साध्यविकलो दृष्टान्त इति चेत्। तन्न सुन्दरम्। यतस्तेषां देशविप्रकृष्टतया तद्ग्रहणयोग्यत्वाभावादप्रतिभासो नाभिभवात्। मशकादिशब्दाना त्वविप्रकृष्टानामपि भेर्यादिशब्दैरभिभव समस्ति ततो न तेषा म्वोत्पत्तिदेशस्थानामेव ग्रहणम्। यदपि प्रतिपाद्यते तच्छब्दत श्रोत्राभिघातात्तेषामग्रहण यथा भासुररूपेण चक्षुषोऽभिघातात्सूक्ष्माग्रहणमिति। तदप्यसम्बद्धम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तिग्मरश्मिमरीचयो हि मुकुरादेर्भासुररूपात्प्रतिनिवृत्य चक्षुषाभिसम्बध्यमानास्तस्याभिघातहेतवो दृष्टा अतीनालोके तदभिघाताद्दृष्टे। न चात्र तथाविध किञ्चिदस्ति यच्छब्दात् प्रतिनिवृत्य श्रोत्राभिघातकारण भवेत्। वायु स्यादिति चेत्। निर्वाते तर्हि न स्यात्तदश्रवणम्। श्रोत्राभिघातकारणाभावात्। दृश्यते च निवातेऽपि भेर्यादिकोलाहले सत्यल्पीयसो मशकादिशब्दस्याग्रहणम्। अतोऽन्योन्यप्रदेशोपसर्प्पणेनानल्पैरल्पशब्दानामभिभवोऽभ्युपगन्तव्य। तथा च दूरादिदेशादागतत्वा देनास्य गन्धादिवद्दूरादित्व ततोऽपि च श्रोत्रस्य प्राप्यकारित्व सिद्धम्।

यदि चाप्याप्राप्यकारित्व सिद्ध स्यात्तदा रूप इव तद्विषये देशादिसन्देहो न स्यात्। यथैव हि रूपे प्रतीयमाने किमस्मिन् देशे रूपमेतत्प्रतिभात्यन्यस्मिन् वाऽन्या दिश्यन्यस्या वेति न सन्देहो नियतदिग्देशतयैवाप्याप्राप्यकारिणेन्द्रियेण प्रतिपत्तिसम्भवात्तथात्राप्यसा न स्यात्। अस्ति चाय किमन्तर्गतोऽय शब्दो बहिर्वा प्राच्या दिश्यन्यस्या वेति। अथ चक्षुषा प्रेक्ष्यमाणे वस्तुनि देशस्यापि तेनैव प्रतीतेषु रूपस्तत्र तदपेक्षयापि देशाद्यसन्देह। शब्दे तु नैवम्। श्रवणेन देशाप्रतीते। तर्हि योऽपि क्वचित्तत्सन्देह सोऽपि न स्यात्। तत्रापि श्रोत्रेण देशाग्रहणात्। अथ चक्षुषा तद्ग्रहण भविष्यति। कुड्यादिव्यवहितदेशसमुद्भवशब्दे किं त्वीपि। अनुमानेनास्त्येव तत्रापि

१ अभाव ' इति नास्ति प भ पुस्तकयो।

देशप्रतीतिरिति चेत् । किं तदनुमानम् । शब्दविशिष्टतेति चेत् न । स्वस्थानस्थस्य शब्दस्य ग्रहणे दूरनिकटवर्तिप्रमातृन्प्रति विशेषाभावात् । येषां तु शब्दस्यागतस्य ग्रहणं तेषां तस्य मन्दमन्दतरादिशब्दपर्याय-परम्परोत्पत्त्या युक्तं विशिष्टत्वं ततोऽपि देशानुमानमिति ।

तस्मादेव प्राप्यकारि प्रसिद्धं श्रोत्रं प्रोक्तन्यायतः स्पष्टमेव ॥
दृष्टान्तत्वं युक्तमेतस्य तस्माद्धर्म्येण व्याहृतं वाक्प्रयोगे ॥ २२४ ॥

शब्दागमनमनङ्गमानभाट्टपूर्वपक्षस्य उद्भाव्य खण्डनम् ।

भाट्टस्तु समाचष्टे । प्रियं नः प्राप्यकारित्वप्रसाधनं श्रोत्रे, यत्पुनरनेनागतस्य शब्दस्य श्रवणं स पायसदात्रे पिचुमन्दकन्दलक्षोदक्षेपः । विशालशिलासंघातघटितभित्तिभागान्तरितस्य शब्दस्यागमनासम्भवेनाश्रवणप्रसङ्गात् । तदस्य श्रोत्रियस्यानुवेलजलसम्पर्कं प्रकटयति । एवंविधस्य गन्धस्याप्यनाघ्राणप्रसङ्गात् । अथ सूक्ष्माः कतिपयेऽपि गन्धपरमाणवः कुड्यादिकं भित्त्वा घ्राणेन सम्बद्धास्तेन गृह्यन्ते । तर्हि तथाविधा एव शब्दपरमाणवोऽपि श्रोत्रेण गृह्यताम् । न च तत्परमाणवोऽसिद्धाः । पौद्गलिकत्वेन तस्य तत्सिद्धेः । न च पौद्गलिकत्वमप्यसिद्धम् । पुद्गलपरिणामः शब्दो बाह्येन्द्रियगोचरत्वाद्गन्धवदित्यतस्तत्सिद्धेः ।

शब्दस्य पौद्गलिकत्वमसहमानजयन्तमतस्य खण्डनम् ।

यत्तूच्यते जयन्तेन, 'वर्णस्यावयवाः सन्ति सूक्ष्माः केच न पुद्गलाः ॥ तैर्वर्णावयवा नाम जन्यन्ते पश्य कौतुकम् ॥ १ ॥ तेषामदृश्यमानानां कीदृक्च रचनाक्रमः ॥ केन तत्सन्निवेशेन कः शब्द उपजायते ॥ २ ॥ लघवोऽवयवाश्चैते निबद्धाश्च न केनचित् ॥ न पीनकठिनं कर्तुं यत्नाद्भयपिनं क्षमाः ॥ ३ ॥ कुतश्च गच्छन्स कथं न विक्षिप्येत मारुतैः । दलशो वा न भज्येत वृक्षाद्यभिहतः कथम् ॥ ४ ॥ प्रयाणकावधिः कश्च गच्छतोऽस्य तपस्विनः ॥

१ न्या म पृ २१५ प २५

एकश्रोत्रप्रदृष्टो वा स गृह्यता परै कथम् ॥ ५ ॥ निष्क्रम्य कर्णादेकस्मात्प्रवेशः श्रवणान्तरे ॥ यदीष्येत कथ तस्य युगपद्बहुभि श्रुति ॥ ६ ॥ श्रोतृसख्यानुसारेण न नानावर्णसम्भव ॥ वक्तुस्तुल्यप्रयत्नत्वाच्छ्रोतृभेदतदैक्ययो ॥ ७ ॥" इति ।

तदपि नोपपन्नम् । नासिकाशुषिरनिविशमानसूक्ष्मगन्धाधारद्रव्येऽप्यस्य सकलस्य समानत्वात् । किञ्च कुतस्ते सूक्ष्मवर्णावयवेष्व रुचि । न तावद्वर्णाना त्वयापि नित्यत्वमुपेतम् । गुणत्व तु तेषा प्रतिपेत्स्यते । यथा कार्यानुपपत्त्या सूक्ष्माणामपि परमाणूना कल्पना तथा वर्णावयवानामपि । रचनाक्रमसन्निवेशावपि तादृशावस्य यादृग्भ्या श्रूयते । यथा पवनस्य तौ यादृशाभ्या स्पृश्यते । तथा " यदि स्यान्निश्चित कार्यं कृत कारणचिन्तया ॥ अथाप्यनिश्चित कार्यं कृत कारणचिन्तया ॥१॥" निविडा चामीषा लघूनामपि पुरुष एव । यथोड्वासावयवानाम् । विक्षिप्यते चासौ मारुतै । अत एव प्रतिवाते निकटस्थैरपि न श्रूयते । मन्यते चासौ वृक्षाद्यभिहत । अत एव घनवनव्यवहितैरन्यवर्णसाधारण वर्णशकलमेव श्रूयते । यत सशयो जायते कोऽनेनोक्तो वर्ण इति । प्रयाणकावधिरप्यस्य य कश्चिदिषस्य शरादे । कोऽन्योवधिस्तवापि शब्दोत्पादसन्तानविरमणस्य । युगपद्बहुमातृश्रवणाभावादिक दूषण स्वपक्षेऽपि तुल्य नास्मास्वेव प्रति-प्रयोक्तुमर्हसि ।

प्रमेयविधुरा यस्य वचोरचनचातुरी ॥
जयन्तस्य जय तस्य तर्कयाम कुतो वयम् ॥ ३२५ ॥
विस्तरेण च वक्ष्याम पुरा पौद्गलिक ध्वनिम् ॥
एव स्थिते पुन प्राह भट्टदर्शनलम्पट ॥ ३२६ ॥



१ न्यायमञ्जरी पृ २१५

मूर्ताः श्रावणस्वभावाः स्कन्धाः कुड्यादिना मूर्तिमता कथं प्रतिहन्यन्त इति शब्द-पूर्वपक्षस्य निरासः ।

कथं मूर्ताः स्कन्धाः श्रावणस्वभावाः कुड्यादिना मूर्तिमता प्रतिहन्यन्त इति चेत् । तत्रापि वायवीया ध्वन शब्दाभिव्यञ्जकाः कथं तेन न प्रतिहन्य इति समानम् । अथ तत्प्रतिघाते तत्र शब्द स्याभिव्यक्तेरयोगादनभिव्यक्तस्य च श्रवण सम्भवात्प्रतिघातस्तेषां कुड्यादिना सिद्ध इति चेत् । तत एव शब्द त्मना पुद्गलानामप्रतिघातोऽस्तु, दृष्टहानिपरिहारात् । दृष्टो हि गन्धात्मक पुद्गलानामप्रतिघातस्तद्वच्छब्दाना न विरुध्यते । यदि पुनरमूर्त सर्वगतस्य च शब्दस्य परिकल्पनात्तद्व्यञ्जकानामेवाप्रतिघाताच्छ्रव मित्यभिनिवेशः । तदा गन्धस्यामूर्तस्य सर्वगतस्य कस्तूरिकाद्र विशेषसंयोगजनिता वायवो व्यञ्जका मूर्तद्रव्यान्तरेणाप्रतिहतास्तद घ्राणहेतव इति कल्पनानुपपद्यमाना कथं निवारणीया । गन्धस्यैव पृ वीगुणत्वविरोध इति चेत् । शब्दस्यापि पुद्गलगुणत्वविरोधस्तथास्तु परैः शब्दस्य द्रव्यान्तरत्वेनाभ्युपगमाददोष इति चेत् । तथा गन द्रव्यान्तरमभ्युपगम्यताम् । प्रमाणबलायातस्य परिहर्तुमशक्तेः । स्पर्श दीनामप्येवं द्रव्यत्वप्रसङ्ग इति चेत् । तान्यपि द्रव्यान्तराणि सन्तु निर्गुणत्वात्तेषामद्रव्यत्वमिति चेत् । तत एव शब्दस्य द्रव्यत्वं माभूत महत्त्वादिगुणाश्रयत्वाच्छब्दो द्रव्यमिति चेत् । तत एव गन्धस्पर्श दीना द्रव्यत्वमस्तु । तेषूपचरिता महत्त्वादय इति चेत्, शब्देऽप्यु चरिताः सन्तु । कुतः शब्दे तदुपचार इति चेत्, गन्धादिषु कुतः स्वाश्रयमहत्त्वादिसम्भवादिति चेत्, तत एव शब्देऽप्यस्तु । मुख्य महत्त्वादेरसम्भवः शब्दे किमवगतः, त्वयापि गन्धादौ स किमु निश्चित गन्धादयो न मुख्यमहत्त्वाद्युपेताः शश्वदस्वतन्त्रत्वादभाववदित्यतो नुमानादसम्भवो निश्चित एवेति चेत्, तत एव शब्देऽपि स निश्ची ताम् । शब्दे तदसिद्धेर्न तन्निश्चयः । सर्वदा तस्य स्वतन्त्रस्योपलब्धेरि

१ 'गन्धोऽपि' इति भ. पुस्तके पाठः ।

चेत्, गन्धादावपि तत एव तदसिद्धे कुतस्तन्निश्चय । तस्य क्षित्यादिद्रव्यतन्त्रत्वेन प्रतीतेरस्वतन्त्रत्वसिद्धिरिति चेत्, शब्दस्यापि वक्त्रादिद्रव्यतन्त्रस्योपलब्धेरस्वतन्त्रत्वसिद्धिरस्तु । वक्त्रादे शब्दाभिव्यञ्जकध्वनिष्वेव कारणत्वान्न शब्दस्य तत्परतन्त्रत्वोपलब्धिरिति चेत्, तर्हि क्षित्यादिद्रव्यस्यापि गन्धादिव्यञ्जकवायुविशेषेष्वेव कारणत्वान्न गन्धादेस्तत्परतन्त्रत्वोपपत्ति । शब्दस्य वक्तुरन्यत्रोपलब्धेर्न परतन्त्रत्व सर्वत्रेति चेत्, गन्धाश्रयद्रव्यस्य किं न स्यात् । सूक्ष्मत्वादिति चेत्, तत एव शब्दाश्रयद्रव्यस्यापि न चक्षुपोपलब्धिरिति सर्वं सम पश्याम ।

ततो यदि गन्धादीना शश्वदस्वतन्त्रत्वान्महत्त्वाद्युपेतत्वाभावान्मुख्यतो न द्रव्यत्व तदा शब्दस्यापि न तत् । ननु च शब्दस्याद्रव्यत्वेऽप्यसर्वगतद्रव्याश्रयत्वे कथ सकृत्सर्वत्रोपलम्भ । यथा गन्धादे समानपरिणामभृता पुद्गलाना स्वकारणवशात्सम ततो विसर्पणात् । तन्वेव प्रतिनिधिभूतो गन्ध एव ध्वनौ पराकरिष्यति तीर्थनिकुरम्बोदीरितदुरारेकानिकरमिति किमस्माकमायासेन ।

वक्तृवक्त्रकुहराद्विनिर्गत श्रूयते श्रुतिमुपागतस्तत ॥
गन्धवद्ध्वनिरतश्च मुच्यता श्रोत्रिय स्वमतसाधनत्वरा ॥ ३२७ ॥

नैयायिकगृहाधीत तत्प्रत्यक्षस्य लक्षणम् ॥
अव्याप्तिदोषदुष्टत्वादव्यवस्थितमलक्षणम् ॥ ३२८ ॥

यदपि "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणा बुद्धिजन्म तत्प्रत्यक्षम्" इति मीमांसकै प्रत्यक्षलक्षणमाम्नायते । तदपि तेषाममीमांसकत्वमेव सूचयति । अतिव्याप्तिदोषानतिक्रमात् । तथा हीन्द्रियाणा सम्प्रयोगे सति पुरुषस्य जायमाना बुद्धि प्रत्यक्षमिति

सत्सम्प्रयोगेपुरुषस्ये त्यादिमीमांसकोक्त प्रत्यक्षलक्षणस्य निरास ।

सूत्रार्थ । तत्र चातिव्याप्ति । सशयविपर्ययबुद्ध्योरपीन्द्रियसम्प्रयोगजन्यत्वेन प्रत्यक्षत्वप्रसक्ते । अथ सत्सम्प्रयोग इति सता विद्यमानेन सम्प्रयोग इत्येव व्याख्यायते । तथापि कथ सशयविपर्यययोर्व्युदास । तत्रापि

विद्यमानेन केनाप्यर्थेन सम्प्रयोगस्य सम्भवात् । न खलु संशयविपर्ययावपि सर्वथार्थनिरपेक्षजन्मानौ सम्भवतः । निरालम्बनस्य कस्यचित्संवेदनस्यासम्भवादिति ख्यातिविचारावसरे व्यवस्थापितमेव ।

अथ सति सम्प्रयोग इति सत्सप्तमीपक्ष एव न त्यज्यते । संशयविपर्ययव्यवच्छेदी च सम्प्रयोग इत्यत्र सम्यगर्थः समुपसर्गो वर्ण्यते । तदुक्तम् " सम्यगर्थे च संशब्दो दुःप्रयोगनिवारणः ॥ दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ॥ १ ॥ " इति नन्वेवमपि प्रयोगसम्यक्त्वस्यातीन्द्रियत्वेन प्रत्यक्षानवसेयत्वात्कार्यतो निश्चितिर्वाच्या । कार्यं च ज्ञानं तच्च नाविशेषितमेव प्रयोगसम्यक्त्वमवबोधयति । न च ज्ञानविशेषणपरं किञ्चिदपि पदमत्रावलोकयामः । लोकव्यवहारत एव कार्यविशेषनिश्चयात् प्रयोगसम्यक्त्वमवभोत्स्यामहे इति चेत् । तर्हि लोकव्यवहारत एव प्रत्यक्षस्यापि सिद्धत्वात् किं तल्लक्षणव्याख्यानेन । यदपि शबरस्वामिना व्याख्यायते 'यद्व्यभिचरति न तत्प्रत्यक्षं यत्प्रत्यक्षं न तद्व्यभिचारि तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षं यद्विषयं ज्ञानं तेन सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म तत्प्रत्यक्षं यदन्यविषयं ज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षम् ' इत्येवं तत्सतोर्व्यत्ययेन लक्षणमनपवादमवकल्प्यते इति । तदपि नोपपत्तिमियर्त्ति । संशयज्ञानेन व्यभिचारानतिवृत्तेः । तत्र हि यद्विषयं ज्ञानं तेन सम्प्रयोग इन्द्रियाणामस्त्येव । ननूभयविषयं संशयज्ञानं न चोभाभ्यां सम्प्रयुक्तमिन्द्रियमिति चेत् । तदप्यसत् । न हि धवखदिराविव द्वावपि पदार्थौ सिद्धतया संशयज्ञाने प्रतिभासेते । किन्तु स्थाणुर्वा स्यात्पुरुषो वेति अनिर्द्धारितौ तौ । नूनं च तयोरन्यतरेणेन्द्रियं सयुक्तमेवेति उभयावमर्शितत्वाच्च संशयस्य येन सम्प्रयुक्तमिन्द्रियं तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिः परिहृता भवतीति ।

इत्थं न युक्तिमनुगच्छति जैमिनी-
यमध्यक्षलक्षणमिदं परितर्क्यमानम् ॥
सांख्यादिकल्पितमदः पुनरक्षवृत्ति-
मुख्यं तिरस्कृतमिहादित एव युक्त्या ॥ ३२९ ॥

१ मी. श्लो. वा. प्र. ५ सू ४ श्लो. ३८।३९.

तथा हि श्रोत्रादिवृत्ति प्रत्यक्षमिति सांख्या प्रत्यक्षलक्षणमाचक्षते ।

सांख्याद्युक्तप्रत्यक्षलक्षणस्य खण्डनम् ।

एतच्च प्रमाणसामान्यलक्षणसूत्रे ज्ञानग्रहणेन तदुक्तबुद्धिवृत्त्यास्यप्रमाणसामान्यलक्षणान्तर्गत यथाऽशान्त तथा प्रागेव निरचायि । प्रत्यक्ष कल्पनापोढमिति प्रत्यक्षलक्षण ताथागता कथयन्ति । एतदपि तत्रैव व्यवसायिग्रहणेन यथा पराकृत तथा व्यावर्णित प्रपञ्चेनेति ।

स्पष्ट प्रत्यक्षमित्येतत्प्रत्यक्षस्यात्र लक्षणम् ॥
विक्षिप्तप्रतिपक्ष तल्लक्षयन्तु विचक्षणा ॥ २३० ॥ ३ ॥

अथ प्रत्यक्षस्य भेदप्रकाशनायाह—

## तद् द्विप्रकार सांव्यवहारिक पारमार्थिक च ॥४॥

तत्स्पष्टत्वलक्षणलक्षित प्रत्यक्ष द्विप्रकारम् । प्रकारावेवोल्लिखन्नाह सांव्यवहारिक पारमार्थिक चेति । समीचीनो बाधारहितो व्यवहार प्रवृत्तिनिवृत्तिलक्षणस्तत्र भव सप्रयोजनमस्येति वा सांव्यवहारिकम् । बाह्येन्द्रियादिसामग्रीसापेक्षत्वादपारमार्थिकमस्मदादिप्रत्यक्षमित्यर्थ । तद्धीन्द्रियानिन्द्रियव्यवहिताऽऽत्मव्यापारसम्पाद्यत्वात्परमार्थत परोक्षमेव । धूमाग्निज्ञानवत् व्यवधानाविशेषादिति । तथा पारमार्थिक मुख्यम् । आत्मसंनिधिमात्रापेक्षितत्वाद्वक्ष्यमाणमवध्यादिप्रत्यक्षमित्यर्थ । तत्खलु स्वात्मन साक्षाद्व्यापारमेवापेक्षते । न पुन सांव्यवहारिकप्रत्यक्षमिवेन्द्रियादिव्यापारमपीति भाव ॥ ४ ॥

अथ सांव्यवहारिकस्य भेदप्रदर्शनायाह—

## ॥ तत्राद्य द्विविधमिन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं च ॥ ५ ॥

---

१ तत्र कल्पनापोढमभ्रान्त प्रत्यक्षम् इति न्यायबिन्दु प १ सू ४ २ भद इति म पुस्तके नास्ति ।

कर्म् । धनसारादिना हेतोर्व्यभिचारात् । स हि सलिलादौ रूपादिषु शीतस्पर्शस्यैवाभिव्यञ्जको न च वायव्य इति । शब्दः स्वसमानजातीयविशेषगुणवतेत्याद्यपि स्वप्रक्रियोपदर्शनमात्रम् । शब्देऽम्बरगुणत्वस्य प्रतिषेत्स्यमानत्वात् । ततो नेन्द्रियाणां प्रतिनियतभूतकार्यत्वं कुतोऽपि प्रमाणात्सिद्ध्यतीति स्थितम् ॥

साङ्ख्योपकल्पितस्येन्द्रियाणां मनसश्चाहङ्कारिकत्वस्य खण्डनम् ।

आहङ्कारिकत्वमपीन्द्रियाणां साङ्ख्योपकल्पितं नोपपद्यते । तथा हि नाहङ्कारिकाणीन्द्रियाणि करणत्वाद्वास्यादिवत् । प्रतिनियतविषयप्रकाशकत्वात् प्रदीपवत् । तथा नाहङ्कारिकाणीन्द्रियाणि प्रतिनियतज्ञानव्यपदेशनिमित्तत्वाद्रूपादिवत् । यथैव हि रूपज्ञानं रसज्ञानमित्यादिप्रतिनियतज्ञानव्यपदेशहेतवो रूपादयो नाहङ्काकारिकास्तद्वच्चक्षुर्ज्ञानं रासनज्ञानमित्यादिप्रतिनियतज्ञानव्यपदेशहेतुत्वाच्चक्षुरादीन्द्रियाण्यपि । तथा नाहङ्कारिकाणीन्द्रियाणि पौद्गलिकानुग्रहोपघाताश्रयत्वाद्दर्प्पणादिवत् । यथैव हि दर्प्पणादयः पौद्गलिकैर्भस्माश्मादिभिः क्रियमाणानुग्रहोपघाताश्रयभूता नाहङ्कारिकाः किं तु पौद्गलिकास्तथाञ्जनरेणुकणादिभिः पौद्गलिकैः क्रियमाणानुग्रहोपघाताश्रयभूतानि चक्षुरादीन्द्रियाण्यपि । एवं मनोऽपि नाहङ्कारिकमनियतविषयत्वादात्मवदिति । ततः पौद्गलिकत्वमेव द्रव्येन्द्रियानिन्द्रियाणां प्रतिपत्तव्यम् । नन्विन्द्रियनिबन्धनमनिन्द्रियनिबन्धनं चेत्यसाम्प्रतमुक्तम् । आत्मादेरपि तत्कारणस्यात्राभिधानार्हत्वात् । मैवम् । असाधारणस्यैव कारणस्याभिधातुमत्राकाङ्क्षितत्वात् । आत्मादेः पुनरनुमानादिष्वपि कारणत्वेन साधारणत्वात् ॥ ५ ॥

अथास्य द्विविधस्यापि प्रत्यक्षस्य भेदप्रकटनार्थमाह—

## ॥ एतत् द्वितयमवग्रहेहावायधारणाभेदादेकशश्चतुर्विकल्पमिति ॥ ६ ॥

एतदनन्तरोक्तम् । द्वितयमिन्द्रियनिबन्धनानिन्द्रियनिबन्धनप्रत्यक्षप्रमाणम् । एकशः प्रत्येकम् । चतुर्विकल्पं चतुर्भेदम् । कुत इत्याह अव-

ग्रहेहावायधारणाभेदात् अवग्रहश्चेहा चावायश्च धारणा चावग्रहेहावायधारणा वक्ष्यमाणलक्षणास्ताभिर्भेदो विशेषस्तस्मादिति ॥ ६ ॥

अवग्रहेहादीनां स्वरूपं क्रमतः सूत्रचतुष्टयेन व्याचष्टे—

**॥विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रह इति ॥ ७ ॥**

विषयो द्रव्यपर्यायात्मकोऽर्थः । विषयी चक्षुरादिरिन्द्रियानिन्द्रियग्रामः । तयोः समीचीनो भ्रान्त्याद्यजनकत्वेनानुकूलो यो निपातो योग्यदेशावस्थानम्। तस्मादनन्तरं समुद्भूतमुत्पन्नं यत्सत्तामात्रगोचरं निःशेषविशेषवैमुख्येन सन्मात्रविषयं दर्शनं निराकारबोधस्तस्माज्जातमाद्यं प्रथमं सत्त्वसामान्यादवान्तरैः सामान्याकारैर्मनुष्यत्वादिभिर्नातिविशेषैर्विशिष्टस्य वस्तुनो यद्ग्रहणं ज्ञानं तदवग्रह इति नाम्ना गीयते। ननु दर्शनानन्तरमवग्रहो भवतीत्ययुक्तमुच्यते अवग्रहाद्विलक्षणस्य दर्शनस्याभावादिति । अत्रोच्यते । ततोऽनन्तरसमयभाविषून्मेषेषु चक्षुरवग्रहमतिज्ञानावरणवीर्यान्तरायक्षयोपशमाद्गोपाङ्गोपष्टम्भकत्वे मनुष्योऽयमित्यादिविभावितमनुष्यत्वाद्यवान्तरनातिविशेषं ज्ञानमुत्पद्यमानमवग्रह उच्यते इति सिद्धं दर्शनावग्रहयोर्विलक्षणस्वरूपत्वम्। अथ प्रथमसमयोन्मेषसमुद्भूतबालदर्शनमपि ज्ञानमिष्यते तर्हि तन्मिथ्याज्ञानं वा स्यात् सम्यग्ज्ञानं वा । मिथ्याज्ञानत्वेऽपि संशयस्वभावं तद्भवेद्विपर्ययस्वरूपमनध्यवसायात्मकं वा । तत्र न तावत्संशयविपर्ययात्मकं मिथ्याज्ञानं बाले सम्भवति । तस्य सम्यग्ज्ञानपूर्वकत्वात् । सम्यग्ज्ञानं च प्राथमिकत्वात्तस्य नास्तीति । नाप्यनध्यवसायरूपम् । वस्तुमात्रप्रतिपत्तेः । नापि सम्यग्ज्ञानं बालस्य दर्शनम् । अथाकारालम्बनाभावात् । किं च यथा मृत्त-

१ 'अथ' इत्यधिकं प भ पुस्तकयोः । २ 'अपि' इत्यधिकं प भ पुस्तकयोः । ३ 'दशावस्थानम्' इति प भ पुस्तकयोः पाठः । ४ अत्र किंचित्पतितं प्रतिभाति ।

न्तुकारणभेदाद्धटपटलक्षणकार्यभेदस्तथा दर्शनज्ञानावरणक्षयोपशमकारणभेदात्तत्कार्यदर्शनज्ञानभेद इत्यस्ति प्रागवग्रहाद्दर्शनम् ॥ ७ ॥

## ॥ अवगृहीतार्थविशेषाकाङ्क्षणमीहेति ॥ ८ ॥

अवगृहीतोऽवग्रहेण विषयीकृतो योऽर्थोऽवान्तरमनुष्यत्वादिजातिलक्षणस्तस्य विशेष कर्णाटलाटादिभेदस्तस्य काङ्क्षणं भवितव्यताप्रत्ययरूपतया ग्रहणाभिमुख्यम् ईहेत्यभिधीयते ॥ ८ ॥

## ॥ ईहितविशेषनिर्णयोऽवाय इति ॥ ९ ॥

ईहितस्येहया विषयीकृतस्य विशेषस्य कर्णाटलाटादिभेदस्य निर्णयो यथात्म्येन निश्चयनम् । अवाय इति कीर्त्यते । शास्त्रान्तरे त्वपाय इत्यपि संज्ञा दृश्यते । तत्रापि न कश्चिद्विशेष. । अन्यतरवचनेऽन्यतरस्य सामर्थ्यलब्धत्वात् । यदा हि दाक्षिणात्योऽयमित्यवायमधिगमं करोति प्रमाता । तदा नायमुदीच्यादिरित्यपायो व्यवच्छेदः सामर्थ्याल्लभ्यते । यदा च नायमुदीच्यादिरित्यपायं करोति । तदा दाक्षिणात्योऽयमित्यवाय सामर्थ्याल्लभ्यत इति ॥ ९ ॥

## ॥ स एव दृढतमावस्थापन्नो धारणेति ॥ १० ॥

स एवायमेव दृढतमावस्थापन्न. । सादरस्य प्रमातुस्तथाविधोपचयक्रमेण किञ्चित्कालमप्रच्यवमानो धारणेत्यभिधीयते । इदमस्य सूत्रचतुष्टयस्य तात्पर्यम् । इन्द्रियार्थयोर्योग्यतालक्षणसम्बन्धे सति सकलहेयोपादेयतासाधारणगोचरं निराकारबोधस्वरूपं दर्शनमात्मन. प्रथमतः प्रादुर्भवति । तदनन्तरमवान्तरजातिविशेषविषयं ज्ञानमवग्रहसंज्ञमुज्जिहीते मनुष्योऽयमिति यथा। तदनु तद्विशेषाकाङ्क्षालक्षणमीहाज्ञानमुन्मज्जति सम्भाव्यतेऽयं कर्णाट इति यथा । ततोऽप्याकाङ्क्षितविशेषावधारणस्वरूपोऽवायः समुल्लसति कर्णाट एवायमिति यथा । तस्मादपि प्रागवधारितकर्णाटादिविशेषाणामुत्तरकालं धारणा समुन्मीलतीति ।

विद्यानन्देन कृतस्यावग्रहादीनां स्वरूपनिरूपणस्योपदर्श धारणालक्षणस्य खण्डनम् ।

यत्तु विद्यानन्द प्रत्यपादयत् । "अक्षार्थयोगजाद्वस्तुमात्रग्रहणलक्षणात् ॥ जात यद्वस्तुभेदस्य ग्रहण तदवग्रह ॥ १ ॥ तद्गृहीतार्थसामान्ये यद्विशेषस्य काङ्क्षणम् ॥ निश्चयाभिमुख सेहा संशयाद्भिन्नलक्षणा ॥ २ ॥ तस्यैव निर्णयोऽवाय स्मृतिहेतु स धारणा" इति । तत्र स्मृतिहेतुत्व धारणाया साक्षात्पारम्पर्येण वा विवक्षितम् । यदि साक्षात्, तदसमम् । यतो धारणेति विवक्षितवस्तुगोचरोपयोगरूपपर्यायस्यैवाभिधान यथा पृथुबुध्नोदराकारपर्यायस्य कलश इति । न चास्य स्मृतिकाल यावदनुवृत्तिरुपपद्यते । छाद्मस्थिकोपयोगानामान्तर्मौहूर्तिकत्वेन परमागमे गानात् । न च तथानुभवोऽप्यस्ति । न खल्वद्यानुभूयमानस्य परेद्यु स्मरणीयस्य च घटस्यान्तरालिकानेकसुखसत्ताद्यवस्थास्वनुभव कस्यचित्प्रतीत । ततो धारणारूपपर्यायोपढौकित पुरुष शक्तिविशेष एव संस्कारपर्याय स्मृतेरानन्तर्येण हेतुर्न धारणेति ।

श्लोकवार्तिकमहोदयग्रन्थाभ्यां धारणा संस्कारस्यैवाभिमता। एतदेव विद्यानन्दस्यानन्तवार्यस्याप्यभिमतमिति तत्स्याद्वादोदयस्य निराकृता।

अथ किमिदमसमञ्जसमुच्यते । न खलु संस्कारादन्या धारणास्य मता । तथा चायमेव श्लोकवार्तिके, "अज्ञानात्मकतायां तु संस्कारस्येहितस्य वा ॥ ज्ञानोपादानता न स्याद्रूपादेरिव सास्ति च ॥ १ ॥" इत्यत्र संस्कारशब्देन धारणामेवाभ्यधात् । महोदये च कालान्तराविस्मरणकारण

---

१ तत्त्वार्थश्लोकवार्तिके अ १ सू १५ श्लो २।३।४ २ छाद्मस्थे केवलज्ञान केवलदर्शन चात्मनाऽनेनेति छद्म ( छद्मस्थो विशिष्टावध्यादिविकलो न त्वकेवली । यतो यद्यपि धर्माधर्माकाशान्यशरीर जीव च परमावधिर्न जानाति तथापि परमाणुशब्दो जानात्येव रूपित्वात्तयो रूपिविषयत्वाच्चावधेरिति स्था ६ स्था ) ३ मुहूर्तकालप्रमाण—३७७३ उच्छ्वासैरेको मुहूर्त घटिकाद्वयप्रमाणो यथ । मुहूर्तस्य अन्ते मध्ये वा अन्तर्मुहूर्त । पारेमध्ये० ' इति हैमसूत्रेण ( ३ १ ३० ) विकल्पेन अव्ययी-भावस्य प्राक् निपातो भवति । ४ मलयगिरीया प्रज्ञापनाटीका प २९ प ५२६ ५ तत्त्वार्थश्लो वा अ १ सू १५ श्लो ३३

हि धारणाभिधानं ज्ञानं संस्कारः प्रतीयत इति वदन् संस्कारधारणयोरैकार्थ्यमचकथत् । अनन्तवीर्योऽपि 'तथानिर्णीतस्य कालान्तरे तथैव स्मरणहेतुस्संस्कारो धारणा' इति तदेवावदत् । ततः संस्कारस्य साक्षात्स्मृतिहेतुतां समर्थयमानाभ्यामाभ्यां धारणाया एव सा समर्थितेति चेत् । किमेवं वदतोरनयोर्यः स्मृतिकालानुयायी धर्मविशेषः संस्कार इति सर्ववादिनामविवादेन सिद्धः स धारणात्वेन सम्मतः । तथा चेत्, तर्हि यस्य पदार्थस्य कालान्तरे स्मृतिस्साप्रत्यक्षात्मिका धारणा तावत्कालं यावदनुवर्त्तत इति स्यात् । एतच्चानुपपन्नम् । एवं तर्हि यावत्पटपदार्थसंस्काररूपं प्रत्यक्षं पुरुषे भवेत्तावत्पदार्थान्तरस्य संवेदनमेव न स्यात् । क्षायोपशमिकोपयोगाना युगपद्भावविरोधस्याभ्यामपि प्रतिपन्नत्वात् । अथ तादृशि धर्मविशेषे प्रतीतामपि संस्कारसंज्ञा धारणायां साकेत्य तथाव्यवहरतामेतौ । नन्वेवमपि कृते का नामार्थसिद्धिरनयोः । नह्येवमपि धारणायाः साक्षात्स्मरणहेतुत्वमुक्तं भवति । तस्यास्तदानीमेव ध्वस्तत्वेनात्मशक्तिविशेषस्यैव साक्षात्तद्धेतुत्वात् । न च स्मरणजनने नास्त्येवात्मनः शक्तिविशेष इति सङ्गतम् । एवं हि सर्वत्र शक्तिविलोपप्रसक्तेश्चिरन्तनातीतस्य पर्यायविशेषस्यैव कस्यचित्कार्योत्पत्तौ सर्वत्र कारणत्वेन कल्पयितुं शक्तत्वात् । तस्मादात्मशक्तिविशेष एव संस्कारापरपर्यायः स्मृतेरानन्तर्येण हेतुः, न धारणा । पारम्पर्येण तु तस्यास्तद्धेतुताभिधाने न किञ्चिद्दूषणम् ॥ १० ॥

नन्वनिश्चयस्वभावत्वादीहा सन्देहान्न भिद्यत इत्यारेकामपाकुर्वन्नाह—

**संशयपूर्वकत्वादीहायाः संशयात् भेद इति ॥११॥**

संशयः पूर्वं कारणं यस्याः सा संशयपूर्विका तस्या भावः संशयपूर्वकत्वं तस्मादीहायाः सम्भावनाप्रत्ययस्वभावायाः संशयाद्दोलायमानज्ञानस्वभावात्सकाशाद्भेदः प्रेक्षाशालिभिरवगन्तव्यः । तथा हि पुरुषमवगृह्य किमयं दाक्षिणात्य उतोदीच्य इति चलितप्रतिपत्तिरूपः संशयः । एवं संशयितस्य प्रमातुरुत्तरकालं विशेषलिप्सायां प्रतिपतनमीहेति

मुख्यक्तमेव संशयार्थान्तरत्वमीहायाः । अवग्रहादिप्रत्यक्रमे सूत्रे च संशयस्याप्रतिपादनमप्रमाणत्वात् ॥ ११ ॥

अथ दर्शनादीनां कथञ्चिदव्यतिरेकेऽपि संज्ञाभेदसमर्थनायाह—

## ॥ कथञ्चिदभेदेऽपि परिणामविशेषादेषां व्यपदेशभेद इति ॥ १२ ॥

कथञ्चिदेकजीवद्रव्याविष्वग्भावेनाभेदेऽप्येकत्वेऽपि परिणामविशेषाद्विवर्त्तभेदादेषां दर्शनादीनां व्यपदेशस्य संज्ञाया भेदो नानात्वं सुघटमेवेति ॥ १२ ॥

अथैतेषामेव भेदमाननायाह—

## ॥ असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतयानुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात्क्रमभावित्वाच्चैते व्यतिरिच्यन्त इति ॥ १३ ॥

असामस्त्येनाप्यसम्पूर्णत्वेनाप्युत्पद्यमानत्वेन कृत्वा यत्सङ्कीर्णस्वभावतयानुभूयमानत्वं दर्शनादीनां तस्मादेते दर्शनादयो व्यतिरिच्यन्त इत्येको हेतुः । इदमुक्तं भवति । गभीरे दर्शनज्ञानावरणाम्भोधौ निमज्जनोन्मज्जने कुर्वाणस्यात्मनस्तत्तद्द्रव्यक्षेत्रकालाद्यपेक्षविचित्रतत्क्षयोपशमवशात्कदाचिद्दर्शनमात्रमेव । कदाचिद्दर्शनावग्रहौ । कदाचिद्दर्शनावग्रहसंशयाः । कदाचिद्दर्शनावग्रहसंशयेहाः । कदाचिद्दर्शनावग्रहसंशयेहावायाः । कदाचित्तु धारणापर्यन्ताः । सर्वेऽप्येते चैतन्यविशेषाः यदुन्मीलन्ति तदेतेषां सामस्त्येनासामस्त्येन चोत्पद्यमानत्वं सिद्धम् । असामस्त्येनोत्पद्यमानत्वाच्चासङ्कीर्णस्वभावतयाऽनुभूयमानत्वम् । ततश्च व्यतिरेकः सिद्धो भवतीति । तथाऽपूर्वापूर्वस्यान्यान्यस्य वस्तुपर्यायस्य पदार्थधर्मस्य प्रकाशकत्वादिति द्वितीयो हेतुः । क्रमभावित्वादिति तृतीयः । चकारो हेतुसमुच्चये । प्रयोगाः पुनरित्थमेव कार्याः । येऽसङ्कीर्ण-

स्वभावतयानुभूयन्ते ते परस्परं व्यतिरिक्तमूर्तयो यथा स्तम्भादयस्तथा चैते दर्शनादयो धारणापर्यन्ताश्चैतन्यविशेपा इति । तथा येऽपूर्वापूर्ववस्तुपर्यायप्रकाशकास्ते यथोक्तसाध्याः यथानुमानादयस्तथा चैते इति । तथा ये क्रमभाविनस्ते पूर्वोक्तसाध्याधारा यथाङ्कुरकदलकाण्डादयस्तथा चैते इति ॥ १३ ॥

अथैते दर्शनादयः किमुक्तक्रमेणैव प्रादुर्भवन्त्याहोस्वित्क्रमान्तरेणापीत्यारेका निराकुर्वन्नाह—

**क्रमोऽप्यमीषामयमेव तथैवऽसंवेदनादेवं क्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्चेति ॥ १४ ॥**

क्रमोऽपि परिपाटिरपि । न केवलं स्वरूपमित्यपिशब्दार्थः । अमीषां दर्शनादीनाम् । अयमेव यः पूर्वमुपन्यस्तः । अत्र हेतुद्वयमाह । तथैव यथोक्तक्रमेणैव । संवेदनादनुभवात् । तथा हि यदेव मया विषयिविषयसन्निपातदशायां सन्मात्रमालोकितं तदेव वर्णसंस्थानादिसामान्याकारेण पश्चादवगृहीतमनन्तरमनिर्धारितरूपतया संशयितं पुनः प्रतिनियतविशेषाकारेणेहितं तदनु तदेवाकाङ्क्षितविशेषाकारेणावेतं पुनर्दृढतमावस्थापन्नावायरूपतया धारितमित्यहमहमिकया सर्वैरपि दर्शनादीनां क्रमः संवेद्यमानः कथमपह्नोतुं पार्यते । तथा एव क्रमेण दर्शनाद्युत्पत्तिक्रमेणाविर्भूतो योऽसौ निजकर्मणो दर्शनज्ञानावरणलक्षणस्य क्षयोपशमः समयासिद्धोऽपगमविशेषस्तेन जन्यत्वात्क्रमोऽप्यमीषामयमेवेति । चकारो हेतुसमुच्चये । इदमत्रैदम्पर्यम् । येन क्रमेणात्मनो दर्शनाद्यावरणकर्मक्षयोपशमो दर्शनादीनां कारणभूतः प्रादुर्भवति तेनैव क्रमेण दर्शनादयोऽपि तस्य समुल्लसन्ति । तथा हि ये यथाक्रमाविर्भूतनिजकारणजन्यास्ते तथा क्रमोपेताः । यथा स्थासकोशकुशूलादयस्तथा चैते दर्शनादय इति ॥ १४ ॥

दर्शनादीनां प्रदर्शितक्रमानभ्युपगमे दोषमाह—

## अन्यथा प्रमेयानवगतिप्रसङ्ग इति ॥ १५ ॥

अन्यथेति दर्शनान्तरीणां यथोक्तक्रमानभ्युपगमे, प्रमेयस्य परिच्छेद्यस्य वस्तुनोऽनवगतेरनवबोधस्य प्रसङ्ग । प्रतीयमानक्रमापह्नवे हि दर्शनान्तरीणां प्रमेयापह्नव एव कृतो भवतीति भाव ॥ १५ ॥

उपवर्णितमेव क्रम दर्शनान्तरीणां व्यतिरेकद्वारा दर्शयन्नाह—

## न खल्वदृष्टमवगृह्यते नचानवगृहीत सन्दिह्यते न चासन्दिग्धमीह्यते नचानीहितमवेयते नाप्यनवेत धार्यते इति ॥ १६ ॥

सुगमम् ॥ १६ ॥

क्वचिद्दर्शनान्तरीणामुपचिक्रमानुपलक्षणे कारणमाह—

## क्वचित्क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलशतपत्रव्यतिभेदक्रमवदिति ॥ १७ ॥

अयमत्र भाव । यथोत्पलपत्रशतव्यतिभेदस्य सूच्यादिना क्रियमाणस्य क्रम सन्नपि शीघ्रमुत्पादात् नोपलक्ष्यते तथा क्वचिदत्यन्ताभ्यस्ते करतलादौ विषये दर्शनान्तरीणामपि ।

सामान्यतस्तावदवग्रहादेरिद स्वरूप निरदेशि किञ्चित् ॥
भेदप्रपञ्चोऽस्य तु सम्प्रदाय सिद्धान्तसिन्धोरभियोगधार्य ॥ ३३१॥
१७ ॥

इत्थ भेदप्रभेदपरिकरित साव्यवहारिक प्रत्यक्ष लक्षयित्वा सम्प्रति पारमार्थिक प्रत्यक्ष लक्षयति—

## पारमार्थिक पुनरुत्पत्तावात्ममात्रापेक्षमिति ॥१८॥

परमार्थिक मुख्य प्रत्यक्ष वक्ष्यमाणावधिज्ञानादिकम् । पुन शब्द साव्यवहारिकप्रत्यक्षभेदादस्य भेदद्योतनार्थ । उत्पत्तौ स्वजन्मनि ।

१ स्याद्वादसूत्रम् २-११

आत्ममात्रापेक्षं केवलजीवद्रव्यसव्यपेक्षम् । इदमत्र हृदयम् । क्षयक्षयोपशमविशिष्टमात्मद्रव्यमेवाव्यवहितं समाश्रित्य पारमार्थिकमेव तदवध्यादिप्रत्यक्षं समुन्मीलति । न पुनः सांव्यवहारिकं प्रत्यक्षमिवेन्द्रियादिव्यवहितमात्मद्रव्यं समाश्रित्येति ॥ १८ ॥

एतत्प्रकारप्ररूपणायाह—

**॥ तद्विकलं सकलं चेति ॥ १९ ॥**

तत्पारमार्थिकमेकं तावद्विकलविषयत्वाद्विकलम् । द्वितीयं तु सकलविषयत्वात्सकलम् ॥ १९ ॥

विकलं भेदतो दर्शयन्नाह—

**॥ तत्र विकलमवधिमनःपर्यायज्ञानतया द्वेधेति ॥ २० ॥**

तत्र तयोर्विकलसकलयोर्मध्ये यद्विकलं तदवधिमनःपर्यायज्ञानरूपतया द्वेधा द्विप्रकारं भवतीति ॥ २० ॥

तत्रावधिज्ञानस्वरूपमाह—

**॥ अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानमिति ॥ २१ ॥**

अवधिज्ञानस्य यदावरणमदृष्टविशेषस्तस्य योऽसौ विलयविशेषो विनाशभेदः क्षयोपशमापरनामा तस्मात्समुद्भव उत्पत्तिर्यस्य तत्तथा । भवगुणप्रत्ययं भवः सुरनारकजन्मलक्षणः । गुणः सम्यग्दर्शनादिः । तौ प्रत्ययौ कारणे यस्य तत्तथा । तत्र भवप्रत्ययः सुरनारकाणाम् । गुणप्रत्ययं तु नरतिरश्चाम् । रूपिद्रव्यगोचरं मूर्तद्रव्यविषयम् । अवधिज्ञानमिति अवशब्दोऽधःशब्दार्थः । अवधानादवधिर्धानं परिच्छेदः । अवधिश्चासौ ज्ञानं च अवधिज्ञानमिति समासः । एतदुक्तं भवति । अधोऽधो विस्तृतविषयमनुत्तरोपपातिकादीनामवधिज्ञानम्[1] । विषयस्य च

1 न विद्यते उत्तर–प्रधानोऽस्मादित्यनुत्तरः । उपपतन उपपातो जन्म अनुत्तरः प्रधानः संसारेऽन्यस्य तथाविधस्याभावात् उपपातोऽस्त्येषामित्यनुत्तरोपपातिकाः ।

बहुत्वमुररीकृत्यैव व्युत्पत्तिराश्रयिते । अन्यथा तिर्यगूर्ध्वं वा विषयपरिच्छिन्दानस्यावधिव्यपदेशो न स्यात् । यद्वा, अवधिर्मर्यादा । अवधेर्ज्ञानमवधिज्ञानम् । इदमुक्तं भवति । अमूर्तद्रव्यपरिहारेण मूर्तद्रव्यविषयत्वलक्षणया मर्यादया प्रवर्तमानत्वादस्यावधिज्ञानत्वम् । इदं च चतसृष्वपि गतिषु जन्तूनां प्रवर्तमानानामिन्द्रियनिरपेक्षं प्रतिविशिष्टक्षयोपशमनिमित्तं पुद्गलानामेव परिच्छेदकमुल्लसतीति ॥ २१ ॥

मनःपर्यायज्ञानं लक्षयन्नाह—

## संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानमिति॥२२॥

संयमस्य चारित्रस्य विशुद्धिर्निर्मलता निबन्धनं कारणं यस्य स तथा तस्मात् । विशिष्टश्चासावावरणविच्छेदश्च मनःपर्यायज्ञानावरणक्षयोपशम इत्यर्थस्तस्माज्जातम् । मनोद्रव्याणां संज्ञिजीवमनस्त्वपरिणमितमनोवर्गणानां ये पर्याया वस्तुचिन्तनानुगुणा धर्मास्ते आलम्बनं परिच्छेद्यं यस्य तत्तथाविधम् । मनःशब्देन मनोद्रव्याणि गृह्यन्ते । तेषां पर्यायेषु ज्ञानं यत् तन्मनःपर्यायज्ञानमिति । इदमिहैदम्पर्यम् । मनुष्यक्षेत्रवर्तिसंज्ञिजीवगृहीतमनोद्रव्यपर्यायसाक्षात्कारि यज्ज्ञानं विशिष्टचारित्रस्वामिकं तन्मनःपर्यायज्ञानमित्युच्यते । अनेन च मनःपर्यायज्ञानेन च परमार्थतो मनोद्रव्यपर्यायान् परिच्छिनत्ति । बाह्यांस्तु चिन्तनीयानर्थाननुमानात्तथाविधमनःपर्यायान्यथानुपपत्तेरस्मिनेन चिन्तितमित्येवं लक्षणादवगच्छति मनःपर्यायज्ञानीति ॥ २२ ॥

अथ सकलप्रत्यक्षप्ररूपणायाह—

## ॥सकलं तु सामग्रीविशेषसमुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारस्वरूपं केवलज्ञानमिति ॥ २३ ॥

१ नारकतिर्यङ्मनुष्यदेवगतिचतुष्टयम् । २ मनोरूपतया परिणम्य आलम्ब्य च निसृष्ट मनःप्रायोग्यद्रव्यम् । ३ 'मानुष' इति भ पुस्तके पाठ । ४ मनोद्रव्यपर्यायान् इति नास्ति प भ पुस्तकयो ।

सकलं तु सकलप्रत्यक्षं । पुनः केवलज्ञानमित्युत्तरेण योगः । सामग्री सम्यग्दर्शनादिलक्षणान्तरङ्गा। बहिरङ्गा तु जिनकालिकमनुष्यभवादिलक्षणेह विवक्षिता । तस्या विशेषोऽधिकत्वं तत. समुद्भूतः सम्पन्नो योऽसौ समस्तावरणक्षयः सकलघातिकर्मविघातस्तमपेक्षते स्वोत्पत्तौ यत्तत्तथा । किं स्वरूपमित्याह । निखिलद्रव्यपर्यायाणा यः साक्षात्कारः स्पष्टतया प्रतिभासः स स्वरूपं यस्य तत्तथा । केवलज्ञानमिति । केवल सम्पूर्णं ज्ञेयमुच्यते । तस्मिन् यज्ज्ञानं तत्केवलज्ञानम्। यद्वा केवलमेकं मत्यादिज्ञानरहितमविद्यमानस्वप्रभेदं च। ततः केवलं च तज्ज्ञानं च केवलज्ञानामिति समासः ॥ नन्वावृतिक्षयापेक्षमित्युक्तं यद्विशेषणं व्यर्थ तत् । आवृतेरेव स्वरूपस्याप्रसिद्धितः । तथा हि किमावरणमभिप्रेतमायुष्मताम् । किं शरीरमाहोस्विद्देशकालादिकम् । न तावच्छरीरम् । तत्सद्भावेऽप्यर्थोपलम्भात्। अथ देशकालादिकम् । तथा हि मेर्वादेर्दूरदेशता । रावणादेर्दूरकालता । परमाण्वादेः सूक्ष्मस्वभावता । मूलकीलकोदकादेश्च भूम्यादिरावरणं लेके प्रसिद्धमेवेति चेत् । तदप्यसारम् । एवं स्वरूपस्यावरणस्य क्षयानुपपत्ते. । न खलु सातिशयसमृद्धिशालिनापि योगिना देशादीनामभावः कर्त्तुं शक्यते । न चान्यत्किञ्चिदावरणं प्रतीतिपद्धतिमाधिरोहति ।

तन्नावृतिक्षयापेक्षमित्येतज्जैनकल्पितम् ॥
विशेषणं घटाकोटिसटङ्कमटति स्फुटम् ॥ ३३२ ॥
अलीककल्पनाजालमलीमसधियामिदम् ॥
युक्त भवादृशा वक्तुं न पुनः सूक्ष्मचक्षुषाम् ॥ ३३३ ॥

तथा हि न शरीरं नापि देशकालादिकमावरणम् । अपि तु तदतिरिक्तं कर्म्म । तच्चानुमानमाहात्म्यत. प्रतीतम् । तथा हि । स्वैपरप्रमेयबोधैक-

1 ज्ञानावरणदर्शनावरणमोहनीयान्तरायाख्याचतुष्टय घातिकर्म । २ ‘तत्त्वावृत्ति’ इति प. भ पुस्तकयोः पाठ. । ३ ‘ म्भसम्भवा ’ इति प. भ. पुस्तकयोः पाठ । ४ अत्र किञ्चित्पतितमस्ति ।

स्वभावस्यात्मवेश्मादा मोहवत् । यच्च शरीराद्यतिरिक्त तत्कर्मैव । तथा यदप्रवृत्तिमत्स्वविषये तत्सावरणम् । यथा तैमिरिकस्य लोचनविज्ञानमेकचन्द्रमसि । अप्रवृत्तिमच्च स्वविषये समस्तार्थलक्षणेऽस्मदादिज्ञानमिति । ननु चास्मदादिज्ञानस्य समस्तार्थविषयत्व कुत सिद्धम् । आवरणापाये तत्प्रकाशकत्वाचेत्, तर्हि परस्पराश्रय । सिद्धे हि सकलविषयत्वे तस्यावरणापाये तत्प्रकाशन सिद्धयत्यतश्च सकलविषयत्वमिति । तदप्यपरीक्षितलक्षितम् । यतोऽनुमानमिच्छता भवताप्यवश्य नि शेषवस्तुविषय व्याप्तिज्ञानमभ्युपगतमेवेति । तथा यदस्पष्ट स्वगोचरे ज्ञान तत्सावरणम् । यथा रजोनीहाराद्यन्तरिततरुनिकरादिज्ञानम् । अस्पष्ट च स्वगोचरे सर्वं सदनेकान्तात्मकमित्यादिज्ञानमिति । तथामिथ्यात्वपटलविलुप्तविवेकदृशा यदेतत्सर्वस्मिन्ननेकान्तात्मके वस्तुनि विपर्ययज्ञान तत्सावरण मिथ्याज्ञानत्वाद्धत्तूरकाद्युपयोगिनो मृत्तिकाशकले कनकज्ञानमिवेति । तत सिद्धमावरण कर्म ॥

ननु प्रसिद्धस्यापि यथोक्तप्रकारस्य कर्मण कार्यकारणप्रवाहे प्रवर्तमानस्यानादित्वात्तद्विनाशहेतुभूतस्य सामग्रीविशेषस्य चाभावात्कथ क्षयो यत आवरणक्षयापेक्षत्व केवलज्ञानस्य स्यादिति चेत् । तदपि नोपपद्यते । अनादेरपि तुषारगिरिगह्वरे शीतस्पर्शस्योष्णस्पर्शप्रकर्षे बीजाङ्कुरसन्तानस्य कार्यकारणरूपतया प्रवर्तमानस्य निर्दग्धबीजेऽङ्कुरे वा निर्मूल प्रलयविलोकनात् । सम्यग्दर्शनादिरत्नत्रयलक्षणस्यावरणनिर्जराहेतुभूतसामग्रीविशेषस्य सुप्रसिद्धत्वाच्च । निर्जरा च द्वेधा । निरुपक्रमा सोपक्रमा च । तत्र निरुपक्रमा उपक्रमकारणमन्तरेण ससारिणा परिपाकोदयलक्षणप्राप्तस्य कर्मण परिसाटरूपा । सोपक्रमा तु सम्यग्दर्शनादिरत्नत्रयेश्वरै साधुभिस्तपसा द्वादश-

१ प्रवाहेण इति प भ पुस्तकयो पाठ । २ द्वादशविधस्तप –बाह्याभ्यन्तरपद्भ्रूयभेदात् । बाह्यस्तप –अनशनमुनादरता वृत्ते सक्षेपण रसत्याग कायक्लेश सलीनतति । अभ्यन्तरस्तप प्रायश्चित्त विनयो वैयावृत्त्य स्वाध्याय ध्यान चेति ।

विधेन विधीयमाना। इयमेव च प्रकृतार्थोपयोगिनी। ननु सम्यग्दर्शनादेरावरणनिर्ज्जराहेतुत्वसिद्धावप्यंशत एव तन्निर्ज्जरा भविष्यति न पुनः सामस्त्येनेति चेत्। तदसम्यक्। तद्विरोधिसम्यग्दर्शनादिपरमप्रकर्षे सति क्वचिदात्मनि तस्यात्यन्तं निर्ज्जरासिद्धेः। यत्र यद्विरोधिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिमत्। यथा चक्षुषि तिमिरादि। आवरणविरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावश्च क्वचिदात्मनि। नेदमुदाहरणं साध्यसाधनधर्मविकलम्। कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धेः तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धेश्च निर्विवादत्वात्। कथं पुनरावरणविरोधिसम्यग्दर्शनादि निश्चीयत इति चेत्। तत्प्रकर्षे तदपकर्षदर्शनात्। यत्खलु प्रकृष्यमाणं यदपकर्षति तत्तद्विरोधि। यथोष्णस्पर्शः। शीतस्पर्शस्य आवरणमपकर्षति च प्रकृष्यमाण तत्। तथा यत्प्रकृष्यमाणं तत् क्वचित्परमप्रकर्षसद्भावभाक्। यथा नभसि परिमाणम्। प्रकृष्यमाणं च सम्यग्दर्शनादि। न च दुःखेन व्यभिचारः। सप्तमनरकभूमौ नारकाणा तत्परमप्रकर्षसिद्धेः। सर्वार्थसिद्धौ सुराणा सांसारिकसुखपरमप्रकर्षवत्। नापि संसारेण मिथ्यादर्शनादिना वा। तयोरप्यभव्येषु परमप्रकर्षसद्भावसिद्धेः। ज्ञानहान्याऽनेकान्त इति चेत्, न। तस्या अप्युपलशकलादौ परमप्रकर्षसद्भावसिद्धेः। इत्थं वा साकल्येनावरणप्रक्षये प्रयोगः। यद्यतो देशतः क्षीयमाणं समुपलभ्यते तत्ततः परमप्रकर्षावस्थाजायमानसर्वप्रक्षयम्। यथा चिकित्सासमीरणादिभ्यो रोगजलधरादि। समुपलभ्यते च देशतः क्षीयमाणमावरण सम्यग्दर्शनादिभ्य इति। यथा वा क्वचिदात्मनि साकल्येनावरणं विनश्यति विपाकान्तत्वाद्यत्तु न तथा न तद्विपाकान्तं यथात्मद्रव्य विपाकान्तं चावरणं ततस्तथाविधम्। न च विपाकान्तत्वमावरणस्यासिद्धम्। तस्येतरकर्मवत्तत्सिद्धेः। न चेतरकर्मणां विपाकान्तत्वमसिद्धम्। नित्यत्वानुषङ्गात्। न च नित्यानि कर्माणि। नित्यं

१ अनुत्तरोपपातिकजन्मनि। २ तथाविधानादिशारिणामिकभावात् (कदाचनापि) सिद्धिगमनायोग्य.।

तत्कथानुभवनप्रसक्ते । अथवा आवरणहानि क्वचित्पुरुषविशेषे परमप्रकर्षं प्राप्ता प्रकृष्यमाणत्वात्परिमाणवत । न च प्रकृष्यमाणत्वमसिद्धम् । तथा हि प्रकृष्यमाणावरणहानिरावरणहानित्वात्माणिक्याद्यावरणहानिवत् । आवरणहानिपरमप्रकर्षे च सिद्धे ज्ञानस्य परमप्रकर्ष सिद्ध । यत्खलु प्रकाशात्मक तत्स्वावरणहानिप्रकर्षे प्रकृष्यमाण दृष्टम् । यथा प्रदीपादि । प्रकाशात्मक च ज्ञानमिति । तदेवमावरणप्रसिद्धिवत्तदभावोऽप्यनवयवेन प्रमाणत सिद्ध । ततश्च सकलावरणक्षयसमुत्थमेव समस्तवस्तुविषय ज्ञान प्रतिज्ञातव्यम । लेशतोऽप्यावरणसद्भावे तस्याशेषार्थगोचरत्वासम्भवात् । यत्रैवावरणसद्भावस्तत्रैवास्य प्रतिनियमसम्भवात् । ननु पूर्वोपात्तसमस्तावरणविलयसम्भवेऽपि तदवस्थायामेव नवनवावरणोत्पादसम्भवात्क्व केवलज्ञानोत्पत्त्यवकाश इति चेन् । न । भाविनस्तस्य सवरात् । "आश्रवनिरोधस्संवर" इति वचनात् । आश्रवो हि मिथ्यादर्शनाविरतिप्रमादकषाययोगविकल्पात्पञ्चप्रकारस्तस्मिन्सति कर्मणामाश्रवणात् । तस्य च निरोध सवर इत्यभिधीयते । स च पुंसि गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैर्निधीयते इत्याद्यागमे विस्तरत प्ररूपितस्तत एवावगन्तव्य । इति सिद्ध समस्तावरणक्षयात् केवलज्ञानम् ।

आगमद्वारेणाशेषार्थगोचर ज्ञानमित्यपि न प्रामाणिकमनोऽनुकूलम्। स्पष्टज्ञानस्य प्राकरणिकत्वात् । न चागमज्ञान स्पष्टम् । अस्पष्टतया तत्र पदार्थानां प्रतीते । न चागमस्य समस्तार्थविषयत्वमपि सम्भवति। अनभिलाप्येष्वर्थपर्यायेषु तस्याप्रवृत्ते । "मतिश्रुतयोर्निबन्ध सर्वद्रव्येष्वसर्वपर्यायेषु" इति तत्त्वार्थे वाचकवचनात् । नापि करणद्वारेण समस्तवस्तुविषयज्ञानसम्भव , करणानां हि रूपा

आगमद्वारेणाशेषार्थगोचर ज्ञानमिति मतस्य खण्डनम्।

---

१ तत्त्वार्थसू ९-१ २ तत्त्वा ५ तत्त्वार्थे स्या सू. १ स्या सू ११-१४ इत्यादिषु । ३ तत्त्वार्थसू १।२७

दिमत्यक्षवर्तितानेकावयवप्रचयात्मकेऽर्थे प्रवृत्तिप्रतीतिस्तदुत्थज्ञानस्यातीन्द्रियार्थेषु प्रतिबन्धसम्भवात् ।

योगजधर्मानुगृहीतानामिन्द्रियाणां तदनुगृहीतमनसश्चाशेषार्थविषयकज्ञानजनकत्वमिति मतस्य खण्डनम् ।

ननु योगजधर्मानुगृहीतानामिन्द्रियाणां गगनाद्यशेषातीन्द्रियार्थसाक्षात्कारिज्ञानजनकत्वसम्भवात्कथं तत्राशेषज्ञानस्येन्द्रियजत्वेऽपि प्रतिबन्धसम्भवः । एतदपि नोपपद्यते । यतो योगजधर्मः स्वविषये प्रवर्त्तमानस्येन्द्रियस्यातिशयाधायकत्वेन वा सहकारिमात्रत्वेन वानुग्राहकः स्यात् । तत्र प्रथमपक्षो न युक्तः । व्योमादौ स्वयमिन्द्रियस्य प्रवर्त्तमानत्वाभावात् । प्रवर्त्तने वा तदनुग्रहवैयर्थ्यम् । योगजधर्मानुग्रहादिन्द्रियस्य व्योमादिषु प्रवृत्तिसाधने च परस्पराश्रयः । सिद्धे हि योगजधर्मानुग्रहे तस्य तत्र प्रवृत्तिसिद्धिस्तस्यां च योगजधर्मानुग्रहसिद्धिरिति । द्वितीयपक्षोऽप्यसम्भाव्यः । सहकारिमात्रत्वेऽप्यस्य स्वविषयातिक्रमेणेन्द्रियानुग्रहायोगात् । अन्यथा एकस्यैवेन्द्रियस्याशेषरसादिविषयेषु प्रवृत्तौ योगजधर्मानुग्रहप्रसङ्गः स्यात् । अथैकमेवान्तःकरणं योगजधर्मानुगृहीतं युगपत्सूक्ष्माद्यशेषार्थविषयज्ञानजनकमिष्यते । तन्नोपपन्नम् । अणुपरिमाणस्य मनसः समस्तार्थैः समं सकृत्सम्बन्धाभावस्तज्ज्ञानजनकत्वासम्भवात् । अन्यथा दीर्घशष्कुलीभक्षणादौ सकृच्चक्षुरादिभिर्मनसः सम्बन्धप्रसक्तेः रूपादिज्ञानपञ्चकस्य सकृदुत्पत्तिप्रसङ्गात् "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्"[1] इति सूत्रं विरुध्येत । क्रमशोऽन्यत्र तद्दर्शनादत्रापि क्रमकल्पनायां योगिनः सर्वार्थेषु सम्बन्धस्य क्रमकल्पनास्तु । तथा च कथमस्य सकलज्ञता । पुरुषायुपसहस्रेणापि सकलपदार्थानामानन्त्येन क्रमेण ज्ञातुमशक्तेः । अथ सर्वार्थानां साक्षात्करणसमर्थस्य योगिज्ञानस्योभयप्रसिद्धस्यान्यथानुपपत्तेस्तैर्योगिमनसः सकृत्सम्बन्धसिद्धिरिति चेत् । रूपादिज्ञानपञ्चकस्य कचिद्यौगपद्येनानुभूयमानस्यान्यथानुपपत्तेर-

---

१ गौ. सू. १।१।१४.

योगिमनसोऽपि सहचक्षुरादिभिः सम्बन्धोऽस्तु । कुतश्चिद्धर्मविशेषात्तथापि तथोपपत्तेः । तादृशो धर्मविशेषः कथमयोगिनः सिद्ध इति चेत् । योगिनोऽपि कथं सिद्धः । सकलसर्वार्थज्ञानाच्चेत्कार्यविशेषादिति चेत् । तर्हि सकृद्रूपादिज्ञानपञ्चककार्यविशेषादयोगिनां तद्धेतुधर्मविशेषोऽस्तीति किं न सिद्ध्येत् । तथा सति तस्य रूपादिज्ञानपञ्चकं नैन्द्रियकं स्यात्किं तर्हि धर्मविशेषजमेवेति चेत् । सर्वार्थज्ञानमप्येवं योगिनोऽन्तःकरणजं माभूत्समाधिविशेषोत्थधर्मविशेषजत्वात्तस्य । मनोऽनपेक्षस्य ज्ञानस्यादर्शनाददृष्टकल्पना स्यादिति चेत् । मनोपेक्षस्य चेतनस्य सकलसर्वार्थसाक्षात्कारिणः क्वचिद्दर्शनं किमस्ति । येनादृष्टस्य कल्पना न स्यात् । सर्वार्थज्ञानं मनोपेक्षं ज्ञानत्वादस्मदादिज्ञानवदित्यनुमानतः सिद्धेर्नादृष्टकल्पनेति चेत् । तदयुक्तम् । हेतोः कालात्ययापदिष्टत्वात्पक्षस्यानुमानबाधितत्वात् । तथा हि सर्वज्ञविज्ञानं मनोऽनपेक्षं सकलसर्वार्थपरिच्छेदकत्वात् । यत्पुनर्मनोपेक्षं तन्न सकलसर्वार्थपरिच्छेदकम् । यथाऽस्मदादिज्ञानम् । न च तथेदम् । तस्मान्मनोऽनपेक्षमिति । नन्वेवं गन्धुर्दीर्घशष्कुलीभक्षणादौ रूपादिज्ञानपञ्चकं मनोनपेक्षं सकृद्रूपादिपञ्चकपरिच्छेदकत्वात् । यन्नैवं न तन्नैवम् । यथा क्रमशो रूपादिज्ञानम् । न च तथेदम् । अतो मनोनपेक्षमित्यप्यनिष्टं सिद्ध्येदिति सौगतस्था । साधनस्यासिद्धत्वात् । जैनस्यापि हि नैकान्तेन गन्धुर्दीर्घशष्कुलीभक्षणादौ रूपादिज्ञानपञ्चकस्य सकृद्रूपादिपञ्चकपरिच्छेदकत्वं सिद्धम् । उपयुक्तस्य मनसोऽनेकज्ञानस्यैकत्रानुत्पत्तेः क्रमभाविनेनोपगमात् । अनुपयुक्तस्य लब्धिरूपस्य यौगपद्यप्रसिद्धेः । प्रतीतिविरुद्धं चास्य मनोऽनपेक्षत्वसाधनम् । तदन्वयव्यतिरेकानुविधायितया तदपेक्षत्वसिद्धेः अन्यथा कस्यचिदपेक्षा न स्यात् । ततः कस्यचित्सूक्ष्माद्यर्थसाक्षात्करणमिच्छता मनोऽनपेक्षमेव तद्वेदितव्यमिति ॥

शाक्याः पुनरेवमाहुः । "भावनाप्रकर्षपर्यन्तजं योगिज्ञानम्" इति ।

भावनाप्रकर्षपर्यन्तजं योगिज्ञानमिति बौद्धमतमुपदर्श्य तत्खण्डनम् ।

तथा हि भावना द्विप्रकारा । श्रुतमयी चिन्तामयी च । तत्र श्रुतमयी श्रूयमाणेभ्यः क्षणिकत्वनैरात्म्यादिगोचरेभ्यः परार्थानुमानवाक्येभ्यः समुत्पद्यमानज्ञानेन श्रुतशब्दवाच्यतामास्कन्दता निर्वृत्ता परमप्रकर्षं प्रतिपद्यमाना स्वार्थानुमानज्ञानलक्षणया चिन्तया निर्वृत्तां चिन्तामयीं भावनामारभेत । सा च प्रकृष्यमाणा प्रकर्षपर्यन्तं सम्प्राप्ता योगिप्रत्यक्षं जनयतीति कथमस्यावरणापायप्रभवत्वमिति । तेऽपि न यथावस्थितदर्शिनः । क्षणिकत्वनैरात्म्यादिभावनायाः श्रुतमय्याश्चिन्तामय्याश्च मिथ्यारूपत्वात् । न च मिथ्याज्ञानस्य परमार्थविषययोगिज्ञानजनकत्वम् । अतिप्रसक्तेः । यथा च न क्षणिकत्वनैरात्म्यादिकं वस्तुनस्तथाग्रे वक्ष्यते । किं च निखिलप्राणिनां सुगतवत्तथाविधभावनावशात् योगिज्ञानोत्पत्तिः किं न स्यात् । तेषां तथाभूतभावनाया अभावाच्चेत् । ननु प्रतिपन्नतत्त्वानां प्रवृत्तमनसां सर्वेषां सुगतभावनाया समाना भावनैव कुतो न स्यात् । प्रतिबन्धककर्म्मसद्भावाच्चेत् । तर्हि भावनाप्रतिबन्धककर्म्मापाये योगिज्ञानोत्पत्तिरपि स्वीकर्त्तव्या ।

तस्मात् केवलसूत्रे संसूत्रितमावृत्तिक्षयापेक्षम् ॥
इत्येतद्युक्तिवशाद्विशेषणं सिद्धिमधिरूढम् ॥ ३२४ ॥

केवलाख्यं प्रत्यक्षं न तथा सर्वज्ञसत्तावेदकं किमपि मानं नेति वदतो मीमांसकस्य विस्तरशो मतनिर्देशः ।

अत्राह मीमांसकवावदूकः

प्रत्यक्षमस्तीह न केवलाख्यम् ॥
सर्वज्ञसद्भावसमर्थकं य-
न्न युज्यते किञ्चिदपि प्रमाणम् ॥३२५॥

---

१ न्यायबिन्दु. पृ. २० पं. ९. २ 'आरभते' इति म. पुस्तके पाठः ।
३ 'भावनाप्रवृत्त' इति प म पुस्तकयोः पाठः ।

तथा हि ।

प्रत्यक्षं नैव तावत्कलयति सकलज्ञस्य सत्तां कथंचि
लिङ्गं नैवास्ति यस्मादनुमितिरुदयं प्राप्य तां ज्ञापयेच्च ॥
नित्यो वा नश्वरो वा गमयति न हि तामागमोऽप्यत्र कश्चिन्
कर्तुं न्यप्ति न तस्यामुपमितिमतिरप्येति सामर्थ्यमुद्राम् ॥३३६॥

अथापत्तिनापि सर्वज्ञसत्तासिद्धौ सक्ता लक्ष्यते काचिदत्र ॥
तस्माद्भावग्राहकाणामयुक्ते सर्वज्ञस्याभाव एवास्तु युक्तः ॥३३७॥

तथा हि । प्रत्यक्षस्य तावत्प्रतिनियतासन्नरूपादिगोचरचारित्वेन परसन्तानवर्तिसंवेदनमात्रेऽपि शक्तिर्न सम्भवति । किं पुनरनन्तातीतानागतवर्तमानसूक्ष्मान्तरितादिस्वभावसकलपदार्थसाक्षात्कारिसंवेदनाध्यासितपुरुषविशेषपरिच्छेदे । न खलु निखिलपदार्थग्रहणं विना प्रत्यक्षेण तत्साक्षात्कारिग्रहणमुपपद्यते । ग्राह्याग्रहणेन तन्निष्ठग्राहकत्वस्याप्यग्रहणात् । लिङ्गस्यापि सर्वज्ञानुमानजनकस्य धर्मिसिद्धौ सत्यां सिद्धिः स्यात् । धर्मिणश्च सिद्धिः प्रत्यक्षेणानुमानेन वा । न प्रत्यक्षेण । अतीन्द्रियज्ञानशालिन्यतीन्द्रिये धर्मिणि प्रत्यक्षस्याप्रवृत्तेः । प्रवृत्तौ वा प्रत्यक्षेणैवास्य प्रतिपन्नत्वात् किमत्रानुमानपरिश्रमेण । नाप्यनुमानेन, हेतोः पक्षधर्मतानिश्चयमन्तरेण धर्मिनिश्चायकस्यानुमानस्यैवाप्रवृत्तेः । न चानिश्चिते धर्मिणि हेतोः पक्षधर्मत्वनिश्चयः सम्भवति । नाप्यनिश्चितं पक्षधर्मत्वे हेतुः प्रतिनियतसाध्यसिद्धिनिबन्धनमिति । किंचाविशेषेण सर्वज्ञः कश्चित्साध्यते विशेषेण वा । तत्राद्यपक्षे विशेषतोऽर्हत्प्रणीतागमाश्रयणं भवतामनुपपन्नम् । द्वितीयपक्षे तु हेतोरसाधारणानैकान्तिकत्वम् । निराकृतभवदभिमतपरसर्वज्ञस्याभावेन सपक्षे वृत्त्यसम्भवात् । अन्यच्च, यतो हेतोः प्रतिनियतोऽर्हन् सर्वज्ञः साध्यते तत एव तथागतोऽपि तथाविधः साध्यताम् । विशेषाभावात् । तन्नानुमानेनापि सर्वज्ञसत्तासिद्धिः । नाप्यागमेन नित्येन, कार्यकार्ये तत्प्रामाण्यप्रसिद्धेः । यश्च हिरण्यगर्भं

प्रकृत्य 'स सर्ववित्स लोकवित्' इत्यादिरागमस्तस्यापि कर्मार्थवादप्रधानत्वेन सकलज्ञविधायकत्वानुपपत्तेः । नापि सकलज्ञस्यानुवादकोऽसौ । पूर्वमन्यैः प्रमाणैरबोधितस्य तस्यानुवदितुमशक्यत्वात् । अनादिश्चागमस्ततः कथमादिमान् सर्वज्ञस्तदर्थः स्यात् । विरोधात् । नश्वरेणागमेन सर्वज्ञप्रणीतेन पुरुषान्तरप्रणीतेन वा तत्सिद्धिः । प्रथमपक्षेऽन्योन्याश्रयः । सर्वज्ञसिद्धौ हि तत्प्रणीतत्वेनागमस्य प्रामाण्यसिद्धिस्तत्सिद्धौ चातः सर्वज्ञसिद्धिरिति । पुरुषान्तरप्रणीतस्य चागमस्याप्रमाणभूतत्वात् कथं ततस्तन्निश्चयः । तथाभूतादप्यतः सर्वज्ञनिश्चये स्ववचनादेव तन्निश्चयः किन्न स्यादविशेषात् । न ह्यप्राप्तप्रमाणभावस्य पुरुषान्तरवाक्यस्य स्ववचनात्कश्चिद्विशेषः प्रतीयते । तन्नागमेनापि तत्सिद्धिः । नाप्युपमानेन, तस्य सदृशपदार्थग्रहणनान्तरीयकत्वात् । गवोपमानवत् । न च सर्वज्ञसदृशः कश्चिज्जगति प्रतीयते । सर्वज्ञाप्रतीतौ तत्सदृशप्रतीतेरनुपपत्तेः । नाप्यर्थापत्त्या तत्प्रतीतिः । निखिलार्थज्ञसत्तामन्तरेणानुपपद्यमानस्य षट्प्रमाणप्रमितस्य कस्यचिदर्थस्यासम्भवात् । न च धर्म्माद्युपदेशकरणान्यथानुपपत्त्या बुद्धादीनामखिलज्ञता भविष्यतीत्यभिधानीयम् । तेषां तदुपदेशकरणस्य व्यामोहादेवोपपद्यमानत्वात् । द्विविधो ह्युपदेशो व्यामोहपूर्वकः सम्यग्ज्ञानपूर्वकश्च । तत्र व्यामोहपूर्वको यथा स्वप्नोपलब्धार्थोपदेशः । सम्यग्ज्ञानपूर्वको यथा मन्वादीनां सकलार्थज्ञानोदयकारणवेदमूलो धर्म्माद्यशेषार्थोपदेशः । ते हि निखिलपदार्थज्ञानोत्पत्तिहेतोर्वेदादाविर्भूतशुद्धबोधा धर्म्माद्यशेषपदार्थसार्थमुपदिशन्ति । न पुनः सुगतादयः । अन्यथा मन्वाद्युपदेशवत्तदुपदेशोऽपि त्रयीविद्भिराश्रीयेत । न च तैरसावाश्रितः । ततो व्यामोहादेवासौ तद्विषयस्तैः कृतः इत्यवसीयते । यदाह भट्टः । "सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ॥ दृष्टो न चैकदेशोऽस्ति लिङ्गं यो वानुमापयेत् ॥ १ ॥" (एकदेश इति गम्यगमकभाव-

१ मी. श्लो, वा. सू. २ श्लो. ११७.

समुत्पादनव्याख्यात्मक एकदेशोऽत्र दृष्टो नास्तीति भाव ।) "न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः । न च मन्त्रार्थवादानां तात्पर्यमवकल्पते ॥ २ ॥ न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते ॥ न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः ॥ ३ ॥ अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् ॥ कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥४॥ अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते । प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः ॥ ५ ॥ सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ॥ कथं तदुभयं सिद्ध्येत्सिद्धमूलान्तरादृते ॥ ६ ॥ असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् ॥ सर्वज्ञमवगच्छन्तः स्ववाक्यात्किं न जानते ॥ ७ ॥ सर्वज्ञसदृशं किंचिद्यदि पश्येम सम्प्रति ॥ उपमानेन सर्वज्ञं जानीयाम ततो वयम् ॥ ८ ॥ उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः ॥ अन्यथा नोपपद्येत सर्वज्ञो यदि नाभवत् ॥ ९ ॥ बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः ॥ उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् ॥ १० ॥ ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदाम् ॥ त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः ॥११ ॥" इति न च प्रमाणान्तरं सर्वज्ञसत्तासाधकं सम्भवति । तथा चेत्यनुमानं तत्साधनाय लब्धावसरम् । न च कश्चित्पुरुषविशेषः सर्वज्ञोऽस्ति सदुपलम्भकप्रमाणपञ्चकागोचरचारित्वात् । य इत्थं स इत्थं यथा वान्ध्येय इति । अतोऽप्यनुमानात् प्रसिद्ध्यति तदभावः । तथाहि विवादविषयापन्ने देशकाले च प्रत्यक्षप्रमाणमद्यत्वेऽर्वाचीनप्रत्यक्षप्रमाणग्राह्यसजातीयार्थग्राहकं तद्विजातीयसूक्ष्मार्थग्राहकं न भवति प्रत्यक्षप्रमाणत्वात् । यदेव तदेव यथाद्यत्वेऽर्वाचीनमत्यक्षप्रमाणमिति । ननु गृध्रवराहपिपीलिकादीनां चक्षुःश्रोत्रघ्राणादिषु दूरस्थितरूपशब्दगन्धादिग्रहणलक्षणोऽतिशयो दृश्यते । तथाहि " द्विकरतलविनमत्कपोलपाली लब्धवयापहता रथो पुरभाम्रि ॥

---

१ म प्यासुत ।

योजनशतवर्त्तिनीमपि द्राक् संपातिः प्रविलोकयाञ्चकार ॥ १ ॥ सत्यपि पशुसंचयेऽपरास्मिन्करिनिकरस्य तुरङ्गहेषितानि ॥ सहसैव दवीयसोऽपि देशान्मूर्च्छन्ति श्रुतिकोटरेषु कामम् ॥२॥ आघ्राय च वस्तु समाश्रगन्धं त्वनुतस्तस्य बिलात्प्रपत्य साधोः ॥ किल कुलमखिलं पिपीलिकानां पातालादपि तूर्णमुच्चचाल ॥ ३ ॥ " ततश्च तद्वत् कचित्पुरुषविशेषे चक्षुरादीनां विषयान्तरग्रहणलक्षणो ह्यतिशयः सम्भाव्येत । प्रज्ञामेधादिभिश्च नराणामतिशयदर्शनात् । कस्यचिदतीन्द्रियार्थद्रष्टृत्वेनाप्यतिशयः स्यादिति । अत्रोच्यते । योऽपि गृध्रादिचक्षुरादीनामतिशयो दृष्टः सोऽपि स्वार्थापरित्यागेन दूरसूक्ष्मादिदृष्टौ दृष्टो न रूपादौ श्रोत्रादेः । चक्षुरादेरपि स्वार्थापरित्यागेनैवातिशयः स्यात् । तदुक्तम् । "यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ॥ दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥१॥" इति । यश्च प्रज्ञामेधादिभिर्नराणामतिशयो दृष्टः सोऽपि नियतविषयस्तोकस्तोकान्तरत्वेनैव न विषयान्तरे नापि प्रकर्षपर्यन्तगमनेन । उक्तं च, "येऽपि सातिशया दृष्टाः प्रज्ञामेधाबलैर्नराः ॥ स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥ १ ॥ प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन् ॥ सजातीरनतिक्रामन्नतिशेते परान्नरान् ॥ २ ॥ एकशास्त्रविचारेषु दृश्यतेऽतिशयो महान् ॥ न च शास्त्रान्तरज्ञानं तन्मात्रेणैव लभ्यते ॥ ३ ॥ ज्ञात्वा व्याकरणं दूरबुद्धिः शब्दापशब्दयोः ॥ प्रकृष्यते न नक्षत्रतिथिग्रहणनिर्णये ॥ ४ ॥ ज्योतिर्विच्च प्रकृष्टोऽपि चन्द्रार्कग्रहणादिषु ॥ न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति ॥५॥ तथा वेदेतिहासादिज्ञानातिशयवानपि ॥ न स्वर्गदेवतापूर्वप्रत्यक्षीकरणे क्षमः ॥६॥ दशहस्तान्तरं व्योम्नि यो नामोत्प्लुत्य गच्छति ॥ न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि ॥ ७ ॥" इति । प्रसङ्गविपर्ययाभ्यां च सर्वज्ञज्ञानस्य निःशेषार्थविषयत्वं बाध्यते ।

---

१ मी. श्लो वा. सू २ श्लो. ११४.

तथाहि सर्वज्ञस्य ज्ञानं यदि प्रत्यक्षमुपगम्यते तदा तद्धर्मादिग्राहकं न स्यात्। विद्यमानोपलम्भनत्वात्। विद्यमानोपलम्भनं तत्सत्सम्प्रयोगजत्वात्। सत्सम्प्रयोगजं तत्प्रत्यक्षशब्दवाच्यत्वादस्मदादिप्रत्यक्षवत्। अथ तद्धर्मादिग्राहकं स्वीक्रियते। न तर्हि प्रत्यक्षम्। अविद्यमानोपलम्भनत्वात्। अविद्यमानोपलम्भनं तदसत्सम्प्रयोगजत्वादसत्सम्प्रयोगजं तत्प्रत्यक्षशब्दवाच्यत्वादिति। तदेवं धर्मज्ञत्वनिषेधसिद्धौ सत्यामन्याशेषार्थप्रत्यक्षत्वेऽपि न प्रेरणाया प्रामाण्यं प्रतिहन्यते। धर्मे तस्या एव प्रामाण्यात्। तथा चाभ्यधायि, "सर्वप्रमातृसम्बन्धिप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः ॥१॥ धर्मज्ञत्वनिषेधस्तु केवलोऽत्रोपयुज्यते॥ सर्वमन्यद्विजानंस्तु पुरुषः केन वार्यते ॥२॥" इति। किं च कथं धर्मादिग्राहकज्ञानस्य समुत्पत्तिः। अभ्यासादिति चेत्, अभ्यस्यमानं हि ज्ञानं प्रतिसमयं क्रमेण परमप्रकर्षपर्यन्तमासाद्य धर्मादीन्परिच्छिनत्ति। तुच्छमेतत्। सामान्यतः सदेव हि कश्चिद्वस्तुनि ज्ञानमभ्यासात्प्रकर्षमासादयत्प्रसिद्धम्। धर्मादौ च सामान्यतो ज्ञानं चक्षुरादिजनितमनुमानाविर्भूतमागमप्रभवं वाऽङ्गीक्रियते। नाद्यः पक्षः। चक्षुरादीनां प्रतिनियतरूपादिविषयत्वेन तज्जनितज्ञानस्यापि तत्रैव प्रवृत्तेः। अनुमानाविर्भूतं तदित्यपि नोपपन्नम्। धर्मादेरतीन्द्रियत्वेन तज्ज्ञापकलिङ्गस्य तेन सम्बन्धासिद्धेरसिद्धसम्बन्धस्य चाज्ञापकत्वात्। आगमप्रभवं तदित्यप्ययुक्तम्। यतोऽसावागमोऽसर्वदर्शिप्रणीतोऽतीन्द्रियज्ञानवत्प्रणीतो वा स्यात्। आद्यपक्षे, नास्य प्रामाण्यम्। अतीन्द्रियार्थानिश्चयपूर्वकत्वात्। मधुरतरचारुचारिसंचारमाराङ्गनाहाराभिरामरम्भाप्रभृतिप्रगुणक्वणन्मणिकिङ्किणीक्वाणकन्दलितमृदङ्गवेणुवीणास्वनसुभगस्वर्गिगेयगोचरमधुरताख्यायित्वदुपदेशवत्। द्वितीयपक्षे तु चक्रकम्। अतीन्द्रियार्थज्ञाने सिद्धे हि तद्वत्पुरुषप्रणीतागमसिद्धिस्तत्सिद्धौ च तज्ज्ञाना-

1 प्रचुरचारि ' इति भ पुस्तके पाठ ।

भ्याससिद्धिरिति । अथ स्यादेव यद्येक एव कश्चिदतीन्द्रियदर्शी स्वीकृतः स्यात् । यावता रात्रिन्दिवपरम्परावदनादिरयमतीन्द्रियदर्शिनां सन्तान. । ततश्च पूर्वपूर्वातीन्द्रियदर्शिप्रतिपादितागमोद्भूतधर्मादिज्ञानमभ्यस्यन्पाश्चात्यः पुमानतीन्द्रियदर्शी सम्पद्यते । ततो नोक्तदोपानुपङ्गः । अनुमानेनापि वेद्यन्त एव धर्मादयोऽतीन्द्रियेन्द्रियवत् । अथार्थोपलम्भान्यथानुपपत्तिरूपार्थापत्तेरिन्द्रियादिगतिर्नानुमानादिति चेत् । न । अर्थापत्तेरनुमानादनर्थान्तरत्वेन प्रतिपादनात् । अस्तु वासौ ततो भिन्ना । तथापि तया ज्ञास्यन्त एव धर्मादय । न खल्वर्थापत्तावनुमाने वा तात्पर्यमपि तु ज्ञानमात्र एवेति । तदप्यवल्गु । अस्पष्ट ह्यनुमानागमज्ञानमभ्यस्यमानमपि न तत्साक्षात्कारि भवितुमर्हति । न हि धूमानुमानज्ञानं ज्योतिःशास्त्रज्ञानं वाभ्यस्यमानमपि पावकग्रहादिसाक्षात्कारि कस्यचिद्दृष्टम् । एतत्तु स्यादनभ्यस्तं तत्कतिपयकालकलाविलम्बेनाभ्यस्तं तु सपदि समुन्मीलतीति । न च वचनीयं विलोक्यत एव कामशोकाद्युपप्लुतचेतसामस्पष्टस्यापि ज्ञानस्य वैशद्यम् । तदुक्तम् । " **कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ॥ अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥ १ ॥** " इति तद्वदस्याप्युपप्लुतत्वप्रसक्ते । किं च केवलज्ञानस्य सकलार्थग्रहणं सकलत्वं प्रधानभूतकतिपयार्थग्रहणं वा । प्रथमपक्षे क्रमेण तद्ग्रहणं युगपद्वा । न तावत्क्रमेण । अतीतानागतवर्त्तमानार्थाना परिसमाप्त्यभावतस्तज्ज्ञानस्याप्यपरिसमाप्ते. सर्वज्ञत्वायोगात् । नापि युगपत् , परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवात् । सम्भवे वा प्रतिनियतार्थस्वरूपप्रतीतिविरोध. । एकक्षण एव च समस्तार्थग्रहणादकिञ्चिज्ज्ञोऽसौ द्वितीयक्षणे प्रसज्येत । परसन्तानवर्त्तिरागादिसाक्षात्करणाद्रागादिमानप्येप प्राप्नुयात् । इतरथा सर्वार्थसाक्षात्करणविरोधः । नापि प्रधानभूतकतिपयार्थग्रहणं केवलज्ञानस्य सकलत्व युक्तम् । इतरार्थव्यवच्छेदेनैतेपामेवाभिमतप्रयोजननिष्पादित्वात्प्राधान्यमित्येवं हि

निश्चये समस्तार्थपरिज्ञाने सत्येवोपपद्यते नान्यथा । न च समस्तार्थज्ञानं सम्भवतीत्यनन्तरमेवोपपादितम् । अपि च सर्वज्ञोऽतीतकालाद्याकलितं वस्तु स्वेन रूपेण प्रतिपद्यते । किं वा वर्तमानतयैव । प्रथमपक्षे नास्य प्रत्यक्षतानुपपत्तिः । अवर्तमानवस्तुविषयत्वात् । द्वितीयपक्षे तु तज्ज्ञानस्य भ्रान्तत्वप्रसक्तिः । अन्यथास्थितस्यार्थस्यान्यथात्वेन ग्राहकत्वात् । अपि चेदमिदानीमिह सन्नित्यस्या सकलविदः संविदि वस्तुसत्तावत्प्रागभावप्रध्वंसौ प्रतिभासेते न वा । यदि प्रतिभासेते । तदा युगपत्क्रमेण वा । युगपच्चेत् । तर्हि तदैव वस्तुनोऽनुत्पन्नोत्पन्नप्रध्वस्तत्वेन प्रतिभासाद्युगपदजातजातमृतव्यपदेशापत्तिः । यत्खलु येन स्वरूपेण प्रतिभासते तत्तेनैव व्यपदेशमाप्नोति । यथा नीलं नीलतया । प्रागभावसत्त्वप्रध्वंसरूपतया प्रतिभासते च सकलज्ञस्य निखिलं वस्त्विति । यथा च प्रतिनियतेन स्वरूपेण वस्तुप्रतिपत्तेरभावात्सुव्यवस्थितास्यासकलज्ञता । तन्न युगपत्प्रतीतिः । नापि क्रमेण, प्रागभावप्रध्वंसयोरनादित्वानन्तत्वाभ्यां परिसमाप्स्यमानतस्तज्ज्ञानस्याप्यपरिसमाप्तेः सर्वज्ञतायोगात् । अथ वस्तुसत्तावत्प्रागभावप्रध्वंसौ न प्रतिभासेते । तदा कथमसौ त्रिभुवनभवनान्तर्गतवस्तुस्तोमाभिभावककेवलालोककलितः स्यादिति । अन्यच्च सर्वज्ञकालेऽप्यसर्वज्ञैः सर्वज्ञो ज्ञातुं न पार्यते । सर्वज्ञज्ञानग्राह्यसमस्तपदार्थपरिज्ञानाभावात् । तदुक्तम् "सर्वज्ञोऽयमिति ह्येतत्तत्कालेऽपि बुभुत्सुभिः ॥ तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १ ॥ कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ॥ य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यते ॥ २ ॥ सर्वज्ञो नावबुद्धश्च येनैव स्यान्न तं प्रति ॥ तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ ३ ॥" इति । एवं च व्यवस्थितमिदम्-

बन्ध्यास्तनन्धयनिभं सकलार्थवेदि
सद्भावसाधनपटुप्रमितेरयुक्तेः ॥

---

१ मी श्लो वा स २ श्लो १२४।१३५।१३६

त्रैलोक्यवर्तिनिखिलार्थमितौ समर्थं
ज्ञानं ततोऽस्ति न हि केवलनामधेयम् ॥ २३८ ॥

इत्थं मिथ्यामतितिमिरपरैस्तस्करैर्लुण्ठ्यमाने
त्रैलोक्यार्थप्रकटनपटावत्र सर्वज्ञसत्त्वे ।
तेषां सम्प्रत्यमलमतयो निग्रहार्थं यतन्ते
स्याद्वादज्ञाः स्फुरितनिशितन्यायशस्त्रप्रहारैः ॥ २३९ ॥

पूर्वोक्तमीमांसकमतस्य विस्तरशः खण्डनम् ।

तथा हि यत्तावदवादि प्रत्यक्षं नैवेत्यादि । तदसत्यम् । यतोऽर्वाग्दर्शिप्रत्यक्षापेक्षयेदमुच्यते योगिप्रत्यक्षापेक्षया वा। प्रथमपक्षे सिद्धसाध्यता । अर्वाग्दर्शिप्रत्यक्षस्य सर्वज्ञसत्ताग्राहकत्वेनास्माभिरप्यनङ्गीकारात् । द्वितीयपक्षे तु माता मे वन्ध्येत्यादिवत्स्ववचनविरोधः । योगिप्रत्यक्षेण योगी न गृह्यतेऽतोऽसौ नास्तीह कस्त्वत्परो ब्रूयात् । अथ स्यादेवं यदि प्रत्यक्षमभ्युपगम्येत्थमुच्येत । यावता तस्याभावादेव तेन तद्ग्रहणं वार्यते । तदसत् । तदभावस्याद्याप्यसिद्धेः । भावोऽपि तस्य कुतः सिद्ध इति चेत् । मा सिधत्तावत् । तथापि सर्वज्ञसत्तायाः प्रत्यक्षेणाग्रहणं सन्दिग्धं भविष्यति । अनुमानं तु तद्ग्राहकं विद्यत एव । तथा हि कश्चिदात्मा समस्तवस्तूनि साक्षात्करोति तद्ग्रहणस्वाभाव्ये सति प्रध्वस्ततदावरणत्वात् । यद्यद्ग्रहणस्वाभाव्ये सति प्रध्वस्ततदावरणं तत्तत्साक्षात्करोति । यथा व्यपगततिमिरावरणं चक्षू रूपम् । तद्ग्रहणस्वाभाव्ये सति प्रध्वस्ततदावरणश्च कश्चिदात्मा । ततः समस्तवस्तूनि साक्षात्करोतीति । न तावदत्रात्मनः समस्तवस्तुग्रहणस्वाभाव्यं हेतोर्विशेषणमसिद्धम् । चोदनाबलान्निखिलार्थज्ञानोत्पत्त्यन्यथानुपपत्तेः सामस्त्येन व्याप्तिज्ञानान्यथानुपपत्तेश्च भवता तस्य तत्सिद्धेः । सोऽयं सकलज्ञापलापि चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमिति स्वयं ब्रुवाणो धूमाद्यनुमानेषु सामस्त्येन व्याप्तिज्ञानं च स्वीकुर्वाणः सकलार्थग्रहणस्वभावता-

मात्मन प्रतिनिपत्तीति कथ सुधियामनवधानार्ह । प्रध्वस्ततदावरणत्व च प्रागेव प्रसाधितत्वान्नासिद्धम् । यच्च नाप्यनिश्चितपक्षधर्मत्वे हेतु प्रतिनियतसाध्यसिद्धिनिबन्धनमित्यभ्यधायि । तदपि न साधु । न हि सर्वज्ञोऽत्र धर्मित्वेनोपात्तो येनास्यासिद्धेरय दोष स्यात् । किं तर्हि कश्चिदात्मा तत्र चाविप्रतिपत्ति । न चापक्षधर्मस्यापि हेतोरगमकत्वम् । " पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा ॥ सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते " इति स्वयमभिधानात् । यच्चोक्तमविशेषेण सर्वज्ञ कश्चित्साध्यते विशेषेण वेत्यादि । तत्राविशेषेणेति न पक्ष । सामान्यत सर्वज्ञसिद्धावेव साम्प्रत विप्रतिपत्ते । विशेषविप्रतिपत्तौ तु दृष्टेष्टाविरुद्धवाक्यत्वादर्हत एवाशेषार्थज्ञत्व सेत्स्यति । तदित्थ सिद्ध सकलार्थगोचरोऽनुमानसद्भाव । आगमोऽपि सर्वज्ञसाधक समस्त्येव । स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यमिति । पौरुषेयागमस्य च प्रामाण्यमागमप्रमाणविचारावसरे समर्थयिष्यते । उपमानमपि सर्वज्ञवेदिसद्भावावेदक विद्यत एव । हस्तताशेषसमयपरिच्छेदादिना समुपलब्धसर्वज्ञस्य कस्यचित्पुरुषस्तदन्योपलब्धौ तत्सादृश्यप्रतीतिसिद्धे । अगृहीतगोगवयपिण्डस्य च गव्यप्युपमान न सम्भवत्येव । न चैतावता गोस्तद्गोचरातिक्रान्तत्वम् । अनभ्युपगमादिति । अर्थापत्तिरपि समस्ति कश्चिदतीन्द्रियदर्शी चन्द्रोपरागाद्युपदेशान्यथानुपपत्तेरित्यादिका तद्ग्राहिका सम्भवत्येव । एव च नाप्यागमेनेत्यादि प्रतिक्षिप्तम् । तथा चैतन्ये मोक्तस्य सदुपलम्भकप्रमाणपञ्चकागोचरचारित्वादिति हेतोरसिद्धतादौस्थ्यमुपस्थितम् । यदपि विवादविषयापन्ने देशे काले च प्रत्यक्षप्रमाणमित्याद्यनुमानमुपन्यस्तम् । तदपि यथाभूतमिन्द्रियादिजनित प्रत्यक्षमिदानीमत्र च यथाभूतस्याविप्रकृष्टस्य ग्राहक तद्विजातीयस्य विप्रकृष्टस्याग्राहक वा दृष्ट देशान्तरे कालान्तरेऽपि तथाभूतमेव प्रत्यक्ष तथाभूतस्यार्थस्य ग्राहकमन्यथाभूतस्याग्राहक चेति साध्येत अन्यथाभूत वा । यदि तथाभूतम् । तदा सिद्धसाध्यता । अन्यथाभूत चेत्तथा

साध्यते। तर्ह्यप्रयोजको हेतुः स्यात्। यथाभूतं हि प्रत्यक्षं यथाभूतस्यार्थस्य ग्राहकमग्राहकं वा दृष्टं तथाभूतस्यैव प्रत्यक्षस्य तथाविधार्थस्य ग्राहकत्वेऽग्राहकत्वे वा स्यात्प्रत्यक्षप्रमाणत्वस्य हेतोः प्रयोजकत्वं नान्यथाभूतस्योत्पत्तिमत्त्वादेरिव। तथा हि यादृग्भूतानां प्रासादादीनामुत्पत्तिमत्त्वादिबुद्धिमत्कारणपूर्वकं दृष्टं तादृग्भूतानामेव जीर्णप्रासादादीनां बुद्धिमत्कारणपूर्वकं तत्तस्य प्रयोजकं नान्यादृग्भूतानां भूधरादीनाम्। यदि पुनरन्यथाभूतस्यापि प्रत्यक्षप्रमाणस्य प्रत्यक्षप्रमाणत्वसाधनं यथोक्तसाध्यस्य प्रयोजकं स्यात्तदा तादृग्भूतानां भूधरादीनामप्युत्पत्तिमत्त्वादि बुद्धिमत्कारणपूर्वकत्वस्य प्रयोजकं भवेत्। तथा च समस्तस्य जगतः कर्तृसिद्ध्या ज्ञातृसिद्धिः सर्वज्ञाभावो न स्यात्। अथ नोत्पत्तिमत्त्वादावप्रयोजकत्वं ब्रूमो दूषणान्तरैरस्य दुष्टत्वात्। तदसत्। अस्य हेतोर्वाचस्पतिना विशिष्टमुत्पत्तिमत्त्वमसिद्धं पृथिव्यादिषु उत्पत्तिमत्त्वमात्रं त्वप्रयोजकम्। विशेषप्रयुक्तव्याप्त्युपजीवित्वेन स्वाभाविकप्रतिबन्धवैकल्यात्। स्वाभाविकप्रतिबन्धवतश्च हेतोरनुमानाङ्गत्वात्। इतरथोपाध्यायदर्शनादेरपि शिष्याद्यनुमापकत्वप्रसङ्गादिति वदता कणिकायामप्रयोजकत्वेनाभिधानात्। किं चोत्पत्तिमत्त्वादौ कुतोऽप्रयोजकत्वस्यावचनं किमतद्दूषणमेव हेतोर्न भवति। किं वात्रैतन्न विद्यते। यद्वा सदप्युपेक्ष्यते। नाद्यः पक्षः। तत्पुत्रत्वादेः सम्यग्घेतुत्वप्रसङ्गात्। न द्वितीयः। तत्पुत्रत्वादिनास्य तुल्यकक्षत्वात्। अथ तत्र शाकाद्याहारपरिणामस्योपाधेः सत्त्वाद्युक्तमप्रयोजकत्वम्। नन्वत्राप्यक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकत्वमुपाधिरस्त्येव। नापि तृतीयः। एवमप्युत्पत्तिमत्त्वादेरप्रयोजकत्वे दृष्टान्तत्वानपायात्। अथ तथाभूतमेव प्रत्यक्षं तथा प्रसाध्यते। न च सिद्धसाधनम्। सर्वप्रत्यक्षाणामीदृशत्वादित्युच्यते। नन्वीदृशमस्तीत्यर्वाग्दर्शिना कुतोऽवसीयते। ननु देशान्तरकालान्तरभाविप्रत्यक्षं समानं सदिन्द्रियसम्प्रयोगजत्वादत्रत्येदानीन्तनप्रत्यक्षवदित्यतोऽनुमानादेतदवसीयत इति चेत्। अत्रापि स्तोकस्तोकान्तरत्वेन

मनागपि विशेषो नास्तीति सर्वप्रत्यक्षाणामीदृशत्वं साध्यतेऽतीन्द्रियार्थाविषयत्वेन वा विशेषो नास्तीति । प्रथमपक्षेऽनैकान्तिको हेतुः । गृध्रवराहपिपीलिकादीनां प्रत्यक्षेषु स्तोकस्तोकान्तरत्वेनास्मदादिप्रत्यक्षविलक्षणेषु सन्निन्द्रियसम्प्रयोगजत्वस्य हेतोः सद्भावात् । अथातीन्द्रियार्थाविषयत्वेन विशेषाभावात् सर्वप्रत्यक्षाणामीदृशत्वं प्रसाध्यते । तर्हि तस्मादेव सर्वप्रत्यक्षाणामतीन्द्रियार्थविषयत्वाभावसिद्धेरेतदेवास्तु । प्रथमानुमानोपन्यासे च द्वितीयमनुमानमुपन्यस्यमानं हेत्वन्तरं नाम निग्रहस्थानं स्यात् । अथ यदायमेव हेतुः प्रागुपादीयते तदायमदोष इति चेत्, न । यतस्तदाप्ययमस्मान्प्रत्यसिद्धो हेतुः । विवादास्पदीभूतस्य प्रत्यक्षस्यास्माभिः सदिन्द्रियसम्प्रयोगजत्वानभ्युपगमात् । अथ विवादास्पदीभूतं प्रत्यक्षं सन्निन्द्रियसम्प्रयोगजं प्रत्यक्षशब्दवाच्यत्वादस्मदादिप्रत्यक्षवदित्यतोऽनुमानात्तस्य सन्निन्द्रियसम्प्रयोगजत्वं प्रसाध्यत इत्युच्यते । तत्रापि यथाभूतस्य प्रत्यक्षशब्दवाच्यस्य सन्निन्द्रियसम्प्रयोगजत्वं दृष्टं तथाभूतस्यैव सदिन्द्रियसम्प्रयोगजत्वं प्रसाध्येतान्यथाभूतस्य वा । यदि तथाभूतस्य । तदा सिद्धसाध्यता । अथान्यथाभूतस्य, तदा शुचित्वमित्यादिवदप्रयोजको हेतुः स्यात् । तथाभूतस्यैव तत्साध्यते न च सिद्धसाधनं सर्वप्रत्यक्षाणामीदृशत्वादिति चेत् । ननु कुतस्तदीदृशत्वसिद्धिः । सन्निन्द्रियसम्प्रयोगजत्वादिति चेत् । नन्वयमस्मान्प्रत्यसिद्धो हेतुः । किं च सर्वप्रत्यक्षाणामीदृशत्वसिद्धौ विवादास्पदीभूतस्य प्रत्यक्षस्य सदिन्द्रियसम्प्रयोगजत्वसिद्धिस्तत्सिद्धौ च सर्वप्रत्यक्षाणामीदृशत्वसिद्धिरिति परस्पराश्रयदूषणं दुष्परिहारं स्यात् । तदेवं सर्वप्रत्यक्षाणामीदृशत्वासिद्धिः । यथाभूतस्यार्थस्य ग्राहकं दृष्टं तथाभूतस्यार्थस्य ग्राहकमिति साधने च सिद्धसाधनमिति स्थितम् । यदप्यन्यदुक्तं यत्राप्यतिशयो दृष्ट इत्यादि । एतदपि कुतः प्रमाणादवगतम् । अथ विवादास्पदीभूताश्चक्षुरादयो न विषयान्तरे प्रवर्तन्ते चक्षुरादिशब्दवाच्यत्वादस्मदादिचक्षुरादिवत् । तथा विवादास्पदीभूता रूपादयो नेन्द्रि-

यान्तरग्राह्या रूपादिशब्दवाच्यत्वात्परिदृष्टरूपादिवदित्याभ्यामनुमानाभ्यामेतदवगम्यते । नन्वत्रापि किं यथाभूताश्चक्षुरादयो न विषयान्तरे प्रवर्त्तन्ते तथाभूता एव तथा साध्यन्ते अन्यथाभूता वा । यदि तथाभूताः । तदा सिद्धसाध्यता । अन्यथाभूताश्चेत्, तदुत्पत्तिमत्त्वादिवदप्रयोजको हेतुः । ननु तथाभूता एव चक्षुरादयस्तथा साध्यन्ते । न च सिद्धसाधनम् । सर्वचक्षुरादीनामीदृशत्वादिति चेत् । कुतस्तदीदृशत्वसिद्धिः । किमनुमानान्तरादुतास्मादेवानुमानात् । यद्यनुमानान्तरात्, तदा तत्रापि यदि मनागपि विशेषो नास्तीति सर्वचक्षुरादीनामीदृशत्वं प्रसाध्येत । तदानुमानविरुद्धः पक्षैकदेशः । गृध्रवराहपिपीलिकादीनां चक्षुःश्रोत्रघ्राणादिषु दूरादिस्वभावरूपशब्दगन्धादिग्रहणलक्षणातिशयस्य कार्यतः प्रतिपत्तेः । विषयान्तरग्रहणलक्षणातिशयाभावात्तदीदृशत्वप्रसाधनेऽनुमानान्तरादेव विषयान्तरे प्रवृत्त्यभावसिद्धेस्तदेवास्तु किं प्रकृतेनानुमानेन । तथाभ्युपगमे च हेत्वन्तरं नाम निग्रहस्थानं स्यात् । अस्मादेवानुमानात्तदीदृशत्वसिद्धिश्चेत् । अत्रापि यदि मनागपि विशेषो नास्तीति तत्साध्यते । तदा पूर्ववदनुमानविरुद्धः पक्षैकदेशः । विषयान्तरग्रहणलक्षणातिशयाभावात्तदीदृशत्वसाधने विवादास्पदीभूतानां चक्षुरादीनां विषयान्तरे प्रवृत्त्यभावसिद्धौ सर्वचक्षुरादीनामीदृशत्वसिद्धिस्तत्सिद्धौ च विवादास्पदीभूतानां चक्षुरादीनां विषयान्तरे प्रवृत्त्यभावसिद्धिरितीतरेतराश्रयः स्यात् । एवं सर्वचक्षुरादीनामीदृशत्वासिद्धेर्यथाभूताना चक्षुरादीना विषयान्तरे प्रवृत्त्यभावो दृष्टस्तथाभूतानामेव तथा साधने सिद्धसाधनमिति स्थितम् । द्वितीयेऽप्यनुमाने किं यथाभूतानां पुरुषाणामिन्द्रियान्तरेणाग्राह्या रूपादयो दृष्टा देशान्तरकालान्तरभाविनामपि तथाभूतानामेव तेषामिन्द्रियान्तरेण ग्राह्या रूपादयो न भवन्तीति प्रसाध्यतेऽथान्यथाभूतानामित्यादिदूषणं नातिवर्त्तते । अभ्युपगम्य चाक्षजत्वं सर्वज्ञज्ञानस्यातीन्द्रियार्थसाक्षात्कारित्वं समर्थितं न पुनः परमार्थतः । तज्ज्ञानस्य घातिकर्मचतुष्टयक्षयोद्भूतत्वेन समर्थ-

नात् । यदप्युक्तम् । येऽपि सातिशया दृष्टा इत्यादि । अत्रापि यथाभूतानामिदानीमत्र च प्रज्ञामेधादिभिः स्तोकस्तोकान्तरत्वेनैवातिशयो दृष्टो न त्वतीन्द्रियदर्शनात्तथाभूतानामेव देशान्तरे कालान्तरे च तथाभूतोऽतिशयः कल्पयितुं च युक्तो नान्यथाभूतानाम् । यथास्मत्सदृशानां दशहस्तादूर्ध्वमुत्प्लुत्य गच्छतामनुपलम्भात्स्मादृशानामेव दशहस्तादूर्ध्वमुत्प्लुत्य गमनं नास्तीति ज्ञायते नान्यथाभूतानां गृध्रभेरुण्डतार्क्ष्यसावक प्रकाराणाम् । तदेतेन लङ्घनदृष्टान्तः स्वमतनिघाती युक्तः भवति । नन्वस्मद्विलक्षणेषु गृध्रादिषु दशहस्तादूर्ध्वमुत्प्लवनसामर्थ्यस्य दर्शनात्तत्प्रतिषेधो न युक्त इति युक्तम् । ननु मतीन्द्रियज्ञानं कदाचिदस्मद्विलक्षणेषु दृष्टम् । अस्मद्विलक्षणानां पुरुषाणामेवाभावात् । तस्मादस्मादृशेषु दृष्टोऽतिशयो युक्तः सर्वत्र कल्पयितुमदृष्टश्च निषेद्धुमिति चेत् । अहो श्रोत्रियाः, अस्मद्विलक्षणा न सन्ति पुरुषा इत्येतद्दर्शनं कथं विचारणीयात् । यच्चोक्तं प्रसङ्गविपर्ययाभ्यां चेत्यादि । तदपि न साधु । साध्यसाधनयोर्हि व्याप्यव्यापकभावसिद्धौ हि व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको यत्र प्रदर्श्यते तत्प्रसङ्गसाधनम् । व्यापकनिवृत्तौ चावश्यम्भाविनी व्याप्यनिवृत्तिर्यत्र प्रदर्श्यते स तद्विपर्ययः । न च प्रत्यक्षशब्दवाच्यत्वसत्सम्प्रयोगजत्वविद्यमानोपलम्भनत्वधर्माधर्माग्राहकत्वानां व्याप्यव्यापकभावः क्वचित्प्रतिपन्नः । स्थानन्येवासौ प्रतिपन्न इति यदि प्रतिपाद्यते । तदसङ्गतम् । असत्सम्प्रयोगजेऽपि ज्ञाने प्रत्यक्षशब्दवाच्यत्वदर्शनात् । तथा हि, स्मरणसव्यपेक्षेन्द्रियादिजन्यं प्रत्यभिज्ञाप्रत्यक्षं कालविप्रकृष्टस्यातीततत्कालसम्बन्धित्वस्यातीतदर्शनसम्बन्धित्वस्य च ग्राहकं पुरोव्यवस्थितार्थे भवतैवाभ्युपगम्यते । प्रातिभं च ज्ञानमध्यक्षं शब्दलिङ्गव्यापारानपेक्षं श्वो मे भ्राता आगन्तेत्याकारमनागतातीन्द्रियकालविशेषेणार्थप्रतिभासं जाग्रद्दशायां स्फुटतरमनुभूयते । यच्चाकथि कथं धर्मादिग्राहकज्ञानस्य समुत्पत्तिरिति । तत्रानन्तरकारणं समस्तावरणक्षयोऽभ्यासोऽपि च परम्परया तत्कारणमुच्यते ।

यच्चास्पष्टं ह्यनुमानागमज्ञानमित्यादि जल्पितम् । तदसमीक्षिताभिधानम् । न हि सर्वथा कारणसदृशं कार्यमुपजायते । विलक्षणस्याप्यङ्कुरादेः कार्यस्य बीजादेरुत्पत्तिदर्शनात् ।

किं चात्र सिद्धरससंस्कृतजात्यताम्रखण्डादकम्रवपुषोऽप्युपजायते नो ॥
चामीकरं किमपि पिङ्गलरश्मिजालैर्बालप्रवालपटलीचटुलैर्विलासि ।२४०॥

सर्वत्र हि सामग्रीभेदात्कार्यभेदः । ततोऽत्राप्यनुमानादिज्ञानेनास्पष्टेनाप्यभ्यासादिसामग्रीसहायेन स्पष्टं यदि विज्ञानमाविर्भाव्येत । तदा को दोषः स्यात् । यदप्यभाणि । तद्वदस्याप्युपप्लवत्वप्रसक्तेरिति । तदसाम्प्रतम् । भावनाबलात् ज्ञानं वैशद्यमनुभवतीत्येतावन्मात्रेण कामाद्युपप्लुतज्ञानस्य दृष्टान्ततोपपत्तेः । न चाशेषदृष्टान्तधर्माणा साध्यधर्मिणोपादानं युक्तम् । सकलानुमानोच्छेदप्रसङ्गात् । यच्चाकल्पि. केवलज्ञानस्य सकलार्थग्रहणं सकलस्य प्रधानभूतकतिपयार्थग्रहणं वेति । तत्राद्य एव नः पक्षः । यत्तु तत्र विकल्पितं क्रमेण तद्ग्रहणं युगपद्वेति । तत्रापि युगपदिति ब्रूमः । सकलावरणप्रलये हि सहस्रमयूखवद्युगपदेव निखिलार्थद्योतकं केवलज्ञानमुज्जृम्भते । यत्पुनरत्राभ्यधायि । परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने प्रतिभासासम्भवादिति । तदपि न यौक्तिकम् । तत्र हि तेषां सकृदभावादप्रतिभासस्तत्प्रतिभासे तस्यासामर्थ्याद्वा । न तावत्सकृदभावात् । शीतोष्णाद्यर्थानां सकृत्सम्भवात् । तत्प्रतिभासे तस्यासामर्थ्यादित्यप्यसारम् । परस्परविरुद्धानामन्धकारोद्योतादीना युगपदुद्योतनसमर्थस्यैकस्यापि ज्ञानस्य संवेदनात् । सकृदेकत्र विरुद्धानामर्थानां प्रतिभासासम्भवे यत्कृतकं तदनित्यमित्यादिव्याप्तिश्च न स्यात् । साध्यसाधनतया कृतकत्वानित्यत्वयोर्विरुद्धत्वसम्भवात् । नाप्येकत्र ज्ञाने सकृत्तेषा प्रतिभासे तस्य प्रतिनियतार्थग्राहकत्वविरोधः । सकृदन्धकारोद्योतादिविरुद्धार्थग्राहिणोऽपि ज्ञानस्य प्रतिनियतार्थग्राहकत्वप्रतीतेः । यत्पुनरुक्तमेकक्षण एव समस्तार्थग्रहणादकिञ्चिज्ज्ञोऽसौ द्वितीयक्षणे प्रसज्येतेति । तदप्यसम्बद्धम् । यदि हि द्वितीयक्षणे पदार्थाना तज्ज्ञानस्य

वा सद्भावो न भवेत्तदा यदापि स्यान्न चैवम्। अनन्तत्वात्तद्द्वयस्य। न च द्वितीयक्षणे गृहीतग्राहित्वेन सर्वज्ञज्ञानस्याप्रामाण्यं वक्तुमुचितम्। गृहीतग्राहितयापि ज्ञानानां प्रामाण्यस्य समर्थितत्वात्। यच्च परसन्तानवर्त्तिरागादिज्ञानात्करणाद्रागादिमानप्येष प्राप्नुयादिति गदितम्। तदप्यपेशलम्। तथापरिणामो हि रागादिमत्त्वकारणं न तत्संवेदनमात्रम्। अन्यथा।

जीर्णा स्वादुरसा सुरेति वचनस्यार्थावबोधाद्ध्रुवं
सीधुस्वादनदोषदुष्टचरितः किं नाम नाभूद्भवान्॥
तद्वो सम्प्रति विप्रपुङ्गव गयागङ्गाप्रयागादिषु
प्रायश्चित्तपरिग्रहाय गमनं युक्तं तवेक्षामहे ॥ ३४१ ॥

इन्द्रियाजन्यत्वात्तद्बोधस्यादोषोऽयमिति चेत्। इतरत्रापि तुल्यम्। न खलु सकलज्ञानमिन्द्रियप्रभवमभ्युपगम्यते। अपि चाङ्गनालिङ्गनसेवनाद्यभिलाषस्येन्द्रियोद्रेकहेतोराविर्भावाद्रागादिमत्त्वं प्रसिद्धम्। न चासौ प्रक्षीणमोहे भगवत्यस्तीति कथं रागादिमत्त्वस्याशङ्कापि। यदप्यभ्यधायि सर्वज्ञः समस्तमतीतकालाद्याकलितं वस्तु स्वेन रूपेण प्रतिपद्यत इत्यादि। तदप्यनुपपन्नम्। यतः स्वेनैव रूपेण तत्प्रतिपद्यते सर्वज्ञः। न चैवं ज्ञानस्य प्रत्यक्षतानुपपत्तिरवर्त्तमानवस्तुविषयत्वादिति वाच्यम्। परिस्फुटतयार्थस्य ग्राहकत्वात्। परिस्फुटतयार्थस्य प्रतिभासो हि प्रत्यक्षलक्षणम्। स चेदतीतादेरप्यर्थस्यास्ति कथं न तद्ग्राहकज्ञानस्य प्रत्यक्षता। यथा चेन्द्रियप्रभवप्रत्यक्षे दूरदेशार्थग्रहणेऽपि परिस्फुटप्रतिभासित्वं न विरुध्यते। तथातीन्द्रियप्रत्यक्षस्य कालान्तरभाव्यर्थग्रहणेऽपि। न चैवमतीतादेर्वर्त्तमानतापत्तिर्वर्त्तमानार्थग्रहणग्राह्यत्वाद्वर्त्तमानार्थवदित्यभिधातव्यम्। दूरदेशार्थस्याप्यदूरदेशार्थग्रहणग्राह्यत्वाद्दूरदेशताप्राप्तेरिति। न च वाच्यमतीतादेरसत्त्वात्कथं सर्वज्ञज्ञानेन ग्रहणमिति। यतोऽतीतादेरतीतादिकालसम्बन्धित्वेनातीतादेरपि सत्त्वसम्भवात्। वर्त्तमानकालसम्बन्धित्वेन त्वतीतादेरसत्त्व-

मभिमतमेव । वर्त्तमानकालसम्बन्धित्वातीतादिकालसम्बन्धित्वयोः परस्परं विरोधात् न च वर्तमानकालसम्बन्धित्वेनासत्त्वे स्वकालसम्बन्धेनाप्यतीतादेरसत्त्वम् । अतीतादिकालसम्बन्धित्वेनासत्त्वे वर्त्तमानकालसम्बन्धित्वेनाप्यसत्त्वाद्वर्त्तमानस्याप्यसत्त्वप्रसङ्गान्निखिलशून्यतापत्तेः । न चातीतादेः सत्त्वेन ग्रहणे वर्त्तमानत्वानुषङ्गः । सकलनियतसत्त्वरूपतयैव तस्य ग्रहणात् । ननु चातीतादेस्तज्ज्ञानकाले सन्निधानाभावात्कथं प्रतिभासः । सन्निधाने वा वर्त्तमानवदिति । एतदपि व्याप्तिज्ञानेन कृतोत्तरम् । एतेनेदमिदानीमिह सदित्यस्यां सकलवेदिसंविदि वस्तुसत्तावत्प्रागभावप्रध्वंसौ प्रतिभासेते न वेत्याद्यपि प्रतिक्षिप्तम् । यथैव हीन्द्रियप्रभवप्रत्यक्षे यद्देशविशिष्टं वस्तु नीलरूपं वा भावरूपमभावरूपं वा तद्देशविशिष्टतयैव प्रतिभासते । तथैव समस्तार्थवेदिसंवेदनेऽपि यद्देशकालाकारविशिष्टं वस्तु भावरूपमभावरूपं वा तद्देशकालाकारतयैव तत्प्रतिभासते । ततः कथं युगपद्जातजातमृतव्यपदेशप्रसक्तिः । प्रतिनियतार्थस्वरूपाप्रतीतिर्वा । यतः सर्वज्ञता पुरुषविशेषस्य सुव्यवस्थिता न स्यात् । अतीतादिकालस्य हि वस्तुस्वभावतया प्रतीतौ युगपद्जातजातमृतव्यपदेशप्रसङ्गः प्रतिनियतार्थस्वरूपाप्रतीतिश्च स्यात् । न पुनर्यथाकालं तत्प्रतीताविति । यच्चान्यदवादि सर्वज्ञकालेऽप्यसर्वज्ञैः सर्वज्ञो ज्ञातुमपर्याप्त इत्यादि । तदपि न न्याय्यम् । विषयापरिज्ञाने विषयिणोऽप्यपरिज्ञानाभ्युपगमे कथं जैमिन्यादेः सकलवेदार्थपरिज्ञाननिश्चयः स्यादसकलवेदार्थविदाम् । तदनिश्चये च कथं तद्व्याख्यातार्थाश्रयणादग्निहोत्रादावनुष्ठाने प्रवृत्तिर्भवेत् । कथं वा व्याकरणादिसकलशास्त्रार्थापरिज्ञाने तदर्थज्ञतानिश्चयो व्यवहारिणाम् । यतो व्यवहारप्रवृत्तिः स्यादिति । अथैवं पर्यनुयुज्यते । पूर्वं पश्चाद्वा यदि कचित्कदाचिन्निखिलदर्शिनो विज्ञानं विश्रान्तम् । तर्हि तावन्मात्रत्वात्संसारस्य कुतोऽनाद्यनन्तता । अथ न विश्रान्तम् । तर्हि नानेन युगसहस्रेणापि सकलसंसारसाक्षात्करण-

मिति । अत्रोच्यते । किमिदं विश्रान्तत्वं नाम तज्ज्ञानस्य विवक्षितम् । किं किञ्चित्परिच्छेद्य परस्यापरिच्छेदः । सकलविषयदेशकालगमनासामर्थ्यादन्तरेऽवस्थानं वा । क्वचिद्विषये समुत्पद्य विनाशो वा । न तावत्प्राचीनः समीचीनः पक्षः । अनभ्युपगमात् । न खलु निखिलज्ञानं क्रमेणार्थपरिच्छेदकम् । युगपदशेषार्थोद्योतकत्वात्तस्येत्यनन्तरमेव निरणायि । द्वितीयपक्षोऽनभ्युपगमादेव प्रतिहतः । न हि विषयस्य देशं कालं वा गत्वा ज्ञानं तत्परिच्छेदकमिति केनाप्यभ्युपगतम् । अप्राप्यकारिणस्तस्य क्वचिद्गमनाभावात् । केवलं यथाऽनाद्यनन्ततया स्थितोऽर्थस्तथैव तत्तत्प्रतिपद्यते । तृतीयपक्षोऽप्ययुक्तः । क्वचिदेव विषये तस्योत्पत्तेरनभ्युपगमात् । समकालं समस्तवस्तुविषयतयैव तस्याविर्भावस्वीकारात् । न चैवंस्वभावस्यापि तस्य विनाशः । आत्मद्रव्यस्वरूपतया विनाशासम्भवात् । एवं च ।

उत्पत्तिस्थितिभङ्गभङ्गिसुभगा विश्वापि विश्वत्रयी
यज्ज्ञाने युगपत्प्रतिक्षणमियं साक्षात्समाभासते ॥
गम्भीरे पयसा प्रभा प्रविलसन्मुक्तेव सत्त्वा यतः
सोऽयं सम्प्रति सिद्धिपद्धतिमगात्कश्चिन्नरग्रामणी ॥३४२॥

एवं तावद्विश्ववेदिप्रसिद्धौ दोषापेतोऽदर्शि मानप्रबन्धः ॥
हहो भूतावापि वो यद्यतोपस्तस्यामन्यथेन मानं चराम ॥ ३४३ ॥

धर्मादयो विशदमवेदनवेद्याः प्रमेयत्वाद्यन्यथैव तत्तेव यथा स्तम्भस्तथा पुनरमी धर्मादयस्तस्मात्तथा । न तावदयमसिद्धो हेतुः स हि स्वरूपद्वाराश्रयद्वारा वा भवेत् । न स्वरूपद्वारा प्रमेयत्वस्वरूपस्यास्य भववादिनामविवादसिद्धत्वात् । नाप्याश्रयद्वारा । आश्रयभूतानां धर्मादिपदार्थानामविवादेनावाच्यप्रतिपन्नत्वात् । नापि विरुद्धः । साध्यवति स्तम्भादावन्वयस्योपलभ्यमानत्वात् । ननु सामान्ये साध्ये विरुद्धो माभूत् । अभिमतेन्द्रियानिन्द्रियनिमित्तविशदसंवेदनवेद्यत्वे तु साध्ये विरुद्धता

वारयितुं न पार्यते । तद्विपरीतेन विशदसंवेदनवेद्यत्वेन साधर्म्यदर्शने स्तम्भादावन्वयदर्शनात् । अनन्वयोऽप्युदाहरति दोषोऽत्र । साधो साधु द्रवसे । परं नात्र विशेषः सिषाधयिषितः । धर्म्मादीनां शाब्दमानेनैव श्रोत्रियैर्वेदनाभिप्रायात् । विशदसंवेदनसंवेद्यत्वमात्र एव तावद्विवाद इति तदेव प्रथमं प्रसाधनीयम् । सिद्धे पुनरस्मिन्ननुमानान्तरादिन्द्रियानिन्द्रियनिमित्तविशदसंवेदनवेद्यत्वरूपविशेषसिद्धिः । तथा हि । धर्म्मादिविशदवेदनं नेन्द्रियानिन्द्रियपरतन्त्रम् । अपर्यायत एवार्थावभासहेतुत्वात् । यत्तु नैव न तदेवं यथास्मदादिवेदनम् । इदं तु न तस्मात्तथा । अवयवविशुद्धिस्तत्र पूर्ववद्विधातव्या । तस्मान्न विरुद्धानन्वयदोषावतारः । ननु साध्यानवबोधनोऽयं हेतुर्भविष्यति । उपाधिविशेषाविनाभावमूलत्वात् । तथा हि यद्यपि प्रमेयत्वविशदसंवेदनवेद्यत्वे नात्र सहावस्थिते अनुभूते । तथापि न प्रमेयत्वमात्रानुबन्धि विशदसंवेदनवेद्यत्वम् । अपि तु प्रमेयत्वावान्तरनेत्रादीन्द्रियविषयत्वानुबद्धम् । ततः प्रमेयत्वे सत्यपि य इन्द्रियविषयः स एव विशदसंवेदनवेद्यो नीलादिः । नापरं धर्माधर्मादि । तस्येन्द्रियाविषयत्वादिति न प्रमेयत्वमात्रं साध्यावबोधनम् । अत्राभिधीयते । विशेषस्य विशेषं प्रति बोधनत्वेऽपि सामान्यव्याप्तेरनिरासार्हत्वमेव । यथा धूमविशेषस्य खादिरादिवह्निविशेषसम्बन्धेऽपि न धूमसामान्यस्य वह्निसामान्यसम्बन्धो विशीर्यते । तथेहापि प्रमेयत्वावान्तरस्य नेत्रादीन्द्रियविषयत्वस्य नेत्रादीन्द्रियसमुद्भवविशदसंवेदनवोध्यत्वेन व्याप्तौ सत्यामपि न प्रमेयत्वमात्रस्य विशदसंवेदनवेद्यत्वसामान्येनाविनाभावो न भवतीति सर्वं प्रसिद्धानुमानसमानमेव । नाप्ययं हेतुः सविसंवादः । प्रमेयस्य सतो विशदसंवेदनावेद्यस्य सर्वथैवाभावात् । नन्वस्य विसंवादितापनोदं न मृष्यामहे । अभावेन विसंवादस्य दुर्वारत्वात् । तथा हि प्रमेयोऽप्ययं न विशदसंवेदनवेद्यः । अभावमानेनैवा-

---

१ 'बोधत्वेऽपि' इति भ. पुस्तके पाठ । २ 'वेद्यत्वेन' इति प भ. पुस्तकयो. पाठ । ३ 'सर्वम्' इति भ. पुस्तके नास्ति ।

वर्मीयमानत्वात् । नैतत्साधु । अभावस्य वस्तुरूपतया विशदसंवेदन-रूपमानावसेयतयापि समर्थितत्वात् । नन्वनुमानान्तरबाधितार्थसिद्धधर्म-मुपस्थितत्वाद्वह्निशैत्यानुमानवद्बाधितविषयमनुमानमिदम् । अमनोहर-मेतत् । तथा ह्यत्र विशदवेदनमनुमानं शाब्दमुपमानमर्थापत्तिरभावो वा धर्मादिविशदवेदनस्य बाधायै प्रभवेत् । यदि विशदवेदनम् । तत्रापी-न्द्रियप्रभवमनिन्द्रियप्रभवं वा तद्भवेत् । यदीन्द्रियप्रभवम् । तत्रापि स्वसम्बन्धि समस्तपुरुषसम्बन्धि वा तत्स्यात् । यदि स्वसम्बन्धि । तदापि नियतदेशदशाविशेषितस्य तस्याभावं साधयेदशेषदेशादिवर्तिनो वा । यदि नियतदेशदशाविशेषितस्य तदा सिद्धसाधनम् । अस्माभिरपि नियत-देशदशाविशेषितस्य तस्याभावसाधनात् । अथाशेषदेशादिवर्तिनः । तदापि तदिन्द्रियप्रभववेदनं तेष्वशेषदेशादौ प्रवर्तते वा न । यदि प्रवर्तेत । तदा भवानेव समस्तदेशादिविशेषवर्ती धर्मादिदर्शीति तव शरास्त्वय्येव निप-तिताः । अथ न प्रवर्तत इति निवर्तमानमिन्द्रियवेदनं स्वसम्बन्धि-धर्मादिदर्शनस्य बाधनम् । तदप्यसत् । यदि हि तत्तस्य हेतुर्व्यापी वा स्यात्तदा तस्य निवृत्तौ धर्मादिविशदवेदनस्यापि निवृत्तिर्विभाव्येत । अन्यथा मन्दिरान्तरमन्दिरादीनामप्यभावः स्यात् । न पुनरिदमिहास्ति । अथ समस्ति समस्तपुरुषसम्बन्धि तत्तद्बाधनम् । तदसिद्धम् । न हि सर्वे पुरुषा धर्मादिविशदवेदनं न विदन्तीत्यत्रासर्वविदः सामर्थ्यमस्ति । तथा-स्तुपस्य धर्मादिविशददर्शनस्यैन्द्रियप्रभवसंवेदनविषयता स्वसम्बन्धीत्या-दिभिर्दूषणमसादि । यावत्तेन्द्रियप्रभवसंवेदनस्य धर्मादिविशदवेदनं विषय-त्वं न भजति । न हि परपुरुषवर्तिनः संवेदनविशेषा अस्माभिरिन्द्रियोद-यवर्त्मनैव वेद्यन्ते । अविषयस्यापि यदि तेनाभावः साध्यते । तर्हि नयनोत्थे-न संवेदनेन शब्दाभावः साध्येत । तन्नेन्द्रियप्रभवं वेदनं धर्मादिदर्शनं बाध-ते । नाप्यनिन्द्रियप्रभवम् । तस्यासिद्धत्वात् । सिद्धौ वा पर्याप्तं विवादेनेति

---

१ 'प्रवर्तते' इति भ पुस्तके पाठः । २ प्रमदास्म् शब्दादिक प म पुस्तकयोः ।

न विशदवेदनं धर्मादिविषयविशदवेदनबाधनायोत्सहते। नाप्यनुमानम्। तत्र हि धर्मादिविशदसंवेदनं नास्तीति साध्यधर्मिनिर्देशः स्यात्। धर्मादयो विशदसंवेदनवेद्या न भवन्तीति वा। यद्वा विवादाध्यासितः पुरुषो धर्मादिदर्शी न भवतीति। यदि वा विवादाध्यासिता धर्मादयः सिद्धान्तेनैव वेद्या इति। आद्यविधायां साधनमनुपलम्भो विरुद्धविधिर्वा भवेत्। यद्यनुपलम्भः सोऽपि धर्म्मादिदर्शनस्य, तद्धेतोः, तद्व्यापिनः, तत्साध्यस्य वा स्यात्। यदि धर्मादिदर्शनस्य, तदाप्यसौ स्वसम्बन्धी सर्वसम्बन्धी वा। यदि स्वसम्बन्धी। नासौ तदभावहेतुः। विसंवादित्वात्। नापि सर्वसम्बन्धी। स्वरूपासिद्धत्वात्। न हि सर्वात्मनामप्रतिपत्तौ तत्सम्बन्धी धर्म्मादिदर्शनानुपलम्भो विभावयितुं पार्यते। नापि धर्म्मादिदर्शनहेतोरनुपलम्भोऽस्ति। तदावृतिप्रध्वंसस्य तद्धेतोरनुमानबलात्प्रसाधितत्वात्। नापि तद्व्यापिनः। धर्म्मादिदर्शनव्यापिनः संविद्रूपतादेस्तत्र सद्भावात्। तत्साध्यानुपलम्भोऽप्यसिद्धः। धर्म्माद्यशेषार्थप्रतिपादनपरस्य राद्धान्तस्य तत्साध्यस्योपलभ्यमानत्वात्। विसंवादद्दुस्थोऽप्येष। धूमादिफलानुपलम्भेऽपि विभावसुप्रभृतिहेतोर्मुर्मुराद्यवस्थासु सद्भावविभावनात्। न ह्यवश्यं साधनानि साध्यवन्ति भवन्ति। तन्नानुपलम्भः साधनतां बिभर्त्ति। नापि विरुद्धविधिः। यतः सोऽपि प्रतिनियतदेशादौ तस्याभावं साधयेदशेषदेशादौ वा। आद्यभेदे सामस्त्येन धर्म्मादिदर्शनस्य नाभावः सिद्ध्येत्। यत्रैव यदैव हि तद्विरुद्धस्य विधानं तत्रैव तदैव तदभावः साधयितुं पार्यते नान्यत्रान्यदा। अतिव्याप्तेः। द्वितीयभेदोऽप्यसम्भाव्यः। असर्वदर्शिनः सर्वत्र सर्वदा तद्विरुद्धविधेरसम्भवादिति न विरुद्धविधिरपि साधनत्वमश्नुते। तथा हेतुद्वयेऽप्यऽस्मिन् धर्मादिविशदसंवेदनस्वरूपः साध्यधर्म्मी स्वसिद्धः परसिद्धो वाभिधीयते। यदि स्वसिद्धः।

---

१ 'विभावात्' इति भ. प. पुस्तकयोः पाठः। २ 'न' इति नास्ति प. भ. पुस्तकयोः।

तर्हि तस्य प्रतिषेधो माता मे वन्ध्येति नीतिमनुसरति । अथ परासिद्धोऽयमुपादीयते । तत्रापि परस्यासो यदि मानेन सिद्ध । तदा तत्रापि सिद्ध एवेति नोपपन्नस्तत्प्रतिषेध । अथ नाथ स्वस्य परस्य वा मानेन सिद्ध । तदाऽसिद्ध एवेति हेतोराश्रयासिद्धता दुष्प्रतिविधेया । तत्र धर्मादिविशदसवेदन नास्तीति साध्यधर्मनिर्देश सूपपाद । नापि धर्माद्यो विशदसवेदनवेद्या न भवन्तीति । अत्राप्यनुपपत्तस्य हेतोरभावात् । स धर्मूर्तस्वरूपोऽतीन्द्रियत्वस्वभावो वा भवेत् । न तावदाद्य । तस्य सविसवादत्वात् । अमूर्तस्यापि सामान्यादेर्विशदसवेदनवेद्यत्वेनाभ्युपेतत्वात । अतीन्द्रियत्वस्वभावोऽत्र हेतु । तथा हि न धर्मादयो विशदसवेदनवेद्या अतीन्द्रियत्वाद्यत्तु नैव न तदेव यथा स्तम्भस्तथा च न धर्मादयस्तस्मान्न विशदसवेदनवेद्या इति । एतदपि प्रलापमात्रम् । उपाधिविशेषाविनाभावमूलत्वेन हेतौ साध्यानवबोधनात् । तथा ह्यतीन्द्रियत्वे सत्यपि य एव भावनाविशेषातिशयविषयो भवति भाव स एव विशदसवेदनवेद्य । यथा विषमशरशरनिकरनिरन्तरप्रहारहारितसमस्तसातशालस्य पुस प्रेयसीमयीं भुवनत्रयीं भावयतस्तद्वदनारविन्दम् । भावनाविशेषातिशयविषयीभूतास्तु पुरुषस्य धर्मादयस्तस्मादतीन्द्रियत्वेऽपि ते तस्य विशदसवेदनवेद्या भवन्ति । अथ भावनाविशेषातिशयमाविर्भवत्प्रेयसीवदनारविन्ददर्शन भ्रान्त धर्मादिदर्शन प्रत्युताहतिदाय नाऽलम् । अन्यथा तत्सामान्येन धर्मादिदर्शन भ्रान्त स्यादिति । प्रलापमात्रमेतत् । विशदप्रतिभासमात्रतया तस्योदाहृतिन्वोपपत्ते । यदि तु साध्यधर्मुदाहृत्यो सर्वथा साम्यमभिप्रैति देवानाप्रिय । तदा सर्वत्रोदाहृतेरभाव एव स्यात् । महीधरमहानसयोरपि सर्वथा साम्याभावात् । तत्र भावनाविशेषभावित्वेऽपि बाधकमानोपनिपातेन प्रियतमावदनारविन्ददर्शन भ्रान्तम् । धर्मादिदर्शन तु बाधविरहितत्वेनाभ्रान्त

१ 'इति न स्याद्वाभ्यम् इति प म पुस्तकयोरधिकम् । २ प्रत्युदाहृतिवेदन्म' इति प म पुस्तकयो पाठ ।

भविष्यति। विशदप्रतिभासत्वं तूभयत्रापि समानमिति भवत्येतावतात्रास्योदाहृतित्वम्। तथाऽतीन्द्रियत्वादिति हेतुरपि इन्द्रियासम्बद्धत्वमिन्द्रियसम्भवसंवेदनाविषयत्वं वा स्यात्। तत्रेन्द्रियासम्बद्धत्वं विसंवादि। पदार्थानां नयनेन्द्रियासम्बद्धत्वेऽपि तदुत्पाद्यविशदसंवेदनवेद्यत्वात्। नयनेन्द्रियासम्बद्धत्वं तु तेषां नयनस्याप्राप्यदर्शित्वेन समर्थितत्वात्। इन्द्रियसम्भववेदनाविषयत्वं तु साध्यसमम्। भवता मते इन्द्रियसम्भवस्यैव विशदसंवेदनस्य भावादिति। य एवार्थो विशदसंवेदनवेद्यो न भवतीति स एवातीन्द्रियत्वादिति। संशयितसाध्यशून्यपदार्थव्यावृत्तिरप्ययं हेतुः। अतीन्द्रिया अपि विशददर्शनवेद्या भविष्यन्ति विरोधाभावात्। तथा ह्यतीन्द्रियत्वविशददर्शनवेद्यत्वयोर्विरोधः सहानवस्थानरूपो वा शीतवह्न्योरिव। परस्परस्थितिपरिहारस्वरूपो वा भावाभावयोरिव। न प्रथमस्तयोः सम्भवति। स हि समवहितसमस्तसाधनस्य भवतोऽन्यभावेऽभावाद्विशदवेदनानुपलम्भाभ्यामवसीयते। नन्वेवमिहापि भविष्यति। नैवम्। न हि धर्म्मादीनां विशददर्शनवेद्यत्वस्य पूर्वं भवतोऽतीन्द्रियत्वसन्निधानान्निवृत्तिर्विमैः समुपलभ्यते। यतस्तेन तस्य विरोधः स्यात्। उपलम्भे वा निष्फलं तन्निरासेनात्मानमायासयन्ति श्रोत्रियाः। द्वितीयोऽपि विरोधो नात्र सम्भवति। यतो नातीन्द्रियत्वं विशददर्शनवेद्यत्वव्युदासेन व्यवस्थितम्। अपि त्विन्द्रियविषयत्वव्युदासेनेति धर्म्मादयो विशदसंवेदनवेद्या न भवन्तीत्येषोऽपि साध्यधर्म्मिनिर्देशोऽनुपपन्न एव। योऽपि विवादाध्यासितः पुरुषो धर्म्मादिदर्शी न भवतीति। तत्राप्युपदेशित्वं पुरुषत्वं वा हेतुः स्यात्। यद्युपदेशित्वम्। तदापि मानविरुद्धार्थोपदेशित्वं तद्विपरीतार्थोपदेशित्वमुपदेशित्वमात्रं वा स्यात्। प्रथमभिदायां हेतोरसिद्धिः। तत्रभवतस्तथाभूतार्थोपदेशित्वासम्भवात्। उत्पादव्ययध्रौव्यस्वभाववस्तुवादी हि तत्रभवान्न तु तथाविधवस्तुनि

---

१ 'चेदथ' इति प. भ. पुस्तकयोः पाठः। २ 'संशयित्व' इति भ पुस्तके पाठः।

मानविरोध सम्भवतीति पुरस्तात् प्रमाणयिष्यते। द्वितीयभिदायां विसंवादी हेतुः। तथार्थोपदेशित्वस्य धर्मादिदर्शित्वेन सह विरोधाभावात्। तथा विश्वत्रयवर्तिनोऽर्थानाश्रित्य विरुद्धार्थोपदेशित्वमभ्युपेयते नियतांश्चेति। तत्र प्रथमभेदे विरुद्धत्वं हेतोः। तथाविधमानाविरुद्धार्थोपदेशित्वस्य धर्मादिदर्शित्वे सत्येव सम्भवात्। उत्तरभेदे त्वसिद्धस्तावत्। न हि वयं प्रतिनियतमानाविरुद्धार्थोपदेशिनं निवादास्पदपुरुषमभ्युपेम। तस्य सर्वापदेश्यपदार्थेषु तथाविधत्वात्। तृतीयभिदायां तु विसंवादित्वं हेतोः। उपदेशित्वमात्रस्य धर्मादिदर्शित्वेन विरोधासम्भवात्। अथ रथ्यापुरुषादौ धर्माद्यदर्शित्वे सत्येवोपदेशित्वस्योपलम्भाद्दर्शने तु सर्वदापि तस्यानुपलम्भात्ततो व्यावृत्तिं सिध्यत्येवेति। तदपि त्रपास्पदम्। सर्वसम्बन्धिनोऽनुपलम्भस्यासिद्धत्वेनात्मसम्बन्धिनस्तु विसंवादित्वेन प्रतिपादनात्। ननु धर्मादिदर्शिन सर्वथैवाभावादुपपन्नैव ततो व्यावृत्तिरुपदेशित्वस्य। तदेतदतिसाहसम्। धर्मादिदर्शिनोऽभावस्याद्याप्यप्रसिद्धेः। न हि तत्रासिद्धा साधनमस्ति। तद्धि उपदेशित्वमेव भवेदन्यद्वा। प्रथमभिदि त्रिपन्दोषावतारः। उपदेशित्वाद्धि धर्मादिदर्शित्वाभावसिद्धौ ततोऽस्य व्यावृत्तिसिद्धिस्तत्सिद्धौ तु धर्माद्यदर्शित्वेन व्याप्तिस्तस्यां सिद्धायां पुनरतो धर्मादिदर्शित्वाभावसिद्धिरिति। अथान्यदनुपलम्भादि तदभावसाधनाय साधनमभिधीयते। तदप्यनुपपन्नम्। तस्यानल्पदोषदूषितत्वेन प्रतिपादितत्वादिति नोपदेशित्वमत्र हेतुः। नापि पुरुषत्वम्। विपर्यये बाधाविधायिमानासम्भवेन साध्यशून्यपदार्थाद्व्यावृत्तेस्तस्य सन्देहदोलावलम्बित्वात्। न हि नाभाय[4] सम्भवो यत्सम्प्रतिपन्ने पुरुषे प्रतिभातमप्रतिभातं वा तेन सर्वत्र भवितव्यं चेति। अन्यथा रथ्यापुरुषो धर्मादिदर्शित्वाभावादनवसायी

---

१ तत्सिद्धौ इति प भ पुस्तकयो पाठ। २ 'धर्माद्यदर्शिनैव' इति प भ पुस्तकयो पाठ। ३ 'न्याय' इत्यधिक प भ पुस्तकयो। ४ 'न भवितव्यं चेति' इति भ पुस्तके पाठ।

वेदार्थधीशून्यः शूद्र पशुप्रायः समुपलभ्यत इति भवदाराध्यपुरुषोऽपि तथा स्यात् । पुरुषत्वस्योभयत्राप्यविशेषादित्यतिलोभाभिभूतस्य तवाहो अशनिनिपातः शिरसि । अथ पुरुषत्वाविशेषेऽपि तस्य रथ्यापुरुषादुत्तमत्वाद्धर्मादिदर्श्यभाववेदनादिरतिशयो न विरुद्ध्यते । तर्हि तथाभूतस्यैव पुरुषविशेषस्य धर्म्मादिदर्शनातिशयोऽपि मा विरोधीति संशयितसाध्यशून्यपदार्थव्यावृत्तित्वेन विसंवादित्वात् पुरुषत्वमपि नात्र हेतुः । ततो विवादाध्यासित इत्यादिरपि साध्यधर्मनिर्देशो न सुन्दरः । नापि विवादाध्यासिता धर्म्मादयः सिद्धान्तेनैव वेद्या इति । हेतोरत्रापि दुर्लभत्वात् । अथास्त्येव धर्म्मादिशब्दाभिधेयत्वादिति । नन्वतो हेतोः साम्प्रतपुरुषसदृशाना । पुंसां सिद्धान्तेनैव धर्म्मादिवेद्यत्वं साध्यतेऽन्यादृशानां वा । यदि साम्प्रतपुरुषसदृशानाम् । तदा सिद्धसाधनम् । अथान्यादृशानाम् । तदा तत्साधनेनैव बाधितविषयमिदमनुमानम् । तत्रानुमानमपि धर्म्मादीना विशदसंवेदनवेद्यत्वं बाधते । नापि शाब्दम् । ननु शान्तमेतत् । नित्यस्य सिद्धान्तस्य तद्विधानपरस्यादर्शनाद्बाधादिहेतुत्वमेव हि व्यवसीयते । अथ स्वयम्भुवं प्रतीत्य "स सर्वविद्यस्यैषा महिमा भुवि दिव्ये ब्रह्मपुरे ह्येषा व्योम्न्यात्मसु" इत्यादिना तत्र तत्र वेदे विश्ववेदिताप्रतिभासनपरा स्तुतिर्दृश्यते । सत्या तु विश्ववेदितायां धर्म्मादिदर्शनमपि सिद्धमेवेति न सिद्धान्तस्य तद्बाधाविधायित्वमिति । अशोभनमेतत् अस्याः स्तुतेः सर्वविधिपरत्वाभावात् । तस्य स्वान्तेनाधीतत्वात् । अनादेः सिद्धान्तस्यादिमिति धर्म्मादिदर्शिनि प्रवृत्तावनादिताविरोधापत्तेः । अपि तु स्वयम्भुवमुद्दिश्य विधिश्रितस्य तथाविधाध्वरादेः प्रवर्त्तनायार्थवादमात्रमेतत् । अर्थवादास्तु विधिप्रशंसापरतया मानता लभन्ते न स्वतन्त्रतयेति सर्वदर्शिविधिसाधनं न भवति । तथा यदि नित्यः सिद्धान्तः प्रमा । तदा निष्फलमेव सर्ववित्साधनम् धर्म्माद्युपदेशस्य तत एव सिद्धेः । अनित्यस्य तु सिद्धान्तस्य सर्वदर्शिसाधनत्वं तद्वि-

हितस्येतरस्य वा । यदि तद्विहितस्य । तदेतरेतराश्रयम् । तस्मिन् सिद्धे हि तद्विहितस्य सिद्धान्तस्य मानता तस्मात्तु तस्य सिद्धिरिति । नापीतरविहितस्य । तस्य मानत्वासम्भवात् । अमानादपि तस्मात्तत्प्रतिपत्तौ स्वविहितपदसमूहादपि तत्प्रतिपत्ति स्यादेव । विशेषाभावादिति । सिद्धान्तबाधितविषयमिदमनुमान भवत्येवेति । एतदपीप्यापिचसन्तापोपप्लुतस्यास्य प्रलापमात्रम् । यतो यावन्त वेद-सम्बन्धिन विधिध्वनिप्रबन्ध मवाक्शिामयति तावानेवास्ति, आहो-स्विदन्योऽपि । न तावत्प्रथम । वेदशाखानामनन्ताना स्थाने स्थाने तिरोभावनिगमनात् । अथ द्वितीय । तदा तत्र वेदशे सर्ववेत्ता भविष्यति । तथा नियमस्य सिद्धान्तस्य तद्विधानपरस्यादर्शनादित्यत्र सर्वविद्विधान सर्वविदभिधायित्व सर्वनिनिष्पादनत्व चाभिप्रेतम् । नाद्यो भेद । यत पूर्वमेव प्रतिपादितस्तदभिधायी वेदान्त । नापि तस्याथवादमात्रत्वेनामानत्वमित्याद्यभिधेयम् । यतोऽथवाद प्रमा साधयति न वा । यदि साधयति तदा मानतैवास्य । प्रमासाधनत्वान्मानस्य । प्रमा न साधयतीति तु प्रतीतिपराहतम् । अर्थवादवाक्येभ्योऽपि प्रमोत्पत्तिप्रतीते । सर्वविनिष्पादनत्व तु न मानधर्म । परमभावनातिशयरूपहेतुधर्मत्वात्तस्य । अनादे सिद्धान्तस्यादिमत्ीत्याद्यपि उन्मा-तनुमावानलम्बनम् । यत प्रवाहमाश्रित्य सर्वविद्विशेषमाश्रित्य वा । प्रथमभिदा नाभिमता । सर्वदर्शिपरम्पराया अनादित्वात् । द्वितीय-भिदाया तु विसवादिता । अध्रमेधादीना नियतविषयमाश्रित्य सादी-नामपि तत्र विधानदर्शनात् । अपि तु स्वयम्भुवमित्याद्यपि नानवद्यम् । यतो भवतु निधिप्रधानापरतयार्थवादाना मानता । तथापि ये निर्बाधा-मथप्रतीतिं निष्पादयन्ति ते मानता स्वार्थ लभन्ते न वा । यदि लभन्ते तदायमपि मानमेव । द्वितीयभेदे तूभयसम्प्रतिपन्नानुमानादि-मानानामपि न मानता । नापि नित्ये सिद्धान्ते सर्वविदि निष्फलता

१ निगदयति ' इति प म पुस्तकयो पाठ ।

विषयदर्शनोत्थस्य धर्माद्युपदेशस्य सर्वविदैव विधीयमानत्वात् । अनित्योऽपि संवादशाली सिद्धान्तः सुरपुरसर्वदर्शनार्थिनां तपोध्यानादि विधेयमित्यादिः सर्वदर्शिनमभिदधानः शतशो दृश्यते । नाप्यत्रेतरेतराश्रयम् । सर्ववित्समयपरम्पराया अनादित्वात् । इति सिद्धान्ते सर्वदर्शिप्रतिपादनप्रसिद्ध्या न शाब्दमपि धर्मादीनां विशदसंवेदनवेद्यता बाधितुं समर्थम् । नाप्युपमानम् । तथा हि यद्युपमानभूताः सर्व एवेदानीन्तनाः पुरुषा अपरे वोपमेयास्त्रिभुवनान्तर्वर्तिनोऽवधारिता भवेयुस्तदेदानीन्तनपुरुषसादृश्योपमानेनान्येषामपि धर्मादिदर्शित्वाभावसाधनं भवेत् । यावता परिमितदेशविशेषिताः पुरुषा इदानीन्तना विभाविता न सर्वे । विभाविता अपि न धर्माद्यदर्शित्वेनावधारिताः । परात्मधर्मस्य धर्मादिदर्शनाभावस्य पिशितनयनैर्वैशद्येन प्रतिपत्तुमपर्याप्तत्वात् । नापि शेषाः प्रमिताः । तस्मादुपमानोपमेययोर्वैशद्येनाप्रतिपत्तेर्नोपमानमत्र सम्भवति । अथोपमानभूतानामिदानीन्तनानामुपमेयभूतानामन्येषां वा पुंसामसर्वदर्शित्वेन विशदा प्रतीतिरिष्यते । तत्रापि नोपमानेन फलम् । विशददर्शनेनैव सर्वेषामसर्वदर्शित्वसिद्धेः । ततोऽपीदानीन्तनानन्यान्वा सर्वानसर्वदर्शित्वेन पश्यन् भवानेन सर्वदर्शी स्यादिति सिद्धं नः समीहितम् । ततो नोपमानमपि धर्मादीनां विशदसंवेदनवेद्यता बाधते । नाप्यर्थापत्तिः । सा हि सर्वदर्श्यसाधनतया सर्वदर्श्यभावसाधनतया वा तां बाधेत । न तावत् सर्वदर्श्यसाधनतया । असिद्धत्वात् । धर्मादिदर्शिसाधनोद्धुराया अर्थापत्तेः पूर्वं प्रतिपादितत्वात् । नापि सर्वदर्श्यभावसाधनतया । असिद्धत्वात् । न हि नाम सोऽर्थः सम्भवति यः सर्वविदभावं विना नोपपद्यते । नाप्यभावस्तां बाधितुमीशः । स हि सत्तासाधनप्रमाणनिवृत्तिरूपो वा स्यादभावविषयमानसप्रतीतिरूपो वा । न तावदाद्यो भवति भेदः । सत्तासाधनप्रमा-

---

१ 'वेदित्वाभाव' इति प भ. पुस्तकयोः पाठः । २ 'सर्वदर्श्यसाधनतया' इति भ. पुस्तके पाठः ।

निवृत्तेरसंवेदनरूपतया धर्मादिदर्शनाभावसाधनत्वानुपपत्ते । भवतु वा तदभावसाधनत्वम् । तथाप्यसिद्धैव तन्निवृत्ति । प्रस्तुतानुमानस्यैव तत्र प्रवृत्ते । तथा तन्निवृत्तिर्नियतदेशविशेषिता स्यादनियतदेशविशेषिता वा । न प्रथमा सर्वत्र सर्वदा धर्मादिदर्शनाभाव साधयति । अन्यथा स्तम्भादीना देशान्तरवर्तिनामत्र देशविशेषे स्वविषयमानाप्रवृत्तेर्देशान्तरेऽप्यभाव स्यात् । ततो निःशेषव्यवहारविलोप । नापि द्वितीया । सा हि विशदसंवेदनसिद्धा तदितरमानसिद्धा वा भवेत् । विशदसंवेदनमपीन्द्रियप्रभवमनिन्द्रियप्रभव वा । इन्द्रियप्रभवमपि सर्वदेशवेदि नियतदेशवेदि वा । न प्रथमो भेद । इन्द्रियप्रभवसंवेदनस्य सर्वदेशाविषयत्वात् । नापि द्वितीय । सर्वदेशावेदने तद्विशेषितधर्मादिदर्शनसत्तासाधनप्रमानिवृत्तेरपि वेदयितुमशक्यत्वात् । नाप्यनिन्द्रियप्रभवम् । तद्धि स्वसंवेदनरूप तदितरद्वा । न स्वसंवेदनरूपम् । प्रमानिवृत्तेरसंवेदनरूपतया स्वसंविदितत्वासम्भवात् । नापीतरत् । तदितरस्यानिन्द्रिय सम्भवस्य विशदसंवेदनस्य परेषामसिद्धे । यदि त्वनिन्द्रियप्रभव तत्स र्वत्र तन्निवृत्तिसाधन सिद्धम् । तदा तद्यस्यास्ति स एव धर्मादिदर्शी प्रसिद्ध इत्यल विवादेन । अथ तदितरमानसिद्धा । तदापि तदितरमानमनुमान सिद्धान्तो वा । न तावदनुमानम् । प्रसिद्धाविनाभावस्य हेतोरसम्भवात् । नापि सिद्धान्त । तस्यापि वादिप्रतिवादिसम्मतस्याभावात् । तत्र सत्तासाधनप्रमानिवृत्तिरूपोऽभाव । नाप्यभावविषयमानमप्रतीतिरूप । सोऽपि हि नियतदेशे धर्मादिदर्शनाभाव मानयेत्सर्वत्र वा । यदि नियतदेशे । तदा सिद्धसाधनम् । देशविशेषे तदभावस्य सम्मतत्वात् । अथ सर्वत्र तदनवधारिताभिधानम् । आधारविरोधिनोरेव बोधस्याभावप्रतीतिनिबन्धनस्यात्रासम्भवात् । यथा हि नीपाभावस्य प्रतीतावाधारस्य भूतलादेर्विरोधिनस्तु नीपस्यावबोधोऽस्ति । नैवमिहाधारविरोधिनोरवबोध सम्भवति । अत्र ह्याधारस्त्रिभुवन तद्विषयोऽप्यवबोधस्तव नास्त्येव । तद्भावे वा सर्वदर्शिता तवैव सवृत्तेत्यप्रा-

सोपनतोऽस्मन्मनोरथः । नापि विरोधिनो धर्म्मादिदर्शनस्यावबोधोऽत्र सम्भवति । सम्भवे वा नात्यन्त तस्याभाव इति नाभावोऽपि धर्मादीनां विशदसंवेदनवेद्यता बाधत इति न बाधितविषयोऽप्ययं हेतु: । तस्मादशेषदोषरहितत्वात् स्वसाध्यसिद्धिसौधमध्यमध्यासयत्ययं हेतुस्त्रिदशशापेनापि नापह्नस्तयितु पार्यत इति । अथाभिधीयते भवतु धर्म्मादिदर्शी । तथापि धर्मादिदर्शनस्य हेतुरभिधानव्यः । स हि बाह्येन्द्रियं भावना तत्सहितं बाह्येन्द्रियं मनो विलीनमलोपलेपमात्मस्वरूपं वा । न बाह्येन्द्रियम् । तस्य पुरो वर्त्तमानरूपादिमदर्थसंदर्शनमात्रहेतुत्वेन समस्तात्रभुवनवर्त्तिधर्म्मादिदर्शनहेतुत्वासम्भवात् । नापि भावना, तस्याः स्मृतिमात्रहेतुतयाऽननुभूतपूर्वधर्म्मादिदर्शनं प्रत्यहेतुत्वात् । नापि भावनासहितं बाह्येन्द्रियम् । तस्य पुरोवर्त्तिवर्त्तमानार्थदर्शनहेतुतया भावनायास्त्वनुभूतविषयस्मृतिमात्रसाधनतया परस्परसहविधायित्वासम्भवात् । नापि मनो हेतु: । बाह्येन्द्रियरहितस्य मनसो बहिर्विषयेष्वप्रवृत्तेः । अन्यथा अन्धबधिराद्यभावः स्यात् । नापि विलीनमलोपलेपमात्मस्वरूपमेव । मलोपलेपस्य हि सर्वथा विलयो भवेद्देशतो वा । न प्रथमः । सर्वथा मलोपलेपस्य विलयासम्भवात् । तथा हि स मलोपलेप आत्मनोऽभिन्नो भिन्नो वा । यद्यभिन्नः । तदा तद्विलये आत्मनोऽपि विलयः स्यात् । तथा सति मूलनाशाद्विलीनं धर्म्मादिदर्शनम् । अथ भिन्नः तदा तथासत्यात्मस्वरूपस्य तदवस्थत्वात्पूर्वमिव तद्विलयसमयेऽपि न धर्म्मादिदर्शन स्यात् । तदवस्थावत्पूर्वमपि वा भवेत् । विशेषाभावात् । तथा स मलोपलेपः सादिरनादिर्वा । यदि सादिः । तदा मलोपलेपात्पूर्वं धर्म्मादिदर्शनप्राप्तिः मलोपलेपाभावाविशेषात् । अथानादि: । तर्हि न तद्विलयः । अनादित्वादात्मस्वरूपवत् । भवतु वा मलोपलेपविलयः । तथापि पुनर्मलान्तरोपलेपसम्भवाद्धर्मादिदर्शनाभावः स्यात् । तथा मलोपलेपविलये हेतुरभि-

१ ' तत्तया ' इति प. पुस्तके पाठः । २ ' स ' इत्याधिक प. पुस्तके ।

धानीय । स तु प्रतिन्दर्शनभिन्न इति । तस्यापि न नदस्य सम्भवति । तत्र सर्वथा मलोपलेपविलये आत्मस्वरूप धर्मादिदर्शनस्य हेतु । नापि देशतो मलोपलेपविलय । यतस्तस्मिन् सति यथात्मस्वरूप धर्मादिदर्शनहेतु स्यात् । तदा सर्वेषा धर्मादिदर्शनोपपत्ति । देशतो मलोपलेपविलयस्य सर्वेषा सम्भवात । तत्र विलीनमलोपलेपमात्मस्वरूपमपि धर्मादिदर्शनहेतु । ततो हेत्वभावाद्धर्मादिदर्शनाभाव इति फलितमस्मदाशावल्लरीभि । एतदपि तरस्विनीशैवलिनी प्रवाहनीयमानदेहस्य दुर्गोपलशलभावलम्बनम् । सिद्धे हि प्रमाणबलेन धर्मादिदर्शने नून तदनुसारवता हेतुना भाव्यम् । साध्य हि नि सशयमुपलभ्य साधन तदनुसारि सम्भाव्यते[1] । न तु साधनानुपपत्तिमात्रान्निखिलानुमानसिद्धमपि साध्य प्रतिषिध्यते । तत्र न बाह्येन्द्रिय भावना भावनासहित बाह्येन्द्रिय मनो वा धर्मादिदर्शनहेतुरभिधीयते । येन तद्धेतोपदर्शितदोषा न पतेयु । विलीनमलोपलेप चात्मस्वरूप तस्य हेतुरिष्यत एव । तत्र तु यदुक्त मलोपलेपस्य हि सर्वथा विलयो देशतो वेत्यादि । तत्र सर्वथा मलोपलेपविलये सर्वथा देशतो मलोपलेपविलये देशत । ततो नात्र दोषलेशोऽपि । तथा यदन्यत्कल्पितम्, स मलोपलेप आत्मनो भिन्नोऽभिन्नो वेत्यादि । तदप्यसम्बद्धम् । मलोपलेपस्यात्मन सर्वथा भिन्नस्य अभिन्नस्य वानभ्युपेतत्वात् । भिन्नाभिन्नस्य तस्य प्रमाणबलत प्रतीते । अत सर्वथा भेदेऽभेदे वा दर्शिता दोषा अनभ्युपगमपरिहता एव । तथा स मलोपलेप सादिरनादिर्वेत्याद्यप्यवधानशून्यव्याहृतम् । प्रवाहतोऽनादेर्विशेषाश्रयात्तु सादेस्तस्य समर्थितत्वात् । तपनीयोपलादौ मलोपलेपस्य तथाविधस्यैव दर्शनात् । भवतु वेत्यादिना मलोपलेपान्तरोत्पादप्रतिपादनमपि नोपपन्नम् । मलोपलेपान्तरहेतोर्मिथ्यादर्शनादे पूर्वमलोपलेपस्य सर्वथा विलयात् । न हि हेतुविनाशे साध्य सम्भवति । सर्वथाप्यशुद्धि-

1 सम्भाव्येत ' इति भ पुस्तके पाठ ।

विनाशे हेम्न इव । मलोपलेपस्यापि विलये हेतुरभिधानीय इत्याद्यपि प्रमाविद्यापरिश्रमाभावपिशुनम् । भेदेऽपि मलोपलेपविलयस्य हेतोर्यः पूर्वापराविरुद्धसिद्धान्तप्रतिपादितः स एव रत्नत्रयरूपोऽस्य हेतुर्भविष्यति । यदि तु भवता सर्वथा संशयितेन स्थीयते । तदा सुरपुरादिप्राप्तेऽपि न यतनीयम् । तत्रापि प्रवादिनां परस्पर विप्रतिपत्तेः । एवमपि ।

विश्वत्रयोदरदरीविवरान्तरस्थ-
धर्म्माद्यतीन्द्रियपदार्थपरम्परायाः ॥
निर्भासमानगुणताभ्युदित[1] स एव
श्रीसर्व्ववेदिदिवसाधिपतिः प्रसिद्धः ॥ ३४४ ॥

त्रिवर्गपरिहारेण कृतं सर्वज्ञसाधनम् ॥
त्रिवर्गपरिहारेण स्थितायास्तु पदाय नः ॥ ३४५ ॥

सर्वज्ञसामान्यमिद प्रसिद्ध-
मित्थंविशेषस्तु कथं प्रसिद्ध्येत् ॥
तस्यापि सिद्धिर्ननु नातिदूरे
स्याद्वादिनां दर्शयतां प्रमाणम् ॥ ३४६ ॥ २३ ॥

तदाह—

## ॥ तद्वानर्हन्निर्दोषत्वादिति ॥ २४ ॥

तद्यथोक्तलक्षणलक्षितं केवलज्ञान नित्यमस्यास्ति स तद्वानिति नित्ययोगे मत्वर्थीयः । अर्हति देवादिकृता पूजामित्यर्हन् श्रीवर्धमानादिः । अत्र हेतुर्निर्दोषत्वादिति । दोषा रागद्वेषाज्ञानलक्षणाः निष्क्रान्तो दोषेभ्यो निर्दोषस्तस्य भावस्तत्त्वं तस्मात् । प्रयोगस्त्वेवम् । अर्हन् सर्वज्ञो निर्दोषत्वाद्यस्तु न सर्वज्ञो नासौ निर्दोषो यथा सम्प्रतिपन्नो निर्दोषश्चार्हंस्तस्मात्सर्वज्ञ इति ॥ २४ ॥

---

१ ‘ निर्भासनाय सतताभ्युदित. स एष ’ इति प. भ. पुस्तकयो. पाठः ।

अथ विप्रतिपन्नम्प्रति निर्दोषत्वमर्हत प्रसाधयन्नाह—

**॥ निर्दोषोऽय प्रमाणाविरोधिवाक्त्वादिति ॥२५॥**

निर्दोष इति पूर्ववत् । अयमित्यर्हन् । अत्र हेतु प्रमाणाविरोधिवाक्त्वादिति । प्रमाण प्रत्यक्षादि तेनाविरोधिनी वाग् यस्य स तथा तस्य भावस्तत्त्व तस्मात् । प्रयोग पुनरेवम् । अर्हन् मोक्षसंसारतत्कारणेषु निर्दोषस्तत्र प्रमाणाविरोधिवाक्त्वात् यो यत्र प्रमाणाविरोधिवाक् स तत्र निर्दोषो यथा क्वचिद्व्याध्युपशमे भिषग्वर । प्रमाणाविरोधिवाक्चार्हन् मोक्षसंसारतत्कारणेषु । तस्मान्निर्दोष इति ॥ २५ ॥

प्रमाणाविरोधिवाक्त्वमस्यार्हत प्रसाधयन्नाह—

**॥ तदिष्टस्य प्रमाणेनाबाध्यमानत्वात्तद्वाचस्तेनाविरोधसिद्धिरिति ॥ २६ ॥**

तस्यार्हत इष्ट प्रतिपादयतया सम्मत मोक्षादितत्त्व तस्य । प्रमाणेनाबाध्यमानत्वाद्धेतो । तस्यार्हतो वाक् तस्या । तेन प्रमाणेनाविरोधसिद्धि । प्रयोगस्त्वेवम् । अर्हन् मोक्षसंसारतत्कारणेषु प्रमाणाविरोधिवाक् तत्र प्रमाणाबाध्यमानाभिमततत्त्वत्वात् । यस्य यत्राभिमत तत्त्व प्रमाणेन न बाध्यते स तत्र प्रमाणाविरोधिवाक् । यथा रोगस्वास्थ्ये तत्कारणतत्त्वे भिषग्वर । न बाध्यते च प्रमाणेनार्हतोऽभिमत तत्त्व मोक्षसंसारतत्कारणेषु । तस्मात्तत्रासौ प्रमाणाविरोधिवागिति । एव च मोक्षसंसारतत्कारणतत्त्वलक्षणस्य विषयस्य प्रमाणेनाबाध्यमानत्वाद्विपश्चिता अर्हद्वाच प्रमाणाविरोधित्वसिद्धि ।

तत्र न तावद्भगवतोऽभिमत मोक्षतत्त्व प्रमाणेन बाध्यते । प्रत्यक्षस्य तदविषयत्वेन तद्बाधकत्वानुपपत्ते । अनुमानमपि मोक्षप्रतिक्षेपक न सम्भवत्येव । नास्ति कस्यचिन्मोक्ष सदुपलम्भकप्रमाणपञ्चकागोचरत्वात् कूर्मरोमादिवदित्यत्रानुमान बाधकमस्तीति चेत् । नैवम् । असिद्धसाधनत्वादस्यानुमानस्य । अनुमानागमबाध

भगवतोऽभिमत मोक्षतत्त्व न प्रत्यक्षादिप्रमाणेन बाधितुमिति प्रतिपादनम् ।

प्रसिद्धप्रामाण्यान्मोक्षास्तित्वस्य व्यवस्थापयिष्यमाणत्वात् । अत एवागमोऽपि मोक्षतत्त्वं न बाधते । तथा मोक्षकारणतत्त्वमपि न प्रमाणेन विरुध्यते । प्रत्यक्षेणाकारणकमोक्षप्रतिपत्तेरभावात्तेन तद्बाधनायोगात् । नानुमानेनापि तद्बाधनम् । ततो मोक्षस्य कारणवत्त्वप्रसिद्धेः । तथा हि सकारणको मोक्षः प्रतिनियतकालादित्वात्कलशादिवत् । तस्याकारणकत्वे सर्वदा सर्वत्र सर्वस्य सद्भावानुषङ्गः । परापेक्षारहितत्वादिति । नागमेनापि मोक्षकारणतत्त्वं बाध्यते । तस्य तत्साधकत्वात् । "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति वचनात् । तथा संसारमपि न प्रमाणेन बाध्यते । प्रत्यक्षतः संसाराभावासिद्धेस्तस्य च तद्बाधकत्वाघटनात् । तथा हि स्वोपात्तकर्मवशादात्मनो भवान्तरावाप्तिः संसारः स न प्रत्यक्षविषयो येन प्रत्यक्षं तं बाधेत । अनुमानं तद्बाधकमिति चेत् । न । संसारतत्त्वाभावप्रतिबद्धलिङ्गाभावात् । ननु गर्भादिमरणपर्यन्तचैतन्यविशिष्टकायात्मनः पुरुषस्य जन्मनः पूर्वं मरणाच्चोत्तरं नास्ति भवान्तरमनुपलब्धेः खपुष्पवदित्यनुपलम्भः संसारतत्त्वाभावग्राहकः संसारतत्त्वस्य बाधक इति चेत् । नैतत् । चैतन्यानुपलम्भस्यासिद्धेः । प्राणिनामाद्यं चैतन्यं चैतन्योपादानकारणकं चिद्विवर्त्तत्वान्मध्यचैतन्यविवर्त्तवत् । तथान्त्यचैतन्यं चैतन्यकार्यकं तत एव तद्वदित्यनुमानाभ्यां पूर्वोत्तरभावोपलम्भाद्यथोक्तसंसारतत्त्वसिद्धेः । गोमयादेरचेतनाच्चेतनस्य वृश्चिकादेरुत्पत्तिदर्शनात्तेन व्यभिचारी प्रथमानुमाने हेतुरिति न वाच्यम् । वृश्चिकादिचैतन्यस्य पक्षीकरणात् । तथा हि वृश्चिकादिशरीरस्याचेतनस्यैव गोमयादेरचेतनात् सम्मूर्च्छनं न पुनर्वृश्चिकादिचैतन्यविवर्त्तस्य । तस्य पूर्वचैतन्यविवर्त्तनादेवोत्पत्तिप्रतिज्ञानात् । बुद्धचरमचित्तेन चित्तान्तरस्याजनकेन व्यभिचारो द्वितीयानुमाने हेतोरित्यपि न मन्तव्यम् । बुद्धचरम-

१ तत्त्वार्थसू. १।१ २ 'बाधते' इति प पुस्तके पाठः । ३ 'नैतद्वचनीयम् । अनुपलम्भस्य' इति प भ पुस्तकयोः पाठः ।

चित्तस्येन चित्तान्तराजनकस्य प्रमाणतोऽप्रसिद्धत्वात् । निरन्वयक्षणक्षयस्य प्रतिक्षेप्स्यमानत्वात् । अथ यथा प्रथम पथिकाग्निररणिनिमन्थनसमुत्थो नाग्निपूर्वको दृष्ट । परस्त्वग्निपूर्वक एव । तथाद्य चैतन्य कायाकारपरिणतभूतेभ्यो भविष्यति । पर तु चेतन्यपूर्वक विरोधाभावादिति चेत् । अनुत्तरमेतत् । विद्धिवर्त्तत्वस्य हेतो साम्येन व्याप्तेरखण्डनात् । प्रथमपथिकाग्नेरनभ्युपादानत्वे च जलादीनामप्यजलाद्युपादानत्वापत्ते पृथिव्यादिभूतचतुष्टयस्य तत्त्वान्तरभावविरोध । तथा हि येषा परस्परमुपादानोपादेयभावस्तेषा न तत्त्वान्तरत्वम् । यथा क्षितिविवर्त्तानाम् । परस्परमुपादानोपादेयभावश्च पृथिव्यादीनामित्येकमेव पुद्गलतत्त्व पृथिव्यादिविवर्त्तमवतिष्ठेत । अत्र क्षित्यादीनां न परस्परमुपादानोपादेयभाव सहकारिभावोपगमादित्युच्यते । तर्हि कथमपावकोपादान प्रथम पथिकपावक प्रसिद्धयेत् । यतस्तद्वदचेतनपूर्वक प्रथम चेतन्य प्रसाधयेत । यथैव हि प्रथमनिर्भूतपावकादेस्तिरोहितपावकान्तरादिपूर्वकत्वम् । तथा गर्भचैतन्यस्याविर्भूतस्वभावस्य तिरोहित चैतन्यपूर्वकत्वमिति किं न व्यवस्था स्यात् । स्यान्मत सहकारिमात्रादेव प्रथमपथिकाग्नेरुत्पत्त्यभ्युपगमाच्च तिरोहिताग्न्यन्तरोपादानत्वमसिद्धमिति । तदनुपपन्नम् । अनुपादानस्य कस्यचिदुत्पादादर्शनात् । शब्दविद्युदादेरपादानादर्शनाद्व्यभिचार इत्याशङ्क्य । नैव वाच्यम । शब्दादि सोपादान एव कार्यत्वात्कुम्भादिवदित्यनुमानात्तस्यादृश्योपादानस्यापि सोपादानत्वसाधनात् । नन्वस्तु सर्वोऽग्निरग्न्यन्तरोपादान एव । सर्वस्य सजातीयोपादानत्वव्यवस्थिते । चेतनस्य चेतनान्तरोपादानत्वनियमो न युक्त । तस्य भूतोपादानत्वघटनात् । भूतचेतनयो सजातीयान्तरत्वासिद्धेरिति चेत् । तदपि न न्यायमङ्गतम् । तयोर्भिन्नलक्षणत्वात्तत्त्वान्तरत्वोपपत्ते । तोयपावकयोरपि भिन्नलक्षणत्वादेव परैस्तत्त्वान्तरत्वसाधनात् । तथा हि

---

१ सहत्व इति प भ पुस्तकयो पाठ । २ 'चेतनस्य तु' इति प भ पुस्तकयो पाठ ।

तत्त्वान्तरं भूतेभ्यश्चैतन्यं तद्भिन्नलक्षणत्वान्यथानुपपत्तेः । नात्रासिद्धो हेतुः । क्षित्यादिभूतेभ्यो रूपादिसामान्यलक्षणेभ्य. स्वसंवेदनलक्षणस्य चैतन्यस्य भिन्नलक्षणत्वसिद्धेः । न हि भूतानि स्वसंवेदनलक्षणानि अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षत्वात् । यत्पुनः स्वसंवेदनलक्षण तन्न तथा प्रतीत यथा ज्ञानम् । तथा च भूतानि तस्मान्न स्वसंवेदनलक्षणानि । अनेकयोगिप्रत्यक्षेण सुखादिसंवेदनेन व्यभिचारी हेतुरिति न शङ्कनीयम् । अस्मदादिग्रहणात् । न च ज्ञानस्य स्वसंवेदनलक्षणत्वमसिद्धम् । अधस्तात्सप्रपञ्चमुपपादितत्वात् । तदेवं भूतचैतन्ययोर्भिन्नलक्षणत्वं प्रसिद्ध सत्तत्त्वान्तरत्वं तयोः साधयति । तच्चासजातीयत्वम् । तदप्युपादानोपादेयभावाभावम् । उपादानोपादेयभावस्य सजातीयत्वप्रयोजकत्वात् । तदेवं भूतचेतनयोर्नास्त्युपादानोपादेयभावो भिन्नलक्षणत्वादिति । व्यापकविरुद्धस्य व्याप्तोपलब्धिः । उपादानोपादेयभावव्यापकस्य सजातीयत्वविशेषस्योपादानोपादेयभावव्यापकत्वमसिद्धम् । विजातीयत्वाभिमतयो पयःपावकयोः सत्त्वादिना सजातीययोरप्युपादानोपादेयभावानभ्युपगमात् । कथंचिद्विजातीययोरपि मृद्घटाकारयो. पार्थिवत्वादिना विशिष्टसामान्येन सजातीययोरुपादानोपादेयभावसिद्धेः । कथं तर्हि सजातीयत्वविशेषस्य तत्त्वान्तरभावेन विरोध इति चेत् । तत्त्वान्तरभूतयोर्जलानलयोः सजातीयत्वविशेषस्य जलत्वादेरनुपलम्भात् । पूर्वाकारापरित्यागाजहद्वृत्तोत्तराकारान्वयप्रत्ययविषयस्योपादानत्वप्रतीते. । परित्यक्तपूर्वाकारेण द्रव्येणात्मसात्क्रियमाणोत्तराकारस्योपादेयत्वविज्ञानात् । अन्यथातिप्रसङ्गात् । कथं तत्त्वान्तरभावेन भिन्नलक्षणत्वं व्याप्तमिति चेत् । उच्यते । तत्त्वान्तरभावस्याभावे भिन्नलक्षणत्वस्यानुपपद्यमानत्वात् । किण्वादिमदिरादिपरिणामयोरतत्त्वान्तरभावेऽपि भिन्नलक्षणत्वस्य दर्शनात्तस्य तत्त्वान्तरभावेनाव्याप्तिरिति चेत् । न । तयोर्भिन्नलक्षणत्वासिद्धेः । किण्वादिरपि मदजननशक्तिसद्भावान्मादि-

१ 'तस्मान्न' इत्यधिक प. भ. पुस्तकयो. ।

रादिपरिणामवत् । सर्वथा मदजननशक्तिविकलत्वे हि कण्वादेर्मदिरादिपरिणामदशायामपि तदुद्रेकस्यप्रसङ्ग । नन्वेव भूतात्मतत्त्वयोरपि भिन्नलक्षणत्व मामूत्कायाकारपरिणतभूतविशेषावस्थात प्रागपि क्षित्यादिभूताना चैतन्यशक्तिसद्भावात् । अन्यथा तदवस्थायामपि चैतन्योद्भूतिविरोधादिति चेत् । नैव प्रत्यवस्थेयम् । चैतन्यस्यानाद्यनन्तत्वासिद्धेरात्मवादिनामिष्टप्रतिष्ठानात् । न चैव चैतन्यस्य भूतविवर्तत्वापत्ति । क्षित्यादितत्त्वस्यापि चैतन्यविवर्तत्वप्रसङ्गात् । अनाद्यनन्तत्वाविशेषात् । ततो भिन्नलक्षणत्व तत्त्वान्तरत्वेन व्याप्त भूतचैतन्ययोस्तत्त्वान्तरत्व साधयत्येवेति चैतन्यपरिणामोपादान एवाद्यचैतन्यपरिणाम । प्राणिनामन्त्यचैतन्योपादेयश्च जन्मान्तराद्यचैतन्यपरिणाम सिद्ध । पूर्वभवत्यागेन भवान्तरपरिग्रह एव ससार इति न ससारतत्त्वमनुमानेन बाध्यते । नाप्यागमेन । तस्य तत्प्रतिपादकतया श्रुते, "ससारिणस्त्रसस्थावरा " इति वचनात् । तथा ससारोपायतत्त्वमपि मिथ्यादर्शनादिक न प्रमाणेन बाध्यते । प्रत्यक्षस्य तदविषयत्वेन तद्बाधकत्वात् । निर्हेतुक ससारोऽनाद्यनन्तत्वादाकाशादिवदित्यनुमानेन । तद्बाध्यत इति चेत् । नैतदुचितम् । पर्यायार्थादेशात्ससारस्यानाद्यनन्तत्वासिद्धे । दृष्टान्तस्यापि व्योम्न क्षितिखननकूपोत्सेचनादौ सहेतुकतया सादिसान्ततया साध्यसाधनविकलत्वात् । द्रव्यार्थादेशात्तु ससारस्य निर्हेतुकत्वेन सम्मतत्वात् । सुस्पष्ट स्वाभिमायपरिवर्तनलक्षणस्य ससारस्य द्रव्यक्षेत्रकालभावभवविशेषहेतुकत्वप्रतीते नाहेतुससारसाधनानुमानमनवद्यमिति । न किंचिदनुमान ससारोपायतत्त्वस्य बाधक सम्भवति । नाप्यागम । तस्य तत्साधकत्वात् "मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतव " इति वचनात । बन्धहेतूनामेव च ससारहेतुत्वात् । तथैव

---

१ एव च' इति प भ पुस्तकयो पाठ । २ तत्त्वार्थ २।१२ ३ प्रतीते' इति प भ पुस्तकयो पाठ । ४ तत्त्वार्थ ८।१

मोक्षससारतत्कारणतत्त्वं भगवतोऽभिमतं प्रमाणेन प्रत्यक्षादिनाऽवाध्यं सिध्यत्तद्वाचस्तेनाविरोधित्व साधयति । तच्च निर्दोषत्वम् । तदपि सर्वज्ञत्वमिति । एव च ।

निष्कण्टकेन ऋजुना तदनेन तूर्ण निष्कम्पयुक्तिसुपथा निरुपद्रवेण ॥
अर्हन्महीधरशिखाशिखरे सुखेन सर्वज्ञता समधिरोहति नेतरत्र॥३४७॥

कपिलादीना सर्वज्ञत्वस्य मोक्षतत्त्वस्य च खण्डनम् ।

ननु निर्दोषत्वेन कपिलादयोऽपि किमिति सर्वज्ञा न भवन्ति । उच्यते । तेषां प्रमाणविरुद्धभाषित्वेन निर्दोषत्वासिद्धे । तथा हि कपिलादयो न निर्दोषाः प्रमाणविरुद्धभाषित्वाद्ये प्रमाणविरुद्धभाषिणस्ते न निर्दोषा यथा दुर्वैद्यादयस्तथा च कपिलादयस्तस्मान्न निर्दोषा इति । न चात्र प्रमाणविरुद्धभाषित्वं कपिलादीनामसिद्धम् । तदभिमतस्य मोक्षसंसारतत्कारणतत्त्वस्य प्रमाणेन बाधनात् । तत्र कपिलस्य तावत्स्वरूपे चैतन्यमात्रेऽवस्थानमात्मनो मोक्ष इत्यभिमतम् । तत्प्रमाणेन बाध्यते । चैतन्यविशेषेऽनन्तज्ञानादौ स्वरूपावस्थानस्य मोक्षत्वस्य साधनात् । न ह्यनन्तज्ञानादिकमात्मनोऽस्वरूपम् । सर्वज्ञत्वादिस्वरूपं नात्मन इति च मिथ्या । तस्याचेतनत्वादाकाशवत् । ज्ञानादेरप्यचेतनत्वादचेतनप्रधानस्वभावत्वं युक्तमेवेत्यपि विचारबाह्यम् । प्रमाणाभावात् । नन्वचेतना ज्ञानादय उत्पत्तिमत्त्वाद्घटादिवदित्यनुमानं प्रमाणमस्त्येवेति चेत् । नैतद्वाच्यम् । हेतोरनुभवेन व्यभिचारात् । तस्य चेतनत्वेऽप्युत्पत्तिमत्त्वात् । कथमुत्पत्तिमाननुभव इति चेत् । परापेक्षत्वात् बुद्ध्यादिवत् । परापेक्षोऽसौ, " बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते " इति वचनात् । बुद्ध्यध्यवसितार्थानपेक्षत्वेऽनुभवस्य सर्वत्र सर्वदा पुंसोऽनुभवप्रसङ्गात् सर्वस्य सर्वदर्शित्वापत्तेस्तदुपायानुष्ठानवैयर्थ्यमेव स्यात् । यदि पुनरनुभवसामान्यं नित्यमनुत्पत्तिमदेवेति मतम् । तदा ज्ञानादिसामान्यमपि नित्यत्वादनुत्पत्तिमद्भवेदित्यसिद्ध उत्पत्तिमत्त्वादिति हेतु. । ज्ञानादिविशेषाणामुत्पत्तिमत्त्वान्नासिद्ध इति चेत् ।

तद्वानुभवविशेषाणामप्युत्पत्तिमत्त्वादनैकान्तिकोऽसौ कथं न स्यात् । नानुभवस्य विशेषाः सन्तीति चायुक्तम् । वस्तुत्वविरोधात् । तथा हि नानुभवो वस्तु सकलविशेषरहितत्वात् । खरविषाणवत् । नात्मनानेकान्तः । तस्यापि सामान्यविशेषात्मकत्वात् । अन्यथा तदवस्तुत्वापत्तेः । अचेतना ज्ञानादय इति पक्षश्च प्रत्यक्षबाधितः । ज्ञानादीनां स्वसंवेदनप्रत्यक्षत्वाच्चेतनत्वप्रसिद्धेः । अथ चेतनसंसर्गाच्चेतनस्यापि ज्ञानादेश्चेतनत्वप्रतीतिः प्रत्यक्षतो भ्रान्तैव । तदुक्तम् । " तस्मात्तत्संसर्गादचेतनं चेतनावदिव लिङ्गम् " इति । एतदप्यचर्चिताभिधानम् । शरीरादेरप्येवं चेतनत्वप्रतीतिप्रसङ्गात् । चेतनसंसर्गाविशेषात् । शरीराद्यसम्भवी बुद्ध्यादेरात्मना संसर्गविशेषोऽस्तीति चेत् । स कोऽन्योऽन्यत्र कथञ्चित्तादात्म्यात् । आत्माद्दृष्टकृतकत्वादिविशेषस्य च शरीरादावपि भावात् । ततो नाचेतना ज्ञानादयः स्वसंविदितत्वादनुभववत् । स्वसंविदितास्ते परसंवेदनान्यथानुपपत्तेरिति प्रतिपादितप्रायम् । तथा चात्मस्वभावा ज्ञानादयश्चेतनत्वादनुभववदेवेति न चैतन्यमात्रेऽवस्थानं मोक्षः । अनन्तज्ञानादिचैतन्यविशेषावस्थानस्य मोक्षत्वप्रतीतेः । एवं च ।

कपिलः कल्पयामास यदिदं मोक्षलक्षणम् ॥
परीक्षां क्षमते तन्न स्याद्वादन्यायशालिनाम् ॥ ३४८ ॥

एतेन बुद्ध्यादिविशेषगुणोच्छेदादात्ममात्रेऽवस्थानमात्मनो मुक्तिरिति कणभक्षाक्षपादमतमपि प्रमाणेन बाधितमुपदर्शितम् । पुंसोऽनन्तज्ञानादिस्वरूपत्वसाधनात् । स्वरूपोपलब्धेरेव मुक्तित्वसिद्धेः । स्यान्मतम् । न बुद्ध्यादयः पुंसः स्वरूपं तद्विरुद्धधर्माधिकरणत्वात् घटादिवत् । तद्विरुद्धधर्माधिकरणत्वं पुनस्तेषामुत्पादविनाशधर्मकत्वादात्मनोऽनुत्पादविनाशधर्मकत्वात् प्रसिद्धमिति । तदयुक्तम् । विरुद्धधर्माधिकरणत्वेऽपि सर्वथा भेदाभेदासिद्धेः । मेचकज्ञानतदाकारवत् । एकं हि मेचकज्ञान-

१ सां का २०

मनेकश्च तदाकारो नीलादिप्रतिभासविशेष इत्येकत्वानेकत्वविरुद्धधर्माधिकरणत्वभेदेऽपि स्यादिति मतम् । तदा तत्किमनेकया शक्त्याऽनेकमर्थं युगपद्गृह्णाति किं चैकया । यद्यनेकया, तदेकमनेकशक्त्यात्मकमिति स एव विरुद्धधर्म्माध्यासः । अनेकशक्तेरनेकत्वधर्म्माधारभूताया ज्ञानात्पृथक्त्वे ज्ञानस्य त्वेकधर्माधारत्वान्नैकत्र विरुद्धधर्म्माध्यास इति चेत् । तर्हि कथमनेका शक्तिस्तस्येति व्यपदिश्यते, ततो भेदादर्थान्तरवत् । सम्बन्धादिति चेत् , तर्हि तदनेकया शक्त्या सम्बध्यमानमनेकेन रूपेण कथमनेकरूपं न स्यात् । तस्याप्यनेकरूपस्य ततोऽन्यत्वादेकमेवेति चेत् । कथं तर्हि तत्तस्येति व्यपदेष्टव्यम् । सम्बन्धादिति चेत् , तर्हि स एव दोषः । अनिवृत्तश्च पर्यनुयोगोऽनवस्थानात् । यदि पुनरेकेनैव रूपेणानेकया शक्त्या सम्बध्यते । तदा येनैव पीतग्रहणशक्त्या सम्बध्यते तेनैव नीलादिग्रहणशक्त्या चेत्पीतग्राहित्वविशेषणमेव मेचकज्ञानं स्यान्न नीलादिग्राहित्वविशेषणमिति पीतज्ञानमेव तन्न तु मेचकज्ञानम् । अथैकया शक्त्यानेकमर्थं गृह्णातीति द्वितीयविकल्पः समाश्रयिते । तदापि सर्वार्थग्रहणप्रसङ्गः । तथा हि, पीतग्रहणशक्त्यैकया यथा नीलादिग्रहणं तथातीतानागतवर्त्तमानाशेषपदार्थग्रहणमपि केन वार्येत । अथ न पीतग्रहणशक्त्या नीलग्रहणशक्त्या वा पीतनीलाद्यनेकार्थग्राहि मेचकज्ञानमिष्यते किं तर्हि नीलपीतादिप्रतिनियतानेकार्थग्रहणशक्त्यैकयेति मतम् । तदा न कार्यभेदः कारणशक्तिभेदव्यवस्थाहेतुः स्यादित्येकहेतुकं विश्वस्य वैश्वरूप्यं प्रसज्येत । तथा चानेककारणप्रतिवर्णनं सर्वकार्योत्पत्तौ विरुध्यते । तदभ्युपगच्छता मेचकज्ञानमनेकार्थग्राहि नानाशक्त्यात्मकमुररीकर्त्तव्यम् । तेन च विरुद्धधर्म्माधिकरणेनैकेन प्रकृतहेतोरनैकान्तिकत्वान्न ज्ञानानाम्[1] आत्मनो भेदैकान्तसिद्धिर्येनात्मा तज्ज्ञानादिरूपो न भवेत् । निराकरिष्यमाणत्वाच्च पुरस्ताद्गुणगुणिनोरन्य-

१ 'ज्ञानादीनाम्' इति प भ पुस्तकयोः पाठः ।

तैकान्तस्य । न नानादयो गुणाः सर्वथात्मनः पृथग्भूता शक्या प्रतिपादयितुम् । यतोऽशेषविशेषगुणनिवृत्तिर्मुक्तिर्व्यवतिष्ठेत । ननु धर्माधर्मयोस्तावन्निवृत्तिरात्यन्तिकी मुक्तौ प्रतिपत्तव्या । अन्यथा मुक्तेरनुपपत्तेः । धर्माधर्मनिवृत्तौ च तत्फलबुद्ध्यादिविनिवृत्तिरवश्यभाविनी । निमित्तापाये नैमित्तिकस्यानुपपत्तेः । मुक्तस्यात्मनोऽन्तःकरणसंयोगाभावेन च तत्कार्यस्य बुद्ध्यादेरनुत्पत्तिरित्यशेषगुणनिवृत्तिर्मुक्तिः सिध्यत्येवेति केचित् । तेऽपि धर्माधर्मनिबन्धनानां बुद्ध्यादीनामात्मान्तःकरणसंयोगजानां च मुक्तौ निवृत्तिं ब्रुवाणा न निवार्यन्ते । कर्मक्षयहेतुकयोस्तु प्रशमसुखानन्तज्ञानयोर्निवृत्तिमाचक्षाणास्ते न स्वस्थाः । प्रमाणविरोधात् । तथा ह्यात्मा मुक्तौ ज्ञानादिमान् सत्त्वान्यथानुपपत्तेः । न खल्वात्मनः सर्वथापि ज्ञानाद्यभावे किंचिदपि स्वरूपं स्यात् । तद्गुणत्वात्तस्य । ततः कथञ्चिद्बुद्ध्यादिविशेषगुणानां निवृत्तिर्मुक्तौ व्यवतिष्ठते । न चैव सिद्धान्तविरोधः । "औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः" इति सूत्रसद्भावात् । अत्र ह्यौपशमिकक्षायोपशमिकौदयिकभावानां दर्शनज्ञानगत्यादीनां पारिणामिकभावस्य च भव्यत्वस्याभावान्मोक्ष इत्यभिसम्बन्धान्मुक्तौ विशेषगुणनिवृत्तिरिष्टा । "अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः" इति वचनादनन्तज्ञानदर्शनसम्यक्त्वानामनिवृत्तिश्चेति युक्तमुक्तं कथञ्चिद्बुद्ध्यादिविशेषगुणानां निवृत्तिर्मुक्तौ व्यवतिष्ठत इति । ननु कथमेवमनन्तसुखसद्भावो मुक्तौ सिद्ध्येदिति चेत्, उच्यते । सिद्धत्ववचनात् । सकलदुःखनिवृत्तिरात्यन्तिकी हि भावतः सिद्धत्वम् । तेन चानन्तप्रशमसुखमिति सांसारिकसुखनिवृत्तिरपि मुक्तौ न विरुध्यत इति । ततश्च ।

> बुद्ध्याद्युच्छेदरूपापि मुक्तिर्योगापकल्पिता ॥
> न्यायवाह्येति नो मान्या स्याद्वादसुभगात्मनाम् ॥ २४० ॥

[1] बुद्ध्यादस्यापि इति प म पुस्तकयो पाठ । [2] तत्त्वार्थ १०।४ २ त श्लो वा १०।४

अनन्तसुखमेव मुक्तस्य न ज्ञानादिकमित्यानन्दोपरोधेन सुखैकस्वभावाभिव्यक्तिर्मोक्ष इति ब्रह्माद्वैतवादिमतम् । "आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" इति वचनात् । एतदपि प्रमाणेन बाध्यत एव ।

ब्रह्माद्वैतवादिसम्मतस्य मोक्षस्य खण्डनम् ।

तथा ह्यनन्तसुखं मुक्तौ पुंसः संवेद्यमसंवेद्यं वा । संवेद्यं चेत्, तत्संवेदनस्यानन्तस्य सिद्धिः । अन्यथानन्तस्य सुखस्य स्वयम्भुसंवेद्यत्वविरोधात् । यदि पुनरसंवेद्यमेव तत् । तदा कथं सुखं नाम । असंविदितस्य व्यवस्थापयितुमशक्यत्वात् । स्यान्मतं तेऽभ्युपगम्यते एवानन्तसुखसंवेदनं परमात्मनः । केवलं बाह्यार्थानां ज्ञानं नाभ्युपगम्यते, तदप्येवं सम्प्रधार्यम् । किं बाह्यार्थवेदनाभावो मुक्तस्य । बाह्यार्थाभावादिन्द्रियापायाद्वा । प्रथमपक्षे न सुखस्यापि संवेदनं युक्तम् । तस्यापि बाह्यार्थवदभावात् । पुरुषाद्वैतवादे हि बाह्यार्थाभावो यथाभ्युपगन्तव्यस्तथा सुखाभावोऽपि । अन्यथा द्वैतप्रसङ्गात् । अथ द्वैतवादावलम्बिना सतोऽपि बाह्यार्थस्येन्द्रियापायादसंवेदनं मुक्तस्येति मतम् । तर्हि सुखसंवेदनमपि तस्य न स्यात् । अन्तःकरणस्य तद्ग्राहकस्येन्द्रियस्यापायात् । अथान्तःकरणाभावेऽपि मुक्तस्यातीन्द्रियसंवेदनेन सुखसंवेदनमिष्यते । तर्हि बाह्यार्थवेदनमप्यस्तु तस्यातीन्द्रियज्ञानेनैवेति मन्यताम् । सर्वथा विशेषाभावात् ।

नैवमुक्तिरुपपद्यते ततो ब्रह्मवादिपरिकल्पितापि च ॥
एवमस्तु विजयैकभूषणं जैनशासनमपास्तदूषणम् ॥ ३५० ॥

सौगतास्तु केचिन्निराश्रयचित्तसन्तानोत्पत्तिर्मोक्ष इत्याचक्षते । तत्राविद्यातृष्णारहितं चित्तं निराश्रयमित्यभिधीयते । अविद्या रागद्वेषाभिलाषः । तृष्णा तु भाविभोगाभिलाषः । अपरे पुनः "प्रदीपनिर्वाणवत्सर्वथा चित्तसन्तानोच्छेदो मोक्ष" इति सङ्गिरन्ते । तेषामुभयेषामपि मोक्षतत्त्वं

बौद्धाभिमतमोक्षस्य खण्डनम् ।

प्रमाणेन बाध्यते । चित्ताना तत्त्वतोऽन्वितत्वस्य सर्वथा सन्तानोच्छेदानुपपत्तेश्च समर्थयिष्यमाणत्वात । निरन्वयक्षणक्षयैकान्ताभ्युपगमे च मोक्षाङ्गीकारसाधनस्याभिधास्यमानत्वादिति ।

तदित्थ बौद्धसिद्धान्तवासनाग्रस्तमानसे ॥
मोक्षस्वरूप कथित न न्यायमनुगच्छति ॥ ३ ९१ ॥

कपिलादिपरिकल्पितमोक्षकारणतत्त्वसमारत त्वया खण्डनम् ।

तथा मोक्षकारणतत्त्वमपि कपिलादिभि परिकल्पित प्रमाणविरुद्धम् । तथा हि ज्ञानमात्र न पर नि श्रेयसकारणम् । प्रकर्षपर्यन्तावस्थायामप्यात्मनि शरीरेण सहावस्थानान्मिथ्याज्ञानवत् । न तावदिहासिद्धो हेतु । सर्वज्ञानामपि कापिलादीना प्रकर्षपर्यन्तावस्थाप्राप्तस्यापि ज्ञानस्य शरीरेण सहावस्थानाभ्युपगमात् । साक्षात्सकलार्थज्ञानोत्पत्त्यनन्तर शरीराभावे कुतोऽयमाप्तस्योपदेश प्रवर्तेत । अशरीरस्याप्तस्योपदेशकरणविरोधादाकाशवत् । अनुत्पन्नसकलार्थज्ञानस्याप्तस्योपदेश इति चेत्, नैवम् । तथाविधाप्तोपदेशस्याप्रमाणत्वशङ्कानिवृत्ते । अन्याज्ञानपुरुषोपदेशवत् । यदि पुन शरीरान्तरानुत्पत्तिर्नि श्रेयस न गृहीतशरीरनिवृत्ते । शरीरान्तरानुत्पत्तिरूपस्य च नि श्रेयसस्य साक्षान्निखिलतत्त्वज्ञान कारणम् । नतु गृहीतशरीरनिवृत्ति फलोपभोगाद्गृहीतशरीरनिवृत्ते स्वीकारात् । तत पूर्वोपात्तेन शरीरेण सहावतिष्ठमानतत्त्वज्ञानादाप्तस्यापदेशो युक्त इति मतम् । तदा शरीरेण सहावस्थानादिति हेतु सिद्धोऽभ्युपगतस्तावत । स च परनि श्रेयसाकारणत्व तत्त्वज्ञानस्य साधयत्येन । भाविशरीरस्येवोपात्तशरीरस्यापि निवृत्ते परनि श्रेयसत्वात । तस्य च तत्त्वज्ञानसद्भावेऽप्यभावात् । अथ फलोपभोगकृतोपात्तकर्मक्षयापेक्ष तत्त्वज्ञान परनि श्रेयकारणमित्युच्यते । तदप्ययुक्तम् । फलोपभोगस्योपक्रमिकविकल्पानतिक्रमात । फलोपभोगस्योपक्रमिकत्वे कुतस्तदुपक्रमोऽन्यत्र तपोतिशयादिति तत्त्वज्ञान

1 प्रवतत इति प पुस्तके पाठ ।

तपोतिशयहेतुकं परनिःश्रेयसमायातम् । समाधिविशेषादुपात्ताशेषकर्मफलोपभोगाभ्युपगमाददोष इति चेत्, कः पुनरसौ समाधिः । स्थिरीभूतं ज्ञानमेव स इति चेत्, तदुत्पत्तौ परनिःश्रेयसस्य भावे स एवास्योपदेशाभावः । ननु सकलतत्त्वज्ञानस्यास्थैर्यावस्थायामसमाधिरूपस्योत्पादे युक्तो योगिनस्तत्त्वोपदेश इति चेत्, नैतदुपपन्नम् । सकलतत्त्वज्ञानस्यास्थैर्यविरोधात् । तस्य कदाचिच्चलनादुपपत्तेः । यौगपद्येन प्रवृत्तत्वाद्विषयान्तरसञ्चारणाभावात् । अन्यथा सकलतत्त्वज्ञानत्वासम्भवादस्मदादिवत्[1] । अथ तत्त्वोपदेशदशायां योगिनोऽपि ज्ञानं विनेयजनप्रतिबोधाय व्याप्रियमाणमस्थिरमसमाधिरूपं पश्चान्निवृत्तसकलव्यापारं स्थिरं समाधिव्यपदेशमास्कन्दतीत्युच्यते । तर्हि समाधिश्चारित्रमिति नाममात्रं भिद्यते नार्थः । तत्त्वज्ञानादशेषाज्ञाननिवृत्तिफलादन्यस्य परमोपेक्षालक्षणस्य स्वभावस्य समुच्छिन्नक्रियाप्रतिपातिपरमशुक्लध्यानस्य तपोतिशयस्य समाधिव्यपदेशकारणत्वात् । तथा च चारित्रसहितं तत्त्वज्ञानमन्तर्भूततत्त्वार्थश्रद्धानं परनिःश्रेयसकारणमनिच्छतामपि कपिलादीनामग्रे व्यवस्थितम्[2] । ततोऽनुमानविरुद्धं सर्वथैकान्तवादिना मोक्षकारणतत्त्वं स्वागमविरुद्धं च । सर्वेषामागमे प्रव्रज्याद्यनुष्ठानस्य सकलदोषापगमस्य च बाह्यस्याभ्यन्तरस्य च चारित्रस्य मोक्षकारणतया श्रवणात् ।

तदित्थं कपिलादीनामभिप्रायेण सर्वथा ॥
न मोक्षकारणं किञ्चिद्घटामञ्चति तत्त्वतः ॥ ३५२ ॥

संसारतत्त्वं चान्येषां प्रमाणविरुद्धम् । तथा हि नास्ति नित्यत्वादि एकान्ते कस्यचिद्विक्रियानुपलब्धेरित्यनुमानविरोधः । तथागमविरोधश्च, "[3]तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ॥ संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ १ ॥" इति

१ 'अस्मदादिज्ञानवत्' इति प पुस्तके पाठः । २ 'कारणात्' इति प भ. पुस्तकयोः पाठः । ३ सां का. ६२.

वचनेन कापिलै प्रकृतेरेव ससाराभ्युपगमत पुरुषस्य ससाराभावप्रतिपादनात् । सौगतै. पुन सवृत्त्या सर्वव्यवहारस्वीकरणेन परमार्थवृत्त्या ससारानभ्युपगमादिति ।

न ससारस्वरूप च तदेवमुपपद्यते ॥
स्याद्वादन्यायबाह्याना सर्वेषामपि वादिनाम् ॥ ३५३ ॥

ससारकारणतत्त्वमप्यपरेषा प्रमाणविरुद्धम् । तद्धि मिथ्याज्ञानमात्र तैरङ्गीकृतम् । न च तत्कारणक ससार । तन्निवृत्तावपि ससारानिवृत्ते । यन्निवृत्तावपि यन्न निवर्तते न तत्तन्मात्रकारणकम् । यथा सूत्रधारादिनिवृत्तावप्यनिवर्तमान प्रासादादि न तन्मात्रकारणकम् । मिथ्याज्ञाननिवृत्तावप्यनिवर्तमानश्च ससार । तस्मान्न मिथ्याज्ञानमात्रकारणक इति । नात्र हेतोरसिद्धि । सम्यग्ज्ञानोत्पत्तौ सत्या मिथ्याज्ञाननिवृत्तावपि दोषानिवृत्तौ ससारानिवृत्ते स्वयमभिधानात् । दोषाणा ससारकारणत्वप्रतिपादकागमस्वीकरणाच्चेति । मिथ्याज्ञानमात्र ससारकारणतत्त्व प्रमाणविरुद्धम् । एव च,

ससारकारणमपीदृ निचारमाण
सन्धायत कथमपि स्थितिमेति नैव ॥
जैनेन्द्रदर्शनपराड्मुखमानसाना
सिद्धि गत प्रकृतहेतुरतश्च नूनम् ॥ ३५४ ॥

एव प्रसिद्धत्वे प्रमाणविरुद्धभाषित्वादिति हेतो कपिलादीना सदोषत्व सिद्धम् । तथा च,

नैवैते कपिलादय कथमपि प्राप्तु भवन्तीश्वरा
सत्तत्त्वमशेषदोषविसरप्रध्वसलभ्योद्भवम् ॥
अर्हन्नेव तत समस्तजगता साक्षात्कृतो प्रत्यल
सिद्ध प्रौढतरप्रमाणवशत प्रेक्षावता पश्यताम्॥ ३५५॥

ईश्वरसर्वज्ञत्वखण्डनमसहमानस्य नयायिकस्य मतमुद्धाट्य तत्खण्डनम्।

अत्राह योगपरिषत्प्रतिषिध्यते स्म
सर्वज्ञता स्मररिपोर्यदि दोषवत्त्वात् ॥
युक्तं न तन्निखिलदूषणजालमुक्तो
यस्मादयं सततमुक्ततया स्थितत्वात् ॥३५६॥

किं च।

असर्ववित्त्वं हिमरश्मिमौलेर्युक्तं न वक्तुं मतिमांसलानाम् ॥
यदेष विश्वत्रयसूत्रणायामेकः परं शाश्वतसूत्रधारः ॥ ३५७ ॥
विश्वत्रयीसूत्रणमप्रसिद्धं नैतस्य वाच्यं चतुरैः कथञ्चित् ॥
सर्वानुमानोपरिवर्तमानाच्छुद्धानुमानादिह तत्प्रसिद्धेः ॥ ३५८ ॥

तथा हि,

विवादं बुद्धिमद्धेतु कार्यत्वात् कार्यमत्र यत् ॥
तत्तथा घटवत्कार्यमेतच्चातस्तथामतम् ॥ ३५९ ॥
न तावदाश्रयासिद्धिः साधनेऽत्र [1]विलोक्यते ॥
सम्भवन्ति यतस्तावद्भावानां राशयस्त्रय. ॥ ३६० ॥
प्रसिद्धकर्तृका. केचित्कटकुड्यकुटादयः ।
अकर्तृकाः पुनः केचित्कालान्तःकरणादय· ॥ ३६१ ॥
सन्दिग्धकर्तृकाः केचित्काऽयपीपर्वतादयः ।
एत एवानुमानेऽत्र विवादपदशब्दिताः ॥ ३६२ ॥
प्रतीताश्च प्रमाणेन प्रमातॄणाममी स्फुटम् ।
कार्यत्वं वात्र तन्नास्ति स्वरूपेणाप्यसिद्धता ॥ ३६३ ॥
तथा हि केचिदङ्कुरशक्रचापाम्बुजादय ।
प्रत्यक्षेणैव वीक्ष्यन्ते जायमानाः शरीरिभिः ॥ ३६४ ॥
भूधरादौ तु कार्यत्वं सिद्धं सावयवत्वत. ।
महत्त्वे वा क्रियावत्त्वाद्द्रवतावत्त्वतोऽथवा ॥ ३६५ ॥

---

1 ' विवाध्यते ' इति प. भ पुस्तकयो. पाठ· ।

एतेभ्य एव हेतुभ्यो विवादास्पदवस्तुनः ।
कर्ता यद्वा प्रमाभ्योऽत्र तर्कतर्कणकर्कशे ॥ ३६६ ॥
आकाशकालकाष्ठादेर्व्यावृत्तत्वाद्विपक्षतः ।
व्यभिचारित्वमप्यत्र कार्यत्वस्य न पेशलम् ॥ ३६७ ॥
अत एव विरुद्धत्वमभिधेयं न धीधनैः ।
कालात्ययापदिष्टत्वमत्र कालकटाक्षितम् ॥ ३६८ ॥
प्रत्यक्षेणानुमानेन शब्देनाप्यतिरस्कृतात् ।
पक्षादनन्तरं प्रोक्तं यस्मात्कार्यत्वसाधनम् ॥ ३६९ ॥
प्रक्रियासमताप्यस्य कीर्त्यमाना न कीर्तिकृत् ।
विपक्षाक्षेपिका काचिदनुमा नात्र विद्यते ॥ ३७० ॥
अथ स्थाणुर्विवादस्य कर्ता नैवोपपद्यते ।
शरीररहितत्वेन मुक्तात्मेवेति जल्प्यते ॥ ३७१ ॥
तत्र सर्वेण केनापि प्रमाणेन त्रिलोचनः ।
धर्मी प्रसिद्धस्तेनैव साध्यस्यात्र विसूत्रणात् ॥ ३७२ ॥
सिध्येत्स्वयं हि तन्वादि[1]विनिर्मितिनिरङ्कुशः ।
सिध्येत्तत्र को हेतुस्ते भाति तत्त्वकीलितः ॥ ३७३ ॥
दोषैरशेषैरपि विप्रमुक्तत्र्यक्षस्य कर्तृत्वविधौ सुदक्षे ।
अत्रानुमाने सति जागरूके निराश्रयं सम्प्रति सञ्चराम ॥३७४॥

ननु बुद्धिमद्धेतुकतामात्रमत्र सिषाधयिषितं तद्विशेषो वा । आद्ये पक्षे सिद्धसाधनम् । अभिमतं हि परेषामपि बुद्धिमद्धेतुकतामात्रं गोत्रादौ । कर्मफलदात्कायतनात्मस्य कर्मणश्च चेतनहेतुकत्वात् । द्वितीये तु विरुद्धता हेतोः । तथा हि सकलज्ञो बुद्धिमानत्र साध्यतयाभीष्टो दृष्टान्ते च कुटे तद्विलक्षणोऽसौ समुपलभ्यते । दृष्टान्तदृष्टधर्मानुसारेण

---

1 'तत्वादि' इति भ पुस्तके पाठः ।

च दृष्टार्थे प्रतिपत्तिर्भवतीति सिषाधयिषितधर्मविपर्ययप्रसाधनाद्विरुद्धं कार्यत्वम् । दृष्टान्तश्च साध्यविकलः । कलशे तथाविधस्य बुद्धिमतोऽभावात् । न च बुद्धिमद्धेतुतामात्रं साधनविषयस्तद्विशेषस्य तु सर्वज्ञत्वस्यातद्विषयस्यापि ततः सिद्धिरिति साम्प्रतम् । यतो यद्यसौ विशेषो न साधनविषयः कथमतस्तत्सिद्धिः । सिद्धचाद्विषयश्चेत् । कथं न स्वाश्रयां दोषगतिं स्पृशेत् । तदसुन्दरम् । सामान्यमात्रव्याप्तावप्यन्तर्भावितविशेषस्य सामान्यस्य पक्षधर्मतावशेन साध्यधर्मिण्यनुमीयमानत्वात् । इतरथा सर्वानुमानोच्छेदप्रसङ्गात् । तथा हि वह्न्यनुमानमपि न वह्निसामान्यमात्रविषयम् । तस्य प्रागेव सिद्धत्वात् । नापि तद्विशिष्टगिरिगोचरम् । वह्निसामान्यस्य तत्सम्बन्धित्वाभावेन तद्विशेषणत्वानुपपत्तेः । सम्बन्धस्वीकारे तु यथा गोत्वसमवायाद्गावः शावलेयादयस्तथा पर्वतो वह्नित्वसमवायाद्वह्निः स्यात् । अस्त्येव वह्नित्वेन गिरेः संयुक्तसमवायः सम्बन्ध इति चेत् । तर्हि नाप्रतिपद्य पर्वतसंयुक्तं वह्निविशेषमसौ शक्यप्रतिपत्तिरिति वह्निविशेषस्यैवानुमानम् । तत्र च प्रोक्तदोषप्रसङ्गः । एवमिन्द्रियानुमानेऽपि स एव दर्शनीयः । तथा हि तत्रापि नेन्द्रियकरणिका काचित् क्रियोपलब्धा । न खलु च्छिदादयः क्रिया इन्द्रियसाधनाः । परश्वधादीनामनिन्द्रियत्वात् । न च परश्वधादिसाधना रूपादिपरिच्छित्तिरूपा क्रिया सम्भवति । तस्माद्यथैव क्रियात्वसामान्यस्य सत्यपि करणमात्राधानत्वव्याप्तत्वे पक्षधर्मतावशादिन्द्रियलक्षणकरणविशेषसिद्धिस्तथेहापि । सत्यपि कार्यत्वस्य बुद्धिमद्धेतुमात्रव्याप्तत्वे विवादाध्यासितेषु पक्षधर्मतावशाद्विशिष्टस्य बुद्धिमतः सिद्धिः । अन्यथा सामान्यस्यापि व्यापकाभिमतस्य न सिद्धिः स्यात् । निर्विशेषस्य तस्यानुपपत्तेः । न चासर्वज्ञस्य क्षितिधराङ्कुरादिकार्यग्रामोपादानोपकरणसम्प्रदानप्रयोजनानभिज्ञतया तत्कर्तृत्वं सम्भवति । ये हि यत्कर्तारस्ते तदुपादानाद्यभिज्ञाः । यथा कुलालादयः । सर्वेषां च कार्याणामीश्वरः कर्त्तेति समस्तकार्योपादानाद्यभिज्ञः । उपादानं चेह पार्थिवाद्याः परमाणवः

उपकरण समस्तक्षेत्रसमवायिना धर्माात्मना । सम्प्रगान क्षेत्रना । यानय स्वकर्मभिरभिप्रति । प्रयोजन सुखदु खोपभोग क्षेत्रनानामिति । तेन यद्यपि बुद्धिमद्धेतुकत्वमात्र व्याप्तिविषयस्तथापि तद्विशेषस्य पक्ष धर्मतावलात्प्रतिलम्भ इति विशेषविषयमनुमानम् । न चोक्तदोषप्रसङ्ग । स्यादेतत्र कार्यत्वमात्र स्वभावप्रतिबद्ध बुद्धिमद्धेतुत्वेन । किन्तु तद्वि शेष । यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुत्पद्यते । तस्य च दृष्टे सोपजायते यद्बुद्धिसद्भावाभावानुविधायि दृष्टम् । घटादिकार्यविशेषश्च तथा न कार्यमात्र तनुभुवनाद्यपि । तस्य तद्भावाभावानुविधानादर्शनात् । तस्तेन विशेषेणोपाधिना प्रयुक्ता बुद्धिमद्धेतुकत्वव्याप्तिमुपनीयन् कार्यत्वसामान्य न तेन स्वभावप्रतिबद्धमिति न तद्गमयितुमर्हति । इतरथा धूमप्रयुक्ता धूमध्वजव्याप्तिमुपनीयत पाण्डुत्वादि कुमुदकपोतादिगताद्पि मकरकेतनानुमानप्रसङ्ग । तन्न्यायबाह्यम् । न हि यत्कार्यं तत्सिद्धमपि कृतबुद्धिमात्मन्युपजनयतीति नियम कृत्रिममणिमौक्तिकेषु खातप्रतिपूरितपृथिव्या च तथादर्शनाभावात् । किं च कोऽय कार्यत्वस्य विशेष । किं बुद्धिमदन्वयव्यतिरेकानुविधान तद्दर्शन वा । यदि पूर्व कल्प । स बुद्धिमद्धेतुकत्व तनुभुवनादीनामातिष्ठमानैरभ्युपेयत एव । न हि कारण कार्यानुविहितभावाभावमन्यो वक्तुमर्हति सद्गृहीतान् । अथ तद्दर्शनम् । तर्हि य एव पटोऽनेन बुद्धिमदन्वयव्यतिरेकानुविधायी दृष्ट स एव तत्कार्यो न तु विपणिवर्ती । अथ तज्जातीयस्य तदन्वयव्यतिरेकानुविधानदर्शनाददृष्टान्वयव्यतिरेकानुविधानमपि तज्जातीय तथेति चेत् । किं न तनुभुवनाद्यपि तथा मन्यते । पटजातीयमेव कार्यं बुद्धिमद्धेतुकमिति चेत् । ननु प्रासादादिक तद्धेतुक न भवेदपटजातीयत्वात् । अथापटजातीयस्यापि प्रासादादिकस्य केनचिद्विशेषेणास्त्येव पटेन समानीयत्वम् । तर्हि तनुभुवनादेरपि तथा तत्किं न भविष्यति । तत स्वभावप्रतिबद्ध कार्यत्व बुद्धिमद्धेतुकत्वेनेति ।

1 'भवनादि' इति प भ पुस्तकयो पाठ ।

एकत्वं च क्षित्यादिकर्त्तुः । अनेकेषां कारकाणामेकाधिष्ठातृनियमितानां प्रवृत्तिप्रतीतेः । अनेकेषां स्थपतीनामेकसूत्रधारानियमितव्यापाराणां प्रासादादिकार्यकरणे प्रवृत्तिः प्रतीयते । न च त्रिलोचनस्य तज्ज्ञानस्य च नित्यतायामेकरूपतायां च कार्याणां कादाचित्कत्वं वैचित्र्यं च विरोधमधिरोहति । कादाचित्कविचित्रसहकारिलाभेन कार्याणां कादाचित्कत्वस्य वैचित्र्यस्य चोपपत्तेः । अथ यथाकाललब्धपरिपाकाभ्यां धर्म्माधर्म्माभ्यामेव च शरीरादिसकलकार्योत्पत्तिर्भविष्यति किमीश्वरकल्पनयेति चेत् । तदपि न क्षोदक्षमम् । धर्म्माधर्मयोरचेतनयोश्चेतनमधिष्ठातारमन्तरेण स्वकार्ये क्वचिदपि प्रवृत्त्ययोगात् । तथा हि धर्म्माधर्मौ चेतनाधिष्ठितौ स्वकार्ये प्रवर्त्तेते अचेतनत्वाद्यदित्थं तदित्थं यथा कुठारस्तथा चैतौ तस्मात्तथा । न चास्मदात्मैव धर्म्माधर्मयोरधिष्ठायकत्वेन कल्पनार्हः । तस्य साक्षात्कारिसंवेदनासम्भवात् । नाप्यचेतनस्य कस्यचिदकस्मादेव प्रवृत्तिरुपपद्यते । अन्यथा निष्पन्नेऽपि कार्ये तत्प्रवर्त्तेत । विवेकविकलत्वात् । अथ कथमयं धर्म्माधर्म्मावधितिष्ठति क्षेत्रज्ञेष्वेव तयोः समवेतत्वात् । उच्यते । सम्बन्धात् । न हि साक्षात्संयोगसमवायावेव सम्बन्धौ । संयुक्तसंयुक्तसमवायस्यापि तद्भावात् । संयुक्ताः खल्वीश्वरेण क्षेत्रज्ञशरीरारम्भकाः परमाणवस्तैश्च क्षेत्रज्ञास्तत्समवेतौ च धर्म्माधर्म्माविति । संयुक्तसमवायो वा । क्षेत्रज्ञैरीश्वरस्य संयोगात् । अनुमानादजसंयोगसिद्धेः । तथा हि ईश्वरः क्षेत्रज्ञसंयुक्तो मूर्त्तद्रव्यसंयोगित्वाद्यो मूर्त्तद्रव्यसंयोगी स क्षेत्रज्ञसंयुक्तो यथा घटस्तथा चायं तस्मात्तथा । स चास्य संयोगोऽन्यतरोभयकर्मसंयोगानां तत्कारणानामभावादजः । न च वाच्यं धर्म्माधर्म्मौ परमाणून्वा स्वधर्म्माधर्म्मानुपगृहीतान्कथमीश्वरः प्रेरयतीति । विषविद्याविदा स्वकीयधर्म्माधर्म्मानुपगृहीतस्य विषस्य प्रेरणदर्शनादिति । भवति चात्र श्रुतिः—
" विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात् ।

१ श्वेताश्वतरोपनिषत् ३।३.

मनाहुम्या धमति सपतत्रैर्द्यावाभूमी जनयन् देव एकः " इति । अत्र प्रथमेन विशेषणेन सर्वज्ञत्व लभ्यते, चक्षुषा दृष्टेरुपलक्षणात् । द्वितीयेन वक्तृत्वम्, मुखेन वागुपलक्षणात् । तृतीयेन सहकारित्वम्, बाहुना साहाय्योपलक्षणात् । चतुर्थेन व्यापकत्वम्, पदा व्याप्तेरुपलक्षणात् । पञ्चमेन धर्माधर्मलक्षणप्रधानकरणत्वम्, तौ हि लोकयात्रावहनाद्बाहू षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वम् । ते हि गतिशीलत्वात्पतन्तीति व्युत्पत्त्या पतत्रव्यपदेश्या । सन्धमति सन्नयतीति च व्यवहितोपसर्गसम्बन्ध । ते न संयोजयति उत्पादयतीति वार्थ । द्यावेत्यूर्ध्वसप्तलोकोपलक्षणम् । भूमीत्यधस्तात् । एकेत्यनेनानान्विता लक्ष्यत इति । तथा " अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु स शृणोत्यकर्ण । स वेत्ति विश्व न हि तस्य वेत्ता तमाहुरग्र्य पुरुष महान्तम् " । स्मृतिरपि " अज्ञो जन्तुरनीशोऽयमात्मन सुखदु.खयो । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति । व्यासवचन च, " द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षर. सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १ ॥ उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृत । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर· ॥२॥" इति ।

तस्मादेक सकलजगता सूत्रणासूत्रधार
कर्मद्वेगादिभिरभिहत क्वापि काले न नाम ॥
नित्यज्ञानाद्विशदनिदिताशेषविश्वप्रपञ्च
सोऽय सिद्धस्त्रिपुरविजयी जात्ययुक्तिप्रबन्धात् ॥ ३७५ ॥

दृष्टो विमोहवन्म यमपास्य शाठ्य
क्रीडा तवेयमथवा हृदि कोऽपि कोप ॥
येनास्तिकानपि वितर्कपटूनपीमान्
योगान्विमोहयसि चित्रविचित्ररूपे ॥ ३७६ ॥

---

१ अत्र च ' इति प भ पुस्तकयो पाठ । २ श्वेताश्वतरोपनिषत् ३।१९
३ म भा व प अ ३० श्लो २ ४ भ गी अ १५ श्लो १६।१७

तथा हि यौगाः सततं विमुक्तिनिर्दोषतासिद्धिकृते शिवस्य ।
सा सगतिं नैति यतो विरोधः सातत्यमुक्त्योरिह दुर्निरोधः ॥३७७॥

मुक्त प्रसिद्धः सुधियां स एव यस्य ध्रुवं बन्धविधिः पराभूत् ॥
उच्छृङ्खलेभ्यः खलु शृङ्खलेभ्यो यथा व्यपेतः पुरुषोऽत्र मुक्तः ॥३७८॥

बन्धे च सत्यस्तु कथं कथञ्चिन्मुक्तौ सदात्वेन-समन्वितत्वम् ॥
स्याच्चेत्तदा चन्द्रकलावचूलः कार्यं सदेत्येतदपि स्फुटं स्यात् ॥३७९॥

कार्यतैवास्य नास्तीति तस्याः सखे किं सदात्वं घटाकोटिमाटीकते ॥
मुक्ततैवास्य नास्तीति तस्या. सखे किं सदात्वं घटाकोटिमाटीकते ॥ ३८० ॥

मुक्ततास्त्येव चेत्पार्वतीप्रेयसः कार्यताप्यस्ति सत्यं त्वदुत्प्रेक्षया ॥
कारणाभावतः कार्यता नास्ति चेन्मुक्तता मास्तु बन्धक्षयाभावतः ॥ ३८१ ॥

ध्वस्तमोहेन यत्कन्दलीकृन्मतं नेश्वरो मुक्तिमान्नैव बद्धो यतः ॥
नाप्यमुक्तो न यत्क्लेशसश्लेषवान्नित्यमुक्तस्ततो युक्तितः स्यादिति ॥ ३८२ ॥

यच्चापि विश्वत्रयसूत्रणायामेकः परं शाश्वतसूत्रधारः ॥
कात्यायनीकामुक इत्यकीर्तिं कीर्तिं तदप्यत्र न ते करोति ॥ ३८३ ॥

तथा हि शशभृन्मौलेस्त्रैलोक्यघटना भवेत् ॥
यथारुचि प्रवृत्तिः कि कर्मतन्त्रतयाथवा ॥ ३८४ ॥

धर्माद्यर्थमथोद्दिश्य यद्वा क्रीडाकुतूहलात् ॥
निग्रहानुग्रहार्थं वा सुखस्योत्पत्तयेऽथ वा ॥ ३८५ ॥

यद्वा दुःखविनोदार्थं प्रत्यवायक्षयाय वा ॥
भविष्यत्प्रत्यवायस्य परीहारकृते किमु ॥ ३८६ ॥

---

१ ' यथाहि ' इति प पुस्तके पाठः ।

अपारकरणापूर्णात्किं वा क्रिया स्वभावन ॥
एकान्तपक्षमेते स्यु प्रकारा परतु महा ॥ ३८७ ॥

जावेत पौरस्त्यविकल्पनाया कदाचिदन्यादृगपि त्रिलोकी ॥
न नाम नैयत्यनिमित्तमस्या किञ्चिद्विरूपात्मरूप समस्ति ॥ ३८८ ॥

करोतय ता यदि कर्मतात्र स्वतन्त्रतनस्य तदा कथ स्यात ॥
सखे स्वतन्त्रत्वमिदं हि येषा परानपेक्षैव सदा प्रवृत्ति ॥ ३८९ ॥

कर्मप्रेरस्य च कर्तृतायामीशस्य युक्ता न सतु प्रवृत्ति ॥
कर्मैव यस्मादखिलत्रिलोकीं करिष्यते चित्रविपाकपात्रम् ॥ ३९० ॥

नाचेतन कर्म करोति कार्यमप्रेरितं चेष्टि चेतनेन ॥
यथा मृत्स्थितेत्पाद्यमानमाकर्णनीय पुरत सकर्ण ॥ ३९१ ॥

तृतीयकल्पे वृत्तहृ यमान कथ भवेद्भूतपते कथञ्चित् ॥
प्रयोजन तस्य तथाविधस्य धर्मादिक हन्त निरस्यते यत ॥ ३९२ ॥

अथापि शम्भुजगता विधाने प्रवर्तते क्रीडनकौतुकेन ॥
कथ भवेदर्हि स वीतराग सखे प्रमत्तामरमण्डलीय ॥ ३९३ ॥

पश्यन्नवनमत्र भूपतिरय गर्जीयमेते सुता
स्नातन्स्तुरगा इमे मन्मुचामेघा घटा दन्तिनाम् ॥
सामन्ता समय नमन्ति नितरामेते तदेव शिशु-
र्जातोऽप्यारमति स्फुट मिकनिकरमोतस्विनीना तटे ॥ ३९४ ॥

विनिमहानुग्रहसाधनाय प्रवर्तते चेद्गिरिशस्त्वशर्मीम ॥
विरागता द्वेषवियुक्तता वा तथाविधस्यास्य न स्यात् ॥ ३९५ ॥

उत्तरवये न च सुरस्य तथा प्रवृत्ति
रम्भोयन सुरगुणोऽत्र न सम्मतस्ते ।
स स्वीकृतो रागगुणप्रधानैर्भवि-
भैरप्यमानुरागतो यन निश एव ॥ ३९६ ॥

एतस्य दुःखं न सुख तथास्य न प्रत्यवायोऽस्ति कदाचनापि ॥
दुःखादिभेदत्रितय न वक्तुं युक्तं ततो यौगधुरन्धरस्य ॥ ३९७ ॥
पुण्यकारुण्यपीयूषपूरेणात्यन्तपूरितः ॥
प्रवर्त्तते जगत्सर्गे भर्ग इत्यपि भङ्गुरम् ॥ ३९८ ॥
यतः ।
क्षुद्रग्रामे निवासः क्वचिदपि सदने रौद्रदारिद्र्यमुद्रा
जाया दुर्दर्शकाया कटुरटनपटु पुत्रिकाणां सवित्री ॥
दु.स्वामिप्रेष्यभावो भवति भवभृतामत्र येषां वर्तेतान्
शम्भुर्दुःखैकदग्धान् सृजति यदि तदा स्यात्कृपा कीदृगस्य ॥३९९॥
अथ धर्ममधर्ममङ्गभाजां सचिवं कार्यविधावपेक्षमाणः ॥
सुखमसुखमिहार्प्पयेद्गिरीशस्तदवरमुपरिनिषेधनादमुष्य ॥ ४०० ॥
स्वभाव एवैष पिनाकपाणेः प्रवर्त्तते विश्वविधौ यदेतत् ॥
स्वभाव एवैष रवेर्जगन्ति प्रकाशयत्येष यदित्ययुक्तम् ॥ ४०१ ॥
एवं हीश्वरसंविदो विफलता तस्मान्निसर्गान्निजात्
किं माभूज्जगतां प्रवर्त्तनविधिर्निश्चेतनानामपि ॥
तत्तेषा परिकल्पयन्ति किमधिष्ठातारमेते शिव
व्यर्थे वस्तुनि युज्यते मतिमता किं पक्षपातः क्वचित् ॥ ४०२ ॥
निश्चेतनाना जगतां प्रवृत्तौ कार्यं कथं स्यान्नियतप्रदेशे ॥
जातेऽपि कार्ये विरतिश्च न स्यादित्येतदप्येति न युक्तिवीथीम् ॥४०३॥
स्वभाववादाश्रयणप्रसादादेवंविधानां कुविकल्पनानाम् ॥
नास्ति प्रसङ्ग कथमन्यथा स्यान्नायं सुधादीधितिशेखरेऽपि ॥ ४०४ ॥
अथ ब्रवीथाः किमिमैर्विकल्पैर्यथा तथाय कुरुतां त्रिलोकीम् ॥
कर्त्ता हि तस्याश्च्युतदोषपङ्कात्कार्यत्वतस्तावदसौ प्रसिद्धः ॥ ४०५ ॥
चेतस्विनामिदं नैव सुवर्णं भासते वचः ॥
कथञ्चित् क्षमते यन्न परीक्षाकषपट्टिकाम् ॥ ४०६ ॥

१ 'यदेवम्' इति भ पुस्तके, 'यदेवम्' इति प. पुस्तके पाठः ।

तथा हि किमिदं कार्यत्वं नाम । स्वकारणसत्तासमवाय इति व्योमशिवः । यः स्वकारणैराधारभूतैस्तन्त्वादिभिराधेयभूतया सत्तया च सार्धं पटादिर्वस्तुनः समवायः सम्बन्धः स तस्य कार्यत्वमित्यर्थः । नैतच्छेकोच्छेककारि । स्वकारणसमवाय इतीयतैव तत्राकाङ्क्षितकार्यत्वस्य लक्षितत्वेन सत्तापदस्यातिरिक्तत्वात् । न हि किञ्चिदसदपि स्वकारणेषु समवैति । असतः स्वकारणानामेवाभावात् । द्रव्यादिपदार्थपञ्चकवृत्तित्वाच्च समवायस्येति नास्ति सत्तापदव्यवच्छेद्यं किञ्चित् । सम्भवद्विशेषणमेतदिति चेत् । किं वयमाचक्ष्महे न सम्भवत्येतदिति । किन्त्वविकम् । अधिकस्यापि सद्भावमात्रेण लक्षणत्वाभिधाने बहुतरमिदानीमभिधानीयं स्यात् । अथ द्वितीयमेतल्लक्षणं कार्यवस्य सत्तासमवाय इति । मैवम् । अकार्यमतेष्वपि व्योमादिष्वस्य गतत्वेनातिव्यापकत्वात् । अथास्तु कारणसमवाय एव कार्यत्वम् । ननु तत्पटादिवस्तु सदसदुभयरूपमनुभयरूपं वा स्वकारणेषु समवेयात् । यदि सत् । तत्किं स्वतः सत्तासमवायाद्वा । स्वतश्चेत्, किं कारणव्यापारेण । स्वतः सतः समवायादेरिवास्य नित्यत्वात् । तथापि तद्व्यापारेऽनुपरमप्रसङ्गः । अथ सत्तासमवायात्सत् । ननु सत्तापि सत्यसत्युभयरूपेऽनुभयरूपे वा तस्मिन्समवैति । नाद्यः पक्षः । यतो विवादास्पदं वस्तु न तावत्स्वतः सत् । समवायादिवन्नित्यत्वापत्तेः । सत्तासमवायाभावप्रसङ्गाच्च । तथा हि यत्स्वतः सन्न तत्र समवैति यथा सत्तायामेव । स्वतः सन्नभ्युपगतं घटादीति । अथ सत्तासमवा[^1]यात्सत् । ननु सोऽपि सत्तासमवायोऽपरेण सत्तासमवायेन सत्येव वस्तुनि स्यात् सोऽपि सत्तासमवायोऽपरेण तेन सत्येव तस्मिन् भवेदित्याद्यावर्तनेनानवस्था । अथ न सन्ति भूयांसः सत्तासमवाया यतोऽनवस्था स्थेमानमास्कन्देदिति चेत् । तर्हि भवत्वितरेतराश्रयदोषः । सिद्धे हि वस्तुनः सत्त्वे सत्तासमवायः सिध्यति तत्सिद्धौ च वस्तुनः सत्त्वं सिध्यतीति । नापि द्वितीयः

[^1]: 'पटादि' इति प पुस्तके पाठः ।

कल्पः। असति करिकेसरिकलापकल्पे कथं न स्यात्। तस्य पदार्थपञ्चतयीवृत्तित्वेन स्वीकृतत्वात्। असतश्च तदन्यतरत्वाभावात्। नापि तृतीयः। एकान्तवादीनां सदसद्रूपताया अनभ्युपगमबाधितत्वात्। नापि चतुर्थः। यतोऽयमत्राभिसंन्धि[1]। स्वरूपेण तन्न सन्नाप्यसत्सत्तासम्बन्धात्तु सदिति। दुरभिसन्धिरयम्। विधिप्रतिषेधयोरन्यतरतिरस्कारनान्तरीयत्वात्। यस्त्वत्र व्योमशिवस्यैव तदयुक्तम्। निष्ठासम्बन्धयोरेककालत्वाभ्युपगमात्। तथा हि पदार्थाना स्वकारणसम्बन्ध एवोत्पत्तिर्न पूर्वसत्त्व सत्कार्यवादप्रतिषेधादिति। यश्च कन्दलीकारस्य अनित्येषु तु प्रागसत एव सत्ता कारणसामर्थ्यात्। न च खरविषाणादिषु प्रसङ्गः। तदुत्पत्तौ कस्यचित्सामर्थ्याभावादिति समाधि[2]। सोऽपि न सुधीसमाधेये। एवमप्यसति वस्तुनि समवाय इति पक्षस्यैव कक्षीकारात्। तत्र च प्रोक्तो दोषः। प्रसङ्गविपर्ययाभ्यां च बाध्यते। असति सत्तासमवायस्तत्सदेवेति प्रसज्यते। यथा व्योम। सत्तासमवायश्चाभ्युपगतः पटादिकार्येषु। अथ न तेषा सत्त्वमिष्यते। भवतु तर्हि विपर्ययः। यदसन्न तत्र सत्तासमवायः। यथा व्योमकमले। असन्ति हि विवादास्पदपटादीनीति। न सत्तासमवायादपि कार्यं सद्यतस्तथाभूतं कारणेषु समवेयात्। नाप्यसत्तत्र समवैति। असतः खपुष्पस्येव क्वचिदपि समवायासम्भवात्। उभयरूपमित्यादिपक्षद्वयं त्वनन्तरदूषितैतादृशपक्षद्वयवद्दूषणीयम्। किञ्च यदि स्वकारणेषु समवायः कार्यत्वम्। तदा समवायस्यानित्यताप्रसक्तिः। कादाचित्कत्वात्। अथ नायं कादाचित्कः। तर्हि घटादिकार्यमपि कथं कादाचित्कं स्यात्। तल्लक्षणभूतस्य स्वकारणसमवायस्य सदा सत्त्वात्। अथ नास्य सदा सत्त्वे कारणरूपोपाधिमानेव ह्ययं कार्यत्वमुच्यते। तद्व्यावृत्तौ च नायं तदुपाधिमान्। यथा दण्डव्यावृत्तौ पुरुषो न दण्डीति। न चोपाध्यभावे विशेष-

१ 'अभिसन्धे.' इति भ पुस्तके पाठ.। २ 'च' इति प. भ पुस्तकयोः पाठ.।

णमात्रस्यवाभावो विशिष्टस्तु तस्यैव एवेति वाच्यम् । यतो विशेषणाभावेऽपि विशिष्टोऽस्तीति कस्तार्किक प्रकटयेदिति । तदखिल स्खलितवच । यस्मात्कारणरूपोपाधिनापगच्छता समवायस्वरूप किंचित्पहृत न वा । न चेत्, तर्हि तथैव तत्स्वरूपस्य सत्त्वात्पूर्वावस्थायामिवेदानीमपि समवायस्य कार्यत्वलक्षणत्वानपाय । अपहृत चेत्, तर्हि तत्स्वरूपापहारे सिद्ध तस्य कादाचित्कत्वम् । अथ स्वरूप स्वकीयो धर्म स्वरूपमुच्यते तस्य च भिन्नस्यापहारेऽपि न समवायस्य धर्मिणस्तुषागमात्रमपि विपद्यते । तदसुन्दरम् । यत स्वरूपशब्देनास्माभि स एवास्य स्वभावो निगदितो य सकलधर्माधारभूतोऽसाधारण । स चेदपगत । तदा पूर्ववत् प्रसक्ति । अन्यथा तु कादाचित्कत्वम् । ननु यद्यत्यन्तभिन्नकारणरूपोपाध्यपगमेऽपि वस्तुस्वरूपापगम । तर्हि पुरुषेण मुक्ते दण्डे तत्स्वरूपमप्यपेयात् । सोऽपि परस्यापचिकीर्षया पीयूषगण्डूषोपदेश । अभ्युपगम्यत एव हि कथञ्चित्स्वरूपापगम । दण्डग्रहणपरिणामपरिहारपूर्वं पुरुषेण तत्परपरिणामस्वीकारात् । सर्वथाभ्युपगमाभावाच्च पुरुषत्वेन प्रत्यभिज्ञानम् । अथास्तु समवायेऽप्येव स्वरूपापगम इति चेत् । कादाचित्कत्वमप्येवमस्तु । अस्तु चेत्, क्वचिदनित्यत्वमप्यस्तु । ओमिति चेत्, अहो वैनयिकत्वम् । किं तु कुम्भादिकार्यं कर्तुकामेन कुलालेन प्रथम समवाय कर्तव्य । तस्यापि कार्यत्व स्वकारणसमवाय इति प्रथमतर स विधेय । तस्याप्यन्यस्तत्समवाय कार्यत्वमिति प्रथमतम स स्मरणीय इत्यनवस्था । तत स्वरूपासिद्ध स्वकारणसत्तासमवायरूप कार्यत्वम् । भागासिद्ध च । योगिना निःश्रेयसप्रलये प्रध्वंसाभावरूपतया समवायस्य सत्ताया अभावात् । अथाभावपरिहारेण भाव एव नित्यादि पदैरङ्गीक्रियते ततो न भागासिद्ध । ननु कुतोऽभावस्य परिहार । किमबुद्धिमद्धेतुकत्वात्तस्य । यद्वा तत्स्वीकरणमन्तरेणापि प्रसिद्धे । यद्याद्य पक्ष । तदा

योगिनामसममुक्तिकामिनीसङ्गमं किमपि वाञ्छता सताम् ॥
चन्द्रचूडचरणाम्बुजद्वयाराधनं निरुपयोगमापतेत् ॥ ४०७ ॥

संहारोऽपि चैवं न बुद्धिमद्धेतुकः स्यात् । एवं निर्हेतुकोऽपरहेतुको वा भवेत् । निर्हेतुकत्वे संहारस्य नित्यसत्त्वापत्त्या शाक्यदर्शनानुप्रवेशः । नित्यमसत्त्वापत्त्या वा तस्य समस्तवस्तूनां नित्यत्वं स्यात् । तथा च प्रारम्भस्याप्यभावात्कौतस्कुतं क्षित्यादेर्बुद्धिमत्कारणकल्पनासंरोहेण । द्वितीयपक्षोऽप्ययुक्तः । अभावपक्षीकरणमन्तरेणेश्वरसिद्धेः सम्प्रत्यूहत्वात् । यस्यैव हि वसुधादेरसौ बुद्धिमान् कर्ता तन्मात्रज्ञ एव स्यान्न पुनः सर्वज्ञः । तथा च कथमीश्वरसिद्धिः । अथान्यतोऽनुमानादभावकर्ताऽसौ सेत्स्यति । न तर्हि कार्यत्वानुमानात्सर्वज्ञत्वसिद्धिः । न चान्यदनुमानं तस्याभावकर्तृत्वासिद्धिनिबन्धनमीक्षामहे । तत्र व्योमशिवोक्तं स्वकारणसत्तासमवायस्वरूपं कार्यत्वमुपपद्यते । प्रागसतः सत्तासमवायः कार्यत्वमित्येके । तदपि प्रागुक्तयुक्त्यैव निरस्तमवसेयम् । "अभूत्वाभावित्वं कार्यत्वम्" इति किरणावलीकारः[1] अभूत्वाभावित्वं हि भिन्नकालक्रियाद्वयाधारभूते कर्तरि सिद्धे सति सम्भवति । क्त्वाप्रत्ययान्तपदविशेषितवाक्यार्थत्वात् । श्रुत्वा चिन्तयतीति वाक्यार्थवत् । न चात्र भवनाभवनयोराधारभूतस्य कर्तुः प्रतीतिरस्ति । अभवनाधिकरणस्याविद्यमानत्वेन भवनाधारस्य विद्यमानतया भावाभावयोरेकाधारत्वानुपपत्तेः । तत्किं कुटादयो भावा भवता भूत्वा भवन्तः स्वीकृताः । तथा चेत्, तर्हि सांख्यकक्षापञ्जरप्रवेशः शरणीकृतः । सत्कार्यवादाश्रयणात् । तदसत् । अस्माकमभूत्वा भवनस्य सुघटत्वात् । भवनाभवनयोरेकस्याधारस्य सत्त्वात् । घटो हि द्रव्यरूपतया सन् पर्यायरूपतया चासन् कुलालकरचक्रचीवरादिसम्पर्कात्पर्यायरूपतया प्रादुर्भवति । न चैवं कपिलमतोपनिपातः । तन्मते हि सर्वप्रकारैः सतो वस्तुनो व्यक्तिमात्रं कारणैः क्रियते । यथा तिमिरसंचय-

---

1 'किरणावली' पृ १४५ पं. १

सघटितघटस्य प्रदीपप्रकाशेनेति । अस्मदभिप्रेतस्य चाभूत्वा भावित्वस्य त्वया स्वीकारे स्वमतक्षेप । तत स्वरूपासिद्ध त्वन्मतमभूत्वा भावित्व स्वरूप कार्यत्वम्। सिध्यतु वानुपलभ्योपलभ्यमानेषु जलधरमहास्वकशरीरादिषु, पर्वतादिषु पुन कथ तत्सिद्धि । न खलु मेरुमकरादय सर्वथा प्रागसन्त सञ्जायन्त इत्यत्र किंचित्प्रमाणमस्तीति भागासिद्ध तल्लक्षण कार्यत्वम् । सर्वथा प्रलयासिद्धे प्रोक्तासत्त्वसिद्धिरिति चेत् । न । सर्वथा प्रलयासिद्धे । शम्भुसिद्धेस्तत्सिद्धिस्वीकारे च चक्रकापत्ति । शम्भुसिद्धौ हि सर्वथा प्रलयसिद्धिस्तस्या च सत्या मेर्वादेरभूत्वा भवनसिद्धिस्ततश्च शम्भुसिद्धिरिति । यत्पुन सावयवत्वसाधन कार्यत्वसिद्धावभ्यधायि तत्किमवयवसमवायोऽवयवसयोगोऽवयवाविष्वम्भावो वा भवेत् । अवयवसमवायपक्षे किमवयवाधिकरणत्वमवयवारब्धत्व वा सावयवत्व स्यात् । आद्यकल्पनायामुभयासिद्धि । न ह्यवयविन्यवयवा समवेता इति वादिप्रतिवादिनोरभ्युपगम । द्वितीयकल्पे पुनरवयवाधेयेनावयवत्वसामान्येनानेकान्त । तस्य तत्र वृत्तावप्यकार्यत्वात् । यत्पुनरेव केनचिद्वाचि सहावयववतत इति योगव लेन सावयवत्वमिति । तदपि नोपपन्नम् । सावयवस्य न प्रति निगोध्या सिद्धत्वादवयवसमवायस्वभावसावयवत्वस्य समवायानभ्युपगमेनासिद्धत्वात् । अवयवसयोगपक्षस्तु व्योमादिना व्यभिचारी । घटादिपदार्थावयवसयोगवतोऽपि तस्याकार्यत्वात् । न च नास्त्यवयवसयोगोऽस्येति वाच्यम् । अव्यापकत्वापत्ते । सकलमूर्तद्रव्यसयोगस्वरूपत्वाद्यापकत्वस्य । नाप्यवयवाविष्वम्भाव सावयवत्वम् । वाद्यसिद्धत्वात् । यत्तूदयन प्राह । अन्यत्र यद्यपि सावयवत्व विकल्पदूषित तथाप्यत्र द्रव्यान्तरसमवेतत्वमित्यभिमत सावयवत्वमिति । तत्राप्यवयवै सह वर्तते यत्तत्सावयवमिति सामान्येन सावयवशब्दवृत्तौ कुतोऽय द्रव्यस्य द्रव्यान्तरसमवेतत्व सावयवत्वमिति विशेष लब्धवान् । न हि शब्दानियत

१ 'यदपि इत्यादि' प भ पुस्तकयो ।

सिद्धये प्रमेयत्वहेतुमुपादाय यद्यपि प्रमाणविषयत्वं प्रमेयत्वमुच्यते तथापि पटाद्यनित्यपदार्थवृत्त्येव तद्विहाभिमतमिति विशेषो लभ्यते । लाभेऽपि वा कथञ्चित्समवायस्यासिद्धेरसिद्धो द्रव्ये द्रव्यान्तरसमवेतत्वस्वरूपोऽपि विशेषः । यदपि महत्त्वे सति क्रियावत्त्वादिति साधनमावेदि । तत्र विशेषणस्य भागासिद्धिः । द्व्यणुके पक्षान्तःपातिनि महत्त्वस्यासत्त्वात् । न च न तत्पक्षीकृतमिति वाच्यम् । तत्र कार्यत्वस्याप्रसिद्धिप्रसङ्गात् । न च मूलानुमानेऽपि न तत्पक्षीकार इति सारम् । यतस्तत्र विशेषणमन्तरेण कुतः पक्षाद्बहिर्भावोऽस्यावसेयः । विरुद्धो हि वादो यत्र तद्विवादमावेद्यते । विरुद्धवादो द्व्यणुकेऽप्यस्त्येव । तथा हि भवानाह द्व्यणुकं बुद्धिमद्धेतुकं वयं तु ब्रूमोऽन्यथेति । अथ द्व्यणुकादन्यद्विवादमिति विशेषणे वा पक्षः क्रियते । तर्हि पक्षान्तरम् । किञ्चैवं कथं द्व्यणुकस्य बुद्धिमद्धेतुकत्वसिद्धिः तदसिद्धौ च कथं कस्यचित्सर्वज्ञत्वसिद्धिः । द्व्यणुकस्याबुद्धिमद्धेतुकस्य केनचिदज्ञानात् । यो[1] यत्करोति स तदुपादानाद्यभिज्ञ एवेति द्व्यणुकस्य बुद्धिमद्धेतुकत्वसिद्धौ तदुपादानभूतस्य द्व्यणुकस्यापि ज्ञानं सिद्धमेव । तथा च सर्वज्ञत्वमपीति चेत् । तदपि न पेशलम् । एवमपि सर्वज्ञत्वाप्रसिद्धेः । द्व्यणुकस्य बुद्धिमद्धेतुकत्वाप्रसिद्धौ हि तदुपादानीभूतानामज्ञानमेवावतिष्ठते । तथा च कुतः सर्वज्ञतासिद्धिः । किं च परमाणूनां केनचिदज्ञाने कथं द्व्यणुकस्योत्पादः । ईश्वरेण खल्वधिष्ठिताः परमाणवो द्व्यणुकमारम्भन्त इति त्वन्मतम् । न चाज्ञातानामधिष्ठानं सम्भवति ।

द्व्यणुके च वताकार्ये सति त्रिलोकी मुहुःस्थिता समभूत् ॥
यद्वा किमत्र चित्रं यदकार्यं भवति दौःस्थ्याय ॥ ४०८ ॥

एवं च वरिष्ठा भो योगगरिष्ठाः, चक्रे शिवसिद्धिरनेन भवद्भिः ।

---

१ अथ यो ' इति प. भ पुस्तकयोः पाठः ।

द्व्यणुके कार्यतासिद्धा ब्रूयाश्चेन्न्यसाधनम् ।
तत्रैव तर्हि प्रगुण शृणुयास्तत्र बाधनम् ॥ ४०९ ॥

यदपि रचनावत्त्वमवाचि । तदपि न चारु । यत केय रचना नाम । विचित्रप्रदेशशालित्वमवयवसयोगो वा । यद्याद्य पक्ष । तदा न्तरिक्षेणानेकान्त । समस्तमूर्तद्रव्यसंयोगनिबन्धनानां प्रदेशानां तत्रापि सद्भावात् । न च वाच्यमुपचरिता एव तत्र त इति । समस्तमूर्तक्रियाकारित्व न स्यात् । उपचरितनभोदेशस्वभावाद्विशिष्टाद्दष्टोपकाराच्चास्या अक्रियाकारित्वमपि न कान्तम् । उपचरितस्यासद्रूपस्य श्रोत्रस्य वान्येयस्येनादृष्टेनाप्युपकारायोगात् । अथ द्वितीय । तर्हि क सम्बन्ध । तत्समवायिकारणत्वं एकार्थसमवायो वा । आद्यश्चेत्, तदा प्रतिज्ञार्थसिद्धि । न खल्ववयवसंयोगस्यासमवायिकारणता साक सिद्धा । एकार्थसमवायस्तु व्यभिचारी । संयोगेन साधर्म्ये कस्मिन्नथऽवयवस्पेऽवयविन्यकार्याणामपि सामान्यादीनां समवेतत्वात् । एतर्हि वक्ष्यमाणकार्यत्वसामान्यदूषणानुमानेन दूषितं प्रतिपत्तव्या । एतेन तदपास्त यदुक्तम् "एतेभ्य एव हेतुभ्य कर्ता कश्चन साध्यते" इति । नन्वेवमेतान्यनुमानानि प्रतिक्षिपता भवता किं न कार्यत्व पर्वतादिषु सिद्धम् । तथा सति नित्यत्वमेषां स्यात् । उच्यते । अभिमतमेव तदत्र, किन्तु नैतान्यनुमानानि कार्यत्वसिद्धिसाधिष्ठानीति ब्रूम । किं तर्ह्यभिरनुमानैरनुभयसिद्धात्कार्यत्वात्साध्यसिद्धिरिति चेत् । नैवमुभयसिद्धान्यपि । प्रतिबन्धग्रहणोपायापायेन सन्दिग्धव्यभिचारित्वात्स्य । अथानिवर्तिनारेव प्रत्यक्षानुपलम्भस्तद्ग्रहणकारणतयेति चेत् । तर्हि प्रत्यक्षानुपलम्भयोस्य एव गोचरे व्याप्तिग्रहणस्वीकाराद्नुपलभ्यपुरुष व्यापार तृणतरुतडिन्नेता ( [1] ) निभिर्निश्चितो व्यभिचारोऽस्तु । पक्षीकृतास्तृणादयो न च पक्षीकृतेन व्यभिचार इति चेन्मैवम् । प्रत्यक्षप्रतिक्षिप्तस्य पक्षीकरणे न्यायाभावात् । अन्यथानुष्णोऽग्नि प्रमे-

[1] अत्र किञ्चित्सन्दिग्धमिव प्रतिभाति ।

यत्वादित्यादावपि पक्षीकरणमेव शरणं स्यात्। अथ पक्षीकृतेनैव व्यभिचारोद्भावनेऽनुमानमात्रमुद्राभङ्गप्रसङ्गः। तथा हि धूमानुमानेऽपि शक्यमेवं वक्तुम्। वह्निव्यभिचारी धूमः पर्वतनितम्बे तमन्तरेण। यदि हि तत्रापि प्रत्यक्षेणाशुशुक्षणिः प्रक्षिप्तः स्यात्तदा को नाम न मन्येत व्यभिचारम्। न चैवम्। अयोग्यदेशस्थतया तत्र प्रत्यक्षस्य विधौ प्रतिषेधे वा कुण्ठितत्वेन सन्देहात्। अत एव हेतोरत्रावसरः। "सन्दिग्धे हेतुवचनम्" इति वचनात्। न चैवं प्रस्तुतेऽस्ति। नेदीयस्थैरवचनैरप्यवधानैकचित्तैरपि तृणादिषु प्रत्यक्षेण प्रतीतेरनुपलम्भात्। अध्यक्षमेव च प्रतियोगिनः प्रतियोग्यन्तरापेक्षयानुपलब्धिरुच्यते। ततोऽनुपलब्धिबाधितमेव व्यवहारसाधनापेक्षयानुमानबाधितमुच्यते। न चानुमानबाधितेऽप्यनुमानान्तरावकाशः। अथ दृश्यविशेषणस्यैवाभावं व्यवहारयति। दृश्यादृश्यसाधारणं च बुद्धिमत्त्वमिति दृश्यतानियमानुपपत्तेर्बुद्धिमतः कथमनुपलब्धिमात्रेण तृणादिजन्मनि निषेधः। ततः सन्देहात्पक्षीकरणं न्याय्यमिति चेत्। तदेतद्गतिस्थवीयः। व्याप्तिसाधनायाध्यक्षानुपलब्ध्योरविकारदानादेव दृश्यतास्वीकारस्य प्रसह्यायातत्वात्। न ह्यदृश्ये प्रत्यक्षमन्वयसाधनमनुपलब्धिर्वा व्यतिरेकसाधिनी भवितुमर्हति। दृश्यते तु नियतस्तृणादिना व्यभिचारचकितचेताः प्रत्यक्षागोचरेण बुद्धिमता व्याप्तिं गृह्णीयात्। गृह्णातु, न तु तत्र प्रत्यक्षानुपलम्भाश्रयः श्रेयानस्य। ननु दृश्यादृश्यविशेषणमनपेक्ष्य प्रज्ञावत्त्वमात्रेण व्याप्तिग्रहः। नैवम्। तावतापि हि प्रत्यक्षकृताया व्याप्तेरनवकाश एव। दृश्यैकस्वभावनियता हि सा कथं दृश्यादृश्यसाधारणरूपविषया भवेत्। तद्धि दृश्यमदृश्यं च रूपमेकबुद्धिमत्त्वादिधर्मानुवृत्तावपि स्वभावविप्रकर्षेतराभ्यामत्यन्तं भिन्नजाति। ततः प्रत्यक्षं दृश्यैकजातिस्वीकारेण प्रवृत्तमितरवार्तानभिज्ञं तद्विशिष्टमेव साधारणमपि धर्मं व्यापकमादर्शयति। यद्यपि देशकालविप्रकृष्टमपि न दृश्यम्। तथापि दर्शनयोग्यतयैकजात्यमेवेति। स्वभावविप्रकृष्टस्यैव प्रत्यक्षेण परिहारात्। सर्वान्यवर्जने हि नियतविशेषपर्यवसानाद्व्याप्तिरेव न स्यात्। यथा हि स्वप्रवृत्ति-

१ 'तु सानुमानमुच्यते' इति प. म. पुस्तकयोः पाठः।

शक्यः। निवृत्तिमात्रं तु दासीगर्दभ[1]न्यायेनाकार्यकारणयोरपि सुलभम्। एवं च किं बुद्धिमत्कारणव्यापाराभावाद्विहायासि कार्यत्वाभाव उत कारणमात्रविप्रयोगादिति सन्देहः। तथा च स [2]विफलः प्रयासः। अन्वयोऽपि हि कार्यमात्रस्य कारणमात्रेण गृह्यन्तामुतस्वित् पुरुषविशेषणेन कारणेनेति सन्देह एव। अथ दृष्ट एवायं पुरुषविशेषणकारणरूपो विशेषः कथं परिहर्तुं शक्यो धूमे दहनात्मवत्। यद्येवं दृश्यशरीररूपो विशेषः प्रतीत एव कथं परिहर्तुं शक्यः। चित्रभानोर्भासुराकारवत्। स हि तर्हि विशेषो व्यभिचार्यते भूधरादिषु दृश्यशरीरकर्तारं विनापि कार्यत्वस्य दर्शनादिति चेत्। व्यभिचार्यतां नाम। किन्तु यथा दृष्टत्वात्पुरुषविशेषणकारणेऽन्वयो भवतामिभीयते तथा[3] कार्येऽपि परिदृष्टविशेषे एव पुरातनप्रासादादावन्वयोऽभिधीयतां न तु भूधरादाविति किं नश्छिन्नम्। नन्वेवं जैनानामपि कथं क्वाप्यनुमानादतीन्द्रियवस्तुसिद्धिः। तदसाधीयः। उपलम्भानुपलम्भप्रभवतर्कप्रमाणाद्व्याप्तिग्रहणवादिनामेवंविधदोषश्लेषासम्भवात्। प्रत्यक्षानुपलम्भाभ्यां तु तद्ग्रहणवादिनां नास्ति तद्दोषेभ्यो मोक्ष इति। अपि च कथं प्रत्यक्षानुपलम्भाभ्यां कार्यमात्रस्य बुद्धिमत्कारणविशेषेण व्याप्तिग्रहणमनुगुणम्। यतोऽमू प्रत्यक्षानुपलम्भा विशिष्टकार्यकारणजात्युल्लेखेनैव कार्यकारणभावग्रहणाय प्रवर्तते। तथा हि प्रत्यक्षानुपलम्भप्रवृत्तिसमनन्तरमीदृशात् ज्वलद्भासुरस्वरूपविशेषादीदृशकपोतकण्ठधूसरमक्षिकण्ठविकारकारि वस्तु जायते। ईदृशात्पुरुषविशेषात्पृथुबुध्नो-

---

१ ‘ अन्यथासिद्धिशून्यस्य नियता पूर्ववृत्तिता। कारणत्वं भवेत्तस्य–’ इति कारणत्वलक्षणेऽन्यथासिद्धस्य न कारणतेति निश्चितम्। तथा च घटोत्पत्तौ गिरेर्मृत्तिकामानीतवती दासी तथा तदानयनकारी गर्दभश्च न कारणं किंतु मृत्तिकैव। अन्यथासिद्धिशून्यत्वात्। मृत्तिकाहर्त्री दासी गर्दभश्चान्यथासिद्धौ। उपायान्तरेणापि मृत्तिकानयनस्य सुकरत्वात्। एतद्विचार्य ‘निवृत्तिमात्रं तु’ इत्यादिनिर्देशः। २ ‘ नष्फलप्रयास· ’ इति प. भ. पुस्तकयोः पाठः। ३ ‘ न तथा ’ इति प. पुस्तके पाठः। ४ ‘ ग्रहवादिनां तेषामेवंविधं ’ इति प भ. पुस्तकयोः पाठः।

दर्शयाकारमीदृशात्तु तस्मादातानवितानीभूततत्तन्त्वात्मकमित्यनेनाकारेण हेतुफलभावः सर्वोपरकार्यकारणजातिव्युदासेन विशिष्टमेव जातियुगमुल्लिङ्गन् प्रवर्तते । इयमेव गतिः सर्वत्र हेतुफलभाववेदने विदिता ध्रुवमीश्वरानुरोधात्प्रसिद्धनयलङ्घनमिदं वचः । अथाभिदधीथाः । कः पुनरत्रानुरोधः । यदि ताणादिभेदमुदस्य वह्निना धूममात्रस्येव भूधरादिभेदमुदस्य कार्यमात्रस्य बुद्धिमता व्याप्तिं प्रतीयात्प्रत्यक्षम् । यद्येवं तर्हि वह्नेः कार्यजातिविशेषस्य धूमस्यावान्तरसूक्ष्मजातिमात्रमन्तर्भाव्य व्याप्तिग्रहः । तथा बुद्धिमताप्यस्तु कार्यजातिविशेषस्यैव वस्त्रादेर्न तु कार्यमात्रस्य । यथा चात्यन्तविसदृशीरपि जातीरन्तर्भाव्य कार्यमात्रस्य बुद्धिमता व्याप्तिं जिघृक्षसि तथा कार्यमात्रस्यैव यत्र कार्यमात्रं तत्र वह्निरित्येवं वह्निनापि किं न ता गृह्णीयाः । इन्द्रियप्रत्यक्षप्रत्ययस्यैव वह्निर्व्यापारः उभयत्र कथं भिन्नां प्रवृत्तिमाश्रयेत् । अथ कार्यमात्रं व्यभिचरति चित्रभानुं न तु बुद्धिमन्तमिति व्यभिचारदर्शनादर्शनकृतोऽयं विभाग इति चेत् । तर्हि दर्शनात्पूर्वं विमर्शनारूढं गच्छत्तृणस्पर्शवत् व्यवहारायेति तदनुरूपेण विमर्शेनावश्यं भाव्यम् । न चायमस्ति । न हि कश्चिदपि धूमाग्न्योरन्वयव्यतिरेकग्राहिप्रत्यक्षानुपलम्भाप्रवृत्तौ कार्यजातिरखिलाऽनलादुत्पद्यत इति सङ्कल्पमनुभूय भूयो व्यभिचारदर्शनाद्यत कार्यान्तराणि वह्निमन्तरेणाप्युपलभ्यन्ते ततो धूम एवानेन जन्यत इति निश्चयं परिचिनोति । किं तु झटित्येव प्रत्यक्षानुपलम्भानन्तरमस्मादस्यादेरिदं धूमादीति जातिविशेषद्वये हेतुफलभावतया निश्चिनोति । किं चैतद्व्यभिचारदर्शनं किं सत्यामेव व्याप्तावनुमानमात्रं खण्डयति यद्वा व्याप्तिरेव मिथ्येति व्यवस्थापयति । नाद्यः पक्षः । विरोधात् । न हि साध्याविनाभावलक्षणा व्याप्तिश्च हेतोः । साध्याभावसम्भवश्चानुमानाभावः सङ्गच्छते । द्वितीयेऽपि स्वसामर्थ्येन स्फुरत्येव व्याप्तिग्राहिणि प्रमाणे व्याप्तिर्मिथ्यात्वं तद्व्यवस्थापयेत्किं वा तस्यैव प्रामाण्यस्य यथावदुद्धानम् । पौरस्त्यपक्षे प्राचीन एव प्रतिक्षेपः । चरमे तु

सर्वत्रानुमानरूपे विपये तत्तस्य प्रामाण्यक्षयमादधाति नियते वा । प्राक्तने प्रकारे धूमध्वजानुमानमपि न स्यात् । किमिदानीं शरणमीश्वरानुमाने भविष्यति । नियतेऽपि विपये किमिष्टिवशाद्व्यभिचारदर्शनं व्याप्तिग्राहिप्रमाणस्य प्रामाण्यक्षयं कुरुते स्वयं तत्रैव प्रवृत्तितो वा । इष्टिवशान्नियते विपये व्याप्तिविहितौ व्यभिचारदर्शनं वराकमुदासीनमिति न कश्चिद्धेतुरहेतुर्वा तत्त्वतः । धूमेऽपि स्वेच्छया व्याप्तिखण्डनप्रसङ्गात् । तत्रैव प्रवृत्तितस्तु नियतविपयत्व व्यभिचारगोचरस्यापि प्रत्यक्षस्य कथम् । यावता यथा नियतजातिप्रवृत्तिबुद्धिमत्त्वेन कार्यत्वमात्रस्य व्याप्तिग्राहिप्रत्यक्षं सर्वविषयमिष्टम् । तथा व्यभिचारगोचरमपि सर्वविषयमेवास्तु । कथं नियतविपयम् । अन्यूनानतिरिक्तविषयैकत्वादुभयोः । तस्मादेकविषय एव व्याप्तिग्रहो व्यभिचारचेतनं चेति किमधुनापि साधनमसाधनं वा स्यात् । भवतु भवदुपरोधाद्व्यभिचारदर्शनस्य नियतविपयत्वम् । तथापि न सकृदेव व्यभिचारवतां तद्बोध. । किन्तु क्रमेण । व्याप्तिग्रहणकाले च व्यभिचारिणामपि व्यभिचारदर्शनमाहत्य नास्तीति धूमस्य पटादिकार्याद्विशेषाभावादहेतुत्वम् । हेतुत्वे वा धुमस्येव पटादिकार्यस्यापि हेतुत्वं स्यात् । न च सर्वस्यान्यस्य कार्यस्य व्यभिचारदर्शनाद्धूमे व्याप्तिविश्राम इति वाच्यम्। अशक्यो ह्ययमर्थो व्यभिचारविषयाणामनन्तत्वाद्देशादिविप्रकर्षवता गोचरीकरणकालापेक्षया पुरुषायुष. कनीयस्त्वात् । तस्माद्व्यभिचारदर्शनवन्नियतविषय एव व्याप्तिग्रहोऽपि निरपवादः । नन्वेवं केनचित् क्वापि व्याप्तिग्रहणे परेण व्यभिचारोपदर्शनाद्यैषा साधारणानैकान्तव्यवस्था सा दुःस्थेति चेत् । एवमेतद्यदि बुद्धिपाटवनियमः सर्वेषाम् । मन्दबुद्धिस्तु सादृश्यादिना जातिविशेषप्रवृत्तेऽपि प्रत्यक्षे जात्यन्तरेणैकीकृत्य व्याप्तिग्रहणाभिमानादनुमानमातिष्ठमान पटुना परेण व्यभिचारमादर्श्य

---

१ शक्तिकत्वादुभयोरिति प. भ. पुस्तकयो. पाठ । २ 'विश्राम' इति तु अपाणिनीयम् ।

व्याप्तिर्ग्रह प्रत्याय्यते । अत साधारणानैकान्त यत्नत्वा । यथा धूम प्रवृत्तेऽपि व्याप्तिग्राहिण्युच्छलत्कपोतकण्ठधूमर वस्तु वह्निव्याप्तमनुस्मरन् मारुतोद्धूतधूलिपटलादनलमनुमिन्वन् बाष्पोदयेन प्रसिद्धोपबुधैर्धुयेण व्यभिचारमाढर्श्य वायते । ततो जातिविशेषप्रतिबद्ध एवा यत्नेण प्रतिन धाऽत्रसेय । ननु यदि जातिविशेषप्रतिबद्धबोध । तदा एते पटाद्यो हरिद्रादिद्रव्यसम्कारवन्तो रागयोगित्वात्पूर्वोपलब्धपटवदित्यादो कथमत्य तविजातयोऽपि पटकुटाद्या रागमात्रयोगिनो हरिद्रादिद्रव्यसंस्कारमनुमापयेयु । अनुमापने वा तद्वदेवात्यन्तविजातीया अपि कैलाशकुलिशादय साधारणकार्यत्वम्मका पुरुषमनुमापयिष्यन्तीति चेत् । नैवम् । कार्याख्यव्याप्यस्यात्र गमकत्वादडपेक्षयेव सजातीयविजातीयताया अचिन्त्यत्वात् । तच्च विजत्य विकार्यकर्मापि त्वा यथाक्रम द्विविध धर्मिरूप धर्मरूप च । तत्र सर्वथाऽपूर्वोत्पत्तौ धर्मिणो व्याप्तिरुच्यते धूमादिवत् । तदा हि धूमान्तरमेव सजातीय विजातीयमन्यवस्तु । यदा तु पूर्वस्थितस्यैव धर्मान्तरोत्पत्तिस्तदा च व्याप्तिरुच्यते पयस्यौष्ण्यादिवत । तदा चौष्ण्यान्तरमेव सजातीयो धर्म । नाधुना धर्मिजातिरपेक्षा । तथा ह्यग्निमयुक्तमिद जलमुष्णत्वाद्धृतमित्यत्रौष्ण्ययोरुभयोजलघृतसमाश्रितयोधर्मयोरेव सजातीयत्वम् । ननु जलघृतयोर्धर्मिणो । एव रागोऽपि पटकटादिद्रव्यत्वेनात्यमवमन्य स्वरूपमजातीयत्वापेक्षयैव द्रव्यसंस्कारस्य गमक । अत एव तद्विशेषे क्वचित्कुङ्कुमस्य क्वचिद्धरिद्रादे सक्त सम्कारोऽनुमीयते । न चैव पूर्वस्थिते भूधराम्भाधरादौ कार्यत्वमात्रविजनक पुरुष इष्ट, किन्तु कुम्भकारादिवत्पूर्वोत्पादक । तस्माद्धर्मिवस्तुव्याप्तिग्रहो न धर्ममात्रव्याप्तिमनुरुध्यते । नापि धर्मव्याप्तिधर्मिण सजातीयत्वम् । अतो न रागवद्धर्मिविजात्येऽपि कार्यत्वस्य गमकत्वम् । अन्यथा पाण्डु-

---

१ धूमधूलि इति प म पुस्तकयो पाठ । २ जातिविशेषप्रतिबद्ध एवाध्यक्षेण प्रतिबन्धबोध ' इति प म पुस्तकयो पाठ । ३ ' पटकट इति म पुस्तके पाठ ।

द्रव्यादपि हव्याशनानुमानप्रसङ्गो दुष्परिहारः । व्यभिचारोत्तरस्य दूषितत्वात् । तस्मात्कार्यजातिविशेषप्रबद्धमेवाध्यक्षेण प्रतिबन्धबोधनम् । यदि च कार्यजातिभेदे प्रवृत्तमपि प्रत्यक्षं कार्यमात्रमधिष्ठानीकरोति । कारणेऽपि तर्हि प्रवर्तमानं कारणमात्रमेव व्यापकमवधारयतु । कस्माद्बुद्धिमद्रूपं तदवलम्बते । ततो यदि न भवदभिप्रायानुरोधोऽध्यक्षस्योभयत्र सामान्यावलम्बिना विशेषावलम्बिना वा भवितव्यमनेन । सामान्यावलम्बने कार्यात्कारणमात्रानुमितौ का वार्ता विरूपाक्षसिद्धेः । विशेषावलम्बने च कार्यमात्रेण व्याप्तिरसिद्धेति । तस्मादनुभवाद्युक्तेश्च विशिष्टामेव कार्यजातिं हेतुविशेषव्याप्तामुपदर्शयति प्रत्यक्षमिति स्थितम् । प्रयोगः— यद्यत्कार्यकारणभावग्राहि प्रत्यक्ष तत्तद्विशिष्टजातिप्रतिनियतव्यापारम् । यथाग्निधूमयोः । तथा चेदं बुद्धिमता कार्यस्य व्याप्तिसाधनमिति । नास्यान्यथा व्यापाराशङ्कयाऽनेकान्तः । कारणानुपलब्धिबाधितत्वात् । कारणभेदो हि कार्यभेदस्य कारणम् । अन्यथा सर्वस्याहेतुकत्वप्रसङ्गात् । न च प्रत्यक्षस्य कारणभेदः । विषयेन्द्रियालोकादिलक्षणसमानसामग्रीप्रभवत्वादिति । दृष्टान्ते साध्यशून्यताशङ्कायां च यद्यत्प्रत्यक्षं तत्तद्विशिष्टजातिप्रतिनियतव्यापारं यथा व्यभिचारग्राहि । प्रत्यक्षं चाग्निधूमयोः कार्यकारणभावग्राहीति बाधकमभिधानीयम् । अत्रापि स एवानेकान्तपरिहारः । एवं च कार्यजातीनामत्यन्तविलक्षणानामानन्त्यात्प्रतिजातिभेदं च व्याप्तिग्रहणापेक्षणाद्यावज्जातिकं कार्यं बुद्धिमत्पूर्वकं परिच्छिन्नं तावत एवानुमानमसमञ्जसमित्यसमञ्जसम् । कीदृशी पुनः कार्यजातिर्बुद्धिमता व्याप्तेति चेत् । उच्यते । यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिः । किं सा साधनबुद्धिरथ प्रकृतसाध्यबुद्धिः । साधनबुद्धिस्तावद्भवतां सिद्धैव क्षित्यादीनां कार्यतया सम्मतत्वात् । अथोत्तरः पक्षः । तेनायमर्थो भवति नेदं क्षित्यादिषूपलभ्यमानं साध्यानुमानसमर्थं कार्यत्वं किन्त्वन्यदेव साध्यबुद्ध्यजननात् । न

१ 'कारणभेदोऽस्ति' इति प भ. पुस्तकयोः पाठः ।

चैतत् युक्तम् । सर्वानुमानोच्छेदप्रसङ्गात् । धूमादिष्वपि हि शक्यमेव वक्तुं नायमग्न्यनुमितिमथो धूमः किं त्वन्य एव साध्यबुद्धयजननात् । तथा च तावन्न साधनं सिद्ध्यति यावत्साध्यबुद्धिर्न सिध्यतीति तावन्न साध्यं सिद्ध्यति यावत्साधनबुद्धिर्न सिद्ध्यतीति स्फुटतरमितरेतराश्रयत्वमिति । तदसमीक्षितम् । यतः कृतबुद्धिरिति न साधनबुद्धिर्नापि प्रकृतसाध्यबुद्धिः किं तु कुविन्दादिस्वभावसाध्यबुद्धिः । तदभावाच्च न साधयितव्यहेत्वसिद्धिः प्रकृतसाध्यासिद्धिर्वा विवक्षिता । किन्त्वात्यन्तिकत्वेनात्यन्तदर्शनमेतत् । तद्द्वारेण हेतोरसिद्धिरव्याप्तिर्वाभिमतेह । तथा हि शून्यनगरपरिदृष्टेषु दुकूलादौ शिल्पिबुद्धिराविरस्ति न सत्यमक्लृप्तायाम् । तदस्या शिल्पिबुद्धेर्भावाभावौ न जातिभेदमात्यन्तिकमन्तरेणेत्यभिप्रायः । ततो यथा धूमादग्निबुद्धिमवन्ती गन्धादेरभवन्ती धूमादग्नेरस्य नियतं जातिभेदमापादयति । [1]तथेदमपि निश्चितपौरुषेयभावेभ्यो भावेभ्यः कैलासकुटिशादीनाम् । कथं पुनरत्र सजातीयत्वाभाव एव प्रतिपत्तव्य इति चेत् । कुविन्दादिभ्योऽन्यस्मोऽस्मिन्नपि नभसि इति स्वप्नेऽपि शङ्काविरहात् । अन्यथा कुविन्दपादमर्दनाज्ज्ञानानुष्ठितकष्टमानिनो लोकः । परचक्राक्रान्तिकातरो वा शिशिरजलधिव्यवधिमभिव्यक्तत एव निर्वृतिमासाद्येत । कुविन्दस्थानीयस्तत्राप्यपरोऽस्त्येव इति चेत् । न । सजातीयस्य कार्यं विनानीयकारणान्वेषणानुपपत्तेः । कुविन्देनैव साध्यसिद्धेः । न हि पटान्तरेऽपि कुविन्दादपरस्यापेक्षास्ति । वस्त्रविशेषे विशिष्टशिल्पिनोऽपेक्षास्तीति चेत् । अस्ति यावदेव तु वस्त्रान्तरेणैकजातीयत्वपरामर्शादृढः । अत एव कुविन्दस्यैव शिल्पिनः कल्पनम् । तद्विशेषाभावे तु पौरुषेयताया एव सन्देहः । मेरुमन्दरादयस्तु न केनचित्तादृशैर्येणैकप्रपञ्चसमाभाव । तदेषामप्यप्रसिद्धमत्यन्तवैजात्यमपहृत्य पटान्तरान्तरे समानशिल्प्यनुमानविग्रहप्रसङ्गेन तथैव स्वीकार्यते । यथा

[1] 'तथेदमपि' इति प म पुस्तकयो पाठ ।

हि वस्त्रादिसजातीयेऽपि भूधरादौ कुविन्दादिविलक्षणः कर्तानुमीयते तथाऽदृष्टकुविन्दादिव्यापारे वस्त्रान्तरादावपि न कुविन्दादिरेव कर्तानुमीयेत । न चैवम् । ततो न वस्त्रादिसजातीयत्वं भूधरादेरिति सिद्धे जातिभेदे यादृक्कार्यं कुम्भादि पुरुषप्रतिबद्धं न तादृग्गर्भार्भकादीत्यसिद्धिस्तत्र कार्यत्वविशेषस्य । यादृग्गर्भार्भकादिकार्यं न तादृक् पुरुषव्याप्तमित्यव्याप्तिः कार्यत्वमात्रस्य । एवं च स्थिते प्रकृतसाध्यबुद्ध्यजननद्वाराणि दूषणानि दूरमपास्तानि । न हि वयं प्रकृतसाध्यबुद्धेरभावात्कार्यत्वहेतोरसिद्धिं ब्रूमः । किं तर्हि मन्दरादौ कुविन्दादिकर्तृबुद्धेरभावाद्वस्त्रादिसजातीयकार्यत्वासिद्धिम् । ततश्च प्रकृतसाध्यबुद्धिवैधुर्यमिति न कश्चिद्दोषः । अपि च यदि घटादौ तथा दर्शनात्कार्यतामात्र गोत्रादौ बुद्धिमद्धेतोरनुमापकमङ्गीक्रियते । तर्हीदानीं तद्वदेव मृद्विकारतापि शक्रमूर्धनि मनुष्यनिर्मित्यनुमापिका किं माभूत् । न खल्वत्रापि कलशवल्मीकयोर्मृद्विकारत्वं भिद्यते । न च तादृशसंस्थानविशेषो मनुष्येणाशक्यक्रियः । तादृशत्वेऽपि तस्य तदन्वयव्यतिरेकानुविधानादर्शनान्न तत्कार्यमिति चेत् । न । इहापि साम्यात् । इहापि यस्य यस्य बुद्धिमद्भावानुविधानमस्ति तस्य सर्वस्यास्तु तत्पूर्वता प्रासादादीनाम् । न पुनस्तथाविधस्यापि भुवनादेर्भवितुमर्हति । तस्य तदन्वयव्यतिरेकानुविधानाभावात् । नन्वेव यो यो धूमविशेषो वह्निभावाभावानुविधायिभावाभाव उपलब्धः स सर्वोऽस्तु वह्निपूर्वो न तु पर्वतनितम्बवर्तीति कथं ततो वह्निरनुमीयते सामान्यबुद्धिविशेषविषयत्वेन । कारणाभावावधारणस्येहापि[1] साम्यादिति चेत् । तत्किमिदानीं मनुष्यकार्या कुड्यादय उपलब्धा इति शक्रमूर्धापि तथास्तु । कस्यचिद्विशेषस्य कुड्यादिभ्यः शक्रमूर्धादेः सम्भवान्नैवमिति चेत् । स तर्हि प्रासादादिभ्यः सम्भवति भुवनादेरपीति न विशेषः । न त्वेवंविधो वह्न्यन्वयव्यतिरेकानुविधायिनां धूमविशेषाणां पर्वतगताद्धूमात्स्वरूपेण विशे-

---

१ 'कार्यकारणभावावधारणस्य' इति प भ. पुस्तकयोः पाठः ।

षोऽस्ति । अत एव न पाण्डुद्रव्यमात्रात् कुमुदकपोतादेर्दहनानुमानम् । धूमत्वसामान्यस्यैव ततो भेदापादकत्वात् । किं च । यदि कुम्भादौ कार्यत्वमात्रस्य बुद्धिमदन्वयव्यतिरेकानुविधानदर्शनात्पृथिव्यादावपि कार्यतेष्यते । तर्हि केषाञ्चिन्मणिमुक्तादीनां पुरुषान्वयव्यतिरेकानुविधानस्योपलम्भाद्रत्नाकरसमुत्थानामपि तत्कार्यत्वप्रसङ्गः । इष्यत एव पुरुषस्तत्रापीश्वरः कर्तेति चेत् । कथं तर्हि तत्राकृत्रिमव्यवहारो लोकस्यास्खलद्रूपः । तत्रेश्वरस्य कर्तुरतीन्द्रियत्वेनानुपलम्भादिति चेत् । न । अन्यत्रापि सतः कर्तुरनुपलम्भाद्देशकालविप्रकृष्टस्य कर्तुरुपलम्भासम्भवात्तस्तेष्वप्यदृष्टकर्तृकेष्वकृत्रिमव्यवहारः । सागरसमुत्थादिभिः समानार्थतायां वा स्यादविशेषात् । तज्जातीयेषु कर्तुरुपलम्भाददृष्टकर्तृकेष्वपि कर्तुरनुमानात्कृत्रिमव्यवहार इति चेत् । सामुद्रेष्वपि दृष्टकर्तृकसमानजातीयत्वेन कर्तुरनुमानात् कृत्रिमव्यवहारः किं न स्यात् । अन्यथात्रापि मा भूदविशेषात् । सामुद्राणां दृष्टकर्तृकमण्यादिविजातीयत्वेन कर्त्रनुमानायोगात्कृत्रिमव्यवहाराभावे स्थावरादिकार्यस्यापि दृष्टकर्तृकप्रासादादिकार्यविजातीयत्वात् । कर्त्रनुमानं न स्यादविशेषात् । तस्माद्दृष्टकर्तृकसजातीयानामेव कर्त्रनुमानं युक्तम् । यथा जीर्णकूपप्रासादादीनाम् । तत्रापि मानेन लौकिकपरीक्षकाणामक्रियादर्शिनामपि कृत्रिमबुद्ध्युत्पत्तेः । न तद्विजातीयानां कर्त्रनुमानं युक्तम् । यथा वनस्पतिवल्ल्यादीनाम् । लौकिकपरीक्षकयोस्तत्र कृतबुद्ध्यनुत्पत्तेः । एवं विशिष्टं कार्यत्वमसिद्धं वसुधादिषु । कार्यत्वमात्रं पुनरप्रसिद्धव्याप्तिकमिति स्थितम् । यच्च प्रत्यक्षादिभिरबाध्यमानपक्षत्वेन कालात्ययापदिष्टत्वं प्रत्यादिष्टम् । तदपि न स्पष्टम् । धर्मैकदेशस्य तृणादेरग्रहणयोग्यकर्तृकस्याप्यगृह्यमाणकर्तृकतया प्रत्यक्षेण बाधनात् । अथ न प्रत्यक्षेण पक्षैकदेशोऽत्र बाधितुं शक्यः । कर्तुः प्रत्यक्षेण ग्रहीतुमयोग्यत्वादिति चेत् । न । प्रत्यक्षानुपलम्भाभ्यां व्याप्तिग्रहणाङ्गीकारेण दृश्य एव विषये

1 'लौकिकेतरयो' इति ब पुस्तके पाठः ।

साधनाभिधानस्य हठेनायातत्वादित्युक्तम् । अपि च । ज्ञातचिकीर्षाप्रयत्नशरीरशाली खल्वात्मा मूर्तः कर्ता भवति । कुलालादेस्तथोपलम्भात् । एवंभूतश्च कर्ता प्रत्यक्षग्रहणयोग्य एव । यद्यपि ज्ञानादिभागो न योग्यः । तथापि योग्यशरीरभागभावाद्भवति प्रत्यक्षं बाधकम् । अथ ज्ञानचिकीर्षाप्रयत्नवानेव कर्ताभिधीयते न शरीरवानपि । ननु शरीरं कुतो न कर्तृत्वभागनिवेशि । ज्ञानोत्पत्तावुपयुक्तत्वादिति चेत् । तर्हि ज्ञानमपि त्यज्यताम् । इच्छोपयोगित्वात् । इच्छापि त्यज्यतां प्रयत्नोपयोगित्वात् । ततः प्रयत्नमात्रशाली कर्ता प्राप्तः । तथा च न चेतनः कर्तेत्यहो कमनीयं कर्तृत्वमालोकयाञ्चक्रुर्योगाः । तस्माज्ज्ञानादिचतुष्टयशाली कर्ता वाच्यः । एवञ्च भवति प्रत्यक्षं बाधकम् । अथ न शरीरं कर्तृभागनिविष्टमन्यत्रोपक्षीणत्वात् । ज्ञानमन्तरेण तु न कर्तृत्वम् । न ह्यत्र ज्ञानमिच्छामात्रोपयोगि । किन्त्विच्छाप्रयत्नयोर्विषयावच्छेदोपयोग्यपि । न हीच्छाप्रयत्नौ स्वयं स्वविषयप्रवणावपि तर्हि ज्ञानविषयावच्छेदद्वारेणैव तयोः सविषयत्वम् । तयोः स्वभावाद्विषयावच्छेदे तदपलापप्रसङ्गः । अयमेव हि ज्ञानस्य ताभ्यां भेदो यदिदं विषयप्रवणं स्वभावात् । तस्मान्नान्यत्रोपयोगितामात्रेण ज्ञानं त्यक्तुं युज्यते । इच्छाप्रयत्नयोर्विषयावच्छेदार्थमधिकोपयोगात् । तस्माज्ज्ञानचिकीर्षाप्रयत्नाधार एव कर्ता । शरीरं तु ज्ञानोपयोगीति न कर्तृत्वनिवेशि । एवं च सति न प्रत्यक्षं बाधकम् । ज्ञानादित्रयाधारस्य हि कर्तुः प्रत्यक्षेण ग्रहीतुमयोग्यत्वादिति । तदयुक्तम् । यतो यस्यास्मदादेरनित्याविच्छाप्रयत्नौ भवतस्तस्य पूर्वं विषयपरिच्छेदः । परिच्छिन्ने च तस्मिन् सुखदुःखसाधनतामवधार्य तदनुरूपाविच्छाप्रयत्नौ प्रवर्तेते इति वक्तुं युक्तम् । यस्य पुनरेतौ नित्यौ तस्य यत्र क्वचन स्वयं सिद्धौ स्तस्तत्र स्वत एवेति किं कार्यं ज्ञानेन । न हि तौ ज्ञानपूर्वौ प्रवर्तेते । नित्यताव्याहतिप्रसङ्गात् । ननूक्तमिच्छाप्रयत्नयोः स्वयं विषया-

१ ज्ञानदर्शनचारित्रवीर्यमिति ज्ञानादिचतुष्टयम् ।

वच्छेदप्रवणत्वे ज्ञानरूपता स्यादिति । तदसत् । यतो विषयावच्छेद इत्यत्र कोऽर्थः । किं प्रतिनियते विषये ज्ञप्तिः प्रवृत्तिर्वा । पौरस्त्यपक्षे स्यात्तयोर्ज्ञानरूपता । परं नामुं पक्षमाचक्ष्महे । द्वितीयपक्षे तु कथमनयोर्ज्ञानरूपत्वम् । न च विषयविज्ञानं विना प्रवृत्तिरेवानयोर्न प्राप्नोतीति वाच्यम् । नित्ययोस्तयोः परिमाणस्येव व्योम्नि क्वापि विषये सदा प्रवृत्तत्वात् । अथ नित्यावप्येतौ नैकविषयावेव तत्तद्भावमेवोपधाने तत्तद्विषयत्वसम्भवात् । तथा च यत्र यत्रोपधानीभूते भावे ज्ञानं भवति तत्तद्विषयाविच्छाप्रयत्नौ भवतः सवितृप्रकाशवत् । ज्ञानं विना तयोस्तत्तद्विषयत्वं दुरापम् । तदयुक्तम् । यस्मादुत्पन्नेनैव भावेन न तावदुपधानं सम्भवत्येव चेतरेतराश्रयम् । उत्पन्नेनैव हि भावेनोपधाने सतीच्छाप्रयत्नयोस्तद्विषयत्वं तस्मिंश्च सत्युत्पन्नेन भावेन तयोरुपधानमिति । अथास्मदादीनां शरीरसहितानामेव विलोकनात्तत्कल्पनाप्यस्तु । अथ तदीयज्ञानेच्छाप्रयत्नानामस्मदादिज्ञानेच्छाप्रयत्नविलक्षणत्वाच्छरीरसाहित्यं विनापि सद्भावः स्वीक्रियते । तर्हि तदिच्छाप्रयत्नयोरस्मदादीच्छाप्रयत्नविलक्षणत्वाज्ज्ञानसाहित्यमपि त्यज्यताम् । रुचीनां कान्तास्वेव सन्मानार्हत्वात् । अपि च विषयावच्छेदाय चेज्ज्ञानं मृग्यते । मृग्यताम् । इच्छया तु किं कार्यम् । प्रयत्नविषयस्य ज्ञानेनैवावच्छिन्नत्वात् । न चेच्छां विना प्रयत्नः कथं प्रवर्ततामिति वाच्यम् । तस्य नित्यत्वेन यत्र क्वचन सदा प्रवृत्तत्वात् । अन्यत्र दृष्टत्वादिच्छाकल्पने शरीरमपि कल्प्यताम् ।

ईश्वरेऽस्मदादिशरीरस्वीकारस्य खण्डनम् ।

अथास्तु शरीरमदृश्यं तु तदिति न तृणादिषु तद्दर्शनात्कालात्ययापदिष्टतेति चेत् । ननु कुतोऽस्य शरीरस्यादृश्यत्वम् । विद्यादिप्रभावाज्जातिविशेषाद्वा । विद्यादिप्रभावस्य शम्भावदृश्यत्वहेतुत्वे कदाचिद्दर्शनं दृश्येत । न खलु विद्यातन्त्रादिमता शाश्वतिकमदृश्यत्वमुपपन्नम् । यस्य हि विद्यादीनां प्रयोगस्तस्यैव तस्मादृश्यत्वसम्भवः । जातिविशेषोऽ

स्याददृश्यत्वे हेतुरित्यप्यलौकिकम् । एकस्य जातिविशेषासम्भवात् । अनेकव्यक्तिनिविष्टत्वात्तस्य । पिशाचादौ हि सन्त्यनेकव्यक्तय इति युक्ता तत्र जातिविशेषाददृश्यतेति । दृश्यशरीरस्य कर्तुस्तृणादावदर्शनात्सिद्धं कालात्ययापदिष्टत्वम् । यच्चोक्त प्रकरणसमत्वोद्भावननिमित्तोपन्यस्तानुमाने येन केनापि प्रमाणेन त्रिलोचन इत्यादि । तदपि नोपपन्नम् । अत्र धर्मिणो विकल्पसिद्धत्वात् । यथा च विकल्पसिद्धोऽपि धर्मी भवति तथा पुरस्तात्प्रकटयिष्यते । यद्वास्तु प्रमाणसिद्ध एवाय धर्मी । न च कालात्ययापदिष्टत्वनिष्टङ्क. शक्यः कर्तुम् । यदि हि क्षितिधरादिनिर्म्माणनैपुण्यादिद्वारेण केनचिदस्य सिद्धिरभिधीयते । तदा स्यात्प्रकृतदूषणस्पर्शः । यावता भगवदागमप्रसादात्तत्सिद्धिरुच्यते । न चास्मादसौ तत्कर्त्तेव सिध्यतीति वाच्यम् । अणिमाद्यष्टविधैश्वर्यशालिनो नितान्तबलीयस. खेचरविशेषस्यैव तस्य तत्राभिधानात् । क्षित्यादिकर्तृत्वस्य सर्वथा तत्राश्रवणात् । अथैवं सिद्धिसाध्यतावतारः । विद्याधरविशेषस्य क्षित्याद्यकर्तृत्वेनास्माभिरपि स्वीकृतत्वात् । अस्मदभिप्रेतस्य तु तस्य न प्रतिरोधः । मैवम् । य एव हि भवतः सर्वज्ञत्वाद्यतिशयशाली शूली सम्मतः स एवास्माकं विद्याधरविशेष इति न पुनरतोऽन्यः । ततो विशेषविप्रतिपत्तावपि सामान्येन शम्भुर्धर्मी युक्त एव । अन्यत्रापि सर्वत्र धर्मी सामान्येनैव निगद्यते । अन्यथानुमानमात्रमुद्राभङ्गप्रसङ्गः । शक्यं हि वक्तु शब्दानित्यतानुमानेऽपि । किमयं शब्दो द्रव्य गुणो व्यापी तदितरः श्रूयमाणोऽन्यो वा धर्मितयोपात्त इति । अत. सामान्येन धर्मिणोऽभिधानान्न कालात्ययापदिष्टता । अथ यः कर्ता स शरीरीत्येवं शरीरकर्तृत्वयोर्व्याप्यव्यापकभावसिद्धौ सत्यामीश्वरे शरीर निवर्तमान कर्तृत्वमपि निवर्तयेत् । न चैवम् । शरीरस्य कर्तृत्व प्रति व्यापकत्वासिद्धेः । कर्तुर्बुद्ध्यनित्यत्वोपाधिकत्वाच्छरीरसम्बन्धस्य । अनित्यबुद्धिसमन्वित

1 सर्वकर्तृत्वेत्यधिक प. भ. पुस्तकयो. ।

एत हि कना शरीरसम्बन्धमपेक्षते नापर । नत्सुन्दरम् । यत किमुपाधिलक्षणम् । साधनाव्यापकत्वे साध्येन समव्याप्तिकत्वमिति चेत् । तर्हि कर्तु शरीरसम्बन्धे सम्भावनाभुर नास्तरत्वेन । यथा हि शरीर कर्तृव्यापक तथा बुद्धयनित्यत्वमपि । न च साधनव्यापकत्वमुपाधिरिति त्वयैव व्याहतम् । अन्यथा आर्द्रेन्धनसम्बन्धोऽप्यग्निसम्बन्धे धूमस्योपाधि स्यात् । अग्निवत्त्वस्यापि धूमरूप साधनव्यापकत्वात् । तस्मान्नोपाधिसम्भवेन शरीरस्य कर्तृव्यापकत्वा सिद्धि । अथ स्यादेव यदि कर्तुर्बुद्धयनित्यत्व व्यापक स्यात । न चैवम् । या बुद्धि सा नित्यैवेत्यनित्यत्वमस्य धर्मस्य बुद्धावनौपाधिकत्वात् । तथा क्वचिद्बुद्धेरनित्यत्वाभावे क्वचिन्नित्यत्वबुद्धिसम्भवेनापि कर्तृत्वभावा कथ तदनित्यत्व तद्व्यापक स्यात् । उपाधिबुद्धेरनित्यत्वेन सम्बन्धोऽदृष्टैकार्थसमवाय । सत हि बुद्धिरनित्या याऽदृष्टेन साकमे कस्मिन्नेकस्मिन्नादावेव समवेतेति । तन्न सारम् । अदृष्टैकार्थसमवायस्य बुद्धयनित्यत्वेन सार्धं व्याप्त्यभावेनोपाधित्वायोगात् । न हि शाकाद्याहारपरिणाम श्यामत्वेनाव्याप्तावुपाधिनाम । व्याप्त्यभावश्चात्र मुक्तात्मसु नास्तीति वाच्यम् । एतद्रूपाया मुक्ते पराकरिष्यमाणत्वात् । यद्वाऽस्त्वेतद्रूपा मुक्ति । तथापि नादृष्टैकार्थसमवायस्योपाधिता । अनित्यत्वात् । साधनव्यापकत्वस्य चार्द्रेन्धनादिरिवानुपाधित्वात । अथ दोषनिमित्तोऽदृष्टसमवायस्तदनुश्च यत्रैव दोषस्त्वाश्रयेऽदृष्टसमवायस्तत्रैव बुद्धिरनित्या नित्यापि पुनराश्रयभेदे बुद्धिरपि भविष्यत्यदृष्टसमवायोऽपि न भविष्यतीति चेत । ननु निर्दोषस्त्वात्मदाश्रयो मुक्तात्मनश्च च न बुद्धिमत्त्वद्वाविरस्ति । ईश्वरस्य तु निर्दोषता नाद्यापि प्रसिद्धा । तस्मात्त्वदुक्तोपाधिनिरसनात्सिद्ध कर्तृव्यापक शरीरम् । यत्तु कन्दलीकार प्राह[1] । "किं शरीरित्वमेव कर्तृत्वमुत परिदृष्टसामर्थ्यकारकप्रयोक्तृत्वम् । न तावच्छरीरित्वमेव कर्तृत्वम् । सुषुप्तस्यो

१ न्यायकन्दली पृ ५६ प १०

दासीनस्य च कर्तृत्वप्रसङ्गात् । किन्तु परिदृष्टसामर्थ्यकारकप्रयोक्तृत्वम् । तस्मिन् सति कार्योत्पत्तेः । तच्चाशरीरस्यापि निर्वहति । यथा स्वशरीरप्रेरणायामात्मनः । अस्ति तत्राप्यस्य स्वकर्मोपार्जितं तदेवेति चेत् । सत्यमस्ति । परं प्रेरणोपायो न भवति । स्वात्मनि क्रियाविरोधात् । प्रेर्यतयाऽस्तीति चेत्, ईश्वरस्यापि प्रेर्यः परमाणुरस्ति" इति । तदपि नावद्यातम् । यतः स्वकर्मोपार्जितशरीरज्ञानचिकीर्षाप्रयत्नशालित्वं कर्तृत्वमाचक्ष्महे । सुषुप्तोदासीनावस्थायां तु शरीरमात्रसद्भावेऽपि विवक्षितकार्यगोचरज्ञानेच्छाप्रयत्नाभावान्न तदुत्पादः । स्वशरीरप्रेरणालक्षणकार्यकर्त्ताऽपि स्वकर्म्मोपार्जितशरीरसम्बद्ध एवेति क्व व्यभिचारप्रचारः । स्वात्मनि क्रियाविरोधोऽपि नास्ति । शरीरावयविनः क्वापि प्रध्वंस इव प्रेरणेऽपि स्वस्योपायत्वाविरोधात् । पूर्वप्रसाधितज्ञानस्वप्रकाशवच्चात्राप्यविरोधः प्रतिविधेयः । एतेन तदप्यपास्तं यदवाचि केनचित्, किं साक्षाच्छरीरस्य कार्ये व्यापारः परम्परया वा । नाद्यः पक्षः । व्यभिचारात् । यदा हि योगी योगशक्त्या सर्प्पादीनाहरति न तदाहत्य शरीरस्य व्यापारः । अथ द्वितीयः । तदास्त्येवेश्वरेऽपि कर्त्तरि परम्परया शरीरव्यापारः । ईश्वरोऽपि हि कार्यजातमारभमाणः क्षेत्रज्ञाश्रितमदृष्टमपेक्षते । तच्च शरीरावच्छिन्ने आत्मन्युत्पन्नमित्यस्ति परम्परयाऽत्रापि शरीरव्यापार इति । यस्मात् क्षेत्रज्ञशरीरमीश्वरस्य न स्वकर्म्मोपार्जितमिति सिद्धं स्वकर्म्मोपार्जितं शरीरं कर्तृव्यापकं तदभावाच्च रुद्रे कर्तृत्वाभाव इति । अतोऽप्यनुमानात्प्रकरणसमत्वमत्र । विवादः बुद्धिमद्धेतुकं न भवति कर्तृसुखदुःखाजनकत्वात् । यद्बुद्धिमद्धेतुकं तन्नियमेन कर्तृसुखदुःखजनकम् । यथा घटः । न चेदं तथा । तस्मान्न बुद्धिमद्धेतुकमिति । यत्पुनर्बुद्धिमद्धेतुतामात्रमत्र सिषाधयिषित विशेषो नेत्याशङ्कापर्यन्ते तद्विशेषस्य पक्षधर्म्मताबलात् प्रतिलम्भ इत्यभाणि ।

१ 'नियमेन' इत्यधिकं प भ पुस्तकयोः ।

तत्प्यनिपुणम् । पक्षधर्मता हि साध्यस्य पक्षायोगव्यवच्छेदमात्रमेव दर्शयति धूमानुमानादौ तथैव दर्शनात् । अन्यथा धूमात् क्षितिधर कुहरायोगव्यवच्छेदवद्वह्ने पञ्चवर्णशिखाकलापताया अप्यनुमानप्रसङ्ग । नात्र सामर्थ्यमिति चेत्, एव तर्हि समायात पक्षायोगव्यवच्छेदमात्र एव सामर्थ्यम् । एवमिहापि पक्षधर्मताबलात्पक्षायोगव्यवच्छेदमात्र सिद्धिरस्तु । नित्यज्ञानस्तु कर्ता कथ सिद्ध्येत् । नहि महीधरादि कार्यमिति तत् कश्चिन्नित्यज्ञानेन भवितव्यमिति भवति । सति सत्त्वमात्रेण तत्कर्तृत्वमनुपपद्यमान नित्यज्ञान स्वकर्तारमाक्षिपतीति चेत् । सर्वेव प्रमाणान्तरप्रसाद एष । अन्यथानुमितानुमानोच्छेद । न च नेष्ट तत् । इच्छादय समवायिकारणवन्तो गुणत्वाद्रूपादिवदित्यादिना समवायिकारणवत्त्व प्रसाध्य परिशेषानुमानादष्टद्रव्यातिरिक्तस्यात्म-रूपद्रव्यविशेषस्य साधनात् । किं च पक्षधर्मताबलादधिष्ठातृविशेषो निखिलविषयतावधिनित्यविज्ञानमात्रशाली कपाली सिद्ध्यतीति षड्गुण-श्वरवादिना मतम् । तच्चाष्टगुणेश्वरवादिनो न क्षमन्ते । वदन्ति च नोपादानाभिज्ञानमात्रेण विवक्षितकार्यजातमुत्पत्तुमर्हति । न जातूपादानाभिज्ञोऽपि कुम्भकार कुम्भमचिकीर्षुश्चिकीर्षुर्वा तदुपादानाभिज्ञत्वमतयाऽप्रयतमान कुम्भारम्भाय कल्पते । तस्मात्ज्ञानचिकीर्षाप्रयत्नसमुदायजन्मा कार्यग्रामो न ज्ञानमात्राद्भवितुमर्हति । न चार्थोपलम्भनजन्मा घट केवलाद्धनादृष्टदर्शी जायते । अथास्त्वेव पृथगुत्पन्नज्ञानेषु । भगवज्ज्ञान तु तद्विलक्षणमिच्छायत्नाद्यमेव विश्वस्मिन्कार्ये पर्याप्तमिति चेत् । हन्त भो कस्मिन्न ज्ञानेनापि । स्वरूपाविशेष एवास्या सहायस्तत्र तत्र कार्ये करिष्यतीति । न किंचित्कार्यमनाद्यादे-रस्माद्वादात्तावन्नायत इति चेत् । ननु स्त एव क्षेत्रज्ञगतौ धर्मा-धर्मौ सन्ति च प्रमाणव सहाया इति कस्मिन्न ज्ञानम् । नानाज्ञात्मे भवन्त इति तज्ज्ञानमेपितव्यमिति चेत् । अस्मात्-

1 'उपपद्यमान' इति भ पुस्तके पाठ ।

विज्ञातास्ते न प्रवर्त्तन्ते । कुम्भाद्युपायेषु तथानुपलम्भादिति चेत् । तर्हि ज्ञानवच्चिकीर्षाप्रयत्नावप्यास्थेयौ । तत्रापि च ज्ञानं साक्षाच्चिकीर्षाविशेष उपयुज्यते । स च प्रयत्नभेदे इति प्रयत्न एव साक्षात्कार्योत्पादहेतुरिति कथं तमन्तरेण तत्सम्भवः । न हि वह्निमन्तरेण प्रचुरतरदारुसंबद्धमात्राद्वटवेटिकास्फुटस्फुरत्फूत्कारमारुतमात्राद्वा सिध्यत्योदनः । तस्मादष्टगुणाधिकरणमेवेश्वरोऽस्तु सिध्यतु । तदपि न सार्धीयः । यतोऽस्येच्छाप्रयत्नौ नित्यावनित्यौ वा स्याताम् । नित्यौ चेत्, कृतमीश्वरस्य ज्ञानेन चिकीर्षाप्रयत्नानुपयोगिना । तयोर्नित्यतया स्वोत्पादोपयोगानपेक्षणात् । न च प्रयत्नवदस्य ज्ञानमपि साक्षात्कार्योत्पादनाङ्गम् । प्रयत्नभेदे तथैव खल्वयमवितिष्ठत्युपादानादि न तु तत्समये ज्ञानस्य कस्यचिदुपयोगश्चिकीर्षाया वा । निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायादिति दत्तजलाञ्जलिरीश्वरस्य सर्वज्ञता । उक्तं चैतत्प्रागेव । अथानित्यौ तौ । तर्हि तयोरुत्पत्तिकारणं वक्तव्यम् । ननु नित्यज्ञानमेवोत्पत्तिमूलकारणमस्ति तत्किमपरेण कारणेनेति चेत् । अहो वत प्रमादः, यदयमात्ममनःसंयोगविशेषासमवायिकारणाविच्छाप्रयत्नौ तमन्तरेण ज्ञानमात्रादेव भवति इत्यपि वक्तुमध्यवसितः । तथा सत्ययमतण्डुलमपि मण्डं साधयेदेव । सन्त्येवास्य मुक्तात्ममनोभिः संयोगास्तेन तत्सहायस्तत्र तत्र चिकीर्षाप्रयत्नावयं युगपत्प्रसूते तत्कार्योपजननायेति चेत् । ननु मनांसि तत्संयोगाश्च किमनधिष्ठितानि चिकीर्षाप्रयत्नौ प्रस्तुवाते अधिष्ठितानि वा । यद्यनधिष्ठितानि । तदेताभ्यामेव चिकीर्षाप्रयत्नाभ्यां कार्यत्वहेतोर्व्यभिचारः । अधिष्ठानं तु प्रयत्नमन्तरेणायुक्तमेव । प्रयत्नान्तरेण चिकीर्षान्तरजन्मना तदधिष्ठानम् । न चानवस्था । अभ्युपगमनत्वाच्चिकीर्षाप्रयत्नप्रवाहस्येति चेत् । नन्वयमुत्पन्नसंजिहीर्ष ईश्वरः क्षेत्रज्ञेषु प्रतिबद्धवृत्तिधर्म्माधर्म्मनिचयेषु जगति च परमाण्ववस्थामापन्ने निर्व्यापारः

---

१ 'न्यायातिपातात्' इति प. भ. पुस्तकयोः पाठः ।

कियन्तमपि काल स्थित्वा यदा चिकीर्षति प्रयतते च तदाऽस्य चिकीर्षा-प्रयत्नयोजनयितव्ययोन पूर्वानुस्थित चिकीर्षान्तर प्रयत्नान्तर वा सम स्तीति कुतो मनसा तत्सयोगाना चाविष्ठानमिति चेतनानधिष्ठितेभ्यो मनस्तत्सयोगेभ्यो न चिकीर्षाप्रयत्नावुत्पाद्येयातामुत्पद्यमानो वा कथ कार्यत्व हेतु न व्यभिचारयत । किं च शरीरमपि कर्तृव्यापकमित्यु क्तम् । न चास्य तदस्तीति कथमसौ कर्ता स्यात् ।

अस्त्येवास्य शरीरमिति शङ्कर । ननु तन्नित्यमनित्य वा । नित्य चेत्, निरवयव सावयव वा । न तावन्निरवयवम् । तद्धि पार्थिवपरमाण्वादिनित्यद्रव्येभ्योऽन्यतरत्स्वतन्त्र वा । न च स्वतन्त्रम् । द्रव्य सख्याक्षयप्रसङ्गात् । पार्थिवपरमाण्वादिनित्यद्रव्येभ्योऽन्यतरदपि व्यापकमव्यापक वा । न व्यापकम्, अस्येश्वरेणाधिष्ठानविरोधात् । अव्यापकमपि न मन । तस्य प्रतिनियतात्मसम्बन्धित्वात् । पृथिव्यादिपरमाणुरूपता तु तस्य कथ निश्चीयते । तदारब्धस्य पृथिव्यादिकार्यद्रव्यस्य कस्यचिदभावात् । नापि सावयव तच्छरीरम् । सावयवस्य नित्यत्वविरोधात् । नाप्यनित्यम् । यतस्तद्बुद्धिमद्धेतुकमितरद्वा । न तावदितरत् । कार्यत्वस्य तेनैव व्यभिचारापत्ते । बुद्धिमद्धेतुकमप्यन्यकर्तृक स्वकर्तृक वा । यद्यन्यकर्तृकम् । तदाऽस्यापि सशरीरोऽशरीरो वेत्यावर्तत । तथा चेश्वरानन्त्यप्रसक्ति । अथ भवत्वियमुत्सवायैवास्माकम् । एकोऽपि हि भगवान् दुर्लभ आसीदिदानीमानन्त्य तेषा य[1] लभ्यते । तदप्यापातदर्शिनो वच । बहूना व्याहतमनसा व्यापारे पृथिवीप्रमुखकार्यस्यानुत्पादप्रसङ्गात् । उत्पन्नस्यापि वा विविधेश्वरस्य वशादसामञ्जस्यापत्ते । स्वकर्तृकत्वेऽपि तदपि शरीर शरीरी करोत्यशरीरी वा । अशरीरी चेत्, तथैव त्रैलोक्यमप्यशरीरीश्वरो रचयतु । शरीरी चेत्, तदा तच्छरीरनिष्पाद-

अस्त्येवेश्वरस्य शरीरमिति वादिन शङ्करस्य खण्डनम् ।

[1] 'आवत्तत' इति भ पुस्तके पाठ ।

नाय प्रथमं तेन शरीरान्तरमारचनीयम् । तस्यापि निष्पादनार्थं प्रथमतरं शरीरान्तरं करणीयमेवं चानवस्था स्यात् । तथा चापरापरशरीरनिर्म्माण एवोपक्षीणशक्तिकत्वान्न कदाचित्प्रकृतमसौ कार्यं कुर्यात् । अथ स्यादनवस्था दोषाय यद्यशरीरोऽसौ कार्यकरणाय तत्काल एव स्वशरीरमारभेत यावता सदैवास्य शरीरमस्त्येव । कार्यकालभावि खलु शरीरं प्राक्तनशरीरसहितेन निर्मितं तदपि प्राक्तनतरशरीरसहितेनैवेत्यनवस्थापीयं न दोषाय जायते । बीजाङ्कुरादिवदनादित्वाच्छरीरसन्तानस्य । तथा चाहुर्मूलक्षतिकरीमाहुरित्यादि । तदप्यपूतम् । अदृष्टसण्टङ्कघटितत्वात्सर्वत्र शरीरनाशोत्पादयो. । येन हि यावदायुःकर्म्म पूर्वमुपार्जितं भवति तस्य तावत्कालं शरीरमवतिष्ठते । यादृशं च तद्भावे तदुपार्जितं भवति तदनुरूपेणोत्तरभवे तदुपजायत इति युक्तमस्मादृशेषु सर्वम् । ईश्वरे तु नास्ति तदितरत्र मुक्तात्मनीव कौतस्कुती तत्कल्पना । अथास्त्येवात्रेच्छा भगवती तद्वशात्तन्नाशोत्पादौ भविष्यत इति चेत्, नैवम् । अस्या अप्यदृष्टापेक्षयैवात्र सर्वत्र प्रवर्त्तनात् । अन्यथा कृतं सर्वत्रादृष्टकल्पनया । यथा यथा स्थाणोरिच्छा प्रवर्त्तते तथा तथा प्राणिना सुखदुःखोपभोगस्य सम्भवात् । ततो नास्य शरीरमपि घटत इति कथमीश्वररूपविशेषस्य पक्षधर्मतावलात्सिद्धिः । नन्वसति विशेषे बुद्धिमत्त्वसामान्यस्यानुमानिकस्य तर्हि का गतिरिति चेत् । तत्किमवश्यं भवितव्यमस्य गत्या । ननु प्रमाणसिद्धमुपपादनीयमिति चेत् । यस्य नामानुपपद्यमानेनोपपादनं तस्य च वरमनुपपत्तिरेवास्तु । ननु प्रमाणसिद्धमनुपपन्नमिति विरुद्धम् । एवं तर्हि प्रमाणसिद्धिप्रतिघात एवास्त्वविरोधाय । न पुनरनुपपन्नस्योपपत्तिः । कथ तर्हि साधनस्येदं दूषणम् । नेदं साधनस्य दूषणम् । किन्तु वादिनो योगस्य । यौ हि ज्ञानमात्रोपेतत्वनित्यानित्येच्छाप्रयत्नोपेतत्वसशरीराशरीरत्वादिविशेषपरिहाण्या गगनकुसुमाय-

माने गिरादिवर्त्तिनि बुद्धिमत्पूर्वकत्वसामान्ये साधनात् साधन योजयति । न च सम्भवति तादृशो विशेष । यमाश्रित्य क्षित्यादौ बुद्धिमत्पूर्वकत्वसामान्य व्यवतिष्ठेत । न चैव सर्वानुमानोच्छेदप्रसङ्ग । सम्भवद्विशेषविषयत्वादितरेषामनुमानानाम् । न हि न सम्भवति पर्वत नितम्बवर्त्ती वह्निर्विशेष । तस्माद्यथा कश्चिन्निशान्तमभिमच्छेयमाकाश प्रति व्यापारयन्पुरुषो निगृह्यते, न पुनरभिराकाश वा । तद्वत् कार्यत्वमपीश्वर इति । यच्च पक्षधर्मतासमर्थनाप्रस्ताव एवोक्तम् । ये हि यत्कर्त्तारस्ते तदुपादानाद्यभिज्ञा । यथा कुलालादय । सर्वथा च कार्याणामीश्वर करोति । तदप्ययुक्तम् । यत किमेते कुलालादय स्वकार्यस्य निरवशेषोपादानोपकरणाद्यभिज्ञा कतिपयोपादानोपकरणाद्यभिज्ञा वा । नाद्य पक्ष । अदृष्टस्य सर्वोत्पत्तिमता निमित्तहेतोरुपकरणस्यापरिज्ञानात् । नापि सम्प्रदानप्रयोजनविशेषवेदिन । तस्य सम्प्रदानभेदस्य देवदत्तादे प्रयोजनभेदस्य च मधूदकधारणादेरनेकस्यापि सम्भवात् । अथोपादानोपकरणादिमात्रविज्ञान न समस्तोपादानोपकरणज्ञान कुलालादीनाम् । तर्हि तेनैव दृष्टान्तेनेश्वरस्यापि तदुपकरणमात्रज्ञान स्यात् । तन्मात्रज्ञाने च सर्वज्ञताऽसिद्धे । कतिपयज्ञो हि तथा सति स्यात् । अथ चोत्सवादिवत्तन्मात्रज्ञानमपीश्वरस्य न सिध्यति । तथा हि ।

गुनति गुञ्जति गर्जति गायति श्वसिति गुप्यति शाम्यति गच्छते ॥
स्खलति खेलति माद्यति खिद्यते मिषति सेवते मायति मधप ॥४१०॥

न चास्य वचनादिहेतुना तात्पर्यादिकाना परिज्ञानमस्ति । निरभिप्रायस्यैव तस्य तत्र तत्र प्रवृत्तिदर्शनात् । यदप्यवादि न हि यत्कार्यं तत्सकलमपि कृतबुद्धिमात्मन्युपजनयतीति नियम इत्यादि । तदपि न निष्कृत्रिमम् । कृत्रिममणिमौक्तिकादौ स्वातन्त्र्यपूरितमनुष्यराया वाऽकृत्रिममणिमौक्तिकसमाकारादिसंस्थानसारूप्यस्य कृत्रिमबुद्धेरनुत्पादकस्य सद्भावतस्तदनुत्पादस्योपपत्ते । न च भूभूधरादावप्यकृतक-

संस्थानसादृश्य सम्भवति । अकृतकसंस्थानस्यैव त्वयाऽनङ्गीकारात् । यत्पुनरुक्तम् । कोऽयं कार्यत्वस्य विशेषः । किं बुद्धिमदन्वयव्यतिरेकानुविधानं तद्दर्शनं वेत्यादि च । तत्रायमेव कार्यत्वस्य विशेषो बुद्धिमता स्वभावप्रतिबद्धोऽभिधीयते । यः खल्वक्रियादर्शिनोऽपि कृतबुद्धिमात्मनि जनयति । प्रोक्तश्चायमर्थः प्रागेव । यदप्युक्तमेकत्वं च क्षित्यादिकर्त्तुरित्यादि । तदपि नावदातम् । बुद्धिमत. साध्यस्यैकत्वनियमे निश्चयाभावात् । एकत्वेन हि तस्य सिद्धिर्नित्यत्वविभुत्वसर्वज्ञत्वसिद्धौ स्यात् । तथा चेश्वरव्यवहारभाजनमसौ स्यात् । न च नित्यत्वादिसिद्धिः सम्भाव्यते । भिन्नदेशकालकलितं हि कार्यजातमनेकेन संख्यातिक्रान्तेन कर्त्रा कृतं सम्भाव्यते । तथा च सति न तावद्विभुत्वनित्यत्वे । अनेकस्य च कर्त्तुः स्वस्वविषयोपादानादिमात्रवेदनसिद्धौ क्व सर्वज्ञत्वम् । अथ बहूना व्याहतमनसां व्यापारे कार्यमेव नोत्पद्यते । उत्पन्नमपि वा सपदि विपद्येतेति प्रतिकलमुत्पत्तिविपत्तिमात्रव्यापारा वराकी त्रिलोकी कथं काममप्यर्थक्रियां कुर्यादिति चेत् । तदचतुरस्रम् । प्रत्येकं हि वैभवादिगुणयोगादीश्वरादीना व्यापारे स्यादपीयमाशङ्का । यावता साम्प्रतमेकोऽपि तादृङ्न सिध्यतीत्युच्यते । अर्वाचीनशक्तयश्च भूयास एकमनेकं वा कार्यमारभ्य निष्पादयन्तो दृश्यन्त एव । ननु नैकत्रापि प्रधानभूतेनैकेन भवितव्यम्, बलीयसा वा, सूत्रधारवत्तेनानीबद्धा । अतस्तस्यैव कर्तृत्वमितरेषां तदनुवर्त्तित्वादिति चेत् । न । तत्रापि नियमाभावात् । स्वस्वप्रयोजनानुरोधेन स्वतन्त्राणामपि केषाचिदेकसत्त्वादिघटनदर्शनात् । तत्रापि कश्चिदेव प्रथमप्रयोजक इत्यपि नास्ति । अनेकस्यापि तथा हृदयोत्कलितकार्यानिवारणात् । नीचस्यापि वा प्रयोजकत्वसम्भवात् । तस्मात् भ्रमरमधुमक्षिकापिपीलिकादिभिर्मधुक्षत्रवाल्मीकादिवत्क्षुद्रप्राणिभिरप्येकैकमेनाककैलाशादिकरणसम्भावनायां का वार्त्ता विश्वस्यैकेन क्रियायाः । तत्रादृष्टजन्मानस्तावत्कृतचेतनानुमितयः क्षितिधरादयस्तावतैव कृतार्थाः ।

ते च तत्कर्तृनन्तरं उपादानमतिक्षुद्रपृथिव्यादिद्रव्यमुपकरणं सुखादि सम्प्रदानमात्मानमेव प्रयोजनमात्मनः स्थितिसुखादि जानन्त एव वल्मीकजन्तुवत्प्रवर्तेरन् । सिद्धे च नानात्वमधिष्ठायकाः दृश्येरन् स्वभावविप्रकर्षात् । येऽपि दृष्टजन्मानो वृक्षादयः पौरुषेयाः । तत्र चिन्तैव नास्ति । अदृष्टपुरुषव्यापारात्तु ये गिर्यादिपरिसरभुवः तेऽपि पिशाचादिप्रकारैरधिष्ठातृभिरसङ्ख्यैः कृतमन्त इति कः सर्ववेदी भवतु । ते चाधिष्ठातारो देशकालयोर्भिन्ना एवेति कुतो विभुत्वनित्यत्वे । न चैव शङ्काया विरोधकं किञ्चिदस्ति वस्तुबलप्रवृत्तमनुमानम् । ननु चैवं भवद्भिरपि न स्वीकृतमेव, एतावच्चातिकष्टतरं कल्पयता वरमीश्वरकल्पनैव साधनादिति चेत् । सत्यम् । यदि कल्पनामात्रे भवन्त्यासक्तास्तदा भवदुपदेशमेव पुरस्करिष्याम । यावत्पुनरनुमानव्याजं न वञ्चयामि । तावदेतास्माकमनस्यमतिनिपुणनिरूपणाभियोगः । अथ क्षुद्रैरसङ्ख्यैर्निर्मिता नर्मदादय इति दुनोति चेतश्चेत् । एकेनाशरीरेण निर्मितास्त इति तु सुष्ठुतराम् । तस्मात् प्रमाणमेव सर्वतो बलवद्यथा स्थापयति तथाऽवतिष्ठेत । अत एतत् दृढं निरूप्यते । न च क्षुद्रेष्वनुरोधः कश्चित् । क्षुद्रैः क्षुद्रैरदृष्टैः समानशक्तिभिरधिकशक्तिभिरस्वतन्त्रैः प्रधानमन्यैरनेकैरेकैकत्वन्तुमनायापरिमितपृथ्वी स्थूलकाणुकैकानेकस्वकार्यैकभागोपादानानादिमात्रवेदिभिश्चानुगतिपर्यायेः कृतो भवतु भुवनसन्निवेशः । एक एव कर्ताऽस्य माभूत् । न च जैनैस्तथानुपगमादेक एव कर्ता कार्यत्वात्प्रसिद्ध्यतीति वक्तव्यम् । एकस्याप्यप्रसिद्धिप्रसङ्गात् । न च वस्तुबलप्रवृत्तेऽनुमाने परोपगमापेक्षा । तदेव बुद्धिमन्मात्रे साध्ये उपादानाद्यभिज्ञत्वमणविशेषणान्तर्गतत्वयाऽभिमतसर्वज्ञसिद्धिरनैकान्तिकी । सर्वकार्यक्रियाया एकाधारत्वनियमासिद्धेः ।

१ एव तद् इति भ पुस्तके पाठः ।

वाचस्पत्यभिमतस्य कर्तुः सर्वज्ञत्वोपपादनप्रकारस्य तदुपपादनप्रकारान्तरस्य च खण्डनम् ।

यच्च वाचस्पतिना कार्यतानुमानात्कस्यचित्तनुभुवनाद्यभिज्ञता प्रसाध्य सर्वज्ञतासिद्ध्यै परिशेषानुमानं व्यतिरेकापरपर्यायमुच्यते । तनुभुवनाद्युपादानाद्यभिज्ञः कर्त्ता नानित्यासर्वविषयबुद्धिमान् । तत्कर्त्तुस्तदुपादानाद्यनभिज्ञत्वप्रसङ्गात् । न ह्येवंविधस्तदुपादानाद्यभिज्ञो दृष्टो यथाऽस्मदादिः । तदुपादानाद्यभिज्ञश्चायम् । तस्मात्तथेति । तदपि प्रोक्तनीत्या निराकृतमवसेयम् । एवं तस्यैकत्वनिश्चयाभावात् । अनित्यासर्वविषयबुद्धिमत्त्वेऽप्युपादानादिवेदनसम्भवस्योपपादितत्वात् । ननु द्व्यणुकस्यापि कार्यत्वात्कर्त्ता तदुपादानपरमाणुदर्शनार्थेपितव्यः । न च मांसचक्षुषस्तथा भवितुमर्हन्ति । अन्यथा किमस्मदादिभिरपराद्धम् । यत्तथा न भवामः । तदवश्य तत्कर्त्ताऽतीन्द्रियदर्शी स्वीक्रियमाणो नेश्वरादन्यो युक्त. । तदपि न युक्तम् । न हि मांसचक्षुष्ट्वेऽपि सर्वेषां साधारणं करणसामर्थ्यम् । अस्मदत्यन्तापकृष्टानामपि पिपीलिकागृध्रवराहादीनामिन्द्रियपाटवातिशयदर्शनात् । क्षोदिष्ठानामेव च केषांचित्परमाणुदर्शनमपि स्यात् । कर्म्मशक्तिविशेषात् । यथा पिपीलिकानामस्मदगोचरगन्धाणुग्रहणम् । न च कैश्चित्परमाणुरूपसूक्ष्मपदार्थप्रेक्षणे देशकालविप्रकृष्टस्य सूक्ष्मान्तरस्य सकलस्थूलस्य वा तैर्दर्शनं स्यात् । पिपीलिकादिनिदर्शनेनैव कृतोत्तरत्वात् । एवं तर्हि भवतु परमाणोर्दर्शनसम्भावना सकलक्षेत्रज्ञतत्समवेतकर्म्माशयविशेषाणां तु कथमिति चेत् । न कथंचिदिति ब्रूमः । न हि कार्यक्रिया क्षेत्रज्ञस्वरूपादिपरिज्ञानेनापि व्याप्ता कुलालादौ दृष्टा । किन्तु सम्प्रदानोपकरणवेदनद्वारेण तदाकृष्टिरिष्यते । सा च प्रस्तुतेऽशक्या । उक्तक्रमेणापि तन्मात्रवेदनस्य चरितार्थत्वात् । कर्म्मणा स्वस्याभिप्रेर्यमाणत्वेन सम्प्रदानताया दुर्वारत्वात् । यथा स्वस्मै मन्दिरं करोमीति । अन्यथाऽनेनैव व्यभिचारप्रसङ्गः । तत्र परसम्प्रदानवेदन-

---

1 ‘ सम्भवेनासकल ’ इति प. भ. पुस्तकयोः पाठ. ।

मन्तरेणापि प्रवृत्तेः । स्वमन्दिरस्य केनचित्कारणात् । अथ मन्दिरादावपि पशुपतिरेव कर्ता नास्मदादि । सकलकार्यकृद्घटनलम्पटो हि धूर्जटिः । स्वमायापि सकलं स एव विधत्ते । परसम्प्रदानेनैवायमिति । तदचतुरस्रम् । एवं कुलालादेरप्यकर्तृत्वप्रसङ्गेन दृष्टान्ताभावात्कथानुमानानुदयापत्तेः । तस्मात्स्वधनस्य सम्प्रदानतापीश्वकर्तृत्वम् । तदा स्वात्मापि सम्प्रदानमेषितव्यः । अस्तु वा पर एव सम्प्रदानम् । किन्तु तमपि सम्प्रदानव्यवहारप्रसिद्ध्या तथाविधचेष्टाविशिष्टदेहाकारं निश्चाय क्षेत्रतस्वरूपं कुठारादिना जातुमीश । उपकरणशब्दसंगृहीतान् कस्माच्चायमेतान् वा । ततो यथा कुठारस्तान भेदानविद्वान् दण्डचक्रादिवेदनेनैवोपकरणत्वस्तथानुमीयमाना अपि क्षुद्रजन्तवः स्वकीयकरणतुल्यादिज्ञानेनाप्युपकरणता भविष्यन्तीति कुतस्यमेव वेत्रनस्वरूपतदीयधर्माधर्माशयभेदपरिज्ञानम् । अथ पृथिव्यादिकर्तुरशरीरस्य कुतोऽमुष्याधर्मगतिरिति चेत् । अशरीरस्य सिद्धिसद्भावेऽपि नास्तीति कुतोऽस्याङ्गमङ्गतिचिन्ता । एकत्वे हि सिद्धे शरीरि सादिशिक्षो न सर्वकर्मणि समर्थ इति सामर्थ्यादशरीरिकर्तृसिद्धिरन्यथा स्यात् । एकत्वं च दूषयिष्युक्तम् । अस्तु वाऽयमशरीरी । तथापि न दोषः । नन्वशरीरत्वे दण्डचक्रकरणस्वानुपकरणानुपपत्तेः पारिशेष्यानुमानेन कर्माशयभेदज्ञानेनैवोपकरणज्ञाननिष्ठेति चेत् । तदसुन्दरम् । दिक्कालसमवायादेरप्युपकरणशब्दसंगृहीतस्य ज्ञानेन तज्ज्ञानमात्रस्यैव कृतार्थत्वात् । कः पुनरसौ विशेषो यत्समस्तद्रव्यस्य दिगादिज्ञानेनैवोपकरणता न धर्मादिज्ञानेनेति । उपकरणज्ञानेनैव भवितेति चेत् । तदयुक्तम् । न हि यावदुपकरणं तावत् एकत्राऽपरस्य भवतीति दृष्टम् । न दिगादिज्ञानेनैवोपकरणविधिस्तस्यस्येति निश्चयं ब्रूमो यतो विशेषपर्यनुयोगः स्यात् । किन्तूपकरणज्ञानेनेति दिगादयोऽपि वोपकरणत्वसम्भवात्ज्ञानमात्रेऽपि वोपकरण

१ 'न' इति नास्ति म पुस्तके ।

ज्ञतायाश्चरितार्थत्वान्न पारिशेष्यविश्रान्तिस्तत्रेत्युच्यते । ततो यथा परापरकर्तृषु दण्डचक्रादितुरीवेमाद्युपकरणविरहपरम्परायामपरापरैरुपकरणैर्द्धर्म्मादिभिर्वाह्यैरेवोपकरणज्ञतास्थितिरुपलब्धा तत्र, तथा किमत्राप्यस्तु, यद्वा धर्म्मादिमादायैवेति संदेह एव । यदि पुनरन्यदुपकरण न स्यात् पारिशेष्यव्याख्यानं शोभेत । तस्मादशरीरत्वेऽपि न धर्म्मादिज्ञानाकृष्टिः, किं पुनस्तदसिद्धौ । अथ मा भूदुपकरणज्ञतया धर्म्मादेर्वेदयिता, नियमेन कार्यज्ञतया भविष्यति । यतः कर्त्ता कार्यरूपस्य वेदकः, स एवेश्वरः । इत्यपि न सारम् । यतः कार्यस्य रूप स्वरूपमात्रमेवोच्यते धर्म्माधर्म्महेतुत्वविशेषितं वा । नाद्यः पक्षः । दानहिंसादिक हि कुर्वन्तो जनास्तं वेदयन्त एव स्वरूपमात्रेण । न च त ईश्वराः । नापि द्वितीयः । यतो न धर्म्माधर्महेतुत्वेन कार्यरूपनिश्चयस्तत्कारिणोऽप्यवश्यं भावी कुम्भकारवत् । न हि कुम्भकार. कुम्भोऽयं धर्महेतुरधर्महेतुर्वेति निश्चिनोति । अथास्ति क्वापि कार्ये धर्म्माधर्महेतुत्वनिश्चयः । इदं दानादिकार्यं धर्महेतुर्हिंसादिकं त्वधर्महेतुरिति प्रतीतिरिति चेत् । अस्त्येव क्वचित्कार्येऽसौ । परं नास्मादैकान्तिकी सिद्धिः । केषांचित्तन्निश्चय विनापि कार्यकरणदर्शनात् । तद्वदत्रापि कार्यकरणस्य सम्भाव्यमानत्वात् । ततो न धर्म्माधर्मयो॰ कस्यचिज्ज्ञानसम्भव. । तदभावाच्च कथं तदधिष्ठानम् । ततो यथा चेतनानधिष्ठितावपि धर्म्माधर्मौ कार्याय पर्याप्तुतस्तथा परमाण्वाद्यपि शरीराद्यारम्भे प्रभविष्यति कृतं चेतनेनाधिष्ठायकेन । ननु परमाण्वादेरचेतनस्य चेतनानधिष्ठितस्य स्वयमेव कथं प्रवृत्तिरिति चेत् । अस्तु तावदचेतनयोरपि धर्म्माधर्म्मयोश्चेतनेनानधिष्ठितयोरेव कथं स्वयं प्रवृत्तिरिति प्रतिबन्दिन्यायः । ईश्वरस्यैव तु कथ प्रवृत्तिः । नन्वसौ चेतनस्ततो बुद्धिपूर्वं प्रवर्त्स्यतीति चेत् । तर्ह्यसाविष्टानिष्टोपादानपरिवर्जनार्थं प्रवर्त्तमानोऽकृतार्थत्वेनानीश्वरः स्यात् । बुद्धिपूर्विकायाः प्रवृत्तेर्हेयोपादेयजिहासोपादित्से अप्यवश्यमङ्गीकर्त्तव्ये । यत्र ते तत्राकृतार्थत्वं यत्राकृतार्थत्वं तत्रानीश्वरत्वमिति प्रसज्यते ।

अथ स्यादेव प्रसङ्गः, यदि बुद्धिपूर्विका प्रवृत्तिर्ह्युपादेयजिहासोपादित्से, परानुजिघृक्षया प्रवृत्तिमभ्यगादिति चेत्। एवं तर्हि परार्थनामा प्रवृत्तः सन् सर्वजन्तूनां मसमेव जनयेन्न दुःखम्। धर्माधर्मसहकारिणं कर्तृत्वात्सुखं च दुःखमप्यसौ जनयतीति चेत्। न तर्हि परानुजिघृक्षयाऽसौ प्रवर्तते, अपि तु सहकारिवशात्। यत्र यत्र सन्निहितसहकारिकारणमिष्टमनिष्टं वा तत्तत्र तत्र जनयतीत्यभ्युपगमात्। परानुजिघृक्षया हि प्रवृत्ते सत्यपि दुःखहेतुसन्निधाने तन्निरस्य सुखमेव निष्पादयेत्। अथ धर्माधर्मयोः सुखदुःखफलोपभोगेन प्रक्षयादपवर्गः स्यादिति सुखं च दुःखमपि करोति। तस्य हि समाराध्याणिनो मोचयिष्यामीति परोपकारार्थैव प्रवृत्तिः। मुक्तिश्च प्राणिगणानां धर्माधर्मप्रक्षयात्। तत्प्रक्षयश्च स्वफलोपभोगमन्तरेण न सम्भवतीत्यपारकरुणाकूपारः परमेश्वरस्तथाविधयातनाशरीरादिकरणे प्रवृत्त इति चेत्। ननु धर्माधर्मावपीश्वरव्यापारनिष्पादनीयावन्यथा वा। आद्यपक्षे धर्माधर्मौ निष्पाद्य पुनस्तयोः क्षयकरणे वरमनुत्पत्तिरेव न कृता। तादृशाय पुनर्विनाशाय प्रक्षालिताशुचिमोदकपरित्यागन्यायानुस्मरणादीश्वरो न भौतादतिरिच्यते। कथं वा प्राकृतजनेष्वपि "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इत्यप्यजानानः सर्वज्ञोऽसौ। धर्माधर्मोत्पत्तावीश्वरस्य तु व्यापाराभावे तद्विनाऽपि न व्यापारः स्यात्। धर्माधर्मवत्सुखदुःखयोरपीश्वरव्यापारमन्तरेणैव कारणान्तरादुत्पत्तेः। फलोपभोगेन धर्माधर्मयोः क्षयसम्भवात्। न हीश्वरस्यापि सुखदुःखफलोत्पादनादन्यद्धर्माधर्मक्षयकर्तृत्वम्। धर्माधर्मयोरनीश्वरकार्यत्वे च सर्वो हेतुरीश्वरसिद्धयेऽभिहितोऽनैकान्तिकः स्यात्। प्राणिनां चापवर्गनिष्पादनार्थं यस्य प्रवृत्तौ

परानुग्रहेच्छयेश्वरस्य प्रवृत्तिरित्यस्य पक्षस्य खण्डनम्।

१ पुस्तके नास्ति ख पुस्तके पाठः। २ प्रमाण दम्प वैपरीत्य तस्मादि प्रत्यागत दर्शने दृष्टान्तः। ४ नन्दा द्वि १।

कथमपूर्वकर्मसंचयकर्तृत्वमिति न किंचिदेतत् । तस्मान्न बुद्धिपूर्विकेश्वरप्रवृत्तिः ।

स्वभावत्वादेवेश्वरस्य प्रवृत्तिरित्यस्य पक्षस्यान्यान्यपक्षाणां च खण्डनम् ।

स्वभावत्वादेवासौ प्रवर्त्तत इति चेत् । एवं सति सतोऽपि चैतन्यस्य प्रवृत्त्यनङ्गत्वादचेतनस्यैव स्वभावः किं नेष्यते, किमदृष्टकल्पनया । कारकशक्तिपरिज्ञानलक्षणस्यास्त्येव चैतन्यस्य प्रवृत्तिं प्रत्यङ्गभावस्तत्परिज्ञानाभावेऽधिष्ठातृव्यापारायोगात् । केवलमिदमित्थं स्वार्थं परार्थं वा करोमीति चेतनाया अभावात्स्वभावतः करोतीत्युच्यत इति चेत् । ननु तत्कारकशक्तिपरिज्ञानं कतिपयकारकशक्तिविषयं समस्तकारकशक्तिविषयं वा । आद्यकल्पनायामाधिष्ठातुरसर्वज्ञत्वम् । किं चैतन्नित्यमनित्यं वा । नित्यं चेत्, तदा कारकशक्तिपरिज्ञानस्य नित्यत्वात्सर्वदा तत्कार्यस्योत्पत्तिः स्यात् । अथ न कारकशक्तिपरिज्ञानमित्येव कार्यस्योत्पत्तिः, किन्तु यदा कारकं तेनाधिष्ठितं भवति, न च यज्ज्ञानं तदधिष्ठीयत एवेति नियमः, किन्तु ज्ञानमेवाधिष्ठीयत इति, ततो न कश्चिद्दोष । तदसत् । यतः प्रयत्नगोचरीभूयमापन्नत्वमधिष्ठितत्वमुच्यते । प्रयत्नस्यापि च नित्यत्वात्तदवस्था सदा तत्कार्योत्पत्तिः । अथानित्यं तत्, यदा हि यत्कारकं यत्कार्यमुत्पादयति तच्छक्तिपरिज्ञानमपि तदैवास्योत्पद्यते । तदप्ययुक्तम् । यतो यदि कारकं तावत्स्वयमेव कार्योत्पादनप्रागल्भ्यमभ्यस्यति तदा तच्छक्तिपरिज्ञानेन सिद्धोपस्थायिना किं नाम कर्त्तव्यम् । अथ यदा यत्कारकशक्तिगोचरं संवेदनं जायते तदा तत्कारकं कार्यं करोतीत्युच्यते । नन्वेतस्य विज्ञानस्य प्रतिनियतकारकशक्तिगोचरतायां किं नियामकम् । न खल्वेतदैन्द्रियकं मानसं वा । तद्धि यत्र यत्रेन्द्रियं मनो वा व्यापिपर्त्ति तत्र तत्र समुत्पाद्यत इति युक्तम् । ईश्वरस्य त्विन्द्रियमनसोरभावात्कथमेवं प्रतिनियमः । अथ समस्तकारकशक्तिविषयं तत्परिज्ञानम् । ननु तदपि नित्यमनित्यं वा । यद्यनित्यम् ।

तदा सर्वत्र सर्वकार्याणामिकन्वोत्पत्तिः स्यात् । तत्परिनानस्य प्रवृत्ति हेतोरक्रमत्वात् । नित्य चेन्, सर्वदा सर्वत्र सर्वकार्याणामुत्पत्तिर्भवेत् । सर्वत्र सर्वत्र सहकारिणामभावान्नेति चेत् । न तर्हि तत्परिनानस्य समस्तकारकशक्तिविषये प्रवृत्तिः । प्रवृत्तौ तु सर्वसहकारिणामपि तत्परिनानायत्तजन्मना किं न सर्वदा सर्वत्रोत्पत्तिः । सहकारिणा तत्परिनानायत्तोत्पत्तिकत्वे कार्यमपि तथैव स्यात् । तत्परिनानस्याक्रमत्वेऽपि स्वभाव एव तस्यैष भूतो येन कश्चित्किंचित्क्वचित्करोतीति चेत् । न तर्हि तत्परिनानस्य प्रवृत्तिः प्रत्यक्षभाव । प्रवृत्तेस्तत्क्रमानुविधानाभावात् । य खलु यत्कारणं तत्तस्य क्रमाक्रमावनुविधत्त । अन्यथा कारणस्याक्रमत्वेऽपि कार्यस्य क्रमेण भवत, क्रमेऽपि वा कारणस्याक्रमेण कार्यस्य भवत, स्वातन्त्र्ये तत्कार्यत्वमेव न स्यात् । तस्मात्तत्परिनानस्याक्रमत्वेऽपि क्रमेणाविभवन्ती प्रवृत्तिः स्वभावमेव कारणत्वेनामात्करोति न तत्परिनानलक्षणं चैतन्यमित्यचेतनस्यापि स्वभावत एव प्रवृत्तिरस्त्वलमधिष्ठातृकल्पनया । नन्वधिष्ठातारमन्तरेणवाचेतनस्य प्रवृत्तौ तन्वादेरप्यनधिष्ठितस्यैव किं न प्रवृत्तिः स्यादिति चेत् । न । तस्यानधिष्ठितस्यैव प्रवृत्तौ विष्टिकर्मकरादेरपि प्रवृत्तिस्तथैव किं न भवेत् । अनधिष्ठितस्याप्रवृत्तिरिति चेत् । तन्वादेरप्येवमस्तु । तन्वादिषु क्षीणादेरप्यनधिष्ठितस्यैव किं नाप्रवृत्तिः स्यादिति चेत् । तथाऽपि विष्टिकरादिवत्कुम्भकारेश्वरादेरप्यनधिष्ठितस्याप्रवृत्तिः किं न प्रसज्यते । कुम्भकारादेरनधिष्ठितस्यैव प्रवृत्त्युपलम्भानाधिष्ठितस्य प्रवृत्तिरिति । तत्किमन्यत्राधिष्ठातृतया प्रवृत्तिरुपलब्धा । येनानधिष्ठितस्य क्षीणादेरप्रवृत्तिः समर्थ्यते । प्रत्यक्षेणानुपलभ्यमानाऽप्यधिष्ठितस्य वानादेः प्रवृत्तिरन्यादिसाधर्म्यणाचेतनत्वहेतुनाऽनुमीयत इति चेत् । तथा कुम्भकारेश्वरादेरप्यधिष्ठातृतया प्रवृत्तिः प्रत्यक्षताऽपि विष्टिकर्मकरादिसाधर्म्याच्चेतनत्वहेतुनाऽनुमीयत इति किं नेष्यते । चेतनत्वाचेतनत्वहेतोर्विशेषाभावात् । न विशेषाभावः परस्य प्रत्यक्षबाधितत्वेन

चेतनत्वाख्यस्य हेतोः कालात्ययापदिष्टत्वादिति चेत्। न। कालात्ययापदिष्टत्वस्याचेतनत्वसाधनेऽपि समानत्वात्। बीजादावप्यधिष्ठातृसद्भावस्य प्रत्यक्षबाधितत्वात्। बीजादावधिष्ठातुरतीन्द्रियत्वात्प्रत्यक्षेणाबाधनमिति चेत्। तदन्यत्रापि समानम्। कुम्भकारेश्वरादावप्यधिष्ठातुरतीन्द्रियत्वात्। अप्रेरितः करोमीत्यनुभवः। कुम्भकारादेरधिष्ठातुर्बाधक इति चेत्। न। अदृष्टवदज्ञातस्यापि प्रेरकस्य प्रेरकत्वसम्भवात्। कुतोऽन्यथा पश्वादीनां प्रेरकत्वेनादृष्टमजानता प्रवृत्तिः। तस्मादचेतनत्वहेतोर्बीजादावधिष्ठातृसद्भावस्याप्रत्यक्षस्यापि सिद्धिमिच्छता विष्टिकरादि[1]व्यतिरिक्तस्याशेषस्यापि चेतनवर्गस्यापि, अधिष्ठातृसद्भावसिद्धिश्चेतनत्वहेतोरिष्यतामविशेषात्। एवं चापरापराधिष्ठातृसद्भावकल्पनयाऽनवस्थानान्न बहुष्वपि युगसहस्रेषु कार्योत्पत्तिः स्यात्। ननु स्वतोऽचेतनस्य देशकालनियमेन प्रवृत्त्ययोगादधिष्ठितत्वप्रयोजकादचेतनत्वहेतोर्बीजादावधिष्ठातृसद्भावसिद्धिर्युक्ता। न तु चेतनत्वहेतोः कुम्भकारेश्वरादौ। चेतनस्याधिष्ठात्रभावेऽपि देशकालनियमेन प्रवृत्तिसद्भावादिति चेत्। तदसत्। अचेतनस्याधिष्ठातारमन्तरेणैव प्रवृत्तिनियमस्य प्रागेव समर्थितत्वादचेतनत्वस्याप्यधिष्ठातृसद्भावप्रयोजकत्वाभावात्। अतः क्वचिदचेतने तन्वादावधिष्ठितत्वाचेतनत्वयोः सहभावो दृष्ट इत्यचेतनत्वस्य भवता गमकत्वमङ्गीकर्त्तव्यम्। तच्च क्वचित्सहभावदर्शनं चेतनत्वाधिष्ठितत्वयोरप्यस्तीति चेत्, तस्यापि गमकत्वमभ्युपेयम्। नो चेत्, अन्यत्रापि नोपेयम्। यतो यत्राधिष्ठातोपलभ्यते तत्रैवाऽसावस्ति नान्यत्रेत्येतदेव ज्यायः। एतेन तदप्यपास्तं यदवाचि कादाचित्कविचित्रसहकारिलाभेनेत्यादि धर्म्माधर्म्मौ चेतनाधिष्ठितौ प्रवर्त्तेते अचेतनत्वादित्यादि च। किं च धर्म्माधर्मयोरचेतनत्वं सर्वथा स्यात्कथञ्चिद्वा। आद्यकल्पे प्रतिवाद्यसिद्धो हेतुः। चेतनादात्मनः कथञ्चिदभिन्नयोर्धर्म्माधर्म्मयोरपि चेतनत्वेन जैनैः स्वीकरणात्। द्वितीयपक्षे तु वाद्यसिद्धिः। कथञ्चिदचेतनत्वस्य धर्म्माधर्म्मयोर्भवतामसिद्धेः।

---

१ 'विष्टिकर्मकरादि' इति भ. पुस्तके पाठः।

सितरश्मिकज्ञानचूलसिद्धो सनयो य पुनरुच्यत प्रमाणम् ।
ननु तस्य सगे प्रमाणमात्र परत किं यदि वा स्वतो नु नो था ॥४११॥

निक्षेपे प्राचि सवादादिमवाद्व्यपायत ।
आप्तेन गदितत्वाद्वा स्यात्प्रामाण्यविनिर्णय ॥ ४१२ ॥

सवादोऽस्ति न तावदत्र निखिलप्रोक्तोपपत्तिनया-
ऽनेकत्र क्वचिदस्ति दृष्टविषये तस्येष चेत्किं तत ।
नह्येक न समस्ति सत्यमुदित लोकायतानामपि
ग्रन्थे किं च ततो यतोऽपि स भवेत्मस्य समन्तादपि ॥४१३॥

निसवादामात्र पुनरिह कथ निर्णयपद
प्रसर्पेत् त्रयाश्चेत् क्वचन तदनालोकनवशात् ।
त्वदीय तत्रत्वाद्व्यभिचरति निश्चय्य तु न त-
द्विना विसवादान् प्रभवति सुविज्ञातुमपर ॥ ४१४ ॥

आप्तेन गदितत्वात्तु तत्प्रामाण्यस्य निश्चये ।
परस्पराश्रयाभिख्याद्दोषान्मोक्ष कथ भवेत् ॥ ४१५ ॥

आप्तसिद्धा हि तत्प्रोक्तशब्दस्य स्यात्प्रमाणता ।
सत्या च तस्यामाप्तस्य सिद्धि स्यादपकल्मषा ॥ ४१६ ॥

न स्वतस्तु समयप्रमाणतामस्मपादतनया प्रपेदिरे ।
आगमादपि पुरादिमाघन धीमता तदुपपद्यते कथम् ॥ ४१७ ॥

एव च—

कायत्वादिविचित्रयुक्तिपटलीकोदण्डयष्टि स्फुट
नैव सम्प्रति दुष्टदूषणगुणैर्भिना वभञ्जे क्षणात् ॥
तस्मादस्तु कथ समस्तनगता निरन्तरनैकाग्रधी
श्रद्धापामरणो भवेन्मिलनिति सत्य यदृच्छात् ॥ ४१८ ॥

केचित्सन्ते बहिरेव तावत् कोचित्पुनमध्यममाप्नुवन्ति ॥
दुग्धोदराभस्थ मनोस्म कश्चिद्वाताधिमेन रसमाविवेद ॥४१९॥

अत्र कापिलः कश्चिदाह ।

सेश्वरसांख्यमतमुपन्यस्य तत्खण्डनं विस्तरतः ।

कापिले दर्शनेऽद्यापि प्रतिष्ठामधितिष्ठति ॥
प्रवादिनः पराकर्तुमीश्वरः कथमीश्वराः ॥४२०॥

तथा चाह पतञ्जलिः, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति । तत्र च 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' । अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । दृक्शक्तिरात्मा दर्शनशक्तिर्बुद्धिस्तयोरेकात्मतैव या मोहादभानस्य स्मिता । सुखानुशायी रागः । सुखनिर्बन्धलक्षणश्चित्तधर्मोपरागः । दुःखानुशायी द्वेषः । दुःखजनके पदार्थे हेयत्वनिबन्धो द्वेषः प्रसिद्धः । स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः । स्वरसवाही कारणनिरपेक्ष एव न केवलमविदुषो विदुषोऽपि तथा तेनात्मना रूढोऽभिनिवेशः । यथा जन्मनः प्रभृति प्राणिनां मरणत्रास इति । कर्म्माणि शुभाशुभानि । तद्विपाको जात्यायुर्भोगाः । आशया नानाविधास्तदनुगुणाः संस्काराः । तैरपरामृष्टोऽमलिनीकृतो यः स ईश्वर इति । न चेत्थं तदपरामृष्टताविशेषे मुक्तात्मनामीश्वरत्वं प्रसज्यतेत्यभिधातव्यम् । तेषां सर्वदैव बन्धेनापरामृष्टताया असम्भवात् । बन्धत्रयस्य प्राकृतिकवैकारिकदाक्षिणसंज्ञस्य मुक्तेः पूर्वं तेषां सद्भावात् । तत्र प्रकृतावात्मनो ज्ञानाद्ये प्रकृतिमुपासते तेषां प्राकृतिको बन्धः । यतः पुराणे प्रकृतिलयान्प्रत्युच्यते, " पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः " इति । वैकारिको बन्धस्तेषां ये विकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते । यान्प्रतीदमुच्यते " दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥ १ ॥ बौद्धाः शतं सहस्राणि तिष्ठन्ति विगतज्वराः " इतीष्टापूर्त्ते दाक्षिणः । "पुरुषतत्त्वानभिज्ञो हीष्टापूर्त्तकारी कामोपहतमना बध्यत"

---

१ पातञ्जलदर्शने १।२४ २ पा. द. २-३.

इति । अनेन बन्धत्रयेण सकलकालमनाकलित कलानिधिकलावचूल एव भगवान् । तत्परे त्वात्मनो बन्धत्रयमिदं विवेकज्ञानेन समूलमुन्मूल्य मुक्ता सम्पद्यन्ते । नित्यमुक्तस्य चेश्वरस्य न पूर्वा बन्धकोटिरस्ति । यथा संसारिमुक्तात्मनाम् । नाप्युत्तरा । यथा प्रकृतिलीनतत्त्वज्ञानानां योगिनाम् । ते हि मुक्तिं प्राप्यापि पुनर्बन्धभाजो जायन्ते । ऐश्वर्ययोगाद्वाऽयमीश्वर । तच्चैश्वर्यमष्टप्रकारम् । तद्यथा, अणिमा, लघिमा, महिमा, प्राप्ति , प्राकाम्य, वशित्व, ईशित्व, यत्र कामावसायित्व चेति । तत्राणिमा भवत्यणु । यत सर्वभूतैरदृश्य सन्, सर्वत्र लोके सचरति । लघिमा लघुर्भवति । यत सूर्यमरीचीनालम्ब्य सूर्यलोक याति । महिमा महान् भवति । यस्मादल्पोऽपि नागनगनगरगगनपरिमाण सम्पद्यते । प्राप्तियत सर्वे भावा सन्निहिता भवन्ति । तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम् । प्राकाम्यमिच्छानभिघात । यतो भूमावुन्मज्जति निमज्जति च यथोदके । वशित्व यत पृथिव्यादिषु भूतेषु गोघटादिषु च भौतिकेषु वशी स्वतन्त्रो भवति । ईशित्व यस्माद्भूतभौतिकेषु प्रभवस्थितिव्ययानामीष्टे । यत्र कामावसायित्व यत सत्यसकल्पता भवति, यथा ह्यस्य सकल्पो भवति भूतेषु तथैव भूतानि भवन्ति । अन्येषा हि निश्चया निश्चेतव्यमनुविधीयन्तेऽस्य तु निश्चेतव्या पदार्था निश्चयमिति । प्रवृत्तिश्चास्य सकलससारिजनानुग्रहार्थमिति । अयं हि कल्पप्रलयमहाप्रलयेषु सभग्न जगदुद्धरिष्यामीति प्रतिज्ञावानवतिष्ठते । अय च योगिभिर्वाचकेन प्रणवेन जप्यमानस्तेभ्योऽभिमत फल प्रयच्छति । कालेनानवच्छेदाद्याचार्याणां पूर्वेषामपि कपिलमहर्षिप्रभृतीना गुरु । ते हि कल्पमहाकल्पादिकालेनावच्छिद्यन्ते न त्वीश्वर इति ।

नि शेषा य प्रतिकलमिमा भूर्भुव स्वस्त्रिलोकी-
मेक सम्यकलयति निरा शाश्वतैकस्वभाव ॥ २

---

१ अनेन च इति प म पुस्तकयो पाठ ।

सिद्धस्तस्मादणिमलघिमाद्यग्र्यैश्वर्यशाली
कर्म्मक्लेशैर्न खलु कलितः सोऽत्र देवः कपाली ॥ ४२१ ॥
स्वप्नक्रियाविरचनप्रगुणाशयेन
श्रद्धाजडेन भवता गदितं यदत्र ॥
किंचित्सखे कपिलदर्शनबद्धबुद्धे
तद्दूष्यमाणमधुना शृणु सावधान ॥ ४२२ ॥

तथा हि यत्तावदवादि क्लेशेत्यादि तन्नोपपत्तिपथमवतरति । यतः क्लेशादिभिरपरामृष्टत्वमात्रं तस्य स्वरूपं तस्मिन्सत्यशेषज्ञत्वं वा । प्रथमपक्षे मुक्त एवासौ स्यात्तैरपरामृष्टत्वात्तदन्यमुक्तवत् । न पुनरीश्वरः । अन्यथा तदन्यमुक्तानामपीश्वरत्वप्रसक्तिः । सर्वदा तैरपरामृष्टत्वे सत्यशेषज्ञत्वं तस्य स्वरूपं वक्तव्यम् । तत् कुतः सिद्धम् । अशेषकर्तृत्वादैश्वर्याश्रयत्वाद्वा । प्रथमपक्षे स किं स्वतन्त्रः सर्वं कार्यं कुर्यात्, प्रकृतिपरतन्त्रो वा । यदि स्वतन्त्रः, तदा नैयायिकाद्यभ्युपगतगिरीशान्न विशिष्यत इति तद्दूषणेनैव दुष्टताऽस्य प्रतिपत्तव्या । अथ प्रकृतिपरतन्त्रः, तदपि न सुसूत्रम् । प्रकृतेः स्वरूपत एवासिद्धेरसिद्धिश्चास्याः पुरतः पराकरिष्यमाणत्वात् । प्रकृतिपरतन्त्रता च त्रिलोचनस्याऽतिशयाधानान्मिलित्वैककार्यकारित्वाद्वा स्यात् । न प्रथमपक्षः श्रेयान् । सर्वथा नित्यत्वेनाविकारिणः शङ्करस्य प्रकृत्यातिशयाधानासम्भवात् । द्वितीयपक्षोऽपि न ज्यायान् । सकलकार्याणां यौगपद्येनोत्पत्तिप्रसक्तेः । अप्रतिहतसामर्थ्यस्य शङ्करप्रधानाख्यकारणयुग्मस्य नित्यसन्निहितत्वेनाविकलकारणत्वात्तेषाम् । अथ यद्यपि कारणयुग्ममेतन्नित्यसन्निहितं तथापि सकलकार्याणां न यौगपद्येनोत्पत्तिः यस्मादीश्वरस्य प्रधानगतास्त्रयो गुणाः सहकारिणः सन्ति रजःप्रभृतयः । तेषां च क्रमेणोद्भूतवृत्तित्वात्कार्येष्वपि क्रमो भवति । तथा हि यदोद्भूतवृत्तिना रजसा युक्तो भवति भर्गस्तदा सर्गहेतुः कार्याणाम् । यदा तथाविधेन सत्त्वेन संसृज्यतेऽसौ तदा स्थितिहेतुस्तेषाम् । यदा पुनस्तादृशेन तमसा

समायुक्तोऽथ तदा प्रलयहेतुस्तेषामिति चेत्। तदप्ययुक्तम्। यतः प्रकृतीश्वरयोः सृष्टिस्थितिप्रलयानां मध्येऽन्यतमोत्पादने शक्तिरस्ति न वा। अस्ति चेत्, तर्हि सृष्टिसमयेऽपि स्थितिप्रलयप्रसक्तिरविकलकारणतया घटेत। एवं स्थितिकालेऽपि सृष्टिप्रलययोः प्रलयकालेऽपि सृष्टिस्थित्योः प्रसक्तिः। न चैतद्युक्तम्। प्रतीतिविरोधात्। अथ नास्ति सामर्थ्यं तदेकमेव सृष्ट्यादीनां मध्ये कार्यं सदा स्यात्। यज्जनने तयोः सामर्थ्यमस्ति, नापरं तज्जनने तयोः सामर्थ्यासम्भवात्। अविकारिणोश्चानयोः पुनः सामर्थ्योत्पत्तिविरोधात्। अन्यथा नित्यैकस्वरूपताव्याहतिः। उद्भूतवृत्तिश्च रजःसत्त्वतमसां नित्यमनित्यं वा भवेत्। न तावन्नित्यम्, कादाचित्कत्वात्। सृष्ट्यादियौगपद्यप्रसक्तेश्च। अथाऽनित्यम्, तर्हि कुतो जायेत। प्रकृतीश्वरादेवाऽन्यतो वा स्वातन्त्र्येण वा। प्रथमपक्षे सदाऽप्यस्य सद्भावप्रसङ्गः। प्रकृतीश्वराख्यस्य हेतोः शाश्वतिकतया सदा सन्निहितत्वात्। अथान्यतः, तदपि स्वसिद्धान्तबाधाविधायकम्, प्रकृतीश्वरव्यतिरेकेणापरकारणस्य भवताऽनभ्युपगमात्। तृतीयपक्षे तु देशकालनियमेनास्याविर्भावविरोधः। स्वातन्त्र्येण भवनस्य तन्नियमानुपपत्तेः। स्वभावान्तरायत्तप्रवृत्तयो हि भावाः कादाचित्काः स्युस्तद्भावाभावप्रतिनिबद्धत्वात्सत्त्वासत्त्वयोः। नाऽन्ये। तेषामपेक्षणीयस्य कस्यचिदभावात्। अपेक्षणीयसद्भावे वा स्वातन्त्र्येणोत्पत्तिविरोधात्। तत्र प्रकृतिपरतन्त्रोऽपि स्यात् सर्वकार्यकारी। कर्तृत्वाभ्युपगमे चाऽस्य "अकर्त्ता निर्गुणः शुद्धः" इत्यादेरात्मलक्षणस्यानुपपत्तिः। अथाऽन्यात्मनामेवैतल्लक्षणं नेश्वरस्य, तस्य तेभ्यो विशिष्टत्वादेवेत्ययमदोष इति। नन्वेवं शुद्धत्वादेरपीश्वरस्वरूपताभावप्रसङ्गान्न तस्य तेभ्यो विशिष्टत्वं स्यात्। ततः सर्वकर्तृत्वस्य त्रिलोचने विचार्यमाणस्य कथञ्चिदप्यसिद्धेर्नातस्तस्य सर्वज्ञत्वसिद्धिः। नाप्यैश्वर्याश्रयत्वात्। ऐश्वर्यं हि तत्र स्वाभाविकमाहोस्विदागन्तुकं वा स्यात्। न तावत्स्वाभाविकम्, बुद्धिधर्मतया सांख्यै

स्तस्याभ्युपगमात् । चैतन्यमेव हि तैरात्मनि स्वाभाविकं रूपमभ्युपगतम् । अथ प्रकृतिकृतम्, तथा हि यदा प्रकृतिर्बुद्धिलक्षणेन विकारेण परिणमते तदा बुद्ध्यवस्थाविशेषा धर्मज्ञानैश्वर्यादयः प्रादुर्भवन्ति इति । एतदपि नोपपत्तिमत् । इत्थमीश्वरस्य त्वयैवैश्वर्याभावप्रतिपादनात् । न खलु बुद्धिपरिणामस्यैश्वर्यस्यासम्भवे ततोऽर्थान्तरभूतस्य भूतपतेस्तद्युक्तम् । अन्यात्मनोऽपि तत्प्रसक्तेः । अथ प्रमथाधिपतेर्बुद्ध्या सह [1]सम्बन्धात्तस्यैव तन्नान्यस्येत्युच्यते । ननु कोऽयमीश्वरेण साकं बुद्धेः सम्बन्धः, समवायः संयोगादिरीश्वरोद्देशेन प्रवृत्तिमात्रं वा । न तावत्समवायः । अन्यधर्मस्यान्यत्रानुपपत्तेः । यो यद्धर्मः स ततोऽन्यत्र न समवैति । यथा चिद्रूपता पुरुषस्य । प्रकृतिधर्मश्च बुद्धिः । तस्मात्ततोऽर्थान्तरशम्भौ न समवैतीति । न च स्फटिकादिसमवेतेन शोणिमादिधर्मेणानैकान्तः । जपापुष्पसन्निधाने स्फटिकादेरेव तथा परिणमनात् । एतच्च प्रतिबिम्बोदयविचारावसरे सविस्तरमुपपादयिष्यते । आत्मनोऽपि बुद्धिरूपतया परिणते प्रकृतिसन्निधाने तथा परिणामाङ्गीकारे चिच्छक्तिरपरिणामिनी, अप्रतिसंक्रमेत्यभ्युपगमविरोधः । तन्नेश्वरेण सह बुद्धेः समवायलक्षणः सम्बन्धो युज्यते । नापि संयोगस्वरूपः । बुद्धेरद्रव्यत्वात् । अतिप्रसङ्गाच्च । सर्वैरप्यात्मभिर्नित्यव्यापिभिर्बुद्धेः संयोगो विद्यत एव । एतेन संयुक्तसमवायादिरपि प्रतिव्यूढः । असम्भवस्यातिप्रसङ्गस्यात्राप्यविशेषात् । अथेश्वरोद्देशेन प्रवृत्तिमात्रमेवास्यास्तेन सम्बन्धः । तदप्यसाधु । ईश्वरोद्देशेनास्याः प्रवृत्तेरसम्भवात् । पुरुषार्थकर्त्तव्यतावशेन हि प्रकृतेः प्रवर्त्तमानाया बुद्ध्यादयो विकारा व्यक्तिमासादयन्ति । न चेश्वरस्य कश्चित्पुरुषार्थः कर्त्तव्योऽस्ति । नित्यमुक्तत्वेनास्य कृतकृत्यत्वात् । कथं तमुद्दिश्य बुद्धिः प्रवर्त्तेत । अप्रवृत्ताया चास्याः कथं तस्यैश्वर्यसम्भवः । तन्नैश्वर्याश्रयत्वादपि तस्य सर्वज्ञत्वसिद्धिः । एवं च, ऐश्वर्ययोगाच्चायमीश्वर इत्यादिकं नन्वीश्वर इत्यन्तं सर्वं प्रत्युक्तमवगन्तव्यमिति ।

1 'सबन्धसद्भावात्' इति प. भ. पुस्तकयोः पाठः ।

भो भोः भारत्यास्तन्यमियता विस्तरेण व्यपास्त-
मेव सम्यगमुनदभिहितं पूर्वपक्षप्रबन्धः ॥
एवं चेनाः सितकरकलामौलिससिद्धिवार्ता
कीर्तेरन्तर्झटिति भवता पद्वतामेव याता ॥ ४२३ ॥ २६॥

विक्षिप्य तीर्थिकमतान्यखिलानि युक्त्या
सर्वज्ञसाधनमिदं विहितं यदित्थम् ॥
तद्युक्तमेव कवले पुनरस्य भुक्तौ
सार्वज्ञमेति घटना न कथंचनापि ॥ ४२४ ॥

इति नुगाणमाशाम्बर प्रत्याह—

**न च कवलाहारवत्त्वेन तस्याऽसर्वज्ञत्वं, कवलाहार-सर्वज्ञत्वयोरविरोधादिति ॥ २७ ॥**

तस्याऽर्हतः । शेषमुत्तानार्थम् ।

नन्वविरोधादित्यसिद्धम् । तयोर्विरोधसाधकस्यानुमानस्य सद्भावात् ।

(छद्मस्थादिविजातीयत्वेन केवलेन कवलाहारनिषेध इति दिगम्बरपूर्वपक्षस्य विस्तरेण उपपादनम् ।)

तथा हि विवादास्पदं केवली कवलाहारवान् भवति छद्मस्थादिविजातीयत्वात् । यः पुनः कवलाहारवान्स न च्छद्मस्थादिविजातीयो यथास्मदादिः । छद्मस्थादिविजातीयश्च केवली तस्मान्न कवलाहारवान् भवतीति । न चात्र हेतोरसिद्धत्वमुद्भावनीयम् । वादिप्रतिवादिभ्यां छद्मस्थादिविजातीयत्वस्य केवलिनि प्रतिपन्नत्वात् । अन्यथा छद्मस्थ इव केवलिन्यप्यकेवलित्वप्रसक्तेः । न च केवली कवलाहारवान्, देहित्वादस्मदादिवदित्यनुमानाद्बाधितत्वं पक्षस्य शङ्कनीयम् । देहित्वस्य त्रिदशादिभिर्व्यभिचारात् । ते हि देहिनोऽथ च कवलाहारवन्तो न भवन्ति । कवलाहारविलक्षणाहारवत्त्वेन तेषां परमागमे प्रतिपादनात् । ननु केवलिनः कवलाहारवत्त्वं यदि नाभ्युपेयते तदा

* दिगम्बरम् ।

कथं तस्य शरीरे औदारिकत्वव्यपदेशः स्यादित्यपि नाशङ्कनीयम् । न खलु तत्र कवलाहारनिबन्धनमौदारिकव्यपदेशं प्रतिजानते सन्तः । किं तर्हि प्रधानपुद्गलारब्धत्वनिबन्धनम् । उदारैः सर्वपुद्गलराशिमध्यप्रधानैः पुद्गलैरारब्धमौदारिकमिति व्युत्पत्तेः । यदपि "सुहुमिगिन्दियपमहं जावसजोगिकेवलित्ति सव्वे आहारगा जीवा" इत्यनेन वचनेनैकेन्द्रियप्रभृतीनां सयोगिपर्यवसानानां प्राणिनामाहारवत्त्वेन सूत्रे प्रतिपादनात्कवलाहारित्वं केवलिनः सितवाससः प्रतिपेदिरे । तदपि सूत्रार्थानवबोधविजृम्भितम् । तत्र हि सूत्रे भगवतः केवलिन एकेन्द्रियादिभिः सह निर्देशान्निरन्तराहारोपदेशाच्च शरीरप्रायोग्यपुद्गलग्रहणमात्रमाहारत्वेन विवक्षितम् । अन्यथा निरन्तराहारः कवलाहारेण भगवान्केवली भवेत् । न चैतदिष्टं भवद्भिरपि । अथैकेन्द्रियादिभिः सह निर्देशेऽपि निरन्तराहारोपदेशेऽपि च सूत्रे यथासम्भवमाहारवत्त्वव्यवस्थिते केवलिनः कवलाहारोऽपि कादाचित्को व्यवस्थाप्यते । इतरथाऽस्मदादेरिव तस्य दीर्घकालं देहस्थितेरभावप्रसङ्गादित्यभिधीयते । तदपि न परीक्षाक्षमम् । एवं हि सर्वज्ञतानिश्चयोऽपि तत्र दुर्लभः स्यात् । कावलिकाहारोपलब्धशरीरेऽस्मदादावसर्वज्ञत्वस्यैवोपलम्भात् । समाकर्ण्यते च समये कावलिकाहारं विनाऽप्यौदारिकदेहावस्थानातिशयः प्रथमतीर्थाधिनाथप्रमुखाणाम् । तथा हि ।

> श्रीनाभेयजिनेश्वरः किल पुरा पीनांसपीठीं लुठन्
> कालिन्दीजलनीलकुन्तलजटाजालं सलीलं वहन् ॥

---

१ न शङ्कनीयम् । २ तत्त्वार्थ अ. २ सू. २.

३ चैत्रबहुलस्य अष्टमीदिवसे दिवसस्य पश्चिमे भागे सुदर्शनायां नाम शिबिकायां देवमनुजासुरसहितया पर्षदा-जनश्रेण्या समनुगम्यमानमार्गः यावत् विनितायाः नगर्या मध्यभागेन निर्गच्छति निर्गत्य यत्रैव सिद्धार्थवनमुद्यानं यत्रैव अशोकनामा प्रधानवृक्षः तत्रैवोपागच्छति । उपागत्य अशोकवृक्षस्याधः यावदात्मनैव चतुर्मौष्टिकं लोचं करोति । चतसृभिर्मुष्टिभिर्लोचे कृते सति अवशिष्टां एकां मुष्टिं सुवर्णवर्णयोः स्कन्धयोरुपरि लुठन्तीं कनककलशोपरि विराजमानां नीलकमलमालामिव विलोक्य हृष्टचित्तस्य शक्रस्य आग्रहेण रक्षितवान् ।

न च कावलिकाहारविरहे औदारिकशरीरस्थितिकालेयत्तानियमप्रतिपादकं प्रमाणमस्तीत्येकेन्द्रियाद्याहारप्रतिपादकसूत्रभेदकरणनिमित्तासम्भवाद्यथाश्रुतमेव सूत्रार्थपरिकल्पनमस्तु । किं च केवली कवलाहारं भुञ्जानः किं बुभुक्षया, उत शरीरस्थित्यन्यथानुपपत्त्या, आहोस्वित्स्वभावत एव भुङ्क्ते ।

विपक्षपक्षप्रसरप्रशान्त्यै त्रयः स्थिता व्याहतशक्तयोऽमी ॥
त्रिनेत्रनेत्रत्रितयेन साम्यं समाश्रयन्तः प्रभवन्ति पक्षाः ॥ ४२७ ॥

न तावत्प्रथमः पक्षः । बुभुक्षाया दुःखस्वरूपत्वाद् दुःखहेतुदोषकदम्बकापाये केवलिन्यसम्भवात् । दोषाणामनपाये वा दोषजन्यस्य दुःखराशेः सम्भवे आत्यन्तिकसौख्यस्यानुपपत्तिस्तत्र स्यात् । न क्षुत्समानाऽन्या वेदना शरीरे सम्भवति, यतः ।

---

शल्लकीपल्लवभ्रान्त्या तत्पाणिचरणं मुहुः ।
कर्षन्तः कर्तुमनहा वैलक्ष्यं कारिणो ययुः ॥ ६९ ॥
उत्कण्टकैः करालाभिर्जिह्वाभिः करपत्रवत् ।
विश्वस्तास्तं लिहन्ति स्माननाश्चमरीगणाः ॥ ७० ॥
लताभिः शतशाखाभिः प्रसरन्तीभिरुच्चकैः ।
मुरजश्चर्मवल्लीभिरिव सोऽवेष्ट्यताभितः ॥ ७१ ॥
परितस्तं शरस्तम्बाः प्ररोहन्ति स्म सन्ततः ।
पूर्वस्नेहवशायातशराधशराविव ॥ ७२ ॥
ऊषुः पादयोस्तस्य प्रावृट्कर्दमितयोः ।
चलच्छतपदीगर्भा अदभ्रा दर्भसूचयः ॥ ७३ ॥
प्रचक्रिरे कुलायाश्च तद्देहे वल्लिसंकुले ।
परस्पराविरोधेन ते श्येनचटकादयः ॥ ७४ ॥
अरण्ये केकिकेकातत्रस्तान्नमहोरगाः ॥
पल्लीवितानगहने समारोहन्महत्तरः ॥ ७५ ॥
शरीरसंधिरन्ध्रैर्लम्बमानैर्भुजङ्गमैः ॥
बभौ बाहुबलिर्बाहुसहस्रमिव धारयन् ॥ ७६ ॥
पादपर्यन्तवल्मीकविनिर्यातैर्महोरगैः ॥
पादयोर्वेष्टयाञ्चक्रे सपादकटकैरिव ॥ ७७ ॥

गुणगणकथास्तावत्तावद्विलासकुतूहल
स्मरपरिचयस्तावत्तावत्त्रपापरिशीलनम् ॥
वचनरचनास्तावत्तावन्मतिश्च विजृम्भते
जठरपिठरी सेय यावत्कथञ्चन पूरिता ॥ ४२८ ॥

अथ शरीरस्थित्यन्यथानुपपत्त्येति द्वितीय पक्ष । सोऽपि न वर्य । अनन्तवीर्यस्य भगवत केवलिन कावलिकाहारमन्तरेणाऽपि शरीरस्थितेरुपपद्यमानत्वात् । अपि च ।

ये शक्ता कुलशैलकाननसरित्प्राकाररत्नाकर
सकीर्णामपि काश्यपीं रचयितु रम्यातपत्रप्रभाम् ॥
मेरु दण्डनिभ तथाऽत्र सुसखे तेषा स्वकीयस्थितौ
शक्तिर्नास्ति विनैव भुक्तिमिति नश्चित्रीयते मानसम्॥४२९॥

अथ स्वभावत एव भुक्ते इति तृतीय पक्ष । सोऽपि न प्रशस्त । प्रस्तुतभुक्तिमुक्तस्वभावकल्पनयैव दोषाभावात् ।

कवलभुक्तिरिय जिनकुञ्जरे श्रयति मानविरोधधुरा तत ॥
कथममी विकला कलिनाऽऽहतास्तदिह शुभ्रपटाङ्कितमूर्धय ॥४३०॥
कवलभुक्तिविपाटनलम्पट किमपि स्फुटपाटवमीरितम् ॥
तत सखे क्षणमेकमिद तु न किमपि पश्य तदुद्धरणोत्सुकम् ॥४३१॥

तथा हि । यच्चात्र कवलाहारसर्वज्ञत्वयोर्विरोधप्रतिपत्त्यर्थं छद्मस्थाद्विलक्षणीयत्वादित्यादिसाधनमुपन्यस्तम् । तत्रेद

पूर्वोक्तपूर्वपक्षस्य खण्डन विस्तरत ।

पर्यनुयुज्यते । किं सर्वथा छद्मस्थाद्विलक्षणीयत्व केवलिन सम्मतमाहोस्वित्कथञ्चित् । आद्यकल्पनाया वादिप्रतिवादिनो स्वरूपासिद्धो हेतु । पञ्चेन्द्रियत्वमनुष्यत्वपुरुषत्वादिभिर्धर्मै छद्मस्थेन सह सजातीयत्वस्याप्युभाभ्या भगवति सम्प्रतिपन्नत्वात् । द्वितीयकल्पनाया पुनरनैकान्तिक । विरहेऽप्यस्मदादौ

१ अस्य तुलना सभाष्यतत्त्वार्थाधिगमसूत्रे पृ ४४ टि २

कवलाहारवति कथञ्चिच्छद्मस्थाद्विजातीयत्वस्य हेतोर्वर्त्तमानत्वात् । न खल्वस्मदादिच्छद्मस्थेन सह सर्वथा सजातीयः । प्रतीतिविरोधादैक्यापत्तेश्च । अथ छद्मस्थादछद्मस्थत्वेनैव धर्मे कथञ्चिद्विजातीयत्वं केवलिनः कथ्यते । ततो नानैकान्तोऽस्मदादावछद्मस्थत्वेन विजातीयत्वस्य हेतोरवृत्तेरिति चेत् । तदचतुरस्रमेव । सन्दिग्धानैकान्तिकत्वकलङ्कापत्तेः । प्रस्तुतहेतोः कवलाहारेण सार्धं विरोधासिद्धेः । न खलु कवलाहारभावाभावौ छद्मस्थत्वाछद्मस्थत्वप्रयुक्तौ । रसनेन्द्रियौदारिकशरीरादिपर्याप्तिवेद्यतैजसादिभावाभावप्रयुक्तत्वात्तयोरस्मदादौ सिद्धेषु च तथा दर्शनादिति प्रसाधयिष्यते । यच्च केवली कवलाहारवान् देहित्वादस्मदादिवदित्यनुमानमाशङ्क्य दूषितं तदनभ्युपगतोपालम्भमात्रम् । यतो न देहित्वमात्रं केवलिनि कवलाहारवत्त्वकारणमभ्युपेयते, किं तर्हि विशिष्टपर्याप्त्यादिसामग्री । तस्याश्च ततोऽव्याप्त्यावृत्तेः । कथं तत्र कवलाहारवत्त्वाभावः सम्भवी । यदपि न्यगादि न खलु तत्र कवलाहारनिबन्धनमित्यादि । तत्रौदारिकव्यपदेशस्य भगवत्तनौ प्रधानपुद्गलारब्धत्वनिबन्धनत्वेऽपि न प्रस्तुतभुक्तेर्भगवत्यभावसिद्धिः । स्वकारणनिबन्धनायास्तस्यास्तत्र निवारयितुमशक्यत्वात् । यदप्येकेन्द्रियादिभिः सह निर्देशान्निरन्तराहारोपदेशाच्चेत्यवाचि । तदप्यनल्पमात्सर्यावेशविस्फुरितमाशाम्बराणाम् । यथा खल्वस्मदादीनामेकेन्द्रियादिभिः सह निर्देशेऽपि निरन्तराहारोपदेशेऽपि च कवलाहारोऽपि न विरुध्यते तथा केवलिनोऽपि नासौ विरोधी । न च नास्मदादीनामत्र सूत्रे आहारचिन्तापीति वाच्यम् । "एगिंदियपभिइ" इति प्रभृतिशब्देन तेषां सूचनात् । तस्मादाहारसामान्यमिह विवक्षितम् । तत्र यदि कवलाहारोऽपि केवलिनि स्वकारणोपढौकितः स्यात्तदा किं नाम क्षुण्णं भवेत् "विग्गहगइमावन्ना केवलिणो समुहया" इत्याद्यागमोऽपि यः श्रूयते सोऽपि केवलिनः कवलाहारा-

१ अस्मन्मुद्रापिततत्त्वार्थाधिगमसूत्रेषु पृ. ५७. २ दिगम्बराणाम् ३ 'समोहया' इति पाठः. सूत्रकृताङ्गे श्रु. २ अ ३.

तुल्य एव । यतोऽत्र निसर्गतस्तापन्नादिव्यतिरिक्तप्राणिनामाहारमात्रेणाहारकत्वमुक्तम् । तत्र च कवलाहारस्याप्यविरोधः । विरोधे तु भवतोऽप्येतादृशस्यैवाहारस्यापत्त्या प्रतिदिनं प्रतिगृहं प्रतिबुद्धविशुद्धश्रद्धसम्बन्धबन्धुरश्राद्धपाणिपद्मोपनीयमानभक्तविगलत्स्निग्धमुग्धाहाराभ्यवहारप्रतिहारः प्रसज्येत । अथात्रापि यथासम्भवमाहारव्यवस्थानादस्मदादीनां कवलाहारोऽपि कल्प्यते न तु केवलिन इति चेत् । ननु कुतः केवलिनः कवलाहारासम्भवः । मोहाभावादिति चेत् । न, मोहे क्षुत्कारणत्वस्य निराकरिष्यमाणत्वात् । यदप्यवादि, अन्यथा निरन्तराहारः कवलाहारेण भगवान् केवली भवेदिति । तदपि न सुव्यवस्थितम् । विशिष्टाहारस्य विशिष्टकारणप्रभवत्वाद्विशिष्टकारणस्य च प्रतिक्षणमसम्भवाद्भगवति कवलाहारस्य कादाचित्कत्वोपपत्तेः । यस्तु पुद्गलादानलक्षणो लोमाद्याहारस्तस्य प्रतिक्षणमपि तत्र सद्भावो न विरुध्यते । प्रतिक्षणभाविस्वकारणाधीनप्रवृत्तिकत्वात् । यच्चान्यदाशङ्कितं यथासम्भवमाहारव्यवस्थितेरित्यादि तदुपपन्नमेव । न हि देशोनपूर्वकोटीं यावद्विशिष्टाहारमन्तरेणौदारिकशरीरस्थितिः सम्भविनी । निरुपक्रमायुष्कत्वात्केवलिनः सम्भवत्ययमिति चेत् । ननु निरुपक्रमायुष्कस्य छद्मस्थावस्थायामप्यस्यैव ततस्तत्रापि भोजनं कुतः कुर्यात् । तदन्तरेणापि देहस्थितेः सम्भवात् । तर्हि निरुपक्रमायुष्कत्वं देहस्थितेः कारणं न भवतीत्यभिप्रायो भवताम् । नैवम् । किन्तु यथा स्वकारणसद्भावाच्छद्मस्थावस्थायामसौ निरुपक्रमायुष्कत्वेऽपि भुङ्क्ते तथा तत एव केवलिदशायामपि भुञ्जानः कथं निषिध्यत इत्यभिप्रायः । ननु छद्मस्थावस्थायां मोहनीयकर्मवशोपजातबुभुक्षाव्याकुल्यनिरोधात्कवलं भुङ्क्तेऽसौ न केवल्य-

---

१ अस्मदादीनाम् [illegible] पृ ४८ टि० २ । तत्त्वार्थ अ ४ सू १८ । २ न च प्राणापानद्वारनिरोधाध्यवसाननिमित्तवेदनापराघातस्पर्शा अत्र वेदना विशेषात् सन्त्यायुषो भेदका उपक्रमा इत्यतो निरुपक्रमा एव ।

वस्थाया तदभावादिति चेत् । तदचारु । न खलु छद्मस्थावस्थायामपि मोहनीयस्य कार्यं कवलनम् । किन्तु वेदनीयादेः । ततः केवलिदशायां मोहनीयाभावात्कवलनकाङ्क्षा मास्तु कवलनं तु स्वकारणोपनीतं तद्दशायामपि कथं पराणुद्यते । न च छद्मस्थावस्थातः केवल्यवस्थायामात्यन्तिकं तच्छरीरस्य विजातीयत्वम् । येन प्रकृताहारविरहेऽपि तच्छरीरस्थितिरविरुद्धा स्यात् । ज्ञानाद्यतिशयस्यापि प्राक्तनसंहननाद्यधिष्ठितस्य तस्यैव शरीरस्य पाल यावदनुवर्त्तनात् । अस्मदाद्यौदारिकशरीरविशिष्टस्थितेर्विशिष्टाहारनिमित्तत्वमुपलम्भानुपलम्भप्रभवतर्काख्यप्रमाणेन सर्वत्र प्रतिपन्नमिति विशिष्टाहारमन्तरेणापि विशिष्टौदारिकदेहस्थितेः क्वचिदन्यत्र सद्भावे सकृदपि सा विशिष्टाहारनिबन्धना न भवेत् । अहेतोः सकाशात्सकृदपि कार्यस्य सद्भावाभावात् । यदि पुनरस्मदादिषु विशिष्टाहारनिमित्तापि विशिष्टौदारिकशरीरस्थितिः क्वचित्पुरुषविशेषे विशिष्टाहारमन्तरेणाऽपि स्यात्तर्हि महानसादौ वह्निप्रभवोऽपि धूमः क्षितिधरकन्धरादौ वह्निं विनापि स्यादिति धूमादेर्वह्न्याद्यनुमानमनुपपन्नं भवेद्व्यभिचारात् । नन्वेतज्जातीयो धूम एतज्जातीयाग्निप्रभव. सर्वत्र सकृत्प्रवृत्तेनैव प्रमाणेन तत्कार्यतापत्तिबलाद्व्यवस्थाप्यते, अग्निस्वभावादन्यतो हि तस्य भावे सकृदप्यग्नेर्भावो न भवेत्, अग्निस्वभावादन्यत्वात्तस्य । भवति चाग्निस्वभावाद्रसवतीप्रदेशादौ धूम इति सर्वत्र सर्वदाऽग्निस्वभावादेव धूमस्योत्पत्तिरतदुत्पत्तिकस्याधूमस्वभावत्वादिति न धूमादेरग्न्याद्यनुमाने व्यभिचार इति चेत् । तन्न । अस्य न्यायस्यान्यत्रापि समानत्वात् । विशिष्टौदारिकशरीरस्थितेर्हि विशिष्टाहारमन्तरेणापि भावे विशिष्टौदारिकशरीरस्थितिरेवासौ न भवेत् । न चात्यन्तविजातीयत्वं तस्याः केवलिनीत्यभिहितमेव । सर्वथा समानजातीयत्वं तु महानसमेदिनीधरकन्धरोपलब्धधूमयोरपि न सम्भवति ।

---

१ अस्मन्मुद्रापितप्रमाणमीमांसाया पृ. १८ टिप्पन्याम् ।

वतोऽस्मदादेरिव केवलिनोऽपि कावलिकाहारमन्तरेणौदारिकशरीरस्थितिश्चिरतरकालं न सम्भवतीति । अतो या विशिष्टौदारिकशरीरस्थितिः सा विशिष्टाहारमन्तरेण न भवति । यथाऽस्मदादेः । विशिष्टौदारिकशरीरस्थितिश्च विवादास्पदकेवलिन इत्यनुमानं प्रवर्तत एव । अन्यथा धूमादेरप्याद्यनुमानमपि न स्यात् । यदपि सर्वज्ञतानिश्चयोऽपि तत्र दुर्लभः स्यादित्यभिधायि । तदपि केवलं तदाग्रहविलसितम् । घातिकर्मक्षयप्रभवसर्वज्ञतायाः केवलिनि कवलाहारेण तत्कार्येण वा चिरतरकालमौदारिकशरीरस्थित्यादिना सार्धं विरोधासम्भवात् । यदपि समाकर्ण्यते चैत्यादिकमौदारिकशरीरस्थितिकालेयत्तानियमप्रतिपादकं प्रमाणमस्तीत्येतदन्तमगादि । तदप्यगाधानवबोधसिन्धुसमुच्छलितप्रबलाभिनिवेशकालकूटकवलनाकुलीकृतस्वान्तस्य प्रलपितम् । समयस्य प्रामाण्याभ्युपगमे कावलिकाहारमन्तरेणौदारिकशरीरस्थितिकालेयत्तानियमस्यापि तत एव स्थितेः । प्रथमतीर्थकरादीनां संवत्सरादिप्रतिनियतकालाधिकनिराहारौदारिकशरीरस्थितेः सूत्रे प्रतिषेधात् । निरशनकालस्य तावत एवोत्कृष्टतया प्रतिपादकसूत्रभेदकरणनिमित्तासम्भवादित्याद्युक्तं, तदप्ययुक्तम् । यतो भगवच्छरीरस्य चिरतरकालस्थितेरेव सूत्रभेदकरणनिमित्तं समस्ति । प्रस्तुताहारं विना तच्छरीरस्थितेरसम्भवस्यानन्तरमेवाभिहितत्वात् । यदपि केवली कवलाहारं भुञ्जानः किं बुभुक्षयेत्यादि विकल्पत्रयं परिकल्प्य तत्र दूषणोद्घोषणम् । तदप्यपारतरमस्तोमान्समसमस्तगोसुर्पिपकाणां दिग्वाससां प्रलापमात्रम् । यतः प्रथमविकल्पे तावद्बुभुक्षया भुञ्जानस्य भगवतो दुःखितापत्तिदोषस्त्वयोद्भावितः, स चादोष एव । असातानुभवस्याप्रतिरुद्धवेदनीयकर्मप्रभवस्यायोगस्याचरमक्षणं यावत्सम्भवात् । अविकलकारणस्य कार्योत्पत्तेरनिवारणात्, अन्यथा तस्य तत्कारणत्वायोगात् । न च दग्धरज्जुस्थानीयत्वादसातावेदनीयस्य स्वकार्याजनकत्वमिति वाच्यम् । तत एव सातावेदनीयस्यापि स्वकार्याजनकत्वापत्तेः सुखानु-

१ धर्मसंग्रहणिनयनाणमीमांसायां प १८ निरस्तम् ।

भवस्यापि भगवत्यभावप्रसङ्गात् । यथा च दग्धरज्जुसंस्थानीयायुष्कर्मोदयकार्यप्राणादिधारणं भवति तथा प्रकृतमभ्युपगम्यताम् । विशेषाभावात् ।

किं चैकादशजिन इति सूत्रात् क्षुदादिपरिषहैकादशकस्य दुःखरूपस्य केवलिनि सिद्धे. कथं दुःखरूपाया अपि बुभुक्षायास्तत्र न सिद्धिः । प्रभाचन्द्रस्तु " छद्मस्थवीतरागयोश्चतुर्दशेति बादरसंपराये सर्वे" इति च पूर्वापरपरिगता सूत्रद्वयी विधिपरा परामृशताऽन्तरालिकं त्वेकादशजिन इति सूत्रं निषेधनिष्ठं निष्टङ्कयितुमेकादशशब्दस्यैकाधिकदशस्वरूपं प्रसिद्धं सम्भविनं चार्थमवगणय्यैकादशजिने इत्यागमोऽपि क्षुदाद्येकादशपरीषहप्रतिषेधपरः प्रतिपत्तव्य. । एकेनाधिका न दश एकादश इति व्युत्पत्तेरित्येवमर्थं परिकल्पयन्नियतं लोके यानि प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यं नाऽध्याहारादिभिरेषां परिकल्पनीयोऽर्थ. परिभाषितव्यो वेति सकलकलाविद्विदितमपि न्यायं न कदाचिदश्रौषीत् । एकाधिकदशस्वरूपो ह्यर्थ. प्रस्तुतशब्दस्य प्रसिद्ध एव । न चासौ न सम्भवी । वेदनीयोदयभाविनामेकादशपरीषहाणां तत्र सम्भवात् । अथैकाधिकदशप्रतिषेधलक्षणोऽप्यर्थः प्रसिद्ध एवेति कथमसावस्य परिकल्पित इति चेत् ।

‘ एकादश जिने ’ इत्यादि सूत्रस्य क्षुदाद्येकादशप्रतिषेधपरत्वा व्याचक्षाणस्य प्रभाचन्द्रस्य विद्यानन्दादीना च खण्डनम् ।

भो भगवन्त. सभ्याः सर्वेऽप्याकर्णयन्तु कृतकर्णाः ॥
एकादशशब्दार्थ. प्रख्यातः क्वापि यद्येवम् ॥ ४३० ॥

नाप्यसौ सम्भवी । वेदनीयोदयेत्यादिन्यायस्य प्रदर्शितत्वात् । अपि चैकादशेत्यत्र नञ् दशशब्देन सम्बद्धः पर्युदासः प्रसज्यो वा भवेत् । पर्युदासश्चेत्, तदा दशसदृशा नवादय एकादश एकादशादयो

१ अस्मन्मुद्रापितप्रमाणमीमांसाया पृ १८ टिप्पन्याम् । २ तत्त्वार्थ. ९।११. ३ तत्त्वार्थश्लो वा ९।१०. ४ तत्त्वार्थश्लो. वा. ९।१२. ५ तत्त्वार्थसूत्रे ९–९ इत्यत्र द्रष्टव्यम् ।

वाऽनागतच्याच्या स्यु । ततश्चैकेनाधिका अन्गोति विग्रहे दशा-दीना क्षुत्पादीना वा परीषहाणा तत्र विधानप्रसक्ता कथमेकान्तपरीषहप्रतिषेधपरताऽस्य सूत्रस्य स्यात् । प्रेम यश्चेत्, तथन्गेति समासो न प्राप्नोति । तत्र समासप्रतिषेधात् । सत्यपि चास्मिन्नन्यशब्दस्य दशप्रतिषेधमात्रबोधकतायामेकेनाधिका अन्गेति न्यप्रतिषेधस्यैकशब्देन कीदृशी सगति स्यात् । तस्य तपस्वी स्वकीयदर्शनाभिनिवेशनिमन्धुलीकृतस्वान्त कागजुगावलम्बनरात्मान विडम्बयति । यत्पुनरेकादशजिन इति सूत्रव्याख्याया स्वयमाशङ्कितमभिनन्दयन्निव निजगाद विद्यानन्द,, "तर्हि जिनेन्द्रे क्षुदादयोऽपि माभूवन् । मोहरहितस्य वेदनीयस्य तत्र सतोऽपि तज्जननासमर्थत्वात् । तथाप्रसिद्धोदासीनावस्थाधुत्पत्तव । सत्यमेतत् । उपचारेण तत्र तेषामभिधानात् । सकलार्थसाक्षात्कारिणोऽमनस्कस्य चित्तवृत्तिनिरोधाभावेऽपि ध्यानाभिधानवत् । किं तदुपचारनिमित्तमिति चेत्, तत्सामर्थ्येकादशवेदनीयसद्भाव इति" । तदिद सहृदयहृदयानामानन्द मनागप्यान तदभिधानस्यायथार्थत्वमेव व्यञ्जयति । तथा हि तत्सामर्थ्येकादशवेदनीयसद्भाव इत्यनुनेकान्तपरीषहोपचारनिमित्त केवलिन्यावदयतो मोहनीयोपवृंहितवेदनीयलक्षणस्यैवाम्याभिप्रेता तत्सामग्री । सा च न क्षीणरमा । मोहनीयोपबृंहणमन्तरेणैव नामादि कर्मण इव वेद्यकर्मणोऽपि केवलिनि स्वकार्यकरणप्रावीण्योपपत्ते । अन्यथा तीर्थंकरनामकर्मादपि तीर्थप्रवर्तनादिस्वसाध्यसाधनासाधीयस्त्वा न धारयेत । एव चोपचारवचनमचतुरस्रम् । मुख्यवृत्त्यैव स्वहेतुप्रभवपरीषहाणा केवलिन्युपपाद्यितत्वात । उपपादयिष्यते चैतत्पुरस्तात् । एतेन सर्वार्थसिद्धिरप्यत्रोपचारव्याख्यान कुर्वन्परास्त । यस्त्वयमेकादशजिने परीषहा न सन्तीत्यध्याहार्यमिति पक्षान्तरमुपन्यस्तवान् । तदपि न सुस्थम् । प्रकृतस्यार्थस्याप्रसिद्धावसम्भवे वा सति ह्यध्याहार कल्प्यो नान्यथा ।

१ प्रगम —प्रगण्यप्रतिषेध । २ तत्त्वार्थश्लो वा ग ९।११ । ३ अमण गा । ४ सम्बन्धवाचिव्रभाष्यवाक्यात्समूहेषु पृ २ टि १ ५ सर्वार्थसिद्धिवार्थश्लोका पृ २५२ प ९६

न चैवं तद्विहान्तीति प्रोक्तं प्राक्। शरीरस्थित्यन्यथानुपपत्त्येति द्वितीयविकल्पे तु यदनन्तवीर्यत्वं प्रस्तुताहारमन्तरेणापि केवलिनि शरीरस्थितिकारणमुच्यते। तच्छद्मस्थावस्थायामपि तत्रापरिमितबलश्रवणात्समस्त्येव। न च प्रस्तुताहारं विना तत्तस्यामवस्थायां तत्र शरीरस्थितिकारणम्। अन्यथा कर्मक्षयार्थमनशनादितपस्युद्यमवतो भगवतः प्राणवृत्तिप्रत्ययमशनाद्यभ्यवहरणमसङ्गतं स्यात्। न च छद्मस्थावस्थायां क्षायोपशमिकं तस्य वीर्यं केवल्यवस्थायां तु क्षायिकमिति विशिष्टाहारमन्तरेणापि केवल्यवस्थायां तु तत्तत्र शरीरस्थितिनिबन्धनमित्यभिधानीयम्। क्षायिकवीर्यसद्भावेऽपि शरीरस्थितिनिमित्तोपवेशनादिवत्प्रकृताहारस्याप्यविरोधात्। न चोपवेशनादिकमपि शरीरस्थित्यर्थं तत्रासिद्धम्। समुद्घातावस्थान्तरकालं केवलिनः पीठफलकादिप्रत्यर्पणश्रुतेः। न च तद्ग्रहणमन्तरेण तत्प्रत्यर्प्पणं सम्भवतीति। स्वभावत एव भुङ्क्त इति तृतीयविकल्पस्त्वनभ्युपगमादेव प्रतिहत इति।

यच्चेदमुच्यते,

‘किं देहोपचयार्थमेव केवली भुङ्क्ते’ इत्यादिना षण्णां विकल्पानां प्रदर्शनपूर्वकं खण्डनम्।

किं देहोपचयार्थमेव यदि वा ज्ञानादि मा क्षीयता-
मित्येवं किमथ क्षुधः क्षतिकृते किं वायुपोऽसाधिते।
निर्वाणे क्षयरक्षणार्थमथ वा गृद्धिं रसेपूत्कटां
हन्तुं लोकमनुग्रहीतुमथ किं भुङ्क्ते जिनः केवली ॥४३३॥

इति, तत्र देहोपचयार्थमिति प्रथमपक्षस्तावन्नाभ्युपगम्यते। न खलु मम शरीरे उपचयः संजायतामित्यभिसन्धाय भगवान् भुंक्ते। वीतरागत्वात्। अन्यथा प्राकृतपुरुषस्येव तस्यापि सरागत्वप्रसङ्गात्। ज्ञानादि मा क्षीयतामिति द्वितीयपक्षोऽपि नाङ्गीक्रियते। ज्ञानादिक्षय-

१-२ अस्मन्मुद्रापितसभाष्यतत्त्वार्थाधिगमसूत्रेषु पृ. ८ टि. ५-६. ६ अस्मन्मुद्रापितस्याद्वादमञ्जर्यां पृ ६६. टि १. ३ पीठमासनं फलकमवष्टम्भनार्थं।

निरन्धनाभावान्नेव तत्र ज्ञानादीनामप्यप्रसिद्धेः । ज्ञानादिक्षयस्य हि निरन्धनं ज्ञानावरणादिकर्म । तच्च प्रक्षीणाशेषावरणे भगवति नास्तीति कथं ज्ञानादिप्रक्षयाशङ्काऽपि । ततस्तत्परिरक्षणार्थमपि न भुङ्क्ते भगवान् । क्षुधः क्षतिकृते भुङ्क्त इत्यत्र तु तृतीयः पक्षः कक्षीक्रियत एव । यत्पुनरत्र दूषणं निष्पटं प्रकटीक्रियतेऽनन्तसुखत्वेन भगवति दुःखस्यासम्भवादनुपपद्यमानं क्षुद्वेदनाप्रतीकारार्थं तत्र भोजनमिति । तदतीवासम्बद्धम् । अनन्तसुखस्यैव भवस्थकेवलिन्यसिद्धेः । सातासातवेदनीयकर्मणः सत्त्वेन किञ्चिद् दुःखानुषक्तसुखस्यैव तत्र प्रसिद्धत्वात् । आयुषोऽसाधिते निर्वाणे क्षयरक्षणार्थमिति चतुर्थपक्षोऽपि न स्वीक्रियते । चरमोत्तमदेहानामनपवर्त्यायुष्कत्वादेव । अनपवर्तनीयस्यायुषः स्वस्थितिकालसमाप्तिं विहाय क्षयानुपपत्तेः । इत्यायुःक्षयरक्षणार्थमपि नासौ भुङ्क्ते । गृद्धिं रसेष्वन्त्यदा हन्तुमिति पञ्चमपक्षोऽपि नाभ्युपेयते । वीतमोहे भगवति रसगृद्धिमात्रस्याप्यनुपपत्तेः । लोकमनुग्रहीतुं भुङ्क्ते । इति षष्ठपक्षोऽपि नोरीक्रियते । न खलु लोकमनुगृह्णामीत्यभिसन्धिपुरस्सरमाहारमभ्यवहरति भगवान् । लोकानुग्रहे तु सामान्यकेवलिनः स्वकीयासाधारणनामकर्मनिर्मितं तत् स्वाभाव्यनिमित्ता प्रवृत्तिः । तीर्थकरस्य तु तीर्थकृन्नामकर्मोदयमाहात्म्यकृतं तत्स्वाभाव्यनिबन्धना । यदाह भगवानुमास्वातिवाचकः, "तीर्थप्रवर्त्तनफलं यत्प्रोक्तं कर्म तीर्थकरनाम । तस्योदयात्कृतार्थोऽप्यर्हंस्तीर्थं प्रवर्त्तयति ॥ तत्स्वाभाव्यादेव प्रकाशयति भास्करो यथा लोकम् । तीर्थप्रवर्त्तनाय प्रवर्त्तते तीर्थकर एवम् ॥" इति । तथा हि स भगवान् पूर्वाह्णेऽपराह्णे च पादोनप्रहरं यावद्धर्मोपदेशकाल एव सिंहासनाद्यधिरूढ आस्ते । शेषं तु दिनं देवच्छन्दकनाम्नि दिव्यस्थाने यथासुखं गमयति ।

१ भवा नारकादिजन्म तत्रेह भवो मनुष्यभव एव ग्राह्य अन्यत्र केवलोत्पादाभावात् । भवे तिष्ठतीति भवस्थः तस्य केवलज्ञानं भवस्थकेवलज्ञानम् । २ तत्त्वार्थ उ का ११।

तत्र च गणधरदेवादिभिरानीतमाहारं निखिलदोषविशुद्धं विज्ञाय क्षुद्वेदनोदये गृह्णाति । आहारं च तदीयपाणिपल्लवन्यस्तं मांसचक्षुषः पश्यन्ति । कथमसौ भुंक्ते इत्येतत्तु न पश्यन्ति । सर्वज्ञाहारविहारयोर्मांसचक्षुषामगोचरत्वात् ।

विकल्पप्रदर्शनपूर्वकं प्रभाचन्द्रानुसारिणः पूर्वपक्षस्योपपादनपूर्वकं खण्डनम् ।

यत्पुनरत्र प्रभाचन्द्रानुसारी प्राह । किमर्थं भगवान् देवच्छंदके गच्छति । मनोविक्षेपपरिहारेण ध्यानसिद्ध्यर्थं निरोधाक्षमतया यथासुखमवस्थानार्थं रहस्यकार्यानुष्ठानार्थं वा । तत्राद्य. पक्षोऽयुक्तः । अमनस्कतया भगवतो मनोविक्षेपासंभवाद्योगनिरोधसद्भावेनोपचारस्तत्र ध्यानाभिधानाच्च । द्वितीयपक्षोप्यनुपपन्नः । अनन्तवीर्यस्य निरोधाक्षमत्वानुपपत्ते. । अनन्तसुखान्वितस्य दुःखलेशस्याप्यभावतो यथासुखमित्यस्यापि दुर्घटत्वात् । रहस्यकार्यं च निन्द्यमनिन्द्यं वा । न तावन्निन्द्यम् । प्रक्षीणाशेषदोषस्य निन्द्यकार्यानुष्ठानविरोधात् । अथानिन्द्यम् । तत्किं भोजनं कर्मक्षपणं वा । न तावद्भोजनम् । तस्यामोहे भगवति प्रतिषिद्धत्वात् । अप्रतिषेधे वा कस्मादसावेकान्ते गत्वा भुंक्ते । दृष्टिभयाद्याचकभयादनुचितानुष्ठानत्वाद्वा । तत्राद्यविकल्पोऽनुपपन्न. । भगवतो दृष्टिदोषागोचरत्वात् । अपि च ।

कुष्ठं कुण्ठयति ज्वरं जरयति प्रोन्मूलयत्यश्मरीं
शोषं शोषयति क्षयं क्षपयति स्फोटं पिनष्टि क्षणात् ॥
तेषां नाम कथंचन स्मृतमपि प्राणिप्रबन्धस्य भो-
स्तेषां दृष्टिभयं भवत्यतितरां चित्रं तदेतद्बुधाः ॥ ४३४ ॥

द्वितीयविकल्पे तु भगवता महद्दीनत्वं प्रख्यापितम् । न खलु महासत्त्वस्य पृष्ठतो लग्नान्बुभुक्षापीडिताञ्छिष्यान्विहाय पितुरिव पुत्रानेकान्ते गत्वा भोजनं युक्तम् । अनुचितानुष्ठानत्वेन तु न तत्र

१ 'शेषाम्' इति प. भ. पुस्तकयोः पाठः ।

तत्परिकल्पना श्रेयसी । स्त्र्यादिसेवनपरिकल्पनावत् । कर्मणामपि क्षपणं पूर्वोपार्जितानां भुक्तिकालोपार्जितानां वा तत्राऽर्हता विधीयेत । पूर्वोपार्जितानां चेत्, घातिनामघातिनां वा । न तावद्घातिनाम्, तेषां पूर्वमेव क्षपितत्वात् । नाप्यघातिनाम्, तेषां यथाकालं क्षपयिष्यमाणत्वात् । सततं शुक्लध्यानानलतः कर्मेन्धननिचयनिर्दहनसमर्थत्वाच्चास्य । न हि भगवतः शुक्लध्यानानलो देवच्छन्दक एव प्रज्वलति न समवसरणादावित्यभ्युपगमो युक्तः । तत्रस्थस्यास्य ध्यानान्तरप्रसङ्गात् । भुक्तिकालोपार्जितकर्मणां च कथं क्षपणम्, प्रतिक्रमणतश्चेत्, अस्तु, परं भगवतो निर्दोषता दुर्लभा । यः प्रतिक्रमणं करोति नासौ निर्दोषः । यथाऽस्मदादिः प्रतिक्रमणं करोति च भगवानिति । कृतदोषनिराकरणं हि प्रतिक्रमणं तदुक्तं कथमस्य निर्दोषता स्यात् । अथ तन्न करोति । कथं भुक्तिक्रियातः समुत्पन्नं दोषं निराकुर्यात् । आहारकथामात्रेणापि ह्यप्रमत्तोऽपि संसाधुः प्रमत्तो भवति नार्हन् भुञ्जानोऽपीति महच्चित्रम् । दोषवत्त्वे चाऽस्य श्रेणितः पतितत्वान्न केवलमपि स्यात् । भुञ्जानोऽसौ पिशितलोचनैर्न विलोक्यते इत्यत्र च किं कारणम् । बहुलतमतमःपटलप्रच्छादितत्वं काण्डपटाद्यावृतत्वं विद्याविशेषेण स्वस्य तिरोधानमन्यजनातिशायी माहात्म्यविशेषो वा । तत्राद्यपक्षोऽनुपपन्नः । तद्देहदीप्त्या तमःपटलस्य निर्मूलमुन्मूलितत्वात् । काण्डपटाद्यावृतावयवस्तस्य कथं भिक्षा दीयेत । विद्याविशेषाभ्युपगमे चाऽस्य विद्याधरादिवन्निर्ग्रन्थताविरोधः । अथान्यजनातिशायी माहात्म्यविशेषः कश्चिदस्येष्यते येन भुञ्जानो नावलोक्यत इति । नन्वन्यजनातिशायी क्षुदभावलक्षण एवातिशयोऽस्येष्यतां तस्यैव प्रमाणोपपन्नत्वादिति । तदेतन्निखिलमनादिमिथ्यावासनापरवशशेमुषीकस्याहो-

---

१ ऊ शुभस्वाभाविकसर्वाशाधिबाधारहितं चित्तमन्तःकरणं यस्मिन् स्थाने तत् स्थानं प्रचाराच्छुरम् । २ समवसरन्ति नाना परिणामा जीवाः कथंचित् तुल्यतया यस्मिन् तत्समवसरणम् । ३ स्वस्थानाद्यत्परस्थानं प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः प्रतिक्रमणमुच्यते ॥ इति ।

कस्यास्य प्रलपितम् । तथा हि । यत्तावन्मनोविक्षेपपरिहारेण ध्यानसिध्यर्थमित्यादि पक्षत्रयमुत्थाप्य दूषितम् । तत्र प्रथमतृतीयपक्षौ दूषयता भवता कण्ठशोषः केवलमनुभूतः । अनभ्युपगतोपालम्भात् । निरोधाक्षमतया यथासुखमवस्थानार्थं भगवान्देवच्छन्दके गच्छतीत्ययं तु द्वितीयपक्षः कक्षीक्रियत एव । तत्र च यद्दूषणमुक्तमनन्तवीर्यस्य निरोधाक्षमत्वानुपपत्तेरिति । तदनुपपन्नम् । वीर्येऽनन्तत्वस्य क्वचिदप्यागमन्यप्रसिद्धेः । वीर्यविभागानामसंख्याततत्वेन परमागमे प्रतिपादनात् । भवतु वा कथंचिदनन्तवीर्यत्वं भगवति । तथापि तन्माहात्म्येन शक्तिक्षयः केवलं न भवति तस्य । यत्तु धर्मदेशनासमयसम्भवियोजनव्यापिवाणीविलासपरिश्रमसमुद्भूतासातोदयसम्पाद्यं किञ्चिद्दुःखं तन्न निवारयितुं पार्यतेऽतस्तदुपशान्तये भगवान्देवच्छन्दके गच्छतीत्युपपन्नं पश्यामः । यच्चाऽभिहितमनन्तसुखान्वितस्य दुःखलेशस्याप्यभावतो यथासुखमित्यस्यापि दुर्घटत्वादिति । तदप्यघटमानम् । अनन्तसुखान्वितत्वस्यैव भगवत्यद्याप्यसिद्धेरित्युक्तप्रायम् । यच्चावाचि । भुञ्जाऽनोसौ पिशितलोचनैर्नावलोक्यत इत्यत्र च किं कारणम् । किं बहलतमतम पटलप्रच्छादितत्वमित्यादि । तत्राऽप्याद्यं विकल्पत्रयमनभ्युपगमादेव प्रतिहतम् । अन्यजनातिशायी माहात्म्यविशेषस्तद्भोजनादर्शने कारणमित्यय चतुर्थो विकल्पः स्वीक्रियते । तत्र च यद्दूषणमुदग्राहि नन्वन्यजनातिशायी क्षुदभावातिशयोऽस्येष्यतां तस्यैव प्रमाणोपपन्नत्वादिति । तत्र हेतोरसिद्धिः । तथाहि प्रमाणमागमोऽन्यद्वा क्षुदभावे भवेत् । न तावदागमः । सिद्धवत्सयोगकेवलिनि क्षुदभावप्रतिपादकस्यागमस्यासम्भवात् । अन्यस्माच्च प्रमाणात्क्षुदभावः स्वभावानुपलम्भादन्यतो वा स्यात् । न तावत्स्वभावानुपलम्भात् । केवलिनो विप्रकृष्टस्वभावे भावे स्वभावानुपलम्भोऽयुक्तः । एकज्ञानसंसर्गिपदार्थान्तरोपलम्भलक्षणत्वात्तस्य । अन्यतोऽपि विधीयमानान्निषिध्यमानाद्वा तन्निषेधः स्यात् ।

---

१ सूत्रकृताङ्गे प्रथमश्रु. स्क. अ. ८.

यदि विधीयमानात्, तदा तेन क्षुद्विरोधिना भवितव्यम् । अविरुद्धविधेरभावासाधकत्वात् । न च क्षुद्विरोधि केवलिनि किंचित्प्रतीयते । न च ज्ञानादिगुणा एव तत्र तद्विरोधिन इत्यभिधातुमुचितम् । यतो ज्ञानादिमात्रस्य क्षुधा विरोधस्तद्विशेषस्य वा । यदि ज्ञानादिमात्रस्य तर्हि यथा यथा ज्ञानादयो गुणा विवर्धन्ते तथा तथा क्षुधो हानितारतम्येन भवितव्यम् । प्रकाशाभिवृद्धाविव तमसः । न चैवमस्ति । न हि बालादौ ज्ञानाद्यपचये क्षुदुपचयस्तत्प्रभृति च ज्ञानाद्युपचये तारतम्येन क्षुदपचयो लक्ष्यते । तन्न ज्ञानादिमात्रस्य क्षुधा विरोधः । अथ ये केवलिगता ज्ञानादयः प्रकर्षपर्यन्तप्राप्तास्तेषामेव क्षुधा विरोधः । तन्न । तथा प्रतिपत्तुमशक्तेः । नहि केवलिगता ज्ञानादयः क्षुधं विरुन्धन्तीत्यस्मादृशा प्रतिपत्तुं शक्यम् । अतीन्द्रियत्वात्तेषाम् । किंचाविकलकारणस्य भगवतोऽन्यभावेऽभावाद्विरोधगतिर्भवति शीतस्पर्शस्येवाग्निसन्निधौ । एतच्चात्र दुर्लभम् । केवलिगुणानामतीन्द्रियत्वेनतत्सन्निधौ क्षुन्न भवतीति प्रतीतेरनुपपत्तेः । तन्न विधीयमानात्पुनश्चित्तत्र क्षुधोऽभावसिद्धिः । निषिध्यमानश्च भावस्तस्याः कार्यं कारणं व्यापको वा स्यात् । यदि कार्यम्, तदा तन्निवर्तमानमात्मनिर्विचनमभाया एव क्षुधो निवृत्तिमवगमयेन्न तु सर्वथा । कारणमात्रस्य कार्याभावेऽपि भावाविरोधात् । कारणमपि निवर्तमानं कार्यं निवर्तयति, यथा वह्निर्धूमम् । व्यापकं वा निवर्तमानं व्याप्यम्, यथा वृक्षः शिंशपाम् । न चात्र क्षुधः कारणस्य व्यापकस्य वा कस्यचिन्निवृत्तिरस्ति । न च मोहनीयाभावात्क्षुधोऽभावः । तस्यास्तत्कार्यत्वस्य तत्स्वभावत्वस्य चासम्भवात् । न हि क्षुन्मोहनीयकार्या । वेदनीयप्रभवत्वात् । अन्यथा वेदनीयं तेषां इत्यागमविरोधापत्तेः । ननु नास्ति विरोधः । न हि वयं वेदनीयस्य क्षुत्कारणत्ववारणं विदध्महे किन्तु मोहनीयमपि तत्र सहकारितया व्याप्रियतेति ब्रूमहे । न च सहकारिकारणविरहेऽपि कार्योत्पत्तिर्दृष्टचरी । न खलु बीजजलानिलानलसम्पर्कं पृथिवीविरहेऽङ्कुरो जायत इति चेत् । नैवम् । मोहनी-

यस्य सहकारित्वासिद्धेः । न हि स्वाभिप्रायानुरोधेन किञ्चित्क्वचित्सहकारितया कल्पयितुमुचितम् । किन्तु यस्यान्वयव्यतिरेकौ कार्येणानुविधीयेते । न चात्र क्षुन्मोहनीयव्यतिरेकमनुविदधती क्वापि निश्चिता । ननु सिद्धेषु तन्निश्चयो भविष्यतीति । नैवम् । सन्देहात् । तथा हि सिद्धेषु किं वेदनीयाभावात्क्षुन्न भवति, आहोस्विन्मोहनीयाभावादिति । भवस्थकेवलिनि क्षुदभावो मोहनीयाभावप्रयुक्तो निश्चितो वेदनीयसद्भावादिति चेत् । न । तत्र क्षुदभावस्याऽद्यापि विवादास्पदत्वात् । नन्वेवं मोहनीयवद्वेदनीयस्यापि क्षुत्कारणत्वं न स्यात् । नैवम् । क्षुत्कारणत्वेन तस्योभयसम्प्रतिपन्नत्वात् । नापि मोहनीयस्वभावा क्षुत् । प्रतिपक्षभावनानिवर्त्यत्वप्रसङ्गात् । यो हि मोहस्वभावः स प्रतिपक्षभावनया निवर्त्यते । यथा क्षमादिभावनया क्रोधादिः । मोहस्वभावा च क्षुद्भवद्भिरिष्टेति । तथा च क्षुद्वेदनाप्रतीकारार्थं शास्त्रं प्रतिपक्षभावनैवोपदिश्येत । न क्लेशभूयिष्ठा ध्यानाध्ययनविघातकारिणी पिण्डेषणा[1] । शीतोष्णबाधातुल्यत्वाच्च क्षुधो न मोहस्वभावत्वम् । अन्यथा तद्बाधाया अपि मोहस्वभावत्वं स्यात् । ननु भगवतः क्षुदुपगमेऽशेषज्ञत्वादिविरोधः क्षुदुदयेऽस्मदादिवत्तत्र ज्ञानदर्शनचेष्टादेः प्रक्षयात् । तदसमीचीनम् । ज्ञानावरणादिप्रक्षये जातायामपि क्षुधि तत्क्षयायोगात् । तत्क्षयो हि ज्ञानावरणादिकर्मोदयनिबन्धनोऽतोऽस्मदादेः तदुदयातिशयात्तत्क्षयातिशयो युक्तो भगवति तु तदावरणादेरशेषस्यापगमात्सत्यामपि क्षुधि न ज्ञानादिक्षयः[2] । न ह्यग्न्यभावे सत्यपीन्धने धूमो भवति । तदेवं प्रमाणोपपन्नत्वादिति क्षुदभावसाधको हेतुरसिद्धः । तथा च कथं भुक्तिप्रतिषेधः । भुक्तिसाधकञ्चैतत्प्रमाणम् । विवादविषयापन्ने केवलिनि कदाचित्कवलाहारभुक्तिरस्ति । अविकलकारणत्वात् । यद्यत्राविकलकारणं तत्तत्रास्ति । यथा क्वचित्प्रदेशेऽङ्कुरः । तथाभूता च कदाचित्कवलाहारभुक्तिर्विवादविषयापन्ने केवलिनि ।

---

१ आहारादिग्रहणविधिः । २ 'ज्ञानादिक्षयः' इति म पुस्तके पाठः ।

तस्मात्तत्र साऽस्तीति। न चाऽयमसिद्धो हेतुः। यतः कवलाहारभुक्तेर्द्विधा कारणं बाह्यमाभ्यन्तरं च। तत्र बाह्यमनशनादि। तत्तावदस्त्येव। न तत्र कस्यापि विवादः। आभ्यन्तरं पर्याप्तिवेद्यतैजसदीर्घायुष्कोदय-लक्षणम्। तदपि विद्यत एव। यतो हि शरीरेन्द्रियादिनिष्पत्तिः सा पर्याप्तिनामकर्मविशेषः। वेद्यं सुखदुःखसम्पादकं वेदनीयाख्यं कर्म। तैजसं भुक्ताहारपाकादिकारणोष्मस्वरूपात्तैजसशरीरकारणं नामकर्मैव। दीर्घमायुश्चिरजीवनकारणं कर्म। एतेषामुदयास्तुद्रेकेणोपनायते। अस्ति चैतदुदयो भगवति स च भुक्तिकारणमिति। यदाह शाकटायनः "अस्ति च केवलिभुक्तिः समग्रहेतुर्यथा पुरा भुक्तेः। पर्याप्तिवेद्यतैजसदीर्घायुष्कोदयो हेतुः ॥१॥" इति। यत्तु प्रभाचन्द्रेणाभिधीयते 'असिद्धं चाविकलकारणत्वं भुक्तेः। मोहनीयसहायं हि वेद्यादिकर्म क्षुदादिकार्यकरणेऽविकलसामर्थ्यं भवति नान्यथा। अतिप्रसङ्गात्। यथैव हि पतिते सैन्यनायकेऽसामर्थ्यं सैन्यस्य। तथा मोहविनष्टेऽघातिकर्मणाम्। यथा च निर्विषीकृतं मन्त्रिणोपयुज्यमानमपि विषं न दाहमूर्च्छादि कर्तुं समर्थम्। तथा शुक्लध्यानानलनिर्दग्धमोहसहायं वेद्यादिक्षुदादिकम्। प्रयोगः, भगवति बुभुक्षा नास्ति तत्कारणमोहाभावात्, यस्य यत्र यत्कारणाभावो न तत्र तत्कार्यं यथाऽनग्निप्रदेशे धूमः। नास्ति चार्हति मोह इति।" तदेतदपर्यालोचिताभिधानम्। मोहनीयसहायकविकलस्यापि नामादिकर्मण इव वेदनीयादिकर्मणः स्वकार्यकरणे विरोधाभावात्। अन्यथा नामादिकर्मापि केवलिनि तीर्थकरत्वादिस्वकार्यकरणे कौशलं नावलम्बेत। अथ नामादिषु शुभप्रकृतीनां तत्राप्रतिबद्धसामर्थ्यत्वेन स्वकार्यकारित्वं युज्यते। नन्वसातवेद्याद्यशुभप्रकृतीनां भगवति विपाकोऽस्त्यस्यागमे प्रतिपादनात्। द्वितीयपक्षे तु न काचित् पीडा। कियतोऽप्यनुभागस्य घातेऽप्यमाना

---

१ भगवदाचार्यशाकटायनकृतकेवलिभुक्तिप्रकरणे श्लो० १। २ प्र० क० मा० ८६।१।१। ३ अस्मदुद्धारितप्रमाणमीमांसायां पृ० १८ टिप्पण्याम्।

साताद्यशुभप्रकृतीनामप्रतिबद्धसामर्थ्यतया स्वकार्यकारित्वोपपत्तेः। यदि चाऽशुभप्रकृतीनां कतिपयानुभागघाते सति प्रतिबद्धसामर्थ्यतया न स्वकार्यकारित्वमित्यास्थीयते। तर्ह्यस्थिरनामकर्मणोऽशुभप्रकृतित्वेन कतिपयानुभागघातसद्भावात्स्वकार्यकारित्वं न स्यात्। तथा च भगवतः पाणिपादादयोऽवयवाः स्थिरा एव स्युरित्ययोगिगुणस्थानवत्सयोगिगुणस्थानकेऽपि भगवान्निर्व्यापार एव भवेत्। तथा च कुतस्तीर्थप्रवर्त्तनमिति लाभमिच्छतो मूलोच्छेदः सम्पन्नोऽस्य दिग्वाससः। एतेन तत्कारणमोहाभावादित्यनन्तरोपन्यस्तहेतोर्विशेषणासिद्धिरित्युक्तं भवति। मोहस्य क्षुत्कारणत्वासिद्धेः। तदभावेऽपि कैवल्यवस्थायां क्षुत्संभवस्य प्रतिपादितत्वादिति। यदप्यनेनैवोच्यते "न चेयं बुभुक्षा मोहनीयानपेक्षस्य वेदनीयस्यैव कार्यं येनाऽत्यन्तप्रक्षीणमोहेऽपि स्यात्। तथा हि बुभुक्षा मोहनीयानपेक्षस्य वेदनीयस्य कार्यं न भवति। इच्छात्वात्। रिरंसावत्। भोक्तुमिच्छा बुभुक्षा सा हि कथं वेदनीयस्यैव कार्यम्। अन्यथा योन्यादिषु रन्तुमिच्छा रिरंसाऽपि तस्यैव कार्यं स्यात्। तथ च कवलाहारवत्स्त्र्यादावपि प्रवृत्तिप्रसङ्गान्नेश्वरादस्य विशेषः। यथा च रिरंसा प्रतिपक्षभावनातो निवर्त्तते। तथा बुभुक्षाऽपि। प्रयोगः भोजनाकांक्षा प्रतिपक्षभावनातो निवर्त्तते। आकांक्षात्वात्। स्त्र्याद्याकांक्षावत्" इति। तदपि सकलमलीकम्। बुभुक्षा मोहनीयानपेक्षस्य वेदनीयस्य कार्यं न भवतीत्यत्र सिद्धसाध्यतावतारात्। नन्वेवं तर्हि भगवत्यपि मोहनीयसद्भावप्रसक्तिः बुभुक्षासद्भावादिति चेत्। न। बुभुक्षासद्भावस्य तत्राऽसिद्धेः। भोक्तुमिच्छा हि बुभुक्षा भोजनाभिलाषरूपा सा कथं निर्मोहे भगवति स्यात्। कथं हन्त तर्हि भुक्तेऽसाविति चेत्, यथैव विवक्षामन्तरेणाऽपि वक्ति। जिगमिषामन्तरेणाऽपि गच्छति। नन्वेवं कथं बुभुक्षा केवलिनि विद्यत इति तत्र तत्रोद्घोषणा श्रेयसीति चेत्। कारणे कार्योपचारात्। वेदनीयकर्म्मोदयजन्यपीडाविशेषे हि सति शरीरिणा भोजनाभिलाषरूपा बुभुक्षोपजायते

१ प्र. क मार्तण्डे ८६।२।६.

ततश्च केवलिनि तत्कारणस्य पीडाविशेषस्य सद्भावाद्बुभुक्षाऽस्तीति व्यवह्रियते । एतेन योन्यादिषु रन्तुमिच्छा रिरंसेत्यादि नग्नाटस्य माण्डलिकपाण्डित्य विडम्बितमवसेयम् । यच्चाकाङ्क्षात्मादिति प्रोक्तम् । तत्र भयशाधा पक्षस्य, प्रज्वलज्ज्वल्यमानजाठरजातवेदस्त प्रेम प्रतिपक्षभावनाप्रकर्षेणाऽपि बुभुक्षाया निवृत्तेरननुभूयमानत्वात् । ततो न बुभुक्षा मोहनीयकार्यम् ।

यानि चैतानि तेनैवोक्तानि साधनानि । न बुभुक्षावान् केवली, तद्विरोधिनिर्मोहस्वभावोपेतत्वात्, यो यद्विरोधिस्वभावोपेतो नासौ तद्वान्, यथोष्णस्पर्शस्वभावोपेत कश्चित्प्रदेशो न शीतस्पर्शवान्, तथा तद्विरोधिनिर्मोहस्वभावोपेतश्च केवली, तस्मान्न बुभुक्षावानिति । यद् दुःखरूप न तत्र सम्भवति, यथा क्रामपीडादि, दुःखरूपा च क्षुदिति । तथा यत्राऽनन्त सुख न तत्र दुःखलेशोऽप्यस्ति, यथा सिद्धेषु, अनन्तसुख चाऽर्हतीति । यत्र यद्विरोधि बलवदस्ति न तत्रास्तुदितकारणमपि तद्भवति, यथाऽत्युष्णप्रदेशे शीतम्, अस्ति च क्षुद्विरोधि बलवदर्हत्यनन्त सुखमिति । यत्कार्यविरोधिनिवर्त्यं यत्रास्ति तदविकलमपि स्वकार्यं न करोति । यथा श्लेष्मादिविरुद्धनिवर्त्यपित्तादिविकाराक्रान्ते पुरुषे न दध्यादि श्लेष्मादि करोति । वेद्यफलविरुद्धानिवर्त्यं च सुख भगवतीति । तानि सर्वाण्यप्यसिद्धत्वाद्यशेषदोषदुष्टत्वात्साधनाभासानि । तत्र हि तद्विरोधिनिर्मोहस्वभावोपेतत्वादिति प्रथमसाधन विशेषणासिद्धम् । तद्विरोधित्वस्याप्रसिद्धेः । न खलु बुभुक्षया निर्मोहस्वभावेन सार्धं विरोधगन्धोऽप्यस्ति । वीतमोहे भगवति वेदनीयकर्मोदयनिबन्धनाया बुभुक्षाया प्रसाधितत्वादिति । दुःखरूपत्वात्यसाधनमप्यनैकान्तिकम् । शीतोष्णबाधया व्यभिचारित्वात् । शीतोष्णबाधा दुःखरूपाऽस्ति च भगवति समस्ति । न च तस्या अपि तत्राऽसम्भव इति

प्रभाचन्द्रकल्पितानां केवलिनि बुभुक्षादि प्रतिक्षेपकानुमानानां खण्डनम् । तथा प्रमेयकमलमार्तण्डे तेनैवोक्तस्य केवली न भुङ्क्ते इत्यस्य खण्डनम् ।

वाच्यम् । एकादशजिने परीषहा इत्यागमविरोधादिति । अनन्तसुखत्वाख्यं तृतीयसाधनमप्यसिद्धम् । निखिलकर्मविप्रमुक्तानां सिद्धानामेव हि तत्सम्भवति नाऽर्हत । तत्राऽसद्वेद्यसम्पादस्य दुःखस्यापि सम्भवात् । चतुर्थमपि क्षुद्दुःखविरोधिवलवदनन्तसुखत्वलक्षणं साधनमसिद्धं अनन्तसुखासम्भवस्य भगवत्यनन्तरमेवाऽभिहितत्वादिति । अत एव पञ्चममपि वेद्यफलविरुद्धानिवर्त्त्यसुखान्वितत्वस्वरूपं साधनमसिद्धमेवेन्यपकर्णनीय सकर्णै. । यदपि स एव प्रमेयकमलमार्तण्डे साधनमभिधत्ते स्म । "केवली न भुंक्ते, रागद्वेषाभावानन्तवीर्यसद्भावान्यथानुपपत्तेः" इति । तदपि न प्रयोजकम् । रागद्वेषाभावानन्तवीर्यसद्भावयोः केवलिनि भुक्त्यभावेन सार्धमन्यथानुपपत्तेरसम्भवात् । भुक्त्यभावमन्तरेणापि स्वकारणनिबन्धनयोस्तयोस्तत्र विरोधाभावात् । विद्यते हि केवलिनि रागद्वेषाभावस्य कारण मोहनीयकर्मप्रलयोऽनन्तवीर्यमद्भावस्य च वीर्यान्तरायकर्मापगम इति । अनन्तत्वं वीर्यस्य पराभ्युपगमेनेह समर्थितम् । असङ्ख्यातत्वस्यैव तत्रागमेऽभिहितत्वादिति । कथं चैवं वादिनोऽस्य केवलिनि वचनगमनादिकमपि घटेत । शक्यं हि वक्तुं न केवली वक्ति न गच्छति न निषीदति च रागद्वेषाभावानन्तवीर्यसद्भावान्यथानुपपत्तेरिति । अथान्यथानुपपत्तिविकलत्वान्नेदं साधनं वचनगमनाद्यभावस्य स्वसाध्यस्य प्रयोजकम् । तथा हि रागद्वेषयोरभावेऽनन्तवीर्यसद्भावेऽपि च तीर्थप्रवर्त्तनफलतीर्थकृन्नामकर्मोदयलक्षणतः स्वकारणादेव भगवति वचनगमनादिकमुपपद्यत एव। अन्यथा तीर्थप्रवृत्तेरुच्छेद एव स्यादिति चेत् । नन्वत एव भवदुपन्यस्तमपि साधनं केवलिभुक्तिप्रतिषेधलक्षणस्य स्वसाध्यस्य प्रयोजकं कथं नाम भवेत् । शक्यमत्रापि ह्येतद्वक्तुं रागद्वेषयोरभावेऽनन्तवीर्यसद्भावेऽपि च दुःखोत्पादफलादसातावेदनीयकर्मोदयलक्षणत. स्वकारणादेव भगवति कवलार्हभुक्तिरुपपद्यत एव । अन्यथा क्षुद्वेदनाप्रतीकार एव न स्यादिति ।

अनन्तवीर्यप्रभृतिप्रणीताः कुहेतवः केवलिभुक्तिसिद्धये ॥
अन्येऽपि ये तेऽपि निवारणीया स्वय सुतर्कोज्ज्वलबुद्धिशौण्डैः ॥४३५॥

यत ,—

मिथ्याभिमानानलदग्धबोधैर्दिगम्बरैः साधमनुद्धुराणाम् ॥
श्वेताम्बराणा कलहातिरेक पदे पदे कातर एव भाति ॥ ४३६ ॥

जिनागमार्थानुगमप्रधान सदर्शिनो यस्त्विह तर्कलेश ॥
स सङ्गतोऽन्यो यदि वेति तत्त्व विचारयिष्यन्त्यनुयोगवृद्धा ॥४३७॥

तन्नैव केवलिभुक्तिकारणस्योपपादितत्वादसिद्धोऽविकलकारणत्वादिति हेतु । नापि विरुद्ध । सपक्षे वर्तमानत्वात् । नाप्यनैकान्तिक । सुरसरणिसरोरुहादेर्विपक्षादत्यन्त व्यावृत्तत्वात् ।

इत्थ प्रत्यावृत्त समस्तदूषणकलङ्कपणतोऽपि ॥
साधनमेतन्नून केवलिभुक्तिं प्रसाधयति ॥ ४३८ ॥

अथ चेदनुमाने केवलिभुक्तौ । विवाद केवली कदाचित्कवलाहारवान्, केवलित्वे सति दीर्घतनुस्थितिमत्त्वात्, य कदाचित्कवलाहारवान्न भवति स न केवलित्वे सति दीर्घतनुस्थितिमान् यथा परमाणु , न च न केवलित्वे सति दीर्घतनुस्थितिमान्विवाद केवली, तस्माद्यथोदितसाध्य-सम्पन्न । अयोगिकृतसमुद्घातकेवलिसिद्धाना पक्षत्वव्यवच्छेदाय विवादग्रहणम । सदा केवलस्याहारवत्त्वप्रसङ्गनिवृत्तये कदाचिदिति साध्यविशेषणम् । दीर्घतनुस्थितिमत्त्वादित्यभिधीयमाने एकेन्द्रियादिवनारकैर्व्यभिचारस्तन्निरासाय केवलित्वे सतीति विशेषणम् । अस्मिन्नेव तु व्याप्रियमाणे सिद्धयोगिभिश्चानैकान्त तत्प्रतिषेधाय दीर्घत्वाद्युपादानम् । एव च—

केवलिभुक्तावनुमानम् ।

अस्मादप्यनुमानात्केवलिभुक्ति प्रयाति सिद्धिपदम् ॥
येनात्राऽपि न किंचिद्दूषणमुपलभ्यते सम्यक् ॥ ४३९ ॥

अपि च । उत्कर्षेण देशोनपूर्वकोटिं विहरतः सयोगिकेवलिनस्ताव-त्कालं शरीरस्थितिर्भुक्तिं विना कथं घटेत । अथाऽनन्तवीर्यत्वात्तां विनाऽप्यस्य तत्स्थितिः । तर्ह्यायुःकर्मणाऽपि विना तत्स्थितिप्रसङ्गान्न कदाचिच्छरीराद्यपायः स्यादिति मोक्षाय दत्तो जलाञ्जलिः । तत्स्थिते-रायुःकर्मापेक्षणे चाहारापेक्षणमप्यस्तु । उभयस्यापि तत्कारणत्वा-विशेषात् । किं च प्रदीपज्वालाजलधारासमानं शरीरम् । तत्र च यथा तैलक्षये सति न प्रदीपज्वालाऽवतिष्ठते जलागमनमन्तरेण वा जलधारा । तथा शरीरमपि भुक्त्यभावे न स्थितिमास्कन्दति । अथ भुक्तिर्दोषो यदुपवासादि प्रत्याख्यानं क्रियते । निर्दोषे च केवलिनि दोषो विरुद्धः । तर्हि निषद्यागमनं चार्हति न प्राप्नोति । स्थान-योगादिना निषद्यादेः प्रत्याख्यानात् । वचनं च न प्राप्नोति । मौनव्रति-कोपलम्भात् । अथ मतमशेषज्ञस्य मांसादिकं पश्यतः कथं भुक्ति-रन्तरायोपपत्तेरिति । एतदप्यनल्पतमोविलसितम् । यतोऽन्तरायक-र्मोदयजन्य परिणामविशेष एवाऽन्तरायशब्देनोच्यते । न च भगवत्यन्त-रायकर्मसम्भवः । प्रक्षीणघातिकर्मत्वात्तस्य । भवतु वा कश्चित्स्व-कल्पनाशिल्पिनिर्मितोऽन्तरायः । तथाप्यवधिज्ञानिभिः परमर्षिभिरने-कान्त । ते हि सकलं त्रैलोक्यं पश्यन्ति, अथ च भुञ्जते । अथ यदैवावधिज्ञानोपयोगमवधिज्ञानी करोति तदैवाऽसाववधिज्ञानी तद्विषय-भूतमशेषं वस्तु पश्यति नाऽन्यदेति भोजनकाले यद्यसावुपयोगं करोति तस्यान्तरायो भवत्येव, न चायं प्रकारः केवलज्ञाने सम्भवति । तस्य सदो-पयुक्तत्वादिति चेत् । एवं तर्हि दिव्यपरमाणुरूपं निरन्तराहारग्रहण-मप्यस्य न प्राप्नोति । सततोपयोगित्वेन निरन्तरमन्तरायसद्भावात् । अपि च महासामायिकपरिणामवतो भगवतः का नाम पिशितादिदर्शने सति भोजनकरणेऽपि करुणायाः खण्डनेऽपि परिभाव्यता मध्यस्थेनाऽ-न्तरात्मना । अथ भुक्तौ जिह्वायां रसप्राप्तेः केवलिनो मतिज्ञानानुषङ्ग

1 ' तत्कालम् ' इति प. पुस्तके पाठः ।

इत्युच्यते । तन वाच्यम् । यतो नेन्द्रियविषयसम्बन्धमात्रेण मतिज्ञानं भवति । किं तर्हि सम्बन्धे मतिज्ञानावरणक्षयोपशमे च सति । एतच्च क्षीणाशेषावरणे केवलिनि नास्तीति न तज्ज्ञानानुषङ्गः । अन्यथा श्रोत्रादीन्द्रियाणां दिव्यध्वनिस्वरेण गणधरदेवादिरूपेण सुगन्धिकुसुमधूपनासादिगन्धेन मरत्सिंहासनस्पर्शेन सम्बन्धेऽपि मतिज्ञानमनुषज्यते । एवं च ।

कवलभुक्तिरियं प्रणयाकुला सकलवेदिनमुज्झितुमक्षमा ॥
क्षपणका किमिमां तु सतीमपि प्रकटयन्ति विरुद्धतया तत ॥४४०॥

विदिता मानसस्या परसमयमता व्योमकेशादिकाना
निधनत्वं व्यपास्त निपुणनयवशादर्हत स्वामिन च ॥
भुक्तिं तस्य ब्रुवन्त क्षपणककुलका गर्विता किञ्चिदेते
नाराभेदप्रभेदे परिकरितमत सिद्धसध्यक्षमत्र ॥४४१॥

श्रीमानस्मानतस्त्र स जिनपरिवृढ सुनत सुव्रताख्य
पायादानास्रवत्स्फुटमुकुटतटीकोटिघृष्टाङ्घ्रिपीठ ॥
समारक्षारपाथ पतिपतिनिजनोच्चारण यस्य काम
कुर्वाणस्यैव कान्ते वपुषि परिणता श्यामिका कान्तिरस्ति ॥४४२॥

मदयक्षुपरतुङ्गश्रृङ्गविमर द्रष्यत्कुनद्रे उर
नश्यद्दिक्करटिस्फुटनिनिनद क्षुभ्यन्महाम्भोनिधि ॥
वामाङ्गुष्ठविघट्टनेन झटिति स्वर्णाचले दोलिते
येनेदं जगदीश्वरं समगदज्ञीयात्स वीरो जिन ॥ ४४३ ॥

---

१ दर्शित प म पुस्तकयो पाठ । २ अनुगम्यानन्यानाम्भिर्धगद भरतादिग्रन्थ । ३ भवदादिस्थान प म पुस्तकयो पा ।

४ तत्र दिगम्बर प्राह यथा लाभनमिदम्यम् ।
प्रभुरासवादपि माथा जना नेमजिनस्त्रु ॥ १ ॥
यश्चेदाज्ञे धर्म शुपादौ नैन्यविना ।
अवाद्यता पर्व्याषु गर्धैरिन्नगा ॥ २ ॥

येषां कर्कशतर्कतर्कणकलाप्रागल्भ्यसम्पादिका-
मभ्यस्यन्ति सुशास्त्रसंहतिमिह प्राज्ञाः प्रमोदाञ्चिताः ॥
सिद्धान्तामृतसिन्धुतारणतरीतुल्यान्निबन्धांश्च ते
श्रीमन्तो मुनिचन्द्रसूरिगुरवः शश्वत्प्रसीदन्तु नः ॥ ४४ ॥

---

शक्रादेश तत. सोच्चै सुरेभ्यो ज्ञापयत्स्वयम् ।
तेन प्रमुदिता देवाश्चलनोपक्रम व्यधुः ॥ ३ ॥
पालकाख्यामरकृत लक्षयोजनसम्मितम् ।
विमान पालक नामाऽभ्यारोहत् त्रिदशेश्वरः ॥ ४ ॥
अन्यैरपि घनैर्देवैर्वृत. सिंहासनास्थित. ।
गीयमानगुणोऽचालीदपरेऽपि सुरास्ततः ॥ ५ ॥
देवेन्द्रशासनात्केचित्केचिन्मित्रानुवर्तनात् ।
पत्नीभिः प्रेरिता. केचित्केचिदात्मीयभावतः ॥ ६ ॥
केऽपि कौतुकत. केऽपि विस्मयात्केऽपि भक्तितः ।
चेलुरेव सुराः सर्वे विविधैर्वाहनैर्वृताः ॥ ७ ॥
विविधैस्तूर्यनिर्घोषैर्घण्टाना क्वणितैरपि ।
कोलाहलेन देवाना शब्दाद्वैत तदाऽजनि ॥ ८ ॥
नन्दीश्वरे विमानानि सक्षिप्याऽगात्सुराधिप. ।
जिनेन्द्र च जिनाम्बा च त्रि प्रदक्षिणियत्तत. ॥ ९ ॥
वन्दित्वा च नमस्यित्वेत्येवं देवेश्वरोऽवदत् ।
नमोऽस्तु ते रत्नकुक्षिधारिके ' विश्वदीपिके ' ॥ १० ॥
अह शक्रोऽस्मि देवेन्द्र. कल्पादाद्यादिहागमम् ।
प्रभोरन्तिमदेवस्य करिष्ये जननोत्सवम् ॥ ११ ॥
भेतव्य देवि ' तन्नैवेत्युक्त्वावस्वापिनीं ददौ ।
कृत्वा जिनप्रतिबिम्बं जिनाम्बासन्निधौ न्यधात् ॥ १२ ॥
भगवन्त तीर्थकर गृहीत्वा करसम्पुटे ।
विचक्रे पञ्चधा रूप सर्वश्रेयोऽर्थिक. स्वयम् ॥ १३ ॥
एको गृहीततीर्थेश. पार्श्वे द्वौ चात्तचामरौ ।
एको गृहीतातपत्र एको वज्रधर. पुन. ॥ १४ ॥
अग्रग. पृष्ठग स्तौति पृष्ठस्थोऽग्रग पुन' ।
नेत्रे पश्चात्समीहन्ते केचनाग्रेतनाः सुरा. ॥ १५ ॥
शक्र सुमेरुशृङ्गस्थ गत्वाऽथो पाण्डुकं वनम् ।
मेरुचूलादक्षिणेनातिपाण्डुकम्बलासने ॥ १६ ॥

इति श्रीललितविस्तरापुण्ययुनिपीयूषोद्यन्त्रायमाणधिषणापहस्तित-धिषणनिखिलनैष्ठिकाग्रचूडश्रीमन्मुनिचन्द्रसूरिपादपङ्कजमञ्जुरसोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे प्रत्यक्षमूलभेदोत्तरभेदस्वरूपनिर्णयो नाम द्वितीयः परिच्छेदः ॥ २ ॥

---

इन्द्रोत्सङ्गे जिन पूर्वाभिमुखोऽसौ निषीदति ।
समस्ता अपि देवेन्द्रा स्वामिपादान्तमैयरु ॥ १७ ॥
सौवर्णा राजता रात्ना स्वर्णरूप्यमया अपि ।
स्वर्णरत्नमयाश्चापि रूप्यरत्नमया अपि ॥ १८ ॥
स्वर्णरूप्यरत्नमया अपि मृत्स्नामया अपि ।
कुम्भा प्रत्येकमष्टाढ्य सहस्र योजनानना ॥ १९ ॥
क्षीरनीरघटैर्देवैः स्थलस्थैस्त्रिदशा बभु ।
ससारौघ हरीतु द्राक् धृतकुम्भा इव स्फुटम् ॥ २० ॥
सिञ्चन्त इव भावद्रु निपन्तो वा निज मलम् ।
कलश स्थापयन्तो वा धर्मचैत्ये सुरा बभु ॥ २१ ॥
सशङ्कं त्रिदशेशस्य मत्वा वीरोऽमराचलम् ।
वामाङ्गुष्ठाग्रसम्पर्कात्समन्तादप्यचीचलत् ॥ २२ ॥
कम्पमाने गिरौ तत्र चकम्पेऽथ वसुन्धरा ।
शृङ्गाणि सर्वत पेतुश्चुक्षुभु सागरा अपि ॥ २३ ॥
ब्रह्माण्डस्फोटसदृशे शब्दाद्वैते प्रसर्पति ।
रुष्ट शक्रोऽवधेर्ज्ञात्वा क्षमयामास तीर्थपम् ॥ २४ ॥
सख्यातीनार्हतां मन्ये स्पृष्ट केनापि नाङ्घ्रिणा ।
मेरु कम्पमिषादित्थ मानन्दादिव ननर्त स ॥ २५ ॥
शैलसु राजता मेऽभूत् स्नाननीराभिषेचन ।
तेनाऽमी निर्जरा हारा स्वर्णपीठो जिनस्तथा ॥ २६ ॥
तत्र पूर्वमच्युतेन्द्रो विदधात्यभिषेचनम् ।
ततोऽनुपरिपाटितो यावच्चन्द्रार्यमादय ॥ २७ ॥

कल्पसूत्रे व्या ५ सू ९७

१ ‘धर्नाथक्रमसुन्दराननसुधारोचिस्समुज्जृम्भित
सद्योगीन्द्रनिरङ्कुशद्वन्द्वयोर्द्विव्यतमरोमाञ्चनम् ॥
नानातत्त्वविचारसारविलसद्गुणादिगोमासुनम्
शास्त्राम्भोजमिदं जयत्वनुदिनं सद्वाद्यहर्मानिनाम् ॥ १ ॥’

इत्यधिक स पुस्तके प्राप्तिम् ।

---

# शुद्धिपत्रकम् ।



| अशुद्ध | शुद्ध | पृ | प | अशुद्ध | शुद्ध | पृ | प |
|---|---|---|---|---|---|---|---|
| सहस्र | सहस्र | २३४ | ४ | देशा | देश्यो | ३३ | १७ |
| द्वैध्य | द्वैविध्य | २७० | १६ | वाधि | वावि | ३३१ | २१ |
| मव | मव | २७४ | १४ | लम्म । | लम्म | ३३२ | ९ |
| सूर्ये | सूर्यै | २७७ | ९ | कार | कारा | ३३४ | २३ |
| वयाथि | वायि | २८० | १० | श्रोत्रण | श्रोत्रेण | ३३५ | ८ |
| अस्थार्थ | अस्याथ | २८० | १५ | वर्ती | वति | , | १ |
| आभाव | अभाव | २८२ | १२ | मनिरी | मानिनी | , | १२ |
| न्गादि | द्रवादि | २८३ | ३ | विशेप | विशेषै | , | १६ |
| पेक्षयास्तस्या | पेक्षायास्तस्या | २८७ | ४ | दात्रे | पात्रै | ३३८ | २० |
| स्प | स्प | २८७ | २४ | वष्द्र | वद्रूव | ३४१ | १६ |
| नियाविद | किया विद | २९४ | १० | पुरु | पुरु | ३४२ | १५ |
| दाह्यता पर | दाह्यतापर | २९६ | २४ | जैमिनी | जैमिनीय- | ३४२ | २५ |
| स्मरस्या पुनर | नरस्या पुनर | २९७ | १७ | कारिका | रिका | ३४६ | ११ |
| मान शक्ति | मानशक्ति | २९८ | १५ | यथा | याया | ४८ | ९ |
| घन | धन | २९९ | २० | शुद्ध | शुद्ध | ३४९ | २६ |
| त्मव | त्येव | ३०० | २४ | धारणा | धारणा | ३५० | ३ |
| व्याभि | व्यभि | ३०२ | ८ | स्याम्र | स्या म्र | ३५० | ७ |
| प्रथा | वधा | ३ २ | १८ | तथाव्य | तथा व्य | ३५० | १२ |
| यहि | वहि | ३ ९ | १० | दीना | दानां | ३५१ | १४ |
| भावा | भावा | ३१२ | ८ | वडम्र | वस्र | ३५२ | ८ |
| चे | च | ३१२ | ९ | तथा क्र | तथाक्र | , | २३ |
| मिंम | मिंत्र | ३१३ | १० | शतपत्र | पत्रशन | ३५३ | ११ |
| प्रद्वत्त | प्रवर्त | ३१५ | १८ | पर | पार | | २२ |
| भर्वऽ | सर्वे | ३१६ | ८ | उत्तर | उत्तर | ३५४ | २४ |
| वैलय | वैराग्य | ३१७ | १५ | णाना | णानां | ३५५ | १३ |
| भक्ता | भक्ता | ३२२ | ६ | दवे | देव | ३५५ | २५ |
| पाद | पादन | , | ७ | विघस्त | विघस्त | ३५७ | २४ |
| रत्नय | रत्नमय | ३२३ | १३ | दरण | दरण | ३५८ | २१ |
| चशुप | चक्षु | ३२४ | ५ | सन्व | सम्व | ३६० | २१ |
| प्रात | प्रति | ३२५ | २० | भुत | श्रुत | ३६२ | २ |
| पाया निष्व | पायोनिष्व | ३२७ | १८ | विया | द्विय | ३६७ | ४ |
| सेजो | सेजा | ३२७ | २ | क्षणा | क्षणा | ३७३ | १७ |

| अशुद्धं | शुद्धं | पृ. | पं. |
|---|---|---|---|
| दृर्मे | धर्मे | ३७६ | १० |
| र्यीय | र्तीय | ३७७ | २ |
| भित | भिमत | ३७८ | १ |
| यात् | यात् । | ,, | २ |
| स्त्वय्येव | स्त्वय्येव | ३८१ | १२ |
| प्यऽस्मि | ष्यास्मि | ३८२ | २३ |
| व्येत् | व्येत | ,, | १५ |
| नोत्थे | नोत्थे- | ,, | २२ |
| प्यऽस्मि | प्यास्मि | ३८२ | २३ |
| लम्भीं | – ा | ३८५ | ९ |
| लम्य | -- | ३८५ | ११ |
| ज्ञाना । | ज्ञ ना | ३८६ | १० |
| पा | प | ३८६ | १६ |
| ताया | ताया | ३८६ | १८ |
| भिति | मति | ,, | २१ |
| वनम् | वनम् । | ,, | २५ |
| नेन | नेव | ३८८ | १६ |
| स्तात्र | स्तत्रि | ३९० | ९ |
| प्राते | प्रातये | ३९२ | ५ |
| र्हम् | र्हन् | ३९२ | २० |
| पतृ | पत्तृ | ३९६ | ४ |
| व भूता | वभूता | ३९७ | २ |
| श्रेय | श्रेयस | ४०३ | २३ |
| चेति । | चेति | ४०५ | १२ |
| त. पात् | तस्पात् | ४१० | २५ |
| ते न | तेन | ४११ | ८ |
| वादी | वादि | ४१२ | ३ |
| कत्वा | यकत्वा | ,, | ६ |
| दोपः। | दोपः | ,, | १२ |
| शपे | शेप | ४१६ | २४ |
| मिर्नी | मिर्ना | ४१८ | १ |
| भूतत्वा | भूत्वा | ४१८ | १५ |
| न्ताम् | ताम् | ४२४ | ४ |

| अशुद्धं | शुद्धं | पृ. | पं. |
|---|---|---|---|
| धुम | धूम | ४२६ | १६ |
| पस्तके | पुस्तके | ४२७ | २७ |
| वृमत्वा | वूमन्व | ४३१ | २ |
| एवं | एव | ४३१ | ६ |
| तेति । | तेति | ४३४ | ३ |
| तुप | तुपा | ४३७ | १५ |
| धम्मों | धर्मो | ,, | २४ |
| शान्त | शान | ४४१ | ५ |
| नानादि | नादि | ४४३ | १८ |
| णर | रण | ४४५ | २१ |
| झ्य भा | ज्यभा | ४४६ | १२ |
| सह कारि | महकारि | ४४७ | ७ |
| त्य भू | त्यभू | ४४९ | ७ |
| स्यदि | स्यादि | ४४९ | १८ |
| दशम | दश म | ४५२ | २२ |
| यौंग | यौग | ४५५ | ११ |
| खाणा | खाना | ४५८ | १८ |
| रागा | रगा | ४६० | २४ |
| ज्ञत्व | ज्ञत्व | ४६१ | १८ |
| था स | थास | ४६३ | ५ |
| ना वि | नावि | ४६३ | २६ |
| मिथा | भिथा | ४६७ | ११ |
| मिथ्य | सिद्ध्य | ४७२ | २ |
| ऽनो | नोऽ | ४७२ | १४ |
| दर्गव | दर्गध | ४७५ | १५ |
| मुर्च्छा | मूर्च्छा | ,, | १५ |
| तथ | तथा | ४७६ | १४ |
| वल्या | वत्स्या | ४७६ | १५ |
| प्राक्ते | प्रोक्त | ४७७ | ३ |
| वान्त | वानन्त | ४७८ | ८ |
| लम्भा | लम्भा | ४८० | १२ |
| नाम्र | नम्र | ४८१ | १४ |

आर्हतमतप्रभाकरस्य
चतुर्थो मयूख

श्रीमद्वादिदेवसूरिविरचित'

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः

---

पुण्यपत्तनस्थ
ओसवालवशजश्रेष्ठिलाधानीतनूजमोतीलाल इत्येतै टिप्पणी-
भिरुपोद्घातेन च परिष्कृत्य सशोधित ।

यह ग्रथ श्री रतनाजी रुगनाथजी शिलदर,
(जि सिरोही-मारवाड) वाले तरफ से भेट

वीरसवत् २४५४

प्रथमेयमङ्कनावृत्ति ।

मूल्य रूप्यकद्वयम् ।

इदं पुस्तक ' मोतीलाल लाधाजी ' इत्येतैः पुण्यपत्तने ( १९६ भवानी पेठ ) प्रकाशितम् । ( अस्य सर्वेऽधिकाराः प्रकाशकेन स्वायत्तीकृताः )
तच्च,
पुण्यपत्तने सदाशिवश्रेण्या ' लक्ष्मण भाऊराव कोकाटे ' इत्यनेन स्वकीये ' हनुमान प्रिंटिंग प्रेस ' मुद्रणालये मुद्रितम् ।



वागड (कच्छ) देशोद्धारक दादा श्री जीतविजयजी महाराजना प्रशिष्य
प्रातःस्मरणीय शान्तमूर्ति परमपूज्य आचार्यदेव
श्री विजयकनकसूरीश्वरजी महाराज

श्री

# प्रास्ताविक किंचित् ।

वीर सर्वसुरासुरेन्द्रमहितो वीर बुधा सश्रिता
वीरेणाभिहत स्वकर्मनिचयो वीराय नित्य नम ॥
वीरात्तीर्थमिद प्रवृत्तमतुल वीरस्य घोर तपो
वीरे श्रीधृतिकीर्तिकान्तिनिचय श्रीवीर ! भद्र दिश ॥ १ ॥

आर्हतमतप्रभाकरस्यायाश्चतुर्थो मयूख स्याद्वादरत्नाकराभिध शासनदेवकृपया प्रकाश्यते । सोऽय ग्रन्थ (८४०००) चतुरशीतिसहस्रग्रन्थसख्यात्मको निरमायि श्रीवादिदेवसूरिभिरिति कर्णपरम्परात समागता प्रथिति । बहुश प्रयतमानैरस्माभिस्तत्तज्जैनाचार्याणा सूरीणा च कृपया लम्भि सप्तपरिच्छेदात्मको भागो ग्रन्थराजस्यास्य । अस्य मुद्रापितग्रन्थान्तरक्रमेण समुद्यते चेदय तर्हि व्याप्नुयाद् द्वादशशतीं पृष्ठानामिति सभाचयाम । सपूर्णो ग्रन्थ एकस्मिन् विभागे सग्रथ्यते चेद्गौरवं वैरस्याय पिपठिषूणामतो विभागश समुद्य प्रकाशयितुमारब्ध एष । तत्र प्रथमो भाग प्रथमपरिच्छेदात्मको द्वितीयो द्वितीयपरिच्छेदात्मकश्च मुद्रित । अयं च तृतीयो विभाग । प्राय इयतैव प्रमाणेन भागान्तराणा प्रत्येक प्रतिमास मुद्रण स्यादिति समीहामहे । ग्रन्थराजोऽय बौद्धयोगादिमताना परामर्शकोऽतोऽध्ययनाध्यापनार्हो न केवल स्याद्वादमतानुयायिना किन्तु भिन्नमतस्थानामपि स्याद्वादमतजिज्ञासूनाम् । अत पूर्वमयूखवदस्यापि मूल्याल्पत्वपरिशिष्टविस्तारग्रन्थान्तरीय परिचयादिक सविस्तरमादृतम् । सन्ति चास्य ग्रन्थस्य द्वादशपरिशिष्टानि । किन्तु परिशिष्टादिकमन्तिमे विभाग एव मुद्रयितुमर्हम् । अग्रेतनपत्राणा मुद्रयिष्यमाणाना निर्देशस्य पूर्व कर्तुमशक्यत्वात् । केवल टिप्पन्यादिकमर्थावसायोपयोगि तत्तत्स्थलेऽधोभागे निरदेशि । प्रतिपत्र पङ्क्त्यङ्का निर्दिष्टा येषामुपयोग परिशिष्टदर्शनसौकर्याय । अन्यच्च पुस्तकाना पत्रात्मकत्व न धनमस्तु न पत्रात्मकमिति सूचयन्ति केचिन्महाभागा पर तद्याचिको प्रादर्श स्वयमनुष्ठेयम् । अस्माभिस्तथा सपादने येनाभिमतस्तदर्थं द्रव्याधिक्य व्ययस्ते मुधैव पीडितचेतसो भवेयुरिति यथापूर्व सर्पणरादृता । इति विनिवेदक ।

आर्हतमतप्रभाकरकार्यालय पुण्यपत्तनम् ।
वी स २४५४ मौनैकादशी ।

विद्वद्वशवद —
मोतीलाल लाधाजी

# ॥ अथ तृतीयः परिच्छेदः ॥

ये त्वां तीर्थपते स्मरन्ति सुधियस्ते स्वान्ता क्षमामण्डन
ये त्वां दिव्यविलोचन प्रतिदिनं पर्युपासते सर्वग ॥
ये त्वां नाथ वितर्कयन्त्यनलसा ये वाऽनुमिन्वन्ति ते
मुच्यन्ते दुरितैस्ततो वयमपि त्वां देव सेवामहे ॥ ४४५ ॥

निर्णीतं प्रत्यक्षप्रमाणस्वरूपम् । अथ परोक्षप्रमाणस्वरूपनिरूपणायाह—

## अस्पष्टं परोक्षमिति ॥ १ ॥

स्वपरव्यवसायिज्ञानं यत्स्पष्टमुक्तलक्षणात्स्पष्टाद्विपरीतमविशदं तत्परोक्षमित्यवगन्तव्यम् । तथा च प्रयोगः, परोक्षमस्पष्टज्ञानात्मकं परोक्षत्वात्, यत्स्पष्टज्ञानात्मकं न भवति न तत्परोक्षम्, यथा प्रत्यक्षम्, परोक्षं च वक्ष्यमाणं स्मृत्यादिविज्ञानम् । तस्मादस्पष्टज्ञानात्मकमिति ॥ १ ॥

अथास्य प्रकारान्प्रकटयन्नाह—

## स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चप्रकारमिति ॥ २ ॥

स्मरणं च प्रत्यभिज्ञानं च तर्कश्चानुमानं चागमश्च त एव भेदास्तेभ्यस्तत्प्रतीयेयथ । तत्परोक्षं पञ्चप्रकारमिति ॥ २ ॥

सम्प्रति स्मरणं कारणगोचरस्वरूपतो निरूपयति—

## तत्र संस्कारप्रबोधसम्भूतमनुभूतार्थविषयं तदित्याकारं वेदनं स्मरणमिति ॥ ३ ॥

---

१ 'इतविध यज्ञानं' इति म संगृहीत पाठः ।

तत्र तेषु स्मरणादिषु मध्ये । संस्कारः प्रमातुः शक्तिविशेषस्तस्य प्रबोध उद्बोधः फलदानाभिमुख्यमिति यावत् । तस्माद्धेतुभूतात्संभूतमुत्पन्नं वेदनमित्युत्तरेण योगः । कीदृशमित्याह । अनुभूतार्थविषयम् । अनुभूत प्राक्प्रमाणेन प्रतिपन्नोऽर्थो वस्तु विषयो गोचरो यस्य तत्तथा, तदित्याकारं तदित्युल्लेखवत् । तदित्युल्लेखवत्ता चास्य योग्यतापेक्षयाख्यायि । यावता स्मरसि चैत्र कश्मीरेषु वत्स्यामस्तत्र द्राक्षा भोक्ष्यामह इत्यादिस्मरणे तच्छब्दोल्लेखो नोपलक्ष्यत एव, किन्त्विदं स्मरणं तेषु कश्मीरेष्विति तच्छब्दोल्लेखमर्हत्येवेति । वेदनं स्मरणमिति स्पष्टार्थे पदे । संस्कारप्रबोधसम्भूतमित्यनेनात्र स्मरणस्य कारणमुपदर्शितम् । अनुभूतार्थविषयमित्यनेन गोचरः । तदित्याकारमित्यनेन पुनः स्वरूपमिति ॥ ३ ॥

अत्रोदाहरणमुपदर्शयन्नाह—

## तत्तीर्थकरबिम्बमिति यथेति ॥ ४ ॥

यथेत्युदाहरणोपन्यासार्थम्, इत्येवंप्रकारं तच्छब्दपरामृष्टं यद्विज्ञानं तत्सर्वं स्मरणमित्यर्थः ।

स्मृतिप्रामाण्यमङ्गीकुर्वतो बौद्धस्य पूर्वपक्षमुत्थाप्य तत्खण्डनम् ।

स्वपरव्यवसायित्वात्प्रमाणं चेदमञ्जसा ॥
अप्रामाण्यं पुनर्बौद्धो ब्रुवन्नस्य न तार्किकः ॥ ४४६ ॥

तथा हि—अमुष्याप्रामाण्य कुतोऽयमाविष्कुर्वीत, किं गृहीतार्थग्राहित्वात्परिच्छित्तिविशेषाभावादसत्यातीतेऽर्थे प्रवर्त्तमानत्वादर्थादनुत्पद्यमानत्वाद्विसंवादकत्वात्समारोपाव्यवच्छेदकत्वात्प्रयोजनाप्रसाधकत्वाद्वा । न तावद्गृहीतार्थग्राहित्वात्स्मरणस्याप्रामाण्यम् । अनुमानेनाधिगते वह्नौ तदुत्तरकालभाविनः प्रत्यक्षस्याप्यप्रामाण्यप्रसङ्गात् । अनुमानस्यापि केनचिदंशेनाधिगतार्थाधिगमसम्भवेनाप्रामाण्यानुषङ्गाच्च, व्याप्तिज्ञानप्रतिपन्ने हि वस्तुन्यनुमानं प्रवर्त्तत इति । अथाऽधिगताऽर्थाऽधिगमेऽप्यनु-

अस्योदाहरणोपदर्शनायाह—

**यथा तज्जातीय एवाय गोपिण्डो गोसदृशो गवयः स एवाय जिनदत्त इत्यादीति ॥ ६ ॥**

अत्र तज्जातीय एवाय गोपिण्डो गोसदृशो गवय इत्याभ्या तिर्यक्सामान्यविषय स एवाय जिनदत्त इत्यनेन पुनरूर्ध्वतासामान्यविषय प्रत्यभिज्ञानमुदाहृतम् । तिर्यक्सामान्यविषय च गोसदृशो गवय इत्युदाहरणान्तरमुपमानप्रमाणस्यात्रैवान्तर्भावप्रदर्शनार्थमुपदर्शितम् । आदिशब्दात्स एवानेनाप्यर्थ कथ्यते गोविलक्षणो महिष इदमस्माद्दूरमिदमस्य समीपमिदमल्पमिद महदिदमस्मात्प्राशु ह्रस्व वेत्यादि । तथा—

शुण्डालदण्डपृथुगण्डतटीकराल-
मापिङ्गलस्फुटसटाविकटांसकूटम् ।
अष्टाभिरङ्घ्रिभिरुपेतमतीव भीष्म-
माहुर्बुधा शरभमद्भुतशौर्यवृत्तिम् ॥ ४४८ ॥

स्कन्धे सटाश्चरणकोटिषु कुञ्जरेन्द्र-
कुम्भस्थलीदलनदुर्ललितानि यस्य ॥
क्वापि प्रपश्यति भवान्नखपञ्जराणि
जानातु त जगति केसरिण विशारम् ॥ ४४९ ॥

गण्डस्थलीप्रविगलन्मदगन्धलुब्ध
मुग्धप्रमद्भ्रमरभूषितकर्णजाहम् ॥
दुर्वारदन्तमुशल चलगण्डशैल-
शङ्काकर द्विरदमामुदाहरन्ति ॥ ४५० ॥

आलोक्य कज्जलमलीमसमेघमाला-
मभ्युन्नता वियति यो नरिनर्ति दर्पात् ॥
केकायितानि कुरुतेऽम्बुजलभ्रुते च
धत्ते दृशौ शिखिनमेनमुशन्ति सन्त ॥ ४५१ ॥

आताम्रचञ्चुचरणं सवलक्षपक्षं
क्षीराम्बुसङ्करविवेककलाप्रगल्भम् ॥
मञ्जीरमञ्जुपरिशिञ्जितमन्दनादं
जानीहि मन्थरगतिं बत राजहंसम् ॥ ४५२ ॥

यो मञ्जु मञ्जु परिगुञ्जति मञ्जरीणा
किञ्जल्कपुञ्जरजसा कपिशीकृताङ्गः ॥
नीलीतमालदलकज्जलकालकान्तिः
षड्भिर्भवेन्मधुकरश्चरणैः स नूनम् ॥ ४५३ ॥

या खिद्यते प्रतिपदं स्वनितम्बभारात्
त्रस्तैकहायनकुरङ्गविलोलनेत्रा ॥
उत्तुङ्गपीनकुचकुम्भनिरङ्कुशा ता
सीमन्तिनीं युवतिरित्युपवर्णयन्ति ॥ ४५४ ॥

यद्व्योम संरचयति स्फुरदिन्द्रचाप-
रोचिष्णु चित्ररचनारुचिरं समन्तात् ॥
विस्तारिणा स्वकिरणप्रसरेण पञ्च-
वर्णेन तद्भवति मेचकमत्र रत्नम् ॥ ४५५ ॥

ताम्राणि यस्य विलसन्ति सुपल्लवानि
चुम्बन्ति चारुकुसुमानि च चञ्चरीकाः ॥
वाचालितं विपुलकोकिलकाकलीभि-
र्बुध्यस्व हन्त सहकारमहीरुहं तम् ॥ ४५६ ॥

इत्येवमादिशब्दश्रवणादाहितसंस्कारविशेषः, प्रतिपत्ता तथाविधानेव शरभसिंहादीनवलोक्य तथा सत्यापयति यदा तदा तत्संकलनमपि प्रत्यभिज्ञानोदाहरणमादर्शितं मन्तव्यम् ।

अत्राह शाक्यः—

मानस्यापूर्वस्याप्यर्थांशस्याधिगमसम्भवात् प्रामाण्यमिष्यते । हन्त कथमेव स्मरणस्यापि प्रामाण्यं न स्यात् । तत्रापि वर्तमानकालावच्छेदेनाधिगतस्यार्थस्यातीतकालावच्छेदेनाधिगतेरपूर्वार्थाधिगमोपपत्तेः । समर्थितं चैतत्प्रथमपरिच्छेदे गृहीतार्थग्राहित्वेनापि नान्यस्य प्रामाण्यम् । तन्न गृहीतार्थग्राहित्वात्स्मरणस्याप्रामाण्यम् । नापि परिच्छित्तिविशेषाभावात् । निहितमन्त्रिताधीतादौ हानोपादानहेतौ परिच्छित्तिविशेषस्य स्मरणे सद्भावात् । नाप्यसत्यनीतेऽर्थे प्रवर्तमानत्वात्तस्याप्रमाणता, यतोऽमीतस्यार्थस्य स्वकालेऽसत्त्वं स्मृतिकाले वा । न तावत्स्वकाले, तदा तस्य विद्यमानत्वात् । स्मृतिकाले तु तस्यासत्त्वे नाप्रामाण्यं प्रत्यक्षम् । प्रत्यक्षस्याप्यप्रामाण्यप्रसक्तेः । न हि प्रथमग्राह्योऽर्थः प्रत्यक्षकाले सौत्रान्तिकैः सत्त्वेनाभ्युपगम्यते । "भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ॥ हेतुत्वमेव युक्तिज्ञास्तदाकारार्पणक्षमम् ॥ १ ॥" इत्यस्य विरोधानुपङ्गात् । एकान्ततोऽसत्यर्थे स्मरणमुत्पद्यत इति न नः पक्षः । अथानुत्पद्यमानत्वं च स्मरणस्यासिद्धम् । स्वविषयभूतादनुभूतादर्थादुत्पद्यमानत्वात् । विसंवादकत्वमपि स्मरणस्याप्रसिद्धम् । स्वप्रतिपन्ने वस्तुन्यविसंवादकत्वात्तस्य । अविसंवादे हि गृहीतार्थे प्राप्तिः प्रमाणान्तरप्रवृत्तिर्वा स्यात् । स द्विविधोऽपि स्मृतिप्रतिपन्ने स्वयं धृतद्रव्यादावर्थे समस्त्येव । यत्र तु विसंवादः स स्मरणाभासः । प्रत्यक्षाभासवत् । समारोपव्यवच्छेदकत्वमपि स्मरणस्यासिद्धम् । स्वविषयभूते साध्यसाधनसम्बन्धे तस्य समारोपव्यवच्छेदकत्वसम्भवात् । अन्यथाऽनुमाने दृष्टान्ताभिधानानर्थक्यापत्तिः । साध्यसाधनसम्बन्धस्मरणार्थं हि तत्र दृष्टान्ताभिधानम् । इतरथा हेतुरेव केवलोऽभिधीयेत । ततस्तदभिधानान्यथानुपपत्तेः स्मृतिविषयभूते सम्बन्धार्थे विस्मरणसंशयविपर्ययरूपः समारोपोऽस्तीत्यवगम्यते । तद्व्यवच्छेदकत्वाच्च स्मरणस्य प्रामाण्यम् । प्रयोगः, यत्समारोपव्यवच्छेदकं तत्प्रमाणम्, यथानुमानम्, समारोपव्यवच्छेदकं च स्वप्रतिपन्नेऽर्थे स्मरणमिति ।

प्रयोजनाप्रसाधकत्वात्स्मरणस्याप्रामाण्यमित्यप्यनुपपन्नम् । अनुमानप्रवृत्तिनिहितप्राप्त्यादिलक्षणस्य तत्साध्यप्रयोजनस्य सद्भावात् । अनुमानं हि साध्यप्रतिबद्धाद्धेतोः प्रवर्त्तते । साध्यप्रतिबन्धश्च हेतोः सत्तामात्रेणानुमानप्रवृत्तेरङ्गं परिज्ञातो वा स्मृतिकोटीकृतो वा । प्रथमपक्षे नालिकेरीद्वीपायातस्याप्रतिपन्नाग्निधूमसम्बन्धस्यापि धूमदर्शनादग्निप्रतिपत्तिः स्यात् । द्वितीयपक्षे तु बालावस्थायां प्रतिपन्नाग्निधूमसम्बन्धस्य पुनर्वृद्धावस्थायां विस्मृततत्सम्बन्धस्यापि धूमदर्शनादग्निप्रतिपत्तिप्रसङ्गः । तृतीयपक्षे तु कथं स्मरणस्य प्रामाण्यप्रतिषेधः । अनुमानप्रवृत्तेरङ्गत्वात् । यज्ज्ञानमनुमानप्रवृत्तेरङ्गं तत्प्रमाणं यथा प्रत्यक्षं, तथा च स्मरणम्, तस्मात्प्रमाणमिति । एवं च ।

अन्यप्रमाणमिव सिद्धमिदं प्रमाणं
न्यायोपदेशवशतः स्मरणं यतोऽत्र ॥
दत्तो गृहप्रभृतिको व्यवहार एष
प्राप्नोति सिद्धिपदवीमनिशं जनानाम् ॥ ४४७ ॥ ४ ॥

अथ क्रमप्राप्तस्य प्रत्यभिज्ञानस्य कारणादिप्ररूपणार्थमाह—

**अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादिगोचरं संकलनात्मकं ज्ञानं प्रत्यभिज्ञानमिति ॥ ५ ॥**

अनुभवश्च प्रमाणेन ग्रहणम् । स्मृतिश्चानन्तराभिहितैव । अनुभवस्मृती ते हेतुर्यस्य तदनुभवस्मृतिहेतुकं ज्ञानमित्युत्तरेण योगः । अनेन प्रत्यभिज्ञानस्य कारणमुक्तम् । सामान्यशब्दस्य प्रत्येकमभिसम्बन्धात्तिर्यक्सामान्यं च गवादिषु सदृशपरिणामात्मकम् । ऊर्ध्वतासामान्य च परापरविवर्तव्यापि द्रव्यम् । एतदुभयमादिर्यस्य वैलक्षण्यादेर्धर्मस्तोमस्य स तिर्यगूर्ध्वतासामान्यादिगोचरो विषयो यस्य तत्तथा । अनेनास्य विषयो निर्दिष्टः । सङ्कलनं विवक्षितधर्मयुक्तत्वेन वस्तुनः प्रत्यवमर्शनमात्मा स्वभावो यस्य तत्सङ्कलनात्मकमिति । अनेन स्वरूपमभिहितम् । एवंविधविशेषणविशिष्टं यज्ज्ञानं तत्प्रत्यभिज्ञानमिति विज्ञेयम् ॥ ५ ॥

प्रत्यभिज्ञानमस्वीकुर्वतो बौद्धस्य पूर्वपक्षमुपन्यस्य तत्खण्डनम् ।

विज्ञानस्य प्रत्यभिज्ञाननाम्न
सम्यमुक्त्या नास्ति सत्त्व तावत् ॥
या त्वस्यैषा मानतारणना सा
वान्ध्येयस्योद्भश्रृङ्गारभङ्गि ॥ ४१७ ॥

तथा हि विरुद्धधर्माध्यासत कारणाभावाच्च प्रत्यभिज्ञानस्य स्वरूपमेव न सम्भवति । तत्कथ तस्य प्रामाण्य प्रतिपादयितुमुचितम् । पूर्वं हि ज्ञातस्य पुन कालान्तरे स एवायमित्यादि ज्ञान प्रत्यभिज्ञानम् । न चास्यैकत्वमुपपन्नम् । विरुद्धधर्माध्यासात । यत्र हि विरुद्धधर्माध्यासो न तत्रैक्यम् । यथा जलानलादौ । विरुद्धधर्माध्यासश्च प्रत्यभिज्ञान इति । न चायमसिद्ध स्पष्टास्पष्टरूपाकारान्ततया प्रत्यभिज्ञाने विरुद्धधर्माध्यासस्य प्रसिद्धे । तथा हि, स इत्युल्लेख प्रत्यभिज्ञाने स्मरणरूपत्वेनास्पष्ट । अयमित्युल्लेखश्च प्रत्यक्षरूपत्वेन स्पष्ट । न चास्पष्टेतरलक्षणविरुद्धधर्मलक्षणविरुद्धधर्माध्यासेऽप्यभेदो युक्त । प्रत्यक्षानुमानयोरप्यभेदप्रसक्ते । किं च, स एवायमित्याकारद्वय, तत्र किं परस्परानुप्रवेशेन प्रतिभात्यननुप्रवेशेन वा । प्रथमपक्षेऽन्यतराकारस्यैव प्रतिभास स्यात् । द्वितीयाकारस्य तत्रानुप्रवेशेन तस्मादविविक्तत्वात । द्वितीयपक्षे तु परस्परविविक्तप्रतिभासद्वयप्रसङ्ग । अन्योन्याननुप्रवेशेनाकारद्वयस्यावस्थानात् । न च प्रतिभासद्वयम् । एकाधिकरणत्वप्रसक्तेस्तु पुरुषाद्वैतसिद्धि स्यात् । ततो विरुद्धधर्माध्यासान्नैकमिद ज्ञानमभ्युपगन्तव्यम् । तत कथं प्रत्यभिज्ञानस्य सम्भव । कारणाभावाच्च न तत्सम्भवति । तथा हि, प्रत्यभिज्ञानस्य कारण किमिन्द्रियमुत पूर्वानुभवजनित संस्कारस्तदुभय वा । न तावदिन्द्रियम् । तस्य वर्तमानार्थावभासजनकत्वात् । नापि संस्कार । तस्य स्मरणकारणत्वात् । नाप्युभयम । उभयदोषानुषङ्गात् । न च कारणान्तरमस्योपलभ्यते । तत्र प्रत्यभिज्ञान स्वरूपत सम्भवति । सम्भवतु वा, तथापि न तत्प्रमाणम । विषयाभावात् । तस्य

हि विषयः पूर्वज्ञाने प्रतिभातमेव वस्तु तदतिरिक्त वा । तत्राद्यपक्षे न तत्प्रमाणम् । गृहीतग्राहित्वात्, धारावाहिज्ञानवत् । द्वितीयपक्षेऽपि किं कृतस्तस्यातिरेकः । किं स्वरूपभेदकृतः कालद्वयसम्बन्धैक्यप्रतिपत्तिकृतो वा । यदि स्वरूपभेदकृतः, तदा ज्ञानवज्ज्ञेयस्यापि प्रतिक्षणं स्वरूपभेदप्रसिद्धेः शौद्धोदनिमतानुप्रवेशः । अथ कालद्वयसम्बन्धिदेवदत्तस्यैक्यं प्रतीयते । अतस्तत्प्रतिपत्तिकृतोऽतिरेक इति चेत् । तदपि वाङ्मात्रम् । यतः किमिदमैक्यं नाम, एकत्वसंख्या स्थायित्वं वा । यद्येकत्वसंख्या, तदाऽस्याः पूर्वमेव प्रतिपन्नत्वात्कथमाधिक्यपरिच्छेदः प्रत्यभिज्ञानेन । अथ स्थायित्वम् । तत्किं देवदत्तस्वरूपाद्भिन्नमभिन्नं वा । यद्यभिन्नम्, तदा तत्स्वरूपवत्तदपि पूर्वज्ञानेनैव प्रतिपन्नमिति तद्विषयत्वे प्रत्यभिज्ञानस्य तदवस्थ एव गृहीतग्राहित्वेनाप्रामाण्यलक्षणो दोषः । अथ भिन्नं स्थायित्वम्, तत्किं पूर्वमप्युत्पन्नमथ प्रत्यभिज्ञानसमय एवोत्पद्यते । यदि पूर्वमप्युत्पन्नम्, तदा पूर्वज्ञानेनैवास्य परिच्छेदात्कथं प्रत्यभिज्ञानाधिक्यपरिच्छेदः । अथ प्रत्यभिज्ञानसमय एवोत्पद्यते । तर्हि तस्य पूर्वमप्रतिपन्नत्वात्कथं प्रत्यभिज्ञानविषयत्वम् । पूर्वं प्रतिपन्नस्यार्थस्य पुनः कालान्तरे गृह्यमाणस्य प्रत्यभिज्ञानविषयत्वाभ्युपगमात् । पूर्वज्ञानाप्रतिपन्नार्थान्तरावबोधकज्ञानस्य प्रत्यभिज्ञानत्वे च घटज्ञानानन्तराविर्भूतपटज्ञानस्यापि तत्त्वप्रसङ्गः । प्रत्यभिज्ञानसमय एवात्रस्थायित्वस्योत्पत्तौ च क्षणिकत्वानुषङ्गात्कथं तद्विशिष्टार्थानामक्षणिकत्वं स्यादिति ।

तस्मादित्थमभावाद्वा सत्त्वेऽपि गोचराभावात् ॥
प्रामाण्यधुरन्धरेण न धुरीण प्रत्यभिज्ञानम् ॥ ४५८ ॥

हन्त सौगत यथैव विष्टपे विश्रुतस्त्वमसि पश्यतोहरः ॥
अस्ति कश्चन तथैव कोविदस्त्वद्विनिग्रहविनोददुर्धरः ॥४५९॥

तथा हि यत्तावदुक्तं विरुद्धधर्माध्यासत इत्यादि । तत्र यदि नाम दर्शनस्मरणलक्षणयोराकारयोर्विरोधः । तथापि धर्मिणः प्रत्य-

भिज्ञानस्यैव किमायातम् । येनास्य विरुद्धधर्माध्यासाद्भेदः साध्येत । धर्माणां हि परस्परपरिहारस्थितिलक्षणविरोधसम्भवे तेषामेवान्योन्यभेदो युक्तः । चित्रविज्ञानाकारवत् । किं च विरुद्धाभ्यां दर्शनस्मरणाकाराभ्यां कारणभूताभ्यां स्वभावभूताभ्यां वा प्रत्यभिज्ञानस्य भेदः साध्येत । तत्राद्यपक्षे सिद्धसाध्यता दोषः । न खलु कारणस्वरूपमेव सर्वथा कार्यस्वरूपमित्यनेकान्तवादिनः प्रतिजानते । द्वितीयपक्षेऽपि कथञ्चित्तद्भेदः साध्येत सर्वथा वा । यदि कथञ्चित्, तदा सिद्धसाध्यतैव । आकारतद्वतोः कथञ्चिद्भेदाभ्युपगमाज्जैनैः । भेदस्त्वनुपपन्नः, तयोस्तत्स्वभावत्वाभावप्रसङ्गात् । यो यस्य स्वभावो न तस्य तद्वतः सर्वथा भेदः । यथा चित्रज्ञानान्नीलाद्याकाराणाम् । स्वभावश्च प्रत्यभिज्ञानस्य स एवायमित्याकारद्वयमिति । प्रत्यभिज्ञानं हि दर्शनस्मरणलक्षणस्वसामग्रीतः समुत्पद्यमानमङ्गीकृताकारद्वयमेव समुपजायते । चित्रपटादिसामग्रीतश्चित्राकारैकज्ञानवत् । अभ्युपगम्य च स्वभावभूताकारद्वयस्य स्पष्टत्वास्पष्टत्वाभ्यां विरुद्धधर्माध्यासत्वमेतदुक्तम् । यावता प्रत्यभिज्ञाने स्पष्टत्वास्पष्टत्वे एव न विद्येते । अस्पष्टस्वरूपस्यैवास्य स्वसामग्रीतः समुत्पादात् । यदप्युक्तं स एवायमित्याकारद्वयं, तत्र किं परस्परानुप्रवेशेन प्रतिभासेतेत्यादि, तत्र कोऽयमस्य, परस्परानुप्रवेशो नाम । परस्पररूपसाङ्कर्यमेकस्मिन्नाधारे धृतिर्वा । नाद्यः पक्षः श्रेयान् । प्रतीतिविरोधात् । न हि यथोक्तमाकारद्वयमन्योन्यसङ्कीर्णस्वरूपं स्वप्नेऽपि प्रतीयते । द्वितीयपक्षे पुनर्न किंचिदनिष्टम् । एकस्मिन् प्रत्यभिज्ञाने तदाकारद्वयस्य निर्बाधमनुभूयमानत्वात् । कथं चैवंवादिनः सौगतस्य चित्रज्ञानमपि सिध्येत् । नीलादिप्रतिभासानां हि परस्परानुप्रवेशे सर्वेषामेकरूपताप्रसङ्गात्कुतश्चित्रत्वम्, एकनीलाकारज्ञानवत् । तेषां परस्परानुप्रवेशे वा भिन्नसन्ततिनीलादिप्रतिभासानामिवात्यन्तभेदसिद्धेर्नितरामचित्रत्वम् । एकनानाधिकरणतया तेषां प्रत्यस्तं प्रतीतेः प्रतिपादितदोषानवकाशः प्रत्यभिज्ञानेऽप्यवि

शिष्टः। तन्न विरुद्धधर्माध्यासितत्वात्प्रत्यभिज्ञानस्याभावो युक्तः। नापि कारणाभावतः। दर्शनस्मरणलक्षणस्य तत्कारणस्य सूत्रे प्रतिपादितत्वात्। ननु कथं पृथग्गोचरयोर्विभिन्नाकारयोश्च दर्शनस्मरणयोः प्रत्यभिज्ञानं कारणतेति चेत्। तेनानुविधीयमानान्वयव्यतिरेकत्वात्। अङ्कुरादिनानुविधीयमानान्वयव्यतिरेकस्य बीजादेरिव। तत्र न खलु बीजादेरङ्कुरादौ कारणताया तेनान्वयव्यतिरेकानुविधानादन्यन्निबन्धनमस्ति। तन्न प्रत्यभिज्ञानस्य कारणाभावादप्यभावो युक्तः। अपि चेदं प्रत्यभिज्ञानं कार्यम्। कार्यं च प्रतीयमानं कारणसद्भावमवबोधयति। अतः कथमस्य कारणाभावो ज्यायान्। ततश्च कारणाभावान्न तत्सम्भवीत्यादि प्रत्याख्यातम्। यच्चान्यदुपन्यस्तं सम्भवतु वा तथापि न तत्प्रमाणं विषयाभावादिति। तदप्ययुक्तम्। विषयाभावस्यासिद्धेः। पूर्वोत्तरविवर्त्तवर्त्त्येकद्रव्यादेस्तद्विषयस्य सद्भावात्। न च दर्शनस्मरणयोरेवायं विषय इति वाच्यम्। दर्शनस्य हि वर्त्तमानकालावछिन्नः स्मरणस्य पुनरतीतकालावच्छिन्नपदार्थो विषयः प्रत्यभिज्ञानस्य तूभयकालावच्छिन्नद्रव्यादि। न चागेपार्थाना क्षणिकत्वतो द्रव्यस्य कस्याचिदप्यसम्भवात्कथं तस्य तद्विषयता प्रार्थ्यत इत्यभिधातव्यम्। क्षणभङ्गप्रतिषेधेन द्रव्यसिद्धेः पुरस्तादुपपादयिष्यमाणत्वात्। न च लूनपुनर्जातनखकेशादिष्विव सर्वत्र निर्विषया प्रत्यभिज्ञा। क्षणक्षयैकान्तस्यानुपलम्भात्। तदुपलम्भे हि सा निर्विषया स्यात्। एकचन्द्रोपलम्भे द्विचन्द्रप्रतीतिवत्। लूनपुनर्जातनखकेशादौ च स एवायं नखकेशादिरित्येकत्वपरामर्शिप्रत्यभिज्ञानं लूननखकेशादिसदृशोऽयं पुनर्जातनखकेशादिरिति सादृश्यनिबन्धनप्रत्यभिज्ञानान्तरेण बाध्यमानत्वादप्रमाणं प्रसिद्धम्। न पुनः सादृश्यप्रत्यवमार्शि। तत्त्वस्याऽबाध्यमानतया प्रमाणत्वसिद्धेः। न चैकत्रैकत्वपरामर्शिप्रत्यभिज्ञानस्य मिथ्यात्वदर्शनात्सर्वत्राऽस्य मिथ्यात्वम्। प्रत्यक्षस्यापि सर्वत्र भ्रान्तत्वानुषङ्गात्न किञ्चित्कुतश्चित्कस्यचित्प्र-

अत्राह भाट्टः —

सादृश्यज्ञानस्योपमानत्वमेव न प्रत्यभिज्ञानत्वमिति भाट्टमतमुपदर्श्य तत्खण्डनम्।

सादृश्यगोचरज्ञानमुपमानस्वरूपताम् ॥
अङ्गीकरोति न पुनः प्रत्यभिज्ञानरूपताम् ॥ ४६१ ॥

तथा हि, गोदर्शनाहितसंस्कारस्य प्रमातुः पश्चाद्गवयदर्शने सति गोस्मरणे सत्यनेन सदृशः स इत्येवमाकारतयोपजायमानस्य ज्ञानस्योपमानत्वमेव न्याय्यं न प्रत्यभिज्ञानत्वम्। तस्यैकत्वविषयत्वेनेव व्यवस्थितत्वात्। सादृश्यविशिष्टो विशेषो विशेषविशिष्टं वा सादृश्यमुपमानस्यैव प्रमेयम्। उक्तं च—"तस्माद्यत्स्मर्यते तत्स्यात्सादृश्येन विशेषितम्। प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ १ ॥ प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते। विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता" ॥ २ ॥ इति। एतदपरीक्षितलक्षितम्। सादृश्यप्रतीतेः सङ्कलनाज्ञानरूपतया प्रत्यभिज्ञानत्वानतिक्रमात्। स एवायमिति यथोत्तरपर्यायस्य पूर्वपर्यायेणैकत्वावमर्शिनि प्रत्यभिज्ञानमेवमनेन सदृशः स इत्येतदपि। सङ्कलनात्मकत्वाविशेषात्। यदि चैकत्वज्ञानमेव प्रत्यभिज्ञानं सादृश्यज्ञानं तूपमानमित्यभ्युपगमः। तर्हि वैलक्षण्यज्ञानं किं नाम प्रमाणं स्यात्। यथैव हि गोदर्शनाहितसंस्कारस्य गवयदर्शिनोऽनेन सदृशः स इति प्रतिपत्तिः। तथा महिषादिदर्शिनोऽनेन विलक्षणः स इति वैलक्षण्यप्रतीतिरप्यस्ति। सा च न प्रत्यभिज्ञानोपमानयोरन्यतरत्र भवति। एकत्वसादृश्यविषयत्वात्। अतः प्रमाणान्तरं प्रमाणसङ्ख्यानियमविघातकृद्भवेद्भवतः। अथ सादृश्याभावो वैलक्षण्यं तस्याऽभावविषयत्वान्न प्रमाणसङ्ख्यानियमविघातः। तर्हि वैलक्षण्याऽभावः सादृश्यमिति स एव दोषः। नन्वनेकस्य समानधर्मयोगः सादृश्यं तत्कथं वैलक्षण्याभावमात्रं स्यादिति चेत्। तर्हि वैलक्षण्यमपि विसदृशधर्मयोगस्तत्कथं सादृश्याभावमात्रं स्यादिति

१ मी० श्लो० वा० उप० प० सू० ५ श्लो० ३७।३८

समानमिति । एतेन गौरिव गवय इत्युपमानवाक्याहितसंस्कारस्य पुनर्वने गवयदर्शनेऽयं गवयशब्दवाच्य इति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानमिति नैयायिकमतमपि प्रतिहतम् । यथैव ह्येकदा कुम्भमुपलब्धवतः पुनः कालान्तरे तस्यैव दर्शने स एवायं कुम्भ इति प्रतिपत्तिः प्रत्यभिज्ञा प्रतिज्ञायते, तथा गोसदृशो गवय इति संकेतकाले गवयतदभिधानयोर्वाच्यवाचकसम्बन्धं प्रतिपद्य पश्चाद्गवयदर्शनात्तत्प्रतिपत्तिः प्रत्यभिज्ञा प्रतिज्ञायताम् । किं च गोविलक्षणमहिष्यादिदर्शनाद्गवयशब्दवाच्योऽयं न भवतीति तत्संज्ञासंज्ञिसम्बन्धप्रतिषेधप्रतिपत्तिः किं नाम प्रमाणं स्यात् । अथेयमप्युपमानमिष्यते । तदा "प्रसिद्ध-साधर्म्यात्साध्यसाधनमुपमानम्[1]" इति व्याहन्येत । प्रसिद्धवैधर्म्याच्चेत्युपसङ्ख्यानं वा सूत्रे कर्त्तव्यम् । तथाऽऽमलकदर्शनाहितसंस्कारस्य बिल्वादिदर्शनादतस्तत्सूक्ष्ममिति प्रतीतिः, स्वसमीपवर्तिप्रासादादिदर्शनोपजनितसंस्कारस्य तत्प्रतियोगिपर्वताद्युपलम्भादिदमस्माद्दूरमिति प्रतिपत्तिः, ह्रस्वशिंशपादिदर्शनाविर्भूतसंस्कारस्य तद्विपरीतवटवृक्षाद्यर्थोपलम्भादतोऽयं प्रांशुरिति विनिश्चितं किं प्रमाणं भवेत् । तथा चोक्तम् । उपमानं प्रसिद्धार्थसाधर्म्यात्साध्यसाधनम् ।। तद्वैधर्म्यात्प्रमाणं किं स्यात्संज्ञिप्रतिपादनम् ।।१।। इदमल्पं महद्दूरमासन्नं प्रांशु नेति वा ।। व्यपेक्षातः समक्षार्थे विकल्पः साधनान्तरम् ।।२।।" इति । साधनान्तरं स्यादिति । तथा हंसाद्यनभिज्ञो यदा कश्चित्क्वचित्पृच्छति कीदृशो हंसादिरिति । तदा स तं प्रति "पयोम्बुभेदी हंसः स्यात्षट्पादैर्भ्रमरः स्मृतः ।। सप्तपर्णः[2] तु तत्त्वज्ञैर्विज्ञेयो विषमच्छदः ।। १ ।। पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी ।। युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्त्तितः ।। २ ।। शरभोऽप्यष्टभिः पादैः सिंहश्चारुसटान्वितः" इत्यादिकमाह । ततश्चैतद्वाक्याहितसंस्कारः प्रष्टा यदा पयोम्बुभेदित्वाद्युपलक्षितानर्थान्कालान्तरे समुप-

१ गौ. सू. १।१।६ २ ' सप्तपर्णैस्तु ' इति प. भ. पुस्तकयोः पाठः ।

सिध्येत् । ततो यथा शुक्ले शङ्खे पीताभासं प्रत्यक्षं तत्र शुक्लाभासप्रत्यक्षान्तरेण बाध्यमानत्वादप्रमाणं न पुनः पीते कनकादौ । तथा प्रकृतमपीति । तत्र विषयाभावात्प्रत्यभिज्ञानमप्रमाणम् । अथ गृहीतग्राहित्वात्तथेष्यते, तत्र तद्विषयो हि प्रत्यक्षेण गृह्येत स्मरणेन प्रमाणान्तरेण वा । न तावत्प्रत्यक्षेण, तस्य वर्तमानविवर्तमात्राऽऽलिङ्गितद्रव्यगोचरचारित्वात् । नापि स्मरणेन, तस्यातीतपर्यायमात्रावच्छिन्नद्रव्यविषयत्वात् । नापि प्रमाणान्तरेण, उभयविवर्तवर्तिद्रव्यावग्राहकस्य प्रत्यभिज्ञानात्पूर्वमन्यस्य प्रमाणस्य प्रवृत्तेरननुभवात् । प्रत्यक्षस्मरणजनितकल्पनाज्ञानमस्तीति चेत्, न । तस्यैव प्रत्यभिज्ञानत्वेनास्माभिरप्यभ्युपगमात् । ननु यदि प्रत्यक्षस्मरणयोरुभयविवर्तवर्तिद्रव्यमविषयः तर्हि कथं ताभ्यां तत्र प्रत्यभिज्ञानं जायेत । तथा हि, यद्यस्य विषयो न भवति न तत्तत्र विज्ञानमुत्पादयति, यथा चक्षू रसे । न भवति चोभयविवर्तवर्ति द्रव्यं विषयः प्रत्यक्षस्मरणयोरपीति चेत् । तदप्यनुपपन्नम् । विकल्पोत्पादकाध्यक्षेणानेकान्तात् । तस्यान्यगोचरस्यापि सामान्ये विकल्पोत्पादकत्वप्रतीतेः । अथ विकल्पवासनासहायमविकल्पकं स्वाविषयेऽपि सामान्ये विकल्पमुपजनयति । सहकारिणामचिन्त्यशक्तिकत्वात् । अन्यथा कथमसर्वज्ञानमस्यामविशेषसहायं सर्वज्ञज्ञानं जनयेदिति चेत् । तर्हि प्रत्यभिज्ञानावरणक्षयोपशमसहाये प्रत्यक्षस्मरणे अपि स्वाविषये उभयविवर्तवर्तिनि द्रव्ये प्रत्यभिज्ञानमुपजनयतामविशेषात् । एतेन तस्य हि विषयः पूर्वज्ञाने प्रतिभातमेव वस्तु तदतिरिक्तं चेत्यादि पूर्वपक्षग्रन्थः कदर्थितो द्रष्टव्यः । उक्तनीत्या प्रत्यभिज्ञानविषयस्य व्यवस्थापितत्वात् । तत्र गृहीतग्राहित्वात्प्रत्यभिज्ञानमप्रमाणम् । अथ स्मरणानन्तरभावित्वात्तथाऽनुमन्यते । तदप्यनुपपन्नम् । रूपस्मरणानन्तरं रससंनिपाते समुत्पन्नस्य रसज्ञानस्याप्यप्रामाण्यप्रसङ्गात् । तत्र हि रूपस्मरणस्य पूर्वकालभावित्वात्समनन्तरकारणत्वम् । बोधाद्बोधरूपतेत्यभ्युपगमात् ।

न चात्र बोधरूपतया समनन्तरकारणत्वं प्रत्यभिज्ञाने तु स्मरणरूपतयेति वाच्यम् । स्मरणबोधरूपनयोस्तादात्म्ये सति क्वचिद्बोधरूपतया समनन्तरकारणत्व स्मरणस्य क्वचित्तु स्मरणरूपतयेति व्यवस्थापयितुमशक्तेः । यदि च स्मरणानन्तरभावित्वात्प्रत्यभिज्ञानमप्रमाणमिति प्रतिपाद्यते । कथ तर्हि अनुमानमपि प्रमाणं स्यात् । तद्धि साध्यसाधनसम्बन्धस्मरणानन्तरमेवोपजायते । अन्यथा दृष्टान्तोपन्यासस्तत्र व्यर्थो भवेत् । तन्न स्मरणानन्तरभावित्वादपि प्रत्यभिज्ञानमप्रमाणम् । अथ बाध्यमानत्वात्तत्तथा कथ्यते, तदपि न तथ्यम् । तद्बाधकस्य कस्यचिदप्यनुपपत्ते. । यन्नैकत्वविषयस्य प्रत्यभिज्ञानस्यापह्नवः कर्तुमुचितः । नापि सादृश्यगोचरस्य, अनुमानानुत्पत्तिप्रसङ्गात् । येनैव हि पूर्वं धूमोऽग्नेर्दृष्टस्तस्यैवोत्तरकालं पूर्वं धूमसदृशधूमदर्शनादग्न्यनुमानोत्पत्तिर्युक्ता नाऽन्यस्याऽन्यदर्शनात् । न च प्रत्यभिज्ञानमन्तरेण तेनेदं सदृशमिति प्रतिपत्तिर्घटते । पूर्वप्रत्यक्षेणोत्तरस्योत्तरप्रत्यक्षेण च पूर्वस्य धूमादिवस्तुनोऽप्रतिपत्तेः । न च द्वयाप्रतिपत्तौ द्विष्ठं सादृश्यं प्रतिपत्तुं शक्यम् । अतिप्रसङ्गात् । सादृश्यसार्थाभ्यां भिन्नाभिन्नादिविकल्पैर्विचार्यमाणस्यानुपपत्तेस्तद्गोचरप्रत्यभिज्ञानस्य कथं प्रमाणत्वमिति च न शङ्कनीयम् । सादृश्यस्य सामान्यप्रतिष्ठावसरे व्यवस्थापयिष्यमाणत्वात् । न च तस्मिन्नेव स्वपुत्रादौ भ्रान्त्या तादृशोऽयमिति प्रत्यभिज्ञानं सादृश्यनिबन्धनं स एवाऽयमित्येकत्वनिबन्धनप्रत्यभिज्ञानेन बाध्यमानमप्रमाणं प्रतिपद्य स्वपुत्रादिना सदृशे पुरुषे तादृशोऽयमित्यपि प्रत्यभिज्ञानमप्रमाणं प्रतिपादयितुं युक्तम् । तस्याबाध्यमानत्वेन प्रमाणत्वात् । एवं वैलक्षण्यादिविषयाण्यपि प्रत्यभिज्ञानानि समर्थनीयानि । ततश्च—

हंहो बौद्धाः स्वमतविषयं पक्षपातं विधूय
ग्राह्यं प्रौढप्रमितिवशतः प्रत्यभिज्ञाप्रमाणम् ॥
यस्मादेषा भवति सततं लोकयात्रा समग्रा
कोऽपि क्वाऽपि स्वपरनियमं नाऽन्यथा हन्त कुर्यात् ॥४६०॥

लभ्याय स हसशब्दवाच्य इत्यादिरूपतया तत्सञ्ज्ञासञ्ज्ञिसम्बन्धं प्रतिपद्यते । तत्र किं नाम तत्प्रमाणं स्यात् । उपमानमित्यसम्भाव्यम् । सर्वोक्तप्रकारेण प्रतिपत्तौ प्रसिद्धार्थसाधर्म्यासम्भवात् । ततः प्रतिनियतप्रमाणव्यवस्थामभ्युपगच्छता न्यायशालिना प्रतिपादितप्रकारं प्रतीतिकदम्बकं प्रत्यभिज्ञानमेवेति स्वीकर्त्तव्यम् । भूयोऽपि भाट्टः प्राह—

परोक्षं प्रत्यभिज्ञानमिति क्षमाये नैव न ॥
यतः प्रत्यक्षतैवास्य न्यायगोचरमञ्चति ॥ ४६२ ॥

तथा हि, प्रत्यभिज्ञानं प्रत्यक्षम् । अक्षान्वयव्यतिरेकानुविधायित्वात् । यदित्थं तदित्थं यथा सम्प्रतिपन्नं प्रत्यक्षमिति । न च स्मरणपूर्वकत्वात्प्रत्यभिज्ञानस्य प्रत्यक्षत्वाभावः । स्मरणात्पश्चाद्भाविन्येऽपि सत्सम्प्रयोगजत्वेन प्रत्यक्षत्वाविरोधात् । यदाह—" न हि स्मरणतो यत्तत्प्रत्यक्षमितीदृशम् ॥ वचनं राजकीयं वा लौकिकं चापि विद्यते ॥ १ ॥ न चापि स्मरणात्पश्चादिन्द्रियस्य प्रवर्त्तनम् ॥ वार्यते केन चिन्नापि तत्तदानीं प्रदुष्यति ॥ २ ॥ तेनेन्द्रियार्थसम्बन्धात्प्रागूर्ध्वं चापि यत्स्मृतेः । विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ॥ ३ ॥" इति । नैतदपि न्याय्यम् । यतोऽक्षान्वयव्यतिरेकानुविधायित्वं प्रत्यभिज्ञानस्य साक्षाद्विवक्षितं पारम्पर्येण वा । यदि पारम्पर्येण, तदानुमानादिनास्य व्यभिचारः । तस्य प्रत्यक्षलक्षितलिङ्गादिद्वारेणोपजायमानस्य परम्परयाऽक्षान्वयव्यतिरेकानुविधायिनोऽपि प्रत्यक्षत्वाभावात् । साक्षादक्षान्वयव्यतिरेकानुविधायित्वं त्वसिद्धम् । प्रत्यभिज्ञानस्य साक्षात्प्रत्यक्षस्मरणान्वयव्यतिरेकानुविधायित्वेनानुभूयमानत्वात् । साक्षादक्षान्वयव्यतिरेकानुविधायित्वे पुनरस्य प्रथमव्यक्तिदर्शनकालेऽप्युत्पत्तिः स्यात् । अथ पुनर्दर्शने पूर्वदर्शनाहितसंस्कारप्रबोधोत्पन्नस्मृतिसहायमिन्द्रियं प्रत्यभिज्ञानमुत्पादयतीत्युच्यते । तदनुचितम् । प्रत्यक्षस्य स्मृतिनिरपेक्षत्वात् । सापेक्षत्वे तु प्रत्यभिज्ञानस्यानुमानादिवत्परोक्षतैव ज्यायसी ।

स्मरणे पदविषयसङ्केतस्मरणे च सति सुबन्तं तिङन्तं च पदमिति प्रत्यभिज्ञानमुपजायते । तथा पूर्वपूर्वपदश्रवणाहितसंस्कारस्यान्त्यपदश्रवणानन्तरमनुक्रमविशिष्टपूर्वपदानां वाक्यगोचरसङ्केतस्य च स्मरणे सति वाक्यमिदमिति प्रत्यभिज्ञानमुन्मज्जति । एव तयोर्वर्णपदवाक्यग्रहणं प्रत्यभिज्ञानात् । ततोऽपि मध्यमवृद्धं चेष्टमानमवलोकयन्बालस्तटस्थस्तस्यार्थप्रतीतिं तावत्कल्पयति । आत्मनि तत्पूर्विकायाश्चेष्टाया दृष्टत्वात् । प्रमाणान्तरासन्निधावेतद्वृद्धप्रयुक्तशब्दसमनन्तरं च प्रवृत्तोऽयमित्यत एव शब्दात्किमप्यनेन प्रतिपन्नमिति मन्यते । तमर्थं तेन वृद्धेनानीयमानमेवमवबुध्यतेऽयमर्थोऽमुतः शब्दादनेनावगत इति स चार्थोऽनेकगुणक्रियाजातिव्यक्त्यादिरूपसङ्कुल उपलभ्यते । शब्दोऽप्यनेकपदकदम्बकात्मा श्रुतः, तत्कतमस्य शब्दांशस्य कतमोऽर्थांशो वाच्य इति सन्दिग्धे कालान्तरे च गां नयेत्यादिकमाकर्णयति । तत्र च गोशब्दानुवृत्तिमानयेत्यस्य तु व्यावृत्तिं विभावयति । ततोऽपि कदाचन वाजिनमानयेति शृणोति, तत्रापि गोशब्दस्य व्यावृत्तिमानयेत्यस्य त्वनुवृत्तिं व्यवस्यति । तदनुसारेण च गवादेरप्यर्थस्यानुवृत्तिव्यावृत्ती समाकलयति । तत इत्थमावापोद्वापाभ्यामनन्तरमीदृग्जातीयोऽर्थ ईदृग्जातीयस्य वाच्यः सोऽपि तस्य वाचक इतीत्थं वाच्यवाचकभावालम्बनसकलविवक्षितवाच्यवाचकविशेषसमुल्लेखशेखरस्तर्कः समुल्लसति । क्वचित्तु यदा कश्चित्तर्केण वाच्यवाचकभावं स्वयमवेत्य परमप्यनेनैव तमवबोधयिष्यंस्तदनुसारिपरसन्ताने तर्कोत्पत्तिहेतुं वचनं परार्थतर्करूपमुच्चारयति । तदा तस्मादप्यस्योल्लासः । यथा कश्चन पिता परमवत्सलो वत्साय कञ्चन पदार्थं पुरस्कृत्य कथयति, इत्थम्भूतमित्थम्भूतस्य शब्दस्य वाच्यं वत्स जानीहि, तदाऽसावुपलम्भानुपलम्भद्वारेण तथा प्रतिपद्यमानस्तर्कादेव वाच्यवाचकभावं प्रतिपद्यते । इयं च व्याप्त्या वाच्यवाचकभावप्रतीतिरुपदर्शिता । शृङ्गग्राहिकया तु नियतायां व्यक्तावयं पुरोवर्ती भावोऽस्य

शब्दस्य वाच्य इत्यागमादेरपि सा भवति । तदूर्ध्वं तु व्याप्त्या तं प्रति यस्तर्कादेव प्रत्येति, अयं इत्थम्भूत इत्थम्भूतस्य सर्वे सर्वस्य वाचको वाच्यश्चेति । ननु तर्कः स्वविषयेण सम्बद्धो वाऽसम्बद्धो वा तमवबोधयति । न तावदसम्बद्धः । अतिप्रसङ्गात् । अथ सम्बद्धः, कुतस्तत्सम्बन्धप्रतिपत्तिः । प्रत्यक्षादनुमानात्तर्कान्तरात्प्रमाणान्तराद्वा । न तावत्प्रत्यक्षात्, तस्य तदविषयत्वात् । नाप्यनुमानात्, अनवस्थानुषङ्गात् । तदपि ह्यनुमानं तर्कपूर्वकमिति तत्रापि तर्कस्य स्वविषयेण सम्बन्धग्राहकमनुमानान्तरमन्वेषणीयमिति । नापि तर्कान्तरात्, तत एव, तर्कान्तरस्यापि स्वविषयसम्बन्धबोधपूर्वकत्वात्तस्याप्यपरतर्कनिबन्धनत्वात् । नापि प्रमाणान्तरात्, तस्यापि प्रमाणत्वेऽपि स्वविषयसम्बन्धबोधपूर्वकं प्रवर्त्तमानत्वादनवस्थापत्तेः । अथाप्रतिपन्नसम्बन्ध एव तर्कः स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषात्स्वविषयमेव बोधयति । तर्हि तत एवानुमानमप्यप्रतिपन्नसम्बन्धमेव स्वगोचरमवभासयतु । कृतं तत्प्रतिपत्तिनिमित्ततर्कप्रमाणपरिकल्पनेनेति कश्चित् । सोऽपि यदि प्रामाणिकस्तर्हि तस्यापि प्रत्यक्षं स्वविषयमवबोधयत्सम्बद्धमेवावबोधयेन्नासम्बद्धम् । अतिप्रसङ्गात् । तत्सम्बन्धश्च नानुमानादेः सिद्ध्यति । अनवस्थानुषङ्गात् । नापि प्रत्यक्षान्तरात्, अनवस्थानुषङ्गादित्यादि सकलं प्रत्यक्षेऽपि समानम् । अथ न प्रत्यक्षं स्वविषयसम्बन्धावबोधनिबन्धनं तत्र प्रवर्त्तते तस्य स्वविषये स्वयोग्यताबलादेव प्रवृत्तिरिति चेत्, तर्हि तथा तर्कस्यापि स्वयोग्यताविशेषसामर्थ्यादेव स्वविषयप्रत्यायनसिद्धिरस्तु । योग्यताविशेषः पुनः प्रत्यक्षस्येव स्वविषयज्ञानावरणवीर्यान्तरायक्षयोपशमविशेष एव तर्कस्यापि प्रतिपत्तव्यः । यथा च प्रत्यक्षस्योत्पत्तौ मनोऽक्षादयो योग्यताया सहकारिणो बहिरङ्गास्तथा तर्कस्यापि समुद्भूतावुपलम्भानुपलम्भावनुमन्येते । तदन्वयव्यतिरेकानुविधायित्वात्तस्य । यच्च तत एवानुमानमप्यप्रतिपन्नसम्बन्धमेव स्वगोचरमवभासयत्वित्युक्तम् । तत्र साध्यसाधनसम्बन्धग्रहणनिरपेक्षानुमान

स्योत्पत्तिरेव न सम्भवति । अनवबुद्धसाध्यसाधनसम्बन्धस्य क्वचित्कदाचिदुत्पत्त्यप्रतीतेः । तर्कस्य तु सम्बन्धग्रहणनिरपेक्षेव प्रत्यक्षवदुत्पत्तिर्घटत एव । न खलु प्रत्यक्षस्याप्युत्पत्तिः करणार्थसम्बन्धग्रहणापेक्षा प्रतिपन्ना । स्वयमगृहीततत्सम्बन्धस्यापि प्रतिपत्तुस्तदुत्पत्तिप्रतीतेः, तद्वत्तर्कस्यापि स्वार्थसम्बन्धग्रहणानपेक्षस्याप्युत्पत्तिप्रतिपत्तेर्नोत्पत्तौ सम्बन्धग्रहणापेक्षा युक्तिमतीति सर्वं चतुरलम् ॥ ७ ॥

एतच्च तर्कनामधेयं व्याप्तिज्ञानं तथोपपत्त्यन्यथानुपपत्तिभ्यां प्रवर्त्तत इति निदर्शयन्नाह—

**यथा यावान्कश्चिद्धूमः स सर्वो वह्नौ सत्येव भवतीति तस्मिन्नसत्यसौ न भवत्येवेति ॥ ८ ॥**

अतिरोहितार्थमिदम्

अत्राह कश्चित्—

तर्कप्रामाण्यमसहमानस्य कस्यचिन्मतस्य खण्डनम् ।

प्रमाणतायामुपपादितायां
तर्कस्य युक्ता ननु लक्षणोक्तिः ॥
एषा तु सद्युक्तिपरम्पराभि-
र्विचार्यमाणस्य न तस्य युक्ता ॥४६६॥

तथा हि विषयव्यवस्थापकं प्रमाणं तर्कस्य च विषयो व्याप्तिलक्षणः प्रतिज्ञायते भवद्भिर्व्याप्तिश्च विचार्यमाणा नावस्थां बध्नाति । यतः साध्यसाधनयोः सम्बन्धो व्याप्तिः सम्बन्धश्चैकदेशत्वमेककालत्वं वा तयोर्भवेत् । न तावदेकदेशत्वम् । यतः—

प्रबलपवनवेल्लद्वैजयन्तीवितानप्रतिमकलितमूर्तिर्व्योम्नि धूमप्रबन्धः ॥
ज्वलति वसुमतीभृत्प्रनिष्ठे निकुञ्जे क्वचन पुनरनल्पज्वालशाली कृशानुः ॥४६७॥

शैवालजालजटिलं तटिनीस्रोतः समस्त्यधोवर्त्ति ॥
क्वचन शिलोच्चयशिखरे वृष्टिः पुनरुद्धुरप्रसरा ॥ ४६८ ॥

नाप्येककालत्वम् । यत —

पूर स्रोतस्विनीसक्तो वृष्टिकाले न विद्यते ॥
कृत्तिकोदयवेलाया न नास्ति शकटोदय ॥ ४६९ ॥

किंच कस्य केनायमविनाभाव किं सामान्यस्य सामान्येन, सामान्यस्य विशेषे ,विशेषाणा सामान्येन, विशेषाणा विशेषैर्वा । न प्रथमपक्ष । यतो न सामान्यस्य सामान्येन व्याप्तिरनुमानाङ्गम् । तदा हि तत्र सामान्यमेव साध्य स्यात् । तस्य च नित्यत्वविभुत्वाभ्या सकलदेशकालसम्बन्धितया सुप्रसिद्धस्य साधने सिद्धसाध्यता स्यात् । द्वितीयपक्षेऽपि देशकालाभ्यामनवच्छिन्नैर्विशेषै सामान्यस्याविनाभावोऽवच्छिन्नैर्वा । यद्यनवच्छिन्नै , तदा सिद्धसाध्यतैव । देशकालानवच्छिन्नाना वह्न्यादिविशेषाणामतिप्रतीतत्वात् । अथ देशकालावच्छिन्नै ,तदानुगमाभाव । न हि धूमसामान्यस्य पर्वतादिस्थैरग्निविशेषैरनुगमोऽस्ति । तस्य तदन्तरेणापि पाकप्रदेशादावुपलम्भात् । तृतीयपक्षेऽपि सिद्धसाध्यता साधनवैकल्य च दृष्टान्तस्य । महानसे पर्वतस्थधूमविशेषस्यासम्भवात् । विशेषाणा विशेषैरिति तुरीयपक्षेऽपि दु शकमविनाभावग्रहणम् । तेषामानन्त्यात् । अपि चाग्न्यभावे धूमानुपपत्तिरिति व्यतिरेकव्याप्तौ किमेकस्य कस्यचिदग्नेरभावे धूमानुपपत्तिर्गृह्यते सर्वस्य वा । न तावदेकस्य । एकस्याभावेऽप्यग्न्यन्तरे धूमस्य गृह्यमाणत्वात् । नापि सर्वस्य । उपहितग्रहणस्योपाधिग्रहणमन्तरेणासम्भवात् । धूमानुपपत्तेश्च समस्ताग्न्यभाव एवोपाधिर्न चासौ प्रतियोगिषु सर्वाग्निष्व गृहीतेषु ग्रहीतु शक्यते । अपि च यत्सद्भाव एव यस्य निवृत्तिस्तेनैव तस्य विरोध । तन्हि धूमाभाव एव सति धूमस्य निवृत्तिर्दृश्यत इति धूमाभावेनैवास्य विरोधो न त्वग्न्यभावेन । केवलाङ्गारावस्थायामग्न्यभावाभावेऽपि धूमनिवृत्ते प्रतीयमानत्वात् । अतो न व्याप्तिर्विचार्यमाणत्वात्कथ तद्ग्राहिणस्तर्कस्य प्रामाण्यम् । किं च व्याप्तौ सत्यामपि न धूमादग्निर्पक्षस्यमनुमीयते । वह्नेरेव धूमेनानुमीयमानत्वात् ।

तथा धूम एव वह्नेर्गमको न तद्गताः श्यामत्वादय इति वृथा व्याप्तिकल्पनं तद्बोधकतर्कप्रामाण्यकल्पन च ।

तार्किकैस्तर्क्यमाणोऽयं तर्कः कर्कशया धिया ।
इत्थं नोपैति मानत्वं विफलस्तदिहाग्रहः ॥ ४७० ॥

तर्कः प्रमा न भवतीति वदन्तु कामं
हे तार्किकाः स्वपरिषत्सु सदा भवन्तः ।
जैनोदिते स्फुरति दूषणडम्बरे तु
सर्वं भविष्यति न किञ्चिदिदं तथाहि ॥ ४७१ ॥

यत्तावदुक्तं व्याप्तिश्च विचार्यमाणा नावस्थां बध्नाति । तन्नोपपन्नम् । स्वरूपप्रयुक्तस्याव्यभिचारस्य व्याप्तित्वप्रतिज्ञानात् । स्वरूपं हि विवक्षितसाध्यसाधनयोः स्वकर्मकलापकलितमग्नित्वं धूमत्वं च । तद्धयन्यतो देशकालाकारादेर्व्यावृत्त्यप्रकर्षेण सम्बन्धमात्मन्येव योजयति । ततश्च मदधीनामेव व्याप्तिं बुद्ध्यस्व बुद्ध्यस्वेत्यात्मसम्बन्धित्वेन व्याप्तिं व्यवस्थापयंस्त्वप्रयुक्तामेव तां बोद्धारं बोधयति । यदप्युक्तं सम्बन्धश्चैकदेशत्वमेककालत्वं वेत्यादि । तदप्येतेन प्रत्युक्तम् । देशकालौ परिहृत्य स्वरूपमात्रेणैव धूमादेरग्न्यादिना सहाविनाभावस्य निर्बाधबोधविरूढत्वात् । यच्चान्यदुक्तं कस्य केनायमविनाभाव इत्यादि । तत्र यस्य येनाव्यभिचारस्तस्य तेनाविनाभावः । सामान्यविशेषवतश्च धूमादेः सामान्यविशेषवताग्न्यादिना सहाव्यभिचार इति तस्य तेनैवाविनाभावोऽतश्चोक्तदोषानवकाशः । गम्यं हि व्यापकं गमकं च व्याप्यम् । न च केवलौ सामान्यविशेषौ गम्यगमकरूपतयाऽनुभूयेते । जात्यन्तरस्यैव सामान्यविशेषोभयात्मनस्तद्रूपतयावभासनात् । यदपि किमेकस्य कस्यचिदग्नेरभावे धूमानुपपत्तिर्गृह्यते सर्वस्य वेत्याद्युपन्यस्तम् । तत्र सर्वस्येति ब्रूमः । यतो धूमानुपपत्तिः सर्वाक्षेपेण प्रतीयते यावान्कश्चिद्धूमः स सर्वः सर्वस्याग्नेरभावेऽनुपपन्न इति । न पुनर्नियतधर्म्युल्लेखेन पर्वते गृहेऽरण्ये वा धूमोऽग्न्यभावेऽनुपपन्न इति । यत्पुनरत्रोक्तं

न चासौ सर्वाग्निष्वगृहीतेषु अवैतुं शक्यत इति, तन्न सत्यम् । यतोऽग्न्यभावस्तदन्यदेशादिस्वभावो भावान्तरस्वभावत्वादभावस्य । तुच्छस्वभावस्य प्रतिक्षेप्स्यमानत्वात् । स चाखिलाग्निविविक्तो देशादि प्रतियोगिग्रहणमन्तरेणापि प्रतीयते कथमन्यथा घटादेरपि प्रतिपत्तिः स्यात् । तत्स्वरूपस्यापि त्रैलोक्यविलक्षणतया त्रैलोक्याप्रतिपत्तावप्रतिपत्तिप्रसङ्गात् । यच्च तत्सद्भाव एवेत्याद्यभिहितम् । तदपि नानवद्यम् । एवं हि विरोधव्यवस्थितौ क्रियमाणायां शीतस्पर्शस्यापि वह्निना विरोधो न स्यात्, न खल्वस्य वह्निसद्भाव एव निवृत्तिः । अन्यथापि तन्निवृत्तेः प्रतीयमानत्वात् । तस्मात्तत्सद्भावे यस्य नियमेन निवृत्तिस्तेन तद्विरुद्धमेव । अग्न्यभावे च सति धूमस्य नियमेन निवर्त्तमानत्वाद्भूमाभावेनैव तेनापि तस्य विरोधः । तथा हि यस्मिन्सति यन्नियमेन निवर्तते तेन तद्विरुद्धम् । यथोष्णस्पर्शसद्भावे नियमेन निवर्तमानः शीतस्पर्शः । अग्न्यभावे सति नियमेन निवर्त्तते च धूम इति । नन्वग्न्यभावे धूमस्य नियमेन निवर्त्तमानत्वमसिद्धं गोपालघुटिकादौ वह्न्यभावेऽपि धूमसद्भावप्रतीतेरिति चेत् । तदप्यसुन्दरम् । तत्रापि तत्सद्भावसम्भवात् । धूमस्य हि भाव आत्मलाभः स चाग्नौ सत्येव संवृत्तस्तत्कथं गोपालघुटिकादावग्न्यभावे धूमसद्भावाशङ्कापि । तर्हि पर्वतादाविव तत्रापि धूमोऽग्निं गमयेदित्यनुपपन्नम् । पर्वतादिधूमादस्य वैलक्षण्यात् । वह्निसमानसमयसद्भावो हि पर्वतादिधूमो बहलपताकायमानस्वरूपोऽनुभूयते । न च गोपालघुटिकादिधूमस्तथा, ततो नास्याग्न्यनुमापकत्वम् । यदप्युक्तं व्याप्तौ सत्यामपि न धूमादग्निपैङ्गल्यमनुमीयत इत्यादि । तदपि न विचारसरणिमनुसरति । यतो व्याप्त्यनुसारेणानुमानं विधीयते । व्याप्तिश्चाग्नित्वधूमत्वद्वारेणैवावसीयते । न पैङ्गल्यादिधर्मद्वारेण । तेषामानन्त्याद्व्यभिचाराच्च । तथा हि—

पैङ्गल्यं शातकुम्भे तरलतरतडिन्मण्डले भास्वरत्वं
　　सत्त्वं सर्वार्थसार्थे तरुणरुचितरे भास्करे दाहकत्वम् ॥

वात्यादावूर्ध्वगत्वं तुहिनविघटना तप्ततैलादिवस्तु-
न्येवं वैश्वानरीयं व्यभिचरति सखे धर्मजातं समस्तम् ॥४७२॥

तथा—

नीलत्वं गवले विलोचनयुगोद्बाष्पत्वसम्पादनं
तैले व्योमतलाधिरोहणविधिर्व्यासर्पिबाष्पप्लवे ॥
अत्यन्तं कटुभावता त्रिकटुके दृष्टान्यसाधारणी
धूमस्येति विशिष्टधर्मनियता न व्याप्तिरत्रोच्यते ॥ ४७३ ॥

अतो येनैव रूपेण विश्वविवरवर्तिन्यो वह्निव्यक्तयो धूमव्यक्तयश्च संगृह्यन्ते तदेव रूपं व्याप्तिं नियमेन व्यवस्थापयति । तच्चाग्नित्वधूमत्वे मुक्त्वा नान्यद्भवितुमर्हति । न खलु यथा वस्त्वन्तरसाधारणाः पैङ्गल्यादयस्तथाग्नित्वधूमत्वे । ननु यद्यनयोर्व्याप्तिरस्ति तर्हि प्रथमदर्शनकाले कस्मान्नोल्लिखतीति चेत्, ग्राहकाभावादिति ब्रूमः । तत्काले ग्राहकाभावश्च तदा तत्कारणाभावात्सिद्धः । व्याप्तिज्ञानस्य हि कारणमुपलम्भानुपलम्भौ । न च प्रथमदर्शनकाले तौ स्तः । न च ग्राहकाभावात्तदा व्याप्तेरप्यभावः । तदा ग्राहकाभावस्यान्यथासिद्धत्वात् । अन्यथा दूरे रूपदर्शनकाले रसस्याभावः स्यादविशेषात् ।

एवं च—

सन्नीतिनीरपरिपालनपेशलोऽयं
तर्काङ्कुरः प्रमितिरूपतयाऽभ्युपेयः ॥
कर्मादिबोधफलदा समुदेति यस्मात्
निर्दूषणाऽनुमितिकल्पलता क्षणेन ४७४ ॥

अत्र योगाः सगिरन्ते—

तर्कस्याप्रामाण्यमिति वदतां नैयायिकाना मतनिर्देशपूर्वकं खण्डनम् ।

तर्कः सम्यक्तार्किकैस्तर्क्यमाणो
न प्रामाण्यं जातुचित्स्वीकरोति ॥
स्याद्वादज्ञैस्तत्प्रमाणत्वसिद्ध्यै
व्यर्थस्तस्मादाश्रितोऽयं प्रयासः ॥ ४७५ ॥

१ ' दृष्टान्त ' इति भ पुस्तके पाठः ।

तथा हि, तर्कः प्रमाणं न भवति निर्विषयत्वात् । यत्पुनः प्रमाणं तन्न निर्विषयं यथा प्रत्यक्षम्, निर्विषयश्च तर्कः । तस्मात्प्रमाणं न भवति । न चात्र निर्विषयत्वमसिद्धम् । तर्कस्य हि विषयः साध्यसाधनयोर्व्याप्तिः परैः प्रतिपाद्यते । सा च प्रत्यक्षस्यैव विषयः प्रथमप्रत्यक्षेऽप्यग्निसम्बन्धित्वेन धूमस्य प्रतिभासनात् । न चायं धूमवह्नेरन्यतोऽप्यन्यस्मादेव वा जलादेर्भवतीति सन्देहविपर्यासौ प्रत्यक्षे सम्भवतः । अग्नेरेवायमिति तत्सम्बन्धित्वेनैव धूमस्य तन्निश्चयात् । इत्थं प्रथमप्रत्यक्षेण व्याप्तौ प्रतिपन्नायामन्वयव्यतिरेकौ भूयोभूयोपलभ्यमानौ प्रथमस्यैव प्रत्ययस्य दार्ढ्यमुत्पादयतः । भूयो दर्शनादर्शनावगतान्वयव्यतिरेकसहकृतेन वा प्रत्यक्षेण व्याप्तिः प्रतीयते । ननु यदि प्रथमप्रत्यक्षेणैव व्याप्तिः प्रतीयते तर्हि किमित्ययं धूमोऽग्निनैव वह्न्यादिना नियत इत्येवंरूपा तन्निमित्ता व्याप्तिप्रतीतिर्नोत्पद्यते, इति चेत् । उच्यते । सामग्र्यभावात् । अन्वयव्यतिरेकाभ्यां हि भूयोदर्शनादर्शनावगताभ्यां व्याप्तिरुल्लिख्यते । न च प्रथमप्रत्यक्षकाले तौ स्तः । अन्वयव्यतिरेकौ च भूयोदर्शनादर्शनावगतौ प्रयोजकसन्देहव्युदासार्थौ युक्तावेव । अनेकसहचारिदर्शने हि प्रयोजके सन्देहः । किं धूमप्रयुक्तोऽयं नियमः किं वा श्यामत्वादिप्रयुक्त इति । तत्र श्यामत्वादयो धूमापेक्षा न वह्निसापेक्षा इति धूमस्याग्निसम्बन्धित्वे धूमत्वमेव प्रयोजकं न तु श्यामत्वादयः । धूमत्वे हि सति न कदाचिदग्निमत्त्वं व्यभिचरतीति । भूयोदृष्टान्वयव्यतिरेकस्य प्रमातुरपरोक्षाकारतयोपजायमानत्वाद्विशिष्टदण्डयादिप्रत्ययवत्प्रत्यक्षमेवेदं व्याप्तिज्ञानमिति ।

इत्थं न सङ्गतिमिहाङ्गति मानभावं
　सन्न्यायमार्गनिपुणैः परिमृग्यमाणः ॥
तर्कः कथञ्चन ततः स्वमताभिमानं
　मद्यापि मुञ्चत न किं बत जैनचन्द्राः ॥ ४७६ ॥

योगस्य या त्वस्य सुतार्किकत्वकीर्त्तिः पुरस्तात्परिपुंसनीया ॥
तर्कप्रमाणत्वकदर्थनायामयं विधेयस्तदनु प्रयासः ॥ ४७७ ॥

तथा हि, यत्तावन्निर्विषयत्वादिति साधनमुक्तम्। तदसिद्धम्। व्याप्तिलक्षणस्य तद्विषयत्वसम्भवात्। यत्पुनरुक्तं सा च प्रत्यक्षस्यैव विषय इत्यादि। तत्र किमैन्द्रियं मानसं वा प्रत्यक्षं व्याप्तिग्रहणे प्रवर्त्तते। न तावदैन्द्रियम्। तद्धि येनार्थेन प्रतिनियतदेशकालादिनेन्द्रियं सम्बध्यते तमेवावभासयति न तु व्याप्तिम्। सा हि सकलदेशकालालिङ्गितसाध्यसाधनोपसंहारेण गृह्यते। यतो व्यापनं व्याप्तिः सर्वासां व्याप्यव्यक्तीनां व्यापकव्यक्तीनां च व्याप्यरूपतया व्यापकरूपतया च क्रोडीकरणमुच्यते। न च तत्रेन्द्रियस्य ग्रहणसामर्थ्यं सम्भवति। सकलव्याप्यव्यापकव्यक्तिभिः सार्धं तस्य सम्बन्धासम्भवात्। ननु साध्यमग्निसामान्यं साधनं च धूमसामान्यं तयोश्चानवयवयोः सन्निकृष्टत्वादेकत्रापि साकल्येनेन्द्रियेण ग्रहणमस्ति विशेषप्रतिपत्तिस्तु सर्वत्र हेतोः पक्षधर्मतावलादेवेति चेत्। तदयुक्तम्। एवं हि साधनवैफल्यापत्तिः। व्याप्तिग्रहणकाल एव सामान्यरूपस्य साध्यस्य प्रसिद्धेः। कथमन्यथा सामान्यरूपयोः साध्यसाधनधर्मयोः साकल्येन व्याप्तिर्निर्णीता स्यात्। विशेषप्रतिपत्तिस्तु हेतोः पक्षधर्मतावलादेवेत्यत्रापि पक्षधर्मता धूमविशेषस्य तत्सामान्यस्य वा। आद्यपक्षेऽग्निविशेषेण धूमविशेषस्य व्याप्तेरप्रतिपत्तितो गमकत्वायोगः। द्वितीये त्वग्निसामान्यस्यैव धूमसामान्यात्सिद्धिः स्यात्तेनैव तस्य व्याप्तेः। अथ साधनसामान्यात्साध्यसामान्यप्रतिपत्तेरेवेष्टविशेषप्रतिपत्तिः। सामान्यस्य विशेषनिष्ठत्वादिति चेत्। ननु तत्सामान्यमपि विशेषमात्रेण व्याप्तं सत्तदेव गमयेन्नेष्टविशेषम्। यच्चोक्तं प्रथमप्रत्यक्षेऽप्यग्निसम्बन्धित्वेन धूमस्य प्रतिभासनादित्यादि। तदपि न क्षोदवर्त्तनीयमनुवर्त्तते। यतः पुरो दृश्यमानाग्निसम्बन्धित्वेन धूमः प्रथमप्रत्यक्षे प्रतिभासेत। सकलाग्निसम्बन्धित्वेन वा। प्रथमपक्षे कथं व्याप्तिप्रतिपत्तिः। प्रतिनियतव्यक्तौ व्याप्तेरेवासम्भवात्। तस्याः सर्वा-

क्षेपणपर्यन्तमानात्। द्वितीयपक्षोऽप्ययुक्तः। प्रतिनियताभिसम्बन्धित्वेनैव प्रथमप्रत्यक्षे धूमस्य प्रतिभासात्। यच्चाप्ययुक्तम्। भूयो दर्शनावगतान्वयव्यतिरेकसहकृतेन वा प्रत्यक्षेण व्याप्तिः प्रतीयत इति। तदप्ययुक्तम्। अन्वयव्यतिरेकसहकृतत्वं हि प्रत्यक्षस्य स्वविषयातिक्रमेणार्थान्तरे प्रवृत्तिः। स्वविषये प्रवर्त्तमानस्यान्वयव्यतिरेकाभ्यामतिशयाधानं वा। प्रथमपक्षे प्रत्यक्षविरोधः। स्वार्थातिक्रमेणार्थान्तरे प्रवृत्तिलक्षणस्य सहकृतत्वस्य क्वचिदप्यप्रतीतेः। न खलु प्रदीपसहकृतलोचनं रसादौ प्रवर्तमानं प्रतीयते। तथा—

उन्मीलत्कलिकाकलापकवलीकारक्रमव्याकुली—
क्रीडत्षट्पदचारुचूतलतिकाकान्ते वसन्तोत्सवे ॥
किं पुंस्कोकिलकामिनीव कुरुते काकी वराकी क्वचित्
कण्ठान्तर्लुठितोच्चपञ्चमकलासारान्वितं कूजितम् ॥४७८॥

द्वितीयपक्षेऽपि स्वविषये प्रवर्त्तमानस्यान्वयव्यतिरेकाभ्यामतिशयाधानमभ्युपगम्य व्याप्तिविषयत्वे सिद्धे सिद्ध्येत्, तच्चासिद्धम्। सम्बद्धवर्तमानार्थविषयत्वात्तस्य। किंच, इन्द्रियविषये विद्यमानत्वात्तत्प्रभवप्रत्यक्षेण व्याप्तिः प्रतीयते स्वविषयत्वाद्वा। न तावद्विद्यमानत्वात्, रसादेरपि चाक्षुषत्वानुषङ्गात्। व्याप्तिवद्भूमादौ तस्यापि सत्त्वाविशेषात्। नापि स्वविषयत्वात्, व्याप्तेः प्रत्यक्षविषयत्वानुपपत्तेः। अनियतविषया हि व्याप्तिरिति कथं नियतविषयेन्द्रियप्रभवप्रत्यक्षता प्रतिपद्येत। एतेनान्वयव्यतिरेकाभ्यां हीत्यादि पूर्वपक्षग्रन्थः सकलोऽपि प्रतिक्षिप्तः। प्रोक्तनीत्यान्वयव्यतिरेकयोः सहकृतत्वस्य प्रत्यक्षेण व्याप्तौ गृह्यमाणायां प्रतिहतत्वात्। तन्नेन्द्रियप्रभवं प्रत्यक्षं व्याप्तिप्रतिपत्तौ समर्थम्। नापि मानसम्। मनसो बाह्येन्द्रियनिरपेक्षस्य बहिरर्थसाक्षात्करणे सामर्थ्याभावात्। "अस्वतन्त्रं बहिर्मनः" इत्यभिधानात्। व्याप्तिश्च वह्निधूमादिविषया बहिरर्थधर्मत्वाद्बहिरेव वर्तते। भवदभिमतस्य च मनसोऽणुत्वभावत्वेनाशेषार्थसम्बन्धस्यासम्भवात्कथं तत्प्रभवं प्रत्यक्ष

व्याप्तिं निश्चिनुयात् । तथा हि । यदणुस्वभावं तत्सकृदशेषार्थैन न सम्बध्यते । यथा परमाणुः । अणुस्वभावं च भवत्कल्पितं मन इति । अथ साक्षान्मनसः समस्तार्थैः सम्बन्धाभावेऽपि परम्परया सम्बन्धो भविष्यति । मनसा हि साक्षादात्मा संयुज्यते । तेन च संयुक्ताः सर्वेऽग्न्यादयो धूमादयश्च साध्यसाधनविशेषास्तस्य व्यापकत्वादिति चेत् । तदपि न्यायशून्यम् । एवं सर्वस्य सर्वज्ञताप्रसङ्गात् । साध्यसाधनवन्निखिलार्थानां मनसा सह सम्बद्धसम्बन्धसंभवात् । किं चासौ सम्बद्धसम्बन्धोऽपि मनसः सद्भिरेवार्थैर्नासद्भिरतीतानागतैस्ततः कथं तत्र व्याप्तिप्रतिपत्तिः स्यात् । न चात्मनो व्यापकत्वं सिद्धम् । तस्याग्रे विस्तरतः प्रतिषेत्स्यमानत्वात् । तत्कथं सम्बद्धसम्बन्धगन्धोऽपि स्यात् । ततो दृष्टान्तमात्रे साध्यसाधनयोर्व्याप्तिस्त्वया स्वीकर्त्तव्या न तु समस्तासु वह्निधूमव्यक्तिषु । तथा चानुमानानुत्थानम् । साध्यधर्मिणि साध्यधर्मेण सह हेतोर्व्याप्तेरनिश्चयात् । ततश्चोपलम्भानुपलम्भसम्भवं त्रिकालवर्त्तिवह्निधूमादिविषयमस्पष्टं तर्काख्यं प्रमाणमुररीकर्त्तव्यम् । ननु यावान्कश्चिद्धूमः स सर्वोऽप्यग्निजन्मा भवतीत्येवं प्रकारस्येह विकल्पज्ञानस्य सम्बन्धग्राहिप्रत्यक्षफलत्वान्न प्रामाण्यमिति चेत् । एतदप्यसमीचीनम् । प्रत्यक्षस्य सम्बन्धग्राहित्वप्रतिषेधात् । तत्फलत्वेन चास्याप्रामाण्ये विशेषणज्ञानफलत्वाद्विशेष्यज्ञानस्याप्यप्रामाण्यानुषङ्गः । अथ हानोपादानोपेक्षाबुद्धिफलत्वात्तस्य प्रामाण्यमङ्गीक्रियते । तर्हि तर्कज्ञानस्यापि प्रमाणत्वमस्तु । तस्यापि व्याप्तिप्रतिपत्तिफलत्वात् । अथ प्रमाणविषयपरिशोधकत्वान्न तर्कः प्रमाणमित्युच्यते । तदपि परिफल्गु । अप्रमाणेन शोधनविरोधात् । मिथ्याज्ञानवत्प्रमेयार्थवच्च । तस्मादवस्थितमिदं तर्कः प्रमाणमबाध्यमानविषयत्वात्प्रत्यक्षवत् ।

ततश्च—

तर्कः प्रमाणमिति युक्तिबलेन सिद्ध-
मर्थं गृहाण परिमुच्य मुधाभिधानम् ॥

इत्थं प्रत्यक्षानुपलम्भपञ्चकेनैकस्यामपि व्यक्तौ कार्यकारणभावावगमो भवत्यग्नेः कार्यं धूम इति । यश्च यत्कार्यः स तेन नियतः । यदि तु तेन नियतो न स्यात्तदा तन्निरपेक्षत्वान्नित्यं सत्त्वमसत्त्वं वा तस्य स्यात् । ततश्चायमर्थः सम्पन्नः । येयं कार्यहेतौ सार्वत्रिकी विनाभावप्रतीतिरुपजायते । यदाह–" धूमाधीर्वह्निविज्ञानं धूमज्ञानमधीस्तयोः ॥ प्रत्यक्षानुपलम्भाभ्यामिति पञ्चभिरन्वयः ॥ " धूमाधीः–धूमानुपलम्भ इत्यर्थः । स्वभावहेतौ त्वविनाभावप्रतीतिर्विपक्षे बाधकानुमानात् । यथा क्षणिकत्वानुमानं सत्त्वहेतौ व्यापकानुपलम्भात् । तथा ह्यर्थक्रियाकारित्वलक्षणं सत्त्वमर्थक्रिया च क्रमयौगपद्याभ्यां व्याप्ता । ते च क्षणिकत्वान्निवर्त्तमाने स्वव्याप्यां सत्त्वरूपामर्थक्रियामादाय निवर्त्तेते । कस्मात्पुनरक्षणिकात्क्रमयौगपद्ययोर्व्यावृत्तिरिति चेत् । नानारूपत्वात् । कालतः पौर्वापर्यं हि क्रमस्तद्विपरीतं तु यौगपद्यमित्थं चैते नानारूपे । अक्षणिकत्वं चैकरूपता । एकरूपतानानारूपत्वे चैकत्र विरुद्धे । ततोऽक्षणिकात्क्रमयौगपद्यनिवृत्तौ निवर्त्तमानं सत्त्वं क्षणिक एवावतिष्ठते । प्रकारान्तरासम्भवात् । न खलु क्षणिकाक्षणिकत्व्यातिरिक्तस्तृतीयः प्रकारोऽस्ति । यतस्तत्रास्य वृत्तिराशङ्क्येत । अनुपलब्धेः पुनः स्वभावहेतावन्तर्भावान्न तत्र पृथगविनाभावग्राहकप्रमाणचिन्तेति । अत्रोच्यते । यत्तावदुक्तं कार्यहेतौ तावद्व्याप्तेः प्रतिपत्तिः प्रत्यक्षानुपलम्भपञ्चकाज्जायत इत्यादि तन्नोपपत्तिक्षमम् । उपलम्भानुपलम्भस्वभावस्य द्विविधस्यापि प्रत्यक्षस्य सन्निहितमात्रविषयतया देशादिव्यवहितसमस्तपदार्थगोचरत्वायोगात् । अविचारकतया च प्रत्यक्षं यावान्कश्चिद्धूमः स सर्वो देशान्तरे कालान्तरेऽग्निजन्माऽन्यजन्मा वा न भवतीत्येतावतो व्यापारान्कर्त्तुं समर्थमिति कथं व्याप्तिस्तद्विषय स्यात् । अथ पुरो व्यवस्थितार्थेषु प्रत्यक्षं व्याप्तिं प्रतिपद्यमानं सर्वोपसंहारेण प्रतिपद्यत इति कीर्त्यते । तदप्यकीर्त्तिकरम् । स्वाविषये प्रत्यक्षस्य सर्वोपसंहारानुपपत्तेः । प्रत्यक्षपृष्ठभाविनो[1] विकल्पस्यापि प्रत्यक्ष-

[1] ' भाविनो ' इति म. पुस्तके पाठः ।

गृहीतमात्राध्यवसायित्वात् सर्वोपसंहारेण व्याप्तिग्राहकत्वाभावः । तथा च कथमनिश्चितप्रतिबन्धत्वाद्देशान्तरादौ साध्यं साधनं गमयेत् । ननु "कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितः" विशिष्टप्रत्यक्षानुपलम्भाभ्यां निश्चितः स देशान्तरादौ तत्स्वभावोऽसन्नग्निकार्यतामेवातिवर्त्तेत्याकस्मिको धूमः पावकनिवृत्तौ न क्वापि निवर्त्तेत । नापि वह्निसद्भाव एव स स्यादित्यहेतोस्तुरङ्गशृङ्गस्येव धूमस्यासत्त्वात्क्वचिदप्युपलम्भो न भवेत् । तथा च कीर्त्तिना कीर्त्तितं वार्त्तिके– " कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितः । स भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥१॥" इति चेत् । तदपि न सुस्थम् । इत्थं व्याप्तिप्रतिपत्तौ तन्निश्चयकालोपलब्धे व्यापके न व्याप्तिः स्यात् । तस्यैव तथा निश्चयात् तादात्म्यापि । असाध्यत्वात्संस्मरणे तद्ग्राहिणो विकल्पस्य कथमगृहीतग्राहित्वं न स्यात् । प्रत्यक्षगृहीतादधिकग्राहित्वात् । तथा च प्रमाणान्तरमसौ स्यात् । तच्च किमन्यत्तर्कप्रमाणादिति । यदपि स्वभावहेतौ त्वविनाभावप्रतीतिर्विपक्षे बाधकानुमानादित्युक्तम् । तदप्युक्तिमात्रम् । यतो विपक्षे बाधकानुमानमपि प्रसिद्धाविनाभावं सत्स्वसाध्यसिद्धये प्रभवति । अविनाभावश्च तत्राप्यनुमानान्तरेण सिद्ध्येत्तेनैव वा । आद्ये पराऽनवस्था । द्वितीये त्वितरेतराश्रयः ।

तत्सम्यक् नाविनाभावसिद्धौ धत्ते प्रौढिं ऐन्द्रियी नापि बुद्धिः ॥
एकस्मिन्नस्मिन् सामर्थ्यमुद्रा निष्प्रत्यूहा हन्त तस्माद्विमर्शे ॥४८२॥

एवं च न तर्कस्याप्रमाणतायां गृहीतार्थग्राहित्वादि निबन्धनम्भवति । अथ विसंवादित्वं तन्निबन्धनं । तदपि नोपपन्नम् । स्वगोचरे तर्कस्याविसंवादित्वात् । तर्कस्य हि गोचरः साध्यसाधनयोः साकल्येन व्याप्तिः तस्यां चास्याविसंवादकत्वं सुप्रसिद्धमेव । अन्यथानुमानस्यापि कथमविसंवादकत्वं स्यात् । ननु तर्कस्यानुमाननिबन्धनसम्बन्धविषये प्रमाणान्तरवदनुमानस्यापि प्रमाणत्वं सम्भवति । तर्कस्य निश्चितप्रमाणं नास्ति विप्रतिपत्तिविषयत्वादिति चेत् । तदपि

न तार्किकप्रीतिकरम् । तर्कस्य संवादसंदेहे हि कथं निःसन्देहानुमानोत्थानस्यापत्तितो निःसन्देहमनुमानमिच्छता साध्यसाधनसम्बन्धग्राहिप्रमाणं निश्चितसंवादमेव स्वीकर्त्तव्यम् । तन्न विसंवादित्वमपि । तर्कस्य प्रमाणत्वे तर्हि तस्य किं निमित्तमिति चेत् । समारोपव्यवच्छेदकत्वमिति ब्रूमः । तथा हि, तर्कः प्रमाणं समारोपव्यवच्छेदकत्वाद्यदित्थं तदित्थं यथानुमानम् । तथा च तर्कस्तस्मात्प्रमाणमिति । एवं च,

तीतानागतवर्त्तमानसमवश्लिष्टाग्निधूमादिके
व्याप्तिं वस्तुनि न ग्रहीतुमिह यत्सर्वोपसंहारतः ॥
प्रत्यक्षप्रमुखं प्रमाणमयते शक्तिं ततश्चागतं
प्रामाण्यं सुदृढोक्तयुक्तिबलतस्तर्कस्य तन्निश्चये ॥ ४८३ ॥

प्रथमत इह तावद्दर्शनं नास्तिकानां
विघटितमनु तस्माद्योगपक्षो निरस्तः ॥
तदनु सुगतशिष्यैर्जल्पितं दोषजालं
यदिह किमपि युक्त्या सर्वथा तच्च भग्नम् ॥ ४८४ ॥८॥

एवं तर्कं निर्णयेदानीमुद्देशक्रमानुसारेणानुमानं व्युत्पादयिष्यंस्तद्गतां सङ्ख्याविप्रतिपत्तिं तावन्निरस्यति—

**अनुमानं द्विप्रकारं स्वार्थं परार्थं चेति ॥ ९ ॥**

अनु लिङ्गग्रहणसम्बन्धस्मरणयोः पश्चान्मीयते परिच्छिद्यतेऽर्थोऽनेनेत्यनुमानं वक्ष्यमाणलक्षणम् । द्वौ प्रकारौ भेदौ वक्तु न शक्यमिति लक्षणकथनाङ्ग प्राक्प्रकारभेद उक्तः । तमेव विशेषतो दर्शयति । स्वार्थं परार्थं चेति । स्वस्मै इदं स्वार्थं येन स्वयं प्रतिपद्यते तत्स्वार्थमित्यर्थः । परस्मै इदं परार्थं येन परं प्रतिपादयति तत्परार्थमित्यर्थः । चः समुच्चये ॥ ९ ॥

प्रथमप्रकारं प्रकाशयन्नाह—

---

1 तीतानागतेत्यत्राकारलोपसिद्धिश्चिन्त्या ।

## तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थमिति ॥ १० ॥

तत्र तयोः स्वार्थपरार्थानुमानयोर्मध्ये । हिनोति गमयति परोक्षमर्थमिति हेतुः साधनं लिङ्गमिति यावत् । तस्य ग्रहणं निश्चयः । सम्बन्धो व्याप्तिरविनाभाव इत्यर्थः । तस्य स्मरणम्, ततो हेतुग्रहणसम्बन्धस्मरणे कारणं यस्य तत्तथा । किमित्याह । साध्यस्य वक्ष्यमाणलक्षणस्य विज्ञानं स्वार्थमनुमानमुच्यते । लिङ्गग्रहणसम्बन्धस्मरणयोश्चात्र कारणत्वं समुदितयोरेवावसेयम् । प्रत्येकं हि तत्कारणत्वे विस्मृतसम्बन्धस्याप्रतिपन्नसम्बन्धस्य च नालिकरद्वीपवासिनः क्वचिद्धूमादिलिङ्गग्रहणादेव केवलात्पावकादिसाध्यानुमानमुल्लसेत् । अगृहीतलिङ्गस्यापि च कस्यचित्प्राक्प्रतिपन्नसाध्यसाधनसम्बन्धस्मरणमात्रादनुमानं प्रादुर्भवेदिति ॥१०॥

हेतुग्रहणकारणकमित्युक्तमिति हेतोः स्वरूपं निरूपयति—

## निश्चितान्यथानुपपत्त्येकलक्षणो हेतुरिति ॥११॥

निश्चिता निर्णीता, अन्यथा साध्यमन्तरेणानुपपत्तिरघटनाऽन्यथानुपपत्तिरविनाभाव इत्यर्थः । निश्चिता चासावन्यथानुपपत्तिश्च निश्चितान्यथानुपपत्तिः । सैवैका लक्षणं यस्य स निश्चितान्यथानुपपत्त्येकलक्षणो हेतुरिति ॥ ११ ॥

एतल्लक्षणव्यवच्छेद्यमर्थं व्यक्तीकुर्वन्नाह—

## न तु त्रिलक्षणकादिरिति ॥ १२ ॥

त्रीणि लक्षणानि रूपाणि पक्षधर्मत्वसपक्षसत्त्वविपक्षासत्त्वाख्यानि यस्यासौ त्रिलक्षणकः स आदिर्यस्य पञ्चलक्षणकादेः स त्रिलक्षणकादिः पुनर्हेतुर्न भवतीति ॥ १२ ॥

अत्रोपपत्तिमाह—

## तस्य हेत्वाभासस्यापि सम्भवादिति ॥ १३ ॥

तस्य त्रिलक्षणकादेः, हेतुवदाभासत इति हेत्वाभासस्तस्यापि । न केवलं सम्यग्घेतोरित्यपि शब्दार्थः । सम्भवाद्घटनात् । इदमत्रैदम्पर्यम् । यदेव हि लक्ष्यासाधारणं स्वरूपं तदेव लक्षणतया लोके प्रतीतमव्यभिचारित्वात् । यथा भास्वररूपोष्णस्पर्शवत्त्वमग्नेः । न च त्रैरूप्यादेर्लिङ्गासाधारणता । तत्पुत्रत्वादौ हेत्वाभासेऽपि सम्भवादिति ।

पक्षधर्मत्वादिलक्षणत्रयान्वितस्यैव हेतुत्वं वदतो बौद्धस्य मतमुपपाद्य खण्डनम् ।

शिष्यः शौद्धोदनेः कश्चिदत्र प्रत्यवतिष्ठते ॥
स्वकीयदर्शनाभीष्टं स्थापयन्हेतुलक्षणम् ॥ ४८५ ॥

तथा हि—हेतौ निश्चितान्यथानुपपत्त्येकलक्षणत्वमनुपपन्नम् । तस्य पक्षधर्मत्वादिलक्षणत्रयान्वितत्वेनैव सम्यक्त्वोपपत्तेः । अन्यथाऽसिद्धत्वादिदोषानुषङ्गात् । न खलु पक्षधर्मत्वाभावे तस्यासिद्धत्वव्यवच्छेदः । सपक्ष एव सत्त्वाभावे च विरुद्धत्वव्युदासः । विपक्षे चासत्त्वनियमाभावेऽनैकान्तिकत्वनिषेधश्च कर्तुं शक्यः । उक्तं च— "हेतोस्त्रिष्वपि रूपेषु निश्चयस्तेन वर्णितः ॥ असिद्धविपरीतार्थव्यभिचारिविपक्षतः ॥ १ ॥" अस्यायमर्थः— असति तादात्म्यतदुत्पत्तिलक्षणे प्रतिबन्धे व्याप्तेरनिश्चयाद्धेतोरगमकत्वं यतः स्यात्तेन कारणेन हेतोस्त्रिष्वपि रूपेषु पक्षधर्मान्वयव्यतिरेकरूपेषु निश्चयो वर्णित आचार्यदिग्नागेन "प्रसिद्धस्तु द्वयोरपि साधनम्" इत्यादिना प्रमाणसमुच्चयादिषु । कस्य निरासेनेत्याह—असिद्धेत्यादि । विपक्षत इति, आद्यादित्वात्तृतीयार्थे तसिः[1] । विपक्षेणेत्यर्थः । तदा ह्यसिद्धविपक्षेण पक्षधर्मत्वनिश्चयो वर्णितः । विपरीतार्थो विरुद्धस्तस्य विपक्षेणान्वयः । व्यभिचार्यनैकान्तिकस्तस्य विपक्षेण व्यतिरेकनिश्चयः । प्रसिद्धस्तु द्वयोरपि साधनमित्यत्र च दिग्नागवचश्शकले द्वयोरपीत्यनेनैकस्य

---

१ 'आद्यादिभ्य उपसंख्यानम्' इति का. वा. ५-४-४४ ।

वादिन प्रतिवादिनो वा य सिद्धस्तस्य साधनत्वप्रतिषेध । प्रसिद्ध इत्यनेन च य सन्दिग्धस्तस्येति ।

उक्त ताथागतेनेद स्वमते हेतुलक्षणम् ।
प्रक्रियामात्रमेतत्तु न्यायमार्गाश्रमान्वित ॥ ४८६ ॥

तथा हि—न पक्षधर्मत्वादि रूपत्रय हेतोर्लक्षणम् । विपक्षेऽप्यस्य वर्तमानत्वात् । यद्यस्य विपक्षेऽपि वर्तते न तत्तस्य लक्षण यथा सत्त्वमग्ने । विपक्षेऽपि हेत्वाभासलक्षणे वर्तते च पक्षधर्मत्वादित्रूपत्रयम् । तन्न हेतोस्तल्लक्षणमिति । अथान्यथानुपपत्तिनियमवत्त्रैरूप्य हेतुलक्षण न त्रैरूप्यमात्रम् । तथाविध च तद्विपक्षे हेत्वाभासलक्षणे न सम्भवतीत्युच्यते तदसम्बद्धम् । एव सति त्रैरूप्यकल्पनानर्थक्यप्रसङ्गात् । अन्यथानुपपत्तिनियमादेव हेतोर्गमकत्वोपपत्ते । न खलु कृत्तिकोदयाच्छकटोदयाद्यनुमाने पक्षधर्मता सम्भवति । अथ कालाकाशादि भविष्यच्छकटोदयादिमत्कृत्तिकोदयादिमत्त्वात्पूर्वोपलब्धकालाकाशादिवदितीत्थमत्र पक्षधर्मताऽभिधीयते । तर्हि न कश्चिदपक्षधर्मत्वे हेतु स्यात् । काककार्ष्ण्यादेरपि प्रासादधावल्यादौ साध्ये जगतो धर्मित्वेन पक्षधर्मत्वस्य कर्तु सुशक्यत्वात् । तथा हि—जगत्प्रासादधावल्ययोगि काककार्ष्ण्ययोगित्वात् । तथा जगज्ज्वलद्विभातवेद समन्वित महानसधूमयोगित्वात्पूर्वोपलब्धजगद्वदिति । लोकविरुद्धोऽन्यत्राप्यविशिष्ट । तन्न पक्षधर्मत्व हेतोर्गमकत्वाङ्गम् । नापि सपक्षे सत्त्वम् । अनित्य शब्द श्रवणत्वान्नित्यानित्यासाधारणत्वादनैकान्तिकत्वमिति चेत् । तदयुक्तम् । असाधारणत्वस्यानैकान्तिकत्वेन व्याप्त्यसिद्धे । सपक्षविपक्षयोर्हि श्रावणत्वादिसत्त्वेन कि निश्चित सशयितो वा । असत्त्वेन निश्चितश्चेत्, कथमनैकान्तिक सपक्षविपक्षयोरसत्त्वेन निश्चितो हेतु पक्षे साध्याविनाभावित्वेन निश्चेतुमशक्य इति शक्य वक्तुम् । सर्वानित्यत्वे साध्ये सत्त्वादेरहेतुत्वप्रसङ्गात् । न खलु सत्त्वादिर्विपक्ष

१ 'विश्रावणत्वादि' इति भ पुस्तके पाठ ।

एवासत्त्वेन निश्चितः । सपक्षेऽपि तस्यासत्त्वनिश्चयात् । ननु सपक्षस्याभावात्तत्र सत्त्वादेरसत्त्वनिश्चयेऽपि स्वसाध्यसाधकत्वं युक्तम् । न पुनः श्रावणत्वादेः । तस्य विद्यमानेऽपि सपक्षे घटादावसद्भावादिति चेत् । तदप्यसमीचीनम् । सति सपक्षे विद्यमानत्वस्य गमकतायामनङ्गत्वात् । अन्तर्व्याप्तेरेव सर्वत्र तदङ्गत्वोपपत्तेः । यदि च सति सपक्षे श्रावणत्वादिरसत्त्वेन निश्चित इति कृत्वा न स्वसाध्यस्य गमकः । तर्हि सति विपक्षे जलाशयादावसत्त्वेन निश्चितो धूमादिरेव स्वसाध्यगमकः स्यान्न त्वसति तस्मिन्नसत्त्वेन निश्चितः सत्त्वादिः ।

अथ कथ्यते—

असति खलु विपक्षे यस्य नास्त्येव सत्ता
स भजति बत सम्यग्घेतुतां सर्वथैव ॥
व्यभिचरति कथञ्चिन्नाविनाभावमुद्रा
यदिह शुचिमनीषाचक्षुषा वीक्ष्यमाणम् ॥ ४८७ ॥

नन्वेवं सम्पूर्णे सपक्षे तदेकदेशे वा यः सन्कृतकत्वप्रयत्नानन्तरीयकत्वादिकः स कथं हेतुतां स्वीकुर्यादिति चेत् । असन्नेव सपक्षे हेतुरित्यनवधारणात् । विपक्षेऽपि तदसत्त्वानवधारणमस्त्विति न मन्तव्यम् । साध्याविनाभावित्वव्याघातानुषङ्गात् । तत्र सपक्षविपक्षयोरसत्त्वेन निश्चितोऽसाधारणः कथञ्चिदनैकान्तिकतामास्कन्दति । नापि सपक्षविपक्षयोरसत्त्वेन संशयितः श्रावणत्वादिरसाधारण इति द्वितीयः पक्षः । तयोस्तस्यासत्त्वेन निश्चितत्वात् । न च सपक्षे सत्त्वाभावे श्रावणत्वादिहेतोरनन्वयत्वानुषङ्गः । अन्तर्व्याप्तिलक्षणस्य तथोपपत्तिरूपस्यान्वयस्य तत्र सद्भावात् । अन्यथानुपपत्तिरूपव्यतिरेकवत् । तत्र सपक्षे सत्त्वमपि हेतोर्लक्षणम् । नापि विपक्षेऽसत्त्वम् । तत्पुत्रत्वस्यापि गमकत्वप्रसङ्गात् । श्यामेतरपुरुषलक्षणाद्विपक्षाद्व्यावृत्तत्वात् । अथ न विपक्षेऽसत्त्वमात्रं हेतुलक्षणं किन्त्ववधारणगर्भमसत्त्वं विपक्षेऽसत्त्वमेव निश्चितमिति न चात्रावधारणनिश्चितिरस्ति । न हि यत्र श्यामत्वं

नास्ति तत्पुत्रत्वेनापि न भवितव्यमेवेत्येकान्तः । शाकाद्याहारस्वरूप-स्वकारणासत्त्वेन कदाचन श्यामत्वानुत्पत्तावपि स्वकारणोपनीतस्य तत्पुत्रत्वस्य सम्भाव्यमानत्वादिति चेत् । तर्हि नन्वभाव विपक्षासत्त्व निश्चितान्यथानुपपत्तिरेवेति तदेवैकं हेतोः प्रधानं लक्षणमस्तु । पर्याप्तं लक्षणान्तरपरिकल्पनया । तदुक्तं पात्रस्वामिना—" अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् । नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥१॥ " इति । यत्पुनरभिहितमन्यथासिद्धत्वादिदोषानुषङ्गादित्यादि । तदप्यालोचितवचनम् । निश्चितान्यथानुपपत्तिलक्षणत्वादेव हेतोरसिद्ध-त्वादिदोषपरिहारप्रसिद्धेः । न ह्यसिद्धादिषु हेत्वाभासेषु निश्चितान्यथा-नुपपत्तिः कथञ्चित्सम्भवतीति । असिद्धादिस्वरूपसूचकसूत्रस्य व्याख्या-नावसरेऽभिधास्याम । एवमप्यविनाभावप्रपञ्चत्वात्पक्षधर्मत्वादेरसिद्धादि-व्यवच्छेदार्थं हेतुलक्षणत्वेन प्रणयने निश्चितत्वस्यापि रूपान्तरस्याज्ञाता-सिद्धताव्यवच्छेदार्थमबाधितविषयत्वादेश्च लक्षणान्तरस्य बाधितविषय-त्वादिव्यवच्छित्तये हेतुलक्षणत्वेन प्रणयनं स्यात् ।

एवं च—

नैतद्विधो पक्षधर्मत्वमुख्यं त्रैलक्षण्यं लक्षणं लक्षणीयम् ॥
यस्मादस्मिन्विद्यमानेऽपि हेतोः शक्तिर्नैवात्मीयसाध्यप्रसिद्धौ ॥४८८॥

अत्र यौगाः प्रत्यवतिष्ठन्ते—

हेतोः पञ्चरूपत्वमङ्गीकुर्वतां नैयायिकानां मतमुपदर्श्य खण्डनम् ।

जानासि जल्पितुमनल्पमते यदत्र
हेतोस्त्रिलक्षणकतां क्षिपसि क्षणेन ॥
यस्मादयं प्रभवति प्रकटस्वसाध्य-
समाधनाय नियतं ननु पञ्चरूपः ॥४८९॥

तथा हि—त्रैरूप्यं हेतोर्लक्षणं मा भूत् । पञ्चान्येतानि सहकार-फलान्येकशाखाप्रभवत्वादुपयुक्तसहकारफलवदित्यादौ बाधितविषये मूर्खोऽयं देवदत्तस्तत्पुत्रत्वादितरतत्पुत्रवदित्यादौ सत्प्रतिपक्षे च

हेत्वाभासेऽप्यस्य सम्भवात् । पञ्चरूपत्वं तु भवत्येव । निर्दोषत्वात् । एकशाखाप्रभवत्वस्य हि त्रैरूप्ये सत्यप्यहेतुत्वम् । अबाधितविषयत्वासम्भवात् । तथा हि । इदमनुमानं प्रतिदिनपरिणामोपचीयमानपाश्चिमवयसि वसन्ते कस्यापि ललाटंतप[1]ग्रहपतिपातितप्रचण्डमरीचिकाचक्रसम्पर्ककर्कशसनीरलहरीपरिक्काथ्यमानपरिपक्वफलरसस्य सहकारमहीरुहस्य कस्याश्चिद्विशालशाखायां कानिचित्कुङ्कुमपङ्कपिञ्जराणि परिणतिपेशलानि कान्यपि पुनरपि जरठतमालदलश्यामलकान्तिकान्तानि तदितराणि फलानि समुपलभमानस्तदभिलापवलप्रवलविगलदन्तोदकप्लवप्लवमानलोलजिह्वाचल पुमान्कश्चित्करोति । अथवाऽऽमताग्राहिणा तत्प्रत्यक्षेणावबाध्यते । तत्पुत्रत्वस्यापि विद्यमानेऽपि त्रैरूप्ये हेत्वाभासत्वम् । असत्प्रतिपक्षत्वाभावात् । मूर्खोऽयं तत्पुत्रो न भवति विविधशास्त्रव्याख्यानादिकौशलशालित्वात्प्रतिपन्नप्राज्ञपुरुषवदित्यादेस्तत्प्रतिपक्षस्य सम्भवात् । इदमपि हि मूर्खत्वानुमानमनेककर्कशतर्कशास्त्रसन्दर्भगर्भाविर्भावनाविजृम्भमाणप्रभूततमरोमाञ्चसञ्चयकञ्चुकाञ्चितशरीरेण कुशाग्रीयशेमुषीशालिना शिष्यमण्डलेन समुपास्यमानं कमपि कोविदवृन्दारकमवलोकमानस्तदुपरिप्ररूढमत्सरमदिराधिकारपरवशः कश्चिदहंयुः[2] करोति । अथ च तत्प्रतीयमानेनैव मूर्खत्वबाधकेन विविधशास्त्रव्याख्यानादिकलाकौशलशालित्वानुमानेन बाध्यते । ततः कालात्ययापदिष्टस्य हेत्वाभासस्य व्यवच्छेदार्थमबाधितविषयत्वं प्रकरणसमस्य च व्युदासार्थमसत्प्रतिपक्षत्वं हेतोर्लक्षणमभ्युपेयमिति पक्षधर्मत्वादिरूपत्रयादभ्यधिकयोरबाधितविषयत्वासत्प्रतिपक्षत्वयोरपि रूपयोः सद्भावात्पञ्चलक्षणकमेवमङ्गीकरणीयम् । यथोक्तं जैयन्तेन[3]—" पञ्चलक्षणकाल्लिङ्गादगृहीतान्नियमस्मृतेः ॥ परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते ॥ १ ॥" इति । स एवैतद्व्याचष्टे—परोक्षोऽर्थो लिङ्ग्यते गम्यतेऽनेनेति लिङ्गं तस्माल्लिङ्गाल्लिङ्गिनि ज्ञानमनुमानं प्रचक्षत इति

---

१ ललाटंतप.—मध्याह्नस्थः । ग्रहपति. सूर्य. । २ अहंकारवान् ।

३ न्यायमञ्जरीपृ. १०९.

योग ।कथम्भूताल्लिङ्गात् , पञ्च लक्षणान्यस्येति पञ्चलक्षणक तस्मात्। कानि पुन पञ्च लक्षणान्युच्यन्ते , पक्षधर्मत्व सपक्षे सत्त्व विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्व चेति । सिषाधयिषितधर्मविशिष्टो धर्मी पक्षस्तद्धर्मत्व पक्षधर्मत्व तदाश्रितत्वमित्यर्थ , साध्यधर्मयोगित्वेन निश्चित धर्म्यन्तर सपक्षस्तत्रास्तित्वम्, साध्यधर्मसम्पर्कशून्यो धर्मी विपक्षस्ततो व्यावृत्ति , अनुमेयस्यार्थस्य प्रत्यक्षेणागमेन वा अनपहरणमबाधितविषयत्वम्, समानतीनमूलेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनानुपहततत्वमसत्प्रतिपक्षत्वमिति, एतै पञ्चभिर्लक्षणैरुपपन्न लिङ्ग साध्यस्यानुमापक भवति । एतेषा च लक्षणानामेकैकापायात्पञ्च हेत्वाभासा भवन्ति। तथा हि—यस्य पक्षधर्मता नास्त्यसावसिद्धो हेत्वाभास । यथा नित्य शब्दश्चाक्षुषत्वादिति, सपक्षे सत्त्व यस्य नास्ति स विरुद्ध , यथा नित्य शब्द कृतकत्वादिति, यस्य विपक्षाद्व्यावृत्तिर्नास्त्यसावनैकान्तिक , यथा नित्य शब्द प्रमेयत्वादिति, यस्याबाधितविषयत्व नास्ति स कालात्ययापदिष्ट , यथानुष्णस्तेजोऽवयवी कृतकत्वाद्घटवदिति प्रत्यक्षबाधितविषय । ब्राह्मणेन सुरा पेया द्रवत्वात्क्षीरवदित्यागमबाधितविषय इति। यस्य निष्प्रतिपक्षता नास्ति स प्रकरणसम , यथाऽनित्य शब्दो नित्यधर्मानुपलब्धेर्घटवत् । नित्य शब्दोऽनित्यधर्मानुपलब्धेराकाशवदिति । द्वावप्येतौ परस्पर सत्प्रतिपक्षाविति । न च वस्तूनामद्विरूपत्वात्कथमेकत्र धर्मिणि परस्परविरोधधर्मद्वयाक्षेपप्रयोजकहेतुद्वितयस्य सन्निपातो भवेदिति शङ्कनीयम् । यत संशयबीज यद्विशेषाग्रहण तदन्यतरपक्षनिर्णयाय भ्रान्त्या प्रयुज्यमान सत्प्रतिपक्षता प्रतिपद्यते । स्थाणुरय पुरुषधर्मानुपलब्धे पुरुषोऽय स्थाणुधर्मानुपलब्धेरितिवत्। अन्यतरविशेषानुपलम्भ एवाय संशयाधायी पक्षधर्मान्वयव्यतिरेकोपपत्तेभ्रमणे हेतुरिति प्रयोज्यमान सत्प्रतिपक्षो भवति । पुरुषमनाप्रमादमूलत्वाच्च वस्तुनो द्यात्मकत्वमिह प्रतिभासते । इति सुव्यवस्थित एव प्रकरणसमाख्य पञ्चमो हेत्वाभास । एतेषु पञ्चसु लिङ्गलक्षणेषु लिङ्गस्याविनाभाव परिसमाप्यते, इति पञ्चलक्षणकाल्लिङ्गा-

दिति व्याख्यातम् । व्याप्तिग्रहणसमयसमधिगतस्वरूपस्यापि लिङ्गस्य पुनर्धर्मिणि क्वचिदनवधृतवपुषो न साध्यावबोधसाधनत्वमिति द्वितीयं लिङ्गदर्शनमवश्यमपेक्षणीयमिति गृहीतादित्युक्तम् । लिङ्गं हि ज्ञापकं न च चक्षुरादिवत्कारकम् । ज्ञापकस्य चायं स्वभावो यदज्ञातं सन्न ज्ञापयतीति । व्याप्तिकालगृहीतमेव व्याप्तिवत्स्मर्यमाणतया लिङ्गं लिङ्गिनं गमयिष्यतीति चेत् । मैवम् । लिङ्गग्रहणमन्तरेण व्याप्तिस्मृतेरप्यभावादिति । अथ नियमस्मृतेरिति व्याख्यायते । नियमो व्याप्तिरविनाभावो नित्यसाहचर्यमित्यर्थः । तस्य स्मृतिर्नियमस्मृतिस्तस्याश्च सकाशात्परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते इत्यत्रापि सण्टङ्कः । द्वितीयलिङ्गदर्शने सत्यपि नियमस्मरणमन्तरेण साध्यप्रमितिर्नोन्मीलतीति भावः । "नियमो हि गृहीतोऽङ्गमनुमेयप्रमां प्रति ॥ न नालिकेरद्वीपस्थो धूमादग्निं प्रपद्यते ॥ १ ॥ साध्यानुमितिवेलायां न चास्ति नियमग्रहः ॥ नियमग्रहकाले च न साध्यमनुमीयते ॥ २ ॥ तेन पूर्वं गृहीतः सन्निदानीं स्मृतिगोचरः ॥ नियमः प्रतिपत्त्यङ्गं तथावगतिदर्शनात् ॥ ३ ॥ यत्रापि विषयेभ्यस्तेनैव संवेद्यते स्मृतिः ॥ तत्राप्यनेन ज्ञानेन बलात्स परिकल्प्यते ॥४॥" अथ परोक्षे लिङ्गिनीति विव्रियते । तत्र लिङ्गी तावदुच्यते । धर्मविशिष्टो धर्म्मी साध्यः स एव लिङ्गीति । न धर्मिमात्रं साध्यम् । पर्वतादेर्धर्मिणः सिद्धत्वात् । न धर्ममात्रम् । अग्नेरपि यत्र तत्र सिद्धत्वात् । न च द्वयोः साध्यत्वम् । स्वतन्त्रयोर्वह्निपर्वतयोरपि सिद्धत्वादेव । तस्मादेकस्य द्वयोर्वा स्वातन्त्र्येणानुमेयता नावकल्प्यत इत्यवश्यमन्यतरविशिष्टोऽन्यतरः साध्यो वक्तव्यः । तत्रापि तु धर्मविशिष्टो धर्मी । तथा हि—देशविशिष्टे वह्नौ साध्ये षोडश विकल्पाः सम्भवेयुः । सर्व एव वाग्निः सर्वदेशविशिष्टः, अनिर्धारितदेशविशेषविशिष्टः, पूर्वानुभूतमहानसादिदेशविशिष्टः, सम्प्रत्युपलभ्यमानपर्वतादिदेशविशिष्टो वाऽनुमेयः स्यात्, कश्चिदग्निः

सर्वदेशविशिष्ट , देशविशिष्टो वा अनुमेय स्यात्, एव सिसाधयिषितो वह्निः सर्वदेशविशिष्ट , अनिर्धारितदेशविशिष्ट , प्रागनुभूतदेशविशिष्ट , इदानीमनुभूयमानदेशविशिष्टो वाऽनुमेय इति।तत्रते पञ्चदश पक्षा प्रत्यक्षविरोधसिद्धसाध्यव्याप्तिलोपोपहता इत्यनादरणीया एव । यस्तु षोडश पक्ष एतद्देशविशिष्ट एषोऽग्निरिति , तत्र देशविशेषानवच्छेदमन्तरेणैव वह्निरिति परिच्छेत्तुमेव न शक्यते । अतो देश एव प्रथममवगम्यते । तस्य च पूर्वप्रतिपन्नत्वादिदानीमनवगतदहनविशिष्टस्यास्यानुमातुं योग्यत्वात्स एव साध्यो युक्त । अपि च । अग्ने साध्यतायामतद्धर्मा धूम कथमनुमापक स्यात् । अनुपलब्धे ज्वलन तद्धर्मतया धूमो प्रतीतु न पार्यते । उपलब्धे तु हुतभुजि भवन्नपि निष्फलमेव धूमस्य तद्धर्मताग्रहणम् । अनुमेयस्य तदानीं कस्यचिदभावात् । तस्मादग्निविशिष्ट परिदृश्यमानो देश एव साध्य । स च स्वरूपत प्रत्यक्षोऽपि परोक्षधर्मविशिष्टतयानुमेय इति धूमधर्मयोगादग्निधर्मवान्स एवानुमीयते । सोऽनुमानस्य विषयो लिङ्गीत्युच्यते । परोक्षग्रहणं च परोक्षधर्मविशिष्टे धर्मिणि साध्यत्वप्रतिपत्त्यर्थम् । क्वचित्तु व्याप्तिस्मरणसमनन्तरमेव प्रत्यासीदत प्रमातुर्झटिति समुन्मिषतकस्मादेव प्रत्यक्षीभवति विभावसुरिति न तद्विशिष्टतयापि धर्मिणि परोक्षत्वमवकल्प्यत इति तद्व्यावृत्त्येऽपि परोक्षग्रहणमिति ।

तनश्च--

रूपपञ्चकसमृद्धिबन्धुर लिङ्गमेतदिति यौगकल्पितम् ॥
साध्यसिद्धिमनुमानमुद्रया मन्त्रयद्भिरुपगम्यता बुधै ॥ १९० ॥
भारती तव वचस्य गुम्फने वर्णमात्रघटनासमुद्गुरा ॥
भासते पुनरसौ मनीषिणा काणदृष्टिरिव रोपिताञ्जना ॥१९१ ॥

तथा हि--हेतो पञ्चरूपत्वमनुपपन्नम् । त्रैरूप्यवचस्यापि हेत्वाभासेऽपि भावात । अग्निरत्रोऽयं धूम सत्त्वात्पूर्वोपलब्धधूमवदित्यत्र हि हेत्वाभासेऽपि पक्षधर्मत्व तावदस्ति । पक्षीकृते धूमे सत्त्वस्यासन्दिग्ध-

त्वात् । अन्वयोऽपि नियत एव । पूर्वदृष्टे धूमेऽग्निजन्यत्वेन व्याप्तस्य सत्त्वस्य सद्भावात् । व्यतिरेकश्च । खरविषाणादौ साध्याभावे साधनस्य सत्त्वस्याभावनिश्चयात् । अबाधितविषयत्वमप्यत्रास्ति । विवादापन्ने धूमेऽग्निजन्यत्वस्य बाधकाभावात् । एवमसत्प्रतिपक्षत्वमपि । अनग्निजन्यत्वसाधकस्यानुमानस्यात्रासम्भवादिति सिद्ध हेत्वाभासेऽपि सत्त्वे पञ्चरूपत्वम । सामस्त्येन व्यतिरेकनिश्चयस्यात्राभावादसिद्धमिति चेत् । न । तस्यान्यथानुपपन्नत्वरूपत्वेन तदभावे शेषरूपाणामकिञ्चित्करत्वापत्तेस्तद्विकलस्यैव पञ्चरूपत्वस्यालक्षणत्वेन साध्यत्वात् । यत्पुनरबाधितविषयत्वासत्प्रतिपक्षत्वयोरभावादेकशाखाप्रभवत्वतत्पुत्रत्वहेत्वोरगमकत्वमगादि तत्राप्यन्यथानुपपत्त्यभाव एव निमित्तम् । न पुनरबाधितविषयत्वासत्प्रतिपक्षत्वयोरभावः । तयोः सतोरप्यगमकत्वस्यानन्तरमेव दर्शितत्वात् । किं चाबाधितविषयत्वस्य तावन्निश्चितस्यैव हेतुलक्षणाङ्गत्वमङ्गीकृतम् । न च तन्निश्चयः सम्भवति । तन्निश्चयसाध्यनिश्चययोः परस्पराश्रयणात् । सति हि बाधनाभावनिश्चये हेतोः साध्यनिश्चयस्तन्निश्चयाच्च बाधनाभावनिश्चय इति न तयोरन्यतरस्य व्यवस्था । यदि पुनरन्यतः कुतश्चिद्बाधनाभावनिश्चयात्परस्पराश्रयपरिहारः क्रियते । तदाप्यकिञ्चित्करत्वं हेतोः । यथैव हि हेतोर्विपर्ययस्य बाधासद्भावनिश्चये तत्साधनासमर्थत्वादकिञ्चित्करत्वम् । तथैव बाधाविरहनिश्चये कुतश्चित्तस्य सद्भावसिद्धेस्तत्साधनाय प्रवर्त्तमानस्य सिद्धसाधनादपीति न सार्धयिस्तस्य तल्लक्षणत्वम् । नन्वेवमविनाभावोऽपि हेतुलक्षणं मा भूत्तन्निश्चयस्यापि साध्यसद्भावनिश्चयायत्ततया तस्य चाविनाभावाधीनत्वादितरेतराश्रयस्य प्रसङ्गादिति चेत् । न । अविनाभावनियमस्य हेतौ प्रमाणान्तरान्निश्चयोपगमादितरेतराश्रयानवकाशात् । तर्काख्यं हि प्रमाणमविनाभावनिश्चयनिबन्धनम् । प्रत्यक्षादेस्तत्राव्यापारात् । तर्हि यत एवाविनाभावनिश्चयो हेतोस्तत एव साध्यस्यापि सिद्धेस्तत्र हेतोरकिञ्चित्करत्वमिति चेत् । न । ततो

देशादिविशेषावच्छिन्नस्य साध्यस्य साधनात् । तकात्तु सामान्यत एव तत्सिद्धे । अथ प्रतिपक्षत्वेऽपि प्रतिपक्षस्तुल्यबलोऽतुल्यबलो वा । तुल्यबलत्वे बाध्यबाधकभावानुपपत्ति । अतुल्यबलत्व त्वनयो किं पक्षधर्मत्वादिभावाभावकृतमनुमानबाधजनित वा । न तावदाद्य पक्षो निरवद्य । पक्षधर्मत्वादेरुभयोरप्यविशेषात् । मूर्तत्वाभावे साध्ये शास्त्रव्याख्यानादिकलाकौशलशालित्वस्येव मूर्तत्वे साध्ये तत्पुत्रत्वस्यापि पक्षधर्मत्वादिसम्भवात् । द्वितीयपक्षोऽप्यसम्भाव्य । अनुमानबाधाया अद्याप्यसिद्धे । न हि द्वयो पक्षधर्मत्वाद्यविशेषे एकस्य बाध्यत्वमपरस्य बाधकत्व युक्तम् । अविशेषेणैव तत्प्रसङ्गात्परस्पराश्रयश्च । तथा ह्यतुल्यबलत्वे सत्यनुमानबाधा तस्या चातुल्यबलत्वमिति ।

> एव च पञ्चलक्षणलक्षितलिङ्गाग्रह विहाय हठात् ॥
> जिनोदितैकलक्षणलक्षितमिह लक्ष्यता लिङ्गम् ॥ ४९२ ॥

तदुक्तम्—

> "अन्यथानुपपन्नत्व रूपै किं पञ्चभि कृतम् ॥
> नान्यथानुपपन्नत्व रूपै किं पञ्चभि कृतम् ॥ १ ॥" इति ।

तत्सूत्रमित्याद्यक्षपाद सूत्रानुसारिणां मत मुपदर्श्य खण्डनम् ।

> नैयायिका केचिदथात्र लिङ्ग-
> मन्यप्रकार परिकीर्तयन्ति ॥
> तेषामिदानीं प्रतिपाद्याम
> स्तदर्थसमूचकसूत्रमेकम् ॥ ४९३ ॥

"तत्पूर्वक त्रिविधमनुमान पूर्ववच्छेषवत्सामान्यतो दृष्ट च"[1] इति । तत्र तदिति सर्वनाम्ना पूर्वप्रक्रान्तं प्रत्यक्ष प्रत्यवमृश्यते । तत्पूर्वं कारण यस्य तत्तत्पूर्वक त्रिविधमनुमानमिति व्याख्यम् । वादिकथात्रये पूर्वमुपादीयमानत्वात्पक्ष पूर्वशब्देनोच्यते । सोऽस्यास्त्याश्रयत्वेनेति पूर्ववत् । लिङ्गमित्येवमनेन पदेन पक्षधर्मत्वमुक्त भवति ।

---

१ न्या सू १।१।५

'पक्षे उपयुक्ते सति शेष' सपक्षो भवति सोऽस्यास्त्याश्रयत्वेनेति शेषवदित्यनेन सपक्षे वृत्तिरुक्ता भवति । सामान्यतो दृष्टमित्यनेन विपक्षाद्व्यावृत्तं लिङ्गमुच्यते । कथम् । अकारप्रश्लेषात्, सामान्यतो दृष्टमिति । तिष्ठतु तावद्विशेषतः सामान्यतोऽपि न दृष्टम् । केति पक्षसपक्षयोर्वृत्तेरुक्तत्वात्पारिशेष्याद्विपक्षे सामान्यतोऽपि न दृष्टमित्यवतिष्ठते । एव च यत्पूर्ववच्छेषवत्तत्केवलान्वय्यनुमानम् । पक्षधर्मत्वसपक्षसत्त्वसमन्वितमित्यर्थः । यथा सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमनेकत्वात्पञ्चाङ्गुलवत् । अत्र हि पञ्चाङ्गुलव्यतिरिक्तस्य सदसद्वर्गस्य समग्रस्य पक्षीकरणादन्यस्याभावाद्विपक्षाभावः । अत एव व्यतिरेकाभाव' । तथा पूर्ववत्सामान्यतो दृष्टं केवलव्यतिरेकि । पक्षधर्मत्वविपक्षव्यावृत्तिसमन्वितमित्यर्थः । यथा सात्मकं जीवच्छरीर प्राणादिमत्त्वाद्यत्पुनः सात्मकं न भवति तत्प्राणादिमदपि न भवति यथा घटादि प्राणादिमच्च जीवच्छरीरं तस्मात्सात्मकमिति । अत्र हि जीवच्छरीरस्य पक्षीकृतत्वेन सपक्षाभावादन्वयाभावः । तथा पूर्ववच्छेषवत्सामान्यतो दृष्टमन्वयव्यतिरेकि । पक्षधर्मत्वसपक्षसत्त्वविपक्षव्यावृत्त्युपेतमित्यर्थ' । यथा क्षित्यादिकं बुद्धिमत्कारणकं कार्यत्वात्कुम्भादिवत् । यत्पुनर्बुद्धिमत्कारणकं न भवति न तत्कार्यत्वधर्म्माधारो यथा व्योमादीति । अत्र सपक्षविपक्षयो कुम्भादिव्योमादिकयो सद्भावाद्धेतोरन्वयव्यतिरेकसद्भाव ।

अन्वयवद्व्यतिरेकवदित्थं तद्द्वयवच्च किलोच्यत लिङ्गम् ॥

एतदपि प्रतिपादितयुक्तिव्यूहबलेन समस्तमपास्तम् ॥ ४९४ ॥

सर्वत्र निश्चितान्यथानुपपन्नत्वस्यैव हेतुलक्षणतोपपत्तेस्तस्मिन्सत्येव हेतोर्गमकत्वप्रतीतेः । केवलान्वयिनो हि यदि प्रमाणनिश्चितमन्यथानुपपन्नत्वमस्ति तदा किमन्वयापेक्षया । अथान्वयाभावे हेतोरन्यथानुपपन्नत्वस्यैवाभाव' स्यादतोऽन्वयापेक्षा स्यादेतद्यद्यन्यथानुपपन्नत्वमन्वयेन व्याप्तं भवेत् । न खल्वव्यापकनिवृत्तावव्याप्यनिवृत्ति.

१ श्रोछन्दः ।

सम्भवति। अतिप्रसक्ते। अथान्वयेन व्याप्तमन्यथानुपपन्नत्वमिष्यते। तर्हि केवलव्यतिरेकिणि प्राणादिमत्त्वादावन्वयस्य निवर्तनात्तद्व्याप्तस्यान्यथानुपपन्नत्वस्यापि निवृत्तेरगमकत्वं स्यात्। न खलु व्यापकाभावे व्याप्यं भवति। वृक्षत्वाभावे शिंशपात्ववत्। गमकत्वे वा प्राणादिमत्त्वादेर्नान्वयेनान्यथानुपपन्नत्वं व्याप्तं भवेत्। यस्याभावेऽपि यद्भवति न तत्तेन व्याप्तम्। यथा सलिलाभावेऽपि भवन् धूमाग्निर्न तेन व्याप्तः। भवति चान्वयाभावेऽपि प्राणादिमत्त्वादावन्यथानुपपन्नत्वमिति। अन्यच्च। सदसद्वर्गः इत्याद्यनुमानेऽनेकत्वादित्यस्य हेतोः कुतः केवलान्वयित्वम्। व्यतिरेकाभावाच्चेत्, अयमपि कुतः। तद्विषयस्य विपक्षस्याभावाच्चेत्। अथ कोऽयं विपक्षाभावः। पक्षसपक्षाभ्यां निवृत्तिमात्रं वा, प्रथमपक्षे परमतप्रसक्तिः। अभावस्य भावान्तरस्वभावतास्वीकारात्। निवृत्तिमात्रलक्षणोऽपि विपक्षाभावः प्रतिपन्नो न वा। न प्रतिपन्नश्चेत्तर्हि विपक्षाभावस्य सन्दिग्धत्वाद्व्यतिरेकाभावोऽपि सन्दिग्ध इति केवलान्वयोऽपि सन्दिग्ध एव। अथ प्रतिपन्नः। स यदि साध्यसाधननिवृत्त्याधारः प्रतिपन्नस्तर्हि स एव विपक्ष इति कथं विपक्षाभावो यतो व्यतिरेकाभावः स्यात्। साध्यसाधननिवृत्त्याधारतया निश्चितस्यैव विपक्षत्वात्। तच्च भावरूपतास्यापि न विरुध्यते। कथमन्यथा सदसद्वर्गः कस्यचिदेकज्ञानालम्बनमित्यत्रासतः पक्षत्वमपि स्यात्। असत्पक्षो भवति न तु विपक्ष इति च किंकृतो विभागः। अथासद्वर्गशब्देन सामान्यविशेषसमवाया एवोच्यन्ते नाभावाः। तर्हि प्रागभावाद्यभावविषयं ज्ञानं न कस्यचिदनेनानुमानेन प्रसाधितमिति सुव्यवस्थितं शूलिनः सकलकार्यकारणग्रामपरिज्ञानम्। प्रागभावाद्यज्ञाने कार्यत्वादेरप्यज्ञानात्। अपि च यद्यभावोऽत्र पक्षसपक्षाभ्यां बहिर्भूतः, तदानेनानेकत्वादित्यनैकान्तिको हेतुः। अभावस्यानेकत्वेऽपि कस्यचिदेकज्ञानालम्बनत्वानभ्युपगमात्। अभ्युपगमे वा कथमभावो न पक्षः। तथा च विपक्षोऽप्यभावस्तु। नन्वेवं विपक्षाभावोऽप्येकज्ञानालम्बनमिति

पक्ष एव स्यात् । तथा च पुनरपि विपक्षाभाव एवेति चेत् । तर्हि पुनरपि तदेव प्रेर्यं कोऽयं विपक्षाभाव इति । यदि पक्षसपक्षावेव स्तः, तर्हि भावाद्भिन्नस्याभावाज्जैनमतप्रवेशः । अथ तुच्छा विपक्षनिवृत्तिस्तदभावः । सोऽपि यद्यप्रतिपन्नः । तर्हि सन्दिग्धः । तत्सन्देहे च व्यतिरेकाभावोऽपि तादृगेवेति न निश्चितः केवलान्वय इत्यादि तदवस्थ पुनः पुनरावर्त्तत इति । ततः केवलान्वयित्वेनैवाभ्युपगतस्यानुमानस्य विपक्षाभाव एव तुच्छो विपक्षः । ततः साध्यनिवृत्त्या साधननिवृत्तिश्च सुव्यक्तैवेति कथं न व्यतिरेकः । अथ विपक्षाभावस्यापादानकारकत्वायोगान्न ततः साध्यसाधनयोर्व्यावृत्तिरिति चेत् । तन्न समीचीनम् । भावः प्रागभावादिभ्यो भिन्नस्ते वा परस्परतो भिन्ना इत्यादावप्यभावस्यापादानकारकत्वाभावप्रसङ्गात्सर्वेषां प्रागभावादीना साङ्कर्यं स्यात् । किं चान्वयमात्रेण गमकत्वे द्रव्यं गुणकर्मसामान्यविशेषसमवायप्रागभावादयः प्रमेयत्वात्पृथिव्यादिवदित्यादेरपि गमकत्व कथं न स्यात् । धर्मिग्राहकप्रमाणबाधितत्वे कालात्ययापदिष्टत्वान्नैतादृशं गमकमिति चेत् । तर्ह्यबाधितविषयत्वमपि लिङ्गस्य लक्षणं पूर्वनैयायिकवद्भवद्भिरपि वक्तव्यम् । तच्चालक्षणमेवेत्युक्तम् । सम्प्रति पक्षत्वान्नेदृशस्य गमकत्वमिति चेत् । तर्ह्यसत्प्रतिपक्षत्वमपि तल्लक्षणं वाच्यम् । तदप्यलक्षणमेवेति निवेदितम् । ततोऽन्यथानुपपन्नत्वाभावादेवेदृशस्यागमकत्वमङ्गीकार्यम् । तन्न केवलान्वय्यनुमानं परेषां न्याय्यम् । यच्चान्यदुक्तं पूर्ववत्सामान्यतो दृष्टं केवलव्यतिरेकीत्यादि तदप्ययुक्तम् । यतः प्राणादेरन्वयाभावे कुतो गमकत्वमिति वाच्यम् । व्यतिरेकादिति चेत् । तथा हि यस्माद्घटादेः सात्मकत्वनिवृत्तौ प्राणादयो नियमेन विनिवर्त्तन्ते तस्मात्सात्मकत्वाभावः प्राणाद्यभावेन व्याप्तो धूमाभावेनेव पावकाभावः । जीवच्छरीरे च प्राणाद्यभावविरुद्धः प्राणादिसद्भावः प्रतीयमानस्तद्भावं निवर्त्तयति । स च निवर्त्तमानः स्वव्याप्यं सात्मकत्वाभावमादाय निवर्त्तेत इति

साधकत्वसिद्धिस्तत्रेति । तदपि नानवद्यम् । नेदं क्षणिकानां सचित्तशून्यं जीवच्छरीरं प्राणादिमत्त्वादित्यादेरपि गमकत्वप्रसङ्गात् । निरस्तप्रकारव्यतिरेकस्यात्रापि सम्भवात् । साध्याभावेऽप्यस्य सद्भावसम्भावनयाऽगमकत्वमिति चेत् । तर्ह्यन्यथानुपपत्तिवलादेव गमकत्वमङ्गीकृतमिति कृतं केवलव्यतिरेकित्वेन । तत्र केवलव्यतिरेक्यप्यनुमानं परेषामुपपद्यते । एतेन पूर्ववच्छेषवत्सामान्यतो दृष्टमन्वयव्यतिरेक्यप्यनुमानं तेषां प्रतिषिद्धम् । साध्याभावसम्भवनियमनिश्चयमन्तरेणास्यापि गमकत्वानुपपत्तेरिति । यदप्येतस्य सूत्रस्य कैश्चिद्व्याख्यानं क्रियते । यथा कार्यात्पूर्वं कारणमुच्यते । पूर्वं कारणं लिङ्गतयाऽस्यास्तीति पूर्ववत्कारणात्कार्यानुमानम् । यथा मेघोन्नत्या भविष्यद्वृष्ट्यनुमानम् । शेषं कारणापेक्षया कार्यमुच्यते । शेषो विद्यते यत्र तच्छेषवत्कार्यात्कारणानुमानम् । यथा नदीपूरेणोपरितनदेशेऽतीतवृष्ट्यनुमानम् । सामान्यतो दृष्टं तु सामान्यतोऽविनाभावमात्रेण यदकार्यकारणभूताल्लिङ्गादकार्यकारणभूतस्यैव लिङ्गिनोऽनुमानम् । यथा कपित्थादौ रूपेण रसानुमानम् । रूपरसयोर्हि समवायिकारणमेकं कपित्थादि द्रव्यं न तु तयोरन्योन्यकार्यकारणभाव इति । तत्रापि यदि निश्चितान्यथानुपपत्त्युपलक्षितस्तदा न किञ्चिदनिष्टम् । साध्येनाविरुद्धानां व्याप्यकार्यकारणत्यादीनां सूत्रेण कारणादिलिङ्गानामभिधास्यमानत्वात् । निश्चितान्यथानुपपत्तिविरहे तु गमकत्वमेवामीषां नास्तीति किं परिगणनया ।

एतेन वैशेषिका अपि यदाहु —"अस्येदं कार्यं कारणं सम्बन्धि एकार्थसमवायि विरोधि चेति लिङ्गकम्" अस्येदं कार्यं यथा विशिष्टो नदीपूरो वृष्टेरिति । अस्येदं कारणं यथा मेघान्नतिर्वृष्टेरेवेति । सम्बन्धि द्विविधं संयोगि समवायि च । तत्र संयोगि

अस्येदं कार्यमित्यादिसूत्रानुसारिणां वैशेषिकाणां मतस्योपन्यासः ।

---

१ प ३ सू ६५ । २ वै ९ अ १ आ २ सू १

यथा, धूमोऽग्नेः । समवायि यथा, विषाणं गोरिति । एकार्थसमवायि द्विविधम् । कार्यं कार्यान्तरस्य । कारणं कारणान्तरस्य । तत्र कार्यं कार्यान्तरस्य यथा, रूपं स्पर्शस्य। कारणं कारणान्तरस्य यथा, पाणिः पादस्येति । विरोधि चतुर्विधम् । अभूतं भूतस्य, अभूतमभूतस्य, भूतमभूतस्य, भूतं भूतस्य । तत्राभूतं भूतस्य यथा, अभूतं वर्षकर्म भूतस्य वाय्वभ्रसंयोगस्य लिङ्गम् । अभूतमभूतस्य यथा, अभूता श्यामता अभूतस्य घटाग्निसंयोगस्य लिङ्गम् । भूतमभूतस्य यथा, भूतं वर्षकर्म अभूतस्य वाय्वभ्रसंयोगस्य लिङ्गम् । भूतं भूतस्य यथा, भूतं स्यन्दनं कर्म भूतस्य सेतुबन्धस्य लिङ्गमिति । तथा परमपि लिङ्गमुत्प्रेक्ष्यमनया दिशा । यथा, जलप्रसादोऽगस्त्योदयस्य । चन्द्रोदयः समुद्रवृद्धेरिति लिङ्गोपलक्षणत्वादस्य सूत्रस्येति । तदपि निरूपितप्रायमवसेयम् । समानयोगक्षेमत्वात् ।

उपनिषत्तदियं तव यौग या गदितवानसि लिङ्गपरंपराम् ।
इतरथानुपपत्तिमपास्य सा विशति नैव मनस्सु मनस्विनाम् ॥४९३॥

हेतोर्लक्षणमेतदेव तदहो क्षोदक्षमं वर्त्तते
सूत्रे यत्प्रतिपाद्यतेऽस्य सकलैर्दोषैरदत्तास्पदम् ॥
अन्यत्त्वत्र विचार्यमाणमयते तीर्थान्तरीयोदितं
नो युक्तिं कथमप्यतः कथमिदं स्वीकुर्वते कोविदाः ॥४९४॥

तादात्म्यतदुत्पत्ती एवाविनाभावनिमित्तमिति बौद्धमतस्यागमपूर्वकं खण्डनम् ।

नन्वन्यथानुपपत्तिरविनाभाव इत्यभिदधानस्य च निमित्तमन्वेषणीयं प्रामाणिकैः । तच्च तादात्म्यतदुत्पत्तिरूपम् । तथा हि स्वभावहेतोस्तादात्म्यं स्वसाध्याविनाभावे निबन्धनम् । यो हि यदात्माभावः स कथं तदुत्सृजति । कार्यहेतोस्तु तदुत्पत्तिस्तत्र निबन्धनम् । कार्यं हि कारणाधीनात्मलाभमेव भवति तत्कथं तदन्तरेण क्वापि स्यात् । न चाभ्यामन्यो हेतुरस्ति । अनुपलब्धेः स्वभाव-

हेतावनुप्रवेशादिति शङ्क्या । नाऽसौ निवारयितुमशक्या । यतः किं यत्र तादात्म्यतदुत्पत्ती तत्राविनाभावः । यत्राविनाभावस्तत्र तादात्म्य-तदुत्पत्ती वा । न तावत्पौरस्त्यः पक्षः । सत्यपि तादात्म्ये वृक्षत्वस्य शिंशपान्वयस्य व्यभिचारात् । सत्यामपि च तदुत्पत्तौ श्यामत्वादिधूम-धर्मस्तोमस्य वह्निव्यभिचारात् । न च शिंशपात्वमेव वृक्षत्वात्मकं न वृक्षत्वं शिंशपात्वात्मकं खदिरोदुम्बरादिसाधारणत्वाद्वृक्षत्वस्येति वाच्यम् । तयोरेकान्ताभेदाभावात् । यदि च खदिरोदुम्बरादिसाधारणं वृक्षत्वमेव न शिंशपात्वं तदा नानयोरैक्यम् । स्वभावभेदस्य भेदलक्षणत्वात् । एतेन यत्प्रकारेण न तु यथा वृक्षात्मा शिंशपा तथा वृक्षोऽपि शिंशपात्मेव तादात्म्यस्योभयगतत्वमन्तरेणाभावादित्याशङ्क्यम् । अवि भागवत्त्वात् । वृक्षो हि शिंशपाव्यतिरेकेणाप्यस्ति पलाशादिवत् तु शिंशपा तथेति । सैवाविभागवती गमिकेत्युक्तम् । तदपि परास्तम् । विभाग-वत्त्वाविभागवत्त्वयोर्विरुद्धत्वेन भेदाविनाभावित्वात् । नापि धूम एव वह्निना नियते न श्यामत्वादयस्तद्धर्मा इति युक्तम् । वस्तुनो निभाग-त्वात् । अथ यत्राविनाभावस्तत्र तादात्म्यतदुत्पत्ती । तर्ह्यविनाभावे सिद्धे तयोर्गमकाङ्गत्वमङ्गीकृतं स्यात् । एवमिति चेत् , तह्यविनाभाव एवास्तु गमकत्वाङ्गं किं तादात्म्यतदुत्पत्तिभ्याम् । न हि स्वभावः स्वभाव इत्येव कार्यं च कार्यमित्येव स्वसाध्यं गमयति । किन्तु तदविनाभावीति । अपि च यदि तादात्म्यं गमकत्वाङ्गमिष्यते तदा साध्यसाधनयोर्भे-दाभावेन सम्बन्धाभावादविनाभावानुपपत्तिः । न च निरंशवस्तुवादि-नस्तयोस्तादात्म्ये सति भेदः कथञ्चिदपि घटते । तादात्म्यं हि तत्स्व-भावता, तेन साध्येन सार्धं साधनस्यैक्यमुच्यते । न चैक्ये भेदगन्धोऽपि सम्भवति । भेदे च नैक्यम् । अतः कथं तदात्मतया शिंशपात्वं वृक्षत्वं गमयेत् । तादात्म्येन न गमकत्वे हेतुप्रतिपत्तिवेलायामेव साध्य-स्यापि प्रतिपन्नत्वान्नानुमानस्य साफल्यम् । अथ तत्प्रतिपत्तिवेलाया साध्यमप्रतिपन्नमेव । तदा कथं तयोस्तादात्म्यम् । प्रतिपन्नत्वाप्रति-

पन्नत्वस्वरूपविरुद्धधर्म्माक्रान्तत्वात्। अथोच्यते, यथावस्थितो धर्म्मी शिंशपात्वं वृक्षत्वं च द्वयमेकात्मकमेव। तत्र धर्मिणि गृह्यमाणे शिंशपात्ववद्वृक्षत्वमपि गृहीतमेव। यथोक्तम्–“ तस्माद्दृष्टस्य भावस्य दृष्ट एवाखिलो गुणः ॥ भागः कोऽन्यो न दृष्टः स्याद्यः प्रमाणैः परीक्ष्यते ॥ १ ॥ ” इति। यदि परं शिंशपाविकल्पो जातो न वृक्षविकल्पः। वृक्षशब्दस्मृत्यभावापराधात्। शिंशपाशब्दसंस्कारप्रबोधकजन्मना शिंशपाविकल्पेन वाऽशिंशपाव्यावृत्तिपर्यवसितिना नावृक्षव्यावृत्तिरुपनीयते। सर्वविकल्पानां पर्यायत्वप्रसङ्गात्। गम्यगमकभावश्चानयोर्व्यावृत्त्योर्न वस्तुनोः। तयोरन्वयाभावात्। अवृक्षव्यावृत्त्यशिंशपाव्यावृत्ती च परस्परं भिन्ने। व्यावर्त्यभेदात्। अतो यथोक्तदोषानुपपत्तिरिति। एतदपि पूर्वापरानुसन्धानविधुराणामभिधानम्। तादात्म्यं ह्यनुमानबीजमभिधीयते साध्यसाधनभूतयोर्व्यावृत्त्योः। पुनरन्योन्यं भेद इति महतीयं परामर्शशक्तिः शाक्यानाम्। ननु वृक्षशिंशपयोस्तादात्म्यात्तदात्मतया व्यवसितयोरवृक्षव्यावृत्त्यशिंशपाव्यावृत्त्योरपि, सत्यपि भेदे यथाध्यवसायं तादात्म्यमिति चेत्। तर्हि सिद्धे तादात्म्ये सत्यशिंशपाव्यावृत्त्या धर्मिण्यवृक्षव्यावृत्तिरध्यवसेया तत्राध्यवसितायां चावृक्षव्यावृत्तौ यथाध्यवसायं तादात्म्यसिद्धिरित्यन्योन्याश्रयदोषः। अथ व्याप्तिग्रहणवेलायामेकात्मतयाऽध्यवसितयोर्व्यावृत्त्योस्तादात्म्य सिद्धमिति चेत्, तर्हि काल्पनिकमेव तद्भवेत्। तथा चानुमानमपि कल्पनासमारोपितमेव स्यात्। तथोपगमे च न कश्चिदहेतुर्नाम। प्रमेयत्वानित्यत्वयोरप्येकात्मतयाध्यवसितयोर्यथाध्यवसायं तादात्म्यसम्भवात्। विपक्षव्यावृत्त्यभावात्प्रमेयत्वस्यानित्यत्वेन सह तादात्म्याभाव इति चेत्। सत्यम्। वास्तवं तादात्म्य नास्ति, अस्ति कल्पनासमारोपितं तु तदेव चानुमानोदयबान्धवं समर्थितवन्तो यूयमिति विपक्षव्यावृत्तिरसत्कल्पेति कथं प्रमेयत्वं हेतुर्न स्यात्। एवं च तादात्म्यस्य गमकत्वाङ्गतास्वीकृतौ हेतुग्रहणे साध्यस्यापि ग्रहणाद्व्यर्थमनु-

मानम् । विपरीतसमारोपव्यवच्छेदार्थमनुमानमिति चेत् । न । तत्स्वरूपग्रहणे विपरीतसमारोपानवसरात् । न हि शिरःपाण्यादिविशेषदर्शने सति पुंसि स्थाणुसमारोपो दृष्टः । तत्र वा तद्भेदादुपपद्येतापि । न हि शिरःपाण्यादय एव पुरुष इति तद्ग्रहणेऽप्यपुरुषारोपः स्यादपि । इह तु वृक्षत्वशिंशपात्वयोरभेदाच्छिंशपात्वग्रहणे सति का कथा वृक्षेतरसमारोपस्य । किं च साध्यसाधनयोस्तादात्म्ये यथा शिंशपात्वेन वृक्षत्वमनुमीयते तथा वृक्षत्वेनापि शिंशपात्वमनुमीयेत । तादात्म्याविशेषात् । अथान्यः सम्बन्धोऽन्यश्च प्रतिबन्धः । द्विष्ठः सम्बन्धः । प्रतिबन्धस्तु परायत्तत्वलक्षणः । तच्च शिंशपात्वं वृक्षत्वे प्रतिबद्धं न वृक्षत्वं शिंशपात्वे । यथा धूमस्याग्नौ प्रतिबन्धो न त्वग्नेर्धूमे । सत्यमेतत् । किन्त्वेवमुच्यमानेऽविनाभाव एव स्वीकृतो भवेन्न तादात्म्यम् । तादात्म्ये हि यथा वृक्षत्वं सर्ववृक्षसाधारणं तथा शिंशपात्वमपि स्यात् । यथा वा शिंशपात्वं शिंशपां विना न दृश्यते तथा वृक्षत्वमपि शिंशपारहितं न दृश्येत । दृश्यते च खदिरादौ शिंशपारहितं वृक्षत्वम् । अथ खदिरादिवृक्षत्वादन्यदेव तद्वृक्षत्वं यच्छिंशपात्वाभिन्नमित्युच्यते । तर्हि धर्मिभेदेन च धर्माणां भेदेऽन्वयग्रहणानुपपत्तेः सर्वमनुमानमुत्सीदेत् । धूमाग्न्योस्तु कार्यकारणयोर्भेदाद्युक्तं वक्तुं धूमस्याग्नौ प्रतिबन्धो न त्वग्नेर्धूमे इति । इह तु साध्यसाधनयोरव्यतिरेकान्न तथा शक्यते वक्तुम् । तथाभिधाने वा नाव्यतिरेकः । ततः सर्वथा तादात्म्ये वा व्यक्ता वृक्षत्वेन शिंशपात्वं वाऽनुमीयतां नान्यथावस्थातुं लभ्यते । ततस्तादात्म्यमविनाभावनिबन्धनम् । नापि तदुत्पत्तिः । यतो न सामान्ययोः कार्यकारणभावः । किन्तु विशेषयोः । ययोश्च विशेषयोर्महानसादौ कार्यकारणभावः प्रतिपन्नस्तयोर्न गम्यगमकभावः । ययोस्तु शितिधरकन्धराधिकरणयोर्धूमधूमध्वजविशेषयोर्गम्यगमकभावो न तयोः कार्यकारणभावः प्रतिपन्नः । न चाप्रतिपन्ने तस्मिन्नेतयोरविनाभावो प्रतीतुं शक्यः ।

न चागृहीतोऽसावनुमानाङ्गम् । तदानीं तस्य ग्रहणे तु हेतुप्रतिपत्तिसमय एव साध्यप्रतिपत्तेरुन्मीलितत्वात्किमनुमानेन । यदि च तादात्म्यतदुत्पत्तिभ्यामविनाभावः प्रतिज्ञायते । तदा कथं कृत्तिकोदयादेः शकटोदयादिकं प्रति गमकत्वं स्यात् । तत्र तादात्म्यतदुत्पत्त्योरभावात् । ततः सकलसम्यग्घेतुव्यापिता स्वयोग्यतैवाविनाभावे निमित्तमास्थेयम् । स्वयोग्यतयैव हि किञ्चित्केनचिदविनाभूतं न सर्वं सर्वेण ।

एवं च—

न तादात्म्यं हेतोर्नियमकरणे नैपुणधरं
तदुत्पत्तिर्नापि श्रयति कथमप्यत्र चलिताम् ॥
विनाऽप्येते यस्माद्भवति गमकता हेतुनिवहे
भवत्येवाऽन्येषां कथमिह ततो यत्परता ॥ ४९७ ॥ १३ ॥

ननु हेतुग्रहणसम्बन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थमनुमानमित्युक्तम् । तत्र किंलक्षणकं साध्यमित्याह—

**अप्रतीतमनिराकृतमभीप्सितं साध्यमिति ॥ १४ ॥**

संशयादिव्यवच्छेदेन प्रसिद्धमर्थस्वरूपं प्रतीतमुच्यते तद्विपरीतमप्रतीतम् । अनिराकृतं प्रत्यक्षादिभिरबाधितम् । अभीप्सितं साधनविषयत्वेनेष्टम् ॥ १४ ॥

अप्रतीतविशेषणं तावत्समर्थयते—

**शङ्कितविपरीतानध्यवसितवस्तूनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनमिति ॥ १५ ॥**

संशयाकलितं शङ्कितं विपर्ययविषयीभूतं विपरीतमनध्यवसायविषयीकृतमनध्यवसितं वस्तु प्रतिपाद्यते । तेषां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनं साध्यलक्षणसूत्रे कृतम् । एवंभूतान्येव हि वस्तूनि हेतुना साध्यन्ते न पुनर्निश्चितानि । तत्र हेतोर्वैफल्यात् ॥ १५ ॥

अथानिराकृतमिति विशेषणस्य फलमुपदर्शयन्नाह—

## प्रत्यक्षादिविरुद्धस्य साध्यत्व मा प्रसज्यतामित्यनिराकृतग्रहणमिति ॥ १६ ॥

प्रत्यक्षादिप्रमाणनुमानागमादीना तैर्विरुद्ध प्रत्यक्षादिविरुद्ध प्रत्यक्षादिनिराकृतमित्यर्थ । तत्र प्रत्यक्षबाधितमश्रावणत्व शब्दस्य । अनुमानबाधितमेकान्तनित्यत्व ध्वने । आगमबाधित प्रेत्यासुखप्रदत्व धर्मस्येत्यादि ॥ १६ ॥

इदानीमभीप्सितमिति विशेषणस्य फलमाह—

## अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानमिति ॥ १७ ॥

अनभिमतस्य साधयितुमनिष्टस्य । एतानि चाप्रतीतादीनि साध्यविशेषणानि त्रीण्यपि स्वार्थानुमानेऽनुमात्रपेक्षयैव सम्भवन्ति । तत्र वादिप्रतिवादिप्रत्यनन्यानस्यासम्भवात् । परार्थानुमाने तु तदसम्भवेनाप्रतीतमिति विशेषण प्रतिवाद्यपेक्षया । न पुनर्वाद्यपेक्षया । तस्यार्थस्वरूपप्रतिपादकत्वात् । न चाप्रतिपन्नार्थस्वरूप प्रतिपादको नाम । अतिप्रसङ्गात् । प्रतिवादिनस्तु प्रतिपाद्यत्वेनाविज्ञातार्थस्वरूपत्वाविरोधात् ।

ननु शङ्कितविपरीतानध्यवसितानां त्रयाणामप्यप्रतीताना परार्थानुमाने साध्यत्वमसम्बद्धम् । शङ्कितस्यैवैकस्य साध्यत्व-

शङ्कितस्यैव साध्यत्व न तु

विपरीतानध्यवसितयोरित्यघटनादिति कश्चित् । सोऽपि न विपश्चित् ।

वस्तुनिश्चयस्य मनस्त्वम् ।

शङ्कितेऽर्थे संशयितस्य संशयापनोदनेनैव विपरीतानध्यवसितयोरप्यर्थयोर्विपर्ययानध्यवसायव्यवच्छेदेन परार्थानुमानस्य निर्णयोत्पादकत्वाविशेषात् । विपर्यस्ताव्युत्पन्नौ पर प्रति नोपसर्पत एव पुन प्रतिपाद्यौ स्यातामिति चेत् । नैवम् । परपक्षदिदृक्षादिना विपर्यस्तस्य स्वयं तत्त्वबुभुत्सया चाव्युत्पन्नस्य परं प्रत्युपसर्पणसम्भवात् । कौचिद्वौ नोपसर्पत एव परमिति चेत् ।

संशयितोऽपि कश्चित्तथैव । सर्वस्य तस्य निणयाकाङ्क्षाया असम्भवात्। अथ परानुग्रहतत्परान्तःकरणेनोपेक्षानुपपत्तेरनर्थित्वादनुपसर्पन्नपि संशयितात्मा प्रतिबोध्य एव । तर्हि तत एव विपर्यस्ताव्युत्पन्नावपि तथा स्ताम्। अविनेयाविषयमेवमनुमापयितुर्माध्यस्थ्यं विरुध्यत इति चेत् । मैवम् । माध्यस्थ्यं हि रागद्वेषाश्लेषकालुष्यविषयत्वमुच्यते । तच्च परमकृपापीयूषपूरितान्तःकरणाना विपर्यस्ताव्युत्पन्नयोर्विनेयत्वसिद्धये गुणदोषोपदेशनाया वर्त्तमानाना कथं विरोधमधिरोहति । यदि च विपर्यस्ताव्युत्पन्नौ प्रतिपाद्यौ न स्याताम् । तदा लोकस्य व्यवहारस्यापि विलोपः स्यात् । दृश्यते हि लोके पित्रा विपर्यस्तोऽव्युत्पन्नश्च पुत्र. शिक्ष्यमाणः । कथं वाऽय जिगीषुकथायामनुमान प्रयुञ्जीत । परस्य विपर्यस्तत्वात् । जिगीषुवादस्य साभिमानजनारभ्यत्वात् । तथा चोक्तम्–" **साभिमानजनारभ्यश्चतुरङ्गो निवेदितः** " इति । ततः स्थित शङ्कितादयस्त्रयोऽप्यर्था साध्या इति । अनिराकृतमिति तु विशेषणमुभयापेक्षया । यत्खलु वादिप्रतिवादिनोः प्रमाणेन न बाध्यते तदेव साध्यमिति । अभीप्सितमिति पुनर्वाद्यपेक्षयैव । इच्छया खलु विषयीकृतमभीप्सितमुच्यते । स्वाभिप्रेतार्थप्रतिपादनाय चेच्छा वक्तुरेव । ततश्च परार्थाश्चक्षुरादय इत्यादौ पारार्थ्यमात्राभिधानेऽप्यात्मार्थत्वमेव साध्यस्य प्रसिद्धयति । तद्वच्छिया व्याप्तं **साङ्ख्यस्य बौद्धं** प्रति साध्यमेव । आत्मा हि **साङ्ख्येन** साधयितुमुपक्रान्तस्ततोऽसावेव साध्यः । अन्यथा साधनस्य वैफल्यापत्तेः । संहतपरार्थत्वेन **बौद्धैश्**चक्षुरादीनामुपगमात् । एवं चात्मनः साध्यत्वे हेतोरिष्टविघातकारितया विशेषविरुद्धत्वं साध्यस्य च दृष्टान्तदोषः साध्यवैकल्यमिति । एतेन **चार्वाको**क्तसद्वितीयत्वप्रयोगोऽप्यप्रयोगार्ह एवेति निवेदितम् । यथाऽभिव्यक्तचैतन्यशरीरलक्षणपुरुषघटान्यतरसद्वितीयो घटोऽनुपलत्वात्कुड्यादिवदिति कुड्यादौ घटसद्वितीयत्वेन व्याप्तिर्यथोक्तपुरुषसद्वितीयत्वे साध्ये फलतो विश्राम्यतीति पराभिप्रायः । तेन भङ्ग्या तथाविधपुरुषासिद्धिर्ननु घटे-

नास्त्यहनेति । अथ प्रयोगे तथाभूतेन पुरुषेण तथा कुड्यादौ सद्वितीयत्वासिद्धेरन्वयदोष । अथ सामान्येन साध्यमिति न पुरुषद्वितीयत्वस्याक्षेप इति चेत् । ननु घटो घटेनेव सद्वितीयस्तावन्न भवति तादृक्पुरुषेण यथा वा सद्वितीयत्वे तु साध्यवैकल्य दृष्टान्तस्य । तथा यादृश केवलेनैव घटेनैव सद्वितीयत्व दृष्टान्ते सिद्ध तादृगेव तत्साध्यधर्मिण्यनिष्ट प्राप्नोतीति हेतोर्विरुद्धत्वम् । अपरत्र तु सिद्धसाधनम् । येन केनचित्सद्वितीयत्वस्य सिद्धत्वात् । किं च यदि पुरुषविशेषसद्वितीयत्व हेतुना न स्वव्यापारास्पदीकृत कथमतस्तत्सिद्धि । न ह्यय हेतुस्तस्य सिद्ध । सिद्धो वा कथमविषयस्तस्य । विषयश्चेत्तदाश्रया दोषगतिं कथ न स्पृशेत् । सोऽय वादी पुरुषगतसद्वितीयत्वाश्रया सिद्धिं साधनादुपजीवति न दूषणमिति व्यक्तमिति राजकुलस्थितिः । युक्तमादिकुले हि यस्यैव साधनेन सिद्धिश्चिकीर्षिता तस्यैवाधस्य रूपेण सिद्धिर्निराकर्तव्या । तस्माद्यावतीमर्थगतिं साधन सामर्थ्येन व्याप्नोति तावतीं तद्दूषणमपि । किं च कथ सामान्यस्य साधन सम्भवति । प्रतिवादिनोऽभिव्यक्तचेतनस्य पुरुषस्याभावादेव घटान्यथान्तरभावानभ्युपगमेनान्यतरशब्दप्रयोगासगतेः । द्वयोर्हि तथाभावसम्भवेऽन्यतरोक्तिः समर्था भवति । यथा देवदत्तयज्ञदत्तयोरन्यतर भोजयेदिति । अनयोर्द्वयोरपि भोजनविधिसम्भवे ह्यनियत एकस्मिन्भोजन विधीयते । ततोऽन्यतरोक्तिः सङ्गतार्था । न पुनरेकतरस्य कुतश्चिन्निमित्ताद्भोजनासम्भवे वक्तुरेकतरभोजनस्यानाकाङ्क्षया वा । अपि च न घटाद्घटोऽर्थान्तरम् । यदि हि तस्यैव घटस्य स एव घटो द्वितीय । तदा घटत्व च न स्यात्तस्मादेतच्चैकस्मिन्विरुद्धमिति यथोक्तपुरुष एवान्यतरोऽपेय । तथा च विरुद्धार्थं साध्यवाक्य कथ चार्वाकस्य न स्यात् । ननु स्वार्थानुमानस्वरूपनिरूपणप्रकरणे परार्थानुमानोपयोगिनो वादिप्रतिवाद्यपेक्षस्य विशेषणविचारस्य कोऽवसर । उच्यते । स्वार्थानुमानपुरस्सरतया परार्थानुमानस्यापि प्रवृत्ति ।

स्वनिश्चयवदन्येषां निश्चयोत्पादनस्यैव परार्थानुमानत्वादिति परार्थानुमानोपयोगिनोऽप्यस्य विचारस्यात्र प्रस्तूयमानस्य न कश्चिद्दोषः ॥१७॥

अथ साध्यस्य व्याप्त्यानुमानिकप्रतिपत्त्यवसरापेक्षया भेदं दर्शयन्नाह—

**व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेरिति ॥ १८ ॥**

व्याप्तिग्रहणसमयो यावान्कश्चिद्धूम. स सकलः पावकं न व्यभिचरतीति प्रतिपत्तिकालस्तदपेक्षया साध्यं धर्म एव वह्न्यादिर्न तु धरित्रीधरादिर्धर्म्मी । अत्र व्यतिरेकिणं हेतुमाह— अन्यथा धर्मस्यैव साध्यत्वमन्तरेण । तस्या व्याप्तेरनुपपत्तेः ॥ १८ ॥

एतदेव भावयन्नाह—

**न हि यत्र यत्र धूमस्तत्र चित्रभानोरिव धरित्रीधरस्याऽप्यनुवृत्तिरस्तीति ॥ १९ ॥**

उत्तानार्थमद: ॥ १९ ॥

**आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धो धर्मीति ॥ २० ॥**

अनुमानाज्जाता आनुमानिकी सा चासौ प्रतिपत्तिश्च तस्या अवसरः प्रतिनियते धर्मिणि साध्यसाधनसमयः । तदपेक्षया पुनः पक्षापरपर्यायस्तेन व्याप्तिकालापेक्षया साध्यत्वाभिमतेन धर्मेण विशिष्टोऽवच्छिन्नस्तद्विशिष्टः । प्रसिद्धो वादिप्रतिवादिनोः प्रतीतो धर्मी पर्वतनितम्बादिः । साध्यमिति प्राकरणिकमिह सम्बध्यते ॥ २० ॥

प्रसिद्ध इत्युक्तमथ यतोऽस्य प्रसिद्धिस्तदभिदधाति—

**क्वचिद्विकल्पतः कुत्रचित्प्रमाणतः क्वापि विकल्पप्रमाणाभ्यामिति ॥ २१ ॥**

धर्मिणः सर्वज्ञादेः प्रसिद्धिः प्रतीतिः क्वचिद्विकल्पतोऽध्यवसायमात्रतो भवति । तथा कुत्रचित्प्रमाणतः सकाशात् । क्वापि पुनर्विकल्पप्रमाणाभ्यामिति ॥ २१ ॥

अथैतेषां क्रमेणोदाहरणत्रयमाह—

## यथा समस्ति समस्तवस्तुवेदी क्षितिधरकन्धरेयं धूमध्वजवती ध्वनिः परिणतिमानिति ॥ २२ ॥

तत्राद्ये निदर्शने धर्मिणो विकल्पसिद्धत्वम् । न खलु हेतुप्रयोगात्पूर्वं सर्वज्ञस्य विकल्पं विहायान्यतः कुतश्चित्सिद्धिरस्ति । द्वितीये प्रमाणसिद्धत्वम् । क्षितिधरकन्धरायाः प्रत्यक्षसिद्धत्वात् । तृतीये विकल्पप्रमाणसिद्धत्वम् । ध्वनिसामान्यं हि धर्मी कृतः तत्र कश्चिद्ध्वनिर्विकल्पसिद्धः कश्चित्प्रमाणसिद्ध इति ।

सत्तायाः साध्यत्वनिराकृतौ बौद्धस्य खण्डनम् ।

अत्राह शाक्यः—ननु प्रथमे सत्ता साध्यमाना न साधिमानमाधत्ते । तथा हि, असौ साध्यमानोपात्तसर्वज्ञविशेषणविशिष्टैव साधयितव्या । सत्तामात्रस्य साधने वादिनोऽभीष्टसिद्ध्यभावस्य प्रतिवादिनः सिद्धसाध्यतावतारस्य च प्रसङ्गात् । अस्ति कश्चिदिति हि साधयतो वादिनः का नामेष्टसिद्धिः स्यात् । करतलतुलितनिस्तलस्थूलमुक्ताफलायमानाकलितसकलत्रिलोकीवर्तिवस्तुजातत्वादिविशेषणविशिष्टस्य पुरुषस्यासिद्धेः । न च प्रतिवादिनापि तथा नाभिमतम् । अनिर्दिष्टस्वभावविशेषस्य कस्यचित्सत्तामात्रे विरोधाभावात् । तदुक्तम्—"सत्तोपधानमात्रे तु साध्ये सामान्यधर्मिणि ॥ न कश्चिदर्थः सिद्धः स्यादनिषिद्धं च तादृशम् ॥" अस्यार्थः—सत्ता सा उपधानं विशेषणं यस्य तन्मात्रत्वेनैव सामान्यरूपे धर्मिणि साध्ये न कश्चिदर्थोऽभिमतः सिद्धः स्यात् । न च केनचित्प्रतिवादिना तथाभूतं वस्तु निषिद्धं येन साध्येतेति । तस्मादुपात्तसर्वज्ञविशेषणविशिष्टैवासौ

साधयितव्या । तत्र चानन्वयदोषः । मीमांसकस्य क्वचिदपि सर्वज्ञाप्रसिद्धेः । तदित्थं न सत्ता साध्यतामर्हतीति । तत्रायं महात्मा प्रसिद्धधूमानुमानादावपि समानमिदमशेषमाकलयन्नपि सत्तामेव प्रसञ्जयन्न लज्जत इति निश्चित नगरवायस. । तथा हि नाग्निमात्रे साध्ये कश्चिद्विवादो वह्निमात्रस्य सर्वप्रमातृप्रसिद्धत्वात् । महीध्रकटकादिविशिष्टाधारविशेषणस्य त्वदभिमतस्य तस्यानन्वय इति । अथ नैव कश्चित्तथाभूतेनार्थेनान्वयं करोति । प्रतिपादयता हि परं धूमोऽग्निनान्तरीयको दर्शनीयो यत्र धूमस्तत्राग्निरिति । स तथाग्निमात्रेण व्याप्तः सिद्धो यत्रैव स्वय दृश्यते तत्रैवाग्निबुद्धिं जनयतीति । तदुक्तम्—" **लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दर्श्यते ॥ तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयिष्यति ॥ १ ॥**" अयमर्थः—लिङ्गस्य धूमादेः साध्यधर्मेणाव्यभिचारोऽन्यत्र सामान्यवति धर्मिणि दर्शयितव्यः, तथा ज्ञाताव्यभिचारं लिङ्ग तत्र साध्यधर्मिणि प्रसिद्धं सदव्यभिचारितया निश्चीयमानं व्यापकधर्मयुक्तं धर्मिण गमयिष्यति । तदसम्बद्धम् । एवंविधन्यायस्यान्यत्राप्यन्यूनत्वात् । तथा हि न सर्वज्ञविशिष्टेन सत्त्वेन कश्चिदन्वय करोति किन्तु सत्त्वमात्रेण । तेन हि किञ्चित्साधनमविनाभूतं सिद्धं यत्रैव क्वचित्स्वयं दृश्यते तत्रैव साध्यधियमादधातीति को नामात्रापराधः । अथ सर्वज्ञशब्दवाच्यस्यार्थस्यैव कस्यचिदसिद्धत्वात्परं प्राति कथ तत्र सत्तासिद्धि स्यादन्यत्र तु सिद्ध एवोभयोरपि पर्वतनितम्बादिरिति तत्र वह्निसाधनं साधीय इति चेत् । कुतः पुनरुभयोः पर्वतनितम्बादिसिद्धिः । प्रत्यक्षादिति चेत् । सर्वज्ञसिद्धिरपि विकल्पादिति प्रतीहि । न च विकल्पाद्धर्मिप्रसिद्धिं नाभ्यशंसन् भवन्तः । न सन्ति प्रधानादयोऽनुपलब्धेरित्यादिप्रयोगाणां धर्मकीर्त्तिना स्वयं समर्थनात् । न चासत्तायामेव साध्यायां विकल्पसिद्धेन धर्मिणा भवितव्यं न सत्तायामित्यत्र स्वैरित्वादपरं कारणमीक्षामहे । तस्मादुभयत्र वा विकल्पसिद्धिं धर्मिणमभ्युपयन्तु मैकत्रापि वाऽभ्युपेयुः । न

पुनरर्धजरतीयमेतदभ्यते । अथ सत्ताया साध्याया सत्त्वस्तद्धेतुभावाभावाभावधर्मविकल्पत्रयीं दोषपातिं नातिवर्तते, असिद्धिं व्यभिचार विरोध च । तत्र यदि भावधर्मो हेतुरुच्यते । स कथमसिद्धसत्ताके स्यात् । यो हि भावधर्मं तत्रेच्छति स कथ तद्भाव नेच्छेत् । स्वभाव एव हि धर्मान्तर प्रतिक्षेपापेक्षया धर्म इति व्यतिरेकी च धर्मिणो निर्दिश्यते । अथ च भावाभावोभयधर्म । तर्हि व्यभिचार । न हि बुद्धिरस्त्यमूर्तत्वादित्यत्रामूर्तत्वस्य गमकत्व भवन्तोऽप्येच्छन् । निरूपाख्येऽप्यमूर्तत्वस्य भावात् । अभावधर्मं हेतु वदतोऽस्य विरुद्धो हेतु स्यात् । तस्य भावे क्वचिदसम्भवात् । तदुक्तम्—" नासिद्धे भावधर्मोऽस्ति व्यभिचार्युभयाश्रय' ॥ धर्मो विरुद्धोऽभावस्य स सत्ता साध्यते कथम् ॥ १ ॥ " भिन्नो कथमेव न सकलानुमानप्रलयापत्ति । अनित्य शब्द सत्त्वाद्घटवदित्यादिष्वपि तथैव दोषत्रयानुषङ्गात् । अस्य हि वक्तु किमय सत्त्वादिरनित्यधर्म आहोस्विन्नित्यधर्म उभयधर्मो वेति । अनित्यधर्मश्चासिद्ध । तमनित्यधर्मं सिद्ध तत्रेच्छन्न नित्यमेव शब्द किंनेच्छेत् । यावान्कश्चिद्भाव सन्स सर्वोऽप्यनित्य इत्येति साकल्येन व्याप्तौ प्रसिद्धाया को हि प्रेक्षावान् शब्दमनित्य न प्रतिपद्यते । यत सश्च शब्द इति साधनाङ्गवचन प्रतीक्षेत् । नित्यधर्मस्तु तत्र विरुद्ध । तद्विपक्ष एव भावात् । उभयधर्मश्चानैकान्तिक । सपक्षविपक्षवृत्तित्वादिति सर्वं समान पश्याम । ततो न कश्चित्कस्यचिद्धेतु स्यात् । किंचैतन्निरुमसत्तासिद्धावपि समानम् । तथा हि नासिद्धे भावधर्म इत्यादिरेव श्लोकस्तावत्पुन पठ्यताम् । अयं त्वल्पस्यार्थ , असिद्धे प्रधानादेरभावेऽभावधर्मोऽनुपलब्धिरूपो हेतु कथ सिद्ध स्यात् । सिद्धो हि तस्य साध्यस्यापि सिद्धत्वाद्व्यर्थमनुमान भवेत् । य खल्वभावधर्मं तत्रेच्छति स कथमभावमेव तस्य नेच्छेत् । अभावभावोभयधर्म पुनर्व्यभिचारी । भावस्य तु धर्मोऽत्र विरुद्ध । तस्याभावे क्वचिदभावादिति कथमसत्ता साध्यते । अथ सामान्येना-

भावधर्मः सिद्धोऽपि प्रस्तुते धर्मिणि दृश्यमानो गमयत्यभावम् । एवं तर्हि तथैव भावधर्म्मोऽपि सत्तां गमयतु को दोषः । ततो न सत्तासाधनाविरोधो बौद्धैरभिधातव्यः ।

**धर्मिणो विकल्पसिद्धत्वमनङ्गीकुर्वतो नैयायिकस्य मतमुपदर्श्य खण्डयते ।**

यौगास्तु सङ्गिरन्ते—विकल्पसिद्धो धर्म्मी न भवत्येव तस्याप्रमाणत्वात् । तथा ह्यय विकल्पः पर्वतनितम्बादिविकल्पवत्प्रमाणतया नैव स्वीचक्रे । तत्र प्रमाणस्यैव प्राधान्यात् । विकल्पसिद्धो धर्म्मीति कमर्थं पुष्णाति । अप्रमाणेन ननु विकल्पेन कः सुधीः कस्यापि सिद्धिमभिदधीत । यदि हि तथाभूतादपि विकल्पात्साध्यसिद्धिः स्यात् । तदा यदेतदाहोपुरुषिकया परीक्षकाणां प्रमाणपरीक्षणं तदायासफलमेव भवेत् । तदिह विकल्पेन सिद्धो धर्म्मीति किमपि कपटनाटकं सितपटानाम् । तथा च धर्मिणोऽसिद्धेराश्रयासिद्धो हेतुरिति ।

निरचायि ततस्तत्त्व भो यौगग्रामणीस्त्वेदानीम् ॥
स्वारूढामपि शाखां यत्खण्डयितुं प्रवृत्तोऽसि ॥ ४९८ ॥

यदि हि विकल्पसिद्धो धर्मी न भवत्येव तदा कथं विकल्पसिद्धो धर्मी न भवति तस्याप्रमाणत्वादित्यत्रैवासौ धर्मितयोपादायि । कथं चात्रास्यैव हेतोर्नाश्रयासिद्धतोपनिपातः । न खलु भवतोऽत्र धर्मी प्रमाणेन सिद्धः । तथाभूतायां परं प्रत्याश्रयासिद्धतोद्भावनस्य विरोधापत्तेः । य एव हि परेण सर्वज्ञवान्ध्येयादिर्विकल्पसिद्धो धर्मी स्वानुमाने निरदेशि स एव भवताऽप्यत्रानुमाने । अन्यस्य धर्मित्वनिराकृतेः प्रकृतानुपयोगात् । स विकल्पसिद्ध एव भवतोऽपि ।

तथा च—

विकल्पसिद्धं यदि वक्षि धर्मिण
तदा प्रसिद्धं सुधियामभीप्सितम् ॥
अथो निरास्थासि तमत्र धर्मिण
तदापि सिद्धं सुधियामभीप्सितम् ॥ ४९९ ॥

न चोभयस्याप्यनभिधानमिति शक्यं वक्तुम् । विधिनिषेधयोर्भावाभावत्वादेकनिषेधेनापरविधानात् । विधेः प्रतिषेधो हि निषेधः प्रतिषेधनिषेधश्च विधिरिति । अस्तु वा न विधिर्नापि प्रतिषेधस्तत्र किंतु इत्युभयाभावप्रतिज्ञा ; तथाप्येवं वदतैव विकल्पसिद्धे धर्मिणि निषेधव्यवहारः स्वीकृतः । न हि निषेधमवधूय नञोऽन्यदर्थसम्भावना । स च निषेधो यदि न प्रमाणसिद्धः कथमाद्रियेत । किं चाथ वचनेनापि प्रमाणसिद्धिस्वीकारे च न तावदध्यक्षमेव तत्र साधनम् । अध्यक्षस्य तद्विषयत्वविरोधात् । अनुमानाश्रयणे चाश्रयासिद्धिरशक्यपरिहारा । ततो वाच्येयादिप्रस्तावे मूकतैव प्राप्ता । न च प्रतिज्ञामात्रस्याप्यवकाशः । न चैव शक्यम् । यावता शब्ददण्डेन तत्प्रस्तावनिवारणम् । प्रस्तावे त्ववश्यं समासम्भविनि प्रवक्तुर्वचनमनुषङ्गि । वचनस्य विधिनिषेधाभ्यां नापरो व्यापारः । अतो न वचनं नोऽवचनमिति महति कष्टसङ्कटे प्रवेशः । किं च वाच्येयाख्ये धर्मिणि हेतोराश्रयासिद्धिः कस्मादुपन्यपतत् । अवस्तुत्वादस्येति चेत् । वाच्येयस्य नास्तित्वे साध्ये तावदद्यापि सन्दिग्धमवस्तुत्वम् । यत्र ह्येकान्तनित्यमर्थक्रियासमर्थं न भवति क्रमयौगपद्यविरहादित्यभिधीयते जैनेन तत्रास्य हेतोराश्रयासिद्धत्वसिद्धये एकान्तनित्यस्यावस्तुत्वादिति साधनं भवताऽभिधीयमानं भवत एवासिद्धम् । एकान्तनित्यस्य त्वया वस्तुत्वेन स्वीकारात् । परोपगमापेक्षयेदमुच्यत इति चेत् । तर्हि प्रसङ्गहेतुरयं स्यात् । अवस्तुत्वादेकान्तनित्यस्याश्रयासिद्धस्तत्र हेतुरित्यर्थः । एवं सत्यवस्तुनि हेतुराश्रयासिद्धत्वेन व्याप्तो वक्तव्यः । न हि प्रतिबन्धमन्तरेण कश्चिद्धेतुर्भवति । पक्षधर्मतामात्र एव हि परोपगमापेक्षया यः प्रसङ्गहेतुरुच्यते । ननु व्याप्तावपि । तदुपगम एव कदाचिदेवमपि स्यादिति चेत् । तथापि न जैनैरवस्तुनि हेतुराश्रयासिद्धत्वेन व्याप्तोऽभ्युपगामि । एकान्तनित्य एवावस्तुभूते हेतुप्रणयनस्वीकारात् । ततश्च यदावस्तु-

१ 'वस्तु' इति नास्ति भ पुस्तके ।

न्यवस्तुत्वाद्धेतोराश्रयासिद्धिरुपादीयते तत्रैव नव नावस्तुनि विधिप्रतिषेधावित्यस्याः प्रतिज्ञाया. परिक्षयः । यदि च परोपगमादेव व्याप्तिरपि विवक्षिता, अवस्तुन्यवस्तुत्वादाश्रयासिद्धो हेतुरिति । तर्हि नेदं तथानुमतमिति तथापि नावस्तुनि विधिनिषेधाविति व्याहतम् । प्रतिषेधस्य स्वयं स्वीक्रियमाणत्वात् । नञोऽन्यार्थाभावात् । किं च सर्वः प्रसङ्गो विपर्ययपर्यवसितव्यापार इति न्यायाद्यद्वस्तु एकान्तनित्यं स्यात्तदाश्रयासिद्धस्तन्नावस्त्वेकान्तनित्यमिति किं विवक्षितम् । तदापि यदाश्रयासिद्धिदोषः प्रस्तुतो नास्ति प्रकृते । तदा सिद्धमेवास्मदुपन्यस्तमर्थक्रियासामर्थ्याभावस्वभावं साध्यम् । तस्मात्स्वतन्त्र एव वस्तुत्वादाश्रयासिद्धिरवस्तुनि हेतोरिति हेतुदूषणप्रवृत्तस्य परस्यावस्तुत्वादिति हेतुः । तथा च नावस्तुनि विधिनिषेधाविति दूरीकृतमेतत् । व्यापकानुपलम्भश्चायं त्वया प्रयुज्यते । आश्रयत्वस्य वस्तुत्वेन व्याप्त्यभिमानात् । स चाभिमानस्तव स्ववचनविरोधमनवबुद्ध्यमानस्यैव । न हि नावस्तुनि विधिनिषेधाधारत्वमिति स्ववचनविरोधं मन्यमानस्य वस्तुत्वेन धर्मित्वस्य व्याप्त्यभिमानो मानसं स्पृशति । किं त्वपरिभावकतयातिसामान्यजनस्यापि प्रतीतम् । यदापि वन्ध्यासुतो वक्ता न वेत्येवंविधे प्रस्तावे वन्ध्यासुतो वक्ता न भवत्यवस्तुत्वादित्यभिधीयते । तदाऽत्रोपात्तधर्म्यपेक्षयाऽवस्तुत्वादिति हेतोः कथं नाश्रयासिद्धता । अथ वान्ध्येयो वक्ता न वेत्येवंविधा यदि कश्चिदाशङ्कां कुर्वीत तदा भवतां तत्र वान्ध्येयो वक्ता न भवतीत्युत्तरवितरणावकाशः स्यादिति चेत् । ननु कस्मादीदृशीमाशङ्कां न कश्चित्करोति । तदवस्तुतायाः सुप्रसिद्धत्वादिति चेत् । पुनस्तदेवायात वन्ध्यासुतस्य धर्मिणो वक्तृत्वेनाशङ्कनीयताया निषेधः साध्यः सुप्रसिद्धावस्तुत्वादिति हेतुरिति । न चावस्तुत्वेन प्रसिद्धत्वेऽपि सर्वथा शङ्काविरहः । निःसीमो हि मोहमहिमा ततो यथा शब्दे चाक्षुषत्वादानित्यत्व सम्भावयन्नसिद्धत्वेन निषिध्यते । तथेहापि स्याता शङ्कानिषेधौ न विरोध. । तस्माद्वस्तुनीवावस्तुन्यपि कस्यचिद्धर्मस्य विधिनिषेधव्यवहारो दुर्वार इति ।

मीमांसकः पुनराह—नन्वसिद्धः सर्वज्ञविषयो विकल्प इति न तस्मात्तत्सिद्धिस्तथा चाश्रयासिद्धः सर्वज्ञसत्तायां सर्वो हेतुरिति । तदसत् । यथैव ह्यनुन्मीलितलोचनस्य प्राङ्मुखः प्रत्यङ्मुखो वाऽहमिति मानसी प्रतीतिस्तथा सर्वज्ञ इत्यपि प्रतीतिः प्रत्यात्मवेद्यैव । सर्वथा सर्वज्ञविकल्पविधुरचेतसः प्रबलनिद्राक्रान्तस्येवाश्रयासिद्धमुद्भावनानुपपत्तेः । "कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ॥ य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १ ॥" इत्याद्यनभिधानप्रसङ्गाच्च । सोऽयं सर्वज्ञविषयं विकल्पवचनं च प्रवर्तयन्नाश्रयासिद्धमुद्भावयतीति पश्य श्रोत्रियस्याप्युन्मत्तचेष्टितम् । किं च स्वसंवेदनप्रत्यक्षलक्षणेन प्रमाणेन प्रतीयमानस्य सर्वज्ञविषयविकल्पस्यापलापे सकलभावापलापप्रसङ्गः । प्रमाणनिरोधश्चोभयत्रापि तुल्यः । नन्वस्त्येव सर्वज्ञावभासी मानसो विकल्पः । परं तदेव निरालम्बनोऽसाविति नैतद्वशादाश्रयासिद्धिरिति चेत् । हन्त हतोऽसि । मानसज्ञानादभावस्याप्यसिद्धिप्रसक्तेः । एवं च "गृहीत्वा वस्तुसद्भावम्" इत्याद्यनवकाशम् । मानसादपि च नास्तितानानात्मारस्यापि सिद्धिमुपजीवत्ययं श्रोत्रियो नाश्रयसिद्धिं तत इति स्वातन्त्र्यविजृम्भितम् । अथ तदेवासौ निरालम्बना किन्तु सर्वज्ञलक्षणविषयस्यासिद्धेरिति चेत् । कुतस्तदसिद्धिरित्यभिधातव्यम् । तत्र प्रमाणासम्भवादिति चेत् । तर्हीतरेतराश्रयदोषः । सिद्धे हि तद्विकल्पस्य निरालम्बनत्वे प्रमाणासम्भवसिद्धिस्तत्सिद्धौ च तद्विकल्पस्य निरालम्बनत्वसिद्धिरिति ।

सर्वज्ञविषयो विकल्प एव सिद्धः कुतस्तस्माद्धर्मिसिद्धिरिति मीमांसकाधिक्षेपस्य निरासः ।

एवं च सिद्धमेतत्—

हेतुं गृहीत्वा प्रबलप्रमाणे स्मृत्वाऽविनाभावमथोक्तरूपम् ॥
यथोक्तसाध्ये समुपैति बुद्धिः स्वार्थानुमानं तदिदं वदन्ति ॥५००॥२२॥

प्ररूपितं स्वार्थमनुमानम् । अधुना परार्थं तन्निरूपयन्नाह—

## पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारादिति ॥ २३ ॥

पक्षहेतू निरूपितस्वरूपौ तयोर्वचने प्रतिपादकध्वनी ते एवात्मा स्वरूप यस्य तत्पक्षहेतुवचनात्मकं परार्थमनुमानमुच्यते । पक्षहेतुवचनात्मकत्व च परार्थानुमानस्य व्युत्पन्नमतिप्रतिपाद्यापेक्षयाऽत्रोक्तम् । मन्दमतिप्रतिपाद्यापेक्षया तु दृष्टान्तादिवचनात्मकमपि तद्भवति । यद्वक्ष्यन्ति मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानीति । अतिव्युत्पन्नमतिप्रतिपाद्यापेक्षया पुनर्धूमोऽत्र दृश्यत इत्यादि हेतुमात्रवचनात्मकमपि तद्भवति । बाहुल्येन तत्प्रयोगाभावात्तु नैतत्साक्षात्तत्र सूत्रितमुपलक्षितं तु द्रष्टव्यम् । ननु ज्ञानं प्रमाणमिति प्रमाणसूत्रे निर्णीतमतः कथं पक्षादिवचनस्य जडात्मनोऽनुमानप्रमाणत्वमित्याशङ्कापनोदार्थमुक्तमुपचारादिति । कारणे कार्योपचारादित्यर्थः । उपचारश्च मुख्यबाधादौ सति प्रवर्त्तते । तत्र पक्षादिवचनस्य जडस्वरूपत्वान्मुख्यवृत्त्यानुमानप्रमाणत्वं न भवति । ज्ञानस्यैव प्रमाणस्वरूपत्वादिति मुख्यबाधः स्पष्ट एव । प्रयोजनं पुनरन्यकारणवैलक्षण्येन कार्यकारित्वं नाम । यथा खलु पक्षादिवचनं परस्यानुमानजननाय प्रभवति । न तथाऽपरमिति सुप्रतीतम् । सम्बन्धश्चात्र कार्यकारणभाव । ततश्च प्रतिपाद्यगतमुत्पत्स्यमान यज्ज्ञानं तत्कारणत्वात्पक्षादिवचनमप्युपचारेणानुमान प्रमाणमुच्यते । यथा मद्वचनमात्रादयमवबुध्यतामित्यभिसन्धिमान्वक्ता न प्रस्तुतं वाक्यमभिधत्ते । किन्त्वनुमानतोऽय मयाऽवबोधनीयमित्यभिप्रायवान् । श्रोताऽप्येतद्वचनमात्रादयमर्थो मयाऽवबुद्ध इति न मन्यते । किंन्तु व्याप्तिमतो लिङ्गादमुमर्थमवबुद्धवानिति । अत. श्रोतु प्रतीत्यभ्युपायत्वात्परार्थमिदमुच्यते ।

यदाह "वक्तुः स्वप्रत्ययेनेदं न हि वाक्यं प्रयुज्यते ॥ परो मद्वचनादेव तमर्थं बुद्ध्यतामिति ॥ १ ॥ कि त्वेतमनुमानेन बोधया-

१ ' किं ' इति भ. पुस्तके पाठ ।

मीति मन्यते ॥ सोऽपि तद्वचनान्नैव तमर्थमनुष्यते ॥ २ ॥ किन्तु व्याप्तिमतो लिङ्गात्स्वयं स्वयं न पश्यति । तत्प्रतीत्यभ्युपायत्वा- त्परार्थमिदमुच्यते ॥ ३ ॥ " इति । अतश्चात्र श्रोतु स्वार्थानुमान- मवन्म् । वक्ता तु तथापरं प्रतिपादयन्परार्थमनुमानं प्रयुङ्क्त इत्युच्यते ।

न चानुवादमात्रं तद्वक्तुरित्युपपद्यते ॥
यतो व्याप्रियते सम्यक् परस्य प्रतिपत्तये ॥ ५०१ ॥

परेणानधिगतस्यार्थस्योपदेशकत्वान्नानुवादमात्रमनुमानवाक्यम् । स्वावगमापेक्षया त्वनुवादमात्रत्वेनेदानीमाप्तवचनमपि न तथा स्यात् । तस्यापि स्वावगमपूर्वकत्वात् । कार्ये कारणोपचाराद्वा वचनेऽनुमानव्य- पदेशः । प्रतिपादकगतं हि स्वार्थानुमानं तद्वचनस्य निमित्तं, स हि स्वयं साध्यं प्रतिपद्य यथा ममेतत्प्रतिपत्तिरुत्पद्यते तथैवेनमपि प्रति बोधयिष्यामीति । ततो वचनस्य तत्कार्यस्यानुमानरूपस्यापि तद्व्यपदेशः सुन्दर एव । वादिनश्च प्रतिपत्तिः साध्यधर्मविशिष्ट- धर्मिरूपा प्रत्यक्षाविनिश्चितान्यथानुपपत्तिस्वभावाद्धेतोश्च सकाशा- त्समभूत्ततश्च तत्प्रकाशकं वचनं परार्थमनुमानमिति सिद्धम् । एतेन प्रत्ययपरामशशून्यं नचागमात्परेणेव ज्ञातस्यानर्थरूपस्य वा लिङ्गस्य वचनं तत्र भवत्येन परार्थानुमानमित्युक्तं भवति ।

परार्थं वचनानुपपत्तिरिति समर्थयतो बौद्धस्य पूर्वपक्षमुपपाद्य तत्खण्डनम् ।

स्वपक्षपक्षपातीदं बौद्धदर्शनदीक्षितः ।
पक्षप्रयोगवैयर्थ्यं समर्थयितुमुत्थितः ॥५०२॥

ननु पक्षस्य विवादादेव गम्यमानत्वा- त्परार्थं वचनानुपपत्तिः । तथा हि विरुद्धो वादो विवादः । एक आह नित्यः शब्द इति, अन्यस्त्वाहानित्यः शब्द इति । एवंविधस्य विवा- दस्य प्रवृत्तत्वादनुमाने पर प्रतीयत एवेति । प्रयोजनाभावाच्च तद्व- चनमनुचितम् । अथ पक्षवचनस्य साध्यार्थप्रतिपादनलक्षणप्रयोजन-

सम्भवात्तदभावोऽसिद्धः । तन्न वाच्यम् । पक्षवचनं हि केवलं साध्यमर्थं प्रतिपादयेद्धेतूपन्याससमन्वित वा । न तावत्केवलम्, हेतूपन्यासानर्थक्यप्राप्तेः । अथ हेतूपन्याससमन्वितम् । तर्हि हेतोरेव तत्र सामर्थ्योपपत्तेः किं पक्षवचनेनेति ।

तत्र सामर्थ्यलब्धस्य पक्षस्यात्र कथञ्चन ॥
वचनं युक्तिमायाति पौनरुक्त्यप्रसक्तितः ॥ ५०३ ॥
अहो साहसमेतस्य शाक्यभिक्षोर्निरीक्ष्यताम् ॥
पश्यन्नपि पुरो दोषद्वीपिनं यत्प्रगल्भते ॥ ५०४ ॥

तथा हि यत्तावदुक्तं पक्षस्य विवादादेव गम्यमानत्वादित्यादि तदयुक्तम् । यतो येन केनचिद्वचनेन व्यवहिताद्वा प्रस्तुतानुमानेन वाक्यावयवान्तरैकवाक्यतापन्नाद्वा विवादात्पक्षः प्रतीयते । तत्राद्यपक्षेऽतिव्युत्पन्नमतेस्तस्मात्तत्प्रतीतावपि तदितरेषां सा न स्यादिति तान्प्रत्यवश्यं निर्देशः पक्षः । द्वितीये त्वविवाद एव । पराभ्युपेतपक्षविपरीतं पक्षमुपन्यस्य तत्सिद्धये हेत्वादिकमवयवान्तरमभिदध्यादिति हि वयमप्यभ्युपगच्छामः । यदप्यवादि प्रयोजनाभावाच्च तद्वचनमनुचितमिति । तत्र प्रयोजनाभावोऽसिद्धः । प्रतिपाद्यप्रतिपत्तिविशेषस्य तत्प्रसाध्यप्रयोजनस्य सद्भावात् । प्रतिपाद्यो हि कश्चित्कुण्ठमतिः कश्चित्तीक्ष्णमतिः । तत्र कुण्ठमतेर्न प्रकृतार्थप्रतिपत्तिः पक्षप्रयोगमन्तरेणोपपद्यते । तीक्ष्णमतेस्तु तत्प्रयोगमन्तरेणापि प्रकृतार्थप्रतिपत्तिरुपपद्यत एवेति न तं प्रति वयमपि तत्प्रयोगमङ्गीकुर्मः । यदपि पक्षवचनं हि केवलं साध्यमर्थं प्रतिपादयेद्धेतूपन्याससमन्वितं वेति विकल्पद्वयमुक्तम् । तत्राद्योऽनभ्युपगमादेव निरस्तः । द्वितीयस्त्विष्यत एव । तत्र च यद्दूषणमुक्त तर्हि हेतोरेव तत्र सामर्थ्योपपत्तेः किं पक्षवचनेनेति । तदयुक्तम् । एवं हि हेतोः समर्थनापेक्षस्य साध्यसिद्धिनिबन्धनत्वोपपत्तेस्तद्वचनमपि न स्यात् । अथ साध्यसिद्धिप्रतिबन्धित्वात्पक्षस्याप्रयोगमङ्गीकुर्वीथाः । एतदप्ययुक्तम् । वादिना समी-

प्रसिद्धिपरीक्षया साधनस्य । तथा च युक्तमिदमनुमानम् । अचेतना बुद्धिरुत्पत्तिमत्त्वादनित्यत्वाद्वा घटादिवदिति । इहासत उत्पादे उत्पत्तिमत्त्वं सतश्च नाशोऽनित्यत्वं यो हेतुरुपात्तः स साङ्ख्यस्य स्वयमसिद्धः । स हि सत एवाविर्भावतिरोभावावुत्पादविनाशावाह । परस्य तु जैनस्य सिद्धः । पर्यायाणामुत्पादविनाशस्वीकारात् । तदनुपपन्नम् । अनुमानोपन्यासप्रस्तावे, आगमस्य प्रामाण्याङ्गीकरणानुपपत्तेः । विप्रतिपन्नयोर्वादिप्रतिवादिनोः परस्पराधिगमाविक्षेपेण प्रवृत्तेः । प्रामाण्योपपत्तौ पुनरनुमानस्य प्रवृत्तिरेव न स्याद्वचनमात्रेणैवार्थसिद्धेः साधनोपन्यासवैयर्थ्यात् । अथ विप्रतिपन्नस्योत्पत्तिमत्त्वादिर्वचनविशेषः प्रमाणं न बुद्ध्यचैतन्यादिवचनमपीति चेत् । ननु कोऽयं वचनस्य विशेषः । संवादित्वमिति चेत् । तर्हि यत्र संवादस्तत्प्रमाणसिद्धमेव । न च प्रमाणसिद्धं परस्यैव सिद्धं नाम । तस्माद्वादिना प्रतिवादिना च प्रथममर्थः परीक्षणीयस्ततोऽस्याभ्युपगमः कर्त्तव्यः । तथा च नापरोपगतेन हेतुना कस्यचिदर्थस्य सिद्धिः । प्रमाणपरीक्षितस्य द्वाभ्यामपि कक्षीकारार्हत्वात् । तदितरस्य तु द्वयोरप्युपेक्षाक्षेत्रत्वात् । स्यादेतत् । न्याय्या प्रवृत्तिरीदृशी यत्परीक्षोत्तरकालमभ्युपगमः किन्तु कश्चिन्मूढोऽभिनिवेशपारवश्यात्परीक्षायाः पूर्वमेवागममभ्युपैति तदपेक्षयाऽभ्युपगतसाधननिमित्ता परीक्षा क्रियते । सत्यमेतत् । परं यदैव चैतन्यस्वरूपनिराचिकीर्षितधर्माश्रयस्यागमस्य बाधनाय परं प्रति साधनमुच्यते तदैवास्यागमस्य प्रमाणेन बाध्यमानत्वात्कथमागमत्वं स्यात् । अयमर्थः—अभ्युपगतागमदूषणं परेण क्रियमाणं तितिक्षमाण एव परित्यक्तवांस्तदभ्युपगमं नहि तस्यागमस्य दूषणमाकर्णयन्नसंशयितो नाम । यत्र च संशयस्तस्य प्रामाण्याभ्युपगमत्यागो नियमेनैव । तस्माद्येनापि ग्रहात्परीक्षितुकामेन तदभ्युपगमो न परित्यक्तस्तेनापि दूषणश्रवणं सहमानेन परित्यक्तव्यः । ततो यथाऽत्र वादिनोऽसिद्धस्तत्प्रतिवादिनोऽप्यसिद्धः । तथा च विद्यमान एवार्थः साध्यनान्तरीयकतया निश्चितोऽर्थान्तरगमको

भवति नाविद्यमानोऽपि प्रतीतिमात्रेण । यत परोपगमेन सिद्धि स्यात् । ननु च साधनमर्थप्रतीत्युपाय । उपायश्च हेय "उपाया अपि ये हेयास्तानुपाया प्रचक्षते" इति वचनादिति । सताऽसता चोपायेन सत्यर्थ प्रतिपत्तव्य साध्य । इह च यदि नामोत्पत्तिमत्त्वमनित्यत्व वाऽसदेव तथापि तस्माद्यत्प्रतिपत्तव्य तत्सदेवेति चेत् । तदसत् । सतोऽपि ह्यवस्तुभूतात् प्रतिपत्तिरसत्प्रतिपत्तिं नातिशेते । यथा हि विभ्रमकारणात्प्रतिपत्तिरुत्पद्यमाना सन्दिग्धविषया तद्वदवस्तुभूतादपि सा ततोऽप्यस्य सन्दिग्धविपर्ययेनाप्रमाणत्वेनोभयत्रापि विशेषाभावादिति न परप्रसिद्ध्या साधनमभिधानीयम् । नन्वेव कथ भवद्भि परपरिकल्पितैर्धर्मैर्धर्मान्तरस्य प्रसङ्ग क्रियते । यथा यत्सर्वथैक तन्नानेकत्र सम्बध्यते । तथा च सामान्यमिति कथमनेकव्यक्तिवर्ति स्यादनेकव्यक्तिवर्तित्वाभावव्यापकमन्तरेण सर्वथैक्यस्य व्याप्यस्यानुपपत्तेरिति । अत्र हि वादिन स्याद्वादिन सर्वथैक्यमसिद्धमिति कथ धर्मान्तरस्यानेकवर्तित्वाभावस्य गमक स्यादिति चेत् । नन्वसम्बद्धम् । एकधर्मोपगते धर्मान्तरोपगमसन्दर्शनमात्रतत्परत्वेनास्य वस्तुनिश्चायकत्वाभावात् । प्रसङ्गविपर्ययरूपस्यैव मौलहेतोस्तन्निश्चायकत्वात् । प्रसङ्ग स्वत्वत्र व्यापकविरुद्धोपलब्धिरूप । अनेकव्यक्तिवर्तित्वस्य हि व्यापकमनेकत्वम् । एकान्तिकरूपस्यानेकव्यक्तिवर्तित्वविरोधात् । तथा हि– यस्मिन्परिच्छिद्यमाने यदवच्छिद्यते तयो परस्परतो विरोध । मुण्डदेशे यत्खण्डदेशाभावाव्यभिचारिगोत्वरूप स्थित तत्खण्डदेशानाहितत्वात्तद्रूपप्रच्युतिमत्, यच्च खण्डदेशे मुण्डदेशाभावाव्यभिचारिगोत्वरूप तदपि मुण्डदेशानाहितत्वात्तद्रूपप्रच्युतिमत्तस्य मुण्डदेशाधेयत्वेन परिच्छिद्यमाने खण्डदेशाधेयत्वमवच्छिद्यते तत्र वा परिच्छिद्यमाने यदवच्छिद्यत इति तद्देशान्यदेशयोस्तद्देशाधेयत्वानाधेयत्वे विरोधिनी । सामान्यस्य हि यत्खण्डदेशस्थित रूप तदपेक्षया तद्देशावस्थितरूपापेक्षया च तस्यैव तद्देशानाधेयत्व कथ नाम भवेत् । एवमन्यदेशापेक्षयाऽपि भावनीयम् । ततो

यदुच्यते योगैः—तद्देशत्वमप्रतिषिध्यैवान्यदेशत्वं समुच्चीयते तद्देशश्चायमित्यादि, तन्निरस्तम् । एकदेशस्थत्वस्यान्यदेशस्थत्वपरिहारेणावस्थानादिति । सिद्धमनेकत्र वृत्तेरनेकत्वं व्यापकं तद्विरुद्धं च सर्वथैक्यं सामान्ये त्वयाऽभ्युपगम्यते ततो नाऽनेकवृत्तित्वं स्याद्विरोध्यैक्यसद्भावेन व्याप्येन व्यापकस्यानेकत्वस्य निवृत्त्या व्याप्यस्यानेकवृत्तित्वस्याऽवश्यं निवृत्तेः । न च तन्निवृत्तिरभ्युपगतेति लब्धावसरः प्रसङ्गविपर्ययाख्यो विरुद्धव्याप्तोपलब्धिरूपोऽत्र मौलो हेतुः । यथा यदनेकवृत्ति तदनेकमनेकवृत्ति च सामान्यमिति । एकत्वस्य हि विरुद्धमनेकत्वं तेन व्याप्तमनेकवृत्तित्वं तस्योपलब्धिरिह । मौलत्वं चास्यैतदपेक्षयैव प्रसङ्गस्योपन्यासात् । न चायमुभयोरपि न सिद्धः । सामान्ये जैनयोगाभ्यां तदभ्युपगमात् । ततोऽयमेव मौलो हेतुरयमेव वस्तुनिश्चायकः । ननु यद्ययमेव वस्तुनिश्चायकः कक्षीक्रियते तर्हि किं प्रसङ्गोपन्यासेन प्रागेवायमेवोपन्यस्यताम् । निश्चयाङ्गमेव हि ब्रुवाणो वादी वादिनामवधेयवचनो भवतीति चेत् । तदसत् । मौलहेतुपरिकरत्वादस्य । अवश्यमेव हि प्रसङ्गं कुर्वतोऽर्थः कश्चिन्निश्चाययितुमिष्टः । निश्चयश्च सिद्धहेतुनिमित्त इति यत्सूत्रासिद्धो हेतुरिष्टस्तस्य व्याप्यव्यापकभावसाधने प्रकारान्तरमेतत् । यत्सर्वथैकं तन्नानेकत्र सम्बध्यत इति व्याप्तिदर्शनमपि हि बाधकं विरुद्धधर्माध्यासमाक्षिपतीत्यन्योऽयं साधनप्रकारः । नन्वेवं प्रसङ्गेऽङ्गीक्रियमाणे बुद्धिरचेतना, उत्पत्तिमत्त्वादित्ययमपि साङ्ख्येन स्थापितः प्रसङ्गहेतुर्भविष्यति । तथा हि यदि बुद्धिरुत्पत्तिमती भवद्भिरभ्युपगम्यते तदानीं तद्व्यापकमचैतन्यमपि तस्याः स्यान्न चैवमतो नोत्पत्तिमत्यपीयमिति चेत् । तदसत् । प्रसङ्गविपर्ययहेतोर्मौलस्य चैतन्याख्यस्य साङ्ख्यानां बुद्धावपि प्रतिषिद्धत्वात् । तैः प्रधानधर्मतया तस्या अचैतन्यस्वीकारात् । चैतन्यस्वीकारेऽपि नाऽनयोः प्रसङ्गतद्विपर्यययोर्गमकत्वम् । अनेन प्रसङ्गेनात्र प्रसङ्गविपर्ययहेतोर्व्याप्तिसिद्धिनिबन्धनस्य विरुद्धधर्माध्यासस्य विपक्षे बाधकप्रमाणस्यानुपस्थानात् । चैतन्योत्पत्तिमत्त्वयो-

विरोधाभावात् । एवं ह्यचेतनत्वेनोत्पत्तिमत्त्वं व्याप्तं भवेद्यदि चैतन्येन तस्य विरोधः स्यान्नान्यथा । न चैवमिति । नैतौ प्रसङ्गतद्विपर्ययौ गमकौ मतौ तर्हि कथं तौ गमकाविति चेत् । एकान्तैकरूपस्य सामान्यस्य प्रतिनियतदेशाधाराधेयस्वभावात्परस्य स्वभावस्याभावेनान्यदेशाधाराधेयत्वासम्भवाच्चात्मस्य तस्मात्स्य चान्योऽन्यपरिहारस्थितलक्षणत्वेन विरोधादिति नागमात्परेणैव नातस्य लिङ्गस्य वचनं परार्थानुमानम् ॥

अनर्थरूपलिङ्गवचनं परार्थानुमानमित्यस्य खण्डनम् ।

नाप्यनर्थरूपस्य । यथाऽनित्यः शब्दः पूर्वापरयोरन्यतरत्वाद्घटवदिति । न ह्यत्र शब्दघटयोर्वास्तवी प्रत्यासत्तिरपि तु वक्तृविवक्षामात्रकृता । तदभावे विवक्षिते तयोरासत्तिविप्रकर्षाभावात् । तावद्धि घटप्रत्यासन्नः शब्दस्य शब्दघटरूपसमुदायावयवत्वाद्विप्रकृष्टश्चाकाशात्तत्समुदायाद्बाह्यत्वादाकाशस्य नित्यत्वं साधयितुं विवक्षितः प्रवर्तते । यदा तु न विवक्षति तदा तयोरासत्तिविप्रकर्षौ निवर्तेते । वस्तुस्वभावत्वे पुनरनयोर्विवक्षान्तरेऽपि न परावृत्तिर्भवेत् । भवति च नित्यः शब्दः पूर्वापरयोरन्यतरत्वादाकाशवदित्यत्राकाशस्यासन्नत्वाद्घटस्य तु विप्रकर्षात् । किं च यदा द्वाभ्यां परस्परविरुद्धे नित्यत्वानित्यत्वे साधयितुमिष्यते तदा स एव घटः प्रत्यासन्नो विप्रकृष्टश्चाकाशमपि । न च युगपदेकत्र वस्तुनि विरुद्धयोर्धर्मयोरासत्तिविप्रकर्षयोरुपसंहारयोगः । तस्मादेते वक्तुरिच्छामात्रनिरोधिनो धर्मा न वस्तुस्वभावमनुविदधति । इच्छानुसारेण वस्तुनो वृत्त्यभावात् । तथात्वे हि न कश्चिद्दरिद्रः स्यात् । तस्मान्न ततोऽर्थसिद्धिः । वस्तुरूपयोः प्रत्यासत्तिविप्रकर्षयोरसिद्धेः । सिद्धौ तु स्याद्दोषो यथा यादृग्रूपसाधर्म्यं विषाणित्वं न व्यभिचरति तादृगभिसमीक्ष्याभिधीयते, एष पिण्डो विषाणी गोगवयस्यान्यतरत्वात् । अत्र हि साधर्म्यविशेषो गोगवयसमुदायैकदेशत्वं वास्तवः प्रत्यक्षमेव तेन निश्चीयते विषाणित्वम् । तथा नित्यः शब्दो

मयैव विवक्षितत्वादिति यदोच्यते तदा सिद्धयत्यर्थशून्यं विवक्षामात्रम्। न पुनर्वस्तु । तदिच्छाया वस्तुवृत्तिनियमाभावात् । प्रत्यक्षबाधितं ह्येतद्यत्र तदिच्छा तत्र वस्तुभाव इति । तथा च व्याप्त्यसिद्धेर्व्यभिचारः। एतेन मदुपगमादयोऽपि न हेतव इत्युक्तं भवति । ततो नाऽनर्थरूप-लिङ्गवचनमपि परार्थमनुमानमिति सिद्धम् ॥

तत्पक्षहेतोर्वचनस्वरूपं गतं प्रतिष्ठामनुमानमेतत् ॥
परार्थसंज्ञं च सुतर्कविज्ञा वादे यदङ्ग प्रथमं गदन्ति ॥५०६॥२३॥

इदानीं सूत्रत एव पक्षवचनं द्रढयन्नाह—

**साध्यस्य प्रतिनियतधर्मिधर्महेतोरुपसंहारवचनवत्पक्षप्रयोगोऽप्यवश्यमाश्रयितव्य इति ॥ २४ ॥**

अयमर्थः—यत्र धूमस्तत्र वह्निरित्यादिना साध्यव्याप्तसाधनप्रदर्शनेन हेतोः सामान्येनाधारप्रतिपत्तावपि पर्वतादिविशिष्टधर्मिधर्मताधिगतये धूमश्चात्रेत्येवंरूपमुपसंहारवचनमवश्यमाश्रीयते यथा ताथागतैः, तथा साध्यधर्मस्य प्रतिनियतधर्मिताप्रतिपत्तये पक्षप्रयोगोऽप्यवश्यमाश्रयितव्य इति ॥ २४ ॥

अमुमेवार्थं परोपालम्भच्छलेन समर्थयमानः प्राह—

**त्रिविधं साधनमभिधायैव तत्समर्थनं विदधानः कः खलु न पक्षप्रयोगमङ्गीकुरुत इति ॥ २५ ॥**

त्रिविधं कार्यस्वभावानुपलब्धिभेदेन साधनमभिधायैव न तु पक्षवदनुक्त्वेत्यर्थः । तत्समर्थनं तस्य साधनस्य समर्थनमसिद्धतादोषपरिहारेण स्वसाध्यसाधनसामर्थ्यप्ररूपणप्रवचनं विदधानः कः खलु न पक्षप्रयोगमङ्गीकुरुते किन्तु सर्व एव प्रामाणिकः स्वीकुरुत इत्यर्थः । न ह्यसमर्थितो हेतुः साध्यासिद्धयङ्गम् । अतिप्रसङ्गात् । ततः पक्षप्रयोगमनङ्गीकुर्वता सौगतेन हेतुमनुक्त्वैव तत्समर्थनं विधेयम् । समर्थ-

नोपन्यासोऽस्ति । हेतौ सामर्थ्यदर्शनादेव तद्वचनमनर्थकमेवेति । हेतोर्वचने कस्य नाम समर्थनमिति चेत् । तर्हि पक्षस्याऽप्यप्रयोगे क नाम हेतुः साध्यसाधनविषयनियमाय पर्यनुयोगः । अथ विवादादेव गम्यमाने प्रतिज्ञाविषयेऽनुच्यमानेऽपि हेतुः साध्यं साधयिष्यतीत्युच्यते । तर्हि गम्यमानस्य हेतोरपि समर्थनं करिष्यतीत्यप्युच्यतामविशेषात् । गम्यमानस्यापि हेतोरसन्दिग्धप्रतिपत्त्यर्थं वचनमिति चेत् । तर्हि तदर्थमेव पक्षवचनमप्यस्तु । समानयोगक्षेमत्वात् । तत्र साध्यसिद्धिमभिवाञ्छता हेतुवचनमिव पक्षवचनमपि स्वीकर्तव्यम् । पक्षहेतुवचनयोश्चानुमानाङ्गत्वेन वक्ष्यमाणत्वादिति ॥ २५ ॥

इहानुमानस्यैव पारार्थ्यं यो प्रतिपन्नवान् न प्रत्यक्षस्येत्यनुमानपारार्थ्यव्यवस्थापनप्रसङ्गेन तावत् प्रत्यक्षस्यापि पारार्थ्यं व्यवस्थापयन्नाह—

## प्रत्यक्षपरिच्छिन्नार्थाभिधायि वचनं परार्थं प्रत्यक्षं परप्रत्यक्षहेतुत्वादिति ॥ २६ ॥

प्रत्यक्षपरिच्छिन्नार्थाभिधायि, अध्यक्षावगतवस्तुप्रतिपादकं यद्वचनं तत्परार्थं प्रत्यक्षमुच्यते । ननु वचनं कुतः प्रत्यक्षं जडत्वादित्याशङ्कायामाह—परप्रत्यक्षहेतुत्वात् । प्रतिपाद्यगतप्रत्यक्षप्रकाशनिमित्तत्वादुपचारेणेत्यर्थः । उपचारस्य चात्र प्रयोजनं परार्थानुमानवदवसेयम् । यत्तु बौद्धैरभिधीयते न प्रत्यक्षविषयः स्वलक्षणाख्यः परेभ्यः कथयितुं कथमपि शक्यत इति । तदनुपपन्नम् । निर्विकल्पकप्रत्यक्षप्रतिक्षेपेण स्थिरस्थूलाद्यर्थव्यवसायिनः प्रत्यक्षस्याप्यस्मात्समर्थितत्वात् । तद्विषयस्य कथञ्चिद्विकल्पगम्यत्वेन शब्दप्रतिपाद्यस्वभावत्वात् । ततो यथानुमानप्रतीतोऽर्थः परस्मै प्रतिपाद्यमानो वचनरूपापन्नः परार्थमनुमानमुच्यते तथा प्रत्यक्षप्रतीतोऽपि परार्थं प्रत्यक्षमित्युच्यताम् । परप्रत्यायनस्योभयत्राप्यविशिष्टत्वात् । वचनव्यापारस्यैव भेदात् । तथा

हि अनुमानप्रतीतमर्थं प्रत्याययन्नग्निरत्र धूमान्यथानुपपत्तेरित्यादिकं वचनयति । प्रत्यक्षप्रतीतं पुनरर्थं संदर्शयन्—

पश्यार्थं कुसुमे विपक्षरमणीवैवर्ण्यदीक्षागुरु-
र्नम्राङ्गपतङ्गगर्भिणि सरसि प्रेङ्खन्नयम्भोरुहः ॥
मात्युत्तुङ्गकलङ्कमधिगतः श्वेतातपत्राञ्चित-
श्चञ्चच्चामरसुन्दरन्यविमव कश्चिन्नृपो गच्छति ॥ ५०७ ॥

इत्यादि ब्रवीति । ततश्च वचनाद्विप्रकारादपि प्रतिपाद्यस्य प्रत्यक्षानुमेयार्थगोचरा यतः प्रतिपत्तिराविर्भवति ततः प्रत्यक्षानुमानयोरुभयोरपि परार्थत्वमविरुद्धमेव । यदुक्तम्—"प्रत्यक्षेणानुमानेन प्रसिद्धार्थप्रकाशनात् ॥ परस्य तदुपायत्वात्परार्थत्वं द्वयोरपि ॥ १ ॥" इति । परस्येति प्रत्याय्यस्य । तदुपायत्वादिति प्रतिपादकस्थप्रत्यक्षानुमाननिर्णीतार्थप्रकाशनकारणत्वात् । द्वयोरिति प्रत्यक्षानुमानप्रभववचनयोरिति ॥ २६ ॥

अथ स्पष्टप्रतिपत्त्यर्थं सूत्रत एव परार्थप्रत्यक्षोक्तिमाह—

**यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति ॥ २७ ॥**

व्यक्तार्थमदः । एवं स्मरणादेरपि यथासम्भवं पारार्थ्यं प्रतिपत्तव्यम्, तथा हि—एवं वक्तारो भवन्ति स्मरसि चैत्र कर्णीरेषु वल्यामस्तत्र द्राक्षा भोक्ष्यामहे इति ।

न्यायादित्थं समानाय प्रतिष्ठां प्रापदुत्तमाम् ॥
तस्मात्प्रत्यक्षमानस्य पारार्थ्यमनुमानवत् ॥ ५०८ ॥ २७ ॥

उक्तं प्रासङ्गिकं परार्थं प्रत्यक्षम् । अथ यदुक्तं पक्षहेतुवचनात्मकं परार्थमनुमानमिति तत्समर्थयन्—

१ न्यायावतारे श्लो. ११ ।

## पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं न दृष्टान्तादिवचनमिति ॥ २८ ॥

उक्तस्वरूपपक्षहेतुवचनात्मकमवयवद्वयमेव परार्थानुमानाख्यस्य भागयुग्ममेव । प्रतिपाद्यबोधस्य कारणं न दृष्टान्तादिवचनं, आदिशब्देनोपनयनिगमनादिग्रहः ।

एवं च—

सत्यासिद्धदृष्टान्तवचस्ततो हेतूपसंहृति ॥
वैपरीत्येन वैय्यर्थ्यं व्याप्तौ बौद्धैर्न्यगादि यत् ॥ ५०९ ॥

त्र्यवयवमनुमानं कल्पयामासिवांस
　कपिलमुनिमतस्था ये तथा जैमिनीयाः ॥
गदितमवयवैर्यत्पञ्चभिर्योगशिष्यै-
　रपि सुनिपुणनीत्या तन्निरस्तं समस्तम् ॥ ५१० ॥

पक्षहेतुलक्षणावयवद्वयनियमाभ्युपगमश्चायं व्युत्पन्नमतिप्रतिपाद्यापेक्षया द्रष्टव्यः । यतोऽभिधास्यति—“ मन्दमतींस्तु व्युत्पादयितुम् ” इत्यादि ॥ २८ ॥

अथ हेतुप्रयोगस्य द्वैविध्यं दर्शयन्नाह—

## हेतुप्रयोगस्तथोपपत्त्यन्यथानुपपत्तिभ्यां द्विप्रकार इति ॥ २९ ॥

तथैव साध्यसद्भावप्रकारेणैव हेतोरुपपत्तिः तथोपपत्तिः । “साधनं कृता बहुलम् ” इति समासः । अवधारणस्य समासार्थेऽनुभूतत्वादप्रयोगः । यथा दध्याम्लादिपूर्वसिक्तादीनाम् । अन्यथा साध्याभावप्रकारेण हेतोरनुपपत्तिरन्यथानुपपत्तिः । अत्रापि समासः प्राग्वत्-

---

१ प्रमाणनय ३ । ३ सू ४२ । २ ‘ कर्तृकरणे कृता बहुलम् ’ इति पा सू २।१।३२ ।

सूत्रेणैव । ताभ्यामन्वयव्यतिरेकस्वरूपाभ्यां हेतोः प्रयोगो द्विभेदः ॥२९॥

तथोपपत्त्यन्यथानुपपत्त्योरेव स्वरूपं सूत्रद्वयेन विस्पष्टीकर्तुमाह—

**सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिरिति ॥३०॥**

**असति साध्ये हेतोरनुपपत्तिरेवान्यथानुपपत्तिरिति ॥ ३१ ॥**

प्राग्वत् ॥ ३० ॥ ३१ ॥

अथ तथोपपत्त्यन्यथानुपपत्तिप्रयोगौ व्यक्तीकरोति—

**यथा कृशानुमानयं पाकप्रदेशः सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति ॥ ३२ ॥**

अदोऽप्युत्तानार्थम् ॥ ३२ ॥

अथ तथोपपत्त्यन्यथानुपपत्त्योः प्रयोगनियमनार्थमाह—

**अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोग इति ॥ ३३ ॥**

अनयोस्तथोपपत्त्यन्यथानुपपत्त्योर्मध्यादन्यतरस्याः प्रयोगेणैव साध्यप्रतिपत्तौ सत्यां द्वितीयस्याः प्रयोगस्यैकत्र साध्ये नैरर्थक्यम् । द्वयोरपि परस्पराव्यभिचारित्वात् । इदमत्रैदम्पर्यम् । प्रयोगयुगलेऽपि वाक्यविन्यास एव विशिष्यते न पुनरर्थः । प्रयोगस्य च साध्यसाधनं फलम् । तच्च यद्यन्यतरप्रयोगेणैव कृतम् । तदा द्वितीयप्रयोगः प्रयोक्तुरपाटवमेव प्रकटयति । निष्फलत्वादिति । ननु तथोपपत्त्यन्यथानुपपत्त्योः परस्पराव्यभिचारित्वमसिद्धम् । क्वचित्तथोपपत्तिनिश्चयेऽप्यन्यथानुपपत्तेरसिद्धेः । तथा हि प्रयत्नानन्तरीयके शब्दे साध्ये कादाचित्कत्वं हेतुत्वेनोपादीयमानं सपक्षे घटादौ सर्वत्रास्तीति तथोपपन्नमप्यन्यथानुपपत्तिविकलम् । अप्रयत्नानन्तरीयके विद्युदादौ विपक्षेऽपि

तस्योपलभ्यमानत्वात् । नैतदस्ति । तत्र तथोपपत्तेरेवाभावात् । न हि सपक्षे सर्वत्र दर्शनमात्र तथोपपत्तिरिति सङ्गिरामहे । किं तर्हि सत्येव साध्ये हेतोरुपपद्यमानत्व तथोपपत्तिरिति । न चेय प्रकृते हेतो समस्ति । तत परस्पराव्यभिचारित्वात्तथोपपत्त्यन्यथानुपपत्त्योरेकप्रयोगे द्वितीयप्रयोगस्य निरुपयोगित्व युक्तमिति ॥ ३३ ॥

अथ यदुक्त न दृष्टान्तादिवचन परप्रतिपत्तेरङ्गमिति, तत्र दृष्टान्तवचन तावन्निराचिकीर्षुस्ताद्धि किं परप्रतिपत्त्यर्थं परैरङ्गीक्रियेत उत हेतोरन्यथानुपपत्तिनिर्णीतये, यद्वाऽविनाभावस्मृतय इति विकल्पेषु प्रथम विकल्प तावद्दूषयन्नाह—

## न दृष्टान्तवचन परप्रतिपत्तये प्रभवति, तस्या पक्षहेतुवचनयोरेव व्यापारोपलब्धेरिति ॥ ३४ ॥

न खलु वह्निमानय देशो धूमवत्त्वान्यथानुपपत्तेरित्येतावति प्रयुक्ते प्रतिपन्नाविस्मृतप्रतिबन्धस्य प्रमातु साध्यप्रतिपत्तिर्न भवतीति त प्रति निरुपयोग एव दृष्टान्तस्य प्रयोग इति ॥ ३४ ॥

अथ द्वितीयविकल्प दूषयन्नाह—

## न च हेतोरन्यथानुपपत्तिनिर्णीतये, यथोक्ततर्कप्रमाणादेव तदुपपत्तेरिति ॥ ३५ ॥

दृष्टान्तवचन प्रभवतीति योग । अपि च । दृष्टान्त प्रतिनियतव्यक्तिस्वरूपो भवति । यथाऽग्नौ साध्ये महानसादि । तावन्मात्रस्य च तस्य वचन कथमविनाभावनिश्चयार्थं स्यात् । प्रतिनियतव्यक्तौ तन्निश्चयस्य कर्तुमशक्ते । ततो व्यक्त्यन्तरेषु व्याप्त्यर्थं पुनर्दृष्टान्तान्तर मृग्यम् । तस्याऽपि व्यक्तिरूपत्वेनापरापरदृष्टान्तापेक्षायामनवस्था स्यात् । ॥ ३५ ॥

---

१ प्र न त ३ सू २८

अमुमेवार्थं सूत्रेण व्यक्तीकुर्वन्नाह—

**नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ सत्यां तदन्तरापेक्षायामनवस्थितेर्दुर्निवारः समवतार इति ॥ ३६ ॥**

तदन्तरापेक्षायामिति विप्रतिपत्तौ सत्यां दृष्टान्तान्तरापेक्षायामित्यर्थः ॥ ३६ ॥

अथ तृतीयविकल्पं दूषयन्नाह—

**नाप्यविनाभावस्मृतये, प्रतिपन्नप्रतिबन्धस्य व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेरिति ॥ ३७ ॥**

अत्रापि दृष्टान्तवचनं प्रभवतीति योज्यम् ॥ ३७ ॥

अभिहितमेवार्थं द्रढयन्नाह—

**अन्तर्व्याप्त्या हेतोः साध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थमिति ॥ ३८ ॥**

अन्तर्व्याप्तिबहिर्व्याप्ती अनन्तरमेव निरूपयिष्यमाणे । ततोऽयमर्थः—यदि हेतोरन्तर्व्याप्त्यैव साध्यप्रत्यायनसामर्थ्यमस्ति तदा बहिर्व्याप्त्युद्भावनं व्यर्थम् । अस्त्यत्राग्निः सत्येवाग्नौ धूमोपपत्तेः । मत्पुत्रोऽयं बहिरवस्थितो वक्ति, अन्यथैवम्भूतस्वरानुपपत्तेरिति तथोपपत्त्यन्यथानुपपत्तिप्रयोगमात्रादेव व्युत्पन्नमते प्रतिपत्तुः साध्यसिद्धेः सम्पन्नत्वात् । अथाऽन्तर्व्याप्त्या हेतोः साध्यप्रत्यायनसामर्थ्यं नास्ति । तदापि बहिर्व्याप्त्युद्भावनं व्यर्थमेव । एतस्याः स्त्रियो गर्भापत्यं पुमानेतदपत्यत्वात्प्रसिद्धपुंस्त्वेतरापत्यवत्, इत्येवमादौ हेतोर्बहिर्व्याप्तिसद्भावेऽप्यन्तर्व्याप्तेरभावे गमकत्वादर्शनात् । सत्येव पुंस्त्वे एतदपत्यत्वाख्यस्य

साधनस्योपपत्तिरित्येवरूपा ह्यन्तर्व्याप्तिरत्र सन्निधत्ते । तस्मिन्सत्यां तु निश्चितयाऽपि बहिर्व्याप्त्या न किमपि भवतीति ॥ ३८ ॥

अथ दृष्टान्तदूषणावसरप्राप्तयोरन्तर्व्याप्तिबहिर्व्याप्त्योः स्वरूपमाह—

**पक्षीकृत एव विषये साधनस्य साध्येन व्याप्तिरन्तर्व्याप्ति, अन्यत्र तु बहिर्व्याप्तिरिति ॥ ३९॥**

अन्तरित्यन्तर एव । पक्षीकृते विषये साधनस्य साध्येन व्याप्तिर व्यभिचारोऽन्तर्व्याप्तिरुच्यते । बहिः पक्षीकृताद्विषयादन्यत्र तु दृष्टान्तधर्मिणि तस्य तेन व्याप्तिर्बहिर्व्याप्तिरभिधीयते ॥ ३९ ॥

मा भूद् दृष्टान्तवचनस्य परप्रतिपत्तिं प्रति सामर्थ्यमुपनयनिगमनयोस्तु तद्भविष्यतीत्याशङ्कापनोदार्थमाह—

**नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं, पक्षहेतुप्रयोगादेव तस्याः सद्भावादिति ॥ ४० ॥**

उपनयनिगमनयोरभिधास्यमानस्वरूपयोः । अपि समुच्चये । न केवलं दृष्टान्तवचनस्यैवेत्यर्थः । अपि च प्रयुज्यापि दृष्टान्तादिकं समर्थनं हेतोरवश्यं वक्तव्यम् । असमर्थितस्य तस्य परप्रतिपत्त्यङ्गत्वानुपपत्तेरिति तदेव परं परप्रतिपत्तिकारणतया कक्षीकर्तुं प्रेक्षावतां युक्तं न तु दृष्टान्तवचनादिकम् । सत्यपि तस्मिन्हेतुसमर्थनं विना परप्रतिपत्तेरभावात् ॥ ४० ॥

एतदेवाह—

**समर्थनमेव परं परप्रतिपत्त्यङ्गमास्तां, तदन्तरेण दृष्टान्तादिप्रयोगेऽपि तदसम्भवादिति ॥ ४१ ॥**

---

१ अत्र यथाऽर्हदादौ नाह यस्तु गत्वरस्य सर्वथाप्यरम् ।' इति, 'अग्निमानयं देशो धूमवत्त्वात् एवं स एव यथा पाकस्थानम्' इति च दृष्टान्तद्वयं रत्नाकरावतारिकायां पृ० ९६ ।

समर्थनं हेतोरसिद्धत्वादिदोषान्निराकृत्य स्वसाध्येनाविनाभावसाधनम् । परं केवलम् ॥ ४१ ॥
इत्थं व्युत्पन्नमतीनाश्रित्य प्रपञ्चितं परार्थमनुमानम् । अथ मन्दमतीनाश्रित्य तत्प्रपञ्चयन्नाह—

**मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानीति ॥ ४२ ॥**

मन्दमतीनव्युत्पन्नप्रज्ञान् । अपिशब्दोऽनुक्तसमुच्चयार्थः । ततः पक्षहेतू पक्षादिशुद्धयश्च पञ्च ग्राह्याः । ततश्च न केवलं दृष्टान्तोपनयनिगमनानि प्रयोक्तव्यानि किन्तु पक्षहेतू पक्षादिशुद्धयश्च प्रयोक्तव्या इत्यर्थः सिद्धो भवति ।

सूत्ररहस्यप्रकटनम् ।

इदमिह रहस्यम् । नैकः प्रकारः परार्थानुमानस्य । किं तर्हि यथा यथा परस्य मुखेन साध्यार्थप्रतिपत्तिरुपजायते तथा तथाऽसौ वक्त्रा प्रतिपादनीयः । तत्र यदा प्रतिपाद्यः क्षयोपशमादेव निर्णीतपक्षो दृष्टान्तस्मार्यप्रतिबन्धग्राहकप्रमाणस्मरणनिपुणोऽपरावयवाभ्यूहनसमर्थश्च भवति तदा तमाश्रित्य हेतुप्रतिपादनमेव क्रियते धूमोऽत्र दृश्यत इति । तं प्रति पक्षाद्यभिधानस्य वैयर्थ्यात् । यदा पुनः प्रतिपाद्यस्य नाद्यापि पक्षनिर्णयस्तदाऽकाण्ड एव हेतूपन्यासोऽदृष्टमुद्गरपातायमानः स्यादिति पक्षोऽपि तं प्रति प्रयुज्यते । अग्निरत्र धूमान्यथानुपपत्तेरिति । तथा यः प्रतिबन्धग्राहिप्रमाणस्य न स्मरति तमाश्रित्य दृष्टान्तोऽप्युपदिश्यते । अग्निरत्र धूमाद्यत्र धूमस्तत्राग्निर्यथा महानस इति । स्मृतेऽपि प्रतिबन्धग्राहिणि प्रमाणे दार्ष्टान्तिके हेतुं योजयितुमजानानस्योपनयः प्रदर्श्यते । यथा प्राक्तन एव प्रयोगे धूमश्चात्रेति । एवमपि साकाङ्क्षस्य निगमनमभिधीयते । तस्मादग्निरत्रेति । अन्यथा निराकुलप्रस्तुतार्थासिद्धेरिति । तथा प्रतिपाद्यविशेषस्य यत्र पक्षादौ स्वरूपविप्रतिपत्तिः । तच्छुद्धिः प्रमाणेन

कर्त्तव्या । अन्यथा पक्षादीनां स्वसाध्यसाधनात् । तत्र वक्ष्यमाणप्रतीत साध्यधर्मविशेषणत्वादिपक्षदोषपरिहारादि पक्षशुद्धि । अभिधास्यमानासिद्धादिहेत्वाभासोद्धरण हेतुशुद्धि । प्रतिपादयिष्यमाणसाध्यविकलत्वादिदृष्टान्तदूषणपरिहरण दृष्टान्तशुद्धि । उपनयनिगमनयोस्तु शुद्धी प्रमादादन्यथा कृतयोस्तयोर्वक्ष्यमाणतत्स्वरूपेण व्यवस्थापके वाक्ये विज्ञेये । प्रपञ्चतस्तु पक्षादिशुद्धिपञ्चकस्वरूप परमार्षमेयम् । सर्वेषां चामीषां पक्षादिवचनानां परार्थानुमानवाक्यावयवत्वम् । प्रतिपाद्यप्रतीत्युपायत्वात् । तस्मिन् दशावयवं वाक्यमाहुस्तार्किका[1] । इयमेव वचसोत्कृष्टा कथा कथ्यते । तथा ह्यवयवापेक्षया जघन्यमध्यमोत्कृष्टास्तिस्र कथा भवन्ति । तद्यथा—

लिङ्गं केवलमेव यत्र कथयत्येषा जघन्या कथा
    व्याद्यन्यत्र निवेद्यत्यवयवानेषा भवेन्मध्यमा ॥
उत्कृष्टा दशभिर्भवेदवयवै सा जल्पितैरित्यमी
    नैनरेव विलोकिता कृतधिया वादे त्रय सत्पथा ॥५११॥

तत्रेह—"पक्षहेतुवचनात्मक परार्थमनुमानमुपचारात्" इत्यनेन सूत्रेणानन्तरं मध्यमाया कथाया साक्षाद्ग्रहणाज्जघन्योत्कृष्टे अपि सामर्थ्यात्सूचिते । प्रतिपाद्यविशेषमाश्रित्य तत्सद्भावस्यापि प्रमाणोपपन्नत्वात् । प्रयोगपरिपाट्या प्रतिपाद्यानुसारतो जिनपतिमतानुसारिभिरभिमतत्वात् । तदुक्तम्—" अन्यथानुपपत्त्येकलक्षण लिङ्गमिष्यते ॥ प्रयोगपरिपाटी तु प्रतिपाद्यानुसारत ॥ १ ॥" इति । ननु च स्वनिश्चयवत्परनिश्चयोत्पादन परार्थमनुमानमुच्यते । यथोक्त भवद्वृद्धै[2] —" स्वनिश्चयवदन्येषां निश्चयोत्पादन बुधै ॥ परार्थमनुमानमाख्यात वाक्य तदुपचारत ॥ १ ॥ " इति । न च स्वार्थानुमानकाले पक्षादिक्रमोऽयमनुभूयते । गृहीताविनाभावस्य हेतुदर्शनमात्रात्साध्यप्रतीतिसिद्धे ।

1 प्रमा॰ भ॰ । २ प्र॰ न॰ प॰ ३ म॰ २१ । २ सिद्धसेनदिवाकरपाद न्याया॰ १० ।

न खलु प्रतिपत्ता पक्षं कृत्वा ततो हेतुं निभालयति । नापि दृष्टान्तादिक विरचयति । तथा प्रतीतेरभावात् । अपि चान्वयव्यतिरेकाभ्यां साध्यसिद्धौ हेतोरेव सामर्थ्यमवधार्यते न पक्षादीनाम् । तद्व्यतिरेकेणापि साध्यसिद्धेः सम्भवात् । तथापि पक्षादीनां परार्थानुमानवाक्यावयवत्वपरिकल्पनायामनवस्थाप्रसक्तिः । यदि च तेषामपि साध्यसिद्धौ सामर्थ्यं स्यात्तदा पक्षोपन्यासमात्रादेव साध्यावगतेर्हेतुरानर्थक्यमश्नुवीत । उत्तरावयवाश्च । एवं हि तत्सामर्थ्यं सिद्ध्येन्नान्यथा । तस्माद्य एव परनिरपेक्षं साध्यं बोधयति स एव हेतुः परं प्रतिपादयितुमुचितोऽनपेक्षत्वान्न पक्षादय इति । अत्रोच्यते । यदुक्तं न च स्वार्थानुमानकाले पक्षादिक्रमोऽयमनुभूयत इत्यादि । तत्र सर्वस्य प्रमातुस्तथा क्रमानुभवाभावोऽभिधीयते कस्यचिद्वा । आद्यः पक्षोऽसिद्धः । कस्यचित्प्रमातुस्तेनापि क्रमेण साध्यप्रतीतेः सम्भवात् । द्वितीयपक्षस्त्वभ्युपगम्यत एव । नन्वेवं परार्थानुमानवाक्यप्रयोगेऽप्रतिपन्नसङ्केतः कश्चित्कश्चित्पुनस्तद्विपरीतः । तत्राद्यं प्रतिपाद्यमाश्रित्य क्रमेणैव परार्थानुमानमारभ्यते । अन्यथा रचनाया तस्य सम्मोहसम्भवात् । द्वितीयं तु प्रति नास्त्येकान्तः । यथाकथञ्चित्खलु परस्य प्रतिपत्तिरुत्पादनीया । सा च क्रमेण व्युत्क्रमेण च भवतीति तं प्रति द्विधाऽप्यभिधानं साधीय एव । ननु यस्याक्रमेण स्वार्थानुमाने प्रतीतिरुदपादि, तेनाद्यं प्रतिपाद्यं प्रतीत्य यदि क्रमेणैव परार्थानुमानमुपन्यस्यते, तदा स्वनिश्चयवत्परनिश्चयोत्पादनं विरुध्यते । तन्न । निश्चयापेक्षयैव वादिना तुल्यताभिधानात् । न पुनः सर्वथा साम्यमभिमतम् । अन्यथा स्वार्थानुमाने शब्दमप्रयुञ्जानः साध्यं जानीत इति तदप्रयोगेण परनिश्चयोत्पादनमपि स्यात् । न चैतत्सम्भवति । शब्दाप्रयोगे परप्रतिपादनानुपपत्तेः । तदर्थं शब्दप्रयोगस्वीकारे च येन येन विना परप्रतिपादनासम्भवस्तत्तदङ्गीकरणीयम् । न्यायस्य समानत्वात् । यदप्युक्तमन्वयव्यतिरेकाभ्यां साध्यसिद्धौ हेतोरेव सामर्थ्यमवधार्यते न पक्षादीनामिति ।

तदप्यसुन्दरम् । न हि पक्षादिविरहे प्रतिपाद्यविशेष प्रत्याययितु शक्य । पक्षादिवचनसाध्यहेतुगोचरार्थप्रतीतिविकलतया तस्य साकाङ्क्षत्वात् । तथा च बुभुत्सितार्थबोधाभावात्प्रत्यायित एव तिष्ठेत् । सतस्तद्बोधनार्थं पक्षादय प्रयोज्या इति । तेऽपि परार्थानुमानवाक्यावयवा भवन्ति । यच्चाभिहित यदि च तेषामपि साध्यसिद्धौ सामर्थ्य स्यादित्यादि । तदपि परिफल्गु । भवत्पक्षेऽप्यस्य तुल्यत्वात् । तत्रापि धूमोऽत्र दृश्यते, इत्येतावन्मात्रेणैव साध्यसिद्धेर्यत्र धूमस्तत्र वह्निर्यथा महानस इति व्याप्तिप्रतिपादनस्य नैरर्थक्यापत्ते । अथैवमेवैतत् । अत्यन्ततीक्ष्णमतेस्तावदेव प्रतीतिसिद्भावात् । तथा चोक्तम्—"विदुषा वाच्यो हेतुरेव हि केवल " इति । तदपेक्षयापकृष्टप्रज्ञ पुनस्तावता नावबोधयितु शक्यत इति त प्रति सार्थक व्याप्त्युपदर्शनमिति चेत् । तर्हि पक्षादीनपि परित्यज्य प्रतिपाद्यविशेष प्रत्याययितु न शक्यत इति तेषामपि साधकत्व न दुष्टमिति । तस्माद्धेतुवत्पक्षादयोऽपि परार्थानुमाने प्रतिपाद्यविशेष प्रति योज्या । हेतोरपि क्वचित्प्रतिपाद्ये तदपेक्षितया निरपेक्षत्वासिद्धेरिति । तदेतन्निखिल परामृश्याभिहित मन्दमतींस्तु व्युत्पादयितु दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानीति ।

एव च सिद्धमिदम्—

व्युत्पन्नमाश्रित्य पर परार्थं यथोक्तमाख्यात्यनुमानमत्र ॥
तन्नुमाश्रित्य पुनर्नयज्ञास्तद्विचित्ररूप परिकीर्तयन्ति ॥५१२॥४२॥

तत्र दृष्टान्त तावद्व्याचष्टे—

## प्रतिबन्धप्रतिपत्तेरास्पद दृष्टान्त इति ॥ ४३ ॥

प्रतिबन्धो व्याप्तिस्तत्प्रतिपत्ते स्मृतिरूपाया आस्पद स्थान महानसादि दृष्टान्त इति निरुक्तिनिरतयात् ॥ ४३ ॥

अथास्य प्रकारकथनायाह—

## स द्वेधा साधर्म्यतो वैधर्म्यतश्चेति ॥ ४४ ॥

समानो धर्म्मो यस्यासौ सधर्म्मा सधर्मणो भावः साधर्म्यं तस्मात्तत्तः । विसदृशो धर्म्मो यस्य स विधर्म्मा विधर्मणो भावो वैधर्म्यं ततः । चः समुच्चये । साधर्म्यवैधर्म्याभ्यामन्वयव्यतिरेकरूपाभ्यां दृष्टान्तस्य द्वैविध्यमिति भावः ॥ ४४ ॥

तत्राद्यं प्रकारमाह––

## यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता प्रकाश्यते स साधर्म्यदृष्टान्त इति ॥ ४५ ॥

यत्रेत्यभिधेये । साधनधर्मस्य धूमादेः । सत्तायामवश्यं साध्यधर्मस्य वह्न्यादेः सत्ता । प्रकाश्यते वचनेन ख्याप्यते स साधर्म्यदृष्टान्तः । अवश्यग्रहणं चात्र साध्यसाधनयोर्व्याप्यव्यापकभावं सूचयति । व्यापकं हि साध्यं वह्न्यादिकमुच्यते । तस्य साधने धूमादावनायत्तत्वात् । धूमाभावेऽप्यङ्गारावस्थायां वह्नेः सद्भावोपलम्भात् । व्याप्यं पुनः साधनं धूमादिकमभिधीयते । तस्य साध्ये धूमध्वजादावायत्तत्वात् । वह्निसद्भाव एव धूमस्य सद्भावदर्शनात् । तदुक्तम्––" व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव हि ॥" इति । अस्यार्थः––स च व्याप्यसद्भावोऽसश्च व्याप्याभावस्तदतौ तदतयोर्निष्ठाऽवस्थानं सद्भावो यस्य तत्तदतन्निष्ठम् । ततश्च यत्तदतन्निष्ठं वह्न्यादिकं साध्यभूतं वस्तु तद्व्यापकमिति लक्षणीयम् । तथा तस्मिन्व्यापकसद्भावे निष्ठाऽवस्थानं यस्य तत्तन्निष्ठम् । एवकारोऽवधारणे । ततोऽयमर्थः––यत्तन्निष्ठमेव धूमादिकं साधनभूतं वस्तु तद्व्याप्यमिति मन्तव्यम् । अत्रोदाहरणं स्वयमभ्यूह्यम् । तथाहि––अग्निरत्र धूमस्य तथैवोपपत्तेर्महानसवदिति । ॥ ४५ ॥

अथ द्वितीयं प्रकारमाह––

## यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्त इति ॥ ४६ ॥

यत्रेत्यभिधेये। तुशब्द साधर्म्यदृष्टान्ताद्वैधर्म्यदृष्टान्तस्य विशेषद्योतक। साध्याभावे वह्न्यादे साध्यस्यासम्भवे साधनस्य धूमादेरवश्यमभाव प्रदर्श्यते स वैधर्म्यदृष्टान्त इत्युच्यते। अत्र पुनरवश्यग्रहणेन साध्याभाव साधनाभावयोर्व्याप्यव्यापकभाव सूचित । तथा हि । साधनस्य धूमादेरभाव साध्यस्य वह्न्यादेरभावे भावे च भवतीति तत्तन्निष्ठत्वा-व्यापक । साध्यस्य तु वह्न्यादेरभाव साधनस्य धूमादेरभाव एव भवतीति तदेकनिष्ठत्वाद्व्याप्य । अन्वयव्याप्तिस्वरूपापेक्षया व्यतिरेकव्याप्तेर्वि-परीतस्वरूपत्वात्। यदाहुरस्मद्गुरव श्रीमुनिचन्द्रसूरय —" साध्य व्यापकमित्याहु साधन व्याप्यमुच्यते ॥ प्रयोगेऽन्वयवत्येन व्यतिरेके विपर्ययः ॥ १ ॥" इति। उदाहरण पुनरत्रापि स्वयमेव तार्किकैस्तर्कणीयम् । अनग्निरत्राधूमस्यान्यथानुपपत्तेर्जलाशयव-दिति ॥ ४६ ॥

उपनय निरूपयन्नाह—

## हेतोः साध्यधर्मिण्युपसहरणमुपनय इति ॥ ४७ ॥

हेतोर्धूमादे । साध्यधर्मिणि पर्वतप्रदेशादौ । उपसहरण धूमश्चात्रे-त्यादिनोल्लेखेनोपढौकनम्। उपनय उच्यते। उपनीयते साध्यावि-नाभावित्वेन विशिष्टो हेतु साध्यधर्मिण्युपसह्रियते येन स उपनय इति व्युत्पत्ते ॥ ४७ ॥

निगमनं लक्षयति—

## साध्यधर्मस्य पुनर्निगमनमिति ॥ ४८ ॥

अत्र साध्यधर्मिण्युपसहरणमित्यनुवर्तते तत साध्यधर्मस्य धूमध्व-जादे साध्यधर्मिण्युपसहरणम् । पुनर्निगमन तस्मादग्निरत्रेत्यादिनो-ल्लेखेन निगम्यन्ते प्रतिज्ञाहेतूदाहरणोपनया साध्यलक्षणैकार्थनियततया सम्बध्यन्ते तन्निगमनमिति निरुक्ते ॥ ४८ ॥

अथ पक्षवचनादीनां पूर्वाचार्यप्रवर्तिता सञ्ज्ञा कथयन्नाह—

**एते पक्षप्रयोगादयः पंचाऽप्यवयवसंज्ञया कीर्त्यन्त इति ॥ ४९ ॥**

अपिशब्दः पक्षादिशुद्धिपञ्चकोपलक्षणपरः । ततो दशाप्येते वचनविशेषा अवयवसंज्ञया कीर्त्त्यन्ते । परार्थानुमानवाक्यस्यावयविनो भागरूपत्वादिति ।

एवं स्वरूपकलिताः प्रतिपाद्यमेत्य
दृष्टान्तवाक्यभृतयोऽवयवा अपीह ॥
वक्तव्यतामनुसरत्यनुमानकाले
सद्वादिनां जिनपतेः समये स्थितानाम् ॥५१३॥४९॥

तदित्थं स्वार्थपरार्थभेदभिन्नमनुमान सप्रपञ्चमभिधायेदानीं तदुत्पादकं निश्चितान्यथानुपपत्त्येकलक्षणलाक्षितं हेतु प्रकारप्रकाशनद्वारेण विनेय[1]जनमनीषोन्मीलनार्थं प्रपञ्चयन्नाह—

**उक्तलक्षणो हेतुर्द्विप्रकारः, उपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वादिति ॥ ५० ॥**

उपलब्धिश्चोपलम्भोऽनुपलब्धिश्चानुपलम्भ उपलब्ध्यनुपलब्धी ताभ्यां भिद्यमानत्वाद्विशिष्यमाणत्वाद्द्विप्रकारो हेतुरिति ॥ ५१ ॥

सम्प्रति ये मन्यन्ते उपलब्धिर्विधिसाधिकैवानुपलब्धिस्तु प्रतिषेधसाधिकैव "अत्र द्वौ वस्तुसाधनावेकः प्रतिषेधहेतुः" इति वचनात् । तेषामिदमवधारणं विध्वंसयन्नुपलब्धेरनुपलब्धेश्चाविशेषेण विधिप्रतिषेधसाधकत्वमाह—

**उपलब्धिर्विधिप्रतिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्चेति ॥ ५१ ॥**

---

१ विनेयाः शिष्याः ।

अविनाभावनिबन्धनो हि साध्यसाधनयोर्गम्यगमकभावः । यथा चोपलब्धेर्विधौ साध्येऽविनाभावाद्गमकत्वं तथा प्रतिषेधेऽपि । अनुपलब्धेरपि यथा प्रतिषेधेऽविनाभावाद्गमकत्वं तथा विधावपि । एतच्चाग्रे व्यक्तीभविष्यदुदाहरणपरम्परायामिति ॥ ५१ ॥

अथ कौ नाम विधिप्रतिषेधौ, यत्सिद्धिनिबन्धनमुपलब्ध्यनुपलब्धी इत्योरेकतमं विधिं तावत्प्ररूपयन्नाह—

**विधिः सदंश इति ॥ ५२ ॥**

सदसदंशात्मके सर्वस्मिन्वस्तुजाते सदंशो भावांशापरपर्यायो विधिरिति बोद्धव्यः ॥ ५२ ॥

अथ प्रतिषेधलक्षणमाह—

**प्रतिषेधोऽसदंश इति ॥ ५३ ॥**

सदसदात्मक एव वस्तुन्यसदंशो भावांशापरनामा प्रतिषेधः प्रतिपत्तव्यः ॥ ५३ ॥

अस्यैव प्रकारानाह—

**स चतुर्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥ ५४ ॥**

स प्रतिषेधश्चतुर्धा । प्राक् पूर्वमभवनं प्रागभावः । प्रध्वंसश्चासावभावश्च प्रध्वंसाभावः । इतरस्येतरस्मिन्नभाव इतरेतराभावः । अत्यन्तमभवनमत्यन्ताभावः । च समुच्चये । विधेस्तु प्रकाराः स्याद्वाददर्पयत्नैरभिधिरन्तैरपि नैयत्येन न प्रणीता इत्यस्माभिरप्युपेक्षितास्त इति ॥ ५४ ॥

तत्र प्रागभावमाविर्भावयन्नाह—

**यन्निवृत्तावेव कार्यस्य समुत्पत्तिः सोऽस्य प्रागभाव इति ॥ ५५ ॥**

यन्निवृत्तावेव यस्य प्रध्वंस एव सति कार्यस्य समुत्पत्तिः स पदार्थोऽस्य कार्यस्य सम्बन्धी, प्रागभाव इत्यभिधीयते ॥ ५५ ॥

अत्रोदाहरणमाह—

**यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्ड इति ॥ ५६ ॥**

यथेत्युदाहरणोपक्षेपार्थः । मृत्पिण्डस्य मृद्द्रव्यपर्यायविशेषस्य निवृत्तिः प्रध्वंसो मृत्पिण्डनिवृत्तिस्तस्यां सत्यामेव समुत्पद्यमानस्य घटस्य मृत्पिण्ड. प्रागभाव इत्युच्यते । नन्वतिव्याप्तिदोषदुष्टमिदं प्रागभावलक्षणम् । तथा हि यस्य निवृत्तौ सत्यां कार्यस्योत्पत्तिः स पदार्थस्तस्य यदि प्रागभावतयाऽभिप्रेयते तदा क्वचिदन्धकारस्य निवृत्तौ सत्या रूपज्ञानस्योत्पत्तेरन्धकारस्तस्य प्रागभाव. प्राप्नोति इति चेत् । मैवं वादी· । यन्निवृत्तावेवेत्यवधारणस्य सूत्रे करणात् । न खल्वन्धकारनिवृत्तावेव रूपज्ञानस्योत्पत्तिरिति नियम. समस्ति । केषाञ्चिदन्धकारेऽपि रूपज्ञानस्योत्पत्ते. प्रतीयमानत्वात् । ततो नास्य प्रागभावलक्षणस्यातिव्याप्तिदोषदुष्टतेति ।

यस्य भावस्य निवृत्तौ यत्कार्यस्य समुत्पत्तिस्तस्यैव तत्प्रागभावत्वाभिधानमसंगतमिति वादिनां वैशेषिकाणा मतमुपदर्श्य तत्खण्डनम्।

अत्राहुर्वैशेषिकाः । यस्य भावस्य निवृत्तौ यत्कार्यस्य समुत्पत्तिस्तस्यैव तत्प्रागभावत्वाभिधानमशोभनम् । सर्वथा भावविलक्षणत्वेन सर्वस्याभावस्य षट्पदार्थशेषत्वादिति । न ते यथार्थदर्शिनः । सर्वथा भावविलक्षणस्याभावस्य ग्राहकप्रमाणाभावात् । ननु स्वोत्पत्तेः प्रागासीद्घट इति प्रत्ययोऽसद्विषयः, सत्प्रत्ययविलक्षणत्वात् । यस्तु सद्विषय. स न सत्प्रत्ययविलक्षणः । तस्मादसद्विषय इत्यनुमान प्रागभावस्य ग्राहकमस्तीति चेत् । न । प्रागभावादौ नास्ति प्रध्वंसाभावादिरिति प्रत्ययेन व्यभिचारात् । तस्याप्यस-

१ वै. द. अ. ९ आ १ सू. १ ।

द्विषयत्वाददोष इति चेत् । नैवम् । अभावानवस्थाप्रसक्तेः । स्यान्मतम् भावे भूतलादौ नास्ति कुम्भादिरिति प्रत्ययो मुख्योऽभावविषयः । प्रागभावादौ नास्ति प्रध्वंसादिरिति प्रत्ययस्तूपचरिताभावविषयः । ततो नाभावानवस्थेति । तदप्यपेशलम् । परमार्थतः प्रागभावादीनां साङ्कर्यप्रसङ्गात् । न ह्युपचरितेनाभावेन परस्परमभावानां भेदः सिद्ध्यति । सर्वत्र मुख्याभावपरिकल्पनस्य वैयर्थ्यापत्तेः । यदप्युच्यते न भावस्वभावः प्रागभावादिः सर्वदा भावविशेषणत्वादिति । तदपि न सम्यगनुमानम् । हेतोः पक्षाव्यापकत्वात् । न प्रागभावप्रध्वंसादावितरेतराभावविशेषणस्याप्यभावस्य प्रसिद्धेः । गुणादिना व्यभिचाराच्च । तस्य सर्वदा भावस्य विशेषणत्वेऽपि भावस्वभावत्वात् । रूपं पश्यामीत्यादिव्यवहारे गुणस्य स्वतन्त्रस्यापि प्रतीतेर्न सर्वदा भावविशेषणत्वमस्येति चेत् । तद्भावस्तत्त्वमित्यभावस्यापि स्वातन्त्र्यप्रतीतेः सर्वदा भावविशेषणत्वं मासिधत् । सामर्थ्याद्भावविशेष्यस्य द्रव्यादेः सम्प्रत्ययात्सदा भावविशेषणमेवाभाव इति चेत् । तथैव गुणादिरपि सततं भावविशेषणमस्तु । तद्विशेष्यस्य द्रव्यस्य सामर्थ्याद्गम्यमानत्वात् । अपि च प्रागभावः सादिः सान्तः परिकल्प्यते सादिरनन्तो वाऽनादिरनन्तोऽनादिः सान्तो वेति चत्वारः पक्षाः । प्रथमपक्षे प्रागभावात्पूर्वं घटस्योपलब्धिप्रसङ्गः । तद्विरोधिनः प्रागभावस्याभावात् । द्वितीयेऽपि तदुत्पत्तेः पूर्वं घटस्योपलब्धिप्रसङ्गस्तत एव, उत्पन्ने तु प्रागभावे सर्वदा घटस्यानुपलब्धिः स्यात् । तस्यानन्तत्वात् । तृतीये तु सदा घटस्यानुपलब्धिप्रसक्तिः स्पष्टैव । चतुर्थे पुनर्घटोत्पत्तौ प्रागभावस्याभावे घटोपलब्धिवदशेषकार्योपलब्धिः स्यात् । सर्वकार्याणामुत्पत्स्यमानानां प्रागभावस्यैकत्वात् । ननु यावन्ति कार्याणि तावन्तस्तत्प्रागभावाः । तत्रैकस्य प्रागभावस्य विनाशेऽपि शेषोत्पत्स्यमानप्रागभावानामविनाशान्न घटोपलब्धौ सर्वकार्योपलब्धिरिति चेत् । तर्ह्यनन्ताः प्रागभावास्ते किं स्वतन्त्रा भावतन्त्रा वा । स्वतन्त्राश्चेत्, कथं न भावस्वभावाः । कालादिवत् । भावतन्त्रा-

श्चेत्, किमुत्पन्नभावतन्त्रा उत्पत्स्यमानभावतन्त्रा वा । न तावदाद्यो विकल्पः । समुत्पन्नभावकाले तत्प्रागभावविनाशात् । न द्वितीयविकल्पोऽपि श्रेयान् । प्रागभावकाले स्वयमसतामुत्पत्स्यमानभावानां तदाश्रयत्वायोगात् । अन्यथा प्रध्वंसाभावस्यापि प्रध्वस्तपदार्थाश्रयत्वापत्तिः । न चाऽनुत्पन्नः प्रध्वस्तो वाऽर्थः कस्यचिदाश्रयो नाम । अतिप्रसङ्गात् । यदि पुनरेक एव प्रागभावः पटादेरिति तथोत्पन्नपदार्थविशेषणतया तस्य विनाशेऽप्युत्पत्स्यमानार्थविशेषणत्वेनाविनाशान्नित्यत्वमपीति मतम् । तदा प्रागभावादिचतुष्टयकल्पनाऽपि माभूत् । सर्वत्रैकस्याभावस्य विशेषणभेदात्तथा भेदव्यवहारोपपत्तेः । कार्यस्य हि पूर्वेण कालेन विशिष्टोऽर्थः प्रागभावः । परेण विशिष्टः प्रध्वंसाभावः । नानार्थविशिष्टः स इतरेतराभावः । कालत्रयेऽप्यत्यन्तनिःस्वभावभावविशेषणोऽत्यन्ताभावः स्यात् । प्रत्ययभेदस्यापि तथोपपत्तेः । सत्त्वैकत्वेऽपि द्रव्यादिविशेषणभेदात्सत्प्रत्ययभेदवत् । यथैव हि सत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावादेकत्वं सत्ताया इष्टं भवद्भिस्तथैवासत्प्रत्ययाविशेषाद्विशेषलिङ्गाभावादसत्ताया अप्येकत्वमस्तु । अथ प्रागासीदित्यादिप्रत्ययविशेषादसत्ता चतुर्भेदेष्यते । तर्हि प्रागासीत्पश्चाद्भविष्यति सम्प्रत्यस्तीति कालभेदेन, पाटलिपुत्रेऽस्ति चित्रकूटेऽस्तीति देशभेदेन, घटोऽस्ति पटोऽस्तीति द्रव्यभेदेन, रूपमस्ति रसोऽस्तीति गुणभेदेन, प्रसारणमस्ति गमनमस्तीति कर्मभेदेन च, प्रत्ययविशेषसद्भावात्कालसत्तादयः सत्ताभेदाः किं नेष्यन्ते । अथ प्रत्ययविशेषात्तद्विशेषणान्येव भिद्यन्ते तस्य तन्निमित्तकत्वात्, न तु सत्ता । ततः सैकैवेति मतम् । तर्हि तत एवाभावभेदोऽपि माभूत् । सर्वथा विशेषाभावात् । अथाभिधीयते, अभावस्य सर्वथैकत्वे विवक्षितकार्योत्पत्तौ प्रागभावस्याभावे सर्वस्याभावानुषङ्गात्सर्वकार्यमनाद्यनन्तं सर्वात्मकं च स्यात् । तदप्यभिधानमात्रम् । सत्त्वैकत्वेऽपि समानत्वात् । विवक्षितकार्यप्रध्वंसे हि सत्ताया अभावे सर्वत्राभावप्रसङ्गस्तस्याः । तथा च

सकलशून्यता स्यात् । अथ विवक्षितकार्यप्रध्वंसेऽपि न सत्तायाः प्रध्वंसो नित्यत्वात् । अन्यथाऽर्थान्तरेषु सत्प्रत्ययोत्पत्तिर्न स्यात् । तदन्यत्रापि तुल्यम् । समुत्पन्नैककार्यविशेषणतया प्रागभावेऽपि न सर्वथैवाभावः । भावान्तरेष्वभावप्रतीत्यभावप्रसङ्गात् । यथा चाभावस्य नित्यैकरूपत्वे कार्यस्योत्पत्तिर्न स्यात्तस्य तत्प्रतिबन्धकत्वात् । तथा सत्ताया नित्यत्वे कार्यप्रध्वंसो न स्यात्तस्यास्तत्प्रतिबन्धकत्वात् । प्रसिद्धं हि प्रध्वंसप्रागभावप्रतिबन्धकत्वं सत्तायाः । अन्यथा सर्वदा प्रध्वंसप्रसङ्गात्कार्यस्य स्थितिरेव न स्यात् । यदि पुनर्बलवत्प्रध्वंसकारणोपनिपाते सति कार्यस्य सत्ता प्रध्वंसं न प्रतिबध्नाति । ततः पूर्वं बलवद्विनाशकारणोपनिपाताभावात्तं प्रतिबध्नात्येव । अतो न प्रागपि प्रध्वंसप्रसङ्ग इति मतम् । तदितरत्राप्यविशिष्टम् । अभावोऽपि हि बलवदुत्पादककारणोपनिपाते सति कार्यस्योत्पादं सन्नपि न प्रतिरुणद्धि । कार्योत्पादात्पूर्वं पुनर्बलवदुत्पादककारणाभावाच्च प्रतिरुणद्ध्येव । अतो न प्रागपि कार्योत्पत्तिप्रसङ्गः । येन कार्यस्यानादित्वानुषङ्गः स्यात् । किं च तुच्छस्वभावत्वे प्रागभावस्य सर्वत्र खरविषाणादीनां सहोत्पत्तिनियमवत्तामुपादानसङ्करप्रसङ्गः । प्रागभावाविशेषात् । यत्र यदा यस्य प्रागभावस्तत्र तदा तस्योत्पत्तिरित्यप्यसङ्गतम् । तस्यैवानियमात् । स्वोपादानेतरनियमाच्चनियमेऽप्यन्योन्याश्रयः । ततः न तुच्छस्वभावः कश्चित्प्रागभावो नाम समस्ति ॥

भावस्वभावस्य प्रागभावस्य सिद्धिर्नयप्रमाणात् ।

अथ भावस्वभावस्याप्यस्य कुतः प्रसिद्धिरिति चेत् । नयप्रमाणादिति ब्रूमः । ऋजुसूत्रनयार्पणाद्धि प्रागभावस्तावत्कार्यस्योपादानपरिणाम एव पूर्वोऽनन्तरात्मा । न चैवं तस्यानादित्वविरोधः । प्रागभावतत्प्रागभावादेः प्रागभावसन्तानस्यानादित्वोपगमात् । न चात्र सन्तानिभ्यस्तत्त्वान्यत्वपक्षयोः सन्तानो दूषणार्हः । पूर्वपूर्वप्रागभावात्मकभावलक्षणानामेवापरामृष्टभेदानां सन्तानत्वाभिप्रायात् । सन्ता-

निक्षणापेक्षया तु प्रागभावस्यानादित्वाभावेऽपि न दोषः। ऋजुसूत्रनयस्य तथेष्टत्वात्। तथा—अस्मिन्पक्षे पूर्वपर्यायाः सर्वेऽप्यनादिसन्ततितया घटस्य प्रागभाव इति वचनेऽपि न प्रागनन्तरपर्यायनिवृत्ताविव तत्पूर्वपर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गः। येन तस्यादित्वे पूर्वपर्यायनिवृत्तिसन्ततेरप्यनादित्वदोषापत्तिः। घटात्पूर्वक्षणानामशेषाणामपि तत्प्रागभावरूपाणामभावे घटोत्पत्त्यभ्युपगमात्। प्रागनन्तरक्षणानिवृत्तौ तदन्यतमक्षणनिवृत्ताविव सकलतत्प्रागभावनिवृत्त्यसिद्धेर्घटोत्पत्तिप्रसङ्गासम्भवात्। व्यवहारनयार्पणात्तु मृदादिद्रव्यं घटादेः प्रागभावः। न चैवं द्रव्यस्याभावासम्भवात्प्रागभावाभावस्वभावता घटस्य दुर्घटा। कार्यरहितस्य पूर्वकालविशिष्टस्य मृदादिद्रव्यस्य घटादिप्रागभावरूपतोपगमात्। तस्य च कार्योत्पत्तौ विनाशसिद्धेः। कार्यरहिततया विनाशमन्तरेण कार्यसहिततयोत्पत्त्ययोगात्। कार्योत्पत्तेरेवोपादानात्मकप्रागभावक्षयस्वभावतया प्रतीयमानत्वात्। तथा प्रमाणार्पणाद्द्रव्यपर्यायात्मा प्रागभावः। स च स्यादनादिः स्यात्सादिः। अत्राह कश्चित्—द्रव्यरूपतया तावदनादित्वे प्रागभावस्यानन्तत्वप्रसक्तेः सर्वदा कार्यानुत्पत्तिः स्यात्। पर्यायरूपतया च सादित्वे प्रागभावात्पूर्वमप्युत्पत्तिः पश्चादिव कथं कार्यस्य विनिवार्येतेति। नायं वैर्यवाग्। अनादेरप्यनन्तत्वैकान्तत्वासम्भवात्। द्रव्यजीवसंसारस्यानादित्वेऽपि सान्तत्वप्रसिद्धेः। अन्यथा कस्यचिन्मुक्त्ययोगात्। नापि सान्तस्य सादित्वैकान्तः। कस्यचित्संसारस्य सान्तत्वेऽप्यनादित्वप्रसिद्धेः। पर्यायरूपतया सादित्वं प्रागभावस्यैकव्यक्त्यपेक्षयैव। व्यक्तिप्रवाहापेक्षया पुनस्तस्य द्रव्यरूपतयेव पर्यायरूपतयाऽप्यनादित्वमेव। तस्मान्न सर्वदा कार्यस्यानुत्पत्तिः पूर्वमप्युत्पत्तिर्वा प्रसञ्जयितुं युक्ता। ततो भावस्वभाव एव प्रागभावः। स चैकानेकस्वभावो भावान्तरवदेवेति न तदेकत्वानेकत्वैकान्तपक्षभावी दोषोऽवकाशं लभते। न च भावस्वभावे प्रागभावेऽभ्युपगम्यमाने

1 शोभनभाषी।

त्मकत्वात् । प्रागभावप्रध्वंसयोरुपादानोपादेयरूपतोपगमात् । प्रागभावोपमर्द्देन प्रध्वंसस्यात्मलाभात् । कथमभावयोरुपादानोपादेयभाव इति चेत् । भावयोः कथम् । यद्भाव एव यस्यात्मलाभस्तत्तस्योपादानमितरदुपादेयमिति चेत् । तर्हि प्रागभावे कारणात्मनि पूर्वक्षणवर्त्तिनि सति प्रध्वंसस्य कार्यात्मनः स्वरूपलाभोपपत्तेस्तयोरप्युपादानोपादेयभावोऽस्तु तुच्छयोरेवाभावयोरुपादानोपादेयभावविरोधात् । तथाव्यवहारनयादेशान्मृदादिस्वद्रव्यं घटोत्तरकालवर्त्ति घटप्रध्वंसः । स चानन्त. समवतिष्ठते । तेन घटात्पूर्वकालवर्त्ति घटाकारविशिष्टं च वर्त्तमानं मृदादिद्रव्यं घटप्रध्वंसो न भवति । घटोत्तरकालवर्तीति विशेषणात् । नन्वेवं घटोत्तरकालवर्त्ति सन्तानान्तरमृदादिद्रव्यमपि विवक्षितघटस्य प्रध्वंसः स्यादिति चेत् । न स्वग्रहणात् । प्रमाणार्पणाद्द्रव्यपर्यायात्मा प्रध्वंस. । तथा हि कपालपालिलक्षणपर्यायपरिकलितं मृद्द्रव्यं घटपर्यायाविष्टमृद्द्रव्यस्य प्रध्वंस इति प्रामाणिकी प्रतीतिः सर्वैरप्यनुभूयमाना नापह्नोतुं शक्यते । तदित्थं नयार्पणात्प्रमाणार्पणाच्च भावस्वभाव एव प्रध्वंसाभावोऽपि प्रसिद्धिसौधमधितिष्ठति । तुच्छस्वभावत्वे तु प्रध्वसस्य मुद्गरादिव्यापारवैयर्थ्यं स्यात् । मुद्गरादिव्यापारेण ह्येवंविधस्वभावोऽसौ कुम्भादेर्भिन्नः क्रियेताभिन्नो वा । तत्राद्यविकल्पे कुम्भादेस्तदवस्थत्वप्रसङ्गाद्विनष्ट इति प्रत्ययस्तत्र न स्यात् । विनाशसम्बन्धाद्विनष्ट इति प्रत्ययोत्पत्तौ तु विनाशतद्वतोः सम्बन्धः कश्चिदभिधानीयः । स ह्यविष्वग्भावः कार्यकारणभावः संयोगः समवायो विशेषणविशेष्यभावो वा तयोर्भवेत् । न तावदविष्वग्भावः । विनाशतद्वतोर्भेदाङ्गीकारात् । नापि कार्यकारणभावः कुम्भादेर्विनाशं प्रत्यकारणत्वात् । मुद्गरादिनिमित्तकत्वाद्विनाशस्य । कुम्भादिमुद्गरादिलक्षणोभयनिमित्तकत्वादस्यायमदोष इति चेत् । तदप्ययुक्तम् । मुद्गरादिरिव विनाशोत्तरकालं कुम्भादेरप्युपलम्भप्रसक्तेः । कुम्भादेः स्वविनाशं प्रत्युपादानकारणत्वान्न तत्काले उपलम्भप्रसक्तिरित्यशोभनम् ।

अभावस्य भावान्तरस्वभावताप्रसङ्गात् । न प्रत्येनाप्योपादानकारणत्व प्रसिद्धे । सयोगसमवायावप्यत्र न सम्भवत । तयोर्भावैकनिष्ठत्वेनाभ्युपगमात् । विशेषणविशेष्यभाव सम्बन्ध इत्यप्यसम्बद्धम् । सम्बन्धान्तरेण सम्बद्धयोरेव दण्डपुरुषादिवत्सम्भवात । न च विनाशतद्वतो सम्बन्धान्तरेण सम्बद्धत्वमस्तीत्यधुनैवाभिहितम् । अथ भावेऽप्येवाय नियमो भवत्सम्बन्धान्तरवशादेव विशेषणविशेष्यभाव इति । नैतत्व्याय्यम् । एवविधावधारणनिबन्धनप्रमाणानुपदर्शनात् । तत्र मुद्गरादिव्यापारेण कुम्भादेर्भिन्नो विनाश क्रियते । अभिन्नविनाशकरणे पुन कुम्भादिरेव मुद्गरादिव्यापारेण क्रियत इति प्राप्तम् । तच्चानुपपन्नम् । तस्य स्वसामग्रीत प्रागेवोत्पन्नत्वात् । यच्च कपालपाले सकाशाद्विनाशस्यार्थान्तरत्व निमित्तकारणप्रभवतया कथ्यते । तथा हि घटविनाशो बलवत्पुरुषप्रेरितमुद्गराद्यभिघातादवयवक्रियोत्पत्तेरवयवविभागतोऽवयवसयोगविनाशादेवोत्पद्यते । कपालपालिस्तु स्वारम्भकावयवादिभ्य एव प्रादुर्भवतीति । तदपि प्रमाणपराङ्मुखम् । अस्य विनाशोपादानकारणविनियोद्धोषणस्यात्यन्तप्रातीतिकत्वात् । केवल मन्यमतारितेन त्वया पर प्रतार्यते । तस्मादन्धपरम्पराप्रवादपरित्यागेन बलवत्पुरुषप्रेरितमुद्गरादिव्यापारात्कुम्भनाशविकलकपालाकारमृद्द्रव्यस्यैवोत्पत्ति स्वीकर्तव्या । अल प्रतीत्यपलापेन । एव च न सर्वथा भावनिरूपण कश्चित्प्रध्वस । नापि सर्वथा प्रध्वसस्याभाव इति सिद्ध भवति ।

ततश्च यदुक्त ज्ञानश्रीमित्रेण—" दृष्टस्तावदय घटोऽत्र च पत दृष्टस्तथा मुद्गरो । दृष्टा कर्परसहति-

दृष्टस्तावदित्यादिज्ञानश्रीमित्रकारिकाया विचार ।

परमतो नाशो न दृष्टोऽपर ॥ तेनाभाव इति श्रुति क निहिता किं वाऽत्र तत्कारण स्वाधीना परिगम्य केवलमिय दृष्टा कपालावलि ॥ १ ॥" इति

१ 'तत् स्त' इति प भ पुस्तकयो पाठ ।

स्वकीयवृत्तं व्याख्यानयता सुनिपुणं निरूपयन्तोऽपि मांसचक्षुषो वयं तावन्नापरमत्र वस्तुजातमीक्षामहे यदभावश्रुत्या विषयीक्रियेत । तद्दर्शनाभावाच्च तत्कारणमपि किमवधारयामः । यश्च तत्कारणं कल्पितो दण्डस्तस्याप्यन्वयव्यतिरेकानुविधायिनी कपालपंक्तिरेव दृष्टा नान्यत्किञ्चित् । वैधर्म्यदृष्टान्ततयेयमुपन्यस्ता पुनः । यथेयमध्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकावनुविदधती दृश्यतया दण्डस्य कार्यमवस्थाप्यते तथा यदि नाशाख्यमपि वस्तु दृश्यं स्यादनात्मरूपविवेकेन तस्यापि तदा न तरस्विदण्डकार्यता वार्येत । न चैवम् । तस्मात्कल्पनैवेयमिति । तत्र यद्येकान्ततुच्छस्वभावध्वंसनिरसनम् । तदा तेनास्माकं सहायकमेवाचरितम् । अथ सर्वथा प्रध्वंसनिरसनायासस्तस्य स न साधीयान् । परिघादिव्यापारप्रसूतायाः कपालावलेरेव घटप्रध्वंसात्मकतया निर्विघ्नं प्रत्यक्षे प्रतीयमानत्वात् । ततः सुव्यवस्थितमिदं लक्षणं यदुत्पत्तौ कार्यस्यावश्यं विपत्तिः सोऽस्य प्रध्वंसाभाव इति ॥ ५८ ॥

अथेतरेतराभावलक्षणमाह—

**स्वरूपान्तरात्स्वरूपव्यावृत्तिरितरेतराभाव इति ॥ ५९ ॥**

स्वरूपान्तरात्स्वभावान्तरात्स्वरूपव्यावृत्तिः स्वस्वभावव्यवच्छेद इतरेतराभावोऽन्यापोहापरनामक उच्यते । स्वरूपान्तरादिति वचनान्न स्वस्वरूपाद्व्यावृत्तिरितरेतराभावः । तस्यातत्स्वभावत्वप्रसङ्गात् । ननु तथापि कार्यद्रव्यात्पूर्वोत्तरपरिणामयोः प्रागभावप्रध्वंसाभावनाम्नोरेवेतरेतराभावताऽस्तु । स्वरूपान्तरात्स्वरूपव्यावृत्तेस्तयोः सद्भावात् । न पुनस्तदतिरिक्तः कश्चिदितरेतराभावोऽस्तीति चेत् । नैवम् । तयोरितरेतराभावलक्षणतो विभिन्नलक्षणाक्रान्तत्वात् । यदभावे हि नियमतः कार्यस्योत्पत्तिः स प्रागभावः । यद्भावे च कार्यस्य नियता

विपत्तिः स प्रसङ्गः । न चेतरेतराभावस्याभावे भावे च कार्यस्योत्पत्ति-विपत्ती स्तः । जलस्याभावेऽप्यनलस्यानुत्पत्तेः । क्वचिज्जलभावेऽपि चानलस्याविपत्तेः । ततः प्रागभावप्रध्वंसाभावयोर्विभिन्नलक्षणोपेतत्वा-न्नेतरेतराभावत्वं वक्तुं युक्तम् । नाप्यत्यन्ताभावस्य । तस्यापि काल-त्रितयापेक्षयेतरेतराभावाद्विभिन्नलक्षणत्वेन वक्ष्यमाणत्वात् ॥५९॥

उदाहरणमाह—

## यथा स्तम्भस्वभावात्कुम्भस्वभावव्यावृत्तिरिति ॥ ६० ॥

स्पष्टम् ।

भावस्य सर्वथा पृथग्भूतस्येतरेतराभावस्य खण्डनम् ।

ननु येयं स्वरूपान्तरात्स्वरूपव्यावृत्तिरितरेतराभावत्वेन भवद्भिरभिधीयते सा भावेभ्यः किं भिन्ना भवेदभिन्ना वेति । कथञ्चिद्विष्वग्भूतेति ब्रूमः । परपरिकल्पितायाः पदार्थेभ्यः सर्वथा विष्वग्भूताया व्यावृत्तेरवस्तुरूपायाः स्वप्नेऽप्यप्रतीयमानत्वात् । तथा हि स्वकारण-कलापात्स्वस्वभावव्यवस्थितत्वेन व्यावृत्तमूर्तयो भावाः समुत्पन्ना नामान्तरेण मिश्रयन्ति । तस्यापरत्वप्रसङ्गात् । न चान्यस्मात्व्या-वृत्तस्वरूपाणां भावानामभावाद्यो भिन्नः सम्भवति । भावे वा तस्यापि परस्परत्वात्, भावान्तरतोऽपि व्यावर्तितत्वमित्यपराभावपरिकल्पनयाऽन-वस्थानात्, न पुनश्चिद्भावव्यावर्तितत्वमिति येकस्वभावनियमो भवेत् । पर-भावाभावात्र व्यावर्तमानस्याप्यस्य परस्परताप्रसङ्गः । यदि चेतरेतराभा-वसंज्ञादृष्ट पदार्थेभ्यो व्यावर्तते तर्हीतरेतराभावो भावाद्भावान्तराच्च प्रागभावादेश्च स्वतो व्यावर्तेताऽन्यतो वा । स्वतश्चेत्, तर्हि घटोऽप्य-न्येभ्यः किं न व्यावर्तेत । अन्यतश्चेत्, किमसाधारणधर्मादितरेतराभा-वान्तराद्वा । असाधारणधर्मादित्यभ्युपगमे स एव घटादिष्वपि युक्तः । इतरेतराभावान्तराच्चेत्, तर्हि बहुत्वमितरेतराभावस्यानवस्थाकारि स्यात् ।

किं चेतरेतराभावोऽप्यसाधारणधर्मेण व्यावृत्तस्याव्यावृत्तस्य वा भेदको भवेत् । यद्यव्यावृत्तस्य, कि नैकव्यक्तेर्भेदकोऽसौ । अथ व्यावृत्तस्य, तर्हि घटादिष्वपि स एवास्तु पटादिभ्यो भेदकः । किमितरेतराभावकल्पनया । अपि चानेन घटे पट. प्रतिषिध्यते पटत्वसामान्यमुभयं वा । प्रथमपक्षे किं पटविशिष्टे घटे पटः प्रतिषिध्यते पटविविक्ते वा । न तावदाद्यः पक्षः । प्रत्यक्षविरोधात् । नापि द्वितीयः । तथा हि किमितरेतराभावादन्या घटस्य पटविविक्तता स एव वा विविक्तताशब्दाभिधेयः । भेदे तथैव घटे पटाभावव्यवहारासिद्धेः किमितरेतराभावेन । अथ स एव तच्छब्दाभिधेय' । तर्हि यस्मादभावात्पटविविक्ते घटे पटाभावव्यवहारः सोऽन्यो विविक्तताशब्दाभिधेयश्चान्य इत्येकस्मिन्वस्तुनीतरेतराभावद्वयप्रसङ्गः । तन्न घटे पटप्रतिषेधो युक्तः । नापि पटत्वसामान्यप्रतिषेधः । तस्याऽप्येकत्वसम्बन्धाभावादेव प्रतिषेधानुपपत्तेः । नाप्युभयप्रतिषेधः । प्रागुक्ताशेषदोषानुषङ्गात् । अपि चेतरेतराभावप्रतिपत्तिपूर्विका घटप्रतिपत्तिः, घटप्रतिपत्तिपूर्विका वेतरेतराभावप्रतिपत्तिः । आद्यपक्षेऽन्योन्याश्रयत्वम् । तथा हीतरेतराभावो घटसम्बन्धित्वेनोपलभ्यमानो घटस्य विशेषणं न पदार्थान्तरसम्बन्धित्वेन । अन्यथा सर्वं सर्वस्य विशेषणं स्यात् । घटसम्बन्धित्वप्रतिपत्तिश्च घटग्रहणे सत्युपपद्यते । सोऽपि व्यावृत्त एव पटादिभ्यः प्रतिपत्तव्यः । ततो यावत्पूर्वं घटसम्बन्धित्वेन व्यावृत्तेरुपलम्भो न स्यान्न तावद्व्यावृत्तिविशिष्टतया घटः प्रत्येतुं शक्यो यावच्च न पटादिव्यावृत्तत्वेन प्रतिपन्नो न तावत्स्वसम्बन्धित्वेन व्यावृत्ति विशेषयतीति । द्वितीयपक्षे त्वभावो विशेष्यो घटो विशेषणं तद्ग्रहणं च पूर्वमन्वेषणीयम् । "**नागृहीतविशेषणा विशेष्ये बुद्धिः**" इत्यभिधानात् । तत्रापि घटो गृह्यमाणः पटादिभ्यो व्यावृत्तो गृह्येताव्यावृत्तो वा । न तावत्पटादिभ्योऽव्यावृत्तस्य घटस्य घटरूपता घटते । अन्यथा पटादेरपि तथैव घटादिरूपताप्रसङ्गादभावकल्पनावैयर्थ्यम् । तथा

तेभ्यो व्यावृत्तस्य घटरूपताप्रतिपत्तिः प्रार्थ्यते तत्रापि किं कतिपयपटादिव्यक्तिभ्योऽसौ व्यावर्त्तते सकलपटादिव्यक्तिभ्यो वा । प्रथमपक्षे कुतश्चिदेवासौ व्यावर्त्तते सकलपटादिव्यक्तिभ्यः । निखिलपटादिव्यक्तिभ्योऽस्य व्यावृत्तिः पुनरसिद्धा । तासामानन्त्येन ग्रहणासम्भवात् । इतरेतराश्रयत्वं च । तथा हि यावत्पटादिभ्यो व्यावृत्तस्य घटस्य घटरूपता न स्यात् तावद्घटात्पटादयो व्यावर्त्तन्ते यावच्च घटाद्व्यावृत्तानां पटादीनां पटादिरूपता न स्यात् तावत्पटादिभ्यो घटो व्यावर्त्तत इति । अस्तु वा यथा कथञ्चित्पटादिभ्यो घटस्य व्यावृत्तिर्घटान्तरात्तु कथमसौ व्यावर्त्तेत इति सम्प्रधारणीयं विचक्षणैः । किं घटरूपतयाऽन्यथा वा । यदि घटरूपतया, तर्हि सकलघटव्यक्तिभ्यो व्यावर्त्तमानो घटो घटरूपतामादाय व्यावर्त्तेत इत्यायातमघटत्वमन्यासां घटव्यक्तीनाम् । अथाघटरूपतया, तत्किमघटरूपता पटादिवद्घटेऽप्यस्ति । तथा चेत्, तर्हि यो व्यावर्त्तते घटान्तरादघटत्वेन घटस्तस्याघटत्वं स्यात् । तच्च विप्रतिषिद्धम् । यद्यघटो घटः कथं, घटश्चेत्तर्ह्यघटः कथमिति । तदित्थमर्थेभ्यः सर्वथा पृथग्भूतस्य परकल्पितस्यावस्तुरूपस्येतरेतराभावस्य विचार्यमाणस्यानुपपत्तेरुपपन्नमिदमितरेतराभावलक्षणं स्वरूपान्तरात्स्वरूपव्यावृत्तिरितरेतराभाव इति ॥ ६० ॥

अथात्यन्ताभावलक्षणमाह—

## कालत्रयापेक्षिणी हि तादात्म्यपरिणामनिवृत्तिरत्यन्ताभाव इति ॥ ६१ ॥

अतीतानागतवर्त्तमानलक्षणं कालत्रयमपेक्षते इत्येवं शीला कालत्रयापेक्षिणी । तादात्म्यपरिणामनिवृत्तिरेकत्वपरिणतिव्यावृत्तिरत्यन्ताभाव इत्यभिधीयते ॥ ६१ ॥

उदाहरणमाह—

## यथा चेतनाचेतनयोरिति ॥ ६२ ॥

न खलु चेतनमात्मतत्त्वमचेतनं पुद्गलाद्यात्मकतामगमद्भविष्यति गच्छति वा । चेतनत्वविरोधात् । नाप्यचेतनं पुद्गलादितत्त्वं चेतनजीवस्वरूपतायामयासीद्यास्यति याति वा । अचेतनत्वविरोधात् । तदित्थं चेतनाचेतनयोः कालत्रयापेक्षिण्यास्तादात्म्यपरिणामनिवृत्तेः सम्भवात्सिद्धोऽत्यन्ताभाव इति । नन्वेवमतिव्याप्तिरत्यन्ताभावलक्षणे दुष्परिहारा । घटपटयोरपि तादात्म्यपरिणामनिवृत्तिरूपयोरत्यन्ताभावत्वप्रसक्तेः । न खलु घटः पटात्मकता कदाचिदास्कन्दति घटत्वविरोधात् । नापि पटो घटात्मकता स्वीकुरुते पटत्वविरोधादिति चेत् । तदेतत्तरलमतिविलसितम् । कालत्रयापेक्षणीति विशेषणस्य तादात्म्यपरिणामनिवृत्तेः सूत्रे करणात् । घटपटयोश्च यद्यपीतरेतराभावमाहात्म्यात्तादात्म्यपरिणामनिवृत्तिरस्ति तथापि न सा सर्वकालम् । कदाचित्पटस्यापि घटत्वपरिणामसम्भवात् । तथापरिणामकारणसाकल्ये तदविरोधात् । पुद्गलपरिणामानियमदर्शनात् । न चैव चेतनाचेतनयोः कदाचित्तादात्म्यपरिणामः, तत्त्वविरोधात् । तदेवमतिव्याप्तेरसम्भवात्सूक्तमिदं लक्षणं कालत्रयापेक्षणी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभाव इति ॥

प्रागभावाद्यभावचतुष्टयापलापिनश्चार्वाकस्य कापिलसांख्यानां च खण्डनम् ।

तदमुना प्रवन्धेन प्रागभावप्रध्वंसाभावेतरेतराभावात्यन्ताभावाना प्रमाणतः प्रसिद्धस्वरूपत्वाद्यदेतच्चार्वाकेणोद्यते[1]- " न चैकोऽप्यभावः क्षित्यादिविवर्त्तघटादिव्यतिरेकेण प्रत्यक्षतः प्रतिभासते, केवलं गतानुगतिकतया लोकः पृथिव्यादिभूतचतुष्टयविषयमेव प्रागभावादिविकल्पमात्रवशात्प्रागभावादिव्यवहारं प्रवर्त्तयति" इति तदपहस्तित भवति । प्रागभावापलापे हि कार्यद्रव्यं घटादिकमनादि स्यात् । प्रध्वंसाभावनिह्नवे तदनन्तं भवेत् । न चानाद्यनन्तं घटादिकं कार्यद्रव्यं प्रागभावाद्यपह्नववादिनाऽभ्युपगन्तुं शक्यते ।

१ ' उच्यते ' इति भ. पुस्तके पाठः ।

स्वमतविरोधात् । लोकायतिकत्वहानिप्रसङ्गात् । तस्य व्यवहारदुर्णयमतावलम्बित्वेन लोकयात्रार्थं कियत्कालस्थायिघटादिपदार्थकदम्बकवादित्वात् । इतरेतराभावतिरस्कारे तु नास्तिकस्याभिमतं पृथिव्यादितत्त्वं सर्वात्मकं सम्पद्येत । अनभिमतात्मनाऽपि भावात् । ततश्च पृथिव्यादीनां परस्परस्वरूपसाङ्कर्यापत्त्या भूतचतुष्टयव्यवस्थापनं दुरुपपादं तस्य स्यात् । अत्यन्ताभावव्यतिक्रमे पुनः पराभिमतचैतन्यतत्त्वात्मनाऽपि पृथिव्यादितत्त्वस्य कदाचित्सद्भावः स्यादिति महदनिष्टं चार्वाकस्यापद्येतेति । कपिलमतानुसारिणामपि प्रागभावानभ्युपगमे तावत्कुम्भादेरनादित्वप्रसङ्गात्कुलालादिव्यापारानर्थक्यं स्यात् । न हि तद्व्यापारमन्तरेण जातुचित्कुम्भादिकमुपलभ्यते । न च कुम्भाद्यभिव्यक्त्यर्थं कुम्भकारादिव्यापार इति वाच्यम् । अभिव्यक्तेरपि प्रागभावाभावे तद्व्यापारानर्थक्यस्य तादवस्थ्यात् । प्रतिक्षिप्स्यतेऽत्राभिव्यक्तिरग्रे प्रबन्धेनेति कृतं विस्तरेण । एवं प्रध्वंसाभावाद्यनभ्युपगमे सांख्यानां कार्यद्रव्यानन्तत्वापत्त्यादिकं प्राचीनमत्र दूषणमुद्घोषणीयम् ।

एवं च—

उपलब्ध्यादिको हेतुर्गोचरीकुरुतेऽत्र यम् ।
प्रतिषेधश्चतुर्धाऽसौ प्रसिद्धिपरमार्थयोः ॥ ५१४ ॥ ६२ ॥

अथोपलब्धेः प्रकारप्रकाशनायाह—

**उपलब्धेरपि द्वैविध्यमविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्चेति ॥ ६३ ॥**

अविरुद्धोपलब्धिः साध्येनाविरुद्धस्योपलम्भः । विरुद्धोपलब्धिः साध्येन विरुद्धस्योपलम्भ इति ॥ ६३ ॥

अविरुद्धोपलब्धेर्विधौ साध्ये भेदानाह—

**तत्राविरुद्धोपलब्धिर्विधेः सिद्धौ षोढेति ॥ ६४ ॥**

तत्रेति निर्धारणे । तयोर्विरुद्धाविरुद्धोपलब्ध्योर्मध्ये येयमविरुद्धोपलब्धिः सा विधिसिद्धौ विधिज्ञप्तौ षोढा षट्प्रकारा भवति ॥ ६४ ॥

प्रकारानेवाह—

**साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरितीति ॥ ६५ ॥**

साध्येन परिणतिमत्त्वादिना वक्ष्यमाणेन साध्यधर्मेण सहाविरुद्धानां विरोधमनागतानाम् । व्याप्यं च कार्यं च कारणं च पूर्वचरं चोत्तरचरं च सहचरं च व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणि प्रयत्नानन्तरीयकत्वादीनि वक्ष्यमाणानि लिङ्गभूतानि वस्तूनि तेषामुपलब्धिः । इतिशब्दः प्रकारपरिसमाप्त्यर्थः । ततश्च व्याप्याविरुद्धोपलब्धिः, कार्याविरुद्धोपलब्धिः, कारणाविरुद्धोपलब्धिः, पूर्वचराविरुद्धोपलब्धिः, उत्तरचराविरुद्धोपलब्धिः, सहचराविरुद्धोपलब्धिश्चेत्यविरुद्धोपलब्धिर्विधिसिद्धौ षट्प्रकारा विज्ञेया । अत्राह **ताथागतः**—ननु कारणस्य कार्याविनाभावाभावान्न साधनत्वं "**नाऽवश्यं कारणानि कार्यवन्ति भवन्ति**" इति वचनात् । तथा हि न कारणमात्रस्य हेतुत्वं युक्तम् । विनाशप्रतिबन्धादिना तस्य व्यभिचारात् । कारणविशेषश्च न कश्चिद्विपश्चिताऽपि निश्चेतुं शक्यः । अकाण्डाडम्बरं प्रचण्डानामपि तडित्वतामकृत्वैव वर्षमुपरमोपलम्भात् । यदि पुनरन्त्यदशावार्त्ति कारणं लिङ्गत्वेनाङ्गीक्रियते तदा व्याप्तिस्मरणावसर एव कार्यं प्रत्यक्षं भवेदिति व्यर्थमनुमानं तत्र स्यात् । ननु **सौगतै**रपि कारणात्कार्यानुमानमभ्युपगतमेव "**हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते**" इति वदद्भिरिति चेत् । तत्र उत्पद्यतेऽस्मादित्युत्पादो हि योग्यताऽभिधीयते सा चात्रानुमेया । अत एव तस्या वस्तुनः सकाशादनन्यत्वात्स्वभावानुमानमिदमिष्यते "**अर्थान्तरानपेक्षत्वात्स स्वभावोऽनुवर्णितः**" इति वचनादिति ॥ ६५ ॥

तदिदमविकलमपर्यालोचिताभिधानं सौगतस्येत्युपदर्शयन्नाह —

**तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यानुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र शक्तेरप्रतिस्खलनमपरकारणसाकल्यं चेति ॥ ६६ ॥**

शक्तेरप्रतिस्खलनमिति कार्यजननसामर्थ्यस्याप्रतिबन्धः । अपरकारणसाकल्यमिति विवक्षितकारणादितरसहकारिभूतहेतुकदम्बकसामस्त्यम् । अयमत्राशयः —आस्वाद्यमानात्सहकारादिफलरसात्काय-लिङ्गाद्यज्जनिका सामग्र्यनुमीयते । ततस्तस्याः कारणलिङ्गरूपायाः सकाशाद्रूपलक्षणस्य कार्यस्यानुमानमुपजायते । प्राक्तनो हि रूपक्षणः सजातीयं रूपलक्षणान्तरलक्षणं कार्यं करोतीत्येवं रूपानुमानमिच्छद्भिरिष्टमेव किञ्चित्कारणं लिङ्गतया । प्राक्तनस्य रूपक्षणस्य सजातीयरूपलक्षणान्तराव्यभिचारात् । अन्यथा रससमानकालभाविनो रूपस्य प्रतिपत्त्यनुपपत्तेः । न ह्यनुकूलमात्रमन्त्यक्षणप्राप्तं वा कारणं लिङ्गमस्माभिरिष्यते । येन मणिमन्त्रादिना सामर्थ्यप्रतिबन्धात्कारणान्तरवैकल्येन वा कार्यव्यभिचारित्वं द्वितीयपक्षे कार्यप्रत्यक्षीकरणेनानुमानानर्थक्यं वा भवेत् । पर्याप्तिकायाविनाभाविनया निश्चितस्य विशिष्टस्य कारणलिङ्गिनो मेघादेरेव लिङ्गत्वेनाङ्गीकरणात् । यत्र हि सामर्थ्याप्रतिबन्धः कारणान्तरावैकल्यं च निर्धार्यते तस्यैव लिङ्गत्वं नान्यस्य । अन्यथा तृप्त्यर्थं भोजनादावप्यप्रवृत्तेः सकलव्यवहारोच्छेदः स्यात् ।

ननु कार्यकारणमपि व्याप्तिसद्भावाद्धेतुरेव । तदुक्तम्—

" समर्थं कारणं तेन नान्त्यक्षणगतं मतम् ॥

कार्यकारणयोरुभयत्र दोषस्य समत्वात् । तद्बाधं येन वैयर्थ्यमनुमानस्य गद्यते ॥१॥

न चाऽनुकूलतामात्रं कारणस्य विशिष्टता ॥

येनाऽस्य प्रतिबन्धादिसम्भवाद्व्यभिचारिता ॥ २ ॥ वैकल्यप्रतिबन्धाभ्यामनासाद्यस्वभावता ॥ विशिष्टताऽत्र विज्ञातुं शक्या छायादिभेदतः ॥ ३ ॥ तद्विलोपेऽखिलख्यातव्यवहारविलोपनम् ॥ तृप्त्यादिकार्यसिध्यर्थमाहारादिप्ववृत्तितः ॥ ४ ॥ तत्परीक्षकलोकानां प्रसिद्धमनुमन्यताम् ॥ कारणं कार्यवद्धेतुरविनाभावसङ्गतम् ॥ ५ ॥" छायादिभेदत इति विशिष्टस्निग्धत्वश्यामलत्वादिधर्मकलापभेदतस्तद्विलोपे । यत्तु पातनायामुक्तं कारणविशेषश्च न कश्चिद्विपश्चिताऽपि निश्चेतुं शक्य इति तदयुक्तम् । सुनिपुणेन प्रमात्रा कारणविशेषस्यावधारयितुं शक्यत्वात् । यथा खलु कार्यगतं विशेषमभ्यासादवधार्य कार्यात्कारणमनुमिन्वते निपुणास्तथा कारणगतं ते एवाऽवसायकारणात्कार्यमपि । तदाह-"कारणानुपलम्भेऽपि यथा कार्ये विशिष्टता ॥ बोध्याऽभ्यासात्तथा कार्यानुपलम्भोऽपि कारणे ॥ १ ॥ प्रमातुस्त्वपराधोऽयं विशेषं यो न पश्यति ॥ न कारणस्य दोषोऽस्ति स्वकार्याव्यभिचारिणः ॥ २ ॥ अनभ्युपगमे चैवमनुमानस्य जीवितम् ॥ न स्याद्धूमविशेषाणामपि बोद्धुमशक्तितः ॥ ३ ॥" एवं चाकाण्डाडम्बरेत्याद्यपि परस्य प्रलापमात्रम् । विशिष्टोन्नत्यादिधर्मकलापोपेतपयोदानामदूरकालभाविवृष्टिलक्षणकार्याव्यभिचारोपलम्भात् ।

तथा हि—

गर्जन्तस्तारतारं तरलतरतडित्ताण्डवाडम्बरेण
प्रोच्चण्डाः सान्द्रसद्यःप्रविकसदसतीश्यामलिम्नाऽनुलिप्ताः ॥
चञ्चन्माहेन्द्रचापाश्चलदचलचयाकारशङ्का दिशन्तः
प्रभ्रश्यन्तीह नैव क्वचन जलमुचो वृष्टिसृष्टिं विनाऽपि ॥५१५॥

प्रयोगश्चात्र—अनन्तरोत्पादवृष्टयोऽमी जीमूताः सातिशयोन्नत्यादिधर्मयोगित्वात्पूर्वोपलब्धैवंविधजलधरवदिति । येषां पुनरम्भोमुचां प्रौढ-

१ 'तत एव' इति प. पुस्तके पाठः ।

प्रसज्जनाग्निना निश्चयत्वेन भाविनर्पलक्षणकार्यं प्रति व्यभिचारित्व, न तेषां गमकत्वं वयमपि ब्रूमः । न चैकत्र व्यभिचारोपलम्भे सर्वत्र व्यभिचारं प्रेरयितुं परीक्षकाणामुचितं । सकलानुमानप्रलयप्रसङ्गात् । गोपालघुटिकाप्रकटितधूमस्य धूमध्वजं प्रति व्यभिचारोपलब्धौ धरणीधरकन्धराधिकरणस्यापि तस्य तत्प्रति व्यभिचारापत्ते । यच्च हेतुना यः समग्रेणेत्यत्र योग्यतानुमानं व्याख्यातम् । तदपि नोपपन्नम् । साध्यसाधनयोरेकान्त तादात्म्याभ्युपगमे स्वभावानुमानस्य प्रागेव निरवकाशतया दर्शितत्वात् । लोकश्चाविकलकारणात्कार्यमेव कल्पयति न योग्यतामित्यल कुतर्गिन कुत्सितकुसुमविमर्दितदुरामोदास्वादनेन ॥ ६६ ॥

ननु पूर्वचरोत्तरचरयोस्तुल्यमसुन्दरम् । दासीगमसयो पूर्वचरोत्तरचरत्वमस्मवेऽपि व्यभिचारदर्शनात् । यत्तु कृत्तिकादौ व्यभिचारादर्शनं न तत्र पूर्वचरोत्तरचरत्वं कारणं किं तेनान्तिरिक्तं प्रतिबन्धविशेषभूतस्वभावकार्यकारणेष्वेव प्रक्षिप्यन्तमावो भविष्यत्यनयो किं पृथगुपादानेनेत्याशङ्क्य नासीदासभानौ पूर्वचरोत्तरचरत्वमेवास्मद्विवक्षितं नान्यदिति तन्त्रगमनाय कृत्तिकादौ बौद्धसमतं तादात्म्यादिप्रतिबन्धविशेषं निराकुर्वन्नाह—

## पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ तयोः कालव्यवहितावनुपलम्भादिति ॥ ६७ ॥

पूर्वचरोत्तरचरयोर्हेतुविशेषयोर्न स्वभावकार्यकारणभावौ तादात्म्यतदुत्पत्ती सम्भवत । कुत इत्याह—तयो स्वभावकार्यकारणभावयोः । कालव्यवधानेऽनुपलम्भात् । अयमत्राभिप्राय —साध्यसाधनयोस्तादात्म्ये सति स्वभावहेतौ तदुत्पत्तौ तु कार्यकारणे वाऽन्तर्भावो विभाव्येत । न च पूर्वचरोत्तरचरयोस्तदुभयं सम्भव । कालव्यवधाने तदनुपलब्धे । तादात्म्यं हि समसमयस्यैव कृतकत्वानित्यत्वादे प्रतीतम् । तदु-

त्पत्तिश्चान्योन्यमव्यवहितस्यैव धूमधूमध्वजादेः समधिगता न पुनर्व्यवहितकालस्य । अतिप्रसक्तेः । प्रयोग.—यद्यत्काले यस्मादनन्तरं वा यन्नास्ति न तस्य तेन तादात्म्यं तदुत्पत्तिर्वा । यथा भविष्यच्छङ्खचक्रवर्त्तिकालेऽसतो रावणादेः । नास्ति च शकटोदयादिकालेऽनन्तरं वा कृत्तिकोदयादिकम् ।

**प्रज्ञाकराभिप्रायेण पूर्वचरस्य कार्यहेतावन्तर्भाव स्वीकुर्वतः खण्डनम् ।**

ननु प्रज्ञाकराभिप्रायेण भाविरोहिण्युदयकार्यतया कृत्तिकोदयस्य गमकत्वात्कथं कार्यहेतौ पूर्वचरस्य नान्तर्भाव इति चेत् । तर्हि कथमभूद्भरण्युदय. कृत्तिकोदयादित्यनुमानं स्यात् । न खलु भरण्युदयकार्यं कृत्तिकोदयः, तस्य भाविरोहिण्युदयकार्यतया भवद्भि. प्रतिज्ञातत्वात् । अथ भरण्युदयोऽपि कृत्तिकोदयस्य कारणं तेन भरण्युदयस्याप्यनुमानं कृत्तिकोदयाद्भविष्यतीत्युच्यते । ननु येन स्वभावेन भरण्युद्यात्कृत्तिकोदयस्तेनैव यदि शकटोदयात्तदा भरण्युदयादिवच्छकटोदयादपि पश्चादसौ स्यात् । यथा वा शकटोदयात्पूर्वकालं कृत्तिकोदयस्तथैव भरण्युदयादपि भवेत् । यदि चातीतानागतयोर्भरण्युदयशकटोदययोरेकत्र कृत्तिकोदयलक्षणे कार्ये व्यापारः, तर्ह्यास्वाद्यमानरसस्यातीतो रसो भावि च रूपं कारणं स्यात् । ततो भाविरूपस्यैवास्वाद्यमानाद्रसात्प्रतीतिः स्यान्न तु स्वसमयभाविनोऽतीतस्य वा रूपस्य इत्ययुक्तमुक्तं वार्त्तिके "इत्यतीतैककालानां गतिर्नानागतानाम्" इति । अथ भरण्युदयरोहिण्युदययोरन्यतरस्यैव कार्यं कृत्तिकोदयः । तर्ह्यन्यतरस्यैवातः प्रतीतिर्भवेत् । ततो न पूर्वचरोत्तरचरौ कार्यहेतावन्तर्भवत इति ॥ ६७ ॥

ननु कालव्यवहितौ कार्यकारणभावौ नोपलभ्येते इत्यनुपपन्नम् । जाग्रत्प्रस्तुतस्वप्नोत्थितावस्थाभाविबोधयोर्मरणारिष्टयोर्वा कालव्यवधानेऽपि तदुपलब्धेरित्येतन्निराकर्तुमाह—

1 ' कार्यहेतौ वर्तते ' इति प. भ पुस्तकयो पाठः ।

न चातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः प्रबोधोत्पातौ प्रति कारणत्वं, व्यवहितत्वेन निर्व्यापारत्वादिति ॥ ६८ ॥

अयमर्थः —जाग्रद्दशासंवेदनमतीतं सुप्तावस्थोत्तरकालभावि नानवर्तमानं प्रति मरणं चानागतमरुन्धत्यनवलोकनारिष्टमरिष्टं साम्प्रतिकं प्रति व्यवहितत्वेन व्यापारपराङ्मुखमिति कथं तत्तत्र कारणत्वमवलम्बेत ॥ ६८ ॥

एतदेव भावयन्नाह—

स्वव्यापारापेक्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था कुलालस्येव कलशं प्रतीति ॥ ६९ ॥

अन्वयव्यतिरेकावसेयो हि सर्वत्र कार्यकारणभावः । अन्वयव्यतिरेकौ च कार्यस्य कारणव्यापारसव्यपेक्षावेव युज्येते कुम्भस्येव कुम्भकारव्यापारसव्यपेक्षाविति ॥ ६९ ॥

ननु चातिक्रान्तानागतयोर्व्यवहितत्वेऽपि व्यापारः कथं न स्यादित्यारेकायामाह—

न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं न्याय्यमतिप्रसक्तेरिति ॥ ७० ॥

तयोरित्यतिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः ॥ ७० ॥

अतिप्रसक्तिमेव भावयन्नाह—

परम्पराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वादिति ॥ ७१ ॥

यदि व्यतीतानागतयोर्जाग्रद्दशासंवेदनमरणयोर्व्यवहितयोरपि

प्रबोधोत्पात्तौ प्रति व्यापारः परिकल्प्यते तदाऽतिव्यवहितानामतीतानागतानामकारणत्वेनाभिमतानामन्येषामपि रावणशङ्खचक्रवर्त्यादीनां तौ प्रति व्यापारपरिकल्पनमनिवार्यं स्यादिति तेषामपि तत्र कारणत्वं प्रसज्येतेति भावः । किं चासतस्तुरङ्गशृङ्गस्येव न कस्यचित्कारणत्वमुपपन्नम् । अथारिष्टादिकार्यकाले मरणादेरसत्त्वेऽपि स्वकाले सत्त्वादयमदोष इत्युच्यते । ननु भवतु नाम मरणादेः स्वकाले सत्त्वं पश्चाद्भाविमरणादेरिति निष्पन्नस्य निराकाङ्क्षस्यारिष्टादेः पश्चादुपजायमानेन मरणादिना कथं करणं कृतस्य करणायोगात् । अन्यथा न क्वचित्कार्ये कस्यचित्कारणस्य कदाचिदुपरमः स्यात् । अथ निष्पन्नस्याप्यरिष्टादेरनिष्पन्नं किञ्चिद्रूपमस्ति तत्करणान्मरणादिकं तत्कारणत्वेन कल्प्यते । ननु निष्पन्नादरिष्टादेरनिष्पन्नं रूपं यद्यभिन्नं तर्हि तदेव तत्तस्य न करणमित्युक्तम् । भिन्नं चेत्तर्हि तदेव तेन क्रियते नारिष्टादिकमित्यायातम् । अरिष्टादिसम्बद्धस्यानिष्पन्नरूपस्य मरणादिना करणादरिष्टादिकमपि कृतमिति चेत् । ननु भिन्नयोः कार्यकारणभावान्नान्यः सम्बन्धस्तथागतैरङ्गीक्रियते । तत्र चारिष्टादिना स्वसम्बद्धमनिष्पन्नं रूपं क्रियेत तेन वाऽरिष्टादिकम् । प्रथमपक्षेऽरिष्टादेरेव तच्चेष्यते । मरणादिकमकिञ्चित्कारणमेव क्वचिदप्यनुपयोगात् । तेनारिष्टादिकरणे पूर्वं निष्पन्नस्यास्य पश्चादुपजायमानेन तेन किं क्रियत इत्युक्तम् । अथानिष्पन्नं किञ्चिदस्ति तत्रापि पूर्वचर्चानवस्था च । ननु यद्यत्र कार्यकारणभावो न स्यात्कथं तर्ह्यन्यदर्शनादन्यानुमानमिति चेत्, अविनाभावादिति ब्रूमः ।

तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेऽप्यविनाभावादेव गमकत्वदर्शनात् ।

तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धेऽप्यविनाभावादेव हेतूनां गमकत्वे जयन्तस्य संवादः ।

तदभावे वक्तृत्वतत्पुत्रत्वादेस्तादात्म्यतदुत्पत्तिप्रतिबन्धे सत्यप्यसर्वज्ञत्वश्यामत्वादौ साध्ये गमकत्वाप्रतीतेः । तदभावेऽपि चाविनाभावप्रसादाद्दिनकरास्तमय–चन्द्रोदय- गृहीताण्डपिपीलिको-

त्समर्पणेकाम्रफलोपलभ्यमानमधुररसस्वरूपाणां हेतूनां यथाक्रमं भविष्यत्तारकोदय–समानसमयसमुद्रवृद्धि–माविवृष्टि– समसमयसिन्दूरारुणरूपस्वभावेषु साध्येषु गमकत्वप्रतीतेः । उक्तं चैतदर्थाविसंवादि जयन्तेनापि—" सूर्यास्तमयमालोक्य कल्प्यते तारकोदयः ॥ पूर्णचन्द्रोदयाद्वृद्धिरम्बुधेरपि गम्यते ॥ १ ॥ उदितेनाऽनुमीयन्ते सरित कुम्भयोनिना ॥ शुष्यत्पुलिनपर्यन्ते निशान्तसमपङ्कय ॥ २ ॥ पिपीलिकाण्डसञ्चारचेष्टानुमितवृष्टय ॥ भवन्ति पथिकास्तूर्णं कुटीरकरणोद्यता ॥ ३ ॥ अन्येऽपि संगतोद्भितप्रतिबन्धद्वयोज्झिता ॥ कियन्तो वत गण्यन्ते हेतव साध्यबोधका ॥ ४ ॥ " इति । तत्र शरीरनिर्वर्तकादृष्टादिकारणकलापारिष्टकरतलरेखान्यो निष्पन्ना भाविनो मरणराज्यादेरनुमापका इति प्रतिपत्तव्यम् । जाग्रद्दशासंवेदनं तु सुप्तोत्थितसंवेदनस्य हेतुरिति तु स्वगृहमान्यमेव । नानाविधस्यात्मन कालत्रयस्थायिन साधयिष्यमाणत्वात् । सतया चैतन्याविच्छेदस्य कदाचिदप्यसम्भवादिति । सुप्तप्रबुद्धस्य मतिर्न तस्माज्जाग्रद्दशाज्ञानमपेक्षतेऽत्र ॥

न नाऽप्यरिष्टप्रमुख भविष्यत्प्राणप्रहाणप्रमृति स्वमूल्ये ॥५१६॥७१॥

सहचरहेतोरपि स्वभावकार्यकारणेषु नाऽन्तर्भाव इति दर्शयन्नाह—

## सहचारिणोः परस्परस्वरूपपरित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेश इति ॥ ७२ ॥

अयमभिप्राय —सहचारिणो रूपरसादिकयो परस्परपरिहारेणावस्थानात् तयोस्तादात्म्यं यथा कुम्भस्तम्भयो । परस्परपरिहारेणावस्थानं च सहचारिणो रूपरसयोरिति । तथा ययोरेककालत्वं न

---

१ न्या म पृ ११७।

तयोस्तदुत्पत्तिर्यथा सव्येतरगोविषाणयो.। एककालत्वं च सहचारिणो रूपरसयोरिति ॥ ७२ ॥

इदानीं मन्दमतिव्युत्पादनार्थं साधर्म्यवैधर्म्याभ्यां पञ्चावयवां व्याप्याविरुद्धोपलब्धिं तावदुदाहरन्नाह—

**ध्वनिः परिणतिमान्प्रयत्नानन्तरीयकत्वात्, यः प्रयत्नानन्तरीयकः स परिणतिमान्यथा स्तम्भः। यो वा न परिणतिमान्स न प्रयत्नानन्तरीयको यथा वान्ध्येयः। प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणतिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येण चेति ॥ ७३ ॥**

अत्र ध्वनिरिति धर्मी। परिणतिमानिति साध्यो धर्म.। इति धर्मिणः साध्यधर्मविशिष्टस्य पक्षापरपर्यायस्य वचनं प्रतिज्ञा। प्रयत्नानन्तरीयकत्वादिति प्रयत्नश्चेतनावतो व्यापारस्तस्यानन्तरं प्रयत्नानन्तरं तत्र भव. प्रयत्नानन्तरीयकस्तद्भावस्तत्त्वं तस्मादिति हेतु.। यः प्रयत्नानन्तरीयकः स परिणतिमान्, यथा स्तम्भ इत्युदाहरणम्। प्रयत्नानन्तरीयकश्च ध्वनिरित्युपनय·। तस्मात्परिणतिमानिति निगमनम्। अयं साधर्म्येण पञ्चावयवप्रयोगः। अथवा वैधर्म्येण। तत्र च प्रतिज्ञाहेतूपनयनिगमनलक्षणावयवचतुष्टयं तदेव। दृष्टान्तस्तु यो न परिणतिमान्, स न प्रयत्नानन्तरीयको यथा वान्ध्येयः। इत्येषा व्याप्यस्य प्रयत्नानन्तरीयकत्वस्य साध्येन परिणतिमत्त्वेन सहाविरुद्धस्योपलब्धिः। प्रयत्नानन्तरीयकत्वं हि परिणतिमत्त्वेन व्याप्तम्। पूर्वोत्तराकारपरिहारावाप्तिस्थितिलक्षणपरिणतिशून्यस्य सर्वथा नित्यत्वे वा शब्दस्य प्रयत्नानन्तरीयकत्वानुपपत्तेरागमप्रामाण्यसमर्थनप्रक्रमे वक्ष्यमाणत्वात्। ननु व्याप्यत्वं कार्यादिहेतुष्वपि समानम्। तेषामपि स्वसाध्येन व्याप्तत्वात्।

अन्यथा तत्साधकत्वानुपपत्तेरिति व्याप्याविरुद्धोपलब्धिरेवैका भवेत् । तथा चाविरुद्धोपलब्धेर्विधिसिद्धौ षट्प्रकारत्वकीर्त्तनमनुपपन्नमेवेति । तदेतत्तदीयमार्गसुकुमारमतीनां प्रेरितम् । यतो न साध्येन हेतोर्व्याप्यत्वमात्रमत्र व्याप्यत्वेन विवक्षितम् । किं तर्हि कथञ्चित्साध्येन सह तादात्म्यपरिणाममापन्नस्य कार्यकारणादिभूतस्य प्रयत्नानन्तरीयकत्वादेः साधनधर्मस्य स्वरूपम् । अत एवान्यत्र व्याप्याविरुद्धोपलब्धेः स्वभावोपलब्धिरिति संज्ञया कीर्तनम् । " कार्यकारणनिर्मुक्तवस्तुदृष्टिर्विधेष्यते ॥ तत्स्वभावोपलब्धिश्चान्योपलब्धिश्च निश्चिता ॥ १ ॥ कथंचित्साध्यतादात्म्यपरिणाममितस्य या ॥ स्वभावस्योपलब्धिः स्यात्साऽविनाभावलक्षणा ॥ २ ॥ " इति । तत्स्वभावोपलब्धिरिति तस्य साध्यधर्मस्य परिणतिमत्त्वादेः स्वभावः कथंचिदपृथग्भूतः प्रयत्नानन्तरीयकत्वादिकं साधनस्वरूपं तस्योपलब्धिरित्यर्थः । अन्योपलब्धिरिति साध्यधर्माद्रूपादेरन्यस्य स्वभावभूतस्य रसादेरुपलब्धिरित्यर्थः । अविनाभावलक्षणेति निश्चितान्यथानुपपत्तिलक्षणेत्यर्थः । ननु यदि व्याप्यशब्देनात्र स्वभावभूत एव धर्मः साधनत्वेनाभिमन्यते तर्हि तन्निश्चये तदपृथग्भूतस्य साध्यधर्मस्यापि निश्चितत्वात्किमनुमानेन कृत्यम् । सिद्धसाध्यतादोषप्रसक्तेः । न चानिश्चित एव साधनधर्मः साध्यधर्मस्य गमक इति वाच्यम् । ज्ञापकस्याज्ञातस्य ज्ञापकत्वायोगात् । समारोपव्यवच्छेदोऽनुमानेन क्रियत इत्यपि न विचारक्षमम् । निश्चितेऽर्थे समारोपासम्भवादिति । इदमपि नोपपत्तिमहम् । अनेकस्वभावस्य शब्दादिवस्तुनो निश्चितेऽपि प्रयत्नानन्तरीयकत्वादौ स्वभावभूते साधनधर्मे परिणतिमत्त्वादिसाध्यधर्मनिश्चयनियमस्याभावात् । निश्चितानिश्चितात्मकत्वं चैकस्य वस्तुनश्चित्राकारैकज्ञानवन्न विरुध्यते । तदुक्तम्—" निश्चितानिश्चितात्मत्वं न चैकस्य विरुध्यते ॥ चित्रात्मज्ञानवन्नानास्वभावैकार्थवेदनात् ॥ १ ॥ " इति । ततो निश्चितेऽपि हेतुधर्मे साध्यधर्मानिश्चयात्तत्प्रतिपत्त्यर्थं सफलमेव प्रस्तुत-

मनुमानम् । तदित्थं व्याप्याविरुद्धोपलब्धेः कार्याविरुद्धोपलब्ध्यादिभ्यो भेदेन सिद्धत्वात्षट्प्रकारत्वकीर्त्तनं विधिसिद्धावविरुद्धोपलब्धेरुपपन्नमेव । एवं सर्वमुत्पादव्ययध्रौव्याक्रान्तं सत्त्वात्, यत्पुनरुत्पादादित्रयाक्रान्तं न भवति तत्सदपि न भवति यथा खरविषाणम् । सच्च सर्वम् । तस्मादुत्पादादित्रयाक्रान्तम् । द्रव्यं गुणपर्यायवद्द्रव्यत्वात् । यत्तु गुणपर्यायवन्न भवति न तद्द्रव्यं यथा कूर्मरोमादि । द्रव्यं च द्रव्यम् । तस्माद्गुणपर्यायवदित्यादीन्यप्यत्रोदाहरणानि दृश्यानि ॥ ७३ ॥

अथ कार्याविरुद्धोपलब्धेरुदाहरणमाह—

## अस्त्यत्र गिरिनिकुंजे धनंजयो धूमसमुपलम्भादिति कार्यस्येति ॥ ७४ ॥

साध्येनाविरुद्धस्योपलब्धिरिति पूर्वसूत्रादिहोत्तरत्र चानुवर्तनीयम् । तत इत्येषा कार्यस्य साध्येनाविरुद्धस्योपलब्धिरिति सिद्धं भवति । एवमस्त्यत्र शरीरे बुद्धिर्व्याहारादेः । वृष्टिमत्पृष्ठदेशसंसृष्टेयं नदी फेनिलकलुषतादिविशिष्टपूरोपेतत्वादित्याद्यपि दृश्यम् । तत्र व्याहारादेरित्यत्र व्याहारो वचनम् । आदिशब्देन व्यापाराकारविशेषपरिग्रहः । ननु ताल्वाद्यन्वयव्यतिरेकानुविधायितया शब्दस्योपलम्भात्कथं बुद्धिसामान्यापरपर्यायात्मकार्यत्वम् । येन ततस्तदस्तित्वसिद्धिः स्यात् । न खल्वात्मनि विद्यमानेऽपि विवक्षाबुद्धिपरिकरे कफादिदोषदुष्टत्वेन कण्ठादिव्यापाराभावे वचनं प्रवर्त्तत इति । तथा फेनिलकलुषतादिविशिष्टपूरोपेतत्वादित्यप्यनैकान्तिकम् । सेतुभङ्गहिमविलयनादिनापि तथाविधतरङ्गिणीपूरस्य सम्भाव्यमानत्वादिति । तदपेशलम् । शब्दोत्पत्तौ ताल्वादिसहायस्यैवात्मनो व्यापाराभ्युपगमात् । घटाद्युत्पत्तौ चक्रादिसहायस्य कुम्भकारादेरिव । अनैकान्तिकत्वमपि द्वितीयानुमानेऽनुचितम् । निपुणेन प्रमात्रा वृष्ट्यनुमापकस्य पयःपूरस्य परिभावयितुं पार्यमाणत्वात् ।

तदुक्तम्—' आनर्त्तनर्तनाशालिनिशालकलुषोदक ॥ कल्लोलनिकटास्फालस्फुटत्कूलकलाञ्चितः॥१॥ वहद्बहलशैवालफलमाङ्कलसङ्कुल ॥ नदीपूरविशेषोऽपि शक्येत तेन वेदितुम् ॥ २ ॥ " इति । कार्यकार्याविरुद्धोपलब्ध्यानेश्च कार्याविरुद्धोपलब्धावेवान्तर्भाव इति न पृथगुपन्यास ॥ ७४ ॥

अथ कारणाविरुद्धोपलब्धेरुदाहरणमाह—

## भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्येति ॥ ७५ ॥

इतीय कारणस्य साध्येनाविरुद्धस्योपलब्धिरित्यर्थ । तथाविधेति सान्निध्यौन्नत्यादिधर्मोपेतत्व वारिवाहस्य गृह्यते । एवमस्त्यत्र छाया छत्रादित्यादीन्यप्युदाहरणानि द्रष्टव्यानि । कारणकारणाविरुद्धोपलब्ध्यादेश्चात्रैवानुप्रवेशान्नार्थान्तरत्वमिति ॥ ७५ ॥

सम्प्रति पूर्वचराविरुद्धोपलब्धिमुदाहरति—

## उदेष्यति मुहूर्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्येति ॥ ७६ ॥

तिष्यतारकेति पुष्यनक्षत्रम् । इत्येषा पूर्वचरस्य साध्येनाविरुद्धस्योपलब्धिरित्यर्थ । एवमुदेष्यति शकट कृत्तिकोदयादित्यादीन्यप्युदाहरणानि द्रष्टव्यानि । ननु कृत्तिकोदयादेर्भविष्यच्छकटोदयाद्यनुमान कारणाविरुद्धोपलब्धेर्न भिद्यते । कृत्तिकादीना पूर्वचारित्वेन शकटोदयादिषु प्रति कारणत्वात् । तत्कथ पूर्वचराविरुद्धोपलब्धिस्तन्न पृथक्स्थान । तदेतत्परिपीतिदिननार्किकदुग्धस्य मद्यापमात्रम् । न हि यत्किञ्चित्पूर्वचारि तत्सिद्धमुत्तरचारिण कारण नियमेन भवति । कार्यस्य स्वभावसिद्धेनानेन पूर्वभाविनामन्वयव्यतिरेकाभ्या कारणत्वप्रसिद्धे ।

---

१ न्या म पृ १३० ।

न च रोहिण्युदयस्य स्वरूपप्राप्तिः कृत्तिकोदयतः सम्भवति । तदनन्तरभावित्वाभावात् । कालान्तर एव कृत्तिकोदयापेक्षया रोहिण्युदयस्य दर्शनात् । अथ विशिष्टं कालं प्राप्य कृत्तिका शकटं कुर्वतीत्यभिधीयते । तर्हि भरणिरपि कालविशेषमासाद्य शकटं किं न करोति । भवन्मते विशेषानुपलम्भात् । अथातिव्यवहितत्वाद्भरणेः शकटं प्रत्यहेतुत्वम् । तर्हि वासनाऽपि स्मृतिहेतुस्त्वन्मते न भवेत् । अतिव्यवहितत्वादेव । अथ कालान्तरापेक्षा कृत्तिकासहकारिणी च भरणि कारणं शकटोदये तर्हि तथाविधा तत्राश्विन्यपि कारणं किं न भवेत् । तुल्ययोगक्षेमत्वात् । यदि च यत्किञ्चित्पूर्वभावि तत्सर्वमुत्तरकालभाविनः कारणत्वेन कल्प्यते तर्हि पितामहादयोऽपि पितृत्वेन पुत्रस्य किं न कल्प्यते । पूर्वभावित्वाविशेषात् । ननु पूर्वभावित्वाविशेषेऽपि पुत्रस्वरूपलाभहेतोरेव पितृत्वं न पुनः पितामहप्रभृतीनाम् । तेषां तत्राहेतुत्वादिति तर्हि शकटस्यापि कथं कृत्तिकोदयः कारणम् । तस्यापि तत्स्वरूपलाभाहेतुत्वाविशेषादिति । तदुक्तम्—" पूर्वचारि न निःशेषं कारणं नियमादपि ॥ कार्यात्मलाभहेतूनां कारणत्वप्रसिद्धितः ॥ १ ॥ न रोहिण्युदयस्यात्मलाभोऽस्मिन् कृत्तिकोदयात् ॥ तदनन्तरभावित्वाभावात्कालान्तरेक्षणात् ॥ २ ॥ विशिष्टं कालमासाद्य कृत्तिका कुर्वते यदि ॥ शकटं भरणिः किं न करोति च तथैव वः ॥ ३ ॥ व्यवधानादहेतुत्वे तस्यास्तत्र क्व वासना ॥ स्मृतिहेतुर्विभाव्येत तत एवेत्यवर्त्तनम् ॥ ४ ॥ [ अवर्त्तनमिति अनिवृत्तोऽयं पर्यनुयोग इत्यर्थः ] । कारणं भरणिस्तत्र कृत्तिकासहकारिणी ॥ यदि कालान्तरापेक्षा तथा स्यादश्विनी न किम् ॥ ५ ॥ पितामहः पिता किं न तथैव प्रपितामहः ॥ सर्वो वाऽनादिसन्तानस्ते नो पूर्वत्वयोगतः ॥ ६ ॥ स्वरूपलाभहेतोश्चेत्पितृत्वं नेतरस्य तु ॥ प्राजापत्यस्य माभूवन्कृत्तिका हेतवस्तथा ॥ ७ ॥" इति । प्राज्यापत्यस्येति रोहिणीनक्षत्रस्य । तदेवं पूर्वचारित्वेऽपि कृत्तिकानां

रोहिण्युदयं प्रति कारणत्वानुपपत्तेः कृत्तिकोदयाद्धविष्यच्छकटोदयानुमानं कारणाविरुद्धोपलब्धेर्भिद्यत एवेति ततः पृथक्स्वरूपमुपदर्शयन्ती पूर्वचराविरुद्धोपलब्धिः कथं न सद्भावमासादयतीति । पूर्वपूर्वचराविरुद्धोपलब्ध्यादीनामत्रैवानुप्रवेशः । यदुक्तम्—" पूर्वपूर्वचरादीनामुपलब्ध्य प्रदर्शिता. ॥ पूर्वचार्युपलम्भेन ततो नाऽर्थान्तरं मता ॥ १ ॥ " इति ॥ ७६ ॥

इदानीमुत्तरचराविरुद्धोपलब्धेरुदाहरणमाह—

## उदगुर्मुहूर्तात्पूर्वं पूर्वफल्गुन्यः । उत्तरफल्गुनीनामुद्गमोपलब्धेरित्युत्तरचरस्येति ॥७७॥

इतीयमुत्तरचरस्य साध्येनाविरुद्धस्योपलब्धिरित्यर्थः । एवं मुहूर्तात्पूर्वमुदगाद्भरणिः कृत्तिकोदयादित्यादीन्यप्युदाहरणान्यभ्यूह्यानि । न च कार्याविरुद्धोपलब्धिरेवेयमुत्तरचारिणः सर्वस्य कार्यत्वादिति प्रेर्यम् । पूर्वभाविनः सर्वस्य कारणत्वमेवेत्यस्य नियमस्यानन्तरमेव निरस्तत्वेनोत्तरचारिणोऽपि सर्वस्य कार्यत्वासम्भवात् । नानाप्रकारं हि सकलप्राणिसन्दोहसम्बन्धिनमदृष्टं सुकृतदुष्कृतनिबन्धनमपेक्ष्यान्तरिक्षमण्डले क्रमभावित्वान्नक्षत्राण्यनेकं पूर्वोत्तरचराणि भवन्ति । ततश्च परस्परं नक्षत्राणां न कारणत्वं कार्यत्वं वा सम्भवति । व्याप्यव्यापकभावस्तु भवति निश्चितान्यथानुपपत्तिसद्भावादिति । तदुक्तम्—" सर्वमुत्तरचारीह कार्यमित्यनवेक्षितम् ॥ पूर्वं कारणमित्यस्य नियमस्य निराकृते ॥ १ ॥ नानाप्राणिगणादृष्टात्सातेतरफलाद्दिवि ॥ पूर्वोत्तरचराणि स्युर्भानि क्रमभुवः सदा ॥ २ ॥ नाऽन्योन्यहेतुता तेषां कार्यता वा ततो मता ॥ साध्यसाधनता तु स्यादविनाभावयोगतः ॥ ३ ॥ " इति । उत्तरोत्तरचराविरुद्धोपलब्धिरप्यनया सङ्गृहीता ॥ ७७ ॥

१ नक्षत्राणि प भ पुस्तकयो पाठ । २ [ क्रमभुव -नि प्रकाशन्ते यथाग्रिमवत ] इति भ पुस्तकस्थ पाठ प्रतिभाति ।

अथ सहचराविरुद्धोपलब्धिमुदाहरन्नाह—

**अस्तीह सहकारफले रूपविशेषः । समास्वाद्यमानरसविशेषादिति सहचरस्येति ॥ ७८ ॥**

इत्येषा सहचरस्य साध्येनाविरुद्धस्योपलब्धिरित्यर्थः । नेयं कार्याविरुद्धोपलब्धिरभिधानीया । रूपरसयोः समसमयभावित्वेन सव्येतरगोविषाणयोरिव स्वातन्त्र्येण व्यवस्थितत्वात् । अथैकसामग्र्यधीनत्वाद्रूपरसयोः सहभावित्वनियमः । अन्यथा घटपटादीनामिव तयोरपि स न स्यात् । ततश्च रसलक्षणकार्योपलब्ध्या रससमानसमयरूपजनकैकसामग्र्यनुमानात्कार्याविरुद्धोपलब्धिरेवेयमिति चेत् । नैतत्प्रेर्यम् । एकं द्रव्यमधिकरणभूतमनन्तरेण रूपरसयोः सहभावनियमेऽपरस्याः सामग्र्या एवासम्भवात् । तस्य च तदाधारभूतद्रव्यस्य नानुमानं समास्वाद्यमानरसविशेषात् । किं तर्हि तुल्यकालभाविनो रूपादेरेव । अथ समानकारणत्वा[1]द्रूपरसयोरेका सामग्रीष्यते न पुनरधिकरणभूतं द्रव्यम् । ततश्च रसाद्रूपानुमानमिति कार्यानुमानमेवेत्यभिधीयते । नन्वेवं सलिलरसास्वादनादम्भोरुहरूपस्यानुमानं किमिति न भवेत् । तुल्यकारणत्वस्याप्यत्राविशिष्टत्वात् । यथा हि सलिलरूपं रससहकारिणा प्राक्तनेन सलिलरूपेण जन्यते तथा सरसिजरूपमपि तेनैवेति व्यक्तं समानकारणत्वं पयःपुण्डरीकरूपयोः सलिलरूपेण सह । अथ सलिलरससरसिजरूपयोः प्रत्यासत्त्यभावात्परस्परं ज्ञाप्यज्ञापकभावो नेष्यते । नन्वेवमायातमनिच्छतोऽपि तथागतस्यैकमधिकरणभूतं द्रव्यम् । ज्ञाप्यज्ञापकभावस्थितरूपरसादीनामेकद्रव्यतादात्म्यमन्तरेणापरस्याः प्रत्यासत्तेस्तेषामभावादिति । तदुक्तम्—"कार्यहेतुरयं नेष्टः समानसमयत्वतः ॥ स्वातन्त्र्येण व्यवस्थानाद्वामदक्षिणशृङ्गवत् ॥ १ ॥ एकसामग्र्यधीनत्वात्तयोः स्यात्सहभाविता ॥ नाऽन्यथा नियमस्तस्या-

---

१ 'त्वं रूप' इति प. भ. पुस्तकशो. पाठ. ।

स्ततोऽन्येषामिमेति चेत् ॥ २ ॥ [ तस्या इति सहभाविताया ] नैकद्रव्याश्रितत्वेन विना तस्या विरोधतः ॥ सामर्थ्यैक्यं हि तद्रूप्य रसरूपादिषु स्फुटम् ॥ ३ ॥ न च तस्यानुमा स्यात्प्रमाणाद्-सन्निवेशतः ॥ समानसमयस्यैव रूपादेरनुमानतः ॥ ४ ॥ समान-कारणत्वात्तु सामर्थ्यैक्यं यदीष्यते ॥ पयोरसात्सरोजन्मरूपस्यानुमितिर्न किम् ॥ ५ ॥ यथैव हि पयोरूपं रूपात्समसहायकात् ॥ तथा रसोद्भवोऽपीति स्यात्समाननिमित्तता ॥ ६ ॥ प्रत्यासत्तेर-मानाचेत्साध्यसाधनताऽनयोः ॥ नैकद्रव्यतादात्म्यात्प्रत्यासत्तिः परा क्व सा ॥ ७ ॥" इति । एवमस्त्यत्र मातुलिङ्गे रूपं रसात् । समस्तीह देहे चैतन्यं विशिष्टस्पर्शोपलम्भात्" इत्याद्युदाहार्यम् । परोक्ष-योश्च सयोगैकार्थसमवायिनोः साध्यसमकालभाविनोर्लिङ्गयोरत्रैवानुप्रवेश इति ॥

विधिसिद्धावविरुद्धोपलब्धिरियमादरेण बोद्धव्या ॥
षोढा सोदाहरणा कौशलमभिलाषुकैस्तर्के ॥५१७॥ ७८ ॥

अधुना विरुद्धोपलब्धिमाह—

## विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारेति ॥ ७९ ॥

अविरुद्धोपलब्धिः प्रागभिहिता विधिसाधिका षट्प्रकारा, इयं तु विरुद्धोपलब्धिः प्रतिषेधसाधिका सप्तप्रकारा चेत्यनयोर्भेदः ॥ ७९ ॥

प्रथमप्रकारप्रकाशनार्थं तावदाह—

## तत्राद्या स्वभावविरुद्धोपलब्धिरिति ॥ ८० ॥

प्रतिषेध्यार्थस्य यः स्वभावः स्वरूपं तेन सह साक्षाद्विरुद्धं तस्यो-पलब्धिः स्वभावविरुद्धोपलब्धिः ॥ ८० ॥

---

१ इदं प्रक्षिप्तमिव भाति ।

अत्रोदाहरणमाह—

## नास्त्येव सर्वथैकान्तोऽनेकान्तस्योपलम्भादिति ॥ ८१ ॥

प्रतिषेध्यो ह्यत्र सर्वथैकान्त. सदेव सर्वमित्यादिकस्तस्य सम्बन्धिना स्वभावेन सह विरुद्धोऽनेकान्तः कथञ्चित्सदसदात्मकत्वादिस्तस्योपलम्भः स्वभावविरुद्धोपलब्धिरिति । अत्राह सौगतः—यावान्कश्चिन्निषेधः सर्वोऽप्यनुपलम्भादेवेतीयमपि स्वभावविरुद्धोपलब्धिर्निषेधावबोधं विदधानाऽनुपलब्धावेवाऽन्तर्भावमर्हति तत्कथमुपलब्धिभेदत्वेनासावुदाहृतेति । एतदप्यनुपपन्नम् । अनुपलब्धिशब्दस्यात्राश्रूयमाणत्वात् । अथ विरुद्धयोः सर्वथैकान्तानेकान्तयोर्वह्निशीतस्पर्शयोरिव प्रथमं विरोधः स्वभावानुपलब्ध्या प्रतिपन्न इत्यनुपलब्धिमूलत्वात्स्वभावविरुद्धोपलब्धेरनुपलब्धिरूपत्वं युक्तमेवेति चेत् । तदपि न क्षोदक्षमम् । अनुमानस्याप्येवं प्रत्यक्षत्वप्रसङ्गात् । यथैव हि स्वभावानुपलब्धिबलाद्विरुद्धयोर्विरोधे क्वचित्प्रतिपन्ने सति स्वभावविरुद्धोपलब्धिः प्रवर्त्तते तथैव साध्यधर्मिणि भूधरादौ साधने च धूमादावध्यक्षतः समधिगते सति साध्ये धूमध्वजादावनुमानं प्रवर्त्तत इति प्रत्यक्षमूलत्वादनुमानमपि कथं प्रत्यक्षं न स्यादिति । तदुक्तम्—"यावान्कश्चिन्निषेधोऽत्र स सर्वोऽनुपलम्भनात् ॥ यत्तदेष विरुद्धोपलम्भोऽस्त्वनुपलम्भनम् ॥१॥ इत्ययुक्तं तथाभूतश्रुतेरनुपलम्भतः ॥ तन्मूलत्वात्तथाभावे प्रत्यक्षमनुमाऽस्तु ते ॥ २ ॥ यथैवानुपलम्भेन विरोधे साधिते क्वचित् ॥ स्यात्स्वभावविरुद्धोपलब्धिवृत्तिस्तथैव च ॥ ३ ॥ लिङ्गे प्रत्यक्षतः सिद्धे साध्यधर्मिणि वा क्वचित् ॥ लिङ्गिज्ञानं प्रवर्त्तेत नाऽन्यथातिप्रसङ्गतः ॥ ४ ॥"इति । ततः स्वभावविरुद्धोपलब्धेर्नानुपलब्धावन्तर्भावः कर्त्तुं युक्तः । एवं नेह शीतं वैश्वानरस्य दर्शनादित्याद्यपि द्रष्टव्यम् ॥ ८१ ॥

आद्यं विरुद्धोपलब्धेः प्रकारं प्रदर्श्य शेषान्प्रदर्शयन्नाह—

**प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षडिति।८२॥**

प्रतिषेध्येनार्थेन सह ये साक्षाद्विरुद्धास्तेषां ये व्याप्तादयो व्याप्य-कार्यकारणपूर्वचरोत्तरचरसहचरास्तेषामुपलब्धयः षड्भवन्ति । विरुद्ध-व्याप्तोपलब्धिः, विरुद्धकार्योपलब्धिः, विरुद्धकारणोपलब्धिः, विरुद्ध-पूर्वचरोपलब्धिः, विरुद्धोत्तरचरोपलब्धिः, विरुद्धसहचरोपलब्धिः ॥८२॥

क्रमेणासामुदाहरणान्याह—

**विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चयस्तत्र सन्देहादिति ॥ ८३ ॥**

अत्र हि जीवादितत्त्वगोचरो निश्चयः प्रतिषेध्यस्तद्विरुद्धश्चानिश्च-यस्तेन व्याप्तस्य सन्देहस्योपलब्धिः । अनिश्चयो हि विपर्ययानध्यव-साययोः सन्देहमन्तरेणापि वर्तते । सन्देहस्त्वनिश्चयं विना न जातुचि-त्सम्भवतीत्यनयोर्व्याप्यव्यापकभावः सुप्रतीत एव । अतोऽत्रोत्तरत्र च यथा-शक्ति उदाहरणप्रयोजनाथा विनेयः । एवं नास्त्यत्र शीतस्पर्श औष्ण्या-दित्यादीन्यप्युदाहरणान्यभियुक्तैरवधार्याणि । प्रतिषेध्यो ह्यत्र शीतस्पर्श-स्तेन विरुद्धो वह्निस्तेन च व्याप्तस्यौष्ण्यस्योपलब्धिरिति ॥ ८३ ॥

**विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्यु-पशान्तिर्वदनविकारादेरिति ॥ ८४ ॥**

वदनविकारस्ताम्रत्वादि । आदिशब्दादधरस्फुरणविकटभ्रुकुटि-लोचनारुणिमादिपरिग्रहः । अत्र च प्रतिषेध्य क्रोधाद्युपशमस्तत्कार्यस्य वदनविकारादेरनुपलब्धिरिति । एवं नास्त्यत्र शीतं धूमादित्यादी-न्यप्युदाहर्तव्यानि । प्रतिषेध्यमिह शीतं तद्विरुद्धो वह्निस्तत्कार्यस्य धूमस्योपलब्धिरिति ॥ ८४ ॥

**विरुद्धकारणोपलब्धिर्यथा नास्य महर्षेरसत्यं समस्ति रागद्वेषकालुष्याकलङ्कितज्ञानसम्पन्नत्वादिति ।८५॥**

प्रतिषेध्येन ह्यसत्येन सह विरुद्धं सत्यं, तस्य कारणं रागद्वेषकालुष्याकलङ्कितज्ञानम् । तत्कुतश्चित्सूक्ताभिधानादेः प्रसिद्ध्यत्सत्यं साधयति तच्च सिद्ध्यदसत्यं प्रतिषेधतीति । एवं नास्मिन् शरीरिणि सुखमस्ति हृदयशल्यादित्यादीन्युदाहरणान्यवबोध्यानि । सुखेन हि प्रतिषेध्येन विरुद्धं दुःखं तस्य कारणं हृदयशल्यं तत्कुताश्चित्तदुपदेशादेः सिद्ध्यत्सुखं प्रतिषेधति ॥ ८५ ॥

## विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते पुष्यतारा रोहिण्युद्गमादिति ॥ ८६ ॥

प्रतिषेध्योऽत्र पुष्यतारोद्गमस्तद्विरुद्धो मृगशीर्षोदयस्तत्पूर्वचरो रोहिण्युद्गमस्तस्योपलब्धिरिति । एवं नोदेष्यति मुहूर्त्तान्ते शकटं रेवत्युदयादित्यादीनि द्रष्टव्यानि । प्रतिषेध्येन शकटोदयेन हि विरुद्धोऽश्विन्युदयस्तत्पूर्वचरो रेवत्युदयः ॥ ८६ ॥

## विरुद्धोत्तरचरोपलब्धिर्यथा नोदगान्मुहूर्त्तात्पूर्वं मृगशिरः पूर्वफल्गुन्युदयादिति ॥ ८७ ॥

प्रतिषेध्योऽत्र मृगशीर्षोदयस्तद्विरुद्धो मघोदयस्तदुत्तरचरः पूर्वफल्गुन्युदयस्तस्योपलब्धिरिति । एवं मुहूर्त्तात्प्राङ्नोदगाद्भरणिः पुष्योदयादित्यादीन्यवबोद्धव्यानि । भरण्युदयविरुद्धो हि पुनर्वसूदयस्तदुत्तरचरः ॥ ८७ ॥

## विरुद्धसहचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति ॥ ८८ ॥

प्रतिषेध्येन हि मिथ्याज्ञानेन सह विरुद्धं सम्यग्ज्ञानं तत्सहचरं च सम्यग्दर्शनं तच्च प्राण्यनुकम्पादेः कुतश्चिल्लिङ्गात्प्रसिद्ध्यत्सहचरं सम्यग्ज्ञानं साधयति तच्च सिद्ध्यन्मिथ्याज्ञानं प्रतिषेधतीति । एवं नास्त्यत्र भित्तौ परभागाभावोऽर्वाग्भागोपलम्भादित्यादीन्यवगन्तव्यानि । प्रतिषे-

व्येन हि परभागाभावेन विरुद्ध परभागसद्भावस्तत्सहचरोऽर्वाग्भाग । तदेवमुदाहृता सप्तप्रकाराऽपि विरुद्धोपलब्धि । सप्तप्रकारत्व पुनरस्या प्रतिषेध्येनार्थेन साक्षाद्विरुद्धमाश्रित्य सूत्रेऽभिहितम् । परम्परया विरोधाश्रयणेन त्वनेकप्रकारा विरुद्धोपलब्धि सम्भवन्ती स्वयमभियुक्तैरवगन्तव्या । तद्यथा-कारणविरुद्धकार्योपलब्धि ,व्यापकविरुद्धकार्योपलब्धि , कारणव्यापकविरुद्धकारणोपलब्धि , व्यापककारणविरुद्धकार्योपलब्धि , कारणविरुद्धकारणोपलब्धि ,व्यापकविरुद्धकारणोपलब्धि , कारणव्यापकविरुद्धकारणोपलब्धि , व्यापककारणविरुद्धकारणोपलब्धि , कारणविरुद्धव्याप्योपलब्धि , व्यापकविरुद्धव्याप्योपलब्धि , कारणव्यापक विरुद्धव्याप्योपलब्धि , व्यापककारणविरुद्धव्याप्योपलब्धि , कारणविरुद्धसहचरोपलब्धि , व्यापकविरुद्धसहचरोपलब्धि , कारणव्यापक विरुद्धसहचरोपलब्धि ,व्यापककारणविरुद्धसहचरोपलब्धिश्च, इति पारम्पर्येण विरुद्धोपलब्धे षोडश प्रकारा । तत्र कारणविरुद्धकार्योपलब्धिर्यथा—नास्त्यस्य हिमजनितरोमहर्षादिविशेषो धूमादिति । प्रतिषेध्यस्य हि रोमहर्षादिविशेषस्य कारण हिम तद्विरुद्धोऽग्निस्तत्कार्यं धूम इति । व्यापकविरुद्धकार्योपलब्धिर्यथा—नास्त्यत्र शीतसामान्यव्याप्तशीतस्पर्शविशेषो धूमादिति, शीतस्पर्शविशेषस्य हि निषेध्यस्य व्यापक शीतसामान्य तद्विरुद्धोऽग्निस्तस्य कार्यं धूम इति । कारणव्यापकविरुद्धकार्योपलब्धिर्यथा—नास्त्यत्र हिमत्वव्याप्तहिमविशेषजनितरोमहर्षादिविशेषो धूमादिति । रोमहर्षविशेषस्य हि निषेध्यस्य कारण हिमविशेषस्तस्य व्यापक हिमत्व तद्विरुद्धोऽग्निस्तत्कार्यं धूम इति । व्यापककारणविरुद्धकार्योपलब्धिर्यथा—नास्त्यत्र शीतस्पर्शविशेषस्तद्व्यापकशीतस्पर्शमात्रकारणहिमविरुद्धाग्निकार्यधूमादिति सुगममद । कारणविरुद्धकारणोपलब्धिर्यथा—नास्त्यस्य मिथ्याचरण तत्त्वार्थोपदेशग्रहणादिति । मिथ्याचरणस्य हि कारण मिथ्याज्ञान तद्विरुद्ध तत्त्वज्ञान तस्य कारण तत्त्वार्थोपदेशग्रहणम् । तत्त्वार्थोपदेशश्रवणे सत्यपि कस्य-

चित्तत्त्वज्ञानासम्भवाद्ग्रहणवचनम् । तत्त्वार्थानां श्रद्धानपूर्वकमवधारणं ग्रहणमिष्टम् । अन्यथाऽस्य ग्रहणाभासत्वात् । मिथ्याचरणस्य चात्र नास्तिता साध्यते न पुनरनाचरणस्य । तत्त्वार्थोपदेशग्रहणात् । उत्पन्नतत्त्वज्ञानस्याप्यसंयतसम्यग्दृष्टेश्चारित्रासम्भवादनाचरणस्य प्रसिद्धेः । न तु मिथ्याचरणमप्यस्य सम्भवति । तत्त्वज्ञानविरोधात । तेन सह तस्यानवस्थानादिति । व्यापकविरुद्धकारणोपलब्धिर्यथा—नास्त्यस्यात्मनि मिथ्याज्ञानं तत्त्वार्थोपदेशग्रहणादिति । आत्मनि मिथ्याज्ञानस्य विशिष्टस्य व्यापक मिथ्याज्ञानमात्रं तद्विरुद्ध तत्त्वज्ञानं तस्य कारणं तत्त्वार्थोपदेशग्रहणं यथोपवर्णितमिति । कारणव्यापकविरुद्धकारणोपलब्धिर्यथा नास्त्यस्य मिथ्याचरणं तत्त्वार्थोपदेशग्रहणादिति । अत्र मिथ्याचरणस्य कारणं मिथ्याज्ञानविशेषस्तस्य व्यापकं मिथ्याज्ञानमात्रं तद्विरुद्धं तत्त्वज्ञान तस्य कारणं तत्त्वार्थोपदेशग्रहणमिति । व्यापककारणविरुद्धकारणोपलब्धिर्यथा—नास्त्यस्य मिथ्याचरणविशेषस्तत्त्वार्थोपदेशग्रहणादिति । मिथ्याचरणविशेषस्य हि व्यापकं मिथ्याचरणसामान्यं तस्य कारणं मिथ्याज्ञानं तद्विरुद्धं तत्त्वज्ञानं तस्य कारणं तत्त्वार्थोपदेशग्रहणमिति । कारणविरुद्धव्याप्योपलब्धिर्यथा, न सन्ति सर्वथैकान्तवादिनः प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यानि वैपर्यासिकमिथ्यादर्शनविशेषादिति । प्रशमादीनां हि कारण सम्यग्दर्शनं तस्य विरुद्धं मिथ्यादर्शनसामान्यं तेन व्याप्तं मिथ्यादर्शनं वैपर्यासिकं विशेषरूपमिति । व्यापकविरुद्धव्याप्योपलब्धिर्यथा, न सन्ति स्याद्वादिनो वैपर्यासिकादिमिथ्यादर्शनविशेषास्तत्त्वज्ञानविशेषादिति । वैपर्यासिकादिमिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तद्विरुद्धं तत्त्वज्ञानसामान्यं तस्य व्याप्यस्तत्त्वज्ञानविशेष इति । कारणव्यापकविरुद्धव्याप्योपलब्धिर्यथा न सन्त्यस्य प्रशमादीनि मिथ्याज्ञानविशेषादिति । प्रशमादीना हि कारणं सद्दर्शनविशेषः, तस्य व्यापकं दर्शनसामान्यं तद्विरुद्धं मिथ्याज्ञानसामान्यं तेन व्याप्यो मिथ्याज्ञानविशेष इति । व्यापककारण-

विरुद्धव्याप्योपलब्धिर्यथा—न सन्त्यस्य तत्त्वज्ञानविशेषा मिथ्यार्थोपदेशग्रहणविशेषादिति । तत्त्वज्ञानविशेषाणां हि व्यापकं तत्त्वज्ञानसामान्यं तस्य कारणं तत्त्वार्थोपदेशग्रहणं तद्विरुद्धं मिथ्यार्थोपदेशग्रहणसामान्यं तेन व्याप्यो मिथ्यार्थोपदेशग्रहणविशेष इति । कारणविरुद्धसहचरोपलब्धिर्यथा—न सन्त्यस्य प्रशमादीनि मिथ्याज्ञानादिति । प्रशमादीनां हि कारणं सम्यग्दर्शनं तद्विरुद्धं मिथ्यादर्शनं तत्सहचरं मिथ्याज्ञानमिति । व्यापकविरुद्धसहचरोपलब्धिर्यथा—सन्त्यस्य मिथ्यादर्शनविशेषाः सम्यग्ज्ञानादिति । मिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तद्विरुद्धं तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तत्सहचरं सम्यग्ज्ञानमिति । कारणव्यापकविरुद्धसहचरोपलब्धिर्यथा—न सन्त्यस्य प्रशमादीनि मिथ्याज्ञानादिति । प्रशमादीनां हि कारणं सम्यग्दर्शनविशेषास्तेषां व्यापकं सम्यग्दर्शनसामान्यं तद्विरुद्धं मिथ्यादर्शनं तत्सहचरं मिथ्याज्ञानमिति । व्यापककारणविरुद्धसहचरोपलब्धिर्यथा—न सन्त्यस्य मिथ्यादर्शनविशेषाः सत्यज्ञानादिति । मिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तस्य कारणं दर्शनमोहोदयस्तद्विरुद्धं सम्यग्दर्शनं तत्सहचरं तत्त्वज्ञानमिति ।

अत्र च संग्रहश्लोकौ—

पारम्पर्येण कार्यं स्यात्कारणं व्याप्यमेव च ॥
सहचारि च निर्दिष्टं प्रत्येकं तच्चतुर्विधम् ॥ ५१८ ॥
कारणोद्दिष्टकार्यादिभेदेनोदाहृतं यथा ॥
इत्थं षोडशभेदं तद्विज्ञेयं मतिशालिभिः ॥ ५१९ ॥

तथेदमन्यदपि भेदत्रयं पारम्पर्येण निरुद्धोपलब्धेः सम्भवति । तद्यथा—कार्यविरुद्धोपलब्धिः, व्यापकविरुद्धोपलब्धिः, कारणविरुद्धोपलब्धिश्चेति । तत्र कार्यविरुद्धोपलब्धिर्यथा—नात्र देहिनि दुःखकारणमस्ति सुखोपलम्भादिति । प्रतिषेध्यमिह दुःखकारणं तस्य कार्यं दुःखं तेन विरुद्धं सुखं तच्च कुतोऽपि विशिष्टव्यापारव्यवहारादेः सिध्यद् दुःखनिवर्त-

यति, दुःखं च निवर्त्तमानं दुःखकारणं निषेधयति । एवं नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति वह्नेरित्यादीन्यप्युदाहरणान्यवसेयानि । व्यापकविरुद्धोपलब्धिर्यथा—न सन्निकर्षादिः प्रमाणमज्ञानत्वादिति प्रतिषेध्यमिह सन्निकर्षादेः प्रमाणत्वं तस्य व्यापकं ज्ञानत्वं तेन विरुद्धमज्ञानत्वं तच्च सन्निकर्षादावुपलभ्यमान ज्ञानत्वं निवर्त्तयति तच्च निवर्त्तमानं ततः प्रमाणत्वं निवर्त्तयति । ज्ञानत्वं हि प्रमाणाप्रमाणयोरुभयोरपि साधारणमिति व्यापकं प्रमाणत्वं तु विना नाऽन्यत्र क्वापि ज्ञानत्वेनेति व्याप्यं तत् । एवं नात्र तुषारस्पर्शो वह्नेरित्येवमादीन्यस्यामवसेयानि । कारणविरुद्धोपलब्धिर्यथा—नास्य महर्षेर्मिथ्याचारित्रमस्ति सम्यग्विज्ञानोपलम्भात् । मिथ्याचारित्रमिह प्रतिषेध्यं तस्य कारणं मिथ्याज्ञानं तद्विरुद्धं सम्यग्ज्ञानं तत्कुतश्चित्सम्यगुपदेशादेर्लिङ्गात्प्रसिद्ध्यन्मिथ्याज्ञानं निवर्त्तयति । तच्च निवर्त्तमानं मिथ्याचारित्रलक्षणं स्वकार्यं निवर्तयति । ननु च सम्यग्विज्ञानान्मिथ्याज्ञाननिवृत्तिर्न मिथ्याचारित्रस्य निवर्त्तिका प्रादुर्भूततत्त्वज्ञानस्यापि पुंसोऽचारित्रप्रसिद्धेः "पूर्वद्वयंसम्पद्यपि तेषां भजनीयमुत्तरं भवति ॥ पूर्वद्वयलाभः पुनरुत्तरलाभे भवति नियतः ॥ १ ॥" इति प्रशमरतौ[1] भगवदुमास्वातिवाचकमुख्यवचनप्रामाण्यात् । अन्यथा तद्व्याघातादिति चेत् । नैवम् । मिथ्याचारित्रस्य मिथ्यागमादिज्ञानपूर्वस्य पञ्चाग्निसाधनादेर्निषेध्यत्वाच्चारित्रमोहोदये सति निवृत्तिपरिणामाभावलक्षणस्याचारित्रस्य तु निषेध्यत्वेनात्रानिष्टेरिति । एवं नासौ रोमहर्षादिविशेषवानसमीपवर्त्तिपावकविशेषत्वादित्यादीन्यप्युदाहरणान्यभ्यूह्यानि । तदित्थं विरुद्धोपलब्धेर्भेदाः सप्त सूत्रोक्ताः षोडशभिस्त्रिभिश्चैतैर्भेदैः सह षड्विंशतिः सम्पन्नाः । पूर्वोक्ताऽविरुद्धोपलब्धिभेदषट्प्रक्षेपे तु द्वात्रिंशदुपलब्धिलक्षणा हेतुभेदाः संवृत्ताः । एतदनुसारेण वाऽन्येऽपि प्रज्ञाशालिभिः परामर्शनीयाः ।

---

१ प्र. र. गा. १

उपलब्धिहेतुरेव विधिमुखतो विधिनिषेधबोधकर ॥
द्वात्रिंशतेह भेदैः समुक्तो व्यक्तमुक्तोऽयम् ॥ ५२० ॥

दोषप्रोषितपक्षनाभिमुखग व्याप्त्योपलम्भादिक-
द्वात्रिंशत्प्रमितप्रभेदमतरप्रस्तारणापीवरम् ॥
सम्यग्व्याप्तिसुवृत्तिनेमिघटित साध्य निज साधयन्
जैनानामुपलब्धिचक्रममम जीयाचदेतद्भुवि ॥ ५२१ ॥

तत्रैव कस्यचित्धर्मस्य विधौ प्रतिषेधे चोपलब्धिलक्षणहेतुभेदानभिधाय सम्प्रति कस्यचिद्धर्मस्य निषेधे विधौ चानुपलब्धिप्रकारप्रपञ्च निश्चेतुकामस्तद्व्यापक मौलं प्रकारद्वयमाह—

## अनुपलब्धेरपि द्वैरूप्यमविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्चेति ॥ ८९ ॥

अविरुद्धस्य प्रतिषेध्येनार्थेन सह विरोधमप्राप्तस्य वस्तुनोऽनुपलब्धिरविरुद्धानुपलब्धिः । विरुद्धस्य प्रतिषेध्येन सह विरोधमागतस्यानुपलब्धिर्विरुद्धानुपलब्धिश्चेति ॥ ८९ ॥

सम्प्रत्यविरुद्धानुपलब्धेर्विषयकथनपुरःसर प्रकारमाह—

## तत्राविरुद्धानुपलब्धिः प्रतिषेधावबोधे सप्तप्रकारेति ॥ ९० ॥

निगदसिद्धम् ॥ ९० ॥

तानेव प्रकारानाह—

## प्रतिषेध्येनाविरुद्धाना स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणामनुपलब्धिरिति ॥ ९१ ॥

प्रतिषेध्येन वक्ष्यमाणेन कुम्भादिना सार्धमविरुद्धाना विरोधमनधिरूढानाम् । स्वभावश्च व्यापकश्च कार्यं च कारणं च पूर्वचर

चोत्तरचरं च सहचरं च स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचराणि तेषामनुपलब्धिः। इतिशब्दः प्रकारपरिसमाप्त्यर्थः। ततश्च स्वभावानुपलब्धिः, व्यापकानुपलब्धिः, कार्यानुपलब्धिः, कारणानुपलब्धिः, पूर्वचरानुपलब्धिः, उत्तरचरानुपलब्धिः, सहचरानुपलब्धिश्चेति प्रतिषेधप्रतिपत्तौ सप्तप्रकारत्वमनुपलब्धेः सिद्धं भवति ॥९१॥

अथ क्रमेणोदाहरणसप्तकमाह—

**स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भः। उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भादिति ॥ ९२ ॥**

उपलब्धिलक्षणप्राप्तस्येति, उपलब्धिर्ज्ञानं तस्या लक्षणानि कारणानि चक्षुरादीनि। तैर्ह्युपलब्धिर्लक्ष्यते जन्यत इति यावत्। तानि प्राप्तो जनकत्वेनोपलब्धिकारणान्तर्भावादुपलब्धिलक्षणप्राप्तो दृश्य इत्यर्थः। तथाविधस्य तत्स्वभावस्य कुम्भस्वरूपस्यानुपलम्भादनुपलब्धेः। यथाशब्द उदाहरणोपदर्शनार्थ इहोत्तरत्र च मन्तव्यः। इहोपलब्धिलक्षणप्राप्तस्येति यद्विशेषणं तत्पिशाचादिव्यभिचारपरिहारार्थम्। पिशाचादीनां हि स्वभावो नोपलभ्यतेऽथ च ते नास्तित्वेनावगन्तुं न शक्यन्ते। कथं पुनर्यो घटादिर्नास्ति स उपलब्धिलक्षणप्राप्तस्तत्प्राप्तत्वे कथं तस्यासत्त्वमिति चेत्। उच्यते। आरोप्यैतद्रूपं निषिध्यते। सर्वत्रारोपितरूपविषयत्वान्निषेधस्य। यथा नायं गौर इति। न ह्यत्रैतच्छक्यं वक्तुं सति गौरत्वे न निषेधो निषेधे न वा गौरत्वमिति। नन्वेवमदृश्यमपि पिशाचादिकं दृश्यरूपतयारोप्य प्रतिषिध्यतामिति चेत्। नैवम्। आरोपयोग्यत्वं हि यस्यास्ति तस्यैवारोपः। यश्चार्थो विद्यमानो नियमेनोपलभ्येत स एवारोपयोग्यो न तु पिशाचादिः। उपलम्भकारणसाकल्ये हि विद्यमानो घटो नियमेनोपलम्भयोग्यो गम्यते न पुनः पिशाचादिः। घटस्योपलम्भकारणसाकल्यं चैकज्ञानसंसर्गिणि

प्रदेशादावुपलभ्यमाने निश्चीयते घटप्रदेशयोरुपलम्भकारणान्यविशिष्टानीति कृत्वा । यश्च तद्देशाधेयतया कल्पितो घटः स एव तेनैकज्ञानसंसर्गी न देशान्तरस्थः । एकेन्द्रियग्राह्यं हि लोचनादिप्रणिधानाभिमुखवस्तुद्वयमन्योन्यापेक्षमेकज्ञानसंसर्गि कथ्यते । तयोर्हि सतोर्नैकनियताभावप्रतिपत्तिः । योग्यताया द्वयोरप्यविशिष्टत्वात् । ततश्चैकज्ञानसंसर्गिणि प्रदेशादावुपलभ्यमानेऽप्यनुपलम्भात् । तदुक्तम् । यतः प्रदेशादिनैकज्ञानसंसर्गिण एव घटस्याभावः साध्यते स्वभावानुपलम्भान्नान्यस्य । यस्तु पिशाचादिना प्रतिबन्धवतोऽन्यत्वमापादितः कुम्भः स नैव निषिध्यते । इह चैकज्ञानसंसर्गी भासमानोऽर्थस्तज्ज्ञानं च पर्युदासवृत्त्या घटस्यासत्त्वानुपलब्धिश्चोच्यते । ननु चैवं केवलभूतलस्य प्रत्यक्षत्वात्तद्रूपः कुम्भाभावोऽपि प्रत्यक्षसिद्ध एवेति किं स्वभावानुपलब्ध्या साध्यम् । सत्यमेवैतत् । तथापि यः सर्वं सर्वत्र विद्यत इति क्रमवशाभिनिविष्टान्तःकरणः कापिलादिः प्रत्यक्षप्रतिपन्नेऽपि कुम्भाद्यभावे भ्राम्यति । सोऽनुपलम्भं निमित्तीकृत्य प्रतिपाद्यते । अनुपलम्भनिमित्तो हि सत्त्वरजस्तमःप्रभृतिषु परस्परमसद्व्यवहारस्त्वयाऽपि प्रतिपन्नः । अन्यथा तेषां साङ्कर्यापत्तेः । स चानुपलम्भोऽत्राप्यस्तीति निमित्तप्रदर्शनेनाभावव्यवहारः प्रसाध्यते । दृश्यते हि गरीयसि गवि सास्नादिमत्त्वात्प्रवर्तितगोव्यवहारो मूढमतिर्लघीयसि गवि तस्मादृशेऽपि न गोव्यवहारं प्रवर्तयति । लघीयसि वा गवि प्रवर्तितो गोव्यवहारो न गरीयसीति । स निमित्तप्रदर्शनेन गोव्यवहारे प्रवर्त्यते । सास्नादिमत्त्वमात्रनिमित्तको हि गोव्यवहारस्त्वया प्रवर्तितः पूर्वं न लघीयस्त्वादिनिमित्तक इति । तथा महत्यां शिंशपायां प्रवर्तितवृक्षव्यवहारो मूढमतिः स्वल्पायां तस्यां तद्व्यवहारमप्रवर्तयन् शिंशपात्वलक्षणतन्निमित्तोपदर्शनेन तत्र प्रवर्त्यते । वृक्षोऽयं शिंशपात्वादिति ॥ ९२ ॥

**व्यापकानुपलब्धिर्यथा नास्त्यत्र प्रदेशे पनसः पादपानुपलब्धेरिति ॥ ९३ ॥**

पनसत्वं हि पादपत्वेन व्याप्तं तदभावे तद्व्याप्यस्य पनसत्वस्याप्यभावः । एवं नास्त्यत्र शिंशपा वृक्षाभावादित्यादीन्यप्यवसेयानि ॥९३॥

**कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्तिकं बीजमंकुरानवलोकनादिति ॥ ९४ ॥**

अप्रतिहतशक्तिकत्वं हि कार्यं प्रत्यप्रतिबद्धसामर्थ्यत्वं कथ्यते। एतच्च विशेषणं बीजमात्रेण व्यभिचारपरिहारार्थम्। अङ्कुरानुपलम्भेऽपि बीजमात्रसद्भावस्याविरोधादिति । एवं नास्त्यत्र परासुशरीरे चैतन्यं वाक्कियाकारभेदानामनुपलम्भादित्यादीन्युदाहरणान्यूह्यानि ॥ ९४ ॥

**कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्रभृतयो भावास्तत्त्वार्थश्रद्धानाभावादिति ॥ ९५ ॥**

प्रशमप्रभृतयो भावा इति, प्रशमसंवेगनिर्वेदानुकम्पास्तिक्यलक्षणा जीवपरिणामविशेषाः । तत्त्वार्थश्रद्धानाभावादिति, तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तस्याभावात् । अत्र तत्त्वार्थश्रद्धानलक्षणस्य कार्यस्याभावः कुतोऽपि देवद्रव्यभक्षणादेः पापकर्मणः सकाशात्सिद्ध्यत्सत्तत्त्वार्थश्रद्धानकार्यभूताना प्रशमादीनामभावमवगमयति । एवं नास्त्यत्र धूमो धूमध्वजाभावादित्यादीन्यपि लोकप्रसिद्धान्युदाहरणान्यवसेयानि॥९५॥

**पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्त्तान्ते स्वातिनक्षत्रं चित्रोदयादर्शनादिति ॥ ९६ ॥**

व्यक्तमदः । एवं न भविष्यति मुहूर्त्तान्ते शकटं कृत्तिकोदयानुपलब्धेरित्यादीनि ॥ ९६ ॥

**उत्तरचरानुपलब्धिर्यथा नोदगमत्पूर्वभद्रपदा मुहूर्तात्पूर्वमुत्तरभद्रपदोद्गमानवगमादिति ॥ ९७॥**

स्पष्टमेतदपि । एवं नोदगाद्भरणिर्मुहूर्त्तात्प्राक्कृत्तिकोदयानुपलब्धेरित्यादीन्यवगन्तव्यानि ॥ ९७ ॥

## सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलब्धेरिति ॥ १८ ॥

सम्यग्ज्ञानसहचरं हि तत्त्वार्थश्रद्धानस्वभावं सम्यग्दर्शनं तच्च प्रशमादिकार्यानुपलब्ध्या क्वचित् पुंसि निवर्तमानं स्वसहचरं सम्यग्ज्ञानं निवर्तयति । एवं नास्त्यत्र प्रशमतुलायामुन्नामानुपलम्भात् सन्ति जीवानां रूपरसगन्धाः स्पर्शानुपलब्धेरित्याद्यपि द्रष्टव्यम् । इतीयमविरुद्धानुपलब्धिः सप्तप्रकारा प्रतिषेधप्रतिपत्तौ सोदाहरणा सूत्रितप्रतिषेध्येन वस्तुसम्बन्धिना स्वभावकार्यादिना साक्षादनुपलम्भद्वारेण प्रदर्शिता । परम्परया पुनरेषाऽपि निपुणैर्लक्ष्यमाणैरनेकधा सम्पद्यते । तद्यथा—कार्यव्यापकानुपलब्धिः, कार्यव्यापकव्यापकानुपलब्धिः, कारणकारणानुपलब्धिः, कारणव्यापकानुपलब्धिः, कारणव्यापकव्यापकानुपलब्धिः, सहचरकारणानुपलब्धिः, सहचरकार्यानुपलब्धिः, सहचरव्यापकानुपलब्धिः, सहचरव्यापककारणानुपलब्धिः, सहचरव्यापककारणकारणानुपलब्धिः, सहचरव्यापककारणव्यापकानुपलब्धिश्चेति, तत्र कार्यव्यापकानुपलब्धिर्यथा—नास्त्येकान्तनिरन्वयं तत्त्वं तत्र क्रमाक्रमाभावादिति । अत्र हि सौगताभिमतमेकान्तनिरन्वयं तत्त्वं प्रतिषेध्यं तस्य कार्यमर्थक्रियाकारित्वं तद्व्यापकं क्रमाक्रमस्वरूपं तच्चानेकान्ततत्त्व इव निरन्वयैकान्ततत्त्वेऽनुपलभ्यमानं स्वव्याप्यमर्थक्रियाकारित्वं निवर्तयति तदपि निवर्तमानं कारणत्वेन कल्पितं निरन्वयैकान्ततत्त्वं प्रतिषेधति । यथा—चैकान्तनिरन्वयान्वयपक्षयोरर्थक्रियाकारित्वं नोपपद्यते तथाऽग्रेऽनेकान्तनिष्ठायां विस्तरमभिधास्याम इति । कार्यव्यापकव्यापकानुपलब्धिर्यथा—नास्ति निरन्वयैकान्ततत्त्वं, तत्र परिणामविशेषस्याभावादिति । तत्रापि प्रतिषेध्यस्य निरन्वयैकान्ततत्त्वस्य कार्यमर्थक्रियाकारित्वं तद्व्यापकं क्रमाक्रमस्वरूपं तस्य च व्यापकं परिणामविशेषः " परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् ॥ न च सर्वथा विनाशः परिणामस्तद्विदा

१ 'तथा' इति प पुस्तके पाठः ।

मिष्टः ॥ १ ॥ " इत्येवं लक्षणलक्षित, तस्य च निरन्वयैकान्ततत्त्वेऽनुपलम्भादभाव इति। कारणकारणानुपलब्धिर्यथा—क्वचिदात्मनि नास्ति संसारो मिथ्यात्वाद्यभावादिति । प्रतिषेध्यस्य हि ससारस्य कारणं कर्म तस्य च कारणं मिथ्यात्वाविरतिप्रमादकषाययोगास्तेषा चात्राभाव इति । कारणव्यापकानुपलब्धिर्यथा—भस्मादिषु प्राणादयो न सन्ति जीवत्वसामान्याभावादिति । अत्र हि प्रतिषेध्याः प्राणादयस्तेषा कारणं जीवस्तद्व्यापकं जीवत्वसामान्यं तस्य चात्राभावः । इदं चात्रोदाहरणं, सांख्यादेर्नास्ति निर्वृत्तिः सम्यग्दर्शनज्ञानचारित्राणामभावादिति । अत्र निषेध्याया निर्वृत्ते कारणं मुक्तिमार्गस्तस्य च व्यापकं सम्यग्दर्शनादित्रयं तस्य चाभाव सांख्यादौ । ज्ञानमात्रादेरेव मोक्षकारणतया तेनाभ्युपगमात् । यथा च ज्ञानमात्रादेर्न मोक्षकारणत्व तथोपरिष्टादुपपादयिष्यते । कारणव्यापकव्यापकानुपलब्धिर्यथा—सांख्यादेर्नास्ति निर्वाण विशिष्टपरिणामाभावादिति । अत्र हि निषेध्यस्य निर्वाणस्य कारणं मुक्तिमार्गस्तद्व्यापकं सम्यग्दर्शनादित्रयं तद्व्यापकश्च प्राग्निर्णीतो विशिष्टः परिणामस्तस्यात्राभावः । सांख्यादिनात्मनोऽपरिणामित्वाभ्युपगमात् । सहचरकारणानुपलब्धिर्यथा—नास्य मत्यज्ञानादिकमस्ति दर्शनमोहोदयाभावादिति । मत्यज्ञानादिकस्य हि निषेध्यस्य सहचर मिथ्यादर्शनं तस्य कारणं दर्शनमोहोदयस्तस्यात्राभावः। सहचरकार्यानुपलब्धिर्यथा—मत्यज्ञानादिकं मम नास्ति नास्तिकाध्यवसायाभावादिति । अत्रापि निषेध्यस्य मत्यज्ञानादे. सहचरं मिथ्यादर्शनं तस्य कार्यं नास्तिकाध्यवसायः, तस्य च स्वसंवेदनसिद्धो मय्यभाव इति । सहचरव्यापकानुपलब्धिर्यथा—नास्त्यस्य सम्यग्ज्ञानं तत्त्वश्रद्धानाभावादिति । प्रतिषेध्यस्य हि सम्यग्ज्ञानस्य सहचरं सम्यग्दर्शनं तस्य व्यापकं तत्त्वश्रद्धानं तस्याऽत्राभाव । सहचरव्यापककारणानुपलब्धिर्यथा—नास्त्यभव्ये सम्यग्ज्ञानं दर्शनमोहोपशमाद्यभावादिति । अत्र निषेध्यस्य सम्यग्ज्ञानस्य सहचरं सम्यग्दर्शन तस्य

व्यापकं तत्त्वार्थश्रद्धानं तस्य कारणं दर्शनमोहोपशमादिकं तस्य चाभव्ये सुप्रतीत एवाभावः समयवेदिनाम् । सहचरव्यापककारणकारणानुपलब्धिर्यथा–नास्त्यभव्ये सम्यग्ज्ञानं यथाप्रवृत्तादिकरणकालभाविलब्ध्याद्यभावादिति । अत्रापि प्रतिषेध्यस्य सम्यग्ज्ञानस्य सहचरं सम्यग्दर्शनं तद्व्यापकं तत्त्वश्रद्धानं तस्य कारणं दर्शनमोहोपशमादि तस्यापि कारणं यथाप्रवृत्तादिकरणकालभाविलब्ध्यादिकं तस्य चाभव्यप्राणिन्यभावः प्रकट एव । सहचरव्यापककारणव्यापकानुपलब्धिर्यथा–नास्त्यभव्ये सम्यग्ज्ञानं दर्शनमोहोपशमादिसामान्याभावादिति । सम्यग्ज्ञानमिह प्रतिषेध्यं तत्सहचरं सम्यग्दर्शनं तद्व्यापकस्तत्त्वार्थश्रद्धानं तत्कारणं दर्शनमोहोपशमादि तद्व्यापकं च दर्शनमोहोपशमादित्वसामान्यं तस्याऽभव्ये देहिन्यभावः सुव्यक्त एव । तदित्थं सूत्रोक्तैः सप्तभिर्भेदैः सहामी मीलिता एकादशभेदा अविरुद्धानुपलब्धेरष्टादश सवृत्ता इति ॥ ९८ ॥

इत्थं भेदप्रभेदपरिकरितामविरुद्धानुपलब्धिमभिधाय सम्प्रति विरुद्धानुपलब्धिमभिधातुकामस्तत्प्रकारप्रकटनार्थं तावदाह—

विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधेति ॥ ९९ ॥

अविरुद्धानुपलब्धिः पूर्वोक्ता प्रतिषेधसाधिका सप्ताष्टादशप्रकारा वा । विरुद्धानुपलब्धिः पुनरियं विधिसाधिका पञ्चप्रकारा चेत्यनयोर्विशेषः ॥ ९९ ॥

कुतोऽस्याः पञ्चप्रकारत्वमित्याह—

विरुद्धकार्यकारणस्वभावव्यापकसहचरानुपलम्भभेदादिति ॥ १०० ॥

विधेयेनार्थेन सह विरुद्धानां कार्यकारणस्वभावव्यापकसहचराणां येऽनुपलम्भा अनुपलब्धयस्तैः कृत्वा भेदो विशेषस्तस्मात् । ततश्च

१ आदिशब्दादशुभानिवृत्तिग्रहणम् ।

विरुद्धकार्यानुपलब्धिः, विरुद्धकारणानुपलब्धिः, विरुद्धस्वभावानुपलब्धिः, विरुद्धव्यापकानुपलब्धिः, विरुद्धसहचरानुपलब्धिश्च इति विरुद्धानुपलब्धिर्विधिसिद्धौ पञ्चधा सिद्धा भवति ॥ १०० ॥

अथ क्रमेणोदाहरणान्याह—

**विरुद्धकार्यानुपलब्धिर्यथा, अत्र शरीरिणि रोगातिशयः समस्ति नीरोगव्यापारानुपलब्धेरिति॥१०१॥**

यथाशब्दोऽत्रोत्तरत्र च पूर्ववत् । विधेयस्य हि रोगातिशयस्य विरुद्धमारोग्यं तस्य कार्यं विशिष्टो व्यापारस्तस्यानुपलब्धिरियम् ॥१०१॥

**विरुद्धकारणानुपलब्धिर्यथा विद्यतेऽत्र प्राणिनि कष्टमिष्टसंयोगाभावादिति ॥ १०२ ॥**

अत्र विधेयं कष्टं तद्विरुद्धं सुखं तस्य कारणमिष्टसंयोगस्तस्यानुपलब्धिरेषा ॥ १०२ ॥

**विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमनेकान्तात्मकमेकान्तस्वभावानुपलम्भादिति ॥ १०३ ॥**

वस्तुजातमन्तरङ्गो बहिरङ्गश्च विश्ववर्त्ती पदार्थसार्थः । अम्यते गम्यते निश्चीयत इत्यन्तो धर्म्मः । न एकोऽनेकोऽनेकश्चासावन्तश्चानेकान्तः स आत्मा स्वभावो यस्य वस्तुजातस्य तदनेकान्तात्मकं सदसदाद्यनेकधर्म्मात्मकमित्यर्थः । अत्र हेतुमाह—एकान्तस्वभावस्य सदसदाद्यन्यतरधर्म्मावधारणस्वरूपस्यानुपलम्भादनुपलब्धेः । अत्र विधेयेनानेकान्तात्मकत्वेन सह विरुद्धः सदाद्येकान्तस्वभावस्तस्य चानुपलम्भः प्रत्यक्षादिप्रमाणेन ग्रहणाभावात्सुप्रसिद्धः । तथा हि, स्वरूपेण सन्तः पररूपेणासन्तः सामान्यविशेषात्मका नित्यानित्याद्यनेकधर्म्माणः पदार्थाः प्रत्यक्षेण प्रतीयन्ते । न खलु भावमात्रमभावमात्रं भावाभावौ

वा स्वतन्त्रा कदाचन प्रत्यक्षेण समधिगम्यते । न च सामान्यमात्रं विशेषमात्रं सामान्यविशेषौ वा स्वतन्त्रौ तेन निश्चीयते । नापि स्थिरैकरूपं तत्त्वं क्षणिकैकरूपं तदुभयं वा स्वतन्त्रं तेन प्रतीयते । तथा न विज्ञानमेव प्रत्यक्षग्राह्यम् । नाप्युपप्लवमात्रम् । तथाप्रतीतेरभावात् । प्रत्यक्षभावितविषयत्वेनानुमानमपि सत्यैकान्तगोचरं न सम्भवतीति । तेनापि न तत्सिद्धिः । यथाऽत्र प्रत्यक्षानुमानयोरेकान्तग्राहकत्वाभावस्तथा प्रमाणविषयपरिच्छेदावसरे सविस्तरमभिधास्यते ॥ १०३ ॥

## विरुद्धव्यापकानुपलब्धिर्यथा, अस्त्यत्र छाया, औष्ण्यानुपलब्धेरिति ॥ १०४ ॥

विधेयया छायया विरुद्धस्तापस्तद्व्यापकमौष्ण्यं तस्यानुपलब्धिरियम् ॥ १०४ ॥

## विरुद्धसहचरानुपलब्धिर्यथा, अस्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनानुपलब्धेरिति ॥ १०५ ॥

विधेयेन मिथ्याज्ञानेन विरुद्धं सम्यग्ज्ञानं तत्सहचरं सम्यग्दर्शनं तस्यानुपलब्धिरभाविनि । एते च पञ्च विरुद्धानुपलब्धिभेदाः पूर्वोक्ताविरुद्धानुपलब्धिभेदाष्टकमध्ये यदा प्रक्षिप्यन्ते तदा जातमनुपलब्धिलक्षणहेतुचक्रं त्रयोविंशतिभेदमभ्यमानम् ॥ १०५ ॥

ततश्च—

हेतुरनुपलब्ध्याख्यो निषेधद्वारतः स्फुटम् ॥
निषेधविधिसंसिद्धिं विधत्ते निराकुलम् ॥ ५२२ ॥

सा यत्नक्षिपनाकयाऽनिरचिरं सद्धेतुचक्रद्वयं
पक्षत्याक्षिपुरीणयोर्युगलकेनाकृष्यमाणं बलात् ॥
एतत् यद्यनुमानमानसुरथं सद्वाग्युदारोत्तना-
वारोहन्ति गुराधिभूमिपतयस्तेषां जयश्रीस्तनौ ॥ ५२३ ॥

निर्णीतं तावदादौ स्मरणमथ कृता प्रत्यभिज्ञाव्यवस्था
तर्काख्यं मानमग्रे प्रकटितमखिलैर्दूषणैर्दूरमुक्तम् ॥
अङ्गीकृत्याऽनुमानं तदनु च विहितः सुप्रतीतो विचारः
सारासारज्ञविचैस्तदिदमिह महातार्किकैस्तर्कणीयम् ॥ ५२४ ॥

श्रीमुनिसुव्रतदेवः सुराधीशविहितपदसेवः ॥
निर्धूय विघ्नपटलीं क्रियादभीष्टार्थसिद्धिं नः ॥ ५२५ ॥

मद्यं सद्यः सुरविपटिनां सौरभोद्गारसारं
पायं पायं सह सहचरैः किन्नरीणां कुलानि ॥
येषामद्याप्यनुपमयशास्यादरेणामराद्रौ
गायन्त्यस्मास्त्वभिमतकृतः सन्तु ते तीर्थनाथाः ॥ ५२६ ॥

सद्वृत्ततापरिगताः स्फुटकान्तिभाज
सन्तापतान्तिपरिमर्दनबद्धकक्षाः ॥
मुक्ता इवेह हृदयं न हरन्ति कस्य
श्रीमन्मुनीन्द्रमुनिचन्द्रगुरोर्गिरस्ताः ॥ ५२७ ॥

इति कर्मप्रकृतिप्राभृताम्भोजखण्डाविर्भावनैकभास्करसमस्तसुविहितजनोत्तंसश्रीमन्मुनिचन्द्रसूरिचरणतामरसोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे स्मरणप्रत्यभिज्ञानतर्कानुमानस्वरूपनिर्णयो नाम तृतीयः परिच्छेदः ॥ ३ ॥

---

१ 'विचै' इति प. पुस्तके पाठः ।

# ॥ अथ चतुर्थः परिच्छेदः ॥



सम्यग्ज्ञोविदकर्णकोटरकुटीरडयेषु कस्तूरिका
पङ्कन्यासकतामुपैति परमा य श्रूयमाण क्षणात् ॥
न्यायन्यासनिरङ्कुश कथमपि प्राप्तो न चान्यत्कृर्ति
तार्थेभ्य परमागम स जयति श्रीवीतरागादित ॥५२८॥

परोक्षस्य प्रमाणस्य स्मरणादिप्रकारचतुष्टय स्पष्टमुपदिश्येदानीमागमाख्य पञ्चमप्रकार बहुवक्तव्यत्वात्परिच्छेदान्तरेणोपदिशन्निदमाह—

**आप्तवचनादाविर्भूतमर्थसवेदनमागम इति ॥ १ ॥**

आप्त प्रतिपादयिष्यमाणस्वरूप, तेन प्रणीत वचनमाप्तवचन तस्मादाविर्भूतमुत्पन्नमर्थसवेदनम्। आगम्यन्ते मर्यादयाऽवबुध्यन्तेऽर्था अनेनेत्यागम इति ॥ १ ॥

ननु यद्यर्थसवेदनमागमस्तर्हि कथमाप्तवचनात्मकोऽसौ सिद्धान्तादिषु प्रसिद्ध इत्याशङ्क्याह—

**उपचारादाप्तवचन चेति ॥ २ ॥**

प्रतिपादकत्वादस्य आप्तवचन कारणमिति कारणे कार्योपचारादाप्तवचनमप्यागम इत्युच्यते।

अत्रानुमानप्रमिता प्रवेश शाब्दप्रमाणस्य समाश्रयन्त ॥
शाक्यस्य शिष्या स्फुरितोल्पपं युक्ती स्वपक्षे परिकीर्तयन्ति ॥५२९॥

तथा हि यदस्मादभिन्नगोचरमभिन्नजनकसामग्रीसमन्वित च तत्तस्मान्न भिद्यते। यथा कुतश्चिदनुमानादनुमानान्तरम्। अनुमानादभिन्नगोचरोऽभिन्नजनकसामग्रीसमन्वितश्च शब्द इति। किंच शब्दो

शब्दस्यानुमानेऽन्तर्भावयतां बौद्धानां खण्डनम्।

---

१ प्र न ४।४।

विवक्षायामेव प्रमाणम् । न बाह्ये, व्यभिचारात् । न ह्यङ्गुल्यग्रे हस्तियूथशतमास्त इत्यादिशब्दाना बाह्येऽर्थे प्रामाण्यमुपपद्यते । प्रतीतिविरोधात् । तस्या चैतस्य लिङ्गतैव युक्ता । तदुक्तम्—" **विवक्षाया च गम्यायां विस्पष्टैव त्रिलिङ्गता** " इति । त्रिभी रूपैरुपलक्षितं लिङ्गं त्रिलिङ्ग तस्य भावस्तत्ता ।

इत्येवमेते **सुगतस्य** शिष्याः शब्दानुमानत्वमुदाहरन्ति ॥
मनोरथोऽयं परिपूर्तिमेषां गन्ता न **जैने**ष्ववधानवत्सु ॥ ५३० ॥

तथा हि यत्तावदभ्यधायि यद्यस्मादभिन्नगोचरमित्यादि तन्नानवद्यम् । अभिन्नगोचरत्वस्य शब्दानुमानयोरसिद्धेः । अर्थमात्र हि शब्दस्य गोचरोऽनुमानस्य तु साध्यधर्मविशिष्टो धर्मीति । अपि चाऽनयोर्गोचराभेदः सामान्यमात्रविषयतया तद्भेदमात्रगोचरतया वा भवेत् । न तावदाद्यः पक्षः । भवतामभिमतस्यान्यव्यावृत्तिस्वभावस्य सामान्यमात्रस्य निषेध्यमानत्वात् । नापि द्वितीयः । प्रत्यक्षस्याऽप्यनुमानत्वापत्तेः । तथा तद्भेदस्य तत्राऽप्यविशेषात् । तन्नाऽभिन्नगोचरत्वाच्छब्दस्यानुमानत्वमुपपन्नम् । नाप्यभिन्नजनकसामग्रीसमन्वितत्वात् । अनुमानजनकसामग्र्याः शब्दे सम्भवाभावात् । पक्षधर्म्मत्वादिरूपत्रयस्वभावा हि सामग्र्यनुमाने भवद्भिरभिमन्यते । सा च शब्दे न सम्भवति । तथा हि न तावच्छब्दस्य पक्षत्वं युज्यते । धर्मिण एवात्र कस्यचिदसम्भवात् । अत्र हि धर्म्मी शब्दोऽर्थो वा स्यात् । न तावच्छब्दः । यतस्तत्र शब्दः पक्षधर्मोऽभवन्स्वलक्षणस्वरूपतया वा भवेत्सामान्यरूपतया वा । नाद्यः पक्षः । एकस्यैव शब्दस्वलक्षणस्य धर्म्मधर्म्मिरूपपरस्परविरुद्धस्वभावद्वयायोगात् । नापि द्वितीयः । शब्दत्वसामान्यस्य भवन्मते परमार्थसतोऽसम्भवात् । कल्पितस्य तु सत्त्वेऽपि न गमकत्वम् । अर्थो ह्यर्थं गमयतीति भवद्भिरेव स्वीकरणात् । भवतु वा यथा कथंचिच्छब्द. पक्षधर्मः । तथाऽप्येतै. शब्दस्य धर्मिणः किमर्थविशिष्टत्वं साध्यतेऽर्थप्रत्यायनशक्तियुक्तत्वमर्थप्रतीतिविशिष्टत्वं वा । तत्र प्रथम-

त्र भगवान् श्रीवर्धमानाभिधः ॥ एतेनैव समानसर्वमहिमा तीर्थाधिनाथस्तथा, भावी भारतवर्षमरतकमणिः श्रीपद्मनामाह्वयः ॥ १ ॥" इत्यादौ वर्धमानपद्मनाभादिशब्दा वर्त्तमानास्तदर्थस्त्वतीतो भावी चेति कुतोऽर्थाना शब्दान्वेतृत्वम् । अन्वयाभावे च व्यतिरेकस्याऽप्यभावः, तत्पूर्वकत्वात्तस्य । यच्चोक्त शब्दो विवक्षायामेव प्रमाणमित्यादि । तदपि तर्करहस्यानभिज्ञस्य व्याहृतम् । विवक्षायां शब्दप्रमाणस्यासम्भवात् । तन्मात्रविषयत्वे ह्यर्थे प्रवृत्त्यादिहेतुत्वानुपपत्तिः । तदविषयत्वात् । यद्यद्विषय न भवति न तत्तत्र प्रवृत्त्यादिहेतुर्यथा रूपज्ञान रसाविषय रसे । न भवति च वहिरर्थविषयो भवन्मते शब्द इति । न चैतदुपपन्नम् । प्रतीतिविरोधात् । ततो वहिरर्थगोचरत्वमेव शब्दस्य सङ्गतिमङ्गति[1] । यत्खलु यत्र प्रवृत्त्यादिहेतुस्तत्तद्गोचरं यथा रसज्ञानं रसप्रवृत्त्यादिहेतू रसगोचरम् । वहिरर्थे प्रवृत्त्यादिहेतुश्च शब्दः । न चात्र हेतुरसिद्ध. । प्रत्यक्षवच्छब्दाद्बहिरर्थे प्रवृत्त्यादिप्रतीतेः । यथा हि प्रत्यक्षात्प्रतिपत्तृप्रणिधानादिसामग्रीसापेक्षात्प्रत्यक्षेऽर्थे प्रवृत्त्यादिप्रतीतिः सकललोकप्रसिद्धा तथा सङ्केतादिसामग्रीसापेक्षाच्छब्दाच्छब्दार्थेऽपीति । न चार्थेऽर्थिनामर्थित्वादेव प्रवृत्ते· शब्दोऽप्रवर्त्तक इति कीर्त्तनीयम् । प्रत्यक्षस्याप्येव प्रसक्ते । तद्गोचरेऽप्यर्थेऽर्थित्वादेव प्रवृत्तिप्रतीतेः । परम्परयाऽत्र प्रवर्त्तकत्वे शब्देऽपि तथास्तु । विशेषाभावात् । का चेयं विवक्षा नाम । यद्गोचरत्वं शब्दस्य शब्द्यते । किं शब्दोच्चारणेच्छामात्रमनेनामुमर्थं प्रतिपादयामीत्यभिप्रायो वा । आद्यकल्पनाया वक्तृश्रोत्रोः शास्त्रश्रवणप्रणयनादौ प्रवृत्तिर्न प्राप्नोति । न खलु कश्चिद्बालिशः शब्दनिमित्तेच्छामात्रप्रतिपत्त्यर्थं शास्त्रं प्रणेतुं श्रोतुं वा प्रवर्त्तते । दशदाडिमादिवाक्यै· सह सकलवाक्यानामविशेषापत्तिश्च । सर्वेषा स्वप्रभवेच्छामात्रकानुमापकत्वाविशेषात् । अथ द्वितीयकल्पः । तथा हि—"पादपार्थविवक्षावान्पुरुषोऽयं प्रतीयते ॥ वृक्षशब्दप्रयो-

1 गच्छति ।

कीदृशः पुमानाप्तः स्याद्यद्वचननिबन्धनमर्थावबोधनमागमप्रमाणतया सम्मतमित्याशङ्क्याप्तलक्षणमाह—

**अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्त इति ॥ ४ ॥**

अभिधेय वस्तु रत्ननिधानरत्नसानुप्रभृतिकं यथावस्थितं येन स्वरूपप्रकारेण व्यवस्थितं य. कश्चिज्जानीते प्रत्यक्षादिप्रमाणतो निश्चिनोति यथाज्ञानं ज्ञानानतिक्रमेणाभिधत्ते स आप्त. । आप्यते उपदिष्टोऽर्थोऽस्मादित्याप्त इति व्युत्पत्तेः ॥ ४ ॥

अथ कस्मादेवंविधस्यैवाप्तत्वमित्याशङ्क्याह—

**तस्य हि वचनमविसंवादि भवतीति ॥ ५ ॥**

यो हि यथावस्थिताभिधेयवस्तुपरिज्ञाने निपुणः परिज्ञानानुसारेण तदुपदेशकुशलश्च तस्य हि यस्माद्वचनमविसंवादि विप्रलम्भपरिभ्रंशत. संवादिकं भवति नाऽन्यस्य । ततो यथोक्तलक्षणलक्षितस्यैवाप्तत्वम् । एतेन च "यो यस्यावञ्चकः स तस्याप्त इति" ऋष्यार्यम्लेच्छसाधारणं वृद्धप्रणीतमाप्तलक्षणमनूदितं भवति ॥ ५ ॥

कतिविधोऽयमाप्त इत्याह—

**स च द्वेधा लौकिको लोकोत्तरश्चेति ॥ ६ ॥**

लोके सामान्यजन्यरूपे भवो लौकिकः । लोकादुत्तर. प्रधानं मोक्षमार्गोपदेशकत्वाल्लोकोत्तरश्चाप्त इति ॥ ६ ॥

तावेव निदर्शयन्नाह—

**लौकिको जनकादिर्लोकोत्तरस्तु तीर्थंकरादित इति ॥ ७ ॥**

लौकिक आप्तो जनकादिः। आदिशब्देन जनन्यादिपरिग्रहः । लोको-

चर पुनराद्यस्तीर्थकरानिति । आदिशब्देन गणधरप्रत्येकबुद्धादीनां ग्रहणम् । तत्र येनेह प्रबलयुक्तिकीलिकाकलापाक्रान्तकर्कशानेकप्रमेयरज्जुसहस्रोपनिबद्धप्रचुरप्रकरणफलककोटिघटनापिशङ्कटेन गिरिरमरीचिमण्डलोज्ज्वलप्रचुररचिमञ्चयसुचारुचारित्रोच्चकूपस्तम्भावष्टम्भमिष्टमहिष्ठोपनायमाननानाविधोपद्रवप्रबन्धप्रसनावितानसावधानविशुद्धबुद्धिनिधानसद्गुरुकर्णधारप्रेरणीयेन प्रबुद्धधीनरसहस्रप्रेर्यमाणानेकप्रकारनयारित्रनिकुरम्बेन सूरिभङ्गभङ्गिगमग्राममहाकेतुकोटिसङ्कटेन परमार्थोपार्जनोपजायमानासमानमनोरथजनकमेदनीयेन नितान्तदुष्टवाचाटतीर्थिकदुर्दुरुकाकम्पिकम्पियमाणमहाकोलाहलकालिकावातेनाऽप्यक्षोभ्यमाणेन प्रतिक्षणविचरणक्षमामूल्यमाणसूक्ष्मकर्मादिविचारप्रपञ्चप्रचुरगुणकव्रातसन्तानापूरिततत्त्वार्थमयसितपटेन यानपात्रेणेव जन्मजरामरणवारनीरनिरन्तरमनवरतोपजायमानमनोरथमहोर्मिमालाव्याकुलमानसिकातिदुर्वाररौद्रपरिणाममहावेलासहस्रहेतुचतुष्कषायपातालकलशमल सलिल मद्धिपुलप्रियविप्रयोगप्रमुखदुःखनिकरभयङ्करमकरपरम्परापरिचयदुरालोकमतिनिकरमकरकेतुतिमिङ्गिलकरालनक्रदुरान्तमूढजन्तुच्छमत्स्यसन्दोहमुखप्रगिरत्यन्तकालकूटच्छटालाञ्छितकुक्षिकुहरमनेककुग्रहग्राहनिवहममन्दप्रवादकान्तारीरिवान्तोन्मत्तभ्रमद्भूरिजलजन्तुसन्तानमतिदुरतिक्रममहामोहावर्तरौद्रं भवसमुद्रं भविनस्तरन्ति तत्तीर्थम् । प्रवचनमिति यावत् । ततश्चाचिन्त्यमाहात्म्यमहापुण्यापराभिधानतीर्थकरनामकर्मविपाकादेव विधितीर्थकरणशीलास्तीर्थकरश्रीवर्धमानजिनप्रमुखाः पुरुषविशेषा इति ।

अत्राहुर्जैमिनीयाः —

रागद्वेषविनिर्मुक्तः पुरुषविशेषमनन्तरं ... नास्ति वेदस्य पौरुषेयत्वादिना मीमांसकानां पूर्वपक्षं सविस्तरम् प्रतिपादयन्नाह ।

> रागद्वेषाकलुषितमतिर्मर्त्यरत्नास्ति कश्चित्
> यः स्याद्वादी वद कथमहो तद्वचः स्यात्प्रमाणम् ।
> वेदस्तस्मात् पुरुषवचनालाञ्छनोन्मुक्तमूर्ति-
> प्रामाण्यश्रीनिलयनसमप्रेमपात्रं समस्तु ॥५२॥

न च पुरुषवचनालाञ्छनोन्मुक्तमूर्तित्व

---

1 प्रत्येकं बाह्यवृषभादिकारणमभिसमीक्ष्य बुद्धाः प्रत्येकबुद्धाः ।

तस्यासिद्धम् । तथाहि वेदोऽपौरुषेयः कर्तृस्मरणयोग्यत्वे सत्यस्मर्यमाणकर्तृकत्वाद्यदित्थं तदित्थं यथाकाश इति । न चात्र हेतोरसिद्धिः । यदि हि वेदे कर्त्ता भवेत्तदा वेदार्थानुष्ठानकालेऽनुष्ठातृणामनिश्चितवेदप्रामाण्याना तत्प्रमाणताप्रसिद्धये तद्गोचरस्मरणमाविर्भवेत् । ये हि यच्छास्त्रार्थानुष्ठाने प्रवर्त्तन्ते ते तच्छास्त्रकर्त्तारं नियमेन स्मरन्ति यथाऽष्टकाद्यर्थानुष्ठानार्थिनस्तत्प्रणेतारं मनुम् । वेदविहितार्थानुष्ठाने प्रचुरद्रविणव्ययोत्पन्नपरिश्रमनिवर्त्तनीयाग्निहोत्रादिकर्मलक्षणे प्रवर्त्तन्ते च प्रेक्षाशालिनोऽतस्तेषा महती वेदकर्तृस्मरणापेक्षा । ते ह्यनुपलब्धफलेषु नानाविधकर्मस्वेव निःसन्देहाः प्रवर्तेरन्, यदि तेषां तद्विषय. सत्यतानिश्चयः सम्पन्नो भवेत् । न चासौ तदुपदेष्टुः स्मरणाभावे युज्यते । पित्राद्युपदेशवत् । यथैव हि पित्रादिकमुपदेष्टारं स्मृत्वा स्वयमदृष्टफलेष्वपि कर्मसु तदुपदेशात्प्रवर्त्तन्ते पित्रादिभिरेतदुपदिष्टं तेनानुष्ठीयत इति । एवं वैदिकेष्वपि कर्मस्वनुष्ठीयमानेषु कर्त्तुः स्मरणं स्यात् । न चाभियुक्तानामपि वेदार्थानुष्ठातृणा त्रैवर्णिकाना तत्स्मरणमस्ति, अतोऽसौ तत्र नास्तीति निश्चीयते । कर्तृस्मरणाभावश्च छिन्नमूलत्वात् । स्मरणस्य ह्यनुभवो मूलम् । न चासौ वेदकर्तृविषयत्वेन विद्यते । तत्कथं तत्स्मरणसम्भावनाशङ्काऽपि । न च रचनावत्त्वेनात्र भारतादिवत्कर्तृसद्भावप्रसिद्धेर्नास्य छिन्नमूलत्वमित्यभिधातव्यम् । वेदरचनायाः कर्तृपूर्वकरचनाविलक्षणत्वात् । तथा हि—

यद्वोः दुस्सवदुर्भणध्वनिगणः सर्वेन्द्रियागोचर-
स्यार्थस्य प्रतिपादनं प्रतिपदं भङ्गिर्न वा छन्दसाम् ॥
लोकव्याकरणाप्रयुक्तविविधध्वानप्रबन्धस्तथा
मन्त्राणां महिमा स कोऽपि रचना वेदे तदन्या ध्रुवम् ॥५३२॥

ये त्वादृशास्तु न पठन्ति न वाश्रयन्ति
शृण्वन्ति नापि भुवनाद्भुतभूतमेतम् ॥

जानन्ति ते कृशधिया कथमप्रमेय
　　माहात्म्यमस्य रचनासु कथञ्चनापि ॥ ५३४ ॥

न च रचनमात्रस्योपलम्भाद्वेदे कर्त्रनुमानमुपपन्नम् । निश्चस्य बुद्धिमत्पूर्वकत्वानुमानप्रसङ्गतोऽनभिमतसिद्धिप्रसक्ते । ततो यादृशा रचना कर्त्रन्वयव्यतिरेकानुविधायिनी समधिगता तादृश्येव परिदृश्यमाना कर्त्तारमनुमापयन्ती यत्नीकर्त्तव्यम् । अत कथ वेदे तत कर्त्रनुमानशङ्काऽपि सम्भाव्यते । तत सिद्धमिदम् । वैदिकी रचना पौरुषेयी न भवति दृष्टकर्तृकरचनाविलक्षणत्वादन्तरिक्षवदिति । तथा, "वेदस्याध्ययन सर्वं गुर्वध्ययनपूर्वकम् ॥ वेदाध्ययनवाच्यत्वा दधुनाऽध्ययन यथा ॥१॥ अतीतानागतौ कालौ वेदकारविवर्जितौ ॥ कालत्वात्तद्यथा कालो वर्त्तमान समीक्ष्यते ॥ २ ॥" इत्याभ्यामप्यनुमानाभ्या वेदस्यापौरुषेयत्व सिद्धिसरणिमनुसरति । नन्वाप्तप्रणीतत्वाभावे कथमस्य प्रामाण्य स्यादिति चेत् । अपौरुषेयत्वादेवेति ब्रूम । वचनस्य पुरुषदोषानुप्रवेशेनैवाप्रामाण्यप्रसिद्धे । यथोक्तम्—"शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति स्थिति ॥ तदभाव क्वचित्सिद्धो गुणवद्वक्तृकत्वत ॥ १ ॥ तद्गुणैरपकृष्टाना शब्दे सङ्क्रान्त्यसम्भवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रया ॥२॥" इति । तदभाव इति दोषाभाव । क्वचिदिति लौकिके वाक्ये । तद्गुणैरिति गुणवद्वक्तृगुणै । वेदे हि गुणवान्वक्ता दुर्ज्ञानस्तेन दोषाभावोऽप्यशक्यनिश्चय । कर्त्तुरभावे तु सुखेनैव निश्चीयते । तथा हि—"दोषा सन्ति न सन्तीति पौरुषेयेषु युज्यते ॥ वेदे कर्त्तुरभावाद्धि दोषाशङ्कैव नास्ति न ॥ १ ॥" नन्वाप्तगुणसङ्क्रान्त्यैव शब्दस्य प्रामाण्य वेदे चाप्तप्रणीतत्वाभावतस्तत्सङ्क्रान्त्यसम्भवात्कथ प्रमाणत्वमिति चेत् । तदयुक्तम् । यतो नाप्तगुणसङ्क्रान्त्या वेदे प्रमाणत्वम् ।

---

१ श्लो वा अ १ पा १ सू ७ श्लो ३६६ । २ श्लो वा अ १ पा १ सू २ श्लो ६२।६३।

शब्दोच्चारण एवाप्तस्य व्यापारात् । शब्द. पुनरविसंवादिनीं वस्तुप्रतीति विदधानः स्वमहिम्नैव प्रमाणम् । न चैवमनाप्तस्यापि तदुच्चारणमात्रे व्यापाराच्छब्द. स्वमहिम्नैवाऽसत्यार्थप्रतिपत्तिं कुर्वाणोऽप्रमाणमित्यभिधानीयम् । अनाप्तप्रणीतत्वादिदोषाणामप्रामाण्योत्पादनादन्यप्रयोजनाभावात् । आप्तप्रणीतत्वाभावान्न प्रामाण्यमप्रामाण्यं वेत्युच्यते । तदप्यनुचितम् । यत्र हि पुरुषकृता पदानुपूर्वी तत्र तदपेक्षं प्रामाण्यमप्रामाण्य वा भवेत् । वेदानुपूर्व्यास्तु नित्यत्वात्स्वसामर्थ्येनैवाऽर्थावबोधकत्वात्पुरुषनिरपेक्षमेव प्रामाण्यम् । न हि तादृशीमानुपूर्वी कश्चित्कर्त्तु क्षमः । पूर्वसिद्धानुपूर्वीतोऽपूर्वानुपूर्वीकरणे कस्यचित्स्वातन्त्र्यासम्भवात् । कुर्वाणो वा ता तदध्येतृभिरन्यैर्बहुभिर्निवार्यते । तदुक्तम्–" अन्यथा करणे चास्य बहुभ्यः स्यान्निवारणा " इति ।

एवं च—

यत्राश्रान्तं विशदमनस. पक्षपातं श्रयन्ते
यः सर्वेषां शुभफलजुषा कर्मणामेकदीप. ।
थं चाद्यापि प्रगुणितधियो धीयते सर्वतोऽपि
स्वीकर्त्तव्यः स इह विबुधैर्वेद एव प्रमाणम् ॥ ५३५ ॥

चित्तेऽस्तु काममुपयातु ततोऽपि कण्ठं
हे श्रोत्रिय·स्वमतदुर्धरपक्षपातात् ॥
यत्कण्ठतोऽपि पुनरेतदुपैति वक्त्र-
मस्मन्मनः किमपि तेन हृणीयते स्म ॥ ५३६ ॥

तथा हि यत्तावन्यगादि रागद्वेषाकलुषितमतिस्तीर्थकृन्नास्ति कश्चिदित्यादि तद्विस्मरणशीलतां सूचयति देवानांप्रियस्य । सकलत्रिलोकीसमाकलनकौशलशालिनः पुरुषधुरीणस्य पूर्वं सविस्तरमुपपादितत्वात् । य..पे कर्तृस्मरणयोग्यत्वे सत्यस्मर्यमाणकर्तृकत्वादि-

१ मी श्लो. वा. सू. २ श्लो ११०.

स्याद्यवादि तत्रास्मर्यमाणकर्तृकत्वमसिद्धम् । कर्तृस्मरणाभावग्राहकप्रमाणाभावात् । न खलु प्रत्यक्षं तद्ग्राहकम् । प्रतिनियतरूपादिगोचरचारित्वेनाभावे तस्य प्रवृत्त्यसम्भवात् । सम्भवे वाऽभावप्रमाणकल्पनावैफल्यम् । तस्मात्प्रत्यक्षत एव प्रसिद्धेः । अभावप्रमाणात्तत्सिद्धौ तु कर्तृस्मरणाभावगोचरस्याभावप्रमाणस्योत्पत्तौ कारणं वाच्यम् । गृहीत्वा वस्तुसद्भावमित्यादिना सूचितं तत्कारणमस्तीति चेत् । नन्वेवं प्रादुर्भूतमभावप्रमाणं तस्मात् साश्रयमेव प्रमापयेत् । गृहीत्वा वस्तुसद्भावमित्यभिधानात् । अनेन हि निषेध्याधारवस्तुग्रहणमभिदधता भट्टेन निषेध्याभावाश्रयः सूचित एव । अन्यथा प्रतिनियतवृत्तितया कर्तृस्मरणाभावसिद्धिस्ततो दुर्लभा । आश्रयश्चास्य स्वात्मा सर्वे प्रमातारो वा । यदि स्वात्माऽनुस्मिन्मदीय आत्मनि वेदकर्तृस्मरणं नास्तीति किमेतावता सिद्धम् । पदार्थजातस्यानेकस्यात स्मरणं नास्ति न चैतावता तस्याभावः सिद्ध्यति । अथ ममानुष्ठानेऽनस्य स्मर्तव्योऽसौ यदा स्मृतिपथप्रस्थायी न भवति तदाऽसन्निति निश्चीयत इत्यप्यसारम् । यत —

यद्यद्वस्तु समस्ति न स्मृतिपथप्रस्थायि ते भो भटो
विस्पष्टं यदि तस्य तस्य सकलस्यासत्त्वमासादये ॥
एवं तर्हि पितामहस्य पितरं मातामहीमातरं
तन्मातापितरौ च न स्मरसि तत्तेषामभावो भवेत् ॥५३७॥

तेषामभावे च भवेत्स्मात् कथं न हि त्वत्कपितामहादि ॥
तथा सति स्याद्भवतोऽप्यभावः स्वेनामुना कुत्सितशङ्कितेन ॥ ५३८ ॥

तथा—

समुत्पन्नेऽप्यर्थे स्वयमपि धृतं यत्तु किमपि
क्वचित्कस्याप्यत्र व्रजति सहसा निस्मृतिपदम् ॥
न चैतावन्मात्रादभवनमनुष्य प्रवदितुं
त्वया शक्यं तस्माद्व्यभिचरितमेतद्वचनं वरम् ॥ ५३९ ॥

अथ सर्वे प्रमातारः। ननु त्रैलोक्योदरविवरवर्त्तिन प्रमातारो वेदकर्त्तारं न स्मरन्तीत्यसर्वविदो वेदनानुपपत्तिः। अपि च सर्वप्रमातृदेशान्गत्वा तांश्च पृष्ट्वा तत्र कर्तृस्मरणाभावः प्रतीयेताऽन्यथा वा। न तावदन्यथा, सर्वज्ञत्वानुपङ्गादेव। गत्वा चेन्ननु तत्र गत्वा तेषु पृष्टेषु न स्मराम इति प्रतिवचनं ब्रुवाणेष्वपि को नाम विश्रम्भः। न हि तेषु सर्वेष्वसर्वज्ञस्य युगपत्क्रमाभ्यामाप्तताप्रतीतिः सम्भवति। यतस्तद्गुणसंक्रान्त्या तत्र प्रामाण्यं स्यात्। किंच अभावप्रमाणस्य तत्र प्रवृत्तिर्यत्र वस्तुसद्भावग्राहकं प्रमाणपञ्चकं न प्रवर्त्तते। प्रमाणपञ्चकं यत्रेत्याद्यभिधानात्। न चैवमिहास्ति। वेदस्य पुराणस्य च शाब्दप्रमाणस्य वेदकर्त्तरि प्रवर्त्तनात्। वेदवाक्य हि–"रुद्रं वेदकर्त्तारं, यो ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति, तथा–प्रजापतिः सोमं राजानमन्वसृजत्तत्र त्रयो वेदा अन्वसृजन्त" इत्यादिकम्। पुराणं च– "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" "अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिःसृताः" इत्यादि कर्तृसद्भाववेदकमनेकधा श्रूयते। स्मृतिपुराणादिवच्च काण्वमाध्यन्दिनतैत्तिरीयादयः शाखाभेदास्तत्कर्तृत्वादेव तत्तदृषिनामाङ्किता इति कथमस्मर्यमाणकर्तृकाः। अथ तद्दृष्टत्वात्तत्प्रकाशितत्वाद्वा तन्नामाङ्किता इति चेत्। तन्न। यतो यदि तावदुत्सन्नाः शाखभेदाः कण्वादिना दृष्टाः प्रकाशिता वा। तदा कथमेषां सम्प्रदायाविच्छेदोऽतीन्द्रियार्थदर्शिनः प्रतिक्षेपश्च स्यात्। अथानवच्छिन्ना एवैते सम्प्रदायेन दृष्टाः प्रकाशिता वा। तर्हि यावद्भिरुपाध्यायैर्दृष्टाः प्रकाशिता वा तावन्नामभिरेषां किन्नाङ्कितत्वं स्यात्। अविशेषात्। अपि चाऽन्ये वादिनः स्मरन्ति वेदस्य कर्त्तारमित्यसिद्धमेवाऽस्मर्यमाणकर्तृकत्वम्। अथोच्यते, अस्ति तेषां वेदे कर्तृस्मरणं किन्तु सविगानम्। तत्कर्तृविशेषविप्रतिपत्तेः। तथा हि—योगा रुद्रकर्तृकत्वं तस्याहुः। जैनाः कालासुरकर्तृकत्वम्। सौगतास्त्वष्टककर्तृकत्वम्। अतोऽप्रमाणं तदिति। तदप्युक्तिमात्रम्। यतः कर्तृविशेषे

विप्रतिपत्तेस्तद्विशेषस्मरणमेवाप्रमाण स्यान्न कर्तृमात्रस्मरणम् । अन्यथा कादम्बर्यादीनामपि कर्तृविप्रतिपत्ते कर्तृमात्रस्मरणस्याप्रमाणत्वेनास्मर्यमाणकर्तृकत्वे सत्यकर्तृकत्व स्यात् । अथ वेदे कर्तृविशेषविप्रतिपत्तिवत् कर्तृमात्रेऽपि विप्रतिपत्तेस्तन्मात्रस्मरणमप्यप्रमाणम् । कादम्बर्यादीना तु कर्तृविशेष एव विप्रतिपत्तेस्तत्प्रमाणमतो नाकर्तृकत्वम् । ननु वेदे योगान्य कर्तार स्मरन्ति न मीमांसका इत्येवं कर्तृमात्रे विप्रतिपत्तेर्यदि तत्प्रमाण तर्हि तद्वत्तदस्मरणमप्यप्रमाण किं न स्यात् । विप्रतिपत्तेरविशेषात् । तथा चायमसिद्धो हेतु । किंच, अस्मर्यमाणकर्तृत्व वादिन प्रतिवादिन सर्वस्य वा सम्बन्धि हेतुत्वेनाभिमत भवेत् । यदि वादिनस्तर्हि तदनैकान्तिकम् । वटे वटे वैश्रवण इत्यादिषु विद्यमानकर्तृकेष्वपि जैमिनीयैरस्मर्यमाणकर्तृकेष्वस्य सद्भावात् । ननु वेदे कर्त्रभावपूर्वकमस्मर्यमाणकर्तृकत्वमत्र तु कर्त्रनुपलम्भमात्रपूर्वक तत्कथमनैकान्तिकमित्यपि मनोरथमात्रम् । यत कुतोऽत्र कर्त्रभावसिद्धि । प्रमाणान्तरादत एव वा । यदि प्रमाणान्तरात् । तदाऽस्यानर्थक्यम् । अत एव चेत् परस्पराश्रय । अतो ह्यनुमानात्तदभावसिद्धौ तत्पूर्वकमस्मर्यमाणकर्तृकत्व सिध्येत्तत्सिद्धौ चानुमानात्तदभावसिद्धिरिति । अथ प्रतिवादिन सम्बन्धि तद्धेतुत्वेन विवक्षितम् । तदसिद्धम् । तत्र हि प्रतिवादी स्मरत्येव कर्तारम् । एतेन सर्वस्यास्मरण प्रत्याख्यातम् । यदप्युक्तम् । ये हि यच्छास्त्रार्थानुष्ठाने प्रवर्तन्ते ते तच्छास्त्रकर्तार नियमेन स्मरन्तीत्यादि । तदप्यनल्पतमोविलसितम् । नियमाभावात् । न हि यो धर्मशील इत्यादिवाक्येभ्यस्तदर्थानुष्ठाने प्रवर्तमानानामनुष्ठातॄणा तत्कर्तृस्मरणमस्ति । तदन्तरेणापि धर्मशीलताद्यर्थानुष्ठाने महापुरुषार्थोपयोगिन्यैहिकपारत्रिकभयाभावहेतौ प्रवृत्तिप्रतीते । यच्चान्यदुक्तं छिन्नमूलत्वादित्यादि । तदप्यसुन्दरम् । यतोऽध्यक्षेणानुभवाभावात्तत्र कर्तृस्मरण छिन्नमूल प्रमाणान्तरेण वा । अध्यक्षेणेति चेत् । किं

भवत्सम्बन्धिना सर्वसम्बन्धिना वा । यदि भवत्सम्बन्धिना । तर्ह्यागमान्तरेऽपि कर्तृसद्भावग्राहकत्वेन भवत्प्रत्यक्षस्याप्रवृत्तेस्तत्कर्तृस्मरणस्य च्छिन्नमूलत्वेनास्मर्यमाणकर्तृकत्वस्य भावाद्व्यभिचारी हेतुः । अथ तत्र तद्ग्राहकत्वेनास्मत्प्रत्यक्षस्याप्रवृत्तावपि परैः कर्तृसद्भावाभ्युपगमान्न व्यभिचारः । तन्न । परकीयाभ्युपगमस्य भवतोऽप्रमाणत्वात् । अन्यथा वेदेऽपि परैस्तत्सद्भावाभ्युपगमादस्मर्यमाणकर्तृकत्वादित्यसिद्धो हेतुः स्यात् । सर्वसम्बन्धिना चेत् । सोऽसिद्धोऽर्वाग्दृशा तस्यावसातुमशक्यत्वात् । अथ प्रमाणान्तरेणानुभवाभावः । तन्न । आगमस्य तत्र कर्तृसद्भावावेदकस्य प्रतिपादितत्वात् । वचनरचनावत्त्वाद्यनुमानस्य च तत्प्रसाधकस्य सद्भावात् । तथा हि । पौरुषेयो वेदो वचनरचनावत्त्वाद्भारतादिवत् । यदप्यवादि । वेदरचनायाः कर्तृपूर्वकरचनाविलक्षणत्वादित्यादि । तत्र यदेतद्दु श्रवत्वदुर्भणत्वादि तद्वैलक्षण्यं तत्सकलपुरुषाणां न दुष्करम् । विज्ञानकरणपटुतापराधीनत्वाद्वाचा प्रवृत्तेः । ननु पौरुषेयत्वे वेदाना मन्त्रत्वानुपपत्तिः । मन्त्रो हि जप्यमानः फलदायी दृष्टः । न च तथा पौरुषेयो वेद इति । एतदप्यविचारितरमणीयम् । शैवाद्यागमानामप्यपौरुषेयत्वप्रसक्तेः । तत्र ये हि मन्त्राः फलदायिनः सन्ति तेऽपि वैदिका एवेति न वाच्यम् । शूद्राणामपि फलदायित्वात्तेषाम् । वेदेषु च भवदभिप्रायेण शूद्राणामधिकारो नास्ति । अनधिकारिणां च कथं मन्त्राः फलं प्रयच्छेयुः । अपि च प्राकृता अपि मन्त्राः फलदा दृश्यन्ते । न च वेदेषु प्राकृतशब्दगन्धोऽप्यस्ति । तस्मात्प्राकृतमन्त्रवद्वैदिका अपि मन्त्रा पौरुषेया एवेत्यभ्युपगन्तुं युक्तम् । नन्वेवं सर्वे पुरुषाः किं न मन्त्रकारिणो भवन्तीति चेत् । उच्यते । सर्वेषामसमानशक्तिकत्वात् । ये हि सत्यसङ्कल्पास्त एव मन्त्रान्कर्तुं शक्नुवन्ति । सत्यसङ्कल्पता च सुमुनीना प्राणातिपात[1]-

---

१ प्राणातिपात –प्राणिप्राणवियोजन तस्माद्विरमण सम्यग्ज्ञानश्रद्धानपूर्वक निवर्तनम् । आदिशब्देन मृषावादादत्तादानमैथुनपरिग्रहविरमणानां ग्रहणम् ।

न्कुर्वाणोऽपि कश्चिदिदानीं न दृश्यते, इति तेषामप्यपौरुषेयत्वप्रसक्तिः । तस्मान्न मन्त्रोपेतत्वमपि वेदरचनाया कर्तृपूर्वरचनाविलक्षण्यं गदितुमनुगुणम् । अपि चात्र विशिष्टा रचना दृश्यमाना तत्करणासमर्थमेव कर्त्तारं निराकुरुते न पुनः कर्तृमात्रमपि । न खलु पुराणकूपप्रासादादौ विशिष्टा रचना प्रतीयमाना कर्तृमात्रं निराकुर्वती प्रसिद्धा । तत्करणासमर्थस्यैव शिल्पिनस्तया निराकरणात् । न हि कर्त्रन्वयव्यतिरेकानुविधायिनो धर्माः कर्त्तारं विना घटन्ते । ततो वैदिकी रचना पौरुषेयी न भवतीत्याद्यनुमानमयुक्तमुक्तम् । दृष्टकर्तृकरचनाविलक्षणत्वस्य हेतोरुक्तनीत्या तत्रासिद्धत्वात् । सिद्धत्वे वा कर्तृमात्रानिषेधकत्वात् । ततो रचनामात्रात्कर्त्रनुमाने विश्वस्य बुद्धिमत्पूर्वकत्वानुमानप्रसङ्गत इत्याद्यपि प्रतिक्षिप्तम् । वेदरचनायाः कर्तृपूर्वकरचनातो विलक्षणत्वाव्यवस्थितेः । जगद्रचनायास्तु तद्विलक्षणत्वेऽव्यवस्थितेः । तस्यास्तद्व्यवस्थितिश्च सविस्तरमीश्वरनिराकरणे विहिता । यदप्यभिहितं वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकमित्यादि । तत्र निर्विशेषणं वेदाध्ययनवाच्यत्वमपौरुषेयत्वं प्रतिपादयेत्सविशेषणं वा । प्रथमपक्षेऽनैकान्तिकम् । विपक्षेऽप्यस्याविरुद्धतया सद्भावसम्भवात् । न खलु वेदाध्ययनवाच्यत्वं कर्तृपूर्वकत्वलक्षणविपक्षेण विरुद्धम् । भारताध्ययनवाच्यत्ववत्तस्याऽपि तेनाविरोधात् । किंच यथाभूतानां पुरुषाणां यथा वेदाध्ययनं गुर्वध्ययनपूर्वकमुपलब्धं तथाभूतानामेव तत्तथा साध्यतेऽन्यथाभूतानां वा । यदि तथाभूतानां तदा सिद्धसाध्यता । अथान्यथाभूतानां तर्हि विश्वस्य बुद्धिमत्पूर्वकत्वे साध्ये सन्निवेशादिवदप्रयोजको हेतुः । अथ तथाभूतानामेव तत्तथा साध्यते । न च सिद्धसाधनम् । सर्वपुरुषाणामतीन्द्रियार्थदर्शनशक्तिवैकल्येनातीन्द्रियार्थप्रतिपादकप्रेरणाप्रणेतृत्वासामर्थ्येनेदृशत्वादिति चेत् । एतदपि न निरवद्यम् । प्रेरणायास्तथाभूतार्थप्रतिपादने प्रामाण्यप्रसिद्धेः । तदप्रसिद्धिश्च गुणवतो वक्तुरभावे तद्गुणैरनिराकृतैर्दोषैस्तस्यापोदितत्वा-

सुप्रसिद्धा । तथाभूता च प्रेरणातीन्द्रियार्थदर्शनशक्तिविरहिणोऽपि कर्तुं समर्था इति पुनस्तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येनाशेषपुरुषाणामीदृशत्वसिद्धिः । यतः सिद्धसाधनं न स्यात् । अथ न शब्दे गुणवद्वक्तृकत्वेनैवाप्रामाण्यनिवृत्तिरपौरुषेयत्वेनाप्यस्याः सम्भवात्ततोऽयमदोषः । तदपि न्यायनिराकृतम् । यतोऽपौरुषेयत्वं प्रेरणायाः किमन्यतः प्रमाणात्प्रसिद्धमत एव वा । यद्यन्यतस्तत्तदाऽस्य वैयर्थ्यम् । अत एव चेत्, परस्पराश्रयः । अतो ह्यनुमानादपौरुषेयत्वसिद्धौ प्रेरणायाः प्रामाण्यसिद्धिस्तत्सिद्धौ च तथाभूतप्रेरणाप्रणेतृत्वासामर्थ्येन सर्वपुरुषाणामीदृशत्वसिद्धिरिति । तत्र निर्विशेषणं वेदाध्ययनवाच्यत्वमपौरुषेयत्वं प्रतिपादयति । नापि सविशेषणम् । यतः किं तत्र विशेषणं कर्त्रस्मरणं वा सम्प्रदायाव्यवच्छेदो वा । न तावत्कर्त्रस्मरणम् । तस्यासिद्धत्वाद्वेदे कल्पोपक्रमोच्छिन्नत्वप्रतिपादनात् । सम्प्रदायाव्यवच्छेदोऽप्यात्मगतः सर्वलोकगतो वा । न तावदात्मगतः । भारतादिपौरुषेयत्वेऽप्यस्य सम्भवात् । नापि सर्वलोकगतः । असर्वविदा तस्य सतोऽपि ज्ञातुमपार्यमाणत्वात् । घटे घटे वैश्रवण इत्यादिवत्पौरुषेयत्वेऽप्यस्याविरोधाच्च । अपि च, आदिमतोऽपि शास्त्रप्रायस्य सम्प्रदायाव्यवच्छेदोऽस्ति वेदस्य पुनरनादेरसौ नास्तीति क श्राद्धिको भवतोऽपरः प्रतिपद्येत । यदप्युक्तमतीतानागतौ कालावित्यादि तदप्ययुक्तमसम्बद्धम् । आगमान्तरेऽप्यस्याविशेषात् । किञ्चेदानीं यथाभूतो वेदकरणासमर्थपुरुषयुक्तः कालः अतीतोऽनागतो वा तथाभूतः कालत्वात्साधयितुमभिप्रेतोऽन्यथाभूतो वा । यदि तथाभूतः । तदा सिद्धसाधनम् । अथ यथाभूतस्तदा सन्निवेशादिस्वप्रयोजको हेतुः । तथाभूतस्यैव कालस्य तद्रहितत्वं साधयितुमभिमतम् । न च सिद्धसाधनम् । अन्यथाभूतस्य कालस्येदानीमभावादिति चेत् । उच्यते । अन्यथाभूतकालोऽसम्भवतीत्येतत्कुतः प्रमाणात्प्रतिपन्नम् । अत एवाऽनुमानाद्वा । यद्यत एव तदेतरेतराश्रयः । तदन्यथाभूतकालाभावसिद्धौ अतोऽनुमानात्तद्रहितत्वसिद्धिस्तत्सिद्धौ चान्यथाभूतकाला-

भावसिद्धिरिति । अन्यतस्तत्सिद्धौ चास्य वैयर्थ्यम् । अपौरुषेयत्वस्यापि तत एव प्रसिद्धेः । ततो वेदेऽप्यपौरुषेयत्वसाधकस्य कस्यचित्प्रमाणस्यासम्भवात्कथमसावपौरुषेयः स्यात् । अस्तु वा तथाऽप्यसौ व्याख्यातोऽव्याख्यातो वा स्वार्थे प्रतीतिं कुर्यात् । न तावदव्याख्यातः । अतिप्रसङ्गात् । अथ व्याख्यातः । कुतस्तस्य व्याख्यानं स्वतः पुरुषाद्वा । न तावत्स्वतः ।

भो भोः श्रोत्रियपुङ्गवाः समुदितैः सर्वैरपि श्रूयतां
सम्प्रत्यस्तमितान्यकृत्यविधिभिर्धृत्वा समाधौ मनः ।
मद्वाचामिदमेव वाच्यमपरं मा सर्वथा कल्प्यता-
मित्येवं विदधाति नात्मवचसां व्याख्यां कदाचिच्छ्रुतिः[1] ॥ ५४१ ॥

अन्यथा व्याख्याभेदो न स्यात् । पुरुषाच्चेत्, कथं तद्व्याख्यानात्पौरुषेयादर्थप्रतिपत्तौ दोषाशङ्कानिवृत्तिर्भवेत् । पुरुषा हि रागादिमन्तो विपरीतमप्यर्थं व्याचक्षाणाः समुपलभ्यन्ते । संवादेन प्रामाण्याङ्गीकरणे वाऽपौरुषेयत्वकल्पनवैयर्थ्यम् । पौरुषेयत्वेऽपि वेदस्य संवादादेव प्रामाण्योपपत्तेः । न च व्याख्यानानां संवादः समस्ति । परस्परविरुद्धभावनानियोगादिव्याख्यानानामन्योन्यं विसंवादोपलम्भात् । अपि चायं वेदव्याख्याताऽतीन्द्रियार्थदर्शी तद्विपरीतो वा । आद्यकल्पेऽतीन्द्रियार्थदर्शिनः प्रतिषेधविरोधः । धर्मादौ वाऽस्य प्रामाण्योपपत्तेर्धर्मे चोदनैव प्रमाणमित्यवधारणानुपपत्तिश्च । अथ तद्विपरीतः । कथं तर्हि तद्व्याख्यानाद्यथार्थप्रतिपत्तिः । अयथार्थाभिधानाशङ्कया तदनुपपत्तेः । न च मन्वादीनां सातिशयप्रज्ञत्वात्तद्व्याख्यानाद्यथार्थप्रतिपत्तिः । तेषां सातिशयप्रज्ञत्वासिद्धेः । तेषां हि प्रज्ञातिशयः स्वतो वेदार्थाभ्यासाददृष्टात् ब्रह्मणो वा स्यात् । स्वतश्चेत्, सर्वस्य स्यात् । अविशेषात् । वेदार्थाभ्यासाच्चेत्, ननु वेदार्थस्य ज्ञातस्याऽज्ञातस्य वाऽभ्यासः स्यात् । न तावदज्ञातस्य । अतिप्रसङ्गात् । अथ ज्ञातस्य, कुतस्तज्ज्ञप्तिः,

१ 'स्तुति' इति भ. पुस्तके पाठः ।

माणयोश्च पुरुषेणाश्रवणे समानेऽन्यो विशेषोऽस्ति । यतो वैदिक अपौरुषेयाः शब्दा लौकिकास्तु पौरुषेयाः स्युः ।

एवं च—

कथमपि सखे युक्तिं नैव प्रयाति निराकृतं
वचनमुदितैर्दोषैरेतद्यत कवलीकृतम् ॥
निजमतगतं मिथ्यावादं विहाय तदिष्यता
प्रमितिरमणीक्रीडाराम श्रुतं जिननिर्मितम् ॥५४२॥७॥

आप्तवचनादित्युक्तम् । तत्राप्तः प्ररूपित । सम्प्रति वचनं प्ररूपयन्नाह—

**वर्णपदवाक्यात्मकं वचनमिति ॥ ८ ॥**

वर्णश्च पदं च वाक्यं च वर्णपदवाक्यानि वक्ष्यमाणलक्षणानि तान्यात्मा स्वभावो यस्य वचनस्य तत्तथा । वर्णपदवाक्यानि चोपलक्षण प्रकरणपरिच्छेदादीनामिति ॥ ८ ॥

अथोद्देशानुक्रमेण वर्णं लक्षयितुमाह—

**अकारादिः पौद्गलिको वर्ण इति ॥ ९ ॥**

पुद्गलैर्भाषापरमाणुद्रव्यलक्षणैरारब्धः पौद्गलिकः । ननु कुतः प्रमाणात्पौद्गलिकत्वं वर्णस्य प्रतीयत इति चेत् । अनुमानादिति ब्रूमः । तथा हि, वर्ण पौद्गलिको मूर्तिमत्त्वाद्यन्मूर्तिमत्तत्पौद्गलिकम् । यथा पृथिव्यादि । मूर्तिमाश्च वर्णस्तस्मात्पौद्गलिक इति । न च मूर्तिमत्त्वमस्यासिद्धम् । स्पर्शवत्त्वात् । यत्पुनर्मूर्तिमन्न भवति न तत्स्पर्शवत् । यथा व्योम । स्पर्शवाश्च वर्णः । ततो मूर्तिमान् । न च स्पर्शवत्त्वमप्यस्याप्रतीतम् । कर्णकुहरं प्रविशति ध्वनौ कर्णशष्कुलिकान्ततः स्पर्शस्याऽनुभूयमानत्वात् । तत. स्पर्शवत्त्वाद्रूपरसगन्धस्पर्शवत्त्वलक्षणा मूर्त्तिर्ध्वनौ प्रसिद्धिपद्धतिमवतरति । यदि पुनर्ध्वनिरमूर्त्तिः स्यात्कर्ण-

शष्कुल्या प्यशापलब्धिन स्यात् । उपघातो वा बालकादिकर्णयो । भवति चाऽयम् । तथा हि—

जरन्मुरजझर्झरस्फुरितवाद्यक्रियाकर्कशे
प्रतिध्वनितघोरणीरसितरोदसीकन्दरे ॥
भवत्यतिसमीपगैर्झगितिझल्लरीझात्कृतै
स्तनन्धयशिशोर्नृणाद्बधिरता ध्रुवं कर्णयो ॥ ५४३ ॥

विवक्षितशब्दप्रतिपादनविषयप्रयत्नोदीरितकोष्ठगसमीरणोद्गमनप्रतिलब्धप्रादुर्भावस्वप्रचयातिशयतया कदम्बगोलकन्यायेन तरङ्गभङ्गनिमग्नन्यायेन वा कर्णशष्कुल्यवच्छिन्नदेशेषु प्रविशन्त शब्दा कर्कटायमाना कर्णोपघाताय कल्पन्त इति सन एव हि चेतनाश्चेतयन्ते । तादृग् स्पर्श शब्दे सति भवन्नसत्यभवन्वर्धमाने वर्धमान क्षीयमाणे क्षीयमाण शब्दगुणत्वमामन सूचयन्नमूर्तत्वप्रकृतिं परेषा स्वयमेव प्रत्यस्तमयतीति किमन्यत्र प्रयासेन । वायवीय स स्पर्शो न शाब्द इत्यत्र न प्रत्यक्षम् । नाप्यनुमानादिक सम्भवति । शक्यं च वक्तु समीरणप्रेरितमूर्तवस्त्वन्तरस्पर्शोऽय न तु वायवीयोऽपि । एवमन् । तत समीरणस्यापि मूर्तत्व दुरवगाह भवेत् । अथान्वयव्यतिरेकाभ्या वायवीय स्पर्शोऽयमिष्यते । तर्हि शब्दधर्मित्वेऽपि स्पर्शस्य क प्रद्वेषहेतु । बहिरिन्द्रियप्रत्यक्षस्य शब्दस्य पृथिव्यादेरिव स्पर्शवत्त्वे विरोधाभावात् । तत स्पर्शवत्त्वान्मूर्तिमान्त्यनिर्मूतिमत्त्वाच्च पौद्गलिक इति । अम्बरगुणत्वे पुन शब्दस्य बहिरिन्द्रियप्रत्यक्षत्व दुरुपपाद स्यात् । यो हि गगनगुण स न बाह्येन्द्रियप्रत्यक्ष । यथा विभुत्वादि । गगनगुणश्च परेषामभिमत शब्द इति । तथा यो बहिरिन्द्रियप्रत्यक्ष स परोक्षगुणो न भवति । यथा रूपादि । बहिरिन्द्रियप्रत्यक्षश्च शब्द इति । न च निष्प्रदेशस्य कस्यचिद्व्यापिनो गुण प्रादेशिको युक्तिमनुगच्छति । व्याघातात्, तत शब्दोऽपि सर्वगत स्यात् । न च तथा केनाऽप्यनुभूयते । विस्तरतश्चाम्बरगुणत्व शब्दस्य पदपदार्थ

परीक्षायां निराकरिष्यते। ततः स्थितमकारादिः पौद्गलिको वर्ण इति।

केवलवर्णानामर्थवत्त्वस्य प्रसाधनम्।

ननु वर्णानां केवलानां सर्वत्र निरर्थकत्वात्कथं तल्लक्षणप्रणयनं युक्तमिति न मन्तव्यम्। अनुमानतस्तेषामर्थवत्त्वप्रतीतेः। तथा हि वृक्षादिसमुदायस्था वर्णाः प्रत्येकमर्थवन्तो वर्णत्वाद्धातुप्रातिपदिकप्रत्ययनिपातवर्णवत्। इतश्चार्थवन्तो वर्णास्तद्व्यत्ययेऽर्थान्तरगमनाद्यस्य व्यत्ययेऽर्थान्तरगमनं च पश्यामस्तस्मादर्थवन्तो वर्णा इति। इतश्चार्थवन्तस्ते वर्णविशेषानुपलब्धौ पूर्वदृष्टार्थासम्प्रत्ययात्। इह यस्यानुपलब्धौ पूर्वदृष्टस्यार्थस्यासम्प्रत्ययो दृष्टः सोऽर्थवान्, यथा प्रतिष्ठत इत्यत्र प्रशब्दानुपलब्धौ प्रस्थानरूपस्यार्थस्यासम्प्रत्यये प्रशब्दः। वर्णविशेषानुपलब्धौ पूर्वदृष्टार्थासम्प्रत्ययश्च वृक्षशब्दस्य कक्षशब्दे। तस्मादर्थवन्तस्त इति। इतोऽप्यर्थवन्तो वर्णास्तत्सङ्घातस्यार्थवत्त्वाद्यत्र यत्सङ्घातोऽर्थवान्, अवयवस्यापि तत्रार्थोऽस्ति। यथा तिलेषु तैलमात्रा काचित्। यत्र त्ववयवानामर्थो न दृष्टस्तत्र तत्सङ्घातोऽपि तेषामनर्थक एव। यथा सिकतानां खारीसहस्रमपि तैललक्षणार्थशून्यम्। अस्ति च सङ्घातस्यार्थवत्ता वृक्षः प्लक्ष इति। तस्मादर्थवन्तो वर्णा इति ॥ ९ ॥

अथ पदवाक्ययोर्लक्षणमाह—

## वर्णानामन्योन्यापेक्षाणां निरपेक्षा संहतिः पदं, पदानां तु वाक्यमिति ॥ १० ॥

वर्णौ च वर्णाश्चेत्येकशेषात् ब्रह्मसम्बोधने क इत्यादौ द्वयोर्गौरित्यादौ तु बहूनां वर्णानामक्षराणाम्। अन्योन्यापेक्षाणां पदार्थप्रतिपादने कर्त्तव्ये सहकारिकारणतया परस्परं व्यवस्थितानाम्। निरपेक्षा पदान्तरवर्त्तिवर्णनिर्वर्त्तितोपकारपराङ्मुखी संहतिः पदमभिधीयते। पद्यते गम्यते स्वयोग्योऽर्थोऽनेनेति पदमिति निरुक्तेः। नन्वेवं केवला-

न्सम्बोधनायाम इत्येवमादावेकत्र वर्णे पदत्वेन सम्मते वृत्तेरभावादव्यापकमेतल्लक्षणम् । मैवम् । विप्रतिपन्नविप्रयाख्यानार्थत्वादस्य लक्षणप्रणयनस्य । मीमांसका खल्वेवं विप्रतिपद्यन्ते । एकस्य वर्णस्य पदमिति व्यपदेशोऽपि न तन्निबन्धन किञ्चिदधिकं केश्चिदपि रूपमभ्युपगम्यत इत्यस्तु काम तत्र पदव्यपदेशो वर्णद्वयादिषु तु योऽन्य तदतिरिच्यमानमूर्तिमहर्तिं समाश्रित्य तद्व्यपदेश प्रवर्त्यते नासौ सम्यक् । व्यापकाना वर्णानामव्यापकत्वेन नियतायास्तस्या असम्भवादिति । ततश्च तन्निरासाय वर्णद्वयादावेव पदत्वप्रतिपादनायेद सूत्र सूत्रितम् । एकस्य तु वर्णस्यार्थं प्रतिपादयत पदत्व पदान्तरवर्तिवर्णनिर्वर्तितोपकारपराङ्मुखत्वरूपेण निरपेक्षत्वलक्षणेन समर्थयितव्यम् । यद्वा प्रायिकत्वेन वर्णद्वयादेरेव पदत्व लक्षित यावतैकस्यापि वर्णस्य तद्द्रष्टव्यम् । यदाहाकलङ्कसिद्धिविनिश्चये—" वर्णसमुदाय पदमिति प्रायिकमेतदत्यैकमकारादे क्वाचित्कत्वदर्शनात् " इति । पदाना पुनर्वाक्यार्थप्रत्यायने विधेयेऽन्योन्यनिर्मितोपकारमनुसरता वाक्यान्तरस्थपदापेक्षारहिता संहतिर्वाक्यमभिधीयते । उच्यते स्वसमुचितोऽर्थोऽनेनेति वाक्यमिति व्युत्पत्ते ।

*यथा—*

आकण्ठं यदि पातुमिच्छसि सखे कर्णाञ्जलिभ्या सुधा
कर्तुं गोष्पदसोदरं यदि भवाम्भोधिं ध्रुव वाञ्छसि ॥
भिप्र मोक्षवधूकटाक्षलहरीलभ्यत्वमाकाङ्क्षसि
स्वस्य त्व यदि सादर शृणु तदा श्रीसत्सिद्धान्तभारतीम् ॥५४४॥

इत्यादि । एव वाक्यसहति प्रकरणम् । प्रकरणसहतिर्यथासमय परिच्छेदो वा पादो वाऽऽह्निक वाऽध्यायो वा, तत्संहति शास्त्रमिति स्वयमेव प्रागनिर्णेयम् । ननु यदि वाक्यान्तरस्थपदापेक्षारहिता पदाना संहतिर्वाक्यतया स्वीक्रियते तर्हि कथमिदं साधनवाक्यमुपपद्यते यत्सत्तत्सर्वं परिणामि यथा घट सश्च शब्द इति तस्मात्परिणामीत्या-

कांक्षणादिति चेत् । तदयुक्तम् । यस्य हि प्रतिपत्तुस्तस्मात्परिणामीत्याकांक्षाक्षयस्तदपेक्षया तद्वाक्यं भवत्येव । प्रोक्तवाक्यलक्षणसम्भवात् । नापरापेक्षया । निराकांक्षत्वं हि प्रतिपत्तुर्धर्म्मः, वाक्ये तूपचरित एव । तस्याचेतनत्वात् । स चेत्प्रतिपत्तावपि निगमनवचनापेक्षायां निगमनान्तपञ्चावयववाक्यादप्यर्थप्रतिपत्तौ परापेक्षाप्रसङ्गान्न क्वचिन्निराकांक्षत्वसिद्धिर्भवेत् । तथा च वाक्याभावान्न क्वचिद्वाक्यार्थप्रतिपत्तिः कस्यचित्स्यात् । ततस्तामिच्छता यस्य प्रतिपत्तुर्यावत्सु परस्परापेक्षेषु पदेषु समुदितेषु निराकांक्षत्वं स्यात्तावत्सु वाक्यत्वसिद्धिः प्रतिपत्तव्या । एतेन प्रकरणादिगम्येनापि पदान्तरेण श्रूयमाणपदसमुदायस्य निराकांक्षत्वसिद्धेर्वाक्यत्वं प्रतिपादितं प्रतिपत्तव्यम् ।

आख्यातशब्दो वाक्यमिति मतस्योपपाद्य खण्डनम् ।

अत्र विप्रतिपद्यन्ते परे । तथा हि केचिदाहुः—"आख्यातशब्दो वाक्यम्" इति, आख्यातशब्देन हि व्यावहारिकस्य प्रवृत्तिनिवृत्तिलक्षणस्यालौकिकस्य कारकसंभिन्नस्य वाक्यार्थस्याभिधाने सति नामपदानि नियमायानुवादाय वा प्रयुज्यमानाख्यातपदवाच्यस्यैवार्थस्य संस्कारकारीणि विज्ञायन्त इति । तत्र नियमायानुवादाय वेति वाशब्दः समुच्चये । तेन नियमायानुवादाय चेत्यर्थः । तथा हि नामपदेष्वन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थापोद्धारे प्रातिपदिकं शक्तीनां कारकापराभिधानानामाख्यातशब्दैरभिहितानामाश्रयसामान्यावग्रहद्वारेण प्रवृत्तानामाश्रयविशेषस्य नियामकम् । विभक्तयस्तूपात्तामेव शक्तिं प्रतिपादयन्तीत्यनुवादिकाः । एवं च नामपदानि प्रकृत्यंशद्वारेण नियमफलानि प्रत्ययांशद्वारेण त्वनुवादफलानीति । अथवा विकल्पे वाशब्दस्तेन नियमायानुवादाय वेत्यर्थः । तथा हि व्यवहारयोग्याः शक्तय आख्यातैरुपादीयन्ते न त्वासामाधारविशेषोऽतस्तन्नियमाय नामपदानि । यथा, आश्रयतीति कर्मशक्तिसामान्यावग्रहे सत्याश्रयविशेषोपप्लवे नियमाय माणवकमिति पदमुपादीयते । यद्वा विशिष्टाधारनिविष्टा एव शक्तय

आख्यातैरेवोपात्ता । यथा पश्यतीति श्रोत्रादिभ्यो व्यवच्छिन्न चक्षुरेव करणम् । यथा च वर्षतीति देवदत्तादिव्यवच्छिन्नोऽम्भोधर एव कर्तृविशेष प्रतीयते । तथा सर्वैव क्रिया विशिष्टसाधनैव प्रक्रान्ता रूपसामान्यात्तद्बुद्धिस्तु प्रतिपत्ता तथा ता न प्रतिपद्यत इत्यनुवादाय नामपदानीति । सस्कारकारीणीति क्रियाकारकसमुदायस्याख्यातार्थस्य नियमोऽनुवादश्च सस्कारो यत आख्यातपदात्केवलान्नियमानुवादौ न प्रतीतामिति । अत्र प्रतिविधीयते । यथा, आख्यातानि क्रियाप्रतिपादनादुपात्तशक्तिसामान्यान्युपात्तशक्तिविशेषाणि वा तथा नामपदान्यपि क्रियासामान्य क्रियाविशेष वोपाददत इति तेषामपि कुतो न वाक्यत्वम् । अथ साध्यत्वात्क्रियायास्तादर्थ्याच्च साधनाना क्रिया प्रधानम् । तथा च प्रधानवशवर्तित्वात्प्रधानाव्यभिचाराच्च गुणानां साधनसामान्य तदाधारविशेष चाङ्गीकरोतीति तदेव वाक्यम् । नामपदाना त्वभिधायकत्वेऽपि प्रधानतन्त्रत्वादाख्यातोक्तार्थातिरिक्तार्थानभिधानाच्च न वाक्यत्वमिति चेत् । एतदपि विचारपराङ्मुखम् । न खलु क्रियेत्येव कृत्वा प्रधानत्वम् । अन्यार्थत्वेनापि क्रियाया कस्याश्चिदवस्थानात् । यथा ऋत्विक्प्रचरणे प्रमाणान्तरात्सिद्धे "लोहितोष्णीषा ऋत्विज प्रचरन्ति" इत्यत्र लोहितोष्णीषत्वस्यैव प्राधान्यं विधेयत्वात् । प्रचरणक्रियायास्तु गौणत्वमनुवाद्यत्वादिति । एव चाख्यातपदं स्ववाच्यार्थसस्कारकतयाऽवश्यं नामपदान्यपेक्षते । नामपदानि चाख्यातपदवाच्यमर्थं सस्कार्यतयाऽपेक्षमाणानि तत्प्रतिपादकमाख्यातपदमपेक्षन्ते तथा नामपदानि स्ववाच्यार्थसस्कारतयाख्यातपदमपेक्षन्ते । आख्यातपद च तद्वृत्त्यार्थसस्काराय तान्यपेक्षत इत्यन्योन्यापेक्षाणा पदाना समुदाय एव वाक्यत्वमासादयतीति सिद्धम् ॥

पदानां सङ्घातो वाक्यं, जातिस्फोटं नित्यमनवयवं वाक्यमित्यादिवाक्यलक्षणमतानां खण्डनम् ।

अपरे तु पदानां सङ्घातो वाक्यमिति प्रतिपन्नाः । तेऽपि पर्यनुयोज्याः । किं निरपेक्षाणां पदानां सङ्घातो वाक्यं स्यात्सापेक्षाणां वा । प्रथमपक्षे दश दाडिमानि षडपूपाः कुण्डमजाजिनमित्यादिपदसङ्घातस्यापि वाक्यत्वप्रसङ्गः । द्वितीयपक्षे त्वस्मन्मतप्रवेशः । इतरे तु देवदत्त गामभ्याजेति वर्णैर्ध्वनिविशेषैः क्रमभाविभिरनित्यैरयुगपदवस्थानैरभिव्यज्यमानमनेकमनेकाधारं देवदत्तादिवर्णव्यतिरिक्तं जातिस्फोटं नित्यमनवयवं वाक्यं प्रतिपेदिरे । यथोत्क्षेपणादिकर्मक्षणैरुत्क्षेपणत्वाद्यभिव्यज्यते तथैव तस्मिन्दर्शने वर्णैर्वाक्यमपीति । इदमपि न पेशलम् । नित्यनिरवयवसामान्यस्य पुरा पराकरिष्यमाणत्वात् । अन्ये तु ओंकारोऽनवयवः शब्दः परिकल्पितवर्णपदविभागो वाक्यमित्याहुः । एतदपि न न्याय्यम् । स्फोटनिराकरणप्रकरणे निराकरिष्यमाणत्वात् । पदानां क्रमो वाक्यमिति कतिपये परिकीर्त्तयन्ति । तेषां हि मतं वर्णानां क्रमः पदं पदानां क्रमो वाक्यमिति । इदमप्यपर्यालोचितवचनम् । शब्दोच्छेदप्रसङ्गात् । तन्मते हि वर्णाः सर्वदेशकालव्यापिन एकैका नित्याः । क्रमश्च नाम कालाव्यापित्वे च पिपीलिकापंक्त्यादीनां स्यात् । उभयमप्येतद्वर्णानां न सम्भवति । सर्वदेशव्यापित्वाभ्युपगमान्नित्यत्वोपगमाच्च । उपलब्धिस्तु नियतकाला क्रमवती । न च सा वर्णाः । अपि तु वर्णविषया । तस्याश्च क्रमः कालस्य धर्म इष्यते । क्रमयौगपद्यलिङ्गानुमेयं हि कालमिच्छन्ति । ततश्च वर्णोपलब्धिक्रमश्च वाक्यमित्युपगमः स्यात् । स च न समीचीनः । पदोपलब्धिक्रमस्य कालधर्मत्वेनाशब्दत्वात् । ततश्च वाक्यार्थोऽशब्दः स्यात् । यदा च वाक्यार्थः शब्दस्याभिधेयो न भवति, अपि तूपलब्धिक्रमस्य कालधर्मस्य तदा पदार्थोऽपि न शब्दार्थः स्यात् । पदस्याप्युपलब्धिक्रमरूपत्वात् । तस्य च कालधर्मत्वात् । एवं च शब्दस्य योग्यतालक्षणसम्बन्धो योऽय-

मभ्युपगतो मीमांसकैः[1] स एवार्थेन सहास्य हीयते । शब्दस्य कस्यचित्कालधर्मव्यतिरेकेणानभ्युपगमात् । एवं च मूलनाशः । शब्दस्यैवैषा सर्वतो मातापितृस्थानीय उपकारको भूतभविष्यद्दूरसूक्ष्माभिधायी । स एवाभिरूप्यमाणो न दृश्यते । कुतस्तस्यार्थेन सह सम्बन्धः । तदाह—" शब्दानां क्रममात्रे च नान्यः शब्दोऽस्ति वाचकः ॥ क्रमो हि धर्मः कालस्य तेन शब्दो न विद्यते ॥ १ ॥ वर्णानां च पदानां च क्रममात्रनिवेशिनी ॥ पदाख्या वाक्यसंज्ञा च शब्दत्वं नेष्यते तयोः ॥ २ ॥ अशब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् ॥ एवं सति च सम्बन्धः शब्दस्यार्थेन हीयते ॥ ३ ॥ "[2] इति । किंच प्रत्यभिज्ञानबलादेकत्वेन प्रतीयमानाः पदेषु त एव वर्णा वाक्येषु चैतान्येव पदानीति न तेषां कथंचिद्व्यतिरिक्तौ वाक्यपदयोरात्माऽस्तीति यद्युपगमस्तदा वर्णानामपि पूर्वपरोपपरादिभागभेदेन वास्तवो भेदः स्यात् । ततश्च तेषां वर्णभागानामपकर्षपर्यन्तभाविनामभिव्यक्तिनिरोभूतानां परस्परमुपश्लेषो नास्तीति न वर्णानामपि पदमित्यस्तमयः शब्दव्यवहारः स्यात् । अव्यपदेश्यत्वादि तेषु प्रतिभागं व्यवहाराभावात् । किं तदेकमस्ति यदिदं तदिति व्युपास्यायेत् । तस्मादुच्यते मूलनाशोऽत्र भवतामिति । तदाह—" पदानि वाक्ये तान्येव वर्णास्ते च पदे यदि ॥ वर्णेषु वर्णभागानां भेदः स्यात्परमाणुवत् ॥ १ ॥ भागानामनुपश्लेषान्न वर्णो न पदं भवेत् ॥ तेषामव्यपदेश्यत्वात्किमन्यद्व्यपदिश्यताम् ॥ २ ॥ " इति । अथ वर्णाः स्वभावेन निरवयवा इति चेत् । एवं तर्हि वैयाकरणप्रतिपादितौ विभागौ पदवाक्यस्फोटावभ्युपगन्तुं प्रसज्येते । तथा देवदत्तादिपदेषु स्फुटो भेदोऽवभासत इत्यसमावयवापत्तिनयः पदस्फोटं वाक्यस्फोटं च भवन्तो नेच्छन्ति । " गकारौकारविसर्जनीया इति भगवानुपवर्षः " इति वचनात्कत्वात्

1 वा प श्लो २ श्लो ५०।१२।१६ । 2 वा प का २ श्लो २८।२९

४१

स्थितपरमाणुसंचयन्यायेन वर्णसमुदायमात्रमुपयान्ति । स इदानीं भेदावसायोऽकारेऽपि पूर्वपरमध्यभागरूपेणास्तीति कथं निरवयवो वर्णः । उदात्तानुदात्तादयो गुणा अपि सावयवत्वे सत्येवास्य सम्भवन्ति । एवं भागवति गुणे च प्रतीयमानेऽकारादौ कथं प्रतीतिप्रमाणवादिभिरेवानवयवस्य वर्णस्याभ्युपगम इति । बुद्धेरनुपसंहारमन्तस्तत्त्वं वाक्यमन्ये मन्यन्ते । तथा हि संहृतसकलक्रमस्यैकस्यादेशप्रदेशत्वेऽप्यन्तरात्माऽन्तर्यामीत्येवमाख्यायमानस्य प्रतिप्राणिवृत्तेः शब्दतत्त्वस्याक्षरचिह्नादिभिरिवातथाभूतैः क्रमवद्भिर्भागैर्योऽयं बुद्धेरनुपसंहारः क्रमशः पूर्ववर्णभागग्राहिणीभिर्बुद्धिभिर्जनितो यः संस्कारस्तत उत्पन्नस्य स्मरणस्य बलादन्त्यवर्णभागग्रहणतुल्यकालः स वाक्यमिति । एतदपि न परीक्षाक्षमम् । शब्दब्रह्मणोऽन्तस्तत्त्वापरनामधेयस्य प्रागेव सविस्तरमपास्तत्वात् । आद्यं पदं वाक्यमिति परे समीरयन्ति । यदेव हि पदं प्रथमतः प्रयुज्यते तदेव वाक्यं तेनैवेतराक्षेपात् । यतः प्रथमतः प्रयुज्यमानं पदं क्रियावाचि साधनवाचि वा भवेत् । क्रियासाधनयोश्च परस्पराविनाभूतत्वात्तयोर्यदेव पदमादौ प्रयुज्यते तदेव स्वार्थस्य धर्मभूतमर्थान्तरमपि तत्र सन्निधापयति धूम इवाग्निमित्येवं प्रथममुपादीयमाने पदे सर्वरूपार्थोपग्राहिण्याख्यातशब्द इव नियमानुवादफलानि पदान्तराण्यभ्यनुज्ञायन्त इति । आख्यातशब्दपक्ष इव एषोऽपि पक्षः प्रतिक्षेप्यः । पृथक्सर्वपदं सापेक्षं वाक्यमिति कतिचिदुपवर्णयन्ति । पृथगिति सङ्घातादवच्छिनत्ति । सर्वमित्याद्यपदादाख्यातशब्दाच्चावच्छिनत्ति । तेन सर्वाण्येव पदान्यन्योन्यसापेक्षाणि प्रत्येकं वाक्यमित्यर्थः । यतः प्रतिपदं क्रियाकारकलक्षणः कृत्स्नोऽर्थः परिसमाप्यते । इदमपि परिफल्गु । देवदत्त गामभ्याजेति श्रुतेर्वाक्यबहुत्वप्रत्ययप्रसङ्गात् । अस्मिंश्च पक्षे पदानां परस्परसापेक्षत्वमपि दुरुपपादम् । सर्वेषामपि कृत्स्नार्थाभिधायित्वादिति । एवं च "आख्यातशब्दः

---

१ वा प का. २ श्लो. १।२ ।

सङ्घातो जाति सङ्घातवर्त्तिनी ॥ एकोऽनवयव शब्द' क्रमो बुद्ध्यनुसंहति ॥ १ ॥ पदमाद्य पृथक्सर्वं पद सापेक्षमित्यपि ॥ वाक्य प्रतिमतिर्भिन्ना बहुधा न्यायवादिनाम् " ॥ २ ॥ इति कारिकाद्वयसगृहीता अष्टावपि वाक्यपक्षा प्रतिक्षिप्ता ।

तत स्थितमेतत्—

अन्योन्यापेक्षवर्णाना सङ्घात पदमुच्यते ॥
निरपेक्ष पदाना तु स वाक्यमिह कथ्यते ॥ ५४५ ॥

अत्राहु स्फोटवादिन —

स्फोटवादिमतस्य विस्तरशा उपपादनपूर्वक खण्डनम्।

अवयवयुतवर्णाद्याग्रहेणामुना किं
स्फुरदनुभववन्ध्येनात्र ते जैनविद्वन् ॥
सति मतिमवतीर्ण तात्त्विकानेकभाग
श्रवणविधुरमूर्ता स्फोटमेव पदार्थे ॥५४६॥

तथा हि—अय एते वर्णपदवाक्यविशेषव्यपदेश्या परस्परमत्यन्तव्यावृत्तमूर्तयो निरवयवा श्रवणविषयमाविशन्त प्रतीयन्ते स्फोटा । न तु वाक्ये पदानि । पदेषु वर्णा । वर्णेष्ववयवा सन्ति । तत्कथ पौद्गलिको वर्ण वर्णसहति पद पदसहतिश्च वाक्यमितीष्यते । य खल्वय पूर्वापरभागात्मक समुदायो वर्ण इति । यश्च गकारौकारविसर्जनीयरूपवर्णावयवात्मक पदमिति । यश्च देवदत्त गामभ्याजेत्यादिपदरूपावयवात्मको वाक्यमिति विख्यात । सर्वेऽप्येते यथाक्रम वर्णपदवाक्यव्यपदेश्या निरवयवा प्रयत्नभेदभिन्नैर्नादै प्रत्येक सर्वात्मनाऽभिव्यज्यमाना एकैका क्रमरहिता नित्या अभिव्यञ्जकधर्मानुविधायिनो विनाधर्मव्य वसीयन्ते स्फोटा । पूर्वापरभागक्रमवर्णपदरूपावयवाभावमाय पुनरभिव्यञ्जकाना ध्वनीना धर्मानुविधानात् । क्रमवता हि ध्वनीना ये निष्पादकास्ताल्वादयस्तेषा प्रतिपदनि भिन्ना एव शक्तय इति विभिन्नशक्तिकताल्वादिकारणनिष्पादिता ध्वनय परमार्थत परस्पर-

मत्यन्तं विसदृशा अपि तुल्यस्थानकरणजन्मतया स्वयं सदृशभावं भजन्तः स्वव्यङ्ग्यानामन्योन्यविलक्षणानां वर्णपदवाक्यस्फोटानामपि तुल्यतामुपकल्पयन्तो भागबहिर्भूतानपि तान्भागसंक्रान्तानिवावभासयन्ति । मुखमिव मणिकृपाणदर्पणाद्यो नियतस्थानवर्णपदपरिमाणसंस्थानमनुपप्लवमेकमनेकमिवानेकविधस्थानवर्णपरिमाणसंस्थानभेदोपप्लवमिवादर्शयन्ति । तदाह भर्तृहरिः—" पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥ वाक्यात्पदानामत्यन्तं प्रविभागो न कश्चन ॥ १ ॥ प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये ॥ तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः ॥ २ ॥ " तेषामिति ये व्यञ्जका ध्वनयोऽन्योन्यव्यावृत्तास्तेषामत्यन्तविजातीयत्वाद्भेदेऽपि मिश्रीभूता इव भान्ति शक्तय इति । यथा च दूरदेशे समन्धकारे वा विषयं प्रतिपद्यते विरलं घनरूपत्वेनाकीर्णं कृष्णरूपतया । तथाऽमूनस्फोटानपि निर्भागान्नादैरभिव्यज्यमानान्भागावग्रहरूपेणाध्यवस्यति । नैतावता तत्र भागाः सत्याः सन्ति । तदाह—" यथैव दर्शनैः पूर्वैर्दूरात्सन्तमसेऽपि वा ॥ अन्यथाकृत्य विषयमन्यथैव प्रपद्यते ॥१॥ व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ॥ भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्त्तते ॥ २ ॥ " वाक्य इति वाक्यस्यैव व्यवहारोपयोगित्वेन प्राधान्यान्निर्देशः । पूर्वमिति प्रथमं वर्णपदभागावग्राहिणी बुद्धिः प्रवर्त्तत इति । अथ यथा विरलवृक्षादयः कदाचित्प्रथममेवावास्तवा विरलत्वादिप्रतीत्युपद्रवविरहिता विरलत्वादिरूपतयैव यथापथमुपयान्ति तथा स्फोटः किमिति न कदाचिदप्यामुख एवावयवावसायः । पदे वर्णलक्षणस्य वाक्ये च पदस्वरूपस्य योऽवसायः स स्वभावात्तस्यैवाखण्डस्य शब्दात्मनः प्रतिपत्तावुपायः । तत्प्रतीतावेव तस्य प्रतीतेः । येन च विना यस्य ग्रहणमशक्यं तद्ग्रहणे कथं तस्यैव

---

१ 'भगतान्' इति भ. पुस्तके पाठ. । २ वा. प. का. १ श्लो ८९ । ३ वा. प. कां. १ श्लो. ९०।९१।

त्यागः सङ्गतो भवेत् । यथा शताख्यसंख्याग्रहणे एकादिसंख्या । शताख्यसंख्या हि प्रकारान्तरेण ग्रहीतुमशक्यत्वाज्जिघृक्षायामेकादिसंख्या तद्ग्रहणोपायभूता प्रथमं गृह्यते ततः शताख्यसंख्याया अत्यन्तविलक्षणाया गृहीतिः । यदाह सद्गुरुकारः — "यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये ॥ संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥ १ ॥" शब्देति वर्णपदरूपशब्दान्तरश्रुतिर्वाक्यप्रतिपत्तावुपाय इत्यर्थः ॥ "अमतश्चान्तराले यच्छब्दज्ञानमस्तीति मन्यते ॥ प्रतिपत्तुरशक्तिः सा तद्ग्रहोपाय एव सः ॥ २ ॥" अस्यार्थः — शब्दावयवाभिमतरूपानुच्चारणान्तराले यच्छब्दस्य भागाभावादसत एवास्तीत्यस्तित्वेन सत्तया मन्यते सा प्रतिपत्तुरनवधारणावधारणाक्षमता । न च भ्रान्तिज्ञानमपि सत्यांशेनोपयुज्यतेऽपि तु तमागमाकारोपाय एवेति इति । न च भागावभासिन्यो मिथ्याबुद्धयः कथं सत्यस्फोटपरिच्छित्तिहेतवः इति वक्तव्यम् । आगमानम्पता हस्तिप्रत्ययमसाहस्य सत्यवस्तुप्रतिपत्त्ये प्रतीतिहेतुत्वदर्शनात् । तत्सिद्धमन्योन्यमत्यन्तविलक्षणा एते नानाप्रकाराः पृथक्पृथग्विषयाश्रयोऽप्यविद्योपदर्शिताः तीकारयवा वर्णपदवाक्यव्यपदेश्याः स्फोटा निरवयवा इति । यत्नश्चेयमवयवपरिकल्पना न वास्तवी तस्मादधिकायाऽयं स्फोटाख्यः शब्दात्मा नित्योऽनवयवो व्योमवदनुत्पाद्य एकरूपोऽवस्थितः । केवलं मामनिमित्तं स्थानाभिघातादिभिः प्राप्तविकारो ध्वनिरस्याभिव्यक्तौ निमित्तमात्रमुपयाति । यथावस्थितस्य घटादेरभिव्यक्तिः प्रदीपादिभिः क्रियते तथाऽस्य ध्वनिभिरिति रहस्यम् । तदाह — "अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ॥ उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ॥ ३ ॥" इति । अथ भवन्त्य निरवयवस्तथापि कथं विभिद्यते प्रत्येकं सर्वात्मना नादैः स्फोटोऽभिव्यज्यत इति । प्रत्येक-

---

१ वा प कां १ श्लो ८८ २ वा प कां १ श्लो ८९ ३ वा प कां १ श्लो ९५ ।

मभिव्यञ्जकत्वे हि ध्वनीनां प्रथमादेव ध्वनेर्वर्णादिप्रतीतिरुपपत्तेस्तन्मात्रानुबन्धित्वाच्चार्थप्रत्ययोत्पादस्य द्वितीयादिध्वनीनामानर्थक्यं भवेदिति । एतदपि न तर्ककर्कशक्षमम् । नादैरभिव्यज्यमाने हि स्फोटे ये ज्ञानविशेषा स्फोटग्रहणानुकूला इदं तदित्यव्यपदेश्यास्ते स्फोटरूपावमर्शे हेतुत्वमुपयान्ति । तैर्वैरैतैराहितसंस्कारविशेषायां बुद्धौ ध्वनिनाऽन्त्येन सह स्फोटस्य व्यक्तरूपस्य प्रतीतेः । अतो नादैर्विशिष्टप्रत्ययजननादाहितभावनाबीजाया विशिष्टसम्प्रत्ययजनने लब्धपरिपाकाया बुद्धौ शब्दोऽवभासमुपयाति न पूर्वमिति वस्तुस्वभाव एवायम् । तदाह—"प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ॥ ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥ १ ॥ नादैराहितबीजायामन्त्येन ध्वनिना सह ॥ आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥ २ ॥" इति । यथा ह्यनुवाकः श्लोको वा पुनः पुनरावृत्त्या सुखेनाऽवधारयितुं शक्यते । न च प्रत्यावृत्तिस्तत्रेदृशी बुद्धिरुपजायते यथेदं गृहीतमिदं नेति । अथ चानेकावृत्तौ श्लोकाद्यवभासः स्पष्टः संवेद्यते तथैवायमपि शब्दात्मा पुनः पुनरभिव्यक्तस्फोटरूपोऽवधार्यते । न च प्रत्याभिव्यक्तिस्तत्रेदृशी बुद्धिरुपजायत इदं गृहीतमिदं नेति । अथवाऽनेकाभिव्यक्तौ स्फोटावभासः स्पष्टः संवेद्यते । तदुक्तम्—"यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ॥ आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्तिनिरूप्यते ॥ १ ॥" अनुवाक इति वैदिकं वाक्यम् । सोढत्वमिति सोढुं शक्यत्वं बुद्ध्याक्रमणीयता स्वीकार्यत्वम् । येन स्वेच्छयैवासौ पठनीयो भवति । आवृत्त्येति जातावेकवचनम् । आवृत्तिरेकैकाऽप्युपयुज्यते, उत्तरोत्तरविशेषाधानाय । अन्यथैकावृत्त्यैव सोढता स्यादिति । अथार्थ एव प्रत्येकध्वनिव्यञ्जनीयोऽस्तु किमन्तर्गडुकल्पस्फोटपरिकल्पनयेति चेत् । न । प्रथमादेव ध्वनेरभिधेयधीसमुत्पादे हि दुर्निवारमानर्थक्यं द्वितीयादीनां ध्वनीनाम् । न चैतत्स्फोटेऽपि

---

१ वा. प. का. १ श्लो । ८४।८५. २ वा. प. का. श्लो. ८३ ।

समानम् । प्रत्यक्षस्य हि तस्य प्रतिध्वनिव्यञ्जनीयस्याभिव्यक्तितारतम्य नानाध्वनिभिर्नायत इति नानर्थकत्वमुच्चरेणाम् । न चेयमप्रत्यक्षेऽभिधेय निधो सम्भविनी । प्रत्यक्षगोचरे ह्यर्थोऽभिव्यक्तितारतम्यमाग्भवति । न मानान्तरगोचर । स खलु गृह्यते न वा पुनरभिव्यक्तोऽनभिव्यक्तश्च । एव च लब्धास्पदमिद यदुच्यते प्रत्येक सर्वात्मना नादाभिव्यङ्ग्य स्फोट इति । अस्य च स्फोटस्य सव्यवहारक्रमेऽभिव्यञ्जकक्रमोऽनुवचनादिव य क्रमरूपावसाय उपप्लवोऽयमनादिभ्रान्तिरूप । अय मेव व्यवहारस्य निमित्तम् । अत एवायमतिदार्ढ्यं गतोऽशक्यापनयन । यथा ज्ञानस्याभिन्नस्यावबोधमात्रात्मकस्य नीरूपस्यानवयवत्वेऽपि सव-नेयरूपोपग्राहित्वाद्भेदरूपेणावभास एव वृथा निगतिर्गम इति । यथा चेतन नेयरूपावग्रहणेनात्मभूतेन विना व्यवहारेऽवतारयितु न शक्यते तथा स्फोटेनापि नालब्धक्रमेण कश्चिदर्थोऽभिधातु शक्य, तत क्रमावसाय प्रतिपत्तृणाम् । न त्वत्र निर्भागे वस्तुत क्रमो नाम कश्चिदस्तीति । निर्निभागमेतत्क्रमरहित स्फोट इति । नियताश्च पदार्थाना शक्तय । तेन तेऽन्यथाकरणेऽत्यन्तमसमर्था । यथा हि क्षीरस्य विकारे दध्यादौ बीजस्य पत्रनालादौ न शक्यते रानापि प्रथमा उत्तरा कारयितुमुत्तरा वा प्रथमा । अपि तु तयोर्विकारे नियतैवानुपूर्वा प्रथमभिदमिदमुत्तर तत इति । तथैव प्रतिपत्तृणामपि बुद्धिषु सैव नियतक्रम । ततो बुद्धिक्रममन्तरेण स्फोटप्रतिपत्तौ प्रतिपत्तृणामशक्तया न तस्य शब्दात्मनोऽशब्द-तयाऽपि बुद्धिवस्तुन क्रमिणा भाव्यमित्येवमपराधस्तण्डव्यवस्था युक्तेति । तदाह— " यथानुपूर्वीनियमो विकारे क्षीरबीजयो । तथैव प्रतिपत्तृणा नियतो बुद्धिषु क्रम ॥ १ ॥ " इति नित्यश्चासावभ्युपगन्तव्य । अनित्यत्वे हि सङ्केतकालानुभूतस्य तदैव ध्वस्तत्वा त्कालान्तरे देशान्तरे वा गोशब्दस्य श्रवणात्ककुदादिमदर्थप्रतीतिर्न

१ वा प का १ श्लो १२ ।

स्यात । असङ्केतितत्वात् । असङ्केतिताच्च शब्दादर्थप्रतीतौ सर्वस्य सकलशब्दार्थज्ञताप्रसक्तिः । सङ्केतकरणानर्थक्यं च भवेत । ननु नियमस्तावदभिव्यञ्जकानामभिव्यङ्ग्येषु न दृश्यते । घटादयो हि सर्वैरेवाभिव्यक्तिहेतुभिः प्रकाशमात्रस्वभावैर्मणिप्रदीपोपल्यादिभिर्व्यज्यन्ते । अयं तु स्फोटात्मा नियमादभिव्यङ्ग्यः । न हि गोशब्दस्य योऽभिव्यञ्जकः स एवाश्वशब्दस्यापि ध्वनिरिष्यते । किं तर्ह्यत्यन्तविलक्षणो गोशब्दाभिव्यक्तिसामर्थ्येनासाधारणः । तस्मादत एव नियमाद्यवाङ्कुरादिवदस्य कार्यत्वमेव युक्तम् । तस्मिंश्च सत्यनित्यत्वमेव सङ्गच्छत इति मैव वोचः । यथा हि चक्षुरिन्द्रियमेव विषयरूपस्याभिव्यक्तौ निमित्तं नेन्द्रियान्तरमिति व्यञ्जकनियमेऽपि विषयरूपस्य न कार्यत्वं तथा स्फोटस्यापीति । तदुक्तम्—" ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा ॥ व्यङ्ग्यव्यञ्जकभावोऽपि तथैव स्फोटनादयोः ॥ १ ॥" अथैवमुच्यते विषयरूपेन्द्रिययोस्तावन्नास्ति नियमः । रूपमात्रस्यानेकजातिगुणभेदभिन्नस्य चक्षुषाऽभिव्यक्तेः । न तु स्फोटमात्रस्याभिव्यक्तिरेकेन नादेनेति । अत्रापि प्रतिविधीयते । तुल्येन्द्रियग्राह्येष्वपि विषयेष्वेष नियमो दृश्यते । यथा गन्धयुक्त्यादिषु । गन्धशैलेयादिद्रव्यं किञ्चिदेव कस्यचिदेव द्रव्यगन्धादेरभिव्यक्तिनिमित्तं भवति न द्रव्यमात्रमेवमिहापि नियत एव नादः कस्यचिदेव स्फोटस्याभिव्यक्तिहेतुरिति न दोषः । तदाह सदृशग्रहणानां प्रकाशकं निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितमिति । स्यादेतन्न गन्धादयोऽभिव्यज्यन्तेऽपि तु विशिष्टद्रव्यसंयोगाज्जायन्त इति । विषयमपि रूपं तर्हीन्द्रियालोकाभ्यां क्रियत इति नष्टो व्यक्तिवादः । न हि नीलादिरूपे प्रमाणमपरमस्ति येन ज्ञायेत प्रागेतत्स्थितमिति । स्पर्शेन तस्य ग्रहीतुमशक्यत्वात् । विचित्रास्तु भावशक्तय इति किञ्चिच्च नियतव्यञ्जकव्यङ्ग्यं किञ्चिच्चानियतव्यञ्जकव्यङ्ग्यमिति को दोषः प्रतिनियतव्यञ्जकव्यङ्ग्यत्व

१ वा. प. का. १ श्लो ९८ ।

इति । असदेतत् । अभिव्यञ्जकधर्मानुविधानमभिव्यङ्ग्यानां न दृष्टम् । न खलु प्रदीपे घटादेरल्पत्वे महति महत्त्वमनेकस्मिन्वाऽनेकत्वमवलोक्यते । स्फोटस्य पुनरल्पतादिमत्त्वे महति महत्त्वमनेकस्मिंश्चानेकत्वमतोऽस्य कार्य एव न व्यङ्ग्य इति चेत् । मैवम् । यतोऽभिव्यङ्ग्यानामप्यभिव्यञ्जकधर्मानुविधानं केषाञ्चिदुपलभ्यते । खड्गे हि मुखं प्रतिबिम्बितं दीर्घमुपलभ्यते ह्रस्वमपि तारकादौ । मस्याभरेऽप्यादर्शमेवं जलतरङ्गानेकत्वे च तथा तत्रानुवर्तमान उपलभ्यत एवेत्ययमपि न दोषः । अथ मुखादिभ्यो भावान्तरमादर्शादिषु सन्निवेशमुपलभ्यते न तु त एव मुखादयस्तत्र बिम्बिता उपलभ्यन्त इति चेत् । अचतुरस्रमेतत् । अत्यल्पप्रमाणेषु हि मण्यादिषु स्वच्छद्रव्यादिषु तदाधाररूपतयाऽवस्थितेषु महाप्रमाणानामवनिधरतुल्यरूपाणां तदन्तः सन्निवेशित्वेन भावानामुत्पत्तिः । तथाऽभ्युपगमे हि प्रतिबिम्बनिमित्तद्रव्यापनयनेऽपि प्रतिबिम्बरूपस्य भावान्तरस्य तत्रोत्पन्नत्वात्तदानीं तत्रोपलब्धिः स्यात् । आस्तां चिरतनमितनस्लङ्कवन । अथ तात्कालिक एवाऽसौ भावस्तत्रोत्पन्नो यावत्तस्मात् प्रतिबिम्बनिमित्तस्य द्रव्यस्य तावदुपलभ्यते नोत्तरत्र । सुवर्णादिद्रवमात्र इवाग्निसंयोगादिति मतिः । विषमोऽयमुपन्यासः । सुवर्णादिद्रव्यमात्रा हि वह्निसंयोगविश्लेषानन्तरं स्तोककालमुपलभ्यते प्रतिबिम्बं पुनस्तन्निमित्तद्रव्यापनयनानन्तरं मुहूर्तमपि तदाधारेषु नोपलभ्यते । किञ्च, आदर्शादिमण्डले प्रतिबिम्बोदयकाले नष्टप्रतिबिम्बमेव तत्रोत्पन्नं, प्रतिबिम्बरूपेण वा तदेव परिणतं, पुनश्च तस्मिन्नेव क्षणे प्रतिबिम्बनिमित्तद्रव्यापनयने प्रतिबिम्बभावान्तरमपि सन्नष्टमादर्शमण्डलं च पूर्वरूपसदृशमुत्पन्नं, प्रतिबिम्बमेव वा पुनरादर्शमण्डलरूपेण परिणतमित्येवमुपगमे प्रतिपदं वस्तुविनाशप्रसङ्गः । स च हेतुनोऽभावे विनाशवादिनामनभिमतः । तस्मात्स्थितमेतत् पर्वतादिरूपा भावान्तरोत्पत्तिः किं तर्हि तदेव रूपमभिव्यञ्जकवशात्तथा प्रतीयत इति । यदाह—" विरुद्धपरिणामेषु खड्गादर्शतलादिषु ॥ पर्वतादिस्वरूपाणां

---

१ वा प० का० १ श्लो० १०१ ।

भावानां नास्ति सम्भवः ॥ १ ॥ " इति । एवं च स्थितमेतत्, अभिव्यञ्जकधर्मानुविधायी शब्द इति । यतश्च शब्दात्मनः स्वतो न भेदोऽपि त्वभिव्यञ्जकवशात्तस्मादभिन्नकालेऽपि कालभेदादेव वर्णपदवाक्याख्यास्त्रयोऽपि स्फोटा नित्यत्वादत्यन्ताविद्यमानकालभेदाः । यस्त्वेषां ह्रस्वदीर्घप्लुतव्यपदेशयोग्यो मात्रिकादिस्वकालावगमो यश्च द्रुतादिवृत्तित्रये त्रिभागाधिकत्वेन भेदः स सर्वो नादानामभिव्यञ्जकानां तथा तथा भेदात् । यदाह—" तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ॥ वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते ॥ १ ॥ " इति । तथाक्ता हि ध्वनयः शब्देऽभ्यस्यमानाः शब्दात्मना स्वकालताव्यवहारहेतवो भवन्ति । द्विधा हि ध्वनयः प्राकृता वैकृताश्च । तत्र प्राकृता नाम ते यैर्विना सामान्यविशेषरूपेण स्फोटात्मा प्रतीतिविषयं न याति । प्रतीतस्तूत्तरकालं यै स एवायमित्युल्लेखेन चिरकालमुपलभ्यते ते वैकृता इत्युच्यन्ते । यदाह सङ्ग्रहकारः—" शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ॥ स्थितिभेदे निमित्तं चेद्वैकृतः प्रतिपद्यते ॥ १ ॥ " इति । य. प्रथमं जातो ध्वनिस्तस्य मात्राकालत्वात्तदुपचारेण तदभिव्यक्तः स्वतो निरवयवत्वादत्यन्तं पूर्वापरभागरहित. स्फोटात्मापि मात्राकाल इति व्यपदिश्यते । तन्निमित्ता च ह्रस्वसंज्ञा शास्त्रे व्यवहाराय क्रियते । तदाह—"एकमात्रो भवेद्ध्रस्वः" इति । य. प्रथमं जातो ध्वनिर्यश्च तज्जस्ताभ्यामभिव्यक्त स्फोटोऽपि तयोर्द्विमात्राकालत्वादुपचारेण मात्राद्वयकाल इत्यपदिश्यते । तन्निमित्ता च दीर्घसंज्ञा क्रियते । यदाह—" द्विमात्रो दीर्घ उच्यते " इति । प्रथमध्वनिजातध्वनेर्जातो यस्तृतीयो ध्वनिस्तेन पूर्वाभ्यां चाभिव्यक्तस्तेषां त्रिमात्राकालप्रमाणत्वादत्यन्ताप्रमाणोऽपि शब्दस्त्रिमात्र इत्युच्यते । तन्निमित्ता च प्लुतसंज्ञां लभते । तदुक्तम्—" त्रिमात्रस्तु प्लुतो ज्ञेयः " इति । ततस्तु प्रभृति ये जायन्ते ध्वनयस्ते वैकृतास्तत्कालः

१ वा. प. का. १ श्लो. १०२. २ वा. प. कां. १ श्लो. ७७ ।

स्फोटात्मनि नाध्यस्यते ध्वनिकाल एवासौ गम्यते । न शब्दकालः । ध्वनयो हि निर्गीष्टाभिघातादुपजायमानाः केचिदनारब्धकार्या विलीयन्ते । कतिचिदेकं ध्वनिं जनयित्वा नश्यन्ति । केचिद् द्वौ, केचिद्बहून् । ततोऽन्यः शब्दकालोऽन्यश्च ध्वनिकाल उच्यते । द्रुतायां वृत्तौ ये वर्णास्ते त्रिभागाधिका मध्यमायां ये च मध्यमायां ते त्रिभागाधिका विलम्बितायामिति यो भेदः स ध्वनिभेद एवाभ्युपगम्यते । न शब्दभेदः । शब्दे तस्यानध्यासात् । तदुक्तम्— ' सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते " इति । तेनातोऽभि शब्दे सेयादो " तपरस्तत्कालस्य " इति वचनात्तपरेण निर्देशेन मात्राकाले प्रत्याय्यमाने परमार्थेन खट्वाभिरित्यत्राप्येककालत्वाद्यककारवर्णस्फोटस्य ग्रहणं प्राप्तं तन्न भवति । प्राकृतध्वनिकालेन तत्रोपचरितेन भेदात् । द्रुतादिवृत्तिकालस्य तु स्फोटकालत्वेनाऽनाश्रितत्वात् । यस्यां कस्याञ्चिद्वृत्तावकारान्तस्य परत्वेऽभ्युपगते सर्ववृत्तिषु ग्रहणं सिद्धं भवति । तदाह—" स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ॥ प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥ १ ॥ शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदं तु वैकृताः ॥ ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ २ ॥ " वृत्तिभेदमिति कालान्तरावस्थितिभेदं द्रुतादिरूपं शब्दस्य । समुपोहन्ते घटयन्ति । तैरिति वैकृतैरिति । ध्वनिग्रहणे च त्रयो वादाः । केचिच्छब्दरूपाविभक्तग्रहणं रूपादिनालोकं ध्वनिं मन्यन्ते । इन्द्रियसंस्कारमेवान्ये । स्वतन्त्रमपि कतिपये । तथा हि—ताल्वादिकरणसन्निपातजनितध्वन्यभिव्यङ्ग्यस्फोटस्वरूपाविभागेन ध्वनिरूपप्रतीतिरिति न ध्वनिनापि स्फोटः परस्परतो भेदेन ग्रहीतुं शक्यते । यथा प्रभाकरादिकारणजनितालोकाभिव्यङ्ग्यस्तम्भकुम्भादिरूपाऽविभागेनालोकप्रतिपत्तिरिति नालोको नापि विषयश्च परस्परतो विभागेन ग्रहीतुं पार्यते । यथा च प्रभाकरादिकारणजन्योऽयमालोकः

१ पा मा वार्तिके । २ पा सू १।१।७० ३ वा प का श्लो ७६।७८ ।

काष्ठादिकारणजन्यस्तु स्तम्भादिरित्यनयोर्भेदो व्यवस्थाप्यते तथेहापि ताल्वादिकारणजन्योऽयं ध्वनिर्नित्यत्वादकार्यश्च स्फोट इत्यनयोर्भेदोऽवस्थाप्यते न तु भेदेन ग्रहणम् । केवलमिदमेव सम्भवति, आलोकपरिकल्पिता विषयप्रतिपत्तिर्ध्वनिविनिर्मिता तु स्फोटप्रतिपत्तिरित्येके । यथेन्द्रियं विषयप्रतीत्यन्यथानुपपत्त्याऽनुमेयं किमप्यस्तीति कार्यदर्शनादवस्थाप्यते तथा स्फोटोपलब्ध्यन्यथानुपपत्त्या ध्वनिः कश्चिदत्यन्तपरोक्षोऽस्ति करणव्यापारज इत्यनुमीयते । स्फोटस्तु शुद्ध उपलभ्यते इतीतरे । अन्ये पुनः, यदा नाकारादिविशेषावगमः केवलरुणरुणायितादिकरणे तदा स्वतन्त्रो ध्वनिः प्रतीयते । अकारादिव्यक्तवर्णप्रतीते तु स्फोटरूपेण संसृष्टः प्रतीयत इत्याहुः । यदुक्तम्—

स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते ॥ कैश्चित् ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकल्पितः ॥ १ ॥" इति । स्फोटस्याभिव्यक्तौ त्रयो दर्शनभेदाः केचिदाहुः—'स्फोटस्यैव संस्कारो ध्वनिभिर्विधीयते ततोऽसौ प्रतीतिविषयो भवति । यथा तैलादेर्गन्ध आतपेन पृथिव्याश्चातपशुष्काया उदकेन संस्कृतो ग्रहणयोग्यो भवति घ्राणस्य । तत्र संस्कारोपगमे संस्कृतविषये तुल्यं ग्रहणं भवेन्न च भवति तस्माद्विषयस्यैव तत्र संस्कारः क्रियते ' इति । अन्ये पुनरिन्द्रियस्यैव संस्कार इति प्रतिपन्नाः । यथाञ्जनद्रव्यं चक्षुरेकं संस्करोति न विषयं बाह्यमतिप्रसङ्गादतिप्रसिद्धमेतत् । इन्द्रियस्य स्फोटस्य च संस्कार इत्यपरे उरीकृतवन्तः । यथा वैशेषिकस्य प्राप्यकारिणि चक्षुषि तुल्यजातीयेन तेजसा प्रकाशापरपर्यायेण नयनरश्म्यनुग्रहः क्रियते विषयस्य च योग्यतेति । तदाह—" इन्द्रियस्यैव संस्कारो विषयस्योभयस्य वा । क्रियते ध्वनिभिर्वादास्त्रयोऽभिव्यक्तिवादिनाम् ॥ १ ॥ " इति ॥

एवं च—

१ वा. प. का. १ श्लो. ८२. २ वा. प. कां. १ श्लो. ७९ ।

न स्याद्वादिनाम् । तैर्यथाप्रतीति कथञ्चित्तद्भेदोपगमात् । एकानेकाकारप्रतीतेरेकानेकाकारस्य जात्यन्तरस्य व्यवस्थितेः । न हि वर्णाद्याकर्णनसमनन्तरमेकानेकाकारप्रतीतिरनालम्वना युक्ता । सर्वत्र सर्वदा सद्भावप्रसङ्गात् । नाप्यवयवमात्रहेतुका । एकत्वांशविरोधापत्तेः । ततो वर्णाद्याकारपरिणतद्रव्यशब्दहेतुकेयं प्रतीतिस्तत्त्वं तथा परिणतशब्दवाच्यं तात्त्विकानेकप्रतीकाकलिकालवरम् । अत एवैकानेकाकारं सिद्धम् । वाधकाभावात् । यच्च पूर्वादिभागवर्णपदरूपावयवावसायः पुनरभिव्यञ्जकानां ध्वनीनां धर्मानुविधानादित्याद्युक्तम् । तदप्ययुक्तम् । ध्वनीनां भट्टाभिमतवर्णनित्यत्वैकान्तविकुट्टनावसरे सविस्तरमपाकरिष्यमाणत्वात् । यदपि वर्णाद्यवयवावभासासत्यत्वप्रदर्शनार्थं मुखमिव मणिकृपाणेत्यादिनिदर्शनमदर्शि तदपि दार्ष्टान्तिकेन सह वैषम्यात्स्वसिद्धान्तश्रद्धान्तःकरणस्य भणनमात्रम् । वस्त्वन्तरमेव हि प्रतिविम्वाख्यं तात्त्विकानेकतथाविधधर्मोपेतं प्रतिविम्वकारणविम्वाख्यमुखविलक्षणं मणिकृपाणदर्पणादिषूत्पद्यते । न तु तदेव मुखं खड्गतैलोदकदर्पणादयस्तथा तथा प्रथयन्ति । प्रतिविम्वस्य च तात्त्विकत्वमुपरिष्टान्निर्णेष्यामः । यदपि चात्मनः प्रौढिप्रदर्शनार्थमुदाहरणान्तरं यथा च दूरदेशे समन्धकारे वेत्यादिना प्रकीर्त्तितम् । तदप्यकीर्त्तिकरम् । दूरदेशावस्थितस्य हि विरलपदार्थस्य घनरूपताप्रतीतिरुत्तरकालभाविवलिष्ठविरलरूपताप्रत्ययेन वाध्यत इति तत्र घनत्वप्रतीतिवशाद्व्यवस्थाप्यमानं घनत्वमस्त्ववास्तवं कः किमाह । वर्णाद्यवयवावभासस्य तु नोत्तरकालिकं वाधकं किञ्चिच्चेतयामः । तत्कथमिव तद्वशात्सिद्धपद्धतिमनुधावन्तो वर्णाद्यवयवाः । न हि निरवयवं स्फोटं नाम किञ्चित्क्वचन कदाचनापि प्रतीमो येन तद्बलेन वर्णाद्यवयवान्प्रत्याचक्ष्महे । अथार्थप्रतीत्यन्यथानुपपत्त्या स्फोटः प्रतीयत एवेति चेत् । एतदपि दुरुत्तरेतरेतराश्रयप्रसङ्गपराहतम् । न खलु सत्तामात्रेण शब्दोऽभिधेयधियमाधातुमर्हति ।

अतिप्रसङ्गात् । अतो नातस्तद्धेतुरेषितव्य । न ान वाच्यार्थप्रत्ययलक्षणलिङ्गप्रभवमिति यावन्नार्थप्रत्ययस्तावन्न स्फोटनाम यावच्च नेद न तावदर्थप्रत्यय इति । अर्थप्रतीत्यन्यथानुपपत्त्या वा स्फोटस्य कल्पने शब्दस्व तत्र दुष्पपाद्म् । शब्दशब्दप्रयोगाभावप्रसङ्गात् श्रोत्रग्राह्ये ह्यर्थे लोके शब्द प्रयुज्यते । अथप्रत्यायकत्वमात्रेण च स्फोटस्य शब्दत्वोपगमे धूमध्वजप्रभृतिक प्रत्याययतो धूमादेरपि शब्दत्व भवेत् । अगृहीतगोशब्दसङ्केतस्य च नालिकेरद्वीपनिवासिनो गौरिति शब्दश्रवणसमनन्तर यावन्न कश्चनार्थविशेष समुन्मिषति तावच्छ्रुत पूर्वोऽय गोशब्दो न जाने कीदृगस्यार्थ इति वक्तुमपि न पारयेदसाविति हता बत लोकयात्रा । यदप्यथ यथेत्याद्याशङ्क्य यतो वर्णपूर्वापरयवेत्यादिना समाहितम् । तदपि नावदातम् । यथा खल्ववयवप्रद्मपहाय नेद निरवयव स्फोट प्रत्येतु पार्यत इत्यसन्तोऽपि तद्ग्रहणोपायभूतास्तस्यावयवा परिकल्प्यन्ते । तथा क्वचित्कदाचित्कश्चित्परोक्षोऽर्था न शब्दप्रतिपत्तिमन्तरेणावसातु शक्यत इति शब्दोऽप्यसन्नेवार्थग्रहणहेतुत्वात्परिकल्प्यत इत्यपि प्रसज्यते देवानांप्रियस्य । यदपि न च मागावसायित्व इत्याद्याशङ्क्याद्यनस्पतावित्यादिना समाहित तदपि न चारु । न खलु दूराचरी करिप्रत्ययपरम्पराया सत्यतरप्रतीतौ हेतुत्वम् । तथाविधसंनिधानाभिव्यक्षयोपशमविशिष्टस्यास्मदादेस्तथैव तद्धेतुत्वोपपत्ते । अपि च, वर्णस्फोट पदस्फोट च यथाक्रम पदवाक्यस्फोटाभ्या पृथग्भूतम्, अत एव शुद्धपदव्यपदेश्य वस्तुसन्त क्वचित्प्रतिपद्य पदवाक्यस्फोटयो काल्पनिक तमुररीकरोमीति वदन्त त्वा न कश्चित्प्रतिरुणद्धि न रुणद्धि वा । वर्णस्फोटावयवा नामवास्तवत्वमुपदिशन्त पुन पर्यनुयुज्महे महोपाध्यायम् । यथा किल पदस्फोटात्पृथग्भूत वर्णस्फोट पारमार्थिकोऽभ्युपगम्यते तथा कथ वर्णस्फोटाद्विभिन्नोऽवयवस्फोटोऽपि नोपेयत इति । तदुपगमे पूर्वोपपूर्वपरोपपरापरावयवस्फोटपरम्पराऽनुभवसुभगनवतीर्णा परिकल्पिता

स्यात्, स्वमतावमानना च । अथ वर्णस्फोटादिभिर्विद्यमानमूर्तीस्तदवयवान्न क्वापि प्रतीमस्तत्कथमिव तत्स्फोटांस्तात्त्विकानुररीकुर्महे इति चेत् । तत्किमिदानीं प्रतीतिमपि प्रमाणतया प्रतिजानीषे । ओमिति चेत् । हन्त तर्हि पदादौ वर्णादिप्रतीतिरस्तीति किमिति न तत्र वर्णादिर्वास्तवः स्वीक्रियते । अथोक्तमशक्तास्तादृशं पदादिस्फोटं प्रत्येतुं प्रतिपत्तारो वर्णादिप्रतीतिमन्तरेणेति तत्प्रतीत्युपायोऽभावमन्नेव तत्र वर्णादिर्गृह्यतेऽतोऽसत्य एवायमुररीक्रियत इति चेत् । नन्वेवमपि वक्तुं शक्यते । वर्णावसायमन्तरेणावयवानवसातुमशक्ताः प्रमातार इति वाक्यस्फोटे पदवदुपायभूत एव तत्रासन्नपि वर्णो गृह्यत इत्यसत्य एवायमवयवास्तु सत्या इति । यदपि "विचालरूढा हि भवन्ति निश्चलाः" इत्यमुं न्यायं निधाय चेतोधायि, अथ भवत्वयं निरवयव इत्यादि प्रश्नं तदपि न तर्ककर्कशेत्यादिसमाधानं च भवानभ्यधात् । तदपि न सुधियामवधानार्हम् । यतः कः खलु विचारमार्गासञ्चरिष्णुध्वनिमनभिगम्यमानो मनस्वी स्वप्नेऽपीदृशमाशङ्कते, उत्तरं वा स्वीकुरुते । किंच, निरवयवस्य वर्णादेर्दृश्यमानस्य न कश्चिद्भागोऽदृश्यमानोऽस्ति यदपेक्षयाऽस्फुटं दर्शनमस्योपपद्यते । यथोभयसम्प्रतिपन्नस्थाण्वादेः । अपि चावृतस्य सतोऽभिव्यक्तिः सम्भवति । नित्यनिरंशस्य चावरणं मीमांसकाभिमतवर्णनित्यत्वपराकरणप्रकरणे पराकरिष्यते । यच्च यथा ह्यनुवाकः श्लोको वेत्यादि निदर्शनमुक्तम् । तदप्ययुक्तम् । यतोऽनुवाकश्लोकौ सावयवौ वा स्यातां निरवयवौ वा । प्रथमपक्षे वैषम्यम् । अनुवाकादौ हि सावयवत्वात्स्फुटोऽस्फुटश्चावभासो युज्यते । स्फोटे तु निरवयवत्वान्न तौ सम्भवत इति । अपसिद्धान्तप्रसङ्गश्चास्मिन्पक्षे वैषम्यम् । श्लोकानुवाकयोरपि स्फोटरूपत्वेनाभ्युपगतयोर्भवच्छास्त्रे निरवयवत्वेनाभ्युपगतत्वात् । द्वितीयविकल्पे तु देवदत्त गामभ्याजेति वाक्यस्फोटवदेतावपि पूर्वपूर्वध्वनिजनिताभिव्यक्तिकृतसंस्कारविशेषाव-

1 स्थूणानिखननन्यायसमानार्थकोऽयं न्यायः ।

च्चारणान्यथानुपपत्तेः । तथा च जैमिनीयं सूत्रम्—"दर्शनस्य परार्थत्वात्" इति । अनेन किलार्थापत्तिरुक्ता । कथम् । दर्शनमुच्चारणम् । तच्च परस्यार्थप्रतिपत्त्यर्थम् । सा चाऽर्थप्रतिपत्तिः शब्दस्यानित्यत्वे न घटते । गृहीतसम्बन्धाद्धि शब्दादर्थप्रतीतिराभिमता । नान्यथा । अतिप्रसक्तेः । सम्बन्धावगमश्च प्रमाणत्रयसम्पाद्यः । तथा हि—यदैको वृद्धोऽन्यस्मै प्रतिपन्नसङ्केताय प्रतिपादयति देवदत्त गाम-भ्याज शुक्लां दण्डेनेति । तत्र पार्श्वस्थोऽन्यः कश्चिदव्युत्पन्नसङ्केतः शब्दार्थौ वृद्धौ च प्रतिपाद्यप्रतिपादकौ प्रत्यक्षतः प्रतिपद्यते । श्रोतुश्च प्रतिपाद्यवृद्धस्य गवानयनगोचरप्रेक्षणादिविशिष्टचेष्टालक्षणादनुमानात्तां गवादिविषयां प्रतिपत्तिमनुबुध्यते । तत्प्रतिपत्त्यन्यथानुपपत्त्या च शब्दस्य वाचिकामर्थस्य तु वाच्यां शक्तिं परिकल्पयति । सोऽयं प्रमाणत्रयसम्पाद्यः सम्बन्धावगमो न सकृद्वाक्यप्रयोगात्सम्भवति । किन्त्वावापोद्वापाभ्यां पुनस्तच्छब्दोच्चारणेन । न चास्थिरस्य पुनः पुनरुच्चारणं घटते । तस्माच्च नान्वयव्यतिरेकाभ्यां वाच्यवाचकशक्त्यवगमः । तस्मात्प्रेक्षावद्भिः परावबोधाय वाक्यमुच्चार्यते । न चैवम् । तत् परार्थवाक्योच्चारणान्यथानुपपत्त्या निश्चीयते नित्योऽसौ । तदुक्तम्—"[1]शब्दवृद्धाभिधेयानि प्रत्यक्षेणात्र पश्यति ॥ श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥ १ ॥ अन्यथानुपपत्त्या तु बुद्धेः शक्तिं द्वयाश्रिताम् ॥ अर्थापत्त्यावबुध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥ २ ॥" अनुमानेन चेष्टयेति । गोनयनादिचेष्टालक्षणेनानुमानेन श्रोतुः प्रतिपन्नत्वं पश्यतीत्यर्थः । अर्थापत्त्येति, यद्यपि सम्बन्धावबोधे प्रत्यक्षानुमानार्थापत्तिलक्षणप्रमाणत्रयस्यापि व्यापारस्तथापि साधकतमतया करणत्वेनार्थापत्तेरेव मुख्यवृत्त्या तत्र प्रामाण्यम् । प्रत्यक्षानुमानयोः पुनस्तदन्तर्गतत्वेनातिनिकटव्यवस्थानीयत्वमिति

---

1 मी० श्लो० वा० शब्दनित्यताधिकरण श्लो० २४१-२४४

भाव. । " अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता ॥ यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् ॥ १ ॥ शब्दे वाचकसामर्थ्यं तदा दूषणमुच्यताम् " ॥ यदि शब्दे नाशिनि नित्ये वा वाचकसामर्थ्यमित्यनेन संशय उक्तः । विनाशिन्येव वा शब्दे वाचकसामर्थ्यमित्यनेन तु विपर्यय उपदर्शितः । तदा दूषणमुच्यतामिति । यदैव शब्दे वाचकसामर्थ्यं सन्दिग्ध विपर्यस्तं च स्यात्तदा दूषणावसरः । एतच्चात्रोभयमपि नास्तीति भाव । " न ह्यदृष्टार्थसम्बन्धः शब्दो भवति वाचकः ॥ तथा चेत्स्यादिपूर्वोऽपि सर्वः सर्वं प्रकाशयेत् ॥ १ ॥ सम्बन्धदर्शनं चास्य नानित्यस्योपपद्यते ॥ सम्बन्धज्ञानसिद्धिश्चेत् ध्रुवं कालान्तरस्थितिः ॥ २ ॥ अन्यस्मिन् ज्ञातसम्बन्धे न चान्यो वाचको भवेत् ॥ गोशब्दे ज्ञातसम्बन्धे नाश्वशब्दो हि वाचकः ॥ ३ ॥" अथ मतं सदृशतया शब्दस्यार्थप्रतिपत्तिहेतुत्वोपपत्तेर्नार्थापत्तितोऽस्य नित्यत्वासिद्धि । पुन. पुनरुच्चार्यमाणो हि शब्द· सादृश्यादेकत्वेनाध्यवसीयमानोऽर्थावबोधं विदधाति न पुनर्नित्यत्वादिति । नैतदपि क्षोदक्षमम् । सादृश्येन शब्दादर्थावबोधासम्भवात् । न हि सदृशतया शब्दः प्रतीयमानो वाचकत्वेन निश्चीयते । किं त्वेकत्वेन । य एव हि सङ्केतावसायसमये मया ध्वनिरुपलब्ध· स एवायमिति प्रतीतेः । अपि च सादृश्यादर्थप्रतीतौ भ्रान्तः शाब्दप्रत्यय· स्यात् । न ह्यन्यस्मिन्गृहीतसङ्केतेऽन्यस्मादर्थप्रतीतिरभ्रान्ता भवति । गोशब्दे गृहीतसङ्केतेऽश्वशब्दादिवार्थप्रतीतेरभ्रान्तत्वप्रसक्तेः । न च भूयोऽवयवसाम्ययोगस्वरूप सादृश्यं शब्दे सम्भवति । विशिष्टवर्णात्मकत्वाच्छब्दानाम् । वर्णाना च निरवयवत्वात् । न च गत्वादिविशिष्टाना गादीना वाचकत्वं युक्तम् । गत्वादिसामान्यस्याभावात् । तदभावश्च गादीना नानात्वायोगात् । सोऽयमिति प्रत्यभिज्ञया तेषामेकत्व-

---

१ मी श्लो वा शब्दनित्यताधिकरणे श्लो २३७।२३८. २ मी श्लो. सू. ५ स. श्लो. १८०, १८१ ।

निश्चयात्। अथानेकप्रतिपत्तृभिर्विभिन्नदेशतयोपलभ्यमानत्वाद्गकारादीनां नानात्वं कथ्यते । तन्न । तैर्विभिन्नदेशतयोपलभ्यमानेनाप्यैक्येनाने कान्ताद्विभिन्नदेशतयोपलम्भस्यापि व्यञ्जकध्वन्यधीनो न स्वरूप भेदनिबन्धन । तथा हि—" नित्यत्वं व्यापकत्वं च सर्ववर्णेषु संस्थितम् ॥ प्रत्यभिज्ञानतो मानाद्बाधसङ्गमवर्जितात् ॥ १ ॥ यो यो गृहीत सर्वस्मिन्देशे शब्दो हि दृश्यते । न चास्यावयवाः सन्ति येन वर्त्तेत भागशः ॥ २ ॥ " यो यो गृहीत इति । अस्य भावार्थ । नाऽस्त्यसौ देशो यत्र शब्दो नावगम्यते । यो यो देशो गृहीत सर्वत्राऽस्यावगमात् । ततोऽसावात्मादिवद्विभुरिति । " शब्दो वर्तेत इत्येन तत्र सर्वात्मकश्च स ॥ व्यञ्जकध्वन्यधीनत्वात्तद्देशे स च गृह्यते ॥ १ ॥" शब्दो वर्तत इति । न भागशः कृत्स्नपरिसमाप्त्या च शब्दो वर्ततेऽपि तर्हि शब्दो वर्तत इत्येताऽस्याविशेषित वृत्तिमात्रमातिष्ठामहे यत शब्दो वर्तत इत्येनेति वृत्तौ यद्भवति तदाह तत्रेति । तत्र वृत्तिप्रकारे । सर्वात्मक शब्दो वर्तत इत्येतावदेव भवति । नाधिक किञ्चिद्भागवृत्ति कृत्स्नपरिसमाप्तिर्वा । विभागस्य तस्य भागवृत्तेर्व्यापिनश्च कृत्स्नपरिसमाप्तेरभावादिति पूर्वार्धस्यार्थ । " न च ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम् ॥ नैरन्तर्यच्छिन्नरूपेण नाऽसौ सर्वत्र गृह्यते ॥ १ ॥ ध्वनीनां भिन्नदेशत्व प्रतिस्तिरानुरुध्यते ॥ अपूरितान्तरालत्वाच्छब्देऽप्यविभुतामति ॥ २ ॥ गतिमद्वेगवत्त्वाभ्यां ते चायान्ति यतो यत ॥ श्रोता ततस्तत शब्दमायातमिव मन्यते ॥ ३ ॥" अथैकेन भिन्नदेशतया उपलम्भा द्गादीनां घटादिवन्नानात्वम् । नैवमपि । आत्मैक्येनैवाऽनेकान्तात् । दृश्यते ह्येकेनाप्यैक्यो भिन्नदेशो न चैतावताऽसौ नाना । अथ युगपदेकेन भिन्नदेशतयोपलब्धेरिति विशिष्योच्यते । तथाऽप्येनेनैवाऽनेकान्त ।

१ मी श्लो वा शब्दनित्यताधिकरणे श्लो १७१।१७२ । २ समनवाप्त इति भ पुस्तके पाठ । ३ मी श्लो वा शब्दनित्यताधिकरण श्लो १७३।१७८।

जलपात्रेषु हि भिन्नदेशेषु सविताऽप्येकोऽप्येकेन युगपद्भिन्नदेशः गृह्यते । अथ न तत्र मार्तण्डमण्डलमवलोक्यते तस्य नभसि व्यवस्थानात्तन्निमित्तानि तु जलपात्रेषु प्रतिबिम्बानि भिन्नानि प्रतीयन्ते ततो नानेकान्तः । तदुक्तम्—" अहो केन निमित्तेन प्रतिपात्रं पृथक्पृथक् ॥ भिन्नानि प्रतिबिम्बानि गृह्यन्ते युगपन्मया ॥ १ ॥" एतत्कुमारिलः परिहरन्नाह—" अत्र ब्रूमो यदा तावज्जले सौर्येण तेजसा ॥ स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्तितम् ॥ १ ॥ स्वदेशमेव गृह्णाति सवितारमनेकधा ॥ भिन्नमूर्त्तिर्यथा पात्रं तदाऽस्यानेकता कुतः ॥ २ ॥ " प्रतिस्रोतः प्रवर्त्तितमिति प्रतीपप्रवर्त्तितमिति प्रतीपप्रवर्त्तितमधस्तात्प्रवृत्तं सदूर्ध्वं प्रवर्तितमित्यर्थः ।

एवं च—

नित्यत्वं शब्दराशेः श्रवणकरणकं भ्रान्तिसन्देहशून्यं
विज्ञानं प्रत्यभिज्ञेत्यभिहितममलं मूलतस्तावदत्र ॥
पश्चान्नि शेषदोषैर्विरहितमुदितं लैङ्गिकं मानमन्ते
त्वर्थापत्तिः कलङ्कव्यतिकरविधुरा दर्शिता सिद्धिहेतुः ॥५५७॥
जैमिनीयनिनदेषु नित्यता दर्शितैवमतिविस्तरात्त्वया ॥
किन्तु काचिदपि युक्तिरक्षता वीक्ष्यतेऽत्र न परीक्षकोचिता ॥५५८॥

तथा हि—यत्तावदुपन्यस्तं स एवायं गकार इत्यादिप्रत्यभिज्ञाप्रत्यक्षत एव तावद्वर्णानां नित्यत्वमवसीयत इत्यादि । तन्न सत्यम् । अस्यैकत्वप्रत्यभिज्ञानस्य भ्रान्तत्वेनैकत्वसिद्धावसमर्थत्वात् । प्रदीपाद्येकत्वप्रत्यभिज्ञानवत् । न खलु स एवाऽयं प्रदीपः कदलकाण्डकुन्तलकलापादिर्वेत्यादि प्रत्यभिज्ञानं प्रदीपादीनामेकत्वं प्रसाधयति । अथाऽनैकत्वाभावात्तस्यैकत्वप्रसाधनासामर्थ्यम् । तदितरत्रापि तुल्यम् । ननु तैलादिकारणकलापस्योत्तरत्र क्षयोपलम्भात्प्रदीपादेः प्रतिसमयमन्यत्वप्रतीतिरुपपन्नमेकत्वासत्त्वम् । न तु शब्दस्य । विपर्ययादिति

१ मी. श्लो वा। शब्दनित्यत्वाधिकरणे श्लो. ७९।८०।८१।८२।

चन् । तदपि न्यायबाह्यम् । शब्दस्य ताल्वादिसंयोगविभागलक्षणकारणकदम्बकस्योत्तरत्र क्षयप्रतीतिन प्रतिक्षणमन्यत्वासिद्धेरेकत्वासत्त्वोपपत्तेः । अथ ताल्वादिसंयोगविभागयोः शब्दाभिव्यञ्जकसमीरणोत्पत्तौ कारणत्वं न शब्दोत्पत्तावित्युच्यते । तर्हि दीपिकामुत्पत्तिज्ञानलक्षणयोगादेरपि प्रदीपाद्यभिव्यञ्जकप्रभञ्जनजनने कारणत्वं न प्रदीपाद्युत्पादे इत्यप्युच्यताम् । विशेषादर्शनात् । प्रतीतिविरोधः पुनरुभयत्राप्यविशिष्टः । अनेन नापि मिथ्यात्वरूपं बाधानिरुत्यादित्यपास्तम् । ताल्वादिसंयोगविभागलक्षणस्य कारणकदम्बकस्योत्तरत्र क्षयप्रतीतिन प्रतिक्षणं शब्दस्यान्यत्वसिद्धेरेव बाधकत्वात् । उत्पन्नः कुम्भो विनष्टः कुम्भ इति प्रतीतिवत् । अथ प्रत्यभिज्ञानेनैव प्रतीतिः कस्मान्न बाध्यते । नैव वाच्यं । प्रत्यभिज्ञानस्य शब्दे सादृश्यहेतुकतया भ्रान्तत्वेन निरस्तत्वात्प्रबाधकत्वात् । ननु यथा घटे विनष्टे विनाशकारणं मुद्गरादि कपालमाला च विलोक्यते न तथा शब्दश्रवणानन्तरं विनाशकारणं कपालमालाकल्पं च किमपि परिदृश्यते । केवलं शब्दो नोपलभ्यते । न चानुपलब्धिमात्रेण विनाशोऽस्यावगन्तुं शक्यते । तथा सत्युपलभ्यानुपलभ्यमाना घटादीनां विद्यमानानामेव विनाशः स्यात् । न चैवमस्ति । तदयुक्तम् । यतः शब्दस्यापरक्षणानन्तरं कुम्भादिवदन्यत्र न गतः । व्यापकत्वेन तस्य त्वया स्वीकारात् । नापि घटादिरिव तत्रस्थ एव केनचिदावृतः । तदावरणस्य निराकरिष्यमाणत्वात् । नापि सूक्ष्मः श्रोत्रेन्द्रियेणापि कश्चिदुपगतः । शब्दान्तराणां तदानीमेव श्रवणात् । न चानवहितः प्रमाता । सविशेषमवधानवतोऽपि तदनुपलम्भात् । सत्यामपि चैतावत्यां सामग्र्यां स कुम्भादिरन्यो वा कश्चिदावारकोऽस्ति तस्य ध्वंसः प्रत्यक्षेणावगतो भवति । एवं च प्रत्यक्षप्रसिद्धध्वंसस्य न कारणमात्रद्वारेणाऽभावोऽभिधातुं साधीयान् । एतद्ध्वंसादेव कारणस्यानुमितेः । यदुक्तं कपालमालाकल्पं च किमपि न परिदृश्यत इति । तदपि न्यायबाह्यम् । न ह्ययमेकान्तो यत्सर्वत्र वस्तुविनाशे तद

वयवानामुपलम्भेन भाव्यम् । विपुलस्यापि चपलादण्डस्य महतोऽपि च प्रदीपकुड्मलस्य सहसैव विनाशे तदवयवानामनुपलम्भात् । अथ तयोरवयवानामवयविविपरीतपरिणामापन्नत्वान्नोपलम्भः । शब्दावयवानामप्येवमस्तु । 'नन्वेकज्ञानसंसर्गिपदार्थान्तरोपलम्भात्कुम्भाद्यभावप्रतीतिर्दृष्टा । शब्दाभावप्रतीतिस्तु कथम् । तत्रैकज्ञानसंसर्गिणः कस्यचिदप्यभावादिति चेत् । तदप्यसूक्ष्मम् । विवक्षितशब्दाभावप्रतीतौ शब्दान्तरस्यैकज्ञानसंसर्गिणः सम्भवात् । निःशब्दे प्रदेशे सर्वशब्दाभावप्रतीतौ तर्हि तदसम्भव इति चेत् । मैवम् । तत्राऽप्यात्मस्वरूपस्य तदेकज्ञानसंसर्गिणः सम्भवात् । स्वपररूपावभासकस्वभावस्य ह्यात्मनः परस्मिन्योग्यदेशावस्थिते वस्तुनि न केवलात्मस्वरूपसंवेदनं भवेत् । यावन्ति खलु वस्तूनि प्रतिषेध्यत्वसम्मतवस्तुना साकं योग्यदेशस्थितानि सन्त्यवश्यं प्रतिभासन्ते तानि सर्वाण्यप्येकज्ञानसंसर्गीणि । तत्र कुम्भादौ प्रतिषेध्यो भूतलादिरात्मस्वरूपं चैकज्ञानसंसर्गि । शब्दे तु प्रतिषेध्ये सशब्दके प्रदेशे शब्दान्तरमात्मस्वरूपं च । निःशब्दके तु केवलमात्मस्वरूपम् । अथ वा मा भवत्वेकज्ञानसंसर्गिपदार्थान्तरम् । प्रमाणान्तरगृहीतं तु भविष्यति । यथा स्मृतिगोचरे चैत्यकुलादौ क्वचिदभावप्रमाणेन भवतामभावग्रहणे चैत्यकुलादि । स्यादेतत् । यद्यपि शब्दो नान्यत्र गतो यद्यपि श्रोता समवधानबन्धुरो यद्यपि च नेन्द्रियदोषः सञ्जातस्तथापि व्यञ्जकाभावादेवायं नोपलभ्यते । यथा प्रदीपाद्यभावात्तिमिरनिकरकरम्बितकुम्भादिः । न खलु दृश्यस्वभावापरित्यागेनादृश्यस्वीकारे तस्यावृतत्वमुपपद्यते । अतिप्रसक्तेः । यद्यदा यत्स्वरूपं न परित्यजति न तस्य तदा प्रत्यनीकस्वरूपसम्भवः । यथाऽनावृतावस्थायां दृश्यस्वरूपं शब्द इति । तदा तत्स्वरूपपरित्यागे वा सिद्धमस्यानित्यत्वं स्वरूपभेदस्वभावत्वात्तस्य । ननु घटादीनां स्वरूपाभेदेऽपि तिमिरस्तोमादिनाऽऽवृतत्वं दृश्यते । इत्यप्यसत्यम् । तत्रापि स्वरूपभेदे सत्येवावृतत्वोपपत्तेः । स्वरूपमखण्डयतः कस्याचिदावरणत्वायोगात् ।

ग्राह्यत्वात् । यत्पुनर्यथोक्तसाध्यान्वितं न भवति तदपृथग्देशवृत्तित्वे सत्येकेन्द्रियग्राह्यमपि न भवति यथैकाम्रफलसमाश्रितौ रूपरसाविति । अनेकाम्रफलाश्रितै रूपादिभिर्व्यभिचारः स्यात्तद्व्यावृत्त्यर्थमपृथग्देशवृत्तित्व इत्युक्तम् । एव च, " **अन्यार्थं प्रेरितो वायुर्यथाऽन्यं न करोति च ॥ तथाऽन्यवर्णसंस्कारशक्तो नाऽन्यं करिष्यति ॥१॥** " इत्यादि प्रत्युक्तमवगन्तव्यम् । यदि च ध्वनय. शब्दाना व्यञ्जकाः प्रतिज्ञायन्ते तर्हि तद्व्यापारे नियमेनोपलब्धिः शब्दस्य तु भवति तद्विपरीतस्वरूपत्वात्तदप्यपर्यालोचितजल्पितम् । शब्दस्य सर्वगत्वासिद्धेः । तथा हि—शब्दः सर्वगतो न भवति सामान्यविशेषवत्त्वे सति बाह्येन्द्रियप्रत्यक्षत्वात् । य एव स एवं यथा कुम्भः । तथा च शब्दस्तस्मात्तथेति । अपि चैते ध्वनय· केन समधिगता येन तदधीना शब्दश्रुतिः स्यात् । प्रत्यक्षेणानुमानेनार्थापत्त्या वा । प्रत्यक्षेण चेत्, कि श्रावणेन स्पार्शनेन वा । न तावच्छ्रावणेन, तथाप्रतीत्यभावात् । न हि श्रावणे चेतसि शब्दा इव ध्वनयोऽपि प्रतिभासन्ते । विवादाभावप्रसक्तेः । अथ स्पार्शनेन, स्वपाणिपल्लवपिहितवक्त्रकमलो हि जल्पन्प्रमाता स्वपाणिस्पर्शनेन ध्वनीन्समधिगच्छति । इत्यपि न्यायपराङ्मुखम् । वायुवत्ताल्वादिव्यापारानन्तर वक्त्रकुहरविनिर्गतोदविन्दूनामप्युपलम्भतः शब्दाभिव्यञ्जकत्वप्रसक्तेः । वक्त्रवक्त्रप्रदेश एव विप्रुषा प्रध्वंसतः श्रोतृश्रवणप्रदेशे गमनाभावान्न शब्दाभिव्यञ्जकत्वमित्यत्रापि तुल्यम् । न खलु ध्वनयोऽपि तत्र गच्छन्तः प्रत्यक्षत. प्रतीयन्ते । शब्दप्रतिपत्त्यन्यथानुपपत्त्या तु प्रतीतिरुभयत्राप्यविशिष्टा । यथा च स्तिमितभाषिणः सलिलकणाना नोपलम्भस्तथा प्रसञ्जनोपलम्भोऽपि नास्ति । अथ स्तिमितास्तत्रापि पवनाः परिकल्प्यन्ते । कथं न जलविन्दवोऽपि । विशेषाभावात् । एतेन वदतो वदनाग्रे स्थिततूलादे. प्रेरणोपलम्भादनुमानतो ध्वनीन्प्रतिपद्यन्त इत्यपि प्रत्यादिष्टम् । तद्वत्तोयविन्दूनामप्यत.

---

१ मी श्लो, सू ६ श. नि. श्लो ८०, ८१ ।

प्रतिपत्तिप्रसक्तेः । अर्थापत्त्या ध्वनयः प्रतीयन्ते । तथा हि, सन्ति शब्दव्यञ्जका ध्वनयः शब्दप्रतिपत्त्यन्यथानुपपत्तेः । न हि शब्दस्य परार्थोच्चारणान्यथानुपपत्त्या प्रतिपन्ननित्यत्वस्य स्तिमितसमीरावृतस्य व्यञ्जकध्वनीनन्तरेण प्रतिपत्तिरुपपद्यत इति । तदप्यवचनम् । परार्थोच्चारणान्यथानुपपत्तेः शब्दनित्यत्वसाधिकाया प्रागेव परास्तत्वात् । तथा च शब्दप्रतिपत्तेरन्यथाप्रकारेणाप्युपपद्यमानत्वात्ततो न ध्वनिसिद्धिः । अस्तु वा कथंचित्सिद्धिः । तथापि ते किंचित्कुर्वन्तः शब्दं व्यञ्जयन्त्य-न्यथा वा । न तावदन्यथा । अतिप्रसक्तेः । प्रथमपक्षे तु किं ते कुर्वन्तीति वाच्यम् । विशिष्टं संस्कारमिति चेत्, ननु कोऽयं विशिष्टः संस्कारो नाम । शब्दसंस्कारः श्रोत्रसंस्कार उभयसंस्कारो वा । तत्राद्यपक्षे व्यञ्जकध्वनिना यावद्देशमभिसर्पता यावान्वर्णविभागः संस्कृतस्तावत एव श्रवणं स्यान्न समस्तस्य वर्णस्येति खण्डशस्तस्य प्रतिपत्तिः स्यात् । अथ वर्णस्य निरवयवत्वादेकत्र संस्कृतः सर्वत्रैव संस्कृतोऽसाविति नायं दोषः । तर्हि निर्विभागत्वादेवैकत्रासंस्कृतः सर्वत्र तथैवेति सर्वथापि श्रवणं न स्यात् । किंच, क एष शब्दसंस्कारः । किमतिशयाधानमनतिशयव्यावर्तनमावरणापगमो वा । तत्रातिशयाधानं दृश्य-स्वभावतापादनम् । अनतिशयव्यावर्तनं त्वदृश्यस्वभावताखण्डनम् । ते च शब्दाद्भिन्ने अभिन्ने वा विधीयेते । यदि भिन्ने । तदा तत्करणे शब्दस्य न किंचित्कृतमिति तदवस्थाऽस्याश्रुतिसवेन । अथाभिन्ने, तर्हि शब्दस्यापि तत्करणानुषङ्गादनित्यत्वप्रसङ्गः । यो हि यस्मादभिन्नस्वभावः, तत्करणे तस्यापि करणम् । यथाऽतिशयानातिशयव्यावर्तन-स्वरूपस्य । ताभ्यामभिन्नस्वभावश्च शब्द इति । आवरणापगम-पक्षोऽपि न क्षेमकारः । आवरणासंभवस्यैवानीमेव प्रदर्शितत्वात् । मा भूत्तर्हि शब्दसंस्कारः । श्रोत्रसंस्कारस्तु भविष्यति । यदाह—

"अथाऽपीन्द्रियसंस्कारः सोऽप्यधिष्ठानदेशतः[1] ॥ अतो न श्रोष्यति

1 मी० श्लो० श० न० श्लो० ९६ ।

श्रोत्रं तेनासंस्कृतशष्कुलिः ॥ १ ॥" अधिष्ठानदेशत इति । अधिष्ठानसंयोगपरतन्त्रप्रदेशे । अत इत्यादि तच्च शब्दं नैव श्रोष्यति श्रोत्रं यस्य संस्क्रियमाणस्य संयोगद्वारेणावच्छेदिका शष्कुली न संस्कृतेत्यर्थः । " अप्राप्तकर्म्मदेशत्वाद्ध्वनिना श्रोत्रसत्क्रिया ॥ अतोऽधिष्ठानभेदेन संस्कारनियमः स्थितः"॥१॥ इति । तदप्यसमीचीनम् । श्रोत्रसंस्कारपक्षेऽपि सकृत्संस्कृतस्य श्रोत्रस्य युगपदखिलशब्दपरिच्छेदकत्वप्रसक्तेः । न हि नेत्रमञ्जनादिना कृतसंस्कारं सन्सन्निहितं स्वगोचरं नीलपीतादिकं किञ्चित्पश्यति किञ्चिन्नेति विशेषं पश्याम । बलातैलादिना संस्कृतं श्रोत्रं वा कांश्चिदेव गकारादिवर्णाञ्शृणोतीति नियमो दृश्यते । येनात्रापि तथा कल्पना स्यात् । अथ व्यञ्जकानां वायूनां भिन्नेषु कर्णमूलावयवेषु वर्तमानानामर्थापत्त्या प्रतिनियतवर्णश्रवणान्यथानुपपत्तिलक्षणया प्रतिनियतवर्णग्राहकत्वेन संस्काराधायकत्वस्य प्रतीतेर्नैकवर्णग्राहकत्वेन संस्कृतं श्रोत्रं सर्ववर्णान्युगपद्गृह्णाति । यथा हि भवत्पक्षेऽन्यवर्णजनकैस्ताल्वादिसंयोगविभागैर्नान्यो वर्णो जन्यते । तथाऽस्मत्पक्षेऽपि नान्यवर्णग्राहकश्रोत्रसंस्काराधायकव्यञ्जकप्रेरकैर्वायुभिरन्यवर्णग्राहकश्रोत्रसंस्काराधायकवायुप्रेरणं क्रियते । इत्युत्पत्त्यभिव्यक्तिपक्षयोः कार्यदर्शनान्यथानुपपत्त्या समः सामर्थ्यभेदः प्रयत्नविवक्षयोः सिद्धः । तदुक्तम्—" व्यञ्जकानां हि वायूनां भिन्नावयवदेशता ॥ जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ॥ १ ॥ अन्यैस्ताल्वादिसंयोगैर्नान्यो वर्णो यथैव हि ॥ तथाऽन्यवर्णसंस्कारो न ध्वन्यन्तरसारिभिः ॥ २ ॥ तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः ॥ सामर्थ्यभेदः सर्वत्र स्यात्प्रयत्नविवक्षयोः ॥ ३ ॥ " इति । तदेतदसम्बद्धम् । इन्द्रियसंस्कारकाणां व्यञ्जकानां समानदेशसमानधर्म्मापन्नसमानेन्द्रियग्राह्येष्वर्थेषु प्रतिनियतग्राहकत्वेनेन्द्रियसंस्कारक-

१ मी. श्लो. श. अ श्लो. ७०,७१ । २ मी. श्लो सू ५ श अ. श्लो ७९, ८१, ८२, ८३.

त्वस्य कदाचिदप्यदर्शनात् । प्रयोगयुग्मं चात्र । श्रोत्रं समानेन्द्रियग्राह्य-समानदेशावस्थितानामर्थानां ग्रहणाय प्रतिनियतसंस्कारसंस्कार्यं न भवति, इन्द्रियत्वात् । यदित्थं तदित्थं यथा लोचनम् । तथा च श्रोत्रम् । तस्मात्तथा । शब्दाः प्रतिनियतसंस्कारसंस्कार्येन्द्रियग्राह्या न भवन्ति समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वात्, कुम्भादिवत् । युगपदिन्द्रियसम्बद्धत्वादित्यावत्युच्यमाने, एकेन्द्रियाभिसम्बद्धरूपरसादिभिराम्रफलगतैर्व्यभिचारस्तदपोहाय समानेन्द्रियेत्यादि । अभिन्नेव तु सति व्यवहिताव्यवहितघटाभ्यामनेकान्तस्तन्निराकरणाय युगपदित्यादि । तत्र श्रोत्रसंस्कारोऽपि घटते । समनु तदुभयसंस्कार । तत्रोक्तदोषाणामसम्भवात् । तदाह—" द्वयसंस्कारपक्षे तु मृषा दोषद्वयवचः ॥ येनान्यतरवैकल्यात्सर्वं सता न गृह्यते ॥ १ ॥" द्वयसंस्कारपक्षे श्रोत्रशब्दयोः संस्कारपक्षे । यत्प्रत्येकपक्षभावे दोषद्वयस्य वचनं तन्मृषालीकम् । मृषात्वे कारणमाह येनेति । संस्कृतोऽपि शब्दो दूरस्थेनेन्द्रियसंस्कारवैकल्यान्नोपलभ्यते । संस्कृतेन्द्रियेणाऽपि निकटेन शब्दान्तरसमसंस्कृतत्वान्नोपलभ्यते । इत्यन्यतरवैकल्यात्सर्वे सर्वेषामग्रहणं युक्तमिति । तदपि सूक्तम् । तथा हि, यदि संस्कृतं श्रोत्रं स इव वर्णं प्रतिपद्येत तदा स सर्वगतत्वेन प्रतिपद्यते । तत्स्वरूपत्वात्तस्य । ततो नियतरूपस्य शब्दस्यावारकाभावस्य व्यञ्जकव्यञ्जकभावस्य चानुपपत्तेरावरणकृत समुच्चारणानन्तरसमस्तानुपलम्भ इति प्रयोगेणैवास्य नाशोऽवसीयते । उत्पादोऽपि तेनैव निश्चीयते । यथा हि चक्रचीवरादिव्यापारान्वयव्यतिरेकानुविधायित्वं घटादेरव गम्यते । तथा ताल्वादिसंयोगान्वयव्यतिरेकानुविधायित्वं शब्दस्यापीति घटवच्छब्दोऽप्युत्पाद्य प्रयत्नजनित एव । अथात्र ताल्वादिसंयोगानामभिव्यञ्जकत्वं कथ्यते । कटकादिष्वपि चक्रादीनां किं न कथयति । कथ्यामेवेति चेत् । न कार्यताभिमानी फलेन कपाट-

१ श्लो वा पृ ५ ३ ७ श्लो ८६ ८७

सम्पुटेन पिदधासि । नन्वालोके सति कलशादयोऽवलोक्यन्तेऽसति च नावलोक्यन्ते ततश्चानेन न्यायेनालोकस्यापि कलशादीन्प्रति कारणत्वं स्यादिति चेत् । नैष दोषः । तत्र बाधकसम्भवात् । तथा हि, प्रदीपस्य कलशं प्रति कारणत्वमङ्गीक्रियमाणं केवलस्य स्याच्चक्रादिकारणकलापकलितस्य वा । नाद्यः पक्षः । कलशशून्येऽप्यपवरककुहरे प्रबोधितदीपाङ्कुरमात्रात्कलशोत्पत्तिप्रसङ्गात् । नापि द्वितीय. । चक्रादिसामग्रीविरहिणि प्रदेशे प्रबलप्रदीपकलिकाकलापप्रबोधे कदाचिदपि कलशानुपलब्धिप्रसक्तेः । ततश्चक्रादिसामग्रीव्यतिरेकेणापि चेदुपलभ्यते कलश. । तेन ज्ञायते प्रदीपदानात्पूर्वमप्यासीदसौ । तथा च प्रदीपस्य व्यञ्जकत्वमेव । न च शब्दजनकेष्वप्येष प्रसङ्गोऽवकाशमासादयति । यादृशेभ्य एव तेभ्यः शब्दो जायते तादृशानामेव कारणत्वाङ्गीकारात् । तस्माज्जनकाभिव्यञ्जकसामग्र्योरयमेव विशेषो यस्यां सत्यामवश्यं पदार्थोपलम्भः सा व्यञ्जिकेति सिद्धः प्रत्यक्षानिश्चेय. शब्दोत्पाद. । एवं च विनाशोत्पादग्राहिणा प्रत्यक्षेण प्रत्यभिज्ञा बाध्यत इति स्थितम् । प्रयत्नानन्तरीयकत्वेनापि शब्दस्य कार्यत्वनिश्चयात्प्रत्यभिज्ञाबाधः सिध्यति । ननु कूपखननादिप्रयत्नानन्तरमाकाशं समुपलभ्यते न च तत्कार्यमतोऽनैकान्तिकत्वमस्य । उक्तं च—

"अनैकान्तिकता तावद्धेतूनामिह कथ्यते ॥ प्रयत्नानन्तरं दृष्टिर्नित्येऽपि न विरुध्यते ॥ १ ॥ आकाशमपि नित्यं स्याद्यदा भूमिजलावृतम् ॥ व्यज्यते तदपोहेन खननोत्सेचनादिभिः ॥ २ ॥ प्रयत्नानन्तरं ज्ञानं तदा तत्रापि विद्यते ॥ तेनानैकान्तिको हेतुर्यदुक्तं तत्र दर्शनम् ॥ ३ ॥ अथ स्थगितमप्येतदस्त्येवेत्यनुमीयते॥ शब्दोऽपि प्रत्यभिज्ञानात्प्रागस्तीत्यवगम्यते ॥४॥" यदुक्तं तत्र दर्शनमिति । प्रयत्नानन्तरं दर्शनं शब्दस्यानित्यत्वसाधनाय हेतुतया यदुक्तं तदनैकान्तिकमित्यर्थ. । अथ स्थगितमपीति । अथ पुन. पिहितमप्याकाशं

१ मी. श्लो. सू. ५ श. नि श्लो. २९, ३०, ३१, ३२, ३३.

पृथिव्यादिना कथंचित्पृथिव्याद्यवस्थानान्यथानुपपत्त्यैवास्तीत्यनुमीयते । ततश्च प्रागूर्ध्वं चानुपलब्धेरसिद्धत्वान्नैकान्तिकत्वाभाव इत्युच्यते । प्रत्यभिज्ञानबलाच्छब्दोऽप्यस्तीत्यवगम्यते । पुनश्च विनाशकारणाभावादिति । ततश्च तदनुपलब्ध्या तद्विपरीतमनुमानं विरुध्यत इति । एतदपि न क्षोदक्षमम् । एकत्वस्वरूपत्वस्य गगनेऽप्यसिद्धत्वात् । तत्सत्त्वैकत्वस्वरूपं सत्त्वगोचरविज्ञानजननैकस्वरूपं तद्विपरीतं वा भवेत् । यदि तज्जननकस्वरूपम् । तदा तस्य न गगनाद्यनन्तरमेवोपलब्धिः । किंतु पूर्वमपि स्यात् । तद्विपरीतस्वभावत्वे कदाचनाप्युपलम्भो न भवेत्, विशेषाभावात्, विशेषे वा तदेकरूपताहानिः । प्रत्यभिज्ञानाच्छब्दे प्राक्सत्त्वप्रतीतिश्च छिन्नोद्भिन्नकररुहकुन्तलादावपि समाना । यदप्यवादि प्रत्यक्षत्वं चास्य श्रोत्रेन्द्रियान्वयव्यतिरेकानुविधायित्वात्सुप्रसिद्धमित्यादि । तदप्यसम्बद्धम् । प्रत्यभिज्ञानस्येन्द्रियान्वयव्यतिरेकानुविधायिदर्शनस्मरणान्वयव्यतिरेकानुविधायित्वेन तस्य पूर्वं प्रसाधितत्वात् । प्रत्यक्षतायां चास्यातीतकालसम्बद्धत्वेन शब्दनिर्णायकत्वायोगः । सम्बद्धवर्तमानार्थग्राहित्वात्त्वन्मते प्रत्यक्षस्य । तद्योगे वा कथं योगिप्रत्यक्षाद्विशेषो भवतां शोभते । प्रत्यक्षेऽप्यस्य तदतीताद्यर्थग्राहकत्वाविरोधात् । समर्थितं च प्रागेनाऽस्य विस्तरेणाप्रत्यक्षत्वम् । यदप्युक्तमेव प्रत्यभिज्ञानप्रत्यक्षमाहात्म्येन शब्दस्य नित्यत्वे प्रतिपन्ने इत्यादि । तदप्ययुक्तम् । शब्दनित्यत्वग्राहकप्रत्यभिज्ञानस्यानन्तरमेव निराकृतत्वात् । यदपि यथादि विनाशाद्यामितकालं एतद्वादिसम्बद्धं कालत्वादित्यादि । तदपि प्रलापमात्रम् । गादिग्राहणादनन्तरं विनाशस्य प्रत्यक्षप्रतिपन्नत्वेन प्रतिपादनात् । नियतसाधकानुमानस्य प्रत्यक्षविनिश्चितपक्षत्वेनागमकत्वात् । विद्युदादिरपि चात्र नित्यत्वं स्यात् । तथाहि विनाशाद्यामितकालः एतद्विद्युदादिसम्बद्धः कालत्वादिदानीन्तनकालवत् । प्रतीतिबाधाऽन्यत्रापि समाना । नित्यः शब्दः श्रावणत्वादित्याद्यपि विचारपराङ्मुखम् ।

उदात्तादिभिर्धर्म्मैरनैकान्तिकत्वात् । ते हि श्रवणग्राह्यत्वेऽपि न नित्या भवद्भिरङ्गीकृताः । तेषामश्रावणत्वे तु नीलादीनामिव श्रोत्रेणोपलम्भो न भवेत् । वीणादिशब्दैश्चानैकान्तिकत्वम् । तेषां श्रावणत्वेऽप्यनित्यत्वात् । यच्चान्यदवादि देशकालादिभिन्ना गोशब्दव्यक्तिबुद्धय इत्यादि । न तदपि सुन्दरम् । गोशब्दलिपिबुद्ध्या हेतोरनैकान्तिकत्वात् । सा हि गौरित्युल्लेखेनोत्पद्यते न चैकगोशब्दविषया । देशकालादिभिन्नत्वाद्गोशब्दलिपीनाम् । नचैवं विषयभेद क्वापि प्रसिद्धपद्धतिमास्कन्दति । सकलबुद्धीनामभिन्नविषयत्वप्रसङ्गात् । तथा हि, देशकालादिभिन्नवस्तुबुद्धय एकगोचरा न चानेकगोचरा वस्तुबुद्धित्वात्सम्प्रत्युत्पन्नघटबुद्धिवत् । एवं च निखिलवस्तुबुद्धीनामेकघटलक्षणवस्तुगोचरत्वे घटबुद्धित्वमेव भवेत् । न गोशब्दव्यक्तिबुद्धीना धर्मित्वम् । कथ वा गोशब्दबुद्धित्व हेतुः । सम्प्रत्युत्पन्नगोशब्दबुद्धिवदिति दृष्टान्तः सिद्ध्येत् । यतोऽनुमानं स्यात् । यदप्यवादि ह्यस्तनो गोशब्दोऽद्याप्यनुवर्तत इत्यादि । तदपि न नीतिशीलान्प्रीणाति । अन्यथानुपपत्तिशून्यत्वेन हेतोरत्राप्रयोजकत्वात् । कथमन्यथा ह्यस्तनाद्यतनसौदामिनीप्रकाशयोरप्येकत्वं न भवेत् । शक्य हि वक्तुं ह्यस्तनविद्युत्प्रकाशोऽद्य तस्याभिन्नरूपस्य प्रत्यक्षतः प्रतीतेः । शब्दे तारत्वादयो धर्म्मा न स्वाभाविका इति चेत् । तदशोभनम् । स्वाभाविकत्वावधारणन्यायस्य यत्र तत्र प्रसिद्धस्यात्रापि तुल्यत्वात् । न हि पयसि शैत्यद्रवत्वे तेजसि वा भास्वरत्वोष्णत्वे स्वाभाविके इत्यत्रान्यत्प्रमाण प्रत्यक्षात् । अथ पयःप्रमुखेषु शैत्यादीनां स्वाभाविकत्वेनैव प्रत्यक्षं ग्राहक युक्तमन्यस्योपचारहेतोरनुपलम्भान्नियमेन तद्गतत्वेन चोपलम्भादिति चेत् । शब्देऽपि तारतारत्वादीनामेवमस्तु, विशेषाभावात् । तथाऽप्यतीन्द्रियः कश्चिदुपाधिरस्ति तद्गता. शब्दे तारतारतरत्वादयोऽवभासन्त इति शङ्किष्यत इति चेत् । किन्न पयःप्रमुखेष्वपि शैत्यादीनामतीन्द्रियान्यधर्मत्व शङ्क्यते । तत्किं यद्गतत्वेन यदुपलभ्यते तस्यै-

वायोः धर्मः । तथोपगमे पीतत्वस्य शङ्खगतत्वेन प्रतिभासितत्वेऽपि तस्यैव धर्मः स्यात् । अविशेषात् । तच्चायुक्तम् । पीतत्वस्यान्यधर्मत्वस्थितौ शङ्खस्य च तद्विरुद्धधर्मत्वे स्थिते कामलाद्यन्वयव्यतिरेकानुविधाने च पीतत्वोपलम्भस्य तेन भ्रान्तत्वावधारणात् । न चैवं तारतारतरत्वादेरन्यधर्मतास्थितिः । नापि शब्दस्य तारतारतरत्वादिविरुद्धधर्मत्वम् । नापि तारतारतरत्वाद्युपलम्भस्य ध्वनिरूपत्वाद्यन्वयव्यतिरेकानुविधायित्वम् । तत्रापि शङ्का स्यादिति चेत् । एवमपि सर्वत्र स्यात् । तथा च न क्वचित्कुतश्चित्किंचित्सिद्ध्येत् । न चेत् शङ्कितुमपि शक्यते । अप्रतीते तारतारतरत्वादीनां ध्वनिरूपवायुधर्मत्वे संस्काराभावात्संस्कारानुवर्तिनस्य चारोपयितुमशक्यत्वात् । न च प्रतीयन्त एवाऽमी तद्धर्मतयेति वाच्यम् । रूपरसगन्धस्पर्शेष्वनन्तर्भावेन तेषु मारुतेषु चक्षुरादीनां व्यापाराभावात् । न च श्रवणेनैव तत्प्रतीतिः । तथा सति तेषां वायुधर्मत्वविरोधात् । तथा हि तारतारतरत्वादयो न वायुधर्माः श्रावणत्वात्, शब्दवत् । यदि पुनरेते नेष्यन्ते । तदा स्पर्शादीनामपि वायवीयत्वप्रसङ्गः । अस्त्वेवं को दोष इति चेत् । उच्यते । वायवीया सन्तोऽमी कार्य किं वाय्ववयविगुणा भवेयुरायु परमाणुगुणा वा । आद्यपक्षे तेषामनित्यताप्राप्तिः । अवयविविनाशे तेषामप्यवश्यं विनाशभावात् । द्वितीये तु कथं ग्रहणं तेषां तद्गतान्यगुणवत् । एवं च, प्रत्यक्षेण तेषामन्यधर्मतया कदाचिदग्रहणे संस्काराभावात्कथं शब्दे समारोपः । न चैते प्रमाणान्तरेणापि कदाचिद्दृश्यन्ते । अथ ध्वनिभिः संस्काराधानादेव श्रोत्रस्येदृशं सामर्थ्यमेवाविरस्ति । यत आरोप्याग्रहेऽपि भ्रमो भवति । मण्डूकवसाक्तनयनानां वंशानामुरगतयापि प्रथमाक्षसन्निपातादुरगारोपमतिः । तदसाम्प्रतम् । सर्वासामपि भ्रान्तीनामारोप्यारोपविषयग्रहणपुरस्सरत्वनियमात् । तदनुसारेण च मण्डूकवसाक्तनयनानामपि वंशोरगभ्रमो व्याख्येयः । वंशे जात एव सत्यनन्तरं सर्पभ्रमभावात् । कथमेव नानु-

भवोदय इति चेत् । क्षणभेदस्य दुर्लक्ष्यत्वात् । न चागृहीतसर्पस्य सर्पभ्रमो भवतीति वक्तुं शक्यम् । तस्मिञ्जन्मनि जन्मान्तरे वा सर्पग्रहणसम्भवात् । ध्वनिधर्मस्तु तारतारतरत्वादिरस्मिन्निव जन्मनि जन्मान्तरेऽप्यशक्यग्रहण एव । तस्माद्वर्णाभिव्यञ्जकभूतस्तारतारतरत्वादिः प्रतीयमानो वर्णधर्म एवेति । अनौपाधिकप्रतीत्या तीव्रतादिधर्मस्य सौदामिनीदाम्न इव तारतारतरत्वादिधर्माधिकरणस्य शब्दस्यापि सिद्धः प्रत्यक्षतो भेदः । तथा च तदेकत्वानुमानस्यापि तदाभासत्वमवसेयम् । एतेनाद्यतनो गोशब्दो ह्योऽप्यासीदित्यादि प्रतिक्षिप्तम् । न्यायस्य सदृशत्वात् । यदप्यभाणि शब्दो दीर्घकालस्थायीत्यादि । तदपि चेष्टयाऽनैकान्तिकम् । तस्याः सम्बन्धबलेनार्थप्रतीतिहेतुत्वेऽपि दीर्घकालमवस्थानाभावात् । एतेन यः पुनरस्थिरः स सम्बन्धबलेन नार्थप्रतीतिं जनयतीत्यादि पराकृतम् । चेष्टायाः सम्बन्धबलेनार्थबोधकत्वेऽपि तादात्विकनिमित्तत्वसम्भवात् । ततश्चायुक्तमेतत्कंचित्कालं स्थिरः शब्दः सर्वकालमपि स्थिर इत्यादि । कञ्चित्कालं स्थिरत्वम्येत्थं शब्दे निराकृतत्वेनासिद्धत्वात् । अनैकान्तिकं कञ्चित्कालस्थिरत्वमाचिररोचिप्रमुखे । तेषां तत्सद्भावेऽपि साधनमसिद्धम् । तत्सिद्धिनिबन्धनस्य कञ्चित्कालस्थिरत्वस्य हेत्वाभासत्वेन प्रोक्तत्वात् । कादाचित्कत्वाच्च शब्दे तदसिद्धम् । तथा हि यत्कदाचित्कं न तद्विनाशहेतुशून्यम् , यथा सौदामिनीदामादिकम् । कादाचित्कश्च शब्द इति । यदपि विवादाध्यासितः कालो गादिशब्दशून्यो न भवतीत्यादिकमवादि तदपि विद्युदादौ तुल्यत्वादयुक्तम् । तथा हि विवादविषयापन्नः कालः सौदामिन्यादिशून्यो न भवति कालत्वात्तत्सत्त्वोपेतकालवत् । प्रत्यक्षबाधनं पुनरुभयत्रापि समानम् । यच्च प्रत्यपादि नित्यः शब्दः परार्थं तदुच्चारणान्यथानुपपत्तेरित्यादि । तदप्यनौपयिकम् । परार्थं तदुच्चारणस्यान्यथाप्युपपत्तेः । अनित्यत्वेऽपि शब्दस्य सादृश्यवशादेवार्थे सम्बन्धग्रहणसम्भवेन तत्प्रतिपत्तिघटनात् । यदप्यभिहितम् । अन्यस्मि-

च्चारणान्यथानुपपत्तेः । तथा च जैमिनीयं सूत्रम्—"दर्शनस्य परार्थत्वात्" इति । अनेन किलार्थापत्तिरुक्ता । कथम् । दर्शनमुच्चारणम् । तच्च परस्यार्थप्रतिपत्त्यर्थम् । सा चाऽर्थप्रतिपत्तिः शब्दस्यानित्यत्वे न घटते । गृहीतसम्बन्धाद्धि शब्दादर्थप्रतीतिराविर्भवति । नान्यथा । अतिप्रसक्तेः । सम्बन्धावगमश्च प्रमाणत्रयसम्पाद्यः । तथा हि—यदैको वृद्धोऽन्यस्मै प्रतिपन्नसङ्केताय प्रतिपादयति देवदत्त गामभ्याज शुक्लां दण्डेनेति । तत्र पार्श्वस्थोऽन्यः कश्चिदव्युत्पन्नः प्रेक्षते शब्दार्थौ वृद्धौ च प्रतिपाद्यप्रतिपादकौ प्रयत्नेन प्रतिपद्यते । श्रोतुश्च प्रतिपाद्यवृद्धस्य गवादिगोचरक्षेपणादिविशिष्टचेष्टालक्षणादनुमानाद्वा गवादिविषयां प्रतिपत्तिमवबुध्यते । तत्प्रतिपत्त्यन्यथानुपपत्त्या च शब्दस्य वाचिकामर्थस्य तु वाच्यां शक्तिं परिकल्पयति । सोऽयं प्रमाणत्रयसम्पाद्यः सम्बन्धावगमो न सकृद्वाक्यप्रयोगात्सम्भवति । किन्त्वावापोद्वापाभ्यां पुनस्तच्छब्दोच्चारणादेव । न चास्थिरस्य पुनः पुनरुच्चारणं घटते । तस्माते च नान्वयव्यतिरेकाभ्यां वाच्यवाचकशक्त्यवगमः । तदसत्त्वात् प्रेक्षावद्भिः परावबोधाय वाक्यमुच्चार्येत । न चैवम् । ततः परार्थवाक्योच्चारणान्यथानुपपत्त्या निश्चीयते नित्योऽसौ । तदुक्तम्—"शब्दवृद्धाभिधेयानि प्रत्यक्षेणात्र पश्यति ॥ श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥ १ ॥ अन्यथानुपपत्त्या तु बुद्धेः शक्तिं द्वयाश्रिताम् ॥ अर्थापत्त्यावबुध्यन्ते सम्बन्धं त्रिप्रमाणकम् ॥ २ ॥" अनुमानेन चेष्टयेति । गोक्षेपणादिचेष्टालक्षणेनानुमानेन श्रोतुः प्रतिपन्नत्वं पश्यतीत्यर्थः । अर्थापत्त्येति, यद्यपि सम्बन्धावबोधेऽस्य प्रत्यक्षानुमानार्थापत्तिलक्षणप्रमाणत्रयस्यापि व्यापारस्तथापि साधकतमतया करणत्वेनार्थापत्तेरेव मुख्यवृत्त्या तत्र प्रामाण्यम् । प्रत्यक्षानुमानयोः पुनस्तदन्तर्गतत्वेनेतिकर्तव्यतास्थानीयत्वमिति

१ मी श्लो वा शब्दनित्यताधिकरणे श्लो २४१ २४४

भाव । " अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता ॥ यदि नाशिनि नित्ये वा विनाशिन्येव वा भवेत् ॥ १ ॥ शब्दे वाचकसामर्थ्यं तदा दूषणमुच्यताम् " ॥ यदि शब्दे नाशिनि नित्ये वा वाचकसामर्थ्यमित्यनेन संशय उक्तः । विनाशिन्येव वा शब्दे वाचकसामर्थ्यमित्यनेन तु विपर्यय उपदर्शित. । तदा दूषणमुच्यतामिति । यदैव शब्दे वाचकसामर्थ्यं सन्दिग्धं विपर्यस्तं च स्यात्तदा दूषणावसरः । एतच्चात्रोभयमपि नास्तीति भाव । " न ह्यदृष्टार्थसम्बन्धः शब्दो भवति वाचकः ॥ तथा चेत्स्यादिपूर्वोऽपि सर्वः सर्वं प्रकाशयेत् ॥ १ ॥ सम्बन्धदर्शनं चास्य नानित्यस्योपपद्यते ॥ सम्बन्धज्ञानसिद्धिश्चेत् ध्रुव कालान्तरस्थितिः ॥ २ ॥ अन्यस्मिन् ज्ञातसम्बन्धे न चान्यो वाचको भवेत् ॥ गोशब्दे ज्ञातसम्बन्धे नाश्वशब्दो हि वाचकः ॥ ३ ॥" अथ मतं सदृशतया शब्दस्यार्थप्रतिपत्तिहेतुत्वोपपत्तेर्नार्थापत्तितोऽस्य नित्यत्वसिद्धि. । पुन. पुनरुच्चार्यमाणो हि शब्द· सादृश्यादेकत्वेनाध्यवसीयमानोऽर्थावबोधं विदधाति न पुनर्नित्यत्वादिति । नैतदपि क्षोदक्षमम् । सादृश्येन शब्दादर्थावबोधासम्भवात् । न हि सदृशतया शब्दः प्रतीयमानो वाचकत्वेन निश्चीयते । किं त्वेकत्वेन । य एव हि सङ्केतावसायसमये मया ध्वनिरुपलब्ध स एवायमिति प्रतीते· । अपि च सादृश्यादर्थप्रतीतौ भ्रान्तः शाब्दप्रत्ययः स्यात् । न ह्यन्यस्मिन्गृहीतसङ्केतेऽन्यस्मादर्थप्रतीतिरभ्रान्ता भवति । गोशब्दे गृहीतसङ्केतेऽश्वशब्दादप्यर्थप्रतीतेरभ्रान्तत्वप्रसक्तेः । न च भूयोऽवयवसाम्ययोगस्वरूपं सादृश्यं शब्दे सम्भवति । विशिष्टवर्णात्मकत्वाच्छब्दानाम् । वर्णानां च निरवयवत्वात् । न च गत्वादिविशिष्टाना गादीना वाचकत्वं युक्तम् । गत्वादिसामान्यस्याभावात् । तदभावश्च गादीना नानात्वायोगात् । सोऽयमिति प्रत्यभिज्ञया तेषामेकत्व-

---

१ मी. श्लो वा शब्दनित्यताधिकरणे श्लो. २३७।२३८. २ मी श्लो. सू ५ स. श्लो. १४०, १४१ ।

निश्चयात्। अथानेकप्रतिपत्तृभिर्भिन्नदेशतयोपलभ्यमानत्वाद्गकारादीनां नानात्वं कथ्यते। तन्न। तैर्विभिन्नदेशतयोपलभ्यमानेनादित्येनानैकान्ताद्विभिन्नदेशतयोपलम्भश्चैषां व्यञ्जकध्वन्यधीनो न स्वरूपभेदनिबन्धन। तथा हि—“नित्यत्वं व्यापकत्वं च सर्ववर्णेषु सुस्थितम्॥ प्रत्यभिज्ञानतो मानाद्बाधसङ्गमवर्जितात्॥ १॥ यो यो गृहीतः सर्वस्मिन्देशे शब्दो हि दृश्यते। न चास्यावयवाः सन्ति येन वर्तेत भागशः॥ २॥” यो यो गृहीत इति। अस्य भावार्थः। नास्त्यसौ देशो यत्र शब्दो नावगम्यते। यो यो देशो गृहीतः सर्वत्राऽस्यागमनात्। ततोऽभावात्मादिवद्विभुरिति। “शब्दो वर्तत इत्येवं तत्र सर्वात्मकश्च सः॥ व्यञ्जकध्वन्यधीनत्वात्तद्देशे स च गृह्यते॥ १॥” शब्दो वर्तत इति। न भागशः कृत्स्नपरिसमाप्त्या च शब्दो वर्ततेऽपि तर्हि शब्दो वर्तत इत्येताऽस्याविशेषितवृत्तिमात्रमाचिक्षामहे यतः शब्दो वर्तत इत्येवेति वृत्तौ यद्भवति तदाह तत्रेति। तत्र वृत्तिप्रकारे। सर्वात्मकः शब्दो वर्तत इत्येतावदेव भवति। नात्र किंचिद्भागवृत्तिः कृत्स्नपरिसमाप्तिर्वा। निर्भागस्य तस्य भागवृत्तेर्व्यापिनश्च कृत्स्नपरिसमाप्तेरभावादिति पूर्वार्धस्यार्थः। “नैव ध्वनीनां सामर्थ्यं व्याप्तुं व्योम निरन्तरम्॥ तेनानवच्छिन्नरूपेण नाऽसौ सर्वत्र गृह्यते॥ १॥ ध्वनीनां भिन्नदेशत्वं श्रुतिस्तत्रानुरुध्यते॥ अपरिच्छिन्नान्तरालत्वाच्छब्देऽप्यारोपितामति॥ २॥ गतिमद्वेगवत्त्वाभ्यां ते चायान्ति यतो यतः॥ श्रोता ततस्ततः शब्दमायातमिव मन्यते॥ ३॥” अथैकेन भिन्नदेशतया उपलम्भाद्गादीनां घटादिवन्नानात्वम्। तैरपि। आदित्येनैवाऽनैकान्तात्। दृश्यते ह्येकेनादित्यो भिन्नदेशो न चैतावताऽसौ नाना। अथ युगपदेकेन भिन्नदेशतयोपलब्धेरिति विशिष्योच्यते। तथाऽप्यनेनैवाऽनेकान्त।

१ मी श्लो वा शब्दनित्यताधिकरणे श्लो १७१।१७२। २ असमवाप् इति भ पुस्तके पाठ। ३ मी श्लो वा शब्दनित्यत्वाधिकरणे श्लो १७३ १७६।

जलपात्रेषु हि भिन्नदेशेषु सविताऽप्येकोऽप्येकेन युगपद्भिन्नदेशः गृह्यते । अथ न तत्र मार्तण्डमण्डलमवलोक्यते तस्य नभसि व्यवस्थानात्तन्निमित्तानि तु जलपात्रेषु प्रतिविम्बानि भिन्नानि प्रतीयन्ते ततो नानेकान्तः । तदुक्तम्—" अहो केन निमित्तेन प्रतिपात्रं पृथक्पृथक् ॥ भिन्नानि प्रतिविम्बानि गृह्यन्ते युगपन्मया ॥ १ ॥" एतत्कुमारिलः परिहरन्नाह—" अत्र ब्रूमो यदा तावज्जले सौर्येण तेजसा ॥ स्फुरता चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम् ॥ १ ॥ स्वदेशमेव गृह्णाति सवितारमनेकधा ॥ भिन्नमूर्त्तिर्यथा पात्रं तदाऽस्यानेकता कुतः ॥ २ ॥" प्रतिस्रोतः प्रवर्त्तितमिति प्रतीपप्रवर्त्तितमिति प्रतीपप्रवर्त्तितमधस्तात्प्रवृत्तं सदूर्ध्वं प्रवर्त्तितमित्यर्थः ।

एवं च—

नित्यत्वं शब्दराशेः श्रवणकरणकं भ्रान्तिसन्देहशून्यं
विज्ञानं प्रत्यभिज्ञेत्यभिहितममलं मूलतस्तावदत्र ॥
पश्चान्निःशेषदोषैर्विरहितमुदितं लैङ्गिकं मानमन्ते
त्वर्थापत्तिः कलङ्कव्यतिकरविधुरा दर्शिता सिद्धिहेतु ॥५५७॥

जैमिनीय निनदेषु नित्यता दर्शितैवमतिविस्तरात्त्वया ॥
किन्तु काचिदपि युक्तिरक्षता वीक्ष्यतेऽत्र न परीक्षकोचिता ॥५५८॥

तथा हि—यत्तावदुपन्यस्तं स एवायं गकार इत्यादिप्रत्यभिज्ञाप्रत्यक्षत एव तावद्वर्णाना नित्यत्वमवसीयत इत्यादि । तन्न सत्यम् । अस्यैकत्वप्रत्यभिज्ञानस्य भ्रान्तत्वेनैकत्वसिद्धावसमर्थत्वात् । प्रदीपाद्येकत्वप्रत्यभिज्ञानवत् । न खलु स एवाऽयं प्रदीपः कदलकाण्डकुन्तलकलापादिर्वेत्यादि प्रत्यभिज्ञान प्रदीपादीनामेकत्वं प्रसाधयति । अथाऽत्रैकत्वाभावात्तस्यैकत्वप्रसाधनासामर्थ्यम् । तदितरत्रापि तुल्यम् । ननु तैलादिकारणकलापस्योत्तरत्र क्षयोपलम्भात्प्रदीपादेः प्रतिसमयमन्यत्वप्रतीतेरुपपन्नमेकत्वासत्त्वम् । न तु शब्दस्य । विपर्ययादिति

१ मी. श्लो वा. शब्दनित्यत्वाधिकरणे श्लो. ७९।८०।८१।८२।

चेत् । तदपि न्यायबाह्यम् । शब्दस्य ताल्वादिसंयोगविभागलक्षणकारणकदम्बकस्योत्तरत्र क्षयप्रतीतेन प्रतिक्षणमन्यत्वासिद्धेरेकत्वासत्त्वोपपत्तेः । अथ ताल्वादिसंयोगविभागयोः शब्दाभिव्यञ्जकसमीरणोत्पत्तौ कारणत्वं न शब्दोत्पत्ताविति उच्यते । तर्हि वर्तिकासुमतैलानलसंयोगादेरपि प्रदीपाद्यभिव्यञ्जकप्रभव्यञ्जनजनने कारणत्वं न प्रदीपाद्युत्पादे इत्यप्युच्यताम् । विशेषादर्शनात् । प्रतीतिविरोधः पुनरुभयत्राप्यविशिष्टः । अनेन नापि मिथ्यात्वरूपं बाधाविधुरत्वादित्यपास्तम् । ताल्वादिसंयोगविभागलक्षणस्य कारणकदम्बकस्योत्तरत्र क्षयप्रतीतितः प्रतिक्षणं शब्दस्यान्यत्वसिद्धेरेव बाधकत्वात् । उत्पन्नः कुम्भो विनष्टः कुम्भ इति प्रतीतिवत् । अथ प्रत्यभिज्ञानेनैकत्वप्रतीतिः कस्मान्न बाध्यते । मैवं वादीः । प्रत्यभिज्ञानस्य शब्दे सादृश्यहेतुकतया भ्रान्तत्वेन नित्यत्वाप्रसाधकत्वात् । ननु यथा घटे विनष्टे विनाशकारणं मुद्गरादि कपालमाला च विलोक्यते न तथा शब्दश्रवणानन्तरं विनाशकारणं कपालमालाकल्पं च किमपि परिदृश्यते । केवलं शब्दो नोपलभ्यते । न चानुपलब्धिमात्रेण विनाशोऽस्यावगन्तुं शक्यते । तथा सत्युपलभ्यानुपलभ्यानां घटादीनां विद्यमानानामेव विनाशः स्यात् । न चैतदस्ति । तदयुक्तम् । यतः शब्दस्तावच्छ्रवणानन्तरं कुम्भादिवदन्यत्र न गतः । व्यापकत्वेन तस्य त्वया स्वीकारात् । नापि घटादिवत्तत्रस्थ एव केनचिदावृतः । तदावरणस्य निराकरिष्यमाणत्वात् । नापि सहसा श्रोतुरिन्द्रियलोपः कश्चिदुपगतः । शब्दान्तराणां तदानीमेव श्रवणात् । न चानवहितः प्रमाता । सविशेषमवधानवतोऽपि तदनुपलम्भात् । सत्यामपि चैतावत्यां सामग्र्यां यः कुम्भादिभ्यो वा कश्चिन्नावलोक्यते तस्य प्रध्वंसः प्रत्यक्षेणैवावगतो भवति । एवं च प्रत्यक्षप्रसिद्धस्यास्य न कारणाभावद्वारेणाऽभावोऽभिधातुं साधीयान् । एतद्दर्शनादेव कारणस्यानुमितेः । यदुक्तं कपालमालाकल्पं च किमपि न परिदृश्यत इति । तदपि न्यायबाह्यम् । न ह्ययमेकान्तो यत्सर्वत्र वस्तुविनाशे तद-

वयवानामुपलम्भेन भाव्यम् । विपुलस्यापि चपलादण्डस्य महतोऽपि च प्रदीपकुड्मलस्य सहसैव विनाशे तदवयवानामनुपलम्भात् । अथ तयोरवयवानामवयविविपरीतपरिणामापन्नत्वान्नोपलम्भः । शब्दावयवानामप्येवमस्तु । नन्वेकज्ञानसंसर्गिपदार्थान्तरोपलम्भात्कुम्भाद्यभावप्रतीतिर्दृष्टा । शब्दाभावप्रतीतिस्तु कथम् । तत्रैकज्ञानसंसर्गिणः कस्यचिदप्यभावादिति चेत् । तदप्यसूक्ष्मम् । विवक्षितशब्दाभावप्रतीतौ शब्दान्तरस्यैकज्ञानसंसर्गिणः सम्भवात् । निःशब्दे प्रदेशे सर्वशब्दाभावप्रतीतौ तर्हि तदसम्भव इति चेत् । नैवम् । तत्राऽप्यात्मस्वरूपस्य तदेकज्ञानसंसर्गिणः सम्भवात् । स्वपररूपावभासकस्वभावस्य ह्यात्मनः परस्मिन्योग्यदेशावस्थिते वस्तुनि न केवलात्मस्वरूपसंवेदनं भवेत् । यावन्ति खलु वस्तूनि प्रतिषेध्यत्वसम्मतवस्तुना साकं योग्यदेशस्थितानि सन्त्यवश्यं प्रतिभासन्ते तानि सर्वाण्यप्येकज्ञानसंसर्गीणि । तत्र कुम्भादौ प्रतिषेध्ये भूतलादिरात्मस्वरूपं चैकज्ञानसंसर्गि । शब्दे तु प्रतिषेध्ये सशब्दके प्रदेशे शब्दान्तरमात्मस्वरूपं च । निःशब्दके तु केवलमात्मस्वरूपम् । अथ वा मा भवत्वेकज्ञानसंसर्गिपदार्थान्तरम् । प्रमाणान्तरगृहीतं तु भविष्यति । यथा स्मृतिगोचरे चैत्यकुलादौ क्वचिदभावप्रमाणेन भवतामभावग्रहणे चैत्यकुलादि । स्यादेतत् । यद्यपि शब्दो नान्यत्र गतो यद्यपि श्रोता समवधानबन्धुरो यद्यपि च नेन्द्रियदोषः सञ्जातस्तथापि व्यञ्जकाभावादेवाय नोपलभ्यते । यथा प्रदीपाद्यभावात्तिमिरनिकरकरम्बितकुम्भादिः । न खलु दृश्यस्वभावापरित्यागेनादृश्यस्वीकारे तस्यावृतत्वमुपपद्यते । अतिप्रसक्तेः । यद्यदा यत्स्वरूपं न परित्यजति न तस्य तदा प्रत्यनीकस्वरूपसम्भवः । यथाऽनावृतावस्थाया दृश्यस्वरूपं शब्द इति । तदा तत्स्वरूपपरित्यागे वा सिद्धमस्यानित्यत्वं स्वरूपभेदस्वभावत्वात्तस्य । ननु घटादीनां स्वरूपाभेदेऽपि तिमिरस्तोमादिनाऽऽवृतत्वं दृश्यते । इत्यप्यसत्यम् । तत्रापि स्वरूपभेदे सत्येवावृतत्वोपपत्तेः । स्वरूपमखण्डयतः कस्याचिदावरणत्वायोगात् ।

भवतु वा यथा कथञ्चिच्छब्दस्यावृतत्वं तथापि तदावरणं दृश्यमदृश्यं वा नित्यमनित्यं वा व्यापकमव्यापकं वा, एकमनेकं वेत्यष्टौ विकल्पाः । तत्र न तावद्दृश्यमिति विकल्पः । प्रत्यक्षतस्तदप्रतीयमानात् । ततस्तत्प्रतीतौ वा विवादाभावः स्यात् । न हि पीते पीततया प्रत्यक्षतः प्रतीयमाने कश्चिद्विवादायोपतिष्ठते । अथादृश्यं तदावरणम् । तर्हि कथं तदस्तित्वनिश्चयः । ननु नित्यस्य सतः शब्दस्योच्चारणादनन्तरं शब्दस्याश्रूयमाणतयैवानुपलब्धिसिद्धेरावरणकल्पनायाथार्थ्यात् । नित्यत्वे त्वावरणस्य सदा शब्दस्यानुपलब्धिप्रसक्तिः । अनित्यं त्वावरणं सहेतुकमहेतुकं वा । नाद्यः कल्पः । तदुत्पादकस्य हेतोः कस्यचिदप्रतीतेः । अहेतुकस्य तस्यानित्यत्वं विरुद्धमिति । व्यापकत्वमप्यावरणस्य दुरुपपादम् । बाधकप्रमाणप्रतिहतत्वात् । तथा हि—आवरणत्वेनाभिमतः प्रभञ्जनो न व्यापकः स्पर्शवद्द्रव्यत्वादुपलकलशवत् । व्यापकत्वे चाऽस्य न क्वचित्कस्यापि शब्दोपलब्धिः स्यात् । तस्य सर्वदावृतत्वात् । अव्यापकत्वे तस्याऽनेन शब्दस्यावार्यत्वानुपपत्तिः । तन्मध्ये तद्देशे तत्पार्श्वे चाध्रियमाणत्वात् । प्रत्युत शब्द एवावारकः स्यात् । अन्यथा सर्षपकणोऽपि कुम्भस्यावारकः स्यात् । ननु वसुधादिना व्योम्नस्तथाविधस्याप्यध्रियमाणत्वदर्शनाद्दोषोऽयमिति चेत् । तदपि न कमनीयम् । तत्प्रदेशस्यैव तेनाध्रियमाणत्वाङ्गीकारात् । शब्दप्रदेशस्यापि पवनेनाध्रियमाणत्वाभ्युपगमे शब्दस्य सांशत्वमनित्यत्वं चापद्येत । समस्तशब्दानां च यद्येकमेवावरणं कल्प्येत । तदैकश्रवणकाले सर्वेषां श्रवणप्रसक्तिः । तदावरणापगमे तद्वत्सर्वेषामनावृतत्वात् । तदश्रवणे वाऽभिमतशब्दस्यापि तदश्रवणं स्यात् । अविशेषात् । अथ प्रतिशब्दं विभिन्नमावरणमिष्यते । तन्न युक्तिमार्गमवगाहते । सर्वशब्दानां व्यापकत्वेन समानदेशत्वे समानेन्द्रियग्राह्यत्वे चावरणभेदस्य व्यञ्जकभेदस्य चानुपपत्तेः । अत्र प्रयोगः । शब्दाः प्रतिनियतावरणावार्याः प्रतिनियतव्यञ्जकव्यङ्ग्याश्च न भवन्त्यपृथग्देशवृत्तित्वे सत्येकेन्द्रिय

ग्राह्यत्वात् । यत्पुनर्यथोक्तसाध्यान्वितं न भवति तदपृथग्देशवृत्तित्वे सत्येकेन्द्रियग्राह्यमपि न भवति यथैकाम्रफलसमाश्रितौ रूपरसाविति । अनेकाम्रफलाश्रितै रूपादिभिर्व्यभिचारः स्यात्तद्व्यावृत्त्यर्थमपृथग्देशवृत्तित्व इत्युक्तम् । एवं च, "अन्यार्थं प्रेरितो वायुर्यथाऽन्यं न करोति च ॥ तथाऽन्यवर्णसंस्कारशक्तो नाऽन्यं करिष्यति ॥१॥" इत्यादि प्रत्युक्तमवगन्तव्यम् । यदि च ध्वनयः शब्दानां व्यञ्जकाः प्रतिज्ञायन्ते तर्हि तद्व्यापारे नियमेनोपलब्धिः शब्दस्य तु भवति तद्विपरीतस्वरूपत्वात्तदप्यपर्यालोचितजल्पितम् । शब्दस्य सर्वगत्वासिद्धेः । तथा हि—शब्दः सर्वगतो न भवति सामान्यविशेषवत्त्वे सति बाह्येन्द्रियप्रत्यक्षत्वात् । य एवं स एवं यथा कुम्भः । तथा च शब्दस्तस्मात्तथेति । अपि चैते ध्वनयः केन समधिगता येन तदधीना शब्दश्रुतिः स्यात् । प्रत्यक्षेणानुमानेनार्थापत्त्या वा । प्रत्यक्षेण चेत्, किं श्रावणेन स्पार्शनेन वा । न तावच्छ्रावणेन, तथाप्रतीत्यभावात् । न हि श्रावणे चेतसि शब्दा इव ध्वनयोऽपि प्रतिभासन्ते । विवादाभावप्रसक्तेः । अथ स्पार्शनेन, स्वपाणिपल्लवपिहितवक्त्रकमलो हि जल्पन्प्रमाता स्वपाणिस्पर्शनेन ध्वनीन्समधिगच्छति । इत्यपि न्यायपराङ्मुखम् । वायुवत्ताल्वादिव्यापारानन्तरं वक्त्रकुहराविनिर्गतोदबिन्दूनामप्युपलम्भतः शब्दाभिव्यञ्जकत्वप्रसक्तेः । वक्तृवक्त्रप्रदेश एव विप्रुषां प्रध्वंसतः श्रोतृश्रवणप्रदेशे गमनाभावान्न शब्दाभिव्यञ्जकत्वमित्यत्रापि तुल्यम् । न खलु ध्वनयोऽपि तत्र गच्छन्तः प्रत्यक्षतः प्रतीयन्ते । शब्दप्रतिपत्त्यन्यथानुपपत्त्या तु प्रतीतिरुभयत्राप्यविशिष्टा । यथा च स्तिमितभाषिणः सलिलकणानां नोपलम्भस्तथा प्रसञ्जनोपलम्भोऽपि नास्ति । अथ स्तिमितास्तत्रापि पवनाः परिकल्प्यन्ते । कथं न जलबिन्दवोऽपि । विशेषाभावात् । एतेन वदतो वदनाग्रे स्थिततूलादेः प्रेरणोपलम्भादनुमानतो ध्वनीन्प्रतिपद्यन्त इत्यपि प्रत्यादिष्टम् । तद्वत्तोयबिन्दूनामप्यतः

---

१ मी श्लो, सू ६ श. नि. श्लो ८०, ८१ ।

प्रतिपत्तिप्रसक्तेः । अथार्थापत्त्या ध्वनयः प्रतीयन्ते । तथा हि, सन्ति शब्दव्यञ्जका ध्वनयः शब्दप्रतिपत्त्यन्यथानुपपत्तेः । न हि शब्दस्य परार्थोच्चारणान्यथानुपपत्त्या प्रतिपन्ननित्यत्वस्य स्तिमितमारुतावृतस्य व्यञ्जकध्वनीनन्तरेण प्रतिपत्तिरुपपद्यत इति । तदप्यसमञ्जसम् । परार्थोच्चारणान्यथानुपपत्तेः शब्दनित्यत्वसाधिकायाः प्रागेव परास्तत्वात् । तथा च शब्दप्रतिपत्तेरन्यथाप्रकारेणाप्युपपद्यमानत्वाच्चतो न ध्वनिसिद्धिः । अस्तु वा कथंचित्तत्सिद्धिः । तथापि ते किंचित्कुर्वन्तः शब्दं व्यञ्जयन्त्यन्यथा वा । न तावदन्यथा । अतिप्रसक्तेः । प्रथमपक्षे तु किं ते कुर्वन्तीति वाच्यम् । विशिष्टं संस्कारमिति चेत्, ननु कोऽयं विशिष्टः संस्कारो नाम । शब्दसंस्कारः श्रोत्रसंस्कारः उभयसंस्कारो वा । तत्राद्यपक्षे व्यञ्जकवायुना यावद्देशमभिव्याप्तं यावान्वर्णविभागः संस्कृतस्तावत एव श्रवणं स्यात् न समस्तस्य वर्णस्येति खण्डशस्तस्य प्रतिपत्तिः स्यात् । अथ वर्णस्य निरवयवत्वादेकत्र संस्कृतः सर्वत्रैव संस्कृतोऽसाविति नायं दोषः । तर्हि निर्विभागत्वादेवैकत्रासंस्कृतः सर्वत्र तथैवेति मनागपि श्रवणं न स्यात् । किंच, क एष शब्दसंस्कारः । किमतिशयाधानमनतिशयव्यावर्तनमावरणापगमो वा । तत्रातिशयाधानं दृश्यस्वभावतापादनम् । अनतिशयव्यावर्तनं स्वादृश्यस्वभावताखण्डनम् । ते च शब्दाद्भिन्ने अभिन्ने वा विधीयेते । यदि भिन्ने । तदा तत्करणे शब्दस्य न किंचित्कृतमिति तदवस्थोऽस्याश्रुतिर्भवेत् । अथाभिन्ने, तर्हि शब्दस्यापि तत्कार्यतानुषङ्गादनित्यत्वप्रसङ्गः । यो हि यस्मादभिन्नस्वभावः, तत्करणे तस्यापि करणम् । यथाऽतिशयानतिशयव्यावर्तनस्वरूपस्य । ताभ्यामभिन्नस्वभावश्च शब्द इति । आवरणापगमपक्षोऽपि न क्षेमकारः । आवरणासम्भवस्येदानीमेव प्रदर्शितत्वात् । माभूत्तर्हि शब्दसंस्कारः । श्रोत्रसंस्कारस्तु भविष्यति । यदाह—
"अथापीन्द्रियसंस्कारः सोऽप्यधिष्ठानदेशगः ॥ अतो न श्रोष्यति

१ मी. श्लो. श. श्लो. ९७ ।

श्रोत्रं तेनासंस्कृतशष्कुलिः ॥ १ ॥" अधिष्ठानदेशत इति । अधिष्ठानसंयोगपरतन्त्रप्रदेशे । अत इत्यादि तच्च शब्दं नैव श्रोष्यति श्रोत्रं यस्य संस्क्रियमाणस्य संयोगद्वारेणावच्छेदिका शष्कुली न संस्कृतेत्यर्थः । " अप्राप्तकर्म्मदेशत्वाद्ध्वनिना श्रोत्रसंस्क्रिया ॥ अतोऽधिष्ठानभेदेन संस्कारनियमः स्थितः" ॥१॥ इति । तदप्यसमीचीनम् । श्रोत्रसंस्कारपक्षेऽपि सकृत्संस्कृतस्य श्रोत्रस्य युगपदखिलशब्दपरिच्छेदकत्वप्रसक्तेः । न हि नेत्रमञ्जनादिना कृतसंस्कारं सन्सन्निहितं स्वगोचरं नीलपीतादिकं किंचित्पश्यति किंचिन्नेति विशेषं पश्यामः । वलातैलादिना संस्कृतं श्रोत्रं वा कश्चिदेव गकारादिवर्णाञ्शृणोतीति नियमो दृश्यते । येनात्रापि तथा कल्पना स्यात् । अथ व्यञ्जकानां वायूनां भिन्नेषु कर्णमूलावयवेषु वर्तमानानामर्थापत्त्या प्रतिनियतवर्णश्रवणान्यथानुपपत्तिलक्षणया प्रतिनियतवर्णग्राहकत्वेन संस्काराधायकत्वस्य प्रतीतेर्नैकवर्णग्राहकत्वेन संस्कृतं श्रोत्रं सर्ववर्णान्युगपद्गृह्णाति । यथा हि भवत्पक्षेऽन्यवर्णजनकैस्ताल्वादिसंयोगविभागैर्नान्यो वर्णो जन्यते । तथाऽस्मत्पक्षेऽपि नान्यवर्णग्राहकश्रोत्रसंस्काराधायकव्यञ्जकप्रेरकैर्वायुभिरन्यवर्णग्राहकश्रोत्रसंस्काराधायकवायुप्रेरणं क्रियते । इत्युत्पत्त्यभिव्यक्तिपक्षयोः कार्यदर्शनान्यथानुपपत्त्या समः सामर्थ्यभेदः प्रयत्नविवक्षयोः सिद्धः । तदुक्तम्—" व्यञ्जकानां हि वायूनां भिन्नावयवदेशता ॥ जातिभेदश्च तेनैव संस्कारो व्यवतिष्ठते ॥ १ ॥ अन्यैस्ताल्वादिसंयोगैर्नान्यो वर्णो यथैव हि ॥ तथाऽन्यवर्णसंस्कारो न ध्वन्यन्तरसारिभिः ॥ २ ॥ तस्मादुत्पत्त्यभिव्यक्त्योः कार्यार्थापत्तितः समः ॥ सामर्थ्यभेदः सर्वत्र स्यात्प्रयत्नविवक्षयोः ॥ ३ ॥ " इति । तदेतदसम्बद्धम् । इन्द्रियसंस्कारकाणां व्यञ्जकानां समानदेशसमानधर्म्मापन्नसमानेन्द्रियग्राह्येष्वर्थेषु प्रतिनियतग्राहकत्वेनेन्द्रियसंस्कारक-

१ मी. श्लो. श. अ. श्लो ७०,७१ । २ मी. श्लो सू ५ श. अ. श्लो.७९, ८१, ८२, ८३.

त्वस्य कदाचिदप्यदर्शनात् । प्रयोगयुग्म चात्र । श्रोत्र समानेन्द्रियग्राह्य समानधर्मापन्नानामर्थाना ग्रहणाय प्रतिनियतसंस्कारकसंस्कार्यं न भवति, इन्द्रियत्वात् । यदित्थ तदित्थ यथा लोचनम् । तथा च श्रोत्रम् । तस्मात्तथा । शब्दा प्रतिनियतसंस्कारसंस्कार्येन्द्रियग्राह्या न भवन्ति समानेन्द्रियग्राह्यत्वे सति युगपदिन्द्रियसम्बद्धत्वात्, कुम्भादिवत् । युगपदिन्द्रियसम्बद्धत्वादित्येतावत्युच्यमाने, एकेन्द्रियाभिसम्बद्धरूपरसादिभिरामफलगतैर्व्यभिचारस्तदपोहाय समानेन्द्रियेत्यादि। अस्मिन्नेव तु सति व्यवहिताव्यवहितघटाभ्यामनेकान्तस्तन्निराकरणाय युगपदित्यादि । तन्न श्रोत्रसंस्कारोऽपि घटते । भवतु तर्ह्युभयसंस्कार । तत्रोक्तदोषाणामसम्भवात् । तदाह—“ द्वयसंस्कारपक्षे तु मृषा दोषद्वये वच ॥ येनान्यतरवैकल्यात्सर्वे सर्वो न गृह्यते ॥ १॥” द्वयसंस्कारपक्षे श्रोत्रशब्दयो संस्कारपक्षे । यत्प्रत्येकपक्षभावि दोषद्वयस्य वचन तन्मृषालीकम् । मृषात्वे कारणमाह येनेति । संस्कृतोऽपि शब्दो दूरस्थेनेन्द्रियसंस्कारवैकल्यान्नोपलभ्यते । संस्कृतेन्द्रियेणाऽपि निहितेन शब्दान्तरमसंस्कृतत्वान्नोपलभ्यते । इत्यन्यतरवैकल्यात्सर्वे सर्वेषामग्रहण युक्तमिति । नैतदपि सूक्तम् । तथा हि, यदि संस्कृत श्रोत्र स कृत वर्णं प्रतिपद्येत तदा त सर्वगतत्वेन प्रतिपद्यते । तत्स्वरूप त्वात्तस्य । ततो नित्यैकरूपत्व शब्दस्यावार्यावारकभावस्य व्यङ्ग्य व्यञ्जकभावस्य चानुपपत्तेनावरणकृत समुच्चारणानन्तरमस्यानुपलम्भ इति प्रत्यक्षेणैवास्य नाशोऽवसीयते । उत्पादोऽपि तेनैव निश्चीयते । यथा हि चक्रचीवरादिव्यापारान्वयव्यतिरेकानुविधायित्व घटादेरवगम्यते । तथा ताल्वादिसंयोगान्वयव्यतिरेकानुविधायित्व शब्दस्यापीति घटवच्छब्दोऽप्युत्पाद्य प्रत्यक्षलक्षित एव । अथात्र ताल्वादिसंयोगादीनामभिव्यञ्जकत्व कथये । कलशादिष्वपि चक्रादीना किं तत्र कथयसि । कथयाम्येवेति चेत् । सत्कार्यवादमिदानीं स्वरेण कपाट-

---

१ मी श्लो सू ५ श अ श्लो ८६, ८७

सम्पुटेन पिदधासि । नन्वालोके सति कलशादयोऽवलोक्यन्तेऽसति च नावलोक्यन्ते ततश्चानेन न्यायेनालोकस्यापि कलशादीन्प्रति कारणत्वं स्यादिति चेत् । नैष दोषः । तत्र बाधकसम्भवात् । तथा हि, प्रदीपस्य कलशं प्रति कारणत्वमङ्गीक्रियमाण केवलस्य स्याच्चक्रादिकारणकलापकलितस्य वा । नाद्यः पक्षः । कलशशून्येऽप्यपवरककुहरे प्रबोधितदीपाङ्कुरमात्रात्कलशोत्पत्तिप्रसङ्गात् । नापि द्वितीयः । चक्रादिसामग्रीविरहिणि प्रदेशे प्रबलप्रदीपकलिकाकलापप्रबोधे कदाचिदपि कलशानुपलब्धिप्रसक्तेः । ततश्चक्रादिसामग्रीव्यतिरेकेणापि चेदुपलभ्यते कलशः । तेन ज्ञायते प्रदीपदानात्पूर्वमप्यासीदसौ । तथा च प्रदीपस्य व्यञ्जकत्वमेव । न च शब्दजनकेष्वप्येष प्रसङ्गोऽवकाशमासादयति । यादृशेभ्य एव तेभ्यः शब्दो जायते तादृशानामेव कारणत्वाङ्गीकारात् । तस्माज्जनकाभिव्यञ्जकसामग्र्योरयमेव विशेषो यस्यां सत्यामवश्य पदार्थोपलम्भः सा व्यञ्जिकेति सिद्धः प्रत्यक्षनिश्चेयः शब्दोत्पादः । एवं च विनाशोत्पादग्राहिणा प्रत्यक्षेण प्रत्यभिज्ञा बाध्यत इति स्थितम् । प्रयत्नानन्तरीयकत्वेनापि शब्दस्य कार्यत्वनिश्चयात्प्रत्यभिज्ञाबाधः सिध्यति । ननु कूपखननादिप्रयत्नानन्तरमाकाशं समुपलभ्यते न च तत्कार्यमतोऽनैकान्तिकत्वमस्य । उक्तं च— " अनैकान्तिकता तावद्धेतूनामिह कथ्यते ॥ प्रयत्नानन्तरं दृष्टिर्नित्येऽपि न विरुध्यते ॥ १ ॥ आकाशमपि नित्यं स्याद्यदा भूमिजलावृतम् ॥ व्यज्यते तदपोहेन खननोत्सेचनादिभिः ॥ २ ॥ प्रयत्नानन्तरं ज्ञानं तदा तत्रापि विद्यते ॥ तेनानैकान्तिको हेतुर्यदुक्त तत्र दर्शनम् ॥ ३ ॥ अथ स्थगितमप्येतदस्त्येवेत्यनुमीयते ॥ शब्दोऽपि प्रत्यभिज्ञानात्प्रागस्तीत्यवगम्यते ॥४॥" यदुक्तं तत्र दर्शनमिति । प्रयत्नानन्तर दर्शनं शब्दस्यानित्यत्वसाधनाय हेतुतया यदुक्तं तदनैकान्तिकमित्यर्थः । अथ स्थगितमपीति । अथ पुनः पिहितमप्याकाशं

१ मी. श्लो सू. ५ श. नि. श्लो. २९, ३०, ३१, ३२, ३३.

पृथिव्यादिना कथंचित्पृथिव्याद्यनस्थानान्यथानुपपत्त्यैवास्तीत्यनुमीयते । ततश्च प्रागूर्ध्वं चानुपलब्धेरसिद्धत्वादनैकान्तिकत्वाभाव इत्युच्यते । प्रत्यभिज्ञानबलाच्छब्दोऽप्यस्तीत्यवगम्यते । पुनश्च विनाशकारणाभावादिति । तनश्च तथैवोपलब्ध्या तद्विपरीतमनुमानं विरुध्यत इति । एतदपि न क्षोदक्षमम् । एकत्वस्वरूपत्वस्य गगनेऽप्यसिद्धत्वात् । तत्खल्वेकस्वरूपं सत्त्वगोचरविज्ञानजननस्वरूपं तद्विपरीतं वा भवेत् । यदि तज्जननैकस्वरूपम् । तदा तस्य न खननाद्यनन्तरमेवोपलब्धिः । किन्तु पूर्वमपि स्यात् । तद्विपरीतस्वभावत्वे कदाचनाप्युपलम्भो न भवेत्, विशेषाभावात् । विशेषे वा तदेकरूपताव्याहतिः । प्रत्यभिज्ञानाच्छब्दे प्रावक्षत्त्वप्रतीतिश्च च्छिन्नोद्भिन्नकररुहकुन्तलादावपि समाना । यदप्यवादि प्रत्यक्षत्वं चास्य श्रोत्रेन्द्रियान्वयव्यतिरेकानुविधायित्वात्सुप्रसिद्धमित्यादि । तदप्यसम्बद्धम् । प्रत्यभिज्ञानस्येन्द्रियान्वयव्यतिरेकानुविधायित्वदर्शनस्मरणान्वयव्यतिरेकानुविधायित्वेन तस्य पूर्वं प्रसाधितत्वात् । प्रत्यक्षताया चास्यातीतकालसम्बद्धत्वेन शब्दनिर्णायकत्वायोगः । सम्बद्धवर्तमानार्थग्राहित्वात्त्वन्मते प्रत्यक्षस्य । तद्योगे वा कथं योगिप्रत्यक्षाधिक्षेपो भवतः शोभते । प्रत्यक्षत्वेऽप्यस्य तद्वदतीताद्यर्थग्राहकत्वाविरोधात् । समर्थितं च प्रागेवास्य विस्तरेण प्रत्यक्षत्वम् । यदप्युक्तमेव प्रत्यभिज्ञानप्रत्यक्षमाहात्म्यतः शब्दस्य नित्यत्वे प्रतिपन्ने इत्यादि । तदप्ययुक्तम् । शब्दनित्यत्वग्राहकप्रत्यभिज्ञानस्यानन्तरमेव निराकृतत्वात् । यदपि व्यगादि विवादाध्यासितः कालः एतद्वादिसम्बद्धः कालत्वादित्यादि । तदपि प्रलापमात्रम् । गादिरुच्चारणादनन्तरं विनाशस्य प्रत्यक्षप्रतिपन्नत्वेन प्रतिपादनात् । नित्यत्वसाधकानुमानस्य प्रत्यक्षविनिःतपक्षत्वेनागमकत्वात् । विद्युदादेरपि चैव नित्यत्वं स्यात् । तथा हि विवादाध्यासितकालः एतद्विद्युदादिसम्बद्धः कालत्वादिदानीन्तनकालवत् । प्रतीतिबाधाऽन्यत्रापि समाना । नित्यः शब्दः श्रावणत्वादित्यत्रापि विचारपराङ्मुखम् ।

उदात्तादिभिर्धर्म्मैरनैकान्तिकत्वात् । ते हि श्रवणग्राह्यत्वेऽपि न नित्या भवद्भिरङ्गीकृताः । तेषामश्रावणत्वे तु नीलादीनामिव श्रोत्रेणोपलम्भो न भवेत् । वीणादिशब्दैश्चानैकान्तिकत्वम् । तेषां श्रावणत्वेऽप्यनित्यत्वात् । यच्चान्यदवादि देशकालादिभिन्ना गोशब्दव्यक्तिबुद्धय इत्यादि । न तदपि सुन्दरम् । गोशब्दलिपिबुद्ध्या हेतोरनैकान्तिकत्वात् । सा हि गौरित्युल्लेखेनोत्पद्यते न चैकगोशब्दविषया । देशकालादिभिन्नत्वाद्गोशब्दलिपीनाम् । नचैवं विषयभेदः क्वापि प्रसिद्धपद्धतिमास्कन्दति । सकलबुद्धीनामभिन्नविषयत्वप्रसङ्गात् । तथा हि, देशकालादिभिन्नवस्तुबुद्धय एकगोचरा न चानेकगोचरा वस्तुबुद्धित्वात्सम्प्रत्युत्पन्नघटबुद्धिवत् । एवं च निखिलवस्तुबुद्धीनामेकघटलक्षणवस्तुगोचरत्वे घटबुद्धित्वमेव भवेत् । न गोशब्दव्यक्तिबुद्धीनां धर्मित्वम् । कथ वा गोशब्दबुद्धित्व हेतुः । सम्प्रत्युत्पन्नगोशब्दबुद्धिवदिति दृष्टान्तः सिद्ध्येत् । यतोऽनुमानं स्यात् । यदप्यवादि ह्यस्तनो गोशब्दोऽद्याप्यनुवर्तत इत्यादि । तदपि न नीतिशीलान्प्रीणाति । अन्यथानुपपत्तिशून्यत्वेन हेतोरत्राप्रयोजकत्वात् । कथमन्यथा ह्यस्तनाद्यतनसौदामिनीप्रकाशयोरप्येकत्वं न भवेत् । शक्यं हि वक्तुं ह्यस्तनविद्युत्प्रकाशोऽद्य तस्याभिन्नरूपस्य प्रत्यक्षतः प्रतीतेः । शब्दे तारत्वादयो धर्म्मा न स्वाभाविका इति चेत् । तदशोभनम् । स्वाभाविकत्वावधारणन्यायस्य यत्र तत्र प्रसिद्धस्यात्रापि तुल्यत्वात् । न हि पयसि शैत्यद्रवत्वे तेजसि वा भास्वरत्वोष्णत्वे स्वाभाविके इत्यत्रान्यत्प्रमाणं प्रत्यक्षात् । अथ पयःप्रमुखेषु शैत्यादीनां स्वाभाविकत्वेनैव प्रत्यक्षं ग्राहक युक्तमन्यस्योपचारहेतोरनुपलम्भान्नियमेन तद्गतत्वेन चोपलम्भादिति चेत् । शब्देऽपि तारतारत्वादीनामेवमस्तु, विशेषाभावात् । तथाऽप्यतीन्द्रिय. कश्चिदुपाधिरस्ति तद्गता. शब्दे तारतारतरत्वादयोऽवभासन्त इति शङ्किष्यत इति चेत् । किन्न पय.प्रमुखेष्वपि शैत्यादीनामतीन्द्रियान्यधर्मत्वं शङ्क्यते । तत्कि यद्गतत्वेन यदुपलभ्यते तस्यै-

वाऽसौ धर्म'। तथोपगमे पीतत्वस्य शङ्खगतत्वेन प्रतिभासादेतदपि तस्यैव धर्मः स्यात्। अविशेषात्। तच्चायापेतम्। पीतत्वस्यान्यधर्मत्वस्थितौ शङ्खस्य च तद्विरुद्धधर्मत्वे स्थिते कामलाद्यन्वयव्यतिरेकानुविधाने च पीतत्वोपलम्भस्य बाधेन भ्रान्तत्वावधारणात्। न चेह तारतारतरत्वादेरन्यधर्मतास्थितिः। नापि शब्दस्य तारतारतरत्वादिविरुद्धधर्मत्वम्। नापि तारतारतरत्वाद्युपलम्भस्य ध्वनिरूपत्वाद्यन्वयव्यतिरेकानुविधायित्वम्। तथापि शङ्का स्यादिति चेत्। एवमपि सर्वत्र स्यात्। तथा च न क्वचित्कुतश्चित्किंचित्सिद्ध्येत्। न चेदं शङ्कितुमपि शक्यते। अप्रतीते तारतारतरत्वादौ नादनिरूपवायुधर्मत्वे संस्काराभावात्संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात्। न च प्रतीयन्त एवाऽमी तद्धर्मा इति वाच्यम्। रूपरसगन्धस्पर्शेष्वनन्तभावेन तेषु भावरूपेषु चक्षुरादीनामव्यापाराभावात्। न च श्रवणेनैव तत्प्रतीतिः। तथा सति तेषां वायुधर्मत्वविरोधात्। तथा हि तारतारतरत्वादयो न वायुधर्माः श्रावणत्वात्, कादिवत्। यदि पुनरेवं नेष्यते। तदा कादीनामपि वायवीयत्वप्रसङ्गः। अस्त्वेवं को दोष इति चेत्। उच्यते। वायवीयाः सन्तोऽमी कादयः किं वाय्ववयविगुणा भवेयुर्वायुपरमाणुगुणा वा। आद्यपक्षे तेषामनित्यताप्राप्तिः। अवयविविनाशे तेषामप्यवश्यं विनाशभावात्। द्वितीये तु कथं ग्रहणं तेषां तद्गतान्यगुणवत्। एवं च, प्रत्यक्षेण तेषामन्यधर्मतया कदाचिदग्रहणे संस्काराभावात्कथं शब्दे समारोपः। न चैते प्रमाणान्तरेणापि कदाचिद्गृह्यन्ते। अथ निर्निमित्तसंस्कारसद्भावादेव श्रोत्रस्येदृशं सामर्थ्यमेव अविरस्ति। यत आरोप्याग्रहेऽपि भ्रमो भवति। मण्डूकवसाक्ताक्षाणामिवाननगतनगोरगाणामपि प्रथमाक्षसंनिपाताद्वंशपूगारोपमतिः। तदसाम्प्रतम्। सर्वासामपि भ्रान्तीनामारोप्यारोपविषयग्रहणपुरस्सरत्वनियमात्। तदनुसारेण च मण्डूकवसाक्तनयनानामपि वंशपूगभ्रमो व्याख्येयः। वंशे ज्ञात एव तदनन्तरं सर्पभ्रमभावात्। कथमेव नानु-

भवोदय इति चेत् । क्षणभेदस्य दुर्लक्ष्यत्वात् । न चागृहीतसर्पस्य सर्पभ्रमो भवतीति वक्तुं शक्यम् । तस्मिञ्जन्मनि जन्मान्तरे वा सर्पग्रहणसम्भवात् । ध्वनिधर्मस्तु तारतारतरत्वादिरस्मिन्निव जन्मनि जन्मान्तरेऽप्यशक्यग्रहण एव । तस्माद्वर्णाविष्वग्भूतस्तारतारतरत्वादिः प्रतीयमानो वर्णधर्म एवेति । अनौपाधिकप्रतीत्या तीव्रतादिधर्मस्य सौदामिनीदाम्न इव तारतारतरत्वादिधर्माधिकरणस्य शब्दस्यापि सिद्धः प्रत्यक्षतो भेदः । तथा च तदेकत्वानुमानस्यापि तदाभासत्वमवसेयम् । एतेनाद्यतनो गोशब्दो ह्योऽप्यासीदित्यादि प्रतिक्षिप्तम् । न्यायस्य सदृशत्वात् । यदप्यभाणि शब्दो दीर्घकालस्थायीत्यादि । तदपि चेष्टयाऽनैकान्तिकम् । तस्याः सम्बन्धबलेनार्थप्रतीतिहेतुत्वेऽपि दीर्घकालमवस्थानाभावात् । एतेन यः पुनरस्थिर स सम्बन्धबलेन नार्थप्रतीतिं जनयतीत्यादि पराकृतम् । चेष्टायाः सम्बन्धबलेनार्थबोधकत्वेऽपि तादात्विकनिमित्तत्वसम्भवात् । ततश्चायुक्तमेतत्कंचित्कालं स्थिरः शब्दः सर्वकालमपि स्थिर इत्यादि । कञ्चित्कालं स्थिरत्वस्येत्थं शब्दे निराकृतत्वेनासिद्धत्वात् । अनैकान्तिकं कञ्चित्कालस्थिरत्वमाचिररोचिःप्रमुखे । तेषां तत्सद्भावेऽपि साधनमसिद्धम् । तत्सिद्धिनिबन्धनस्य कञ्चित्कालस्थिरत्वस्य हेत्वाभासत्वेन प्रोक्तत्वात् । कादाचित्कत्वाच्च शब्दे तदसिद्धम् । तथा हि यत्कादाचित्कं न तद्विनाशहेतुशून्यम् , यथा सौदामिनीदामादिकम् । कादाचित्कश्च शब्द इति । यदपि विवादाध्यासितः कालो गादिशब्दशून्यो न भवतीत्यादिकमवादि तदपि विद्युदादौ तुल्यत्वादयुक्तम् । तथा हि विवादविषयापन्नः कालः सौदामिन्यादिशून्यो न भवति कालत्वात्तत्सत्त्वोपेतकालवत् । प्रत्यक्षबाधनं पुनरुभयत्रापि समानम् । यच्च प्रत्यपादि नित्यः शब्दः परार्थं तदुच्चारणान्यथानुपपत्तेरित्यादि । तदप्यनौपयिकम् । परार्थं तदुच्चारणस्यान्यथाप्युपपत्तेः । अनित्यत्वेऽपि शब्दस्य सादृश्यवशादेवार्थे सम्बन्धग्रहणसम्भवेन तत्प्रतिपत्तिघटनात् । यदप्यभिहितम् । अन्यस्मि-

न्वातसम्बन्धे न चान्यो वाचको भेरीत्यादि । तदपि नोपपन्नम् । न खलु य एव सम्बन्धावबोधसमये समुपलब्धस्तेनैवार्थप्रतिपत्तिर्विधेयेति नियमः समस्ति । प्राक्प्रदेशपरिदृष्टधूमसदृशादपि मेदिनीधरधूमाद्धनञ्जयावबोधसमधिगमात् । न च महीध्रमहानसाधिकरणयोर्धूमव्यक्त्योरैक्यं सम्भवति । प्रतीतिविरोधात् । सर्वगतत्वप्रसङ्गाच्च । अथ धूमसामान्यस्यात्र गमकत्वमिष्यते । इतरत्रापि सामान्यस्यैव वाचकत्वमिष्यताम् । विशेषाभावात् । नन्विह सामान्यं शब्दत्वं गत्वादि वा वाचकत्वेनाभिप्रेयते । आद्यपक्षे, तस्य सर्वत्राविशेषात्सर्वेऽप्यर्थाः सर्वशब्देभ्यः प्रतीयेरन् । न खलु कारणानियमे कार्यनियमो भवितुमर्हति । तस्याकस्मिकत्वप्रसङ्गात् । द्वितीये तु गादीनामेकैकव्यक्तिरूपत्वेन भेदाभावान्न तत्र गत्वादिसामान्यं सम्भवतीति कथं तस्य वाचकत्वमिति चेत् । तदप्यसाम्प्रतम् । तेषामपि तारतारतरत्वादिभेदतो नानाव्यक्तिरूपत्वसम्भवात्, गत्वादिसामान्यसद्भावोपपत्तेः । न च व्यञ्जकभेदकृत एवायं तारतारतरत्वादिभेदप्रत्ययो गकारादाविति मन्तव्यम् । ककारादिवर्णभेदप्रतिभासस्यापि व्यञ्जकप्रभञ्जनभेदनिबन्धनत्वापत्त्याऽखिलवर्णैकत्वापत्तितनिरवयवाकाशैकशब्दमात्राङ्गीकारप्रसङ्गात् । अथ ककारादीनां परस्परविभिन्नस्वरूपानुगमाद्विषयभेदनिबन्धन एव तद्भेदप्रतिभासो नोपाधिहेतुकः । तर्हि सर्गम्मगगर्गगाङ्गेयगङ्गादिगकारभेदप्रत्ययोऽप्ययं न व्यञ्जकवायुभेदनिमित्तः । तत्राप्यन्योन्यविभक्तगकारस्वरूपप्रतिभासाविशेषात् । वक्तृभेदे हि सति शुकशारिकामनुष्येषु व्यञ्जकनानात्वसम्भावनया वर्णभेदप्रतिभासस्तन्निबन्धनः कथञ्चित् सम्भावनाभुवमवतरेत् । वक्त्रैकत्वे पुनर्गाङ्गेयादौ कुतस्तन्निमित्तो भेदप्रत्ययः । ननु तत्रापि भिन्ना एव नभस्वन्तो व्यञ्जकाः, तन्न पुनरेकमस्तु किं तेन तदपि वा भिन्नमित्येके । नैतदप्युपपन्नम् । एवं हि ककारादीनामपि परस्परं भेदो दुरुपपादः । तत्रापि व्यञ्जकप्रभञ्जनभेदस्य विद्यमानत्वाविशेषात् । ननु ककारादिषु विभेदप्रतीतिः, समस्ति

गकारेषु नास्ति । उच्चारणस्यैव हि तत्र भेदो नोच्चार्यमाणस्येति चेत् । तदप्यनुचितम् । तत्रापि विशेषप्रतीतेः सद्भावात् । ननु यथा शावलेयादौ खुरककुदाद्यवयववर्त्तिनः । प्रतिव्यक्ति विशेषाः सुस्पष्टमाभासन्ते तथा गाङ्गेयादावपि गकारे ते सुस्पष्टं किं नावभासन्त इति चेत् । तत्किं तिलतण्डुलकलापादाविव शावलेयादावपि प्रत्येकं त्रिकोणत्वादि सुस्पष्टविशेषावभासोऽस्ति येन भेदावभासः स्यात् । अथ तत्र त्रिकोणत्वादिविशेषाप्रतिभासेऽपि प्रतिभासन्त एव सुस्पष्टं देशभेदादयः केचिद्विशेषाः । तर्हि शुकशारिकादिसमुदीरितगादेरपि गोपालादीनामपि सुस्पष्ट तारतारतरत्वादिविशेषावभासो विद्यत एव । एतेन यदपि भट्टेनोच्यते—"दृश्यते शावलेयादिव्यक्त्यन्तरविलक्षणा ॥ वाहुलेयादिगोव्यक्तिस्तेन भेदोऽस्ति वास्तवः ॥ १ ॥ न तु द्रुतादिभेदेन निष्पन्ना सम्प्रतीयते ॥ गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥ २ ॥" इति तदपि परास्तम् । नन्वस्त्वेवं तारत्वादीनां विशेषाणा तत्र ग्रहणं किं त्वारोपितम् । तदप्ययुक्तम् । आरोपितरूपवैलक्षण्यात् । तथा हि यदारोपितरूपं वस्तु तदनारोपितनिजस्वरूपसम्बन्धितयाऽप्युपलभ्यते यथा स्फाटिको मणिर्नैसर्गिकश्वेतिम्ना । न चाऽमी गकारादयो वर्णाः कदाचिदपि तारतारतरत्वादिधर्म्मसंस्पर्शशून्याश्श्रुत्या प्रतिभासन्ते तत्कथं तेषां गकारादिषु समारोपः । एवं च, यथा बुद्धीनां स्तम्भकुम्भादिविषयविशेषशून्यानामसंवेदनात्प्रतिविषय नानात्व तथा वर्णानामपि गकारादीना प्रति तारतारतरत्वादिविशेषं नानात्वं सिद्धम् । ननु बुद्धिरप्येकैव विषयभेदोपाधिनिबन्धनस्तद्भेद इति चेत् । मैवम् । "क्षणिका हि सा न चिरकालमवतिष्ठते" इत्यभिधानेन स्वयमेव तद्भेदाभ्युपगमात् । यथा च शुक्लो गुणो भास्वरधूसरादिभेदवत्तयोत्क्षेपणादि कर्म च स्वकीयक्षणविशेषवत्तया नानात्वं प्रतिपद्यते तथा वर्णोऽपि

१ मी. श्लो वा. श्लो. २१।२२।

तारतारतरत्वादिभेदवत्तयेति । ननु शुक्लो गुण उत्क्षेपणादि कर्म चैकमेवाधारभेदात्तु तद्भेदप्रतिभास इति चेत् । अहो प्रतीयमानापलापित्वम् ।

एकं कर्म प्राणिनां बुद्धिरेका सर्वत्रैकश्चैतरूपो गुणश्च ॥
एतत्सर्वं हन्त मीमांसकानां मध्ये व्यक्तं स्वप्रियायाहुरम्य ॥५५९॥

किंचैकात्मवादोऽप्येवं कथं प्रतिक्षिप्यते । सुखदुःखादिभेदस्य शरीरभेदेनाऽपि सम्भवात् । ततो बुद्ध्यादिवत्सर्वत्र सन्निवेशाणामेव वर्णानां प्रतीयमानत्वान्नानात्वमनिवार्यम् । ननु गगनादावकारोपश्लेषकृत एव भेदप्रतिभासो न स्वरूपभेदकृत इति चेत् । तदपि न निरवद्यम् । अकारस्यापि भवन्मते भेदाभावात् । असत्यपि चाऽकारोपश्लेषे दिग्गजो दिग्गज इति भेदेन प्रतिभासो भवत्येव । न खलु दिग्गज इत्यत्रोपरितनगकारस्याकारान्तरेणोपश्लेषः समस्ति । एवं सम्मत् सम्मद पट्ट पट्ट आसन्नमासन्न मल्लो मल्ल पचि पचि पत्तन पत्तनमित्यादिषु वर्णभेदप्रतीतिः सुव्यक्तैव । अर्थप्रतीतिभेदोऽपि च दिग्गजादौ शब्दान्तरनिमित्तको भवितुमर्हति न द्विरुच्चारणकृतो ग्रन्थाधिक्यात् । स खल्वर्थाधिक्यं नोच्चारणभेदात् । सहस्रशोऽपि प्रयुक्ते गवादिशब्दे सास्नादिमदर्थव्यतिरिक्तवाच्यसम्प्रत्ययाभावात् । शब्दविदोऽपि दिग्गज इति द्विगकारकोऽयं निर्देश इत्यभिदधति न तु द्विर्गकार उच्चारित इति । ननु गोगिरिगुरुगेहादावर्थभेदेऽपि गकारप्रत्यनुवृत्तिदर्शनादेक एवाऽयं गकारः । मैवं वोचः । न हि वयमभेदप्रत्ययमपह्नुमहे । किन्तु भेदप्रत्ययस्यापि बाधाविकलस्य सद्भावादन्यथासिद्धत्वाच्च गवादिवत्सामान्यविशेषकल्पनां गकारादिवर्णस्य वर्णयामः । व्यञ्जकभेदनिबन्धनत्वं तु भेदप्रत्ययस्य खण्डादावपि वक्तुं शक्यमिति प्राक्प्रतिपादितमेव । किंच शाबलेयादिभेदप्रतीतिरपि व्यञ्जकभेदनिर्मितत्वादेक एव गौस्त्रिभुवनेऽपि स्यात् । ननु कश्चात्र व्यञ्जको यद्भेदकृतः पिण्डभेदप्रत्यय इष्यते । आह च—" न

पिण्डव्यतिरेकेण व्यञ्जकोऽत्र ध्वनिर्यथा ॥ पिण्डव्यङ्ग्यैव गोत्वादिजातिर्नित्यं प्रतीयते ॥ १ ॥" इति तदपि न तर्ककर्कशकुशाग्रीयबुद्धीनां वचः । गोत्वजातेर्गत्ववदिदानीं विवादाविषयापन्नत्वात् । भेदप्रत्ययस्य तु चक्षुर्व्यापारभेदादपि सम्भाव्यमानत्वात् । ननु सकृदपि व्यापृतनेत्रस्य परस्परविविक्तगोपिण्डप्रतिभासः समुपजायत इति । तत्किं प्रथमश्रोत्रव्यापारवेलायां गाङ्गेयगङ्गादौ गकारभेदप्रतिभासो नोपजायते । तथा चात्र प्रयोगः । गकारादिर्वर्णः प्रत्येकमनेको बाधकाभावे सति युगपद्भिन्नदेशतयोपलभ्यमानत्वात् । य एवं स एवं यथा ब्रह्मवृक्षादिः । तथा चायम् । तस्मात्तथेति । न तावदत्रैकेन पुरुषेण क्रमशोऽनेकदेशतयोपलभ्यमानेन हेतोरनैकान्तिकत्वमाशङ्कनीयम् । युगपद्ग्रहणात् । नाप्येकेन सहस्रदीधितिना नानापुरुषैः सकृद्भिन्नदेशतयोपलभ्यमानेन व्यभिचारः । बाधकाभावे सतीति विशेषणात् । न ह्येकस्मिन्नहिमरश्मौ भिन्नदेशतयोपलभ्यमाने बाधकाभावः । प्रतिपुरुष क्रमलङ्घनानुपलम्भस्य बाधकस्य सद्भावात् । नापि नानाजलपात्रसङ्क्रान्ततिग्मरश्मिबिम्बेन प्रत्यक्षतो दृश्यमानेन हेतोरनेकान्तः । तस्य दिनकरकरनिकरसन्निधिमपेक्ष्य तथापरिणममाणस्यानेकत्वात् । अथ पर्वतादिनैकेनास्य हेतोर्व्यभिचारः । तस्यैकस्यापि बाधकाभावे सति युगपद्भिन्नदेशतयोपलभ्यमानत्वादिति चेत् । न । तस्याप्यवयवरूपतया नानात्मकस्य सतो बाधकाभावे सति युगपद्भिन्नदेशतयोपलभ्यमानत्वव्यवस्थितेः । निरवयवत्वे तथाऽभावविरोधादेकपरमाणुवत् । व्योमादिना तदनैकान्तिकत्वमनेन प्रत्युक्तम् । तस्याऽप्यनेकप्रदेशत्वप्रसिद्धेः । व्योमादेरनेकदेशत्वादेकद्रव्यत्वविरोध इति चेत् । न । नानादेशस्यापि घटादेरेकद्रव्यत्वप्रतीतेः । न ह्येकप्रदेशत्वेनैवैकद्रव्यत्वं व्याप्तम् । येन परमाणोरेवैकद्रव्यता । नापि नानाप्रदेशत्वेन । यतो घटादेरेवैकद्रव्यतेति समवतिष्ठते । एकद्रव्यत्वपरिणामेनैकद्रव्यताया

१ मी. श्लो. वा. स्फोटवादे श्लो. ३६।३७ ।

व्यापित्वभङ्गनात् । सकललोकप्रसिद्धा ह्येकद्रव्यत्वपरिणतस्यैकद्रव्यता । नानाद्रव्यत्वपरिणतानामथवा नानाद्रव्यतात् । स्यान्तद्बाधकाभावे सतीति हेतुविशेषणमसिद्धम् । गङ्गेत्यादौ गकारवर्णस्य सर्वगतस्य युगपद्व्यक्तक्लेशमेवाद्भिन्नदेशतयोपलभ्यमानस्य स्वतो देशविच्छिन्न तयोपलम्भासम्भवादिति । तदयुक्तम् । तस्य सर्वगतत्वासिद्धेः । कूटस्थत्वेनाभिव्यङ्ग्यत्वप्रतिषेधाच्च । अथोच्यते सकल शब्दो नित्यद्रव्यत्वे सत्यमूर्तत्वादाकाशवदिति द्रव्यत्वान्नित्यमिधीयमाने घटादिना व्यभिचारस्तन्निषेधार्थं नित्यग्रहणम् । तथाऽप्यगुणा व्यभिचारस्तद्व्यवच्छेदार्थ ममूर्तग्रहणम् । अमूर्तत्वान्नित्यमिधीयमाने परमाणुत्वापरिमाणेनाऽनेकान्त स्तत्परिहाराय द्रव्यत्व इति । एतदपि न शब्दगतसर्वगतत्वप्रसिद्धये प्रभवति । जीवद्रव्येणाऽनैकान्तिकत्वात् । तस्यापि साम्प्रत पक्षीकरणान्न तेनाऽनेकान्त इति चेत् । न । प्रत्यक्षविरोधात्प्रतिज्ञायाः । श्रोत्रप्रत्यक्षं हि नियतदेशतया शब्दमुपलभते स्वसंवेदनाध्यक्षं चात्मान शरीरपरिमाणानुविधायितयेति । स्वरूपासिद्धश्च हेतुः । सर्वथाऽपि नित्यद्रव्यत्वामूर्तत्वयोर्धर्मिण्यसम्भवात् । तदसम्भवश्च नित्यत्वस्य निराकरणात्पौद्गलिकत्वेन शब्दमूर्तत्वप्रसाधनाच्च । तेन सुव्यक्ता गाङ्गेयगङ्गादौ गकारादिभिन्नप्रतिभास इति सिद्धमनेकगकारादिव्यक्तिषु सदृशत गत्वादिसामान्यमिति । यच्चोक्तं सादृश्येन शब्दान्यथावबोधासम्भवादित्यादि । तदप्यसत् । प्रतिपादितयुक्त्या वर्णस्य निराकृतत्वेन सरूपाणामपि य एव सङ्केतासमयसमये मया ध्वनिरुपलब्ध स एवाऽयमित्येकत्वप्रतीतेरेव नीलमम्बरमिति प्रतीतिवत् भ्रान्तत्वात् । यत्तूक्त सादृश्यात्प्रत्यभिज्ञाना भ्रान्तं शब्दप्रत्यय स्यादिति तद्भ्रमाद्भ्रमत्वात् प्रतिपत्तावपि तुल्यम् । यच्चोक्तं न च भूयोऽवयवसामान्ययोगस्वरूपमित्यादि । तदप्यसारम् । सदृशपरिणामलक्षणस्यैव सादृश्यस्य व्यवस्थितेः । वर्णानां च निरवयवत्वमसिद्धम् । तेषां पौद्गलिकत्वसमर्थनात् । यदप्यवादि न च गत्वादिविशिष्टानां गादीनां वाचकत्वं युक्त

गत्वादिसामान्यस्याभावादिति । तदप्यसत्यम् । गत्वादिसामान्यस्य साधितत्वात् । यच्च नित्यत्वं व्यापकत्वं चेत्यादिकारिकाजालमजल्पि तदपि निष्फलम् । नित्यत्वव्यापकत्वयोः शब्दे सविस्तरमनन्तरमेवापास्तत्वात् । यदप्यभाणि जलपात्रेषु हीत्यादि तदप्यसम्बद्धम् । तत्रोपलभ्यमानस्यादित्यप्रतिविम्बस्याऽनेकत्वात् । गगनतलावलम्बी हि कमलबन्धुस्तत्रोपलभ्यत इत्यत्र न प्रत्यक्ष प्रमाणम् । तत्र तत्स्वरूपाप्रतिभासनात् । तस्य हि स्वरूप गगनतलावलम्बि चैकं च । न चेदमवभासते । यच्चावभासते जलपात्रावलम्बि चाऽनेक च । तद्वृक्षछायादिवद्वस्त्वन्तरमेव । न चाऽन्यप्रतिभासेऽन्यप्रतिभासो नाम, अतिप्रसङ्गात् । न च जलभानोर्गगनभानुना सादृश्यादेकत्वम् । त्रस्तकुरङ्गदारकदृशोरत्यन्तसदृशयोरेकत्वप्रसङ्गात् । न च कादम्बिन्यादेर्व्योमभानोर्विकारे जलभानोर्विकारावलोकनादेकत्वमिति मन्तव्यम् । वृक्षछाययोरपि तत्प्रसङ्गात् । ननु तत्प्रतिविम्बाना वस्त्वन्तरत्वे कुतः प्रादुर्भावः स्यादिति चेत् । जलादित्यादिलक्षणस्वसामग्रीविशेषादिति ब्रूमः । स्वच्छताविशेषाद्धि जलदर्पणादयो मुखादित्यादिप्रतिविम्बाकारविकारधारिणः सम्पद्यन्ते । ततो निराकृतमेतत्, " **अत्र ब्रूमो यदा तावज्जले सौर्येण** " इत्यादि । स्वप्रदेशस्थतया सवितुर्ग्रहणासिद्धेः । " **चाक्षुषं तेजः प्रतिस्रोतः प्रवर्त्तितम्** " इति चाऽतीवाऽसङ्गतम् । प्रमाणाभावात् । न हि चक्षुस्तेजांसि जलेनाभिसम्बध्य पुनः सवितारं प्रति प्रवृत्तानि प्रत्यक्षादिप्रमाणतः प्रतीयन्ते । यथा च नयनरश्मीनां विषयं प्रति प्रवृत्तिर्नास्ति तथा चक्षुषोऽप्राप्यकारित्वप्रघट्टके प्रतिपादितमित्यलमतिविस्तरेण । ततो यद्यत्स्वभावतया कुतश्चिदपि प्रमाणान्न निश्चीयते न तत्तत्स्वभावतया स्वीकर्त्तव्यम् । यथा विश्वमद्वैतस्वभावतया । सर्वथा नित्यस्वभावतया न निश्चीयते च कुतश्चिदपि प्रमाणाच्छब्द इति । अनित्यस्वभावतायां तु प्रमाणसद्भावात्तद्रूपतयाऽसौ स्वीकरणीयः ।

तच्च प्रमाणमनित्यः शब्दः कृतकत्वात् । यत्कृतकं तदनित्यं दृष्टं यथा कुम्भः । कृतकश्च शब्दः । तस्माद्यथोक्तसाध्याधिकरणमिति । न चात्र कृतकत्वमसिद्धम् । तस्याधस्तात्प्रसाधितत्वात् । तथा शब्दः परिणामी वस्तुत्वान्यथानुपपत्तेरिति । न चात्र वस्तुनः प्रतिक्षण-विवर्तनकेनानेकान्तः शङ्कनीयः । तस्य वस्त्वेकदेशतया वस्तुत्वायत्तस्थितेः । न च तस्यावस्तुत्वम् । वस्त्वेकदेशत्वाभावप्रसङ्गात् । तदुक्तम्—“नायं वस्तु न चावस्तु वस्त्वंशः कथ्यते बुधैः । नासमुद्रः समुद्रो वा समुद्रांशो यथैव हि ॥ १ ॥” इति । वस्तुत्वस्याऽन्यथानुपपत्तिरसिद्धेति चेत् । भ्रान्तम् । एकान्तनित्यत्वादौ पूर्वापरस्वभावत्यागोपादानस्थितिलक्षणपरिणामाभावे क्रमयौगपद्याभ्यामर्थक्रियाविरोधाद्वस्तुत्वासम्भवात् इति नैकान्तनित्यः शब्दः । नापि सर्वथा द्रव्यम् । पर्यायात्मतास्वीकरणात् । स हि पुद्गलस्य पर्यायः । शब्दान्तरोद्भवात् । छायातपादिवत् । कथंचिद्द्रव्यं शब्दः । क्रियावत्त्वाद्बाणादिवत् । अस्तिभवतीत्यादिक्रिया धात्वर्थलक्षणया क्रियया क्रियावता गुणादिनाऽनेकान्त इति चेत् । न । परिस्पन्दरूपया क्रियया क्रियावत्त्वस्य हेतुत्वेन विवक्षितत्वात् । क्रियावत्त्वमसिद्धमिति चेत् । न । देशान्तरप्राप्त्या शब्दस्य क्रियावत्त्वप्रसिद्धेः । इतरथा बाणादेरपि निष्क्रियत्वप्रसङ्गात् । ततः कथंचिद्द्रव्यं शब्दः इति सिद्धम् । मूर्तिमांश्चासौ मूर्तिमद्द्रव्यपर्यायत्वाद्घटवत् । न च मूर्तिमद्द्रव्यपर्यायत्वमसिद्धम् । तत्प्रसाधकस्यानुमानस्य सद्भावात् । तद्धि शब्दो मूर्तिमद्द्रव्यपर्यायः सामान्यविशेषवत्त्वे सति बाह्येन्द्रियविषयत्वात्स्पर्शादिवत् । न घटत्वादिसामान्येनात्र हेतोर्व्यभिचारः । सामान्यविशेषवत्त्वे सतीति विशेषणात् । परमतापेक्षं चेदं विशेषणम् । स्वमते घटत्वादिसामान्यस्यापि सदृशपरिणामलक्षणस्य द्रव्यपर्यायात्मकत्वेन स्थितेस्तेन व्यभिचाराभावात् । कर्मणाऽनेकान्त इति चेत् । न । तस्यापि द्रव्यपर्यायात्मत्वेनाभिमतत्वात् । न चात्मना व्यभिचारः । बाह्येति विशेषणात् । एवं च वर्णात्मकस्य

शब्दस्य परिणामित्वे सिद्धे तदात्मकस्य पदस्य पदात्मकस्य च वाक्यस्याऽनायाससिद्धमेव परिणामित्वं प्रज्ञाशालिभिरवगन्तव्यमिति ।

किं चाग्रतः सकलवस्तुगतव्यवस्था
कूटस्थनित्यानियमक्षणिकत्वपक्षे ॥
नैव प्रयाति घटनामिति वक्ष्यतेऽत्र
शब्दोऽपि तत्र हि कथं परिणामिरूपः ॥ ५६० ॥

सोऽयं **मीमांसकानामुपगमपदवीं** नित्यवर्णप्रवादः
सम्यग्युक्तिप्रबन्धप्रसरणवशतः प्राप्यनेकान्तविद्भिः ॥
पक्षः स्वीयः कथंचिज्जिनदविलयिताल्लक्षणं सिद्धिसौधं
नीतस्तस्मात्त्रिलोक्या जयति जयकरं शासनं **जैनचन्द्रम्** ॥५६१॥

अत्राहुः **सौगताः**—

शब्दार्थयोः सम्बन्धमनभ्युपगच्छतां बौद्धानां मतस्योपपाद्य खण्डनम् ।

शब्दस्य वस्तुनि न कोऽपि विचार्यमाणः
संबन्ध एति घटना ननु मानतोऽत्र ॥
तस्मात्ततः कथमिह प्रतिपत्तिमर्थे
**स्याद्वादिनः** प्रणिगदन्त्युपपत्तिवन्ध्याम् ॥५६२॥

तथा हि—शब्दादर्थयोः सम्बन्धः किं तादात्म्यरूपः किं वा तदुत्पत्तिलक्षणः स्यात् । न तावत्तादात्म्यरूपः । पृथग्देशतया तयोरुपलभ्यमानत्वात् । वदने हि शब्दः समुपलभ्यते विश्वम्भरायामर्थ इति । तयोस्तादात्म्यकक्षीकारे च क्षुरक्षिरादिशब्दप्रयोगे वदनस्य पाटनप्लावनादिप्रसक्तिः । नापि तदुत्पत्तिलक्षणः । करशाखाशिखरे करिकदम्बकमास्त इत्यादिशब्दानामर्थाभावेऽपि स्थानकरणप्रयत्नानन्तरमुत्पत्तेर्दर्शनात् । तथा चाऽर्थसंस्पर्शित्वाभावात्कथं ते बाह्यार्थे प्रतीतिं जनयितुमलम् । ते हि विकल्पमात्राधीनजन्मानः स्वमहिम्ना तिरस्कृतबाह्यार्थान्प्रत्ययाञ्जनयन्ति । यथा करशाखादिवाक्यानि । पुरुषदोषाणामेव महिमा न शब्दानामित्यप्यसुन्दरम् । दोषवतोऽपि मूका-

दिपुरुपस्यानुच्चारितशब्दस्येश्शामत्यप्रत्ययोत्पादनसामर्थ्यासम्भवात् । असत्यपि हन्यकालुष्ये, आर्ते प्रतिपादिता नगुल्यादिवाक्यानि तामुत्पात्यन्त्येव । न चाप्ता नेदृशानि वाक्यानि प्रयुञ्जते प्रयुञ्जाना वा नाऽऽप्ताः स्युरिति चेत् । एतदप्यसुन्दरम् । एवमपि हि वक्तृदोषाणामयथार्थज्ञानोदयकारणत्वासिद्धि । व्यतिरेकासिद्धे । यदि हि वक्तृदोषाभावेऽप्यन्यपि वाक्यानि प्रतिपादयेरन्न चाऽयथार्था प्रत्ययान्नुदीरंस्तदा व्यतिरेकनिश्चयाद्वक्तृदोषजत्वं शाब्दज्ञानस्य भवेत् । आप्तैस्तु तेषाम प्रयोगे किं शब्दाभावादयथार्थज्ञानानुत्पत्तिराहोस्विद्दोषाभावादिति सन्दिग्धो व्यतिरेक । शब्दे तु निश्चित सत्यपि दोषेषु शब्दानुच्चारणे मिथ्याप्रत्ययस्यानुत्पादात् । न चाप्तत्वमीदृशवाक्यप्रतिपादकत्वेन विरुध्यते । एवंविधशब्दाभिधाने सत्यप्याप्तदोषाभावतोऽनाप्तत्वस्याभावात् । तथा ह्याप्तोऽपि कस्मैचिदेवमुपदिशति न त्वयाऽननुभूतार्थं वचन प्रतिपादनीयम् । यथा करशाखाग्रेदिवाक्यम् । अत शब्दस्यैव महिमा न वक्तृदोषाणाम् । ततोऽर्थासस्पर्शिन शब्दा विकल्पमात्रायचोत्पत्तय सिद्धा । तथा चाह–" विकल्पयोनय शब्दा विकल्पा शब्दयोनय. ॥ तेषाम योन्यसम्बन्धो नार्थान् शब्दा स्पृशन्त्यमी ॥ १ ॥ " इति ॥ १० ॥

एतत्प्रतिविधातुमाह—

## स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धन शब्द इति ॥ ११ ॥

स्वाभाविक सहज सामर्थ्यं च शब्दस्याऽर्थप्रतिपादनशक्तिर्योग्यता परपर्याया । ज्ञानस्य ज्ञेयज्ञापनशक्तिवत् । समयश्च सङ्केतस्ताभ्यामर्थबोधस्याभिधेयावगमस्य । निबन्धन कारण शब्द इति । तथा चायुक्तमुक्त " शब्दस्य वस्तुनि न कोऽपि विचार्यमाण सम्बन्ध " इत्यादि । तादात्म्यतदुत्पत्तिलक्षणसम्बन्धाभावेऽपि शब्दार्थयोर्योग्यता-

भिधानसम्बन्धसद्भावात् । तदभावे तयोर्योग्यताभिधानोऽपि सम्बन्धः कथमित्यप्यनभिधेयम् । नयनरूपयोः क्वचित्तदभावेऽपि तदुपलम्भात् । न खलु स्फीतालोककलितकलशरूपेण समं लोचनस्य तादात्म्यं तदुत्पत्तिर्वा शौद्धोदनितनयैरप्यङ्गीक्रियते । प्रतीतिविरोधापत्तेः । नापि नेत्रस्य तादात्म्यादिसम्बन्धाभावे रूपसम्बन्धस्यानुपपत्तिः । श्रवणादीन्द्रियवत्तस्यापि रूपाप्रभासकत्वप्रसक्तेः । न च वाच्यं योग्यतातः शब्दस्यार्थवाचकत्वेऽर्थस्यापि शब्दवाचकत्वं किं न भवेदिति । प्रतिनियतशक्तिकत्वात्पदार्थानाम् । योग्यता हि शब्दार्थयोः प्रतिपाद्यप्रतिपादकशक्तिः । ज्ञानज्ञेययोर्ज्ञाप्यज्ञापकशक्तिवत् । न च ज्ञानज्ञेययोः कार्यकारणभावात्स्वरूपप्रतिनियमो न पुनर्योग्यतात इत्यभिधानीयम् । तयोः कार्यकारणभावसद्भावेऽपि योग्यतात एव स्वरूपप्रतिनियमोपपत्तेः । इतरथा ज्ञानमेव प्रकाशकं न तु ज्ञेयं ज्ञेयमेव च प्रकाश्यं न पुनर्ज्ञानमिति नियमस्याघटनात् । ननु योग्यतावशाच्छब्दो यद्यर्थं प्रतिपादयति तदा भूमिगृहवर्धितोत्थितस्याऽपि पुंसः प्रतिपादयतु विशेषाभावादिति चेत् । तदप्यनुचितम् । सङ्केतसहायस्य स्वयोग्यतामाहात्म्यतः शब्दस्यार्थप्रतिपादकत्वप्रतिज्ञानात् । भूमिगृहवर्धितोत्थितं प्रति चाऽस्य स्वयोग्यतासद्भावेऽपि सङ्केतसहायकाभावान्नार्थप्रतिपादकत्वानुषङ्गः । सङ्केतो हीदमस्य वाच्यमिदं चास्य वाचकमित्येवं रूपो वाच्यवाचकयोर्विनियोगः । स यस्याऽस्ति तस्यैव शब्दः स्वार्थं प्रतिपादयति नाऽपरस्य । इतरथा धूमादिसाधनमपि तथाविधस्यानधिगतसम्बन्धस्य धूमध्वजादिसाध्यं प्रकाशयेत् । विशेषादर्शनात् । अविनाभावो हि साध्यावबोधे विधेये साधनस्य निबन्धनं स च सर्वदा सर्वं प्रत्यस्यास्तीति । अथ येनैव साध्यसाधनयोरविनाभावः प्रतिपन्नस्तं प्रत्येव साधनं साध्यमवबोधयतीत्यभिधीयते । तर्हि येनैव शब्दार्थयोः सङ्केतः प्रतिपन्नस्तं प्रत्येव शब्दोऽर्थस्य वाचक इत्यभिधीयताम् । समानयोगक्षेमत्वात् । ननु सङ्केतः पुरुषेच्छामात्रनिर्मितः । न

च नेच्छया वस्तु यत्र स्थानमुपपन्नम् । अतिप्रसक्तेः । ततोऽर्थोऽपि वाचकः शब्दोऽपि वाच्यः किं न भवेत् । पुरुषेच्छाया निरङ्कुशत्वादिति चेत् । तदप्यविचारितमनोहरम् । सङ्केतस्य सहजयोग्यतानिबन्धनत्वाद्धूमधूमध्वजवत् । यथैव हि धूमपावकयोः स्वाभाविके एवाविनाभावसम्बन्धे तद्व्युत्पत्तये तु तर्कः समाश्रीयते । तथा शब्दार्थयोर्नैसर्गिक एव वाच्यवाचकशक्तिस्वरूपसम्बन्धे तद्व्युत्पत्तये तु सङ्केतः समाश्रीयते । ननु शब्दस्य नैसर्गिकी शक्तिः किमेकार्थप्रतिपादनेऽनेकार्थप्रतिपादने वा । यद्येकार्थप्रतिपादने । तदा सङ्केतकोटिभिरपि ततोऽर्थान्तरे प्रतीतिर्न भवेत् । धूमादग्निप्रतीतिवत् । अथाऽनेकार्थप्रतिपादने, तदा समसमयं शब्दादनेकार्थप्रतीतिप्रसक्तेः प्रतिनियते वस्तुनि प्रवृत्तिर्न प्राप्नोतीति चेत् । तदपि न निपुणनिरूपितम् । शब्दस्यानेकार्थप्रतिपादने नैसर्गिकशक्तिसद्भावेऽपि प्रतिनियतसङ्केतसामर्थ्यात्प्रतिनियतार्थप्रतिपादकत्वोपपत्तेः । एकस्यापि हि शब्दस्य देशादिभेदेन प्रतिनियतः सङ्केतोऽनुभूयते । यथा गूर्जरादौ चोरशब्दस्य तस्करे द्रविडादौ पुनरोदने इति । दृश्यते च सर्वत्र रूपप्रकाशने योग्यस्यापि चक्षुषः प्रत्यासन्नतिमिरवशात्सन्निहिते दूरतिमिरसामर्थ्याच्च सन्निहिते रूपे विशिष्टाञ्जनादिवशादन्धकारान्तरितेऽपि ज्ञानजनकत्वम् । काचकामलादिदूषणबलाच्च विजृम्भितरूपाभावेऽपीति । ततो यथाऽनेकरूपप्रकाशनयोग्यस्यापि चक्षुषो दूरतिमिरादिप्रतिनियतसन्निहितरूपादिज्ञानजनकत्वम् । तथाऽनेकार्थप्रतिपादनयोग्यस्यापि शब्दस्य प्रतिनियतपदार्थप्रतिपादकत्वं यदि स्यात्तदा का नाम क्षतिः । यदप्यभिहितमर्थसंस्पर्शित्वाभावादित्यादि तदप्यनभिज्ञवचनम् । यतः किमाप्तनिगदितस्य शब्दस्यार्थासंस्पर्शित्वमुपपन्नं नाऽपरस्य । इतरथा तिमिरादिदोषकलुषितलोचनसमुद्भूतप्रत्यक्षस्याऽर्थासंस्पर्शित्वोपलम्भाद्गुणवन्नयनसमुत्थप्रत्यक्षस्याऽपि तद्भवेत् । नाऽपि तृतीयः पक्षः । आप्तानाप्तप्रणीतशब्दव्यतिरिक्तस्य शब्दमात्रस्याऽसम्भवात् । अथाप्तप्रयुक्तात्करशाखा-

दिवाक्याद्विपरीतज्ञानोत्पादप्रतीतेः शब्दस्यैष महिमा न वक्तृदोषाणामित्युच्यते । तदप्यसम्बद्धम् । आप्तैरेवंविधवाक्याप्रयुक्तेः । यत्पुनराप्तैस्तु तथाप्रयोग इत्यादिना सन्दिग्धव्यतिरेकत्वमुक्तम्, तदपि न क्षोदक्षमम् । अनुच्चारितशब्देऽपि दोषवति पुंसि करसंज्ञादिना विपरीतप्रत्ययोत्पादनस्य दर्शनेन तस्य शब्दव्यभिचारात् । आप्तेऽनुच्चारितशब्दे तदनुत्पादनस्य शब्दाभावनिबन्धनत्वसन्देहाभावेन दोषाभावनिबन्धनत्वनिश्चितेर्व्यतिरेकनिर्णयाच्च । न च हस्तसंज्ञादिना शब्दानुमानं ततो विपरीतप्रतीतिरित्यभिधेयम् । तथाप्रतीतेरभावात् । तरङ्गिणीतीरमनुसरन्ननासादितमोदकराशिः पुरुषः पुरुषमेवाधिक्षिपति दुरात्मना तेन विप्रतारितोऽस्मीति न शब्दम् । यत्पुनराप्तोऽपि कस्मैचिदेवमुपदिशतीत्याद्यभिहितम् । तत्र प्रतिषेधपरत्वेनाऽस्य यथार्थतैव । वाक्यैकदेशस्याऽपि ह्युदाहरणविवक्षायामिति करणावच्छिन्नस्य शब्दपरत्वेनोपादानात् । प्रतिषेधैकवाक्यतया यथार्थतैव । अर्थपरत्वे तु प्रतिषेधेनैकवाक्यतैव न स्यात् । तस्मादाप्तप्रणीतशब्दानामयथार्थत्वाभावान्न स्वतोऽर्थासंस्पर्शिनः शब्दाः । किंतु पुरुषदोषवशादिति । अपि च विपर्ययज्ञानोत्पत्तेर्यावद्भिः सह तद्भावभावित्वमवसीयते तावतां तत्र व्यापृतिः । विपर्ययज्ञानोत्पत्तिश्चाप्त शब्दोच्चारणे सत्यप्यनाप्तमन्तरेण नोपलब्धेति शब्दवदनाप्ताभिप्रायस्यापि तत्र व्यापारः स्वीकरणीयः । किंच लोचनादिवदर्थप्रकाशकत्वमात्र शब्दस्य नैसर्गिकं रूपम् । न तु यथार्थप्रकाशकत्वायथार्थप्रकाशकत्वे । तयोर्गुणदोषनिबन्धनत्वात् । सति हि नैर्मल्यादिगुणे चक्षुर्यथावद्वस्तु प्रकाशयति कामलादिदोषे तु सत्ययथावत् । एवं शब्दोऽपि वक्तृगुणदोषापेक्षः सत्येतररूपं प्रकाशयति । अत एव करशाखाशिखराधिकरणकरिशतवचसि बाध्यमानेऽपि पुनःपुनरुच्चार्यमाणे भवति तत्सद्भावसंशीतिः । प्रकाशकत्वस्य शब्दस्वरूपस्य बाधकसहस्रोपढौकनेऽप्यविनाशात् । यदप्यजल्पि विकल्पयोनयः शब्दा इत्यादि । तदप्यसत्यम् । शब्दानामर्थेन

सम्बन्धसद्भावस्य प्रमाणोपपन्नत्वात् । तथा हि शब्दोऽर्थेन सम्बद्धः प्रतिनियतप्रत्ययनिमित्तत्वाल्लोचनवत् । न च लोचनस्याप्यर्थेनासम्बन्ध इत्यभिधेयम् । योग्यताख्यसम्बन्धस्य तत्रोभाभ्यां प्रतिपन्नत्वात् । न चैवमप्राप्यकारित्वं बाध्यते । संयोगादेः सन्निकर्षस्याऽनभ्युपगमात् । तथा शाब्दो बोधः सम्बन्धनिबन्धनः प्रतिनियतबोधत्वात्, तृणीत्याद्दिवत् ।

इत्थं सम्बन्धो योग्यतानामधेयः
शब्दस्याऽर्थेन प्रोक्तयुक्त्या प्रसिद्धः ॥
तस्मात्तस्मात् सिद्धिराविर्भवन्ती
शाब्दी शक्या नो सन्निरोद्धुं कथंचित् ॥ ५६३ ॥

अत्राहुर्नैयायिकाः —

सङ्केतातिरिक्तं स्वाभाविकं सम्बन्धमनभ्युपगच्छतो नैयायिकस्य मतमुपपाद्य खण्डनम् ।

सङ्केतमात्रमचिराच्छब्दार्थस्य भवति संविदि ॥
स्वाभाविकोऽस्य तस्मात्सम्बन्धो नाभिधेयेन ॥ ५६४ ॥

तथा हि—शक्तिरूपः स्वाभाविकः शब्दानां सम्बन्धोऽसम्बद्धः । स्वरूपसहकारिव्यतिरिक्तायास्तस्या असम्भवात् । न चार्थप्रत्ययान्यथानुपपत्त्या तत्कल्पना शब्दे श्रेयसी । सङ्केतवशादेव तत्र तदुपपत्तेः । किंच कल्पयित्वाऽपि स्वाभाविकसम्बन्धं तद्व्यञ्जकः सङ्केतस्त्वयाप्यङ्गीकृत एव । तदङ्गीकारे च तत एवार्थसिद्धेः कृतं तथाविधसम्बन्धपरिकल्पनेन । तत्परिकल्पने वा न कस्यचित्सङ्केतापेक्षा स्यात् । तन्मात्रेणैव शब्दस्याऽर्थप्रकाशकत्वोपपत्तेः । न चैवमस्ति । सङ्केतमपास्य विपश्चितोऽपि शब्दार्थप्रतीतेरनुत्पत्तेः । अपि च क्वचिद्देशविशेषे कश्चिच्छब्दो देशान्तरप्रसिद्धमर्थमुत्सृज्य ततोऽर्थान्तरे प्रयुज्यते । यथा चौरशब्दस्तस्करवचनो दाक्षिणात्यैरोदने । यथेच्छं च शब्दाः पुत्रादिषु नियुज्यन्ते । तच्चैवं समयपक्षाऽक्षुण्णमुपपद्यते । स्वाभाविकसम्बन्धसद्भावे चैकार्थनियतत्वमेव सर्वशब्दानाम् । लौकिकोऽपि च व्यपदेशः सङ्केतपक्षमाश्रितामेव भजते ।

देवदत्तेनोक्तममुतः शब्दादमुमर्थं प्रतिपद्यस्वेत्येवं हि व्यपदिशति लोकः । तथा यत्र शृङ्गग्राहिकया शब्दमर्थं च निर्दिश्य सङ्केतः क्रियते तत्रैयन्तमेवाङ्गीक्रियमाणमीक्षामहे , अयमस्य वाचक इति । न तु शक्तिपर्यन्तम् । यत्राऽपि वृद्धेभ्यो व्यवहरमाणेभ्यो व्युत्पद्यते बालस्तत्राऽपीयदेवाऽसौ जानात्ययमर्थोऽमुतः शब्दादनेन प्रतिपन्न इति । न त्वन्याऽस्य शक्तिः काचिदस्तीति । इयत्यैव च व्युत्पत्त्या शब्दादर्थप्रत्ययोपपत्तेरस्याश्चापरिहार्यत्वादधिककल्पनाबीजाभावात् । न स्वाभाविकः शब्दस्याऽर्थेन सम्बन्ध इति ।

गौतमीय परमार्थमत्र यस्त्व सखे हरसि पश्यतोहरः ॥
श्रीजिनेश्वरमताधिकारिभिस्तन्न नाम कृतिभिस्तितिक्ष्यते ॥५६५॥

तथा हि–यदवादि स्वरूपसहकारिव्यतिरिक्तेत्यादि । तदवद्यम् । अतीन्द्रियशक्तेरर्थापत्तिविचारावसरे समर्थितत्वात् । यत्तूक्तं सङ्केतबलादेव तत्र तदुपपत्तेरिति । तदसत् । सङ्केतो हि पुरुषाधीनवृत्तिः । न च पुरुषेच्छया वस्तुनियमोऽवकल्प्यते । अन्यथा तदिच्छाया अव्याहतप्रसरत्वादर्थोऽपि किमिति वाचको न भवति शब्दश्च वाच्यः । सुकरमेव हीदं वक्तुमस्य शब्दस्याऽयमर्थो वाचकोऽस्य चाऽर्थस्याऽयं शब्दो वाच्य इति । न चैवमस्ति । किंचेच्छया वस्तुनियमेऽनिच्छतः पुरुषस्य न धूमादपि वह्नेः प्रतीतिः स्यात् । इच्छतस्तु जलस्याऽपि ततः सा स्यात् । तत्र यथा धूमाग्न्योर्नैसर्गिक एवाऽविनाभावो नाम सम्बन्धस्तत्प्रतिपत्तये चोपलम्भादिकं निमित्तमाश्रीयते । एवं सांसिद्धिक एव शब्दार्थयोः शक्त्यात्मा सम्बन्धस्तत्प्रतीतये सङ्केतसमाश्रयणम् । शक्त्यभावेऽपि शब्दस्यैव वाचकत्वे योग्यत्वान्न वाच्यवाचकभावानैयत्यमिति चेत् । तर्हि किमिति कलहायसे । भवताऽपि योग्यत्वशब्देन शक्तेरेव स्वीकारात् । अथ क्रमविशेषोपकृतो गत्वादियोग एव योग्यता शक्तिः । गत्वौत्वादिसामान्यसम्बन्धो हि यस्य भवति स वाचकत्वे योग्य इतरस्तु वाच्यत्वे । यथा द्रव्यत्वाविशेषेऽप्यग्नित्वादिसामान्यवत एव

दाहजनकत्वं न जलत्वादिसामान्यवत् इति चेत् । तदचतुरस्रम् । अतीन्द्रियशक्तिं विनाऽग्नित्वादेः कार्यकारणभावनियामकत्वानुपपत्तेः । अग्नित्वं हि दाहवह्निजातीयकारणजन्यकार्येष्वपि तुल्यरूपम् । न हि दाहं प्रत्येवाऽग्नेरग्नित्वम् । यथा पुत्रापेक्षं पितुः पितृत्वम् । भृत्यापेक्षं वा स्वामिनः स्वामित्वम् । अपि तु सर्वमेव प्रति । ततश्चाऽग्नित्वाच्च पिपासापनोदमपि विदध्यात् । नन्वसाधारणं स्वरूपं व्यवस्थानिमित्तं तथाभूतं चेदमग्नित्वमग्नेरनग्निभ्यो व्यावृत्तिनिमित्तत्वादिति दृष्टेनैवाग्नित्वेन कार्यकारणभावस्योपपत्तेनादृष्टशक्तिकल्पनोपपत्तिमतीति चेत् । तदयुक्तम् । अनग्निव्यावर्तकतया तुल्यस्वरूपत्वाभावेऽप्यग्नित्वस्य प्रति नियतकार्योत्पादकव्यवस्थापकत्वानुपपत्तेः । अनग्निव्यावर्तकत्वविशिष्टस्याऽप्यग्नित्वस्य सर्वकार्याणि प्रति साधारणत्वात् । न हि कार्यान्तरेष्वग्नित्वस्याग्नेरनग्निभ्यो व्यावर्तकत्वं नास्ति । येनास्य तज्जनकत्वं न स्यात् । जलादिकारणापेक्षया ह्यग्नित्वस्याऽसाधारणस्वरूपता न जलादिकार्यापेक्षयेति । एवं जलस्यापि शैत्यादिजनकत्वे प्रतिनियमो न घटते । तन्नियमनिमित्तस्य जलत्वस्य दाहादावपि साधारणत्वात् । अतो जलमपि दहेदनलोऽपि शैत्यं जनयेदविशेषात् । अथ दाहस्याऽग्निजन्यत्वे दाहत्वजातेर्व्यवस्थानिमित्तत्वाच्छैत्यादीनामदाहरूपतयाऽग्निजन्यत्वस्याप्राप्तिः । शैत्यादीनां च जलजन्यत्वे शीतत्वादिजातेर्व्यवस्थाहेतुत्वाद्वहिरहितत्वेन दाहस्य कथमिव जलादिजन्यत्वप्रसङ्ग इति चेत् । तदसमीचीनम् । यस्माद्दाहत्वजातेः शैत्याद्यपेक्षया तुल्यताभावेऽपि जलादि कारणान्तरापेक्षया तुल्यत्वान्न प्रतिनियतकार्यकारणभावव्यवस्थाहेतुत्वम्। ननु शक्तेरपि कथं तद्व्यवस्थाहेतुत्वम् । सा हि स्वरूपेणैव तद्धेतुः स्याच्छक्त्यन्तरेण वा । स्वरूपेण चेत् । तदाऽर्थोऽपि तथैवाऽस्तु किं शक्त्या शक्त्यन्तरेण तस्यास्तद्धेतुत्वाभ्युपगमेऽनवस्थोपनिपातः । तस्मात् पदार्थस्य स्वरूपेणैव तद्धेतुत्वे यदेव विषं पूर्वं मारणसमर्थमासीत्तदेव केनचिन्मन्त्रविशेषेण संस्कृतं कथमुज्जीवनहेतुः स्यात् । तदानीमपि

पदार्थस्वरूपस्य तादृक्षस्यैव प्रत्यक्षेण वीक्षणात् । शक्तिस्वीकारपक्षेऽपि कथमेतद्घटिष्यत इति चेत् । मन्त्रसंस्कारक्षणे मारणशक्तेर्विनाशाच्छक्त्यन्तरस्य च मन्त्रसहकृताद्विषादुत्पादादिति शक्तिरेव शक्त्यन्तरनिरपेक्षा तन्नियमहेतुर्न पदार्थः । तथा चाऽतीन्द्रियशक्तिमन्तरेण नाऽग्नित्वादीनां कार्यकारणभावव्यवस्थाहेतुत्वं तद्वदेव च गत्वौत्वादिसामान्यानामपि न वाच्यवाचकभावनियमहेतुत्वमिति योग्यताशब्देन शक्तिरेवोच्यत इत्यभ्युपगन्तव्यम् । यदप्यवादि तदङ्गीकारे च तत एवार्थसिद्धेः कृतं तथाविधसम्बन्धपरिकल्पनेनेति । तदप्यबन्धुरम् । अङ्कुरादिकार्यकारितया प्रतीतस्य बीजादेरपि परित्यागप्रसङ्गात् । एवमपि हि वक्तुं शक्यत एवं कल्पयित्वाऽपि बीजादिकारणं तत्सहकारी क्षित्यादिस्तावदवश्यं स्वीकृत एव तत्स्वीकारे च तत एवाऽङ्कुरादिसिद्धेः कृतं बीजादिकारणकल्पनेनेत्यादि । बीजादेरङ्कुरादिकार्योत्पत्तौ व्याप्रियमाणस्य प्रत्यक्षत एव प्रतीतेः कथं तदुपद्रवः श्रेयान्, किंतु केवलमेतन्न तज्जनकमिति क्षित्यादिरप्यस्य सहकारी कल्प्यत इति चेत्, तर्हि योग्यतारूपस्य सम्बन्धस्याऽपि शब्दे वाच्यप्रतीतिं कुर्वतो वाच्यवाचकभावप्रतिनियमान्यथानुपपत्तिरूपादनुमानतः प्रतीतेः कथं तदपलापोऽपि प्रशस्यः स्यात् । अनभिव्यक्तस्त्वसौ न तज्जनक इति सङ्केतस्तदभिव्यञ्जकत्वेन सहकारी कल्प्यते । यच्चोक्तं क्वचिद्देशविशेषे कश्चिच्छब्दो देशान्तरप्रसिद्धमर्थमुत्सृज्येत्यादि । तदप्यपेशलम् । सर्वशब्दानां सर्वार्थप्रत्यायनशक्तियुक्तत्वात् । क्वचिद्देशे केनचिदर्थेन व्यवहारः । अत एव चाऽनवगतसम्बन्धे शब्दे श्रुते सति संशयो जायते कमर्थं प्रत्याययितुमनेन शब्दः प्रयुक्तः स्यादिति । असत्यां हि शक्तावकृते समये निरालम्बना प्रत्यायकत्वाशङ्का । सर्वशक्तियोगे एकस्मादपि शब्दादशेषार्थप्रत्ययप्रसङ्ग इति चेत् । नैवम् । समयोपयोगस्य नियामकत्वात् । न च वाच्यं स एवाऽस्तु किं शक्तिभिरिति । कृतोत्तरत्वात् । योऽपि लौकिको व्यपदेशः सङ्केत-

पत्रस्येन साक्षित्वेनोक्तं । स एवमेव । न खलु वयमपि शक्तिपर्यन्त सङ्केतमाचस्महे । किंतु वाच्यवाचकयो स्वाभाविकीं शक्तिमन्तरेण सङ्केत एव कर्तुमशक्यो व्यत्ययेनाऽपि तत्प्रसङ्गादिति ब्याचर्महे ।

तत्र स्वाभाविकी शक्तिर्वाचकत्वोपयोगिनी ॥
सङ्केतमनुरुन्धाना शब्दे सम्बन्ध इष्यताम् ॥ ५६६ ॥

मीमांसकास्त्वाहु.—आस्ता स्वाभाविकी शक्ति शब्दस्य सम्बन्ध । स तु नित्य एव । अनित्यत्वे तस्य व्यवहारकालाननुयायित्वेनाऽर्थप्रतिपत्त्यनङ्गत्वात् । तदयुक्तम् । अनित्यत्वेऽप्यस्य शब्दस्येव सादृश्यवशादेवाऽर्थप्रतिपत्तिहेतुत्वोपपत्ते । यथा च शब्दस्य सादृश्यवशादर्थप्रतीतिहेतुता तथा शब्दानित्यत्ववादे प्रतिपादितम् । नित्यत्वानुपपत्तेश्च । तथा हि—असौ नित्य सम्बन्धभावतोऽर्थं प्रकाशयेत्सङ्केताभिव्यक्तो वा । यदि स्वभावत , तर्हि सर्वदा सर्वस्याऽर्थं तत्सम्बन्ध प्रकाशयेत् । अथ सङ्केताभिव्यक्त , कथमेवमस्य नित्यैकरूपत्वमुपपन्नम् । व्यक्ताव्यक्तरूपतया भेदप्रसक्ते । नित्यैकरूप हि वस्तु यदि व्यक्त तदा सर्वदा व्यक्तमेव, अथाऽव्यक्तमव्यक्तमेव तर्हि सर्वदा, तस्यैकस्वभावत्वादिति ।

शब्दार्थयोर्नित्यशक्ति रूप सम्बन्ध इति मीमांसकमतस्योपपाद्य खण्डनम् ।

अत्र भूयोऽपि प्रत्यवतिष्ठन्ते ताथागता —

कथ शब्दाद्ग्राह्ये मनिरूप्यते नामरहिता
न यस्माद्ग्राह्योऽर्थ कथमपि भवत्यस्य विषय ॥
विशेषस्तावन्नो समयकरणासङ्गतिवशात्
न सामान्य तस्याऽसुरसरणिपुष्पप्रतिमितम् ५६७

तात्त्विक कोऽपि वा च्योऽर्थो नास्तीति वादिनो बौद्धस्य मत विस्तरश उपपाद्य तत्खण्डनम् ।

तथा हि शब्दस्य यदि पदार्थो गोचर स्वलक्षणो भाव सामान्यस्वभावो वा । तत्र प्रथमकल्पना न साधीयसी । स्वलक्षणे सङ्केता सम्भवत शब्दाना प्रवृत्तेरघटनात् । सङ्केतव्यवहारकालानुगामिस्वभावे सङ्केत क्रियते । न च स्वलक्षणस्य तादृश स्वभाव सम्भवति ।

देशकालाकारसङ्कुचितत्वेनाननुगामिस्वभावत्वात् । प्रयोगः—यः सङ्केतव्यवहारकालाननुगामी न तत्र व्यवहारिभिः शब्दः सङ्केत्यते यथोत्पन्नमात्रविनाशिनि क्वचिद्भावे । सङ्केतव्यवहारकालाननुगामि च बाहुलेयादिस्वलक्षणमिति । अपि च यो यत्राऽकृतसङ्केतो न स तमर्थं प्रतिपादयति यथा गोशब्दस्तुरङ्गमम् । अकृतसङ्केतश्च स्वलक्षणे समस्तशब्द इति । स्वलक्षणगोचरताङ्गीकारे च शाब्दज्ञानस्येन्द्रियोत्थज्ञानस्येव स्पष्टप्रतिभासत्वापत्तिः । न चैतदस्ति । प्रतीतिपराहतत्वात् । यथोक्तम्—"अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः । शब्दात्प्रत्येति भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥ १ ॥ अन्यथैवाग्निसम्बन्धाद्दाहं दग्धोऽभिमन्यते । अन्यथा शब्दतस्तेन दाहार्थः सम्प्रतीयते ॥२॥" इति । न चैकस्य वस्तुनो रूपद्वयं सम्भवति । येनाऽस्पष्टं वस्तुगतमेव रूपं शाब्दज्ञाने प्रतिभासेत । एकस्य द्विस्वभावताविरोधात् । तथा यत्कृते ज्ञाने यन्न प्रतिभासते न तत्तस्य गोचरो यथा गन्धसमुत्थज्ञाने स्पर्शः । न प्रतिभासते च शाब्दज्ञाने स्वलक्षणमिति । यदि च तात्त्विकार्थगोचरत्वं शब्दानां भवेत्तदा समयभेदेनाऽर्थभेदप्रत्यायकत्वायोगः । तदुक्तम्—"परमार्थैकतानत्वे शब्दानामनिबन्धना । तस्मात्प्रवृत्तिरर्थेषु समयान्तरभेदिषु ॥१॥" इति । तन्न स्वलक्षणलक्षणः शब्दस्य गोचरो विचारवीथीमवगाहते । नापि सामान्यस्वभावः । तात्त्विकस्य सामान्यस्यैवायोगात् । तदयोगश्च व्योमकुसुमवदनर्थक्रियाकारित्वात्सुप्रतीतः । न खलु नित्यैकस्वरूपस्य सामान्यस्य क्रमाक्रमाभ्यामर्थक्रियाकारित्वमुपपद्यते । तदेवं न बाह्यवस्तुनः प्रकाशकाः शब्दाः । किन्त्वन्यापोहस्य, निषेधः स च द्विविधः । पर्युदासः प्रसज्यश्च । पर्युदासोऽपि द्विविधोऽर्थात्मा बुद्ध्यात्मा च । तत्राऽर्थात्माऽर्थस्वभावो विजातीयव्यावृत्तसर्वस्वलक्षणम् । अपोह्यतेऽन्योऽस्मिन्नित्यपोह इति व्युत्पत्तेः । बुद्ध्यात्मा तु स्वभावतः परस्परविलक्षणानर्थानेकार्थकारितया समानहेतुत्वेन च समानानाश्रित्य यदेकप्रत्यवमर्श-

रूपमथप्रतिबिम्बस्वभावतामनुत्पद्यते । तथा हि, वस्तुमारभ्यायो विकल्पेन बाह्यत्वेनाविकल्पाकार स्वाकारविपरीताकारोन्मुखबुद्धिप्रतिबिम्बनामाऽपोह । अपोह्यते स्वाकाराद्विपरीत आकारोऽनेनेत्यपोह इति व्युत्पत्ते । यद्वा विकल्पान्तरस्याकाराद्भेदेन स्वयं प्रतिभासमानत्वादपोह्यतेऽन्यस्मादित्यपोह इति व्युत्पत्ते । अत्र हि व्युत्पत्तिद्वयेऽपि मुख्यत एवाऽपोहशब्दाभिधेयो बुद्धिप्रतिबिम्बात्मा । एव निरुक्तिपर्युदासात्मा द्विप्रकारोऽपोह । प्रसज्यरूपस्तु गौरयमगौर्न भवतीति व्यवच्छेदमात्रम् । एतेषु च त्रिष्वपोहेषु मध्ये बुद्धिप्रतिबिम्बात्मन एवाऽपोहस्य मुख्यवृत्त्या शब्दार्थत्वम् । य एव हि शब्दाद्बहि प्रत्यये प्रतीयते स एव शब्दार्थतया स्वीकर्तुमुचित । न चात्र प्रसज्यप्रतिषेधाध्यवसायोऽस्ति । नाऽपीन्द्रियोत्थप्रत्ययवत्स्वलक्षणावभास । अपि तर्हि बाह्यार्थप्रतिबिम्बावभास । अतस्तस्यैवाऽर्थप्रतिबिम्बकस्य शाब्दे बोधे साक्षात्तदात्मतया प्रतिभासनाच्छब्दार्थो युक्तो नत्वपर । यश्च शब्दस्यार्थेन सार्धं वाच्यवाचकभावनामा सम्बन्ध प्रतीतो लोके नाय कार्यकारणभावादपर । तथा हि, बुद्धिसम्बन्धिन प्रतिबिम्बस्य शब्दजन्यत्वाद्वाच्यत्व तज्जनकत्वाच्च शब्दस्य वाचकत्वमिति । गौणवृत्त्या तु पर्युदासप्रथमप्रकारस्य स्वलक्षणात्मनो ऽपोहस्य प्रसज्यापोहस्य तृतीयभेदस्य च निषेधमात्रस्य शब्दार्थत्वमप्यप्रथम् । तथा हि—अस्ति शब्दस्य परम्परया स्वलक्षणेन सह कार्यकारणभावलक्षण सम्बन्ध । प्रथम हि यथावस्थितवस्त्वनुभव । ततो विवक्षा । ततस्ताल्वादिपरिस्पन्दनम् । तत शब्द इत्येव पारम्पर्येण यदा शब्दस्य बाह्येन वह्न्यादिस्वलक्षणेन सह सम्बन्धस्तदा विजातीयव्यावृत्तस्वलक्षणस्यापि सामर्थ्यात्प्रतिपत्तिर्भवतीति स्वलक्षणस्याप्युपचरित शब्दार्थत्व न विहन्यते । तथा गोशब्दात् सकाशाद्यदश्वादिबुद्धिप्रतिबिम्बकमुत्पद्यते तदनुरक्तमादिशब्दमनुत्पद्यबुद्धिप्रतिबिम्बस्वरूपाद्व्यावृत्तस्वभावमनुभूयत इति प्रसज्यलक्षणापोहस्याप्यभिधानसामर्थ्यात् प्रतीयमानत्वादपि-

चारिकी शब्दार्थता न विरुध्यते । परमार्थवृत्त्या तु न किंचिद्वाच्यं वाचकं वा समस्ति । मुख्यवृत्त्या शब्दार्थत्वेन कथिते बुद्धिप्रतिबिम्बात्मन्यपोहे कार्यकारणभावस्यैव वाच्यवाचकतया व्यवस्थापितत्वात् । ज्ञानश्रीः पुनरपोहप्रकरण इदमुदीरयामास—“ शब्दैस्तावन्मुख्यमाख्यायतेऽर्थस्तत्रापोहस्तद्गुणत्वेन गम्यः । अर्थश्चैकोऽध्यासतो भासतोऽन्यः स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित् ॥१॥” इति मुख्यमिति आख्यायते इति क्रियाया विशेषणमेतत् । मुख्यया वृत्त्येत्यर्थः । अर्थ इति वक्ष्यमाणस्वरूप । तत्राऽपोहस्तद्गुणत्वेन गम्य इति । न घटोऽस्तीत्यादिषु समुपहितेषु वाक्येष्वपोहस्यैव प्राधान्यतः प्रतीतेर्बिम्बाद्यभावः । घटोऽस्तीत्यादिषु तु विधिवाक्येषु विधौ मुख्यतया शब्दे. प्रतिपाद्यमाने तद्विशेषणतयोपसर्जनत्वेन गम्यतेऽपोहः । आख्यायतेऽर्थ इति सामान्येनोक्तं तद्विशेषतो व्यञ्जयन्नाह । अर्थश्चैकोऽध्यासतो भासतोऽन्यः स्थाप्यो वाच्य इति । द्विविधो ह्यर्थो बाह्य आभ्यन्तरश्च । अन्यस्याभावात् । तत्रैकस्तावद्बाह्यः स्वलक्षणलक्षणोऽध्यासतो गृहीतोऽपि प्रवर्तनयोग्यतानिमित्तकाद्ध्यवसायादेव वाच्यो व्यवस्थाप्यते न परिस्फूर्त्या । प्रत्यक्षचेतसीव देशकालादिनियतत्वेन परिस्फुटरूपतया शब्देषु तस्याऽस्फुरणात् । तथा भासत. प्रतिभासमपेक्ष्येत्यर्थः । अन्यो बाह्यादुक्तस्वरूपाद्भिन्न आन्तरो बुद्ध्याकार इत्यर्थ. शब्दजन्याया बुद्धावाकारमात्रस्य प्रतिभासनात्स एव विषय उच्यते चक्षुष इव रूपम् । न पुनरध्यवसायात् । न हि बुद्ध्याकारेऽप्यध्यवसायः शक्योऽभिधातुम् । प्रवृत्तिविषये तस्य व्यवस्थापनात् । प्रवृत्तिश्चार्थक्रियार्थिनो बाह्य एव । एवं स्थितमेतत् । अध्यवसायेन बाह्यस्य प्रतिभासेन तु बुद्ध्याकारस्य शब्दवाच्यत्वमिति । स्थाप्य इत्यस्य चेदमैदम्पर्यम् । जात्याद्युपाधिराशेर्बाह्यस्य च समस्तस्य वाच्यतानिरसनरूपं प्रयोजनान्तरमुद्दिश्य व्यवस्थामात्रमेतत्क्रियतेऽध्यवसायमात्रेण च वाच्यत्वमिति । तथा हि जात्याद्युपाधिराशेः शब्दस्य विषयतया

तत्त्वतो गृह्णत प्रतिवादिन प्रतीतिवन्न्यापोह स्वलक्षणमेव बाह्यमध्य वसायतो विषय इत्युच्यते, जात्याद्युपाधिराशिनिरसनपरम्। एवमन्यापोहो ज्ञानस्य आन्तर आकारो भासतो विषय इति च प्रतिपाद्यते समस्तबाह्यनिरसनपरम्। न पुनरेतयोर्विषयतयोस्तत्त्वतो विश्रान्ति। कुत पुनरेतत्तत्र विषयताप्रतिपादनेऽपि न तत्त्ववृत्त्या तस्यास्तत्र विश्रान्ति, किन्त्वन्यनिरसने तात्पर्यमित्याह तत्त्वतो नैव कश्चिदिति। परमार्थत शब्दस्य बाह्य आन्तरो वाऽर्थो न वाच्य इत्यर्थ। अध्यवसायसहायो हि प्रतिभास साध्यवहारिकापेक्षया तत्त्वतो ज्ञेयस्य ज्ञान विषयतामुपनयति प्रत्यक्षवत्। न हि प्रतिभासमात्रमवसायप्रतिहत व्यापार वा प्रवृत्तिकामस्य प्रमातृविषयव्यवस्थामर्थे क्षमते गच्छत्तृण स्पर्शवत्। मरीचिकास्तदुदकारोपवच्च। मरीचिकाविषयो हि प्रतिभास उदकगोचरावसायाक्रान्तव्यापारत्वान्न तत्त्वतस्तद्विषय। नाऽप्यवसाय मात्रमपेतप्रतिभास तस्य ता तस्मिन्नसते। उदकारोपादेवारोपितोदकविषये ह्यवसाय प्रतिभाससहायसम्पत्सम्पर्कशून्यत्वात्परमार्थतो निर्विषय एव। अत्र च स्वलक्षणलक्षणो बाह्योऽर्थ शब्दादध्यवसीयत एव न प्रतिभासते। आन्तरस्तु बुद्धिप्रतिबिम्बापरनामा बुद्ध्याकाररूपोऽर्थ प्रतिभासत एव नाध्यवसीयते। ततोऽध्यवसायप्रतिभासरूपोभयस्य व्यापकस्य निवृत्त्या विषयत्वस्य व्याप्यस्य तत्र निवृत्तिरिति तत्त्वतो नैव कश्चिदित्यस्य तात्पर्यं पर्यवसित भवति। समग्रस्य चास्य वृत्तस्येदमैदंपर्यम्। कथमपोह शब्दगम्यो भाववाचकेषु वाक्येष्विति प्रश्ने तद्गुणत्वेन यथोक्तार्थनेत्युत्तरम्। यदा तु शब्दे किं वाच्यमित्यनुयोग। तदा किं प्रतिभासादथाऽध्यवसायाद्वा तत्त्वत इति त्रिधा विकल्प्य विकल्पस्य आन्तरोऽन्यापोहाकारो, बाह्यमन्यापोहस्वलक्षण, न किंचिदिति, त्रीणि प्रतिवचनानि क्रमेण प्रतिपाद्यानीति।

इत्थ नाऽथस्तात्त्विक कोऽपि बाह्य
शब्दग्रामे दर्शयन्त्यात्मरूपम्।

अन्यापोहं संविहायाऽस्य तस्मात्
नान्यद्वाच्यं किंचिदास्थेयमत्र ॥ ५६८ ॥

इति निगदितमेतद्बुद्धशिष्यैः समस्तं
निजमनमथ जैनास्तन्निराकर्तुमत्र ।
स्वसमयगतयुक्तीः प्रौढमानानुविद्धाः
सहृदयहृदयानां वल्लभाः कीर्तयन्ति ॥ ५६९ ॥

तथा हि—यत्तावदभिहितं शब्दस्य हि बहिःपदार्थो गोचरः स्वलक्षणं इत्यादि तत्र स्वलक्षणमेव शब्दस्य गोचर इति नः पक्षः। यत्पुनरयं सङ्केतव्यवहारकालाननुगामीत्याद्यनुमानम्। तत्र हेतोरसिद्धिः। सामान्यविशेषवतोऽर्थस्य सङ्केतव्यवहारकालानुगामित्वेन प्रतीयमानत्वात्। भवत्कल्पितस्य च स्वलक्षणस्य विषयविचारावसरे प्रपञ्चतः पराकरिष्यमाणत्वात्। एतेन यो यत्राकृतसङ्केतो न तमर्थं प्रतिपादयतीत्यादावपि प्रयोगे हेतोरसिद्धिः प्रतिपादिता द्रष्टव्या। सामान्यविशेषात्मनि स्वलक्षणे सङ्केतस्य करणात्। न चाऽत्राऽप्यानन्त्याद्व्यक्तीनां परस्पराननुगमाच्च सङ्केतकरणानुपपत्तिः। समानपरिणामापेक्षया क्षयोपशमविशेषाविर्भूततर्काख्यप्रमाणे व्यक्तीनां प्रतिभाससमानतया सङ्केतविषयत्वसम्भवात्। कथमन्यथानुमानमपि प्रवर्तेत। तत्राऽप्यानन्त्याननुगमरूपतया साध्यसाधनव्यक्तीनां सम्बन्धग्रहणासम्भवात्। अन्यव्यावृत्त्या तत्र सम्बन्धग्रहणमिति त्वविशदम्। तस्या एव सदृशपरिणामान्यासम्भवेऽनुपपद्यमानत्वात्। न चासदृशेष्वप्यर्थेषु सामान्यविकल्पजनकेषु स्वदर्शनद्वारेण सदृशव्यवहारहेतुत्वमिति वाच्यम्। नीलादिविशेषाणामप्येवमभावप्रसक्तेः। यथा हि परमार्थतोऽसदृशा अपि तथाविधविकल्पोत्पादकदर्शनहेतवः सन्तः सदृशव्यवहारभाजो भावास्तथा स्वयमनीलादिस्वभावा अपि नीलादिविकल्पोत्पादकदर्शननिमित्ततया नीलादिषु व्यवहारभाक्त्वं प्रतिपत्स्यते। ततः सदृशपरिणामाभावेऽर्थानां सजातीयेतरव्यवस्थाया असम्भवात्कुतः कस्य व्यावृत्तिः।

एवं चाऽकृतसङ्केतस्याऽदित्येतस्य सुव्यक्तताऽसिद्धिः । ननु च शब्देनाऽर्थस्याऽभिधेयत्वे साक्षात्त्वे ततोऽस्य प्रतिपत्तिमिच्छतामिन्द्रियमहतेर्वैयर्थ्यापत्तिरिति चेत् । मैवं वादीः । शब्दादर्थस्याऽस्पष्टाकारतया प्रतिपत्ति स्पष्टाकारतया तु तत्प्रतिपत्त्यर्थमिन्द्रियमहतिरप्युपपद्यत एवेति तस्याः कथं वैयर्थ्यापत्तिः । स्पष्टास्पष्टाकारतया प्रतिभासभेदश्च सामग्रीभेदान्न विरुध्यते । दूरासन्नाद्यनिरुद्धेन्द्रियप्रतिभासवत् । यथैव हि दूरासन्नदेशादिसामग्रीविशेषमाहात्म्यान्महीध्रमहीधरादेरभिन्नस्यापि विभिन्नप्रतिभासगोचरत्वं तथा शाब्दप्रत्यक्षप्रत्यययोरभिन्नगोचरत्वेऽपि शब्देन्द्रियादिसामग्रीभेदात्स्पष्टेतरप्रतिभासभेदो न विरोधमुद्रामधिरोहतीति । अथाऽसत्यप्यर्थेऽतीतानागतादौ शब्दस्य प्रवृत्तेर्नाऽर्थाभिधायकत्वम् । तन्न साधीयः । अतीतानागतादेरिदानीमभावेऽपि स्वकाले भावात् । इतरथा प्रत्यक्षस्याऽप्यर्थविषयत्वं न स्यात् । तद्विषयस्यापि तत्काले भवद्दृष्ट्या क्षणभङ्गुरत्वेनाऽभावात् । अभिमतास्तु प्रमाणान्तरप्रवृत्तिलक्षणं प्रत्यक्षवत्तत्राऽप्यनुभूयत एव । आसीद्वह्निरित्याद्यतीतविषये शाब्दे विशिष्टभस्मादिकार्यदर्शनोद्भूतेनानुमानेन भवादोपलब्धेः । कमलबन्धुबिम्बाद्युपरागाद्यनागतार्थविषये तु प्रत्यक्षप्रमाणेनैव सन्दर्शनात् । क्वचिद्विसंवादादत्र शाब्दस्याऽप्रमाणतायां पुनः प्रत्यक्षस्याऽपि क्वचिद्विसंवादात्तत्राऽप्रमाणताप्रसक्तिः । एवं च स्वलक्षणगोचरताङ्गीकारे चेत्यादि प्रत्यादिष्टम् । किं वाऽन्यदेवेन्द्रियग्राह्यम् ॥

१ एतत्सूत्रं यावत्परिच्छेदसमाप्ति स्याद्वादरत्नाकरग्रन्थो नोपलभ्यते कुत्रापि पुस्तकेषु । अतो द्वादशसूत्रमारभ्य रत्नाकरावतारिकासहितं सूत्रमत्र प्रदर्श्यते सुस्मारे । एकादशसूत्रस्याऽन्तिमभागं यावदर्थः स द्वादशसूत्रस्यावतरणत्वेन [illegible] ।

स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्द इत्युक्तम् । अथ किमस्य शब्दस्य स्वाभाविकं रूपं, किं च परापेक्षमिति विवेचयन्ति—

**अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवद्यथार्थायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः ॥ १२ ॥**

अर्थप्रकाशकत्वम्, अर्थावबोधनसामर्थ्यम् । अस्य शब्दस्य । स्वाभाविकं परानपेक्षम् । प्रदीपवत् । यथा हि प्रदीपः प्रकाशमानः शुभमशुभं वा यथा सन्निहितं भावमवभासयति, तथा शब्दोऽपि वक्त्रा प्रयुज्यमानः श्रुतिवर्तिनीमवतीर्णः सत्येऽनृते वा, समन्वितेऽसमन्विते वा, सफले निष्फले वा, सिद्धेऽसिद्धे वा वस्तुनि प्रतिपत्तिमुत्पादयतीति तावदेवास्य स्वाभाविकं रूपम् । अयं पुनः प्रदीपाच्छब्दस्य विशेषः, यदसौ सङ्केतव्युत्पत्तिमपेक्षमाणः पदार्थप्रतीतिमुपजनयति, प्रदीपस्तु तन्निरपेक्षः । यथार्थत्वायथार्थत्वे सत्यार्थत्वासत्यार्थत्वे पुनः प्रतिपादकनराधिकरणशुद्धत्वाशुद्धत्वे अनुसरतः । पुरुषगुणदोषापेक्षे इत्यर्थः । तथा हि—सम्यग्दर्शिनि शुचौ पुरुषे वक्तरि यथार्था शाब्दी प्रतीतिरन्यथा तु मिथ्यैवेति । स्वाभाविके तु याथार्थ्ये मिथ्यार्थत्वे चाऽस्याः स्वीक्रियमाणे विप्रतारकेतरपुरुषप्रयुक्तवाक्येषु व्यभिचाराव्यभिचारनियमो न भवेत् । पुरुषस्य च करुणादयो गुणा द्वेषादयो दोषाः प्रतीता एव । तत्र यदि पुरुषगुणानां प्रामाण्यहेतुत्वं नाभिमन्यते जैमिनीयैः, तर्हि दोषाणामप्यप्रामाण्यनिमित्तता मा भूत् । दोषप्रशमनचरितार्था एव पुरुषगुणाः, प्रामाण्यहेतवस्तु न भवन्तीत्यत्र च कोशपानमेव शरणं श्रोत्रियाणामिति ॥ १२ ॥

इह यथैवान्तर्बहिर्वा भावराशिः स्वरूपमाबिभर्ति, तथैव तं शब्देन प्रकाशयता प्रयोक्तृणा प्रावीण्यमुपजायते । तं च तथाभूतं सप्तभङ्गीमनुगत एव शब्दः प्रतिपादयितुं पटीयानित्याहुः—

**सर्वत्राऽयं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥**

सदसन्नित्यानित्यादिसकलैकान्तपक्षविलक्षणानेकान्तात्मके वस्तुनि विधिनिषेधविकल्पाभ्यां प्रवर्तमानः शब्दः सप्तभङ्गीमङ्गीकुर्वाण एव प्रवर्तत इति भावः ॥ १३ ॥

अथ सप्तभङ्गीमेव स्वरूपतो निरूपयन्ति—

**एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोः समस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितः सप्तधा वाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥**

एकत्र जीवादौ वस्तुन्येकैकसत्त्वादिधर्मविषयप्रश्नवशादविरोधेन प्रत्यक्षादिबाधापरिहारेण पृथग्भूतयोः समुदितयोश्च विधिनिषेधयोः पर्यालोचनया कृत्वा स्याच्छब्दलाञ्छितो वक्ष्यमाणैः सप्तभिः प्रकारैर्वचनविन्यासः सप्तभङ्गी विज्ञेया ।

भज्यन्ते भिद्यन्तेऽर्था येन ते भङ्गा वचनप्रकारास्तेषां सप्तभङ्गी समाहृता सप्तभङ्गानि कथ्यन्ते । नानावस्त्वाश्रयविधिनिषेधकल्पनया सप्तभङ्गीप्रसङ्गनिवर्तनार्थमेकत्र वस्तुनीत्युपन्यस्तम् । एकत्राऽपि जीवादिवस्तुनि विधीयमाननिषिध्यमानानन्तधर्मपर्यालोचनयाऽनन्तभङ्गीप्रसक्तिव्यावर्तनार्थमेकैकधर्मपर्यनुयोगवशादित्युपात्तम् । अनन्तेष्वपि हि धर्मेषु प्रतिधर्मं पर्यनुयोगस्य सप्तधैव प्रवर्तमानत्वात् । इत्थं प्रतिवचनस्यापि सप्तविधत्वमेवोपपन्नमित्येकैकस्मिन् धर्मे एकैव सप्तभङ्गी साधीयसी । एवं चाऽनन्तधर्मापेक्षया सप्तभङ्गीनामानन्त्यं यदायाति तदभिमतमेव । एतच्चाऽग्रे सूत्रेण एव निर्णेष्यते । प्रत्यक्षादिविरुद्धसदाद्येकान्तविधिप्रतिषेधकल्पनयाऽपि प्रवृत्तस्य वचनप्रयोगस्य सप्तभङ्गीत्वानुषङ्गभङ्गार्थमविरोधेनेत्यभिहितम् ।

अवोचाम च—

> या प्रश्नाद्विधिपर्युदासभिदया बाधच्युता सप्तधा
> धर्मं धर्ममपेक्ष्य वाक्यरचनाऽनेकात्मके वस्तुनि ।
> निर्दोषा निरदेशि देव ! भवता सा सप्तभङ्गी यया
> जल्पन् जल्परणाङ्गणे विजयते वादी विपक्षं क्षणात् ॥ १ ॥

इदं च सप्तभङ्गीलक्षणं प्रमाणनयसप्तभङ्ग्योः साधारणमवधारणीयम् । विशेषलक्षणं पुनरनयोरग्रे वक्ष्यते ॥ १४ ॥

अथास्याः प्रथमभङ्गोल्लेखं तावद्दर्शयन्ति—

**तद्यथा-स्यादस्त्येव सर्वमिति विधिविकल्पनया प्रथमो भङ्गः ॥१५॥**

स्यादित्ययमनेकान्तद्योतकः स्यात्कथंचित्स्वद्रव्यक्षेत्रकालभावरूपेणाऽस्त्येव सर्वं कुम्भादि न पुनः परद्रव्यक्षेत्रकालभावरूपेण । तथा हि–कुम्भो द्रव्यतः पार्थिवत्वेनाऽस्ति, न जलादिरूपत्वेन, क्षेत्रतः पाटलिपुत्रकत्वेन न कान्यकुब्जादित्वेन । कालतः शैशिरत्वेन, न वासन्तिकादित्वेन भावतः श्यामत्वेन, न रक्तादिना । अन्यथेतररूपापत्त्या स्वरूपहानिप्रसङ्ग इति । अवधारणं चाऽत्र भङ्गेऽनभिमतार्थव्यावृत्त्यर्थमुपात्तम् । इतरथाऽनभिहिततुल्यतैवाऽस्य वाक्यस्य प्रसज्येत प्रतिनियतस्वार्थानभिधानात् ।

तदुक्तम्—

> वाक्येऽवधारणं तावदनिष्टार्थनिवृत्तये ।
> कर्तव्यमन्यथाऽनुक्तसमत्वात्तस्य कुत्रचित् ॥ १ ॥

तथाऽप्यस्त्येव कुम्भ इत्येतावन्मात्रोपादाने कुम्भस्य स्तम्भाद्यस्तित्वेनापि सर्वप्रकारैरस्तित्वप्राप्तेः प्रतिनियतस्वरूपानुपपत्तिः स्यात् तत्प्रतिपत्तये स्यादिति प्रयुज्यते स्यात्कथंचित्स्वद्रव्यादिभिरेवायमस्ति, न परद्रव्यादिभिरपीत्यर्थः । यत्रापि चाऽसौ न प्रयुज्यते तत्रापि व्यवच्छेदफलैवकारवद् बुद्धिमद्भिः प्रतीयत एव ।

यदुक्तम्—

" सोऽप्रयुक्तोऽपि वा तज्ज्ञैः सर्वत्रार्थात् प्रतीयते ।
यथैवकारो योगादिव्यवच्छेदप्रयोजनः " ॥ १ ॥ १५ ॥

अथ द्वितीयभङ्गोल्लेखं ख्यापयन्ति—

**स्यान्नास्त्येव सर्वमिति निषेधकल्पनया द्वितीयः ॥ १६ ॥**

स्वद्रव्यादिभिरिव परद्रव्यादिभिरपि वस्तुनोऽसत्त्वानिष्टौ हि प्रतिनियतस्वरूपाभावाद्वस्तुप्रतिनियमविरोधः । न चास्तित्वैकान्तवादिभिरत्र नास्तित्वमसिद्धमित्यभिधानीयम् । कथञ्चित्तस्य वस्तुनि युक्तिसिद्धत्वात् साधनवत् । न हि क्वचिदनित्यत्वादौ साध्ये सत्त्वादिसाधनस्याऽस्तित्वं विपक्षे नास्तित्वमन्तरेणोपपन्नम्, तस्य साधनाभासत्वप्रसङ्गात् । अथ यदेव नियतं साध्यसद्भावेऽस्तित्वं तदेव साध्याभावे साधनस्य नास्तित्वमभिधीयते, तत्कथं प्रतिषेध्यम् ? स्वरूपस्य प्रतिषेधत्वानुपपत्तेः, साधनसद्भावे नास्तित्वं तु यत्तत्प्रतिषेध्यम्, तेनाऽविनाभावित्वे साध्यसद्भावास्तित्वस्य व्याघातात्तेनैव रूपेणाऽस्ति नास्ति चेति प्रतीत्यभावादिति चेत् । तदसत् । एवं हेतोस्त्रिरूपत्वविरोधात् । विपक्षासत्त्वस्य नास्तित्वस्याभावात् । यदि चाऽयं भावाभावयोरैक्यमाचक्षीत, तदा सर्वथा न क्वचित्प्रवर्तेत । नापि कुतश्चिन्निवर्तेत । प्रवृत्तिनिवृत्तिविषयस्य भावस्याऽभावपरिहारेणासम्भवात् । अभावस्य च भावपरिहारेणेति वस्तुनोऽस्तित्वनास्तित्वयोः रूपान्तरत्वमेष्टव्यम् । तथा चास्तित्वं नास्तित्वेन प्रतिषेध्येनाविनाभावि सिद्धम् । यथा च प्रतिषेध्यमस्तित्वस्य नास्तित्वं प्रधानभावतः क्रमार्पितोभयत्वादिधर्मपञ्चकमपि वक्ष्यमाणलक्षणीयम् ॥ १६ ॥

अथ तृतीयं भङ्गमुल्लेखतो व्यक्तीकुर्वन्ति—

**स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः ॥ १७ ॥**

सर्वमिति पूर्वसूत्रादिहोत्तरत्र चाऽनुवर्तनीयम् । ततोऽयमर्थः । क्रमार्पितस्वपरद्रव्यादिचतुष्टयापेक्षया क्रमार्पिताभ्यामस्तित्वनास्तित्वाभ्यां विशेषितं सर्वं कुम्भादि वस्तु स्यादस्त्येव स्यान्नास्त्येवेत्युल्लेखेन वक्तव्यमिति ॥ १७ ॥

इदानीं चतुर्थभङ्गोल्लेखमाविर्भावयन्ति—

**स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ॥ १८ ॥**

द्वाभ्यामस्तित्वनास्तित्वाख्यधर्माभ्यां युगपत्प्रधानतयाऽर्पिताभ्यामेकस्य वस्तुनोऽभिधित्सायां तादृशस्य शब्दस्याऽसम्भवादवक्तव्यं जीवादिवस्त्विति । तथा हि— यदसत्त्वगुणद्वयं युगपदेकत्र सदित्यभिधानेन तद्वक्तुमशक्यम् । तस्याऽसत्त्वप्रतिपादनासमर्थत्वात् । तथैवाऽसदित्यभिधानेन न तद्वक्तुं शक्यम् । तस्य सत्त्वप्रत्यायने

सामर्थ्याभावात् । साङ्केतिकमेकं पदं तदभिधातुं समर्थमित्यपि न सत्यम् । तस्यापि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्तेः । शतृशानचौ सदिति शतृशानचोः सङ्केतितसच्छब्दवत् । द्वन्द्ववृत्तिरपि तयोः सहृदभिधायकमिति प्रत्यनीकमस्तम् । सदसत्त्वे इत्यादि पदस्य क्रमेण धर्मद्वयप्रत्यायने समर्थत्वात् । कर्मधारयादिवृत्तिरप्यमपि न तयोरभिधायकः तत एव वाक्यं तयोरभिधायकमनेनैवाऽपास्तमिति सकलवाच कराहितत्वादवक्तव्यं वस्तु युगपत्सदसत्त्वाभ्यां प्रधानभावार्पिताभ्यामाक्रान्तं व्यवतिष्ठते । अयं च भङ्गः कैश्चित्तृतीयभङ्गस्थाने पठ्यते तृतीयश्चास्य स्थाने । न चैवमपि कश्चिद्दोषः, अर्थविशेषस्याभावात् ॥ १८ ॥

अथ पञ्चमभङ्गोल्लेखमुदाहरन्ति—

**स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चमः ॥ १९ ॥**

स्वद्रव्यादिचतुष्टयापेक्षयाऽस्तित्वे सति युगपदस्तित्वनास्तित्वाभ्यां सह वक्तुमशक्यं सर्वं वस्तु । ततः स्यादस्त्येव स्यादवक्तव्यमेवेत्येवं पञ्चमभङ्गेनोपदर्श्यत इति ॥ १९ ॥

अथ षष्ठभङ्गस्वरूपं प्रकटयन्ति—

**स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः ॥ २० ॥**

परद्रव्यादिचतुष्टयापेक्षया नास्तित्वे सति युगपदस्तित्वनास्तित्वाभ्यां यौगपद्येन प्रतिपादयितुमशक्यं समस्तं वस्तु । ततः स्यान्नास्त्येव स्यादवक्तव्यमेवेत्येवं षष्ठभङ्गेन प्रकाश्यते ॥ २० ॥

साम्प्रतं सप्तममाविष्कुर्वन्ति—

**स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तम इति ॥ २१ ॥**

इतिशब्दः सप्तभङ्गीसमाप्त्यर्थः । स्वपरद्रव्यादिचतुष्टयापेक्षयाऽस्तित्वनास्तित्वयोः सतोरस्तित्वनास्तित्वाभ्यां समसमयमभिधातुमशक्यमखिलं वस्तु ततः एवमनेन भङ्गेनोपदर्श्यते ॥ २१ ॥

अथास्यामेव सप्तभङ्ग्यामेकान्तविकल्पाभिप्रायविकल्पितं सूत्रमाहुः—

**विधिप्रधान एव ध्वनिरिति न साधु ॥ २२ ॥**

प्रायः येन विधिमेव शब्दोऽभिधत्त इति न युक्तम् ॥ २२ ॥

अत्र हेतुमाहुः—

**निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥ २३ ॥**

तस्मादिति शब्दात् ॥ २३ ॥

आशङ्कान्तरं निरस्यन्ति—

**अप्राधान्येनैव ध्वनिस्तमभिधत्त इत्यप्यसारम् ॥ २४ ॥**

तमिति निषेधम् ॥ २४ ॥

अत्र हेतुमाचक्षते—

**क्वचित्कदाचित्कथञ्चित्प्राधान्येनाऽप्रतिपन्नस्य तस्याऽप्राधान्यानुपपत्तेः ॥ २५ ॥**

न खलु मुख्यतः स्वरूपेणाऽप्रतिपन्नं वस्तु क्वचिदप्रधानभावमनुभवतीति ॥२५॥

इत्थं प्रथमभङ्गैकान्तं निरस्येदानीं द्वितीयभङ्गैकान्तनिरासमतिदिशन्ति—

**निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्यायादपास्तम् ॥ २६ ॥**

व्यक्तम् ॥ २६ ॥

अथ तृतीयभङ्गैकान्तं पराकुर्वन्ति—

**क्रमादुभयप्रधान एवाऽयमित्यपि न साधीयः ॥ २७ ॥**

अयमिति शब्दः ॥ २७ ॥

एतदुपपादयन्ति —

**अस्य विधिनिषेधान्यतरप्रधानत्वानुभवस्याऽप्यबाध्यमानत्वात् ।२८।**

प्रथमद्वितीयभङ्गगतैकैकप्रधानत्वप्रतीतेरप्यबाधितत्वान्न तृतीयभङ्गैकान्ताभ्युपगमः श्रेयान् ॥ २८ ॥

अथ चतुर्थभङ्गैकान्तपराभवाय प्राहुः—

**युगपद्विधिनिषेधात्मनोऽर्थस्याऽवाचक एवाऽसाविति च न चतुरस्रम् ॥ २९ ॥**

स्यादवक्तव्यमेवेति चतुर्थभङ्गैकान्तो न श्रेयानित्यर्थः ॥ २९ ॥

कुत इत्याहुः—

**तस्याऽवक्तव्यशब्देनाऽप्यवाच्यत्वप्रसङ्गात् ॥ ३० ॥**

अथ पञ्चमभङ्गैकान्तमपास्यन्ति—

**विध्यात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपदवाचक एव स इत्येकान्तोऽपि न कान्तः ॥ ३१ ॥**

अत्र निमित्तमाहुः—

**निषेधात्मनः सह द्व्यात्मनश्चाऽर्थस्य वाचकत्वावाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥ ३२ ॥**

निषेधात्मनोऽर्थस्य वाचकत्वेन सह, विधिनिषेधात्मनोऽर्थस्याऽवाचकत्वेन च शब्दः षष्ठभङ्गे प्रतीयते यतः, ततः पञ्चमभङ्गैकान्तोऽपि न श्रेयान् ॥ ३२ ॥

षष्ठभङ्गैकान्तमपाकुर्वन्ति—

**निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचकः एवाऽय मित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥**

अत्र हेतुमुपदर्शयन्ति—

**इतरथाऽपि संवेदनात् ॥ ३४ ॥**

आद्यभङ्गादिषु विध्यादिप्रधानतयाऽपि शब्दस्य प्रतीयमानत्वादित्यर्थः ॥ ३४ ॥

अथ सप्तमभङ्गैकान्तमपाकुर्वन्ति—

**क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चाऽवाचकश्च ध्वनि नाऽन्यथेत्यपि मिथ्या ॥ ३५ ॥**

अत्र बीजमाचक्षते—

**विधिमात्रादिप्रधानतयाऽपि तस्य प्रसिद्धेः ॥ ३६ ॥**

नन्वेकस्मिन् जीवादौ वस्तुन्यनन्तानां विधीयमाननिषिध्यमानानां धर्माणा मङ्गीकरणादनन्ता एव वचनमार्गाः स्याद्वादिनां भवेयुः, वाच्येयत्ताऽऽयत्तत्वा द्वाचकेयत्तायाः ततो विरुद्धैव सप्तभङ्गीति ब्रुवाणं निरस्यन्ति—

**एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनाऽनन्तभ ङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥ ३७ ॥**

अत्र हेतुमाहुः —

**विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्तुन्यनन्तानामपि सप्तभङ्गी नामेव संभवात् ॥ ३८ ॥**

एकैकपर्यायमाश्रित्य वस्तुनि विधिनिषेधविकल्पाभ्यां व्यस्तसमस्ताभ्यां सप्तैव भङ्गाः संभवन्ति, न पुनरनन्ताः । ततः पर्यायानन्त्यप्रयुक्तादानन्त्यात् सप्तभङ्ग्या अनन्ता अभ्युपगम्यन्ते ॥ ३८ ॥

कुतः सप्तैव भङ्गाः संभवन्तीत्याहुः —

**प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव संभवात् ॥ ३९ ॥**

एतदपि कुत इत्याहुः —

**तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥ ४० ॥**

अथ सप्तविधतज्जिज्ञासानियमे निमित्तमाहुः —

**तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥**

तस्या अपीति प्रतिपाद्यजिज्ञासायाः । तत्सन्देहसमुत्पादादिति प्रतिपाद्यगतस्य समुत्पत्तेः ॥ ४१ ॥

सदेहस्याऽपि सप्तधात्वे कारणमाहु.—

**तस्याऽपि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्ते. ॥ ४२ ॥**

तस्य प्रतिपाद्यगतसन्देहस्य । स्वगोचरवस्तुधर्माणां सन्देहविषयीकृतानामस्तित्वादिवस्तुपर्यायाणाम् ॥ ४२ ॥

इय सप्तभङ्गी किं सकलादेशस्वरूपा विकलादेशस्वरूपा वेत्यारेका पराकुर्वन्ति—

**इयं सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥**

एकैको भङ्गोऽस्याः सबन्धी सकलादेशस्वभावः विकलादेशस्वभावश्चेत्यर्थः॥४३॥

अथ सकलादेश लक्षयन्ति—

**प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचः सकलादेशः ॥ ४४ ॥**

कालादिभिरष्टाभिः कृत्वा यदभेदवृत्तेर्धर्मधर्मिणोरपृथग्भावस्य प्राधान्य तस्मात्, कालादिभिर्भिन्नात्मनामपि धर्मधर्मिणामभेदाध्यारोपाद्वा समकालमभिधायक वाक्य सकलादेश प्रमाणवाक्यमित्यर्थः । अयमर्थः—यौगपद्येनाऽशेषधर्मात्मक वस्तु कालादिभिरभेदवृत्त्या, अभेदोपचारेण वा प्रतिपादयति सकलादेशः, तस्य प्रमाणाधीनत्वात् । विकलादेशस्तु क्रमेण भेदोपचारात्, भेदप्राधान्याद्वा तदभिधत्ते, तस्य नयायत्तत्वात् । कः पुनः क्रम ? किं वा यौगपद्यम् ? । यदाऽस्तित्वादिधर्माणां कालादिभिर्भेदविवक्षा, तदैकस्य शब्दस्याऽनेकार्थप्रत्यायने शक्त्यभावात्क्रमः, यदा तु तेषामेव धर्माणा कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते, तदैकेनाऽपि शब्देनैकधर्मप्रत्यायनमुखेन तदात्मकतामापन्नस्याऽनेकाशेषरूपस्य वस्तुनः प्रतिपादनसभवाद्यौगपद्यम् । के पुनः कालादय. ? । कालः, आत्मरूपं, अर्थः, सबन्धः, उपकारः, गुणिदेशः, ससर्गः, शब्दः, इत्यष्टौ । तत्र स्याज्जीवादि वस्त्वस्त्येवेत्यत्र यत्कालमस्तित्वं तत्कालाः शेषानन्तधर्मा वस्तुन्येकत्रेति तेषां कालेनाभेदवृत्तिः १। यदेव चास्तित्वस्य तद्गुणत्वमात्मरूपम्, तदेव चान्यानन्तगुणानामपीत्यात्मरूपेणाऽभेदवृत्तिः २ । य एव चाधारोऽर्थो द्रव्याख्योऽस्तित्वस्य, स एवाऽन्यपर्यायाणामित्यर्थेनाभेदवृत्तिः ३। य एव चाऽविष्वग्भाव. कथञ्चित्तादात्म्यलक्षण' संबन्धोऽस्तित्वस्य, स एवाऽशेषविशेषाणामिति सबन्धेनाभेदवृत्तिः ४। य एव चोपकारोऽस्तित्वेन स्वानुरक्तत्वकरणम्, स एव शेषैरपि गुणैरित्युपकारेणाभेदवृत्ति ५। य एव गुणिनः सबन्धी देश' क्षेत्रलक्षणोऽस्तित्वस्य, स एवाऽन्यगुणानामिति गुणिदेशेनाऽभेदवृत्ति' ६। य एव चैकवस्त्वात्मनाऽस्तित्वस्य ससर्ग., स एवाऽशेषधर्माणामिति संसर्गेणाऽभेदवृत्तिः। ननु प्रागुक्तसंबन्धादस्य क. प्रतिविशेषः?। उच्यते ।अभेद-

**न तदुत्पत्तितदाकारताभ्यां, तयोः पार्थक्येन सामस्त्येन च व्यभिचारोपलम्भात् ॥ ४७ ॥**

तथा हि—ज्ञानस्य तदुत्पत्तितदाकारताभ्यां प्रत्येकं समस्ताभ्यां वा प्रतिनियतार्थव्यवस्थापकत्वं स्यात्। यदि प्राच्यः पक्षः, तदा कपालक्षणः कलशान्त्यक्षणस्य व्यवस्थापकः स्यात्, तदुत्पत्तेः केवलायाः सद्भावात्। स्तम्भः स्तम्भान्तरस्य च व्यवस्थापकः स्यात्, तदाकारतायास्तदुत्पत्तिरहितायाः सम्भवात्। अथ द्वितीयः, तदा कलशस्योत्तरक्षणः पूर्वक्षणस्य व्यवस्थापको भवेत्, समुदितयोस्तदुत्पत्तितदाकारतयोर्विद्यमानत्वात्। अथ विद्यमानयोरप्यनयोर्ज्ञानमेवार्थस्य व्यवस्थापकम्, नाऽर्थः, तस्य जडत्वादिति मतम्। तदपि न न्यायानुगतम्, समानार्थसमनन्तरप्रत्ययोत्पन्नज्ञानैर्व्यभिचारात्। तानि हि यथोक्तार्थव्यवस्थापकत्वलक्षणस्य समग्रस्य सद्भावेऽपि प्राच्यं जनकज्ञानक्षणं न गृह्णन्ति। अपि च किमिदमर्थाकारत्वं वेदनानां? यद्वशात्प्रतिनियतार्थपरिच्छेदः स्यात्। किमर्थाकारोल्लेखित्वम्, अर्थाकारधारित्वं वा। प्रथमप्रकारे, अर्थाकारोल्लेखोऽर्थाकारपरिच्छेद एव, ततश्च ज्ञानं प्रतिनियतार्थपरिच्छेदात्प्रतिनियतमर्थमवद्योतयतीति साध्याविशिष्टत्वं स्पष्टमुपढौकते। द्वितीयप्रकारे पुनरर्थाकारधारित्वं ज्ञानस्य सर्वात्मना देशेन वा। प्रथमपक्षे, जडत्वादर्थस्य ज्ञानमपि जडं भवेत्, उत्तरार्थक्षणवत्। प्रमाणरूपत्वाभावश्चोत्तरार्थक्षणवदेवाऽस्य प्रसज्येत, सर्वात्मना प्रमेयरूपतानुकरणात्। अथ देशेन नीलत्वादिनाऽर्थाकारधारित्वमिष्यते ज्ञानस्य, तर्हि तेनाऽजडाकारेण जडताप्रतिपत्तेरसम्भवात्कथं तद्विशिष्टत्वमर्थस्य प्रतीयेत?। न हि रूपज्ञानेनाऽप्रतिपन्नरसेन तद्विशिष्टता सहकारफलादौ प्रतीयते। किञ्च देशेनार्थाकारधारित्वान्नीलार्थवन्निःशेषार्थानामपि ज्ञानेन ग्रहणापत्तिः, सत्त्वादिमात्रेण तस्य सर्वत्रार्थाकारधारित्वाविशेषात्। अथ तदविशेषेऽपि नीलाद्याकारवैलक्षण्यान्निखिलार्थानामग्रहणम्, तर्हि समानाकाराणां समस्तानां ग्रहणमाप्ति। अथ यत एव ज्ञानमुत्पद्यते, तस्यैवाऽऽकारानुकरणद्वारेण ग्राहकम्, हन्त! एवमपि समानार्थसमनन्तरप्रत्ययस्य तद्ग्राहकं स्यादित्युक्तम्। ततो न तदुत्पत्तितदाकारताभ्यां ज्ञानस्य प्रतिनियतार्थावभासः। किन्तु प्रतिबन्धकापगमविशेषादिति सिद्धम् ॥ ४७ ॥

**इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां रत्नाकरावतारिकाख्यलघुटीकायामागमस्वरूपनिर्णयो नाम चतुर्थः परिच्छेदः ॥ ४ ॥**

# शुद्धिपत्रकम् ।



| अशुद्ध | शुद्ध | पृ | प | अशुद्ध | शुद्ध | पृ | प |
|---|---|---|---|---|---|---|---|
| सुपाय | सुपपाद | ४९१ | ३ | स्वण्ड | खण्ड | ५८१ | १३ |
| कि ङृत | किङ्गत | ४९२ | ३ | द्रवि | द्रमि | ५८४ | २ |
| छिम | च्छिन्न | ४९४ | १४ | माद्र्व | शाद्व | ५९७ | २ |
| मेदांदस | भेदा इस | ४९८ | २० | ष्टतिका | ष्टतिका | ५९८ ३ | १८ |
| सट | सगा | ४९८ | २४ | ती | न्ती | ५९८ | ३ |
| सम्भव | गम्भव | ५०० | १२ | त | न्त | ५९८ | ११ |
| त्येव रूपा | त्येवरूपा | ५०० | २१ | विंश्ट काल | विंश्टकाल | ५९८ | १७ |
| प्यु | प्यु | ५११ | २ | चर | रच | ५९९ | १६ |
| वों | वों | ५१९ | १३ | जन्मरूप | जन्म रूप | ६०१ | ५ |
| श्रवण | श्रावण | ५१९ | २० | नैटे | नटे | ६०१ | ८ |
| हेतूत्वा | हेतुत्व | ५१९ | २५ | रसात् । | रसात् , | ६०५ | ९ |
| साति | सांति । | ५२१ | १० | पन्थ | पन् थ | ६०३ | ३ |
| नेका | नैका | ५२३ | १२ | न्य | व्य | ६१० | १४ |
| गिना | शिपा | ५२५ | १ | पन्य | प्रन्य | ६११ | ११ |
| सूशा सु | सुशानु | ५२७ | १८ | पनो | पत्तौ | ६१३ | ७ |
| छन्द | छन्द | ५२८ | २७ | रेप | रेपा | ६१६ | १२ |
| न गम | च गम | ५३३ | २४ | यत | यते | ६१७ | २ |
| णया | णया | ५३८ | १ | स्वस्य । | स्वस्य | ६२३ | १० |
| हेतु | हेन | ५४३ | १७ | न्या म | न्याम | ६३३ | ४ |
| निरध | निरेध- | ५४५ | ४ | णादि | णादि | ६३७ | २० |
| निर्देश | निर्देश | ५५० | ११ | योप्यऽ | योऽप्य | ६३७ | २२ |
| साम्य | साम्य | ५५१ | २४ | न्कि | न्कि | ६३८ | १ |
| उत्पादे | उत्पाद | ५५२ | २ | निर क | निराक | ६४४ | १२ |
| धनच | धंचन | ५५२ | ९ | मु त | मुत | ६४७ | २ |
| न्तिक | न्तैक | ५५३ | १७ | पत्र | पत्र | ६५१ | १६ |
| प्रय | प्रय | ५५८ | २ | ल्ला | ल्ला | ६५५ | १४ |
| चचशो | च शो | ५६५ | ९ | स्योऽ | स्यो | ६५६ | २३ |
| धम | धर्म | ५६८ | ६ | न्त्रयामि | न्नयोऽभि | ६५६ | २३ |
| धाम | धन | ५६८ | २४ | कलिदार | काले कार | ६५८ | ६ |
| स्मक | स्मके | ५७१ | ८ | मु त्प | मुत्प | ६५९ | ५ |
| दिति । | दिति | ५७२ | ११ | ध्वनि | ध्वनि | ६६० | १४ |
| न शो | नाशो | ५७१ | २३ | धम | धर्म | ६६६ | ५ |
| धति | धुति | ५७१ | २४ | पद | पदन | ६६७ | ५ |

| अशुद्धं | शुद्धं | पृ. | पं. |
|---|---|---|---|
| दत्तो | दत्त | ६६८ | १६ |
| शिष्टयु | सिष्ट यु | ६७४ | ११ |
| चक्रे | वक्त्रे | ६७४ | २३ |
| वर्म नो | वर्त्मनो | ६७५ | २ |
| गोब्द | गोशब्द | ६७६ | ६ |
| रार्थ | गर्थ | ६७६ | २६ |
| लभ्भ | लम्भ | ६७९ | ३ |
| मा ह्नाट् | माग्ता वृ | ६८५ | ३ |
| निय त्व | नित्यत्व | ६८६ | ५ |
| काधि | कांधि | ६८६ | ९ |
| पद्गृ | पद् गृ | ६८६ | १३ |

आर्हतमतप्रभाकरस्य

चतुर्थो मयूखः

श्रीमद्वादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः



पुण्यपत्तनस्थ
ओसवालज्ञातिश्रेष्ठिलाधाजीतनूजमोतीलाल इत्येनै टिप्पणी-
भिरुपोद्घातेन च परिष्कृत्य संशोधित ।

यह ग्रंथ श्री रतनाजी रुगनाथजी शिलदर,
(जि सिरोही–मारवाड) वाले तरफ से भेट

वीरसंवत् २४५४

प्रथमेयमङ्कनावृत्ति ।

मूल्यमप्यकद्वयम् ।

इदं पुस्तकं ' मोतीलाल लाधाजी ' इत्येतैः पुण्यपत्तने ( १९६ भवानी पेठ ) प्रकाशितम् । ( अस्य सर्वेऽधिकाराः प्रकाशकेन स्वायत्तीकृताः । )

तच्च,

पुण्यपत्तने सदाशिवश्रेण्यां ' लक्ष्मण भाऊराव कोकाटे ' इत्यनेन स्वकीये ' हनुमान प्रिंटिंग प्रेस ' मुद्रणालये मुद्रितम् ।



वागड (कच्छ) देशोद्धारक दादा श्री जीतविजयजी महाराजना प्रशिष्य
प्रात स्मरणीय शान्तमूर्ति परमपूज्य आचार्यदेव
श्री विजयकनकसूरीश्वरजी महाराज

# अथ पञ्चमः परिच्छेदः ।



य सामान्यविशेषमुख्यविशदानेकान्तकान्तान् जगौ
जीवादीन्भुवनत्रयोदरगतानर्थानशेषानपि ।
यश्चैकान्तकलङ्किता कणभुगाद्युक्तप्रमेयस्थिति
सन्न्यायेन निरास्थदेष कुरुतां श्रीसुव्रत सम्मतम् ॥५७०॥

इत्थमाविष्कृते प्रमाणस्य स्वरूपसंख्ये । सम्प्रति विषयमाविश्चिकी-
र्षुरिदमाह—

## तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्त्विति ॥ १ ॥

तस्य– पुरा प्ररूपितस्वरूपसंख्यस्य प्रमाणस्य । विषीयन्ते निब-
ध्यन्तेऽस्मिन्विषयिण इति विषयो गोचरः । परिच्छेद्यमिति यावत् ।
सामान्यं च विशेषश्च सामान्यविशेषौ वक्ष्यमाणलक्षणौ । तावादिर्यस्य
स सामान्यविशेषादिः । स चासावनेकान्तश्च सामान्यविशेषाद्यने-
कान्तः । स आत्मा स्वभावो यस्य तत्सामान्यविशेषाद्यनेकान्तात्मकं
वस्तु । बहिरन्तर्भावी भाव इत्यर्थः । अत्रादिशब्देन सत्त्वक्षिया-
नित्याभिलाप्यानभिलाप्याद्यनेकान्तानां परिग्रहः । एवं च केवलस्य
सामान्यस्य विशेषस्य तदुभयस्य वा स्वतन्त्रस्य सर्वथैकान्तस्य
च प्रमाणविषयत्वं प्रतिषिद्धं भवतीति ॥ १ ॥

अधुना सामान्यविशेषस्वरूपानेकान्तात्मकवस्तुसमर्थनार्थं साधा-
रणमनुद्दयमभिधान सत्सदाद्यनेकान्तात्मकवस्तुप्रसाधकहेतुश्च सूच-
यितुमाह—

**अनुगतविशिष्टाकारप्रतीतिविषयत्वात्, प्राचीनोत्तराकारपरित्यागोपादानावस्थानस्वरूप[1]परिणत्यार्थक्रियासामर्थ्यघटनाच्चेति ॥ २ ॥**

अनुगताकारा– अनुवृत्तस्वभावा गौर्गौरित्यादिप्रतीतिः । विशिष्टाकारा– व्यावृत्तस्वरूपा शबलः श्यामल इत्यादिप्रतीतिः । तयोर्विषयो गोचरस्तस्य भावस्तत्त्वं तस्मादिति प्रथमो हेतुः । अनेन तिर्यक्सामान्यस्य गुणाख्यविशेषलक्षणानेकान्तात्मकं वस्तु समर्थितम् । प्राचीनोत्तराकारयोः प्राक्तनाग्रेतनस्वभावयोर्यथासंख्येन परित्यागोपादाने परिहारावाप्ती ताभ्यामवस्थानं स्थितिस्तदेव स्वरूपं यस्याः । सा चाऽसौ परिणतिश्च परिणामस्तया कृत्वा यदर्थक्रियासामर्थ्यं वस्तुनः कार्यकारणशक्तिस्तस्य घटनादुपपत्तेरिति द्वितीयो हेतुः । एतेन पुनरूर्ध्वतासामान्यपर्यायाख्यविशेषस्वरूपानेकान्तात्मकं वस्तु प्रसाधितं भवति । चकारोऽत्रानुक्तसमुच्चयार्थः । ततः सदसदाद्यनेकान्तसमर्थकहेतवोऽपि सदसदाकारप्रतीतिविषयत्वादयः सूचिताः । ते च यथावसरं विस्तरेण प्रकाशयिष्यन्त इति ॥ २ ॥

इदानीमादावुद्दिष्टं सामान्यं प्रकारतः प्ररूपयन्नाह—

**सामान्यं द्विप्रकारं तिर्यक्सामान्यमूर्ध्वतासामान्यं चेति ॥ ३ ॥**

तिर्यगुल्लेखिनाऽनुवृत्ताकारप्रत्ययेन गृह्यमाणं तिर्यक्सामान्यम् । ऊर्ध्वमुल्लेखिनाऽनुगताकारप्रत्ययेन परिच्छिद्यमानमूर्ध्वतासामान्यं च । चः समुच्चये ॥ ३ ॥

तत्राद्यभेदस्य स्वरूपं सोदाहरणमुपदर्शयन्नाह—

---

1 सू. ५।३.

**प्रतिव्यक्ति तुल्या परिणतिस्तिर्यक्सामान्यं शबलशाबलेयादिपिण्डेषु गोत्वं यथेति ॥ ४ ॥**

प्रतिव्यक्ति— व्यक्तिं व्यक्तिमधिश्रित्य । तुल्या समाना परिणतिस्तिर्यक्सामान्यमुच्यते । शबलशाबलेयादिपिण्डेषु गोत्वं यथेति तु स्पष्टम् ।

शौद्धोदनीयमतवासितबुद्धयोऽस्य
व्याकुर्वते किमिदमीदृशमार्जवं च ॥
सामान्यमम्बरम्बरो रहितं समानं
यल्लक्ष्यतेऽत्र परिमुच्य विचारवीथीम् ॥ ५७१ ॥

तथा हि— शबलशाबलेयादिव्यक्तिव्यतिरिक्तस्य सामान्यस्य प्रतीतिपथानुयायित्वेन च व्याप्त्यनन्वयस्येराऽसत्त्वा- (व्यक्तिव्यतिरिक्तं सामान्यमिति मतस्योपपादनपूर्वकं खण्डनम् ।) दनुपपन्नमेवेदं तल्लक्षणप्ररूपणम् । ननु सामान्यं विनाऽनुगताकारायाः प्रतीतेः कुत उत्पाद इति चेत् । विजातीयव्यावृत्तेरिति ब्रूमः । न च विजातीयव्यावृत्तिजन्यायाः प्रतीतेः सकाशात्कथं बहिरर्थं प्रति प्रतिपत्तुः प्रवृत्तिरिति प्रेर्यम् । दृश्यविकल्प्ययोरेकत्वाध्यवसायात्तदुपपत्तेः । एकत्वाध्यवसायश्च तयोर्दर्शनानन्तरमुत्पद्यमानस्य विकल्पस्य दर्शनेन सह यद्वेगमरण तद्भाविको भेदाग्रहस्तस्माच्च विकल्पव्यापारतिरस्कारेण मया गृहीतमिदमित्येवरूपात्प्रतिपत्ता बहिरर्थे प्रवर्तते ।

सामान्यलक्ष्मादितिरियमेषा न क्षोदमुद्रामधिरोहतीह ।
अत तदस्याः परिशीलनेन मार्गेऽमला यन्तयो रमन्ते ॥ ५७२ ॥
शाक्यसिंहतनयं मनस्विव जातिलक्षणनिषेधनत्परम् ।
सर्वमेनत्नुभूतिवीडितं पण्डितम्नादिह क समाश्रयेत् ॥ ५७३ ॥

तथा हि— यथावदनस्ति शबलशाबलेयादिव्यक्तिव्यतिरिक्तस्येयादि तत्र निरवद्यम् । प्रतिव्यक्ति सदृशपरिणामलक्षणस्य कथंचिद्व्यक्ति-

रिक्तस्य तिर्यक्सामान्यस्य प्रत्यक्षादिप्रमाणमाहात्म्यतः प्रसिद्धस्वरूपत्वेन तल्लक्षणप्ररूपणस्योपपन्नत्वात्। न खलु समानधर्मसंबन्धित्वस्वभावः सदृशपरिणामः पदार्थेषु प्रत्यक्षेणानुभूयते। सकलविलक्षणस्वलक्षणस्य स्वप्नदशायामप्यननुभूतेः। अपि च प्रतिभासप्रभावादेव सर्वत्र वस्तुव्यवस्थितिः। प्रतिभासश्च गोपिण्डेषु खण्डमुण्डादिविलक्षणाकारेणेव गौर्गौरित्यनुवृत्ताकारेणाऽपि संवेद्यते। न चान्याकारेऽपि वस्तुन्यन्याकारेण प्रतिभासनमित्यभिधानीयम्। एवं हि शुक्ले श्यामप्रतिभासप्रसक्तितः प्रतिनियतपदार्थव्यवस्थितेरुच्छेदः स्यात्। ततोऽनुवृत्तप्रतिभासाद्वस्त्वप्यनुवृत्तधर्मान्वितमित्यकामेनापि शाक्येन स्वीकर्तव्यम्। विजातीयव्यावृत्त्यालम्बनत्वे चानुवृत्तप्रतिभासस्य गौर्गौरित्युल्लेखेन विधिप्रधानतया प्रवृत्तिर्न भवेत्। यथा च विजातीयपरावृत्तं वस्तुनः स्वरूपं तथा सजातीयपरावृत्तमपि। तथा च तद्दर्शनानन्तरभाविविकल्पनां विजातीयव्यावृत्त्याकारोल्लेखित्वे तदभेदात्सजातीयव्यावृत्त्याकारोल्लेखित्वमपि स्यात्। न च सजातीयविजातीयव्यावृत्त्योः स्वलक्षणस्येव भेदः संभवति। अवस्तुत्वान्निरंशत्वाच्च। नापि प्रतिनियतव्यावृत्तिलक्षणजात्यवभासे प्रतिनियमहेतुरस्ति। किंच तात्त्विकसामान्यानभ्युपगमे सजातीयत्वस्याप्यभावः स्यात्। तथा हि—सजातीयत्वमर्थानां किमेकार्थक्रियाकारित्वात्, एकप्रत्यवमर्शजनकत्वात्, एकव्यावृत्तेर्वा भवेत्। न तावदेकार्थक्रियाकारित्वात्। वाहदोहाद्यर्थक्रियायाः प्रतिविशेषं भिद्यमानत्वेनैकत्वानुपपत्तेः। तस्याश्च कादाचित्कत्वात्तामकुर्वाणस्य सजातीयत्वाभावः स्यात्। ततश्चक्षुषा संबद्धेऽपि व्यक्तिविशेषे गौर्गौरित्यनुवृत्ताकारा प्रतीतिर्न भवेत्। एकार्थक्रियाकारित्वं च यदि सर्वस्वलक्षणेष्वेकमनुस्यूतं स्वीक्रियते तदा सिद्धं तदेव सामान्यम्। अथ विकल्पारोपितं तदस्माकमपि सिद्धमेवेति चेत्। मैवम्। विकल्पस्यार्थागोचरत्वेनार्थेष्वर्थक्रियाकारित्वस्यैकत्वेनारोपणासामर्थ्यात्। तन्नैकार्थक्रियाकारित्वादर्थाना सजातीयत्वं युज्यते। नाप्येकप्रत्यवमर्श-

जनकत्वात् । प्रत्ययस्यास्य तज्जनकत्वस्य च प्रतिव्यक्ति भेदेनैकत्वासम्भवात् । न खलु य एव शाबलेये गोप्रत्ययस्तज्जनकत्वं च तदेव बाहुलेयेऽपि । तयोरेकव्यक्तिवद्भेदाभावप्रसक्तेः । नाप्येकव्यावृत्तेः । तस्या बहिरन्तर्विकल्पानतिक्रमात् । तत्र सकलव्यक्तिष्वेकव्यावृत्तेर्बहिः सद्भावे सामान्यरूपता दुर्निवारा । नान्तस्त्वे तु तस्या बहिरर्थाधारत्वाभावतः कथमतो बाह्यार्थस्य सजातीयत्वसिद्धिः । कथं वा बहीरूपतयावभासनमस्याः । नान्तर्नबहिर्वा सेत्यपि स्वाभिप्रायप्रकटनमात्रम् । तथा हि—तथाभूता व्यावृत्तिस्वरूपं किंचित्, न किंचिद्वा । न किंचिच्चेत्, कथं सजातीयत्वनिबन्धनम् । किंचिच्चेत् । नूनमन्तर्बहिर्वा तेन भाव्यम् । तत्र च प्रतिपादितदोषानतिक्रमः । किंच, इदं सजातीयत्वं समानाकारलक्षणम् । तच्च स्वयमसमानाकारस्य वस्तुनः स्यात्समानाकारस्य वा । यदि स्वयमसमानाकारस्य तदा कथमन्यव्यावृत्तावपि तस्य समानाकारता भवेत् । गोगवयोरपि महिष्यादिव्यावृत्तौ समानाकारत्वप्रसक्तेः । अपि च मूर्ताद्घटाद्यथा व्यावर्तते ज्ञानं तथा पटोऽपि । ततश्चाऽमूर्तत्वं द्वयोः समानो धर्मः स्यात् । परस्पराश्रयप्रसक्तिश्च । अन्यतो व्यावृत्त्या हि समानाकारत्वात्तस्माच्चान्यतो व्यावृत्तिरिति स्वयं समानाकारस्य तु वस्तुनोऽन्यतो व्यावृत्त्या समानाकारत्वकल्पनावैयर्थ्यम् । पराभ्युपगमप्रसङ्गश्च स्यात् । स्वयं समानाकारताया एव वस्तुनि सामान्यत्वेन स्याद्वादिभिः स्वीकारात् । ननु यया प्रत्यासत्त्या केचन गावः स्वयं सदृशपरिणामं बिभ्रति तयैव स्वयमतदात्मका अपि सन्तस्तथा किं नाऽवभासेरन्निति चेत् । तदप्यनुचितम् । चेतनेतरभेदाभावप्रसङ्गात् । ययैव हि प्रत्यासत्त्या चेतनेतरस्वभावा भावाः स्वीकुर्वन्ति तयैव स्वयमतदात्मका अपि सन्तस्तथाऽवभासेरन्नित्यपि ब्रुवाणस्य ब्रह्माद्वैतवादिनो न वक्त्रं वक्री भवेत् । चेतनेतरत्व

स्तीति । तथा तदुत्पत्तिर्हि सामान्यप्रतिभासस्य जनिका दूरदेश-

सामग्री । निकटदेशवर्तिना चाऽसौ नास्तीति न निकटे तत्प्रतिभासनमिति सम. समाधिः । अभ्युपगम्य चैतदुक्तम् । यावतोऽस्ति निकटे सामान्यस्य व्यक्ततरं प्रतिभासनं विशेषप्रतिभासनवत् । निकटे हि निम्बकदम्बादिव्यक्तिषु भासमानासु सुव्यक्तं वृक्षत्वं प्रतिभासते वृक्षोऽयं वृक्षोऽयमिति । न चाऽयमनुगतप्रतिभासो वहिः साधारणनिमित्तनिरपेक्षो घटते । प्रतिनियतदेशकालाकारत्वाभावप्रसगात् । न च व्यक्तय एव तन्निमित्तम् । तासा भेदरूपतयाऽधिष्ठितत्वात् । तथाऽपि तन्निमित्तत्वे कर्कादिव्यक्तीनामपि गौर्गौरिति बुद्धिनिमित्तत्वानुषङ्गः । न चातत्कार्येभ्योऽतत्कारणेभ्यश्च व्यावृत्तिरेकप्रत्यवमर्शरूपैकार्थसाधने हेतुरत्यन्तभेदेऽपीत्यभिधातव्यम् । सर्वथा समानपरिणामानाधारे वस्तुन्यतत्कार्यकारणव्यावृत्तेरेवासंभवात् । न खलु चक्षुरादयस्तज्जननशक्तिलक्षणसमानपरिणामविरहिणोऽपि रूपज्ञानलक्षणकार्यहेतवो न पुनः स्पर्शनादयो गुडूच्यादयो वा ज्वरोपशमनशक्तिलक्षणसमानपरिणामरहिता अपि ज्वरोपशमकार्यहेतवो न पुनर्दधित्रपुषादय इति शक्यव्यवस्थम् । किंच, अनुगतप्रत्ययस्य सामान्यमन्तरेणैव देशादिनियमेनोत्पत्तौ व्यावृत्तप्रत्ययस्यापि विशेषमन्तरेणैवोत्पत्तिः स्यात् । शक्यं हि वक्तुमभेदो विशेषेऽप्येकमेव ब्रह्मादिस्वरूपं प्रतिनियतानेकनीलाद्याभासनिवन्धनं भविष्यतीति किमपररूपादिस्वलक्षणपरिकल्पनया । ततो रूपादिप्रतिभासस्येवाऽनुगतप्रतिभासस्याप्यालम्बनं कल्पनीयमित्यस्ति वस्तुभूतं सामान्यम् । एककार्यतासादृश्येनैकत्वाध्यवसायो व्यक्तीनामित्यप्यचारु । कार्याणामभेदासिद्धेर्वाहदोहादिकार्यस्य प्रतिव्यक्ति भेदात् । तत्राऽप्यपरैककार्यतासादृश्येनैकत्वाध्यवसायेऽनवस्था । ज्ञानलक्षणमपि कार्यं-प्रतिव्यक्ति भिन्नमेवेति । ज्ञानलक्षणैककार्यतासादृश्येनापि व्यक्तीना नैकत्वाध्यवसायः संभावनीयः । अनुभवानामेकपरामर्शप्रत्ययहेतुत्वादेकत्वं तद्धेतुत्वाच्च व्यक्तीनामप्यभिन्नत्वमित्युपचारोऽपि श्राद्धिकावधार्य एव । अनुभवानामप्यत्यन्तवैलक्षण्येनैकप्रत्य-

थमर्शप्रत्ययहेतुत्वानुपपत्तेरितरथा ककादिव्यक्त्यनुभवेभ्योऽपि खण्डमुण्डादिव्यक्तिष्वेकपरामर्शप्रत्ययस्योत्पत्ति स्यात् । अथ प्रत्यासत्तिविशेषात्खण्डमुण्डादिव्यक्त्यनुभवेभ्य एवास्योत्पत्तिर्नापरव्यक्त्यनुभवेभ्य इति चेत् । ननु कोऽन्य प्रत्यासत्तिविशेषोऽन्यत्र समानाकारानुभवात् । समानो ह्याकार खण्डादिव्यक्त्यनुभवैरेवाऽनुभूतो नाऽपरव्यक्त्यनुभवैरिति । न चैकप्रत्यवमर्शहेतुत्वेनाऽभिमता निर्विकल्पकबुद्धय प्रसिद्धा स्याद्वादिनामिति । कथ तद्धेतुत्वाद्व्यक्तीनाम प्यभिन्नता । ततश्च वार्तमेतद्वार्तिके कीर्तित कीर्तिना—

" एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥ " इति ।

ततोऽनाघनोघाधिरूढत्वात्प्रसिद्ध सदृशपरिणामरूप वस्तुभूत सामान्यम् । तस्यानभ्युपगमे—

" नो चेद् भ्रान्तिनिमित्तेन संयोज्येत गुणान्तरम् ।
शुक्तौ वा रजताकारो रूपसाधर्म्यदर्शनात् ॥ "

इत्यस्य विरोधानुषङ्ग । रूपसाधर्म्यशब्देन सदृशपरिणामस्यैवाभिधानात् । अस्य च श्लोकस्याऽयमर्थ —यदि भ्रान्तिनिमित्तेन सदृशापरापरोत्पत्त्यादिना कारणभूतेन विकल्पबुद्धया नो संयोज्येत न समारोप्येत गुणान्तर— स्थिरत्वादि । वाशब्द इवार्थे । शुक्ताविव रजताकार संयोज्येत । कथं रजतरूपेण शुक्तिकारूपस्य यत्साधर्म्यं चाकचिक्यादि । तस्य दर्शनात् । एतदुक्त भवति । यदि भ्रान्तिनिमित्तेन गुणान्तर न समारोप्येत तदाऽनुमानादे प्रमाणान्तरस्य प्रत्यक्षदृष्टेऽर्थस्वभावे वैयर्थ्य स्यात् । समारोप्यते च तत् । तत समारोपव्यवच्छेद एव प्रमाणान्तरस्य फलमिति । ननु व्यक्तिवत्तत्समानपरिणामेष्वपि समानप्रत्ययस्यापरसमानपरिणामहेतुकत्वप्रसङ्गादनवस्था स्यात् । तमन्तरेणाऽप्यत्र समानप्रत्ययोत्पत्तौ पर्याप्त खण्डादिव्यक्तौ समानपरिणामकल्पनयेति चेत् । तद्विसदृशेष्वपि तुल्यम् । यतस्तेष्वपि विसदृश

प्रत्ययो यदि वैसादृश्यान्तरहेतुकस्तदाऽनवस्था । स्वभावतश्चेत्तर्हि सर्वत्र वैसादृश्यकल्पनावैफल्यम् । न च सदृशपरिणामानामर्थवत्त्वात्तन्यपि समानप्रत्ययहेतुत्वेऽर्थानामपि तत्प्रसंगः प्रतिनियतशक्तिकत्वाद्भावानाम् । अन्यथा घटादेः प्रदीपात्स्वरूपप्रकाशोपलम्भे प्रदीपेऽपि स्वरूपप्रकाशः प्रदीपान्तरादेव स्यात् । स्वकारणकलापादुत्पन्नाः सर्वेऽर्था विसदृशप्रत्ययविषयाः स्वभावत एवेत्यभ्युपगमे समानप्रत्ययविषया अपि ते तथा किं नाऽभ्युपगम्यन्ते । अलं प्रतीतिमपलप्य । प्रयोगश्चात्र, गौर्गौरित्यादिप्रत्ययो विशिष्टनिमित्तनिबन्धनो विशिष्टप्रत्ययत्वात् । य इत्थं स इत्थं यथा संप्रतिपन्नः । तथा चाऽयं तस्मात्तथेति । यच्च विशिष्टं निमित्तं स सदृशपरिणाम एव । वासनादेर्निमित्तान्तस्य प्रागेव प्रतिहतत्वादिति ।

तत्सामान्यं तिर्यगाख्यं प्रसिद्धं व्यक्तौ व्यक्तौ तुल्यधर्मस्वभावम् ।
यस्याभावात्प्रत्ययोऽत्रानुयायी न प्रादुःष्यात्सर्वसंवेदनीयः ॥५,७४॥४॥

अथ द्वितीयं सामान्यस्य भेदं सनिदर्शनं प्रकाशयन्नाह—

**पूर्वापरपरिणामसाधारणं द्रव्यमूर्ध्वतासामान्यं कटककङ्कणाद्यनुगामिकाञ्चनवदिति ॥ ५ ॥**

पूर्वापरपर्याययोः साधारणमेकं द्रव्यम् । द्रवति तांस्तान्पर्यायान्गच्छतीति व्युत्पत्त्या त्रिकालानुयायी यो वस्त्वंशस्तदूर्ध्वतासामान्यमित्यभिधीयते । कटककङ्कणाद्यनुगामिकाञ्चनवदिति तु निदर्शनं व्यक्तम् । एवं स्थासादिषु मृद्द्रव्यादिकं स्वयमभ्यूह्यम् ।

ऊर्ध्वतासामान्यस्य सोपपत्तिकं मण्डनम् ।

ननु पूर्वापरपरिणामव्यतिरेकेणापरस्य तद्व्यापिनो द्रव्यस्याप्रतीतितोऽसत्त्वात्कथं तल्लक्षणमूर्ध्वतासामान्यं सदिति बौद्धः । नाऽसौ बुद्धिमान् । प्रत्यक्षत एवाऽर्थानामन्वयरूपप्रतीतेः प्रतिक्षणभङ्गुरतया स्वप्नेऽपि तत्र तेषां प्रतीत्यभावात् ।

यथैव हि पूर्वोत्तरविवर्तयोर्व्यावृत्तप्रत्ययादन्योन्यमभावः प्रतीतस्तथा काञ्चनमृदाद्यनुगतप्रत्ययात्स्थितिरपि । ननु कालत्रयानुयायित्वमेकस्थितिस्तस्याश्चाक्रमेण प्रतीतौ युगपन्मरणावधि ग्रहणं स्यात् । क्रमेण तु प्रतीतौ न बुद्धिस्तथा तां प्रत्येतुं समर्था क्षणिकत्वादिति चेत् । तदप्यसमञ्जसम् । बुद्धेः क्षणिकत्वेऽपि प्रतिपत्तुरक्षणिकत्वात् । प्रत्यक्षादिसहायो ह्यात्मैव ध्रौव्यात्मकत्वं बहिरन्तश्च समस्तवस्तूनां निश्चिनोति । यथैव हि घटकपालयोः सुखदुःखयोर्वा विनाशोत्पादौ प्रत्यक्षसहायोऽसौ निश्चिनुते तथा मृदात्मरूपतया स्थितिमपि न खलु घटादिसुखादीनां भेदं प्रत्यक्षमामनते न त्वेकत्वमित्यभिधातुं युक्तम् । एकत्वविकलस्य भेदस्य स्वप्नेऽप्यसंवेदनात् । न चाऽक्षणिकस्यात्मनोऽर्थावसायकत्वे स्वगतबालतरुणवृद्धाद्यवस्थानामतीतानागतजन्मपरम्परायाः समस्तवस्तुविततेश्च युगपदेव व्यवसितिप्रसक्तिरिति वाच्यम् । ज्ञानसहायस्यैवात्मनोऽर्थव्यवसायकत्वाङ्गीकारात् । ज्ञानस्य च प्रतिबन्धकापगमानतिक्रमेण प्रादुर्भावान्नोक्तदोषानुषङ्गः । न च द्रव्यग्रहणेऽतीताद्यवस्थानां तस्मादभिन्नत्वाद्व्यवसायापत्तिरिति वाच्यम् । अभिन्नस्य ग्रहणं प्रत्यनङ्गत्वात् । अन्यथा ज्ञानादिगुणानुभवे सचेतनादिवल्लक्षणस्याप्रापणशक्त्यादिव्यवसायानुषङ्गः । तस्माद्यत्रैवात्मनोऽज्ञानपर्यायप्रतिबन्धकापायस्तत्रैवास्य व्यवसायकत्वनियमो नान्यत्रेत्यनवद्यम् । आत्मा प्रत्यक्षसहायोऽनन्तरातीतानागतपर्याययोरेकत्वं प्रतिपद्यत इति स्मरणप्रत्यभिज्ञानज्ञानसहायश्च व्यवहितपर्यायाणामेकत्वमवबुध्यते । स्मरणप्रत्यभिज्ञानयोश्च प्रामाण्यं प्रागेव प्रसाधितम् । ननु स्मरणप्रत्यभिज्ञानयोः पूर्वापरदृष्टार्थविषयत्वे प्रथमदर्शनकाल एवोत्तरविषयसम्भवात्तेन सहैव विषयत्वेनाऽनयोरप्यविकलकारणत्वात् । न चैवं तस्मान्न ते तद्विषये । प्रयोगश्चात्र, यस्मिन्नविकलेऽपि यन्न भवति न तत्तद्विषयं यथा रूपेऽविकले तत्राऽस्पर्शगोचरविज्ञानम् । प्रथमदर्शनकालेऽविकलेऽप्यपूर्वे न भवतश्च स्मृतिप्रत्यभिज्ञाने इति । एतदपि युक्तिरिक्तम् । प्रथमदर्शनकाले

स्मरणप्रत्यभिज्ञानजनककारणान्तरासंभवेनाऽर्थस्याऽविकलत्वासिद्धेः । स्मरणस्य हि संस्कारप्रबोधोऽपि कारणम् । संस्कारश्च तद्दर्शनकाले नास्तीति कथं तदुत्पत्तौ तदर्थस्याऽविकलता । प्रत्यभिज्ञानस्याऽप्युत्पत्तौ वर्तमानकालीनं दर्शनं पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मृतिश्चाऽर्थस्य सहकारिकारणम् । ते च तदा न स्त इति कथं तत्राऽप्यर्थस्याविकलता । अथ मतमात्मनः स्वयमतीताद्यर्थग्रहणसामर्थ्ये स्मरणाद्यपेक्षावैयर्थ्यम् । तदसामर्थ्ये वा नितरां तद्वैयर्थ्यम् । तदपि वार्तम् । यतः स्मरणादिरूपतया परिणतिरेवात्मनोऽतीताद्यर्थग्रहणसामर्थ्यं तत्कथं तदपेक्षावैयर्थ्यम् । ततो निराकृतमेतद्यदुच्यते परैः " पूर्वोत्तरक्षणयोरग्रहणे कथं तत्र स्थास्नुताप्रतीतिः " इति । आत्मना तयोर्ग्रहणसंभवात् । परेषां तु तयोरप्रतीतौ कथं मध्यक्षणस्य तत्राऽस्थास्नुताप्रतीतिरिति चिन्त्यम् । पूर्वक्षणदर्शनाहितसंस्कारस्य प्रतिपत्तुर्मध्यमक्षणदर्शनात्तत्क्षणस्मृतिः । तस्याश्च स इह नास्तीत्यस्थास्नुतावगमोऽप्येवं किं न स्यात् । ननु चाऽस्थास्नुता पूर्वोत्तरक्षणयोर्मध्यक्षणेऽभावः । तस्य वा तयोऽसौ । अभावश्च तदात्मकत्वात्तद्ग्रहणेनैव गृह्यते । तदप्यवद्यम् । तदप्रतीतौ तत्राऽस्य, अत्र वा तयोर्निषिद्धप्रतीतेरप्यसंभवात् । न ह्यप्रतिपन्नघटस्यात्र घटो नास्तीति प्रतीतिरस्ति । कथं चैवं स्थास्नुताऽपि न प्रतीयेत । साऽपि हि पूर्वोत्तरक्षणयोर्मध्यक्षणे कथंचित्सद्भावस्तस्य वा तत्राऽसौ । स च तदात्मकत्वात्तद्ग्रहणेनैव गृह्येत । ननु स्थास्नुताऽर्थानां नित्यतोच्यते । सा च त्रिकाल्यपेक्षा । तदप्रतिपत्तौ च कथं तदपेक्षनित्यताप्रतिपत्तिरिति चेत् । तदपि न प्रशस्तम् । वस्तुस्वभावभूतत्वेनाऽन्यानपेक्षत्वान्नित्यतायास्तथाभूतायाश्चास्याः प्रत्यक्षादिप्रमाणप्रसिद्धत्वेन प्रतिपादनात् । न खलु स्वयं नित्यतारहितस्य त्रिकाल्याऽसौ क्रियते । अनित्यतावत् । न हि वर्तमानकालेनाऽनित्यता क्रियते । तस्य त्वन्मतेऽनासत्त्वात् । सत्त्वे वाऽसावप्यनित्यः स्वीकर्तव्य इति । तदनित्यत्वस्याऽप्यपरेण कालेन करणेऽ-

नवस्थाप्रसग । ततो यथा स्वभावत पूर्वोत्तरकोटिभ्या विच्छिन्नत्वेन कालनिरपेक्ष क्षण प्रतीयते तथा ताभ्यामनवच्छिन्नत्वेनाक्षणिकत्वमपि । सर्वथा क्षणिकत्व त्वथानामुपरिष्टात्प्रत्यक्षेण प्रतिक्षेप्स्यत इत्यलमिहातिप्रसगेन ।

> पूर्वोत्तराखिलविवर्तसमूहवर्ति
> द्रव्यस्वभावमिति युक्तिबलात्प्रसिद्धम् ।
> सामान्यमन्वयधिय पदमूर्ध्वताख्य
> येन प्रमुक्तमिह किंचन नास्ति वस्तु ॥ ५७५ ॥ ५ ॥

अथ विशेषस्य प्रकारप्रकाशनायाह—

**विशेषोऽपि द्विरूपो गुणः पर्यायश्चेति ॥ ६ ॥**

सर्वेषा विशेषाणा वाचकोऽपि पर्यायशब्दो गुणशब्दस्य सहवर्तिविशेषवाचिन सनिधानेन क्रमवर्तिविशेषवाची गोबलीवर्दन्यायादत्र गृह्यते ॥ ६ ॥

तत्र गुण लक्षयति—

**गुण. सहभावी धर्मो यथात्मनि विज्ञानव्यक्तिशक्त्यादिरिति ॥ ७ ॥**

सहभावित्वमत्र लक्षणम् । यथेत्यादिकमुदाहरणम् । विज्ञानव्यक्तिर्यत्किंचिज्ज्ञान तदानीं विद्यमानम् । विज्ञानशक्तिरुत्तरज्ञानपरिणामयोग्यता । आदिशब्दात्सुखपरिस्पन्दयौवनादयो गृह्यन्ते ॥ ७ ॥

पर्यायमिदानीं निरूपयन्नाह—

**पर्यायस्तु क्रमभावी यथा तत्रैव सुखदुःखादिरिति ॥ ८ ॥**

---

१ पूर्णतया ।

धर्म इति पूर्वसूत्रादनुवर्तनीयम् । क्रमभावित्वमिह लक्षणम् । परिशिष्टं तु निदर्शनम् । तत्रेत्यात्मनि । आदिशब्देन हर्षविषादादीनामुपादानम् ।

सामान्यविशेषानेकान्तवादस्योपपादनम् ।

इदमत्र तात्पर्यम् । ये सहभाविनः सुखज्ञानवीर्यपरिस्पन्दयौवनादयस्त गुणाः । ये तु क्रमवृत्तयः सुखदुःखहर्षविषादादयस्ते पर्याया. । नन्वेव त एव गुणास्त एव च पर्याया इति कथं तेषां भेद इति चेत् । नैवम् । कालभेदविभेदापेक्षया तद्भेदस्याऽनुभूयमानत्वात् । अभिन्नकालवर्तिनो हि सुखज्ञानादयो गुणाः । विभिन्नकालवर्तिनस्तु पर्याया इति । न चैवमेषां सर्वथा भेद इत्यपि मन्तव्यम् । कथंचिदभेदस्याऽप्यविरोधात् । न खल्वेषा स्तम्भकुम्भवद्भेदो नापि स्वरूपवदभेदः । किंतु धर्म्यपेक्षयाऽभेदः । स्वरूपापेक्षया तु भेद इति । इत्थं प्रमाणविषये सामान्यविशेषात्मकेऽर्थे प्रत्यक्षप्रतिपन्नस्वरूपेऽपि ये विप्रतिपद्यन्ते तान्प्रतीदमनुमानमुच्यते । अर्थः सामान्यविशेषात्मा, अबाध्यमानानुवृत्तप्रत्ययगोचरत्वान्यथानुपपत्ते. । न चाऽत्र साधनमसिद्धम् । घटेषु घटो घट इत्यनुवृत्तप्रत्ययस्य ताम्रो मार्तिकः सौवर्णः । पटादिर्वा न भवतीति व्यावृत्तप्रत्ययस्य चाबाध्यमानस्य प्रतिप्राणि प्रतीतत्वात् । भ्रान्तोऽय प्रत्ययः सविकल्पकत्वादिति चेत् । अभ्रान्तस्तर्हि कीदृश इति वक्तुमर्हसि । निर्विकल्पक इति चेत् । नैवम् । तस्यापि निर्विकल्पकत्वेन भ्रान्तत्वापत्ते । अर्थसामर्थ्यजन्यत्वात्तस्य भ्रान्तत्वानापत्तिरिति चेत् । न । अस्योत्तरस्य सविकल्पकेऽपि तुल्यत्वात् । क्वचित्तस्य व्यभिचारोपलम्भादतुल्यत्वमिति चेत् । न तस्य निर्विकल्पेऽपि भावात् । व्यभिचारी निर्विकल्पकः प्रत्ययो न नः प्रमाणं तदाभासत्वादिति चेत् । सविकल्पके तु तुल्योऽयं परिहारः । निर्विकल्पकविकुट्टनेन सविकल्पस्यैव समर्थितं च प्रामाण्यम् । इत्यलमिहातिप्रपञ्चेन । तत्रासिद्धिः

प्रस्तुतसाधनस्य। विरुद्धानैकान्तिकत्वयोस्तु शङ्कैव नास्तीति निरवद्यमिदं साधनमर्थं धर्मिणि सामान्यविशेषात्मत्वं साध्यमुपढौकयत्येव।

तत्सामान्यविशेषात्म्यानेकान्ताक्रान्तमूर्तिकम्।
वस्तु प्रमेयभावात् प्रमाणस्योपपत्तितः ॥ ५७६ ॥

अत्र यौगाः प्रत्यवतिष्ठन्ते—

सामान्यविशेषयोरत्यन्तभेदवादिनां नैयायिकानां मतस्य उपादानपूर्वकं सविस्तरं खण्डनम्।

ननु नाद्यापि पूर्वोक्तं प्रमेयमुपपद्यते।
सामान्यभेदयोरस्मात्सामर्थ्येनैव संस्थितिः ॥ ५७७ ॥

तथाहि— सामान्यविशेषौ अत्यन्तभिन्नौ भिन्नप्रतिभासत्वात्। यावित्थं तावित्थम्। यथा घटपटौ। तथा चेमौ तस्मात्तथा। घटपटयोर्हि भिन्नप्रतिभासत्वमत्यन्तभेदे सत्येव दृष्टं तत्सामान्यविशेषयोर्दृश्यमानं कथं नात्यन्तभेदमुपढौकयेत्। अन्यथा अन्यत्राऽप्यस्य तदनुपढौकनप्रसङ्गः। इतोऽप्यनुमानात्तयोरत्यन्तभेदसिद्धिः। सामान्यविशेषावत्यन्तभिन्नौ विरुद्धधर्मान्वितत्वात्। यावेवं तावेवम्। यथा पयःपावकौ। तथा चैतौ तस्मात्तथा। न चानयोर्विरुद्धधर्मान्वितत्वमसिद्धम्। एकत्वनित्यत्वनिरवयवत्वनिष्क्रियत्वादिधर्मान्वितं हि सामान्यम्। एतद्विपरीतधर्मान्वितस्तु विशेषः। तद्यदि वस्तुनः सामान्यस्वभावता स्वीक्रियते कथं विशेषरूपता। सा चेत्कथं सामान्यस्वभावता विरोधात्। किंच सामान्यविशेषयोस्तादात्म्ये घटस्य भावः घटत्वमिति भेदनिष्ठा षष्ठी तद्धितोत्पत्तिश्च न प्राप्नोति। तस्मात्तयोरत्यन्तभेद एव युक्तो न पुनरनेकान्तः। संशयादिदोषमत्तकोपनिपातप्रसक्तेः।

तथा हि—केन स्वरूपेण तयोर्भेदः केन चाभेद इति संशयः ॥१॥ तथा यत्राऽभेदस्तत्र भेदस्य विरोधो यत्र च भेदस्तत्राऽभेदस्य शीतोष्णस्पर्शवदिति विरोधः ॥ २ ॥ तथा, अभेदस्यैकत्वस्वभावत्वादन्यदधिकरणम्। भेदस्यानेकत्वस्वभावत्वादन्यदिति वैयधिकरण्यम् ॥ ३ ॥

तथा, एकान्तेनैकात्मत्वे यो दोषोऽनेकस्वभावत्वाभावलक्षणोऽनेकात्मकत्वे चैकस्वभावत्वाभावलक्षणः सोऽप्यत्रानुषज्यत इत्युभयदोषः॥४॥ तथा येन स्वभावेनार्थस्यैकस्वभावता तेनानेकस्वभावत्वस्यापि प्रसंगः । येन चानेकस्वभावता तेनैकस्वभावत्वस्याप्यनुषङ्ग इति संकरः। 'सर्वेषां युगपत्प्राप्तिः संकरः' इत्यभिधानात् ॥ ५ ॥ तथा येन स्वभावेनानेकत्वं तेनैकत्वं प्राप्नोति येन चैकत्वं तेनानेकत्वमिति व्यतिकरः । 'परस्परविषयगमनं व्यतिकरः' इति वचनात् ॥६॥ तथा यमात्मानं पुरोधाय भेदो यं च समाश्रित्याभेदस्तावात्मानौ भिन्नौ चाभिन्नौ च । तत्रापि तथा परिकल्पनादनवस्था ॥ ७ ॥ तदुक्तम्— 'संशयविरोधवैयधिकरण्यसंकरमथोभयं दोषः । अनवस्थाव्यतिकरमपि जैनमते सप्त दोषाः स्युः ॥' इति । एवं तत्त्वस्याप्रतिपत्तिरेवानेकान्तवादिनाम् ।

अनेकदोषोपनिपातदुःस्थं तस्मादनेकान्तमतं विहाय ।
एकान्ततो भिन्नतयाऽभ्युपेयौ सामान्यभेदाविह नीतिमद्भिः ॥५७८॥

इत्थं यौगैः स्वीयमार्गानुराग-
ग्रस्तस्वान्तैर्जल्पितं युक्तिजालम् ।
सर्वं चैतन्मोहनिद्राप्रलाप-
प्रायं प्रेक्षैर्लक्षणीयं तथा हि ॥ ५७९ ॥

यत्तावत् 'सामान्यविशेषौ अत्यन्तभिन्नौ' इत्याद्यनुमानमुक्तम् । तत्र भिन्नप्रतिभासत्वादिति हेतोः कोऽर्थः । किं भिन्नप्रमाणग्राह्यत्वात्, भिन्नाकारावभासित्वाद्वा । आद्यपक्षे आत्मादिनाऽनेकान्तः । प्रत्यक्षादिभिन्नप्रमाणग्राह्येऽप्येकस्मिन्भेदासंभवात् । द्वितीयपक्षेऽपि कथंचिद्भिन्नाकारावभासित्वं साधनत्वेनाध्यवसितं सर्वथा वा । यदि कथंचित्तदा कथंचिदेव, अतः सामान्यविशेषयोर्भेदः सिद्धयेत् । तेनैवाऽस्याविनाभावसंभवात् । न पुनः सर्वथा तद्विपर्ययात् । तथा च हेतोर्विरुद्धत्वं साध्यविपर्ययसाधनात् । सर्वथा भिन्नाकारावभासित्वं त्वसिद्धम् ।

सामान्यविशेषयोः कथञ्चिद्भिन्नाकारयोः सतोस्तथैव प्रतिभासात् । अत एव च पक्षस्य प्रत्यक्षबाधा । दूरपादपादिना व्यभिचारस्य हेतोः । न हि दूरासन्नदेशवर्तिप्रतिपत्तॄणामस्पष्टेतरतया प्रतिभासभेदेऽपि पादपादेरत्यन्तभेदः समस्ति । ननु चात्र प्रतिभासभेदाद्विषयभेदोऽस्त्येव । तथा हि—प्रथमं दूरदेशवर्तिनो विज्ञानं पादपत्वसामान्यविषयम् । उत्तरकालं तु तद्देशोपसर्पणे शिंशपादिविशेषविषयमिति चेत् । तदप्यविचारितमनोहरम् । एवं हि विषयभेदाभ्युपगमे यमहमद्राक्षं दूरस्थितं पादपमेतर्हि तमेव पश्यामीत्येकत्वाध्यवसायो न स्यात् । तथा यद्यथा निर्बाधाध्यक्षेऽवभासते तत्तथैवाऽभ्युपगन्तव्यम् । यथा नीलं नीलरूपतया निर्बाधाध्यक्षेऽवभासमानेऽवभासेते च कथञ्चित्तादात्म्येन सामान्यविशेषावित्यनुमानबाधितः पक्षः । न च तथा तदवभासिनोऽध्यक्षस्य निर्बाधत्वमसिद्धम् । तद्बाधकस्य कस्यचिदप्यसम्भवात् । न खलु प्रत्यक्षं तद्बाधकम् । अत्यन्ततद्भेदस्यात्राप्रतिभासमानत्वात् । अनुमानमप्येतदेवान्यद्वा तद्बाधकं स्यात् । न तावदेतदेव । अस्याध्यक्षबाधितविषयतयोत्थानस्यैवाऽसम्भवात् । भ्रान्तत्वात्प्रस्तुतानुमानविषयस्य प्रत्यक्षेण बाधेति चेत् । कुतः प्रत्यक्षस्य भ्रान्तत्वम् । प्रस्तुतानुमानेन बाधनाच्चेत्तर्हि चक्रकापत्तिः । तथा हि—अबाधितविषयतया प्रस्तुतानुमानस्योत्थाने प्रत्यक्षस्यानेन बाधा । तस्यां च सत्यां तस्य भ्रान्तत्वम् । तस्मिन्सति अबाधितविषयतया प्रस्तुतानुमानस्योत्थानमिति । कथं चैवमनुष्णोऽग्निः सत्त्वाज्जलवत्, इत्यस्याप्यबाधितविषयतया प्रवृत्तिर्न स्यात् । साध्यसाधनयोः साहचर्यस्य सपक्षे प्रत्यक्षतः प्रतीतेरत्राप्यविशेषात् । पक्षस्य प्रत्यक्षबाधनादस्याऽगमकत्वमितरत्राप्यविशिष्टम् । तन्नैतेनैवाऽनुमानेन सामान्यविशेषयोः कथञ्चित्तादात्म्यग्राहिप्रत्यक्षस्य बाधनम् । अनुमानान्तरेण तद्बाधनेऽस्य वैयर्थ्यम् । साध्यस्यापि तत एव प्रसिद्धेः । दृष्टान्तोऽपि साध्यविकलो घटपटयोरपि दृष्टान्तीकृतयोरत्यन्तभेदासम्भवात् । तदसम्भवश्च सत्त्वादिनाऽन्योन्यं तयोरभेदात्सुप्रसिद्धः ।

साधनविकलश्चायं दृष्टान्तोऽपि .... ... सामान्यविशेषयोरात्यन्तिकं भेदं प्रसाधयति । द्वितीयानुमानेऽपि विरुद्धधर्मान्वितत्वाख्यो हेतुर्धूमेनानैकान्तिकः । न खलु स्वसाध्येतरयोर्गमकत्वागमकत्वलक्षणविरुद्धधर्मान्वितत्वेऽपि धूमोऽभि .... .... .... .... ... .... .. .... .... .... .... .... लापचितस्य तु सामग्र्यन्तरत्वात्साध्यान्तरं प्रत्यगमकत्वम् । न चैकस्यैव तस्य गमकत्वागमकत्वे संभवत इत्यप्यन्धसर्पविलप्रवेशन्यायेन परेषामनेकान्तावलम्बनम् । धूमस्याभिन्नत्वात् । य एव हि गमकः स्वसाध्ये स एव ह्यत्यन्तागमक इति । अथान्यः स्वसाध्ये गमकोऽन्यश्चान्यत्रागमकस्तर्हि यो गमको धूमस्तस्य स्वसाध्यवत्साध्यान्तरेऽपि सामर्थ्यादेकस्मादेव धूमान्निखिलसाध्यसिद्धिप्रसंगाद्धेत्वन्तरोपन्यासो व्यर्थः स्यात् । तथा यदपि तद्वस्तुनः सामान्यस्वभावता स्वीक्रियत इत्यादि । तदप्ययुक्तम् । सामान्यविशेषोभयस्वभावस्य वस्तुनः प्रत्यक्षादिप्रमाणप्रतीतत्वात् । प्रमाणप्रतीते च विरोधानुपपत्तेः । यच्चावाचि 'पटस्य भाव' इत्यादि । तदपि न न्याय्यम् । षण्णां पदार्थानामस्तित्वमित्यत्र भेदाभावेऽपि षष्ठ्युत्पत्तिप्रतीतेः । न खलु भवता षट्पदार्थातिरिक्तमास्तित्वादिकमभिमन्यते । षट्पदार्थसंख्याव्याघातप्रसंगात् । ननु धर्मिरूपा एव ये भावास्ते षट् पदार्थाः प्रोक्ताः । धर्मरूपास्तु तद्व्यतिरिक्ता इति चेत् । कस्तर्ह्यस्तित्वस्य तैः सह संबन्धो येन तत्तेषां धर्मः स्यात् । संयोगः समवायो वा । न तावत्संयोगोऽस्य गुणत्वेन द्रव्यैकाश्रयत्वात् । नापि समवायः । तस्यैकत्वेनेष्टेः । समवायेन चाऽस्य समवायसंबन्धे तस्यानेकत्वप्रसक्तेः । एकत्वे........ कथमेवमस्तित्वस्यास्तित्वमित्यत्रास्तित्वयोरेकत्वे कथं भेदनिबन्धना विभक्तिर्भवेत् । अथ तत्राप्यपरमास्तित्वं स्वीक्रियते तदाऽनवस्था स्यादपरापरधर्मसमावेशे । नच सत्त्वस्य धर्मिरूपत्वानुषङ्गात्षडेव धर्मिण इत्यस्य व्याघातः । ये धर्मिरूपा एव ते षट्त्वेन विवक्षेत्, न द्रव्यादीनां धर्मरूपाक्षिता (?) .... .... .... .... .... ....

इति त्वस्यापि संभवात् । तथा स्वस्य भावः स्वत्वमित्यादौ भेदाभावेऽपि तद्धितोत्पत्तेरुपलम्भात् साऽपि भेदपक्षमेवाऽवलम्बेत । यच्चावाचि संशयाख्योपसदकोपनिपातप्रसक्तेरित्यादि तदपि न मनोरमम् । साधकबाधकप्रमाणाभावादिसामग्र्यभावे कथं प्रत्येककोटिनिर्णये संशयोऽप्युपपन्नः स्थाणुपुरुषप्रतीतौ तु संशयवदेव । अथानुपजायमानोऽपि संशयोऽत्र बलादापाद्यते । नन्वेवं कस्यचिदपि प्रतिनियतरूपव्यवस्था न स्यात् । सर्वत्र तस्यापादयितुं सुशकत्वात् । तथाहि—घटादिप्रतिनियतवस्तुप्रमातृत्वमेवात्मनो नानन्वमानस्य परमात्मस्वरूपस्य वा स्यादित्यादिसंशयस्यापादयितुं सुशकत्वेन न क्वचित् व्यवस्था सिध्येत् । ततो घटादेः प्रतिनियतरूपव्यवस्थामिच्छता नाऽनुपजायमानः संशयो बलादापादयितुं शक्यः ॥ १ ॥ विरोधोऽपि भेदाभेदाविनाभे (?) वस्तुरूपादावपि समान इत्येकस्य भेदाभेदवद्रूपादिस्वभावताऽपि न भवेत्। किं चाऽयमविभ्योऽपृथग्भूतः पृथग्भूतो वा स्यात् । यद्यपृथग्भूतः कथं विरोधको नाम स्यात् अभूतत्वात्तत्स्वरूपवत् । अथ पृथग्भूतस्तथापि न विरोधकः पृथग्भूतत्वादविरोधकार्थान्तरवत् । तत्रापि तस्य विरोधकत्वे सर्वं सर्वस्य विरोधकं स्यात् । ननु चार्थान्तरभूतोऽपि विरोधिनोर्विरोधको विरोधस्तद्विशेषणत्वे सति विरोधप्रत्ययविषयत्वात्। यस्तु न तयोर्विरोधकः स न यथा तथाऽपरोऽर्थस्तेन न सत्र सर्वस्य विरोधक इति चेन्न तस्य तद्विशेषणत्वानुपपत्तेः । विरोधो हि अभावः । स च तुच्छस्वभावो यदि शीतोष्णद्रव्ययोर्विशेषणं तदा सद्द्वयोरदर्शनापत्तिः । अथ शीतद्रव्यस्यैव विशेषणं तदा तदेव विरोधि स्यान्नोष्णद्रव्यम् । तथा न द्विष्ठोऽसावेकत्रावस्थितेः । न चैकत्र विरोधः । सर्वदा तत्प्रसङ्गात् । एतेनोष्णद्रव्यस्यैव विरोधो विशेषणमित्यपि निरस्तम् । अथ निरुध्यमानत्वापेक्षया कर्मस्थः । विरोधकत्वापेक्षया तु कर्तृस्थो विरोधः । एवं च यद्यपि कर्तृस्था कर्तयर्थ कर्मस्था च कर्मस्थैव विरोधव्यक्तिस्तथापि सामान्यापेक्षयोभयविशेषणता-

द्विष्ठोऽसावभिधीयते । तदा रूपादेरपि द्विष्ठत्वनियमापत्तिः । तत्सामान्यस्य द्विष्ठत्वात् । रूपादेर्गुणविशेषात्तत्सामान्यस्य पदार्थान्तरत्वान्न तदनेकस्थत्वमिति चेत् । तर्हि कर्मकर्तृस्थाद्विरोधविशेषात्पदार्थान्तरस्य विरोधसामान्यस्य द्विष्ठत्वे कुतस्तद्विष्ठत्वं येन द्वयोर्विशेषणं विरोधः । एतेन ‘ गुणयोः कर्मणोर्द्रव्यगुणयोर्गुणकर्मणोर्द्रव्यकर्मणोर्वा विरोधो विशेषणम् ’ इत्यपास्तम् । विरोधस्य ह्यभावरूपत्वे कथं सामान्यविशेषभावो येनानेकविरोधि विशेषणभूतविरोधविशेषव्यापि विरोधसामान्यमुपेयते । यदि पुनः षट्पदार्थव्यतिरिक्तत्वात्पदार्थविशेषो विरोधोऽनेकस्थः । स च विरोध्यविरोधको भावप्रत्ययविशेषसिद्धः समाश्रीयते । तदाप्यस्यासंबद्धस्य द्रव्यादौ विशेषत्वं स्यात्संबद्धस्य वा । न तावदसंबद्धस्य । अतिप्रसंगात् । दण्डादौ तथा प्रतीत्यभावाच्च । अथ संबद्धस्य किं संयोगेन समवायेन विशेषणभावेन वा । न तावत्संयोगेन । अस्याद्रव्यत्वेन संयोगानाश्रयत्वात् । नापि समवायेन । विरोधस्य द्रव्यगुणकर्मसामान्यविशेषव्यतिरिक्तत्वेनासमवायित्वात् । नापि विशेषणभावेन । संबन्धान्तरेणासंबद्धे वस्तुनि तस्यासंभवात् । अन्यथा दण्डपुरुषादौ संयोगादिसंबन्धाभावेऽपि स स्यात् । इत्यलं संयोगादिसंबन्धकल्पनाप्रयासेन । तदित्थं विरोधस्य परामृश्यमानस्याघटमानत्वान्नायं भेदाभेदयोः परिकल्पयितुं युक्तः ॥ २ ॥ नापि वैयधिकरण्यम् । एकाधारतया निर्बाधबोधे भेदाभेदयोः प्रतिभासमानत्वात् ॥ ३ ॥ नाप्युभयदोषानुषङ्गः । तस्करपारदारिकाभ्यामतस्करपारदारिकवद्भेदात्मकवस्तुनः केवलभेदाभेदाभ्यां जात्यन्तरत्वात् । न खलु भेदाभेदयोरन्योन्यनिरपेक्षयोरेकत्वं जिनपतिमतानुसारिभिरिष्टं येनायं दोषः स्यात् । तत्सापेक्षयोरेव तदभ्युपगमात्तथाप्रतीतेश्च ॥ ४ ॥ नापि संकरव्यतिकरौ । स्वरूपेणैवार्थे तयोः प्रतीयमानत्वात् ॥ ५ ॥ ६ ॥ नाप्यनवस्था । धर्माणामपरधर्मासंभवात् । ‘ धर्मिणोऽनेकरूपत्वं न धर्माणां कथंचन ’

इत्यभिधानात् ॥ ७ ॥ एवं संशयादिदोषसप्तकाविर्भावनाद्युक्त तत्त्वस्याप्रतिपत्तिरेवानेकान्तवादिनामेति, तदप्ययुक्तम् ।

तत्सामान्यविशेषयोर्नियमतो भेदः समास्थीयते
येन न्यायपराङ्मुखा कुमतयस्तीर्थान्तरीया हता ॥
स्याद्वादोन्नततोरणो जिनपतेरुत्तुङ्गमच्छासन
प्रासादं प्रभुराश्रमाश्रयरवेरस्तम्भाद्विरं निघ्नतान् ॥ ५८० ॥

सामान्यविशेषाभ्योऽनेकान्तः सिद्धिमीधमानीत ।
अधुना तु सदसतोऽप्यनाशिस्त्वनिमूचितस्तत्र ॥ ५८१ ॥

तथा हि– समस्तं वस्तु स्वपररूपादिना सदसदात्मकं प्रतिनियतरूपव्यवस्थानुपपत्ते । नन्वत्र साध्यपदयोर्विरोध । कथमेकमेव कुम्भादिवस्तु सच्चासच्च भवति । सत्त्वं ह्यसत्त्वपरिहारेण व्यवस्थितम् । असत्त्वमपि सत्त्वपरिहारेण । अन्यथा तयोरविशेष स्यात् । ततश्च तद्यदि सत्, कथमसत् । अथासत्, कथं सदिति प्रसिद्धमेव सदसदात्मकत्वम् । तथा चाप्रसिद्धविशेषणत्व पक्षस्य दोष । प्रतिनियतरूपव्यवस्थाऽन्यथानुपपत्त्याख्यो हेतुरप्यसिद्ध । इतरेतराभाववशादेव प्रतिनियतरूपव्यवस्थाया उपपद्यमानत्वात् ।

भावाभावात्मक वस्तु नदित्थ नोपपद्यते ।
स्वीकार्यौ सर्वथा भिन्नौ भावाभावौ बुधैस्तत ॥ ५८२ ॥

सदसदनेकान्तवादस्य सप्रमाणम् ।

तदिदमसिद्धमटाकम् । यतो यदि येनैव प्रकारेण सत्त्वं तेनैवासत्त्वं येन चासत्त्वं तेनैव च सत्त्वमभ्युपेयेत । तदा स्याद्विरोध । यदा तु स्वरूपादिना सत्त्व पररूपादिना त्वसत्त्वमिष्यते तदा कास्य गन्धोऽपि । न खलु वस्तुन सत्त्वमेव । स्वरूपादिनेव पररूपादिनापि सत्त्वप्रसङ्गात् । सर्वस्यासर्वात्मकत्वानुपपत्त्या सत्ताद्वैतापत्ते । तच्च प्रागेव कृतोत्तरम् । नाप्यसत्त्वमेव । पररूपादिनेव स्वरूपादिनाप्यसत्त्वप्रसङ्गात् । अभिष्टस्य सर्वस्यासत्त्वापत्त्या सकलशून्यतापाते । सापि च प्राक्प्रति-

क्षितैव। भेदाभेदयोरिव सत्त्वासत्त्वयोर्विरोधो विधुरयितुं सुशक एव। तत्राप्रसिद्धविशेषणं पक्षस्य दोषः। यत्तूक्तम्—इतरेतराभाव इत्यादि। तदसुन्दरम्। इतरेतराभावस्य घटवस्त्वभेदे घटविनाशे पटाद्युपलब्धिप्रसंगात्पटाद्यभावस्य विनष्टत्वात्। अथ घटाद्भिन्न इतरेतराभावस्तदा घटपटादीनां परस्परं भेदो न स्यात्। यदा हि पटाद्यभावरूपो घटो न भवति तदा घटः पटादिरेव स्यात। यदा च घटस्य घटाभावाद्भिन्नत्वाद्घटरूपता तथा पटादेरपि स्याद्घटाभावाद्भिन्नत्वादेव। नाप्येषा परस्परभिन्नानामभावेन भेद शक्यते कर्तुं तस्य भिन्नाभिन्नभेदकरणेऽकिंचित्करत्वात्। न चाभिन्नानामन्योन्याभावसंभवति। नापि परस्परं भिन्नानामभावेन भेद क्रियते स्वहेतुभ्य एव भिन्नानामुत्पत्ते.। नापि भेदव्यवहार क्रियते। यतो भावानामात्मात्मीयरूपेणोत्पत्तिरेव स्वतो भेद', स च प्रत्यक्षे प्रतिभासनादेव भेदव्यवहारहेतु.। किंच भावाभावयोर्भेदो नाभावनिबन्धन। अनवस्थाप्रसंगात्। अथ स्वरूपेण तयोर्भेदस्तदा भावानामपि स्वरूपेणैव स स्यादिति किमपरेण भावेन कल्पितेन। तन्नैकान्ततो भिन्नोऽभिन्नो वा इतरेतराभाव. संभवति। अपि चायं किं स्वतन्त्रो भावधर्मो वा। न तावत्स्वतन्त्रः। तथाविधस्यास्य प्रागेव परास्तत्वात्। अथ भावधर्मः, कस्य पुनर्भावस्य धर्मोऽसौ घटस्य पटस्योभयस्य वा। यदि घटस्य तत्रापि किं घटस्वरूपस्य निषेधकः पटस्वरूपस्य वा। प्रथमपक्षे किं घट एव घट. स्वरूपस्य प्रतिषेधक. पटे वा। प्रथमे पक्षे कथ घटधर्मोऽसौ धर्मिण्येवासत्त्वात्। द्वितीये तु पटे सन्, असन् वा घटमयं निषेधेत्। यदि संस्तदा कथं घटधर्मोऽसौ, तादात्म्येनावस्थानात्तद्धर्मताया एव संभवात्। अथ असंस्तदा घटे घटासत्त्वासत्त्वाद्घटसत्त्ववत्पटेऽपि घटासत्त्वासत्त्वाद्घटसत्त्वप्रसंगः। तन्न घटस्य धर्म. सन्, अस्त्येव घटस्वरूपस्य निषेधकोऽसौ। अथ पटस्वरूपस्य निषेधकोऽसौ। तत्रापि किं पटात्मन्येव घटात्मनि वा। नाद्यः पक्षः। पटाभावस्य घटधर्मत्वेन

पटात्मत्वाभावेन तत्र तन्निषेधं कर्तुमसमर्थत्वात् । द्वितीयपक्षे त्वस्मन्मतसिद्धिः । पटाभावस्य घटधर्मस्य घटात्मकत्वात्पटनिषेधकत्वेनास्माभिः स्वीकारात् । अथ यदि घटधर्मोऽसौ तदा कथं घटे पटो नास्तीति परसामानाधिकरण्येन तत्प्रतीतिः । तदसत् । संसर्गमात्रप्रतिषेधपरत्वादस्य भूतले घटो नास्तीतिवत् । इह तु तादात्म्यप्रतिषेधस्य प्रक्रान्तत्वात् । तत्र च घटः पटात्मा न भवतीति प्रतीतिर्भवत्येव घटसामानाधिकरण्यं पटाभावस्य । एवं पटधर्मत्वे घटाभावस्य सर्वं वाच्यम् । यथा हि घटः पटात्मा न भवतीति प्रतीतिरस्ति तथा पटो घटात्मा न भवतीत्यपि । ततोऽपि घटात्मा पटाभावो घटधर्मः पटात्मा च घटाभावः पटधर्म इति युक्तम् । संग्रहनयाभिप्रायात्तूभयधर्मताप्यस्याविरुद्धैवेति । न चाभाव एवैतरेतराभावस्येति मौनं कल्पनीयम् । घटादेः सर्वात्मकत्वप्रसङ्गात् । तथा हि—यथा घटस्य स्वदेशकालाकारादिना सत्त्वं तथा यदि परदेशकालाकारादिनापि तथा सति स्वदेशादित्ववत्परदेशादित्वप्रसक्तेः कथं न सर्वात्मकत्वं, अथ परदेशादित्ववत्स्वदेशादित्वमपि तस्य नास्ति । तदा सर्वथाऽभावप्रसक्तिः । अथ यदेव स्वसत्त्वं तदेव परासत्त्वम् । नन्वेवमपि यदि परासत्त्वे स्वसत्त्वस्यानुप्रवेशस्तदा सर्वथाप्यसत्त्वम् । अथ स्वसत्त्वे परासत्त्वस्य तदा परासत्त्वस्याभावात्सर्वात्मकत्वम् । यथा हि स्वासत्त्वासत्त्वात्स्वतत्त्वं तस्य तथा परासत्त्वासत्त्वात्परसत्त्वप्रसक्तिरनिवारितप्रसरा विशेषाभावात् । न च परासत्त्वं कल्पितरूपमिति न तन्निवृत्तिः परसत्त्वात्मिकेति वाच्यम् । स्वसत्त्वेऽप्येवं प्रसङ्गात् । अथ नाभावनिवृत्त्या पदार्थाः भावरूपाः प्रतिनियता वा भवन्ति । अपि तु स्वहेतुभ्यस्सन्तः स्वस्वभावनियता एवोपजायन्ते । तथैव चार्थसामर्थ्यभाविनाऽध्यक्षेण विषयीक्रियमाणो व्यवहारपथमवतरन्ति, इति किमितरेतराभावकल्पनया । उच्यते । किंचिदेकवस्तुसामर्थ्यात् स्वस्वभावनियतोत्पत्तिरेव परासत्त्वाख्यव्यतिरेकेण नोपपद्यते । स्वस्वरूपनियतप्रतिभासन

च पराभावात्मकप्रतिभासनमेव । अत एव स्वकीयरूपानुभवान्नान्यतोऽन्यनिराक्रियेत्येतदपि सदसदात्मकवस्तुप्रतिभासनमन्तरेणानुपपन्नमेव । यदा हि पररूपव्यावृत्तिमत्तत्स्वरूपमध्यक्षे प्रतिभाति तदा स्वस्वरूपमेव परतस्तस्य भेदस्तदग्रहणमेव चाध्यक्षतस्तद्भेदग्रहणम् । अन्यथा पारमार्थिकपरसत्त्वासत्त्वात्मकस्वसत्त्वाभावे स्वसत्त्ववत्परसत्त्वात्मकत्वप्रसंगान्न तत्स्वरूपमेव भेदो नापि तत्प्रतिभासनमेव भेदप्रतिभासन स्यात् । अत एवान्याभावस्य पदार्थात्मकत्वेऽपरापराभावकल्पनया नानवस्था । नापि परग्रहणमन्तरेण तद्भेदग्रहणाभावादितरेतराश्रयत्वाद्भेदाग्रहणम् । न चाभावस्य तुच्छतया सहकारिभिरनुपकार्यस्य ज्ञानाजनकत्वम् । नापि भावाभावयोरनुपकार्योपकारकत्वेनासंबन्धो भावाभावात्मकस्य पदार्थस्य स्वसामग्रीत उत्पन्नस्य प्रत्यक्षे तथैव प्रतिभासनात् । न चासदाकारावभासस्य मिथ्यात्वम् । सदाकारावभासेऽपि तत्प्रसंगात् । न चासदवभासस्याभावः । अन्याविविक्तावभासस्यानुभवसिद्धत्वात् । तन्न यदेव स्वसत्त्वं तदेव परासत्त्वमिति साधु । अपेक्षणीयनिमित्तभेदाच्च सत्त्वासत्त्वयोर्नैकत्वं वक्तुं युक्तम् । स्वद्रव्यादिकं हि निमित्तमपेक्ष्यार्थे सत्त्वं व्यवस्थाप्यते । परद्रव्यादिकं पुनरपेक्ष्यासत्त्वम् । ततो विभिन्ननिमित्तनिबन्धनत्वात्सत्त्वासत्त्वयोर्भेदः । एकान्ताभेदे तु सत्त्वासत्त्वयोर्विभिन्ननिमित्तनिबन्धनत्वानुपपत्तिः । तथा हि—यदेकान्तेनाभिन्नं न तत्र विभिन्ननिमित्तनिबन्धनत्वं यथा सत्त्वे, असत्त्वे वा । एकान्तेनाभेदश्च सत्त्वासत्त्वयोर्भवद्भिरिष्ट इति । प्रतिनियतसदसत्प्रत्ययगोचरचारित्वानुपपत्तिश्चानयोस्तत एव तद्वत् । अभिन्ननिमित्तनिबन्धनत्वे च तत्प्रत्ययोः सर्वत्र हेतुभेदात्फलभेदः, इत्यभ्युपगमो विरुध्येत । ततः सत्त्वासत्त्वयोर्वस्तुनि प्रतीतिभूधरशिखरारूढं कथंचित्तादात्म्यं प्रतिपत्तव्यम् । विस्तरतस्तु सदसदात्मकवस्तुविचारः श्रीमदनेकान्तजयपताकातः[1] प्राज्ञैर्विज्ञेयः ।

तस्माद्दोषापगमविशदान्मानतः संप्रसिद्धे
सत्त्वासत्त्वोभयपरिगते विश्ववस्तुप्रपञ्चे ॥

---

1 अ. ज. प. प्रथमः परिच्छेदः ।

एकान्ताय प्रमितिविमुखं कथ्यमानाय तीर्थ्यैः
स्वान्तं हन्त स्पृहयतु कथं शेमुषीवल्लभानाम् ॥ ५८३ ॥
एवं सदसदनेकान्त एष समसाधि साधुयुक्तिगतेः ।
सम्प्रति नित्यानित्यानेकान्तः साध्यते सम्यक् ॥ ५८४ ॥

बौद्धमतखण्डनपूर्वकं नित्यानित्यानेकान्तवादस्य मण्डनम् ।

अत्राह ज्ञानश्रीश्रवणदुर्विदग्धशाक्यः कश्चित्—
क्षणिकैकान्ते जीवति कोऽयं तत्साधनमनोरथस्याऽवसरः ।

तथा हि—

"यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इमे
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा ।
नाप्येकैव विधाऽन्यदापि परकृन्नैव क्रिया वा भवेद्
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति ॥"

सत्त्वमिहार्थक्रियासामर्थ्यमभीष्टं स्वभावहेतुत्वेनोपन्यस्तम् । तच्च प्रमाणतः प्रतिपन्नेषु निःशेषपदार्थानामविगानसिद्धम् । इति नाश्रयद्वारेण स्वरूपेण वाऽस्यासिद्धिः । नापि विरुद्धता । सपक्षीकृते जलमुचि विलोकनात् । साध्यविपर्ययव्याप्तिलक्षणस्य विरुद्धस्य साध्यवति दर्शनानुपपत्तेः । ननु कथमिह क्षणिकत्वावधारणम् । यतोऽस्य सपक्षता स्यादिति चेत् । उच्यते । इह जलधरस्य जलधारणक्रियासमर्थस्तावदेकः स्वभावोऽशक्यपरिहारः । क्षणान्तरे च द्वितीयादौ तत्क्रियायां कृतत्वात् पुनः कर्तुमशक्यत्वात्तज्जातीयामन्यजातीयां वा कुर्यान्न कुर्याद्वा कामपि क्रियामिति पक्षाः । एवं तत्क्रियाकरणक्षणात् प्रागपि वक्तव्यम् । तत्र यदि प्रथमक्षणवत् क्षणान्तरेऽपि तत्करणसमर्थस्वभावोऽम्भोधरः कथं कदाचित्क्रियाविच्छेदः । क्षणान्तरनिवर्तनीयक्रियासमर्थस्वभावत्वे वा क्षणान्तरवत्प्रथमक्षणेऽपि सजातीयेतरक्रियाप्रसङ्गः । क्षणान्तरेऽपि हि तत्सामर्थ्यसद्भावाज्जननं तच्च तत्राप्यक्षीणम् ।

कार्याणि हि विलम्बन्ते कारणासंनिधानत. ।
समर्थहेतुसद्भावे क्षेपस्तेपा तु किंकृत. ॥५८५॥

एतेनाकरणपक्षोऽपि प्रतिक्षिप्तः । यदा विलम्बो ह्यसह्यस्तदा-दूरोत्सारितमकरणम् । असामर्थ्ये वा समीहितसमयेऽप्यकरणप्रसङ्गः । सदैकस्वभावत्वात् । स्वभावभङ्गे च प्रतिक्षणं क्षय. सिद्धो जलधरस्य । प्रयोगः—यद्यदा यज्जननसमर्थं तत्तदा तत्करोत्येव । यथा-न्त्या कारणसामग्री स्वकार्यम् । शक्तश्चायमुभयदशायामुभयं कार्य-मर्जितुमिति स्वभावहेतुप्रसंग. । विपर्ययप्रयोगश्च—यद्यन्न करोति न तत्तत्र समर्थम् । यथा शाल्यङ्कुरमकुर्वन्कोद्रव॰ । न करोति चायं प्रथमक्षणसाध्याः क्रिया द्वितीयादिक्षणसाध्या वा प्रथमक्षण इति व्यापकानुपलब्धि॰ । एव च जलधरस्य तत्तत्क्रियासु समर्थासमर्थ-स्वभावतया प्रतिक्षणमन्यत्वेन सपक्षत्वे सिद्धे तत्र वर्तमानस्य सत्त्वहेतो॰ कुतो विरुद्धता । नाप्यनैकान्तिकशङ्का । सर्वोपसंहारवत्या व्याप्तेः प्रसाधनत्वात् । ननु विपर्ययबाधकप्रमाणवशात् व्याप्तिसिद्धि । तस्य च नोपन्यासवार्तापि। तत्कथं व्याप्तिः प्रसाधितेत्युच्यते । तदचतुरस्रम् । तथा ह्युक्तमेतत् । कर्तुः सा न क्रियान्यदापि किंतु परक्रिया, अक्रि-यैव वा । अत्र च प्रकारद्वये क्षणभङ्गसगतेरवश्यंभावोऽतः साध्येन व्याप्तैव सार्थक्रियासक्तिरिति । नन्वेवमन्वयमात्रमस्तु विप-क्षात्पुनरेकान्तेन व्यतिरेक कथ लभ्य इति चेत् । प्रागुक्तं 'यद्यदा' इत्यादिकानुमानादन्वयव्याप्तिसिद्धेरेव । विपर्ययबाधकशब्देन पुनरत्रान्वयव्यतिरेकव्याप्तिप्रसाधकप्रमाणयोरुभयोरपि सग्रह । अन्व-यरूपाया हि व्याप्तौ साध्यविपर्ययस्य बाधकं साधने सति । व्यतिरेक-रूपाया तु साध्यविपर्यये बाधकं साधनस्येति । अथापि व्यतिरेकरूपा-यामेव व्याप्तौ कौतुकमस्ति तदा साप्युक्तैव । तथा हि—नाप्येकैव विधा नान्यदापि किंतु पर कृत्वा भवेदक्षणिकाभिमतभावस्यान्यदा पूर्वं

१ 'साधनसत्त्वम्' इति न. पुस्तक पाठ. । २ 'साध्यं विपर्ययबाधकम्' इति न पुस्तके पाठ ।

पश्चाद्वेति क्रमनिर्देश । नैव क्रिया भवेत् । अन्यथा नैवेत्यवधारणान पूर्वं नापि पश्चादित्येयक्रमनिर्देश । एतस्य च कार्यगतस्य प्रकार-द्वयस्य कारणाना क्षणभङ्ग एव सति सगतिरित्यन्तर्निर्णीतावधारणया वृत्त्या नित्याद्व्यावृत्तिरित्यपास्य क्षणभङ्गसगतिरिति प्राधान्येनोपन्यस्त वृत्ते । तत्क्षणिकादितरक्षणिकादपि सा व्यावृत्ति शक्येति लम्भयितुम् । एतेनाक्षणिकस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोधाच्छक्ति-लक्षण सत्त्वमवहायेन । अत क्षणिकत्व एव विश्राम्यते न व्याप्यत इति क्रमयौगपद्यलक्षणव्यापकानुपलम्भाद्विपर्यये बाधकात्सत्त्वस्यार्थ-क्रियाशक्तिलक्षणस्य क्षणिकत्वेन व्याप्तिसिद्धिरित्युक्त भवति । तथा च प्रयोग —यत्क्रमयौगपद्यवत्त्यामर्थक्रियाया नोपयुज्यते तन्नार्थक्रिया शक्तम् । यथा गगनारविन्दम् । नोपयुज्यते चाक्षणिको भाव क्रमयौगपद्यवत्त्यामर्थक्रियायामिति व्यापकानुपलम्भ ।

अपि च—

यन्निभाति यथा तथा तदखिल सगाम्बु गौर यथा
नो चेत्र प्रतिवस्तु शक्तिनियम सकीर्णभावे भवेत् ॥
सस्कारा प्रतिभान्ति चेन्द्रियमतिश्चैकक्षणस्थायिन
स्यादेकक्षणवीक्षणादिनया दृष्टिस्त्रिकालीकृता ॥ ५८२ ॥

छिन्नरूपोपपत्तिव्यवकीर्णोऽय स्वभावहेतुप्रयोग । अत्र च सरूपे भावान विरुद्धता दोष । द्वितीयपादेन चानैकान्तपरिहार । तथा हि—निभान प्रत्येक प्रतिभानमुक्तम् । ततो यावता विशेषेण पदार्थ प्रत्येक प्रतिभासमभासन्यति तन्नियमपरिहारेण यदि स्वरूप-स्थितिमासनेन तदा सर्वसकीर्णमस्य स्वरूपमिति सर्वत्र सर्वोपयोगादि प्रसग । अत स्वरूपनियमे प्रमाणापेक्षाया प्रवृत्तिनिवृत्तिकामस्य यथया प्रत्यगे प्रतिभात तथैव सत्यान्ययेति । तत्तेन तथावस्थान व्याप्त प्रत्यक्षप्रतिभासोऽप्यस्यान्यथावस्थाने विपक्षे व्यापकाभावात्सम-

1 सत्ताभद् धान्दिक्लिप्तादिष्वाह ।

वस्तथावस्थानेन व्याप्यत इति दर्शितम् । तृतीयपादेन पक्षधर्मोपसंहारः । तदसिद्धिपरिहारश्चतुर्थेन । पूर्वापरकालयोरेकत्वे हि पदार्थस्य दृष्टाद्रूपाद्रूपान्तरविरहात्सकलकालकलाकलितस्य देशान्तरजुषोऽपि रूपस्यावश्यं प्रतिभास इति न देशकालान्तरावस्थाप्रतिपत्तये प्रमाणान्तरपर्येषणावकाशः । अस्ति च पर्येषणा, इदानीमन्यदेशे वा तद्वस्तु कथमस्ति किंस्विन्नोपनिपातिना रागरसेन सिक्तमिति तदुपनिपातसंभविन्यवसरे विमर्शदर्शनात् । न च दर्शनविषयीकृते तथा संभवः । न च दृष्टेऽप्यनवसायः शक्योऽभिधातुम् । नादृशि जिज्ञासिते रक्तादौ रूपे क्षणिकतावदनभ्यासाभावात् । अन्यथा पश्चाद्दर्शनेऽपि नावसायोदयः स्यात् । तस्मात्तदनवसायस्तदप्रतिभासादेव । ननु यदि क्षणभङ्गुरता भावानां प्रतिभाता प्रत्यक्षे तदा किमनेन सिद्धोपस्थायिनानुमानेनेति चेत् । उच्यते । शिंशपानुमानेनेव व्यवहारः साधनीयः

तथा च—

क्षणत्वमध्यक्षधिया यदेतज्ज्ञानं पुनर्न व्यवहार्यमेतत् ।
अतः समक्षग्रहसाधनेन प्रसाध्यते तद्व्यवहार एव ॥ ५८७ ॥ इति ॥

तदस्य मानद्वितयस्य विश्वतो दोषोपशान्त्या कुशलेषु सत्सु ।
आकालमेष क्षणभङ्गवादो विजृम्भतामस्खलितं त्रिलोक्याम् ॥ ५८८ ॥

अतीव तायागत नूतनोऽयं कश्चित्प्रकारस्तव धूर्ततायाः ।
दृष्टं यदामील्य परिस्फुरन्तमपह्नुषे दोषसमूहमत्र ॥५८९॥

तथाहि—यदवाचि ‘सत्त्वमिहार्थक्रियासामर्थ्यम्’ इत्यादि । तत्राविवादसिद्धमेव भावेषु वादिनामर्थक्रियासामर्थ्यं त्वामेकं बहिष्कृत्य । क्षणमात्रलक्षकप्रत्यक्षवादिनो हि भवतः कार्यकारणभावप्रतिपत्तिरेव न संभवति । कुत एवार्थे क्रियासामर्थ्यप्रतीतिः स्यात् । तथा हि—कार्यकारणभावः क्वचिदर्थयोः, क्वचनार्थज्ञानयोः, क्वापि ज्ञानयोः प्रतिपत्तव्यः। त्वन्मते चार्थयोस्तावन्नासौ प्रतिपत्तुं पार्यते । कारणकाले कार्यस्य कार्यकाले कारणस्य वा प्रतिभासाभावात् । न चैकस्यैव ग्रहणे कार्यत्वं कारणत्वं

वा सिध्यति । तयोरितरेतरसम्बन्धग्रहणात्तत्त्वव्यवस्थितेः । स्वरूपमेव कार्यत्वं कारणत्वं चेति चेत् । अस्त्वेवम् किंतु एकैकस्वरूपप्रतीतावप्येतत् कार्यं कारणं वेति प्रतिपत्तिः कुतो नालिकेरद्वीपवासिनोऽप्यग्निदर्शनादेव तत्र धूमजनकत्वनिश्चयस्य च प्रसङ्गात् । परस्परसंनिधित्वाप्रतिपत्तौ च कार्येण कारणानुमानमस्तमियात् । तस्मिन्नायातम् 'मधु पश्यसि दुर्बुद्धे प्रपातं नैव पश्यसि' इति । तद्भावे भावस्यावसाया त्कार्यकारणभावव्यवस्था सुस्थेति चेत् । न । तद्भावे भावस्य क्षणमात्र वेदिना वेदनेन वेदयितुमशक्यत्वात् । क्रमेण द्वयोरपि प्रतिपत्तिरित्यपि त्रपापात्रम् । क्षणोभयभाविनः कस्यचिदेकस्य वेदनस्यासत्त्वात् । द्वयोस्तु क्रमोत्पन्नयोरपि परस्परस्वरूपाप्रतीतेर्न सम्बन्धबुद्धिः । विकल्प-प्रसादात्तद्बुद्धिरिति चेत् । अहो उत्तमस्य प्रसादः । स हि कतरत्प्रमाणम् । न प्रत्यक्षम् । अकल्पनापोढत्वात् । नानुमानम् । अलिङ्गजत्वात् । नास्य प्रत्यक्षपरिच्छेदानुकारित्व-मस्ति । प्रत्यक्षेण कार्यकारणभावापरिच्छेदात् । किंच तद्भावभावित्वमात्रेण कार्यकारणत्वे रासभसद्भावे धूमोद्गमदर्शनात्तस्यापि तत्कारणतापत्तिः । तदभावेऽपि तद्भावान्नापत्तिरिति चेत् । नास्त्येतत् । यो हि धूमक्षणस्तद्भावे भवति स कथं तद्भाववदभावेऽपि स्यात् । उत्पन्नस्य पुनरुत्पादायोगात् । अथान्वयव्यतिरेकाभ्यां संतानस्य कार्य कारणभावोऽभिधीयते । तन्न साधु । क्षणातिरेकिणस्तस्यासंभवात् । भावे वा कार्यकारणभावस्तस्यैव स्यान्न क्षणानाम् । अक्षणिकश्चासौ, इत्यनेनैव सत्त्वं व्यभिचारि स्यात् । क्षणिक एवासाविति चेत्तर्हि किमनेनापि भिद्यमानयानपात्रानुयायिनिश्रयानान्तरतुल्येन । यो नान्वयव्यतिरेक ग्रहणद्वारेण कार्यकारणभावग्रहणत्राणाय । किंच । कारणात्कार्यं भव-त्कथं गृह्यते । किमत एव भवति, आहोस्विद् अतो भवत्येव, किंवाऽतोऽपि भवतीति । एवं च न कार्यकारणभावग्रहो नियमाभावात् ।

---

१ सौद्धिकस्याय ।

नाप्यतो भवत्येवेति । देशान्तरे कालान्तरे च ततस्तदनुपपत्तेरिति दर्शनात् । नाप्यतोऽपि भवतीति पक्ष. । तत्रापि सामर्थ्यादन्यतोऽपि भवतीति स्वयमेव व्यभिचाराभ्युपगमात् । ततोऽध्यक्षेणान्वयव्यतिरेकासिद्धेर्न कार्यकारणभावस्यावसाय. । अथानुपलम्भात्तदवसायः । हन्त कोऽयमनुपलम्भः । प्रत्यक्षमनुमानं वा । न तावत्प्रत्यक्षम् । तस्य क्षणान्तरासंस्पृष्टवस्तुविषयत्वात् । तेन च यथा नान्वयव्यतिरेकग्रहस्तथा प्रोक्तम् । नाप्यनुमानम् । अस्यान्वयव्यतिरेकग्रहणपूर्वकत्वात् । तद्यदि तेनैवान्वयव्यतिरेकग्रहणं तदेतरेतराश्रयदोषः स्यात् । अथानुपलम्भान्तरेण तर्हि तत्राप्यन्वयव्यतिरेकग्रहणमन्येनानुपलम्भान्तरेणेत्यनवस्था । एतेन प्रत्यक्षानुपलम्भसाधनः कार्यकारणभाव इत्यपि प्रत्युक्तम् । तन्नार्थयो. कार्यकारणभावावगम. संभवति । नाप्यर्थज्ञानयो. । समानन्यायत्वात् । किंच योऽयं प्रतिभात्यर्थः स ज्ञानस्यैवाकार इत्यभिमतम् । न च स्वात्मभूतेनार्थाकारेण तस्य जन्यजनकभावः संभवति । स्वात्मनि क्रियाविरोधात् । ततोऽन्यश्चार्थ. कदाचिन्न गृह्यते । ज्ञानसंश्लिष्टासंश्लिष्टाकारद्वयाप्रतिभासनात् । न चार्थाकारदर्शनेनार्थस्य कारणत्वव्यवस्थानं भ्रान्तिज्ञानेऽप्यर्थाकारदर्शनात् । संवादिन एवाकारस्यार्थादुत्पत्तिरिति चेत । कुतोऽयमविनाभावः सिद्धः । किंच संवादोऽप्यर्थक्रिया वा स्यादर्थप्राप्तिर्वा । उभयमप्येतदज्ञानरूपं ज्ञानरूपं वा । अज्ञानरूपं चेत् । तत्कथं सिद्ध्येदिति महद्व्यसनम् । अथ ज्ञानरूपम् । तत्रापि द्वयी गति. । तदेव ज्ञानमपरं वा । यदि तदेव ज्ञानं पुनः पुनरुत्पद्यमानं संवाद. तद्भ्रान्तिज्ञानेऽपि स्यात् । तदपि हि पुनः पुनरुत्पद्यत एव । अथापरं स्पर्शादिज्ञानम् । तदप्यसत् । यतः केन विशेषेण चक्षुरादिविज्ञानस्य स्पर्शादिविज्ञानं संवाद उच्यते । न हि जैनवत्त्वया दर्शनस्पर्शनाभ्यामेकार्थस्य ग्रहणमिष्टम् । नापि पूर्वोत्तरकालविज्ञानानामेकविषयत्वं तत्कथं ज्ञानान्तरोत्पत्तिः पूर्वज्ञानस्य संवादः । तन्नार्थज्ञान-

---

१ ' ततोऽन्यत्वेऽर्थ. ' इति न. पुस्तके पाठः । २ अविनाभाव'-व्याप्तिः

योरपि कार्यकारणभावः प्रतीयते । नापि ज्ञानयोः । स्वात्मसंवित्तिमात्रनिष्ठत्वात् । न खलु कारणज्ञानेनोत्पन्नेन सता कार्यभूतमिदं मे ज्ञानमिति संवेद्यते । नापि कार्यज्ञानेन कारणभूतमिदं मे ज्ञानमिति । किं च । कार्यकारणभावग्रहणं तत्र न संगतिमुपपद्यते यत्र प्रतिसंधाता स्वीकृतः स्यात् । अथोच्यते प्रतिसंधातृस्वीकारो न संगतः प्रतिसंधेयत्वाभिमताभिर्बुद्धिभिर्भेदाभेदविकल्पाक्षमत्वात् । अभेदेऽपि स एव वा स्याद्बुद्ध एव वा । अत्र च प्रथमपक्षे कर्मणः, पक्षान्तरे कर्तुरभावात्क्व प्रतिसंधानार्थः । भेदेऽपि बुद्धिभ्यो भिद्यमानस्य जडस्य क्व प्रतिसंधानार्थः । बुद्धियोगाद्द्रष्टृत्वं प्रतिसंधातृत्वमिति चेत् । बुद्धिरेव तर्हि द्रष्टृ प्रतिसंधात्री चेति नियतस्वीकारे तद्योगादन्यस्य तथात्वमिति किमनेन याचितकमण्डनेन । बुद्धीनां कर्तृत्वाभावात् तन्निबन्धनस्याधिगन्ताधुना, फलस्याधुना प्रतिसंधातेति । तथाविधबुद्धिगतविशेषस्वीकारे तु किमपरेण कल्प्यं तावतैव पर्याप्तत्वाद्व्यवहारस्येति । तदपि नैयायिकानेव वराकान्विक्लवयति । य एकान्तेन बुद्धिभ्यो भिन्नं जडं चात्मानमास्थिषत न पुनस्तदभिन्नत्वेनात्मवादिनः स्याद्वादिनः । ननु तर्हि किमिति ते सौगतैः[1] सह कलहायन्ते । तैर्निराकृतैरपि तदभिन्नात्मवादिभिस्तत्त्वतो बुद्धीनामेव स्वीकृतत्वात् । यथा च तेषां प्रतिसंधानव्यवस्था तथा ताथागतानामिति चेत् । अलमनया प्रत्याशया । ते हि नाभिन्नमेवात्मानं ताभ्योऽभिदधति यतो बुद्धिभिरेव प्रतिसंधानोपपत्तिः स्यात्किंतु भिन्नमपि । नन्वेवमप्यात्मनो बुद्धिभ्यो भेदेनावस्थितेर्भिन्नसंतानात्मवत्कथं प्रतिसंधानघटनेति चेत् । उच्यते । विवक्षितात्मबुद्धीनां कथंचित्तादात्म्यम्, बुद्धीनां कथंचित्तादात्म्यपरिणामेनाप्यवस्थितेः । न खलु यथा भिन्नसंतानात्मना तासां भेदस्तथैकसंतानान्वितात्मनापि । ननु किमिदं सौगतमिन्द्रजालं यदात्मा बुद्धिभ्यो भिन्नोऽभिन्नश्चेति । इदं सौगतमेवेन्द्रजालं स्वगृहस्थितम्

---

१ सांदिह्याय ।

पि यन्न त्वया चेत्यते । सकललोकयात्रानिर्वाहाय च यत्कल्पनं । तथा हि त्वयापि तावच्चित्रज्ञानमुपगतमेव । तच्च नीलाद्याकारेभ्यो भिन्नाभिन्नं च । अन्यथा कथं तच्चित्रं स्यात् । तथैकान्तविविक्तबुद्धिमात्रसद्भावे प्रतिसंधानाद्यभावेन जनव्यवहारश्च कुतः संपद्यत इति । तदेवं क्षणभङ्गुरज्ञानार्थवादिना न कथंचित्कार्यकारणभावः प्रतीयते । तदप्रतीतौ चार्थक्रियासामर्थ्यं सत्त्वं वाद्यसिद्धत्वान्न साधनतां दधाति । यदपि सपक्षे वृत्त्या साधनस्य विरुद्धताविधुरतामभिधित्समानेन नीरदस्य सपक्षतासिद्धये क्षणिकत्वावधारणार्थं ' यद्यदा यज्जननसमर्थम् ' इत्याद्यवादि । तत्र किमिदं सामर्थ्यं नाम करणं शक्तिर्वा । न तावत्करणपक्षः पेशलः । साध्याविशिष्टतादुष्टत्वात् । तथा हि—करणस्य सामर्थ्यशब्दवाच्यतायां यज्जननसमर्थमिति यज्जननकारकमिति हेत्वर्थः । स एतत्करोतीति साध्यस्यापि भिन्नव्यावृत्तिकत्वेन सामर्थ्यकरणयोर्भेदाददोषोऽयमिति चेत् । असदेतत् व्यावृत्तिभेदस्यात्रायोगात्। तथा हि—अत्रायमनिमित्तः सनिमित्तो वा भवेत् । अनिमित्तश्चेत् । शान्तम् । अतिप्रसंगपराहतत्वात् । सनिमित्तश्चेत् । किमत्र निमित्तं व्यावर्त्यभेदद्वारेण व्यावृत्त्योर्विरोध इति चेत् । स किं मिथो व्यावर्त्यप्रतिक्षेपात्, उत व्यावर्त्याक्षेपप्रतिक्षेपाभ्याम्, उपाधिभेदाद्वा स्यात् । न तावदाद्यात् । न हि यथा गोत्वेनाश्वत्वं तेन च गोत्वं प्रतिक्षिप्यते। तथात्र सामर्थ्येन करणस्य करणेन च सामर्थ्यस्य प्रतिक्षेपोऽस्ति । तथात्वे वा यदि सामर्थ्येन करणं प्रतिक्षिप्यते तदा हेतोरसिद्धतेति । नापि व्यावर्त्याक्षेपप्रतिक्षेपाभ्याम् । यस्मादेतौ यत्रैव द्वयोः परापरभावस्तत्रैवोपपद्येते वृक्षत्वशिंशपात्वयोरिव । वृक्षत्वेन हि परेण य एवाश्वत्थकपित्थादय आक्षिप्यन्ते त एवापरेण शिंशपात्वेन प्रतिक्षिप्यन्ते । न चैवं सामर्थ्यकरणयोः संभवति । नाप्युपाधिभेदात् कार्यत्वानित्यत्ववत् । कार्यत्वस्य हि कारणमुपाधिः । अनित्यत्वस्य तु विनाशः । अत्र तु नेदृशः कोऽप्ययमभिधातुं शक्यः । शक्यतां वा तथापि

किं नात्र पश्यसि पुरः समुपस्थितमनवस्थादौस्थ्यं तेनापि तदन्तरस्यावश्यकरणीयत्वात् ।

अथाभिन्ना भवेदस्याः शक्तिः पर्यायलक्षणा ।
जितं जितं तदास्माभिर्भावस्य क्षणिकत्वतः ॥ ५.९० ॥

पर्यायशक्तिर्हि द्रव्यानतिरेकिणी कालान्तरे समुन्मिषन्ती भावभेदमकृत्वैव कथमासितुं शक्नोति । भिन्नाभिन्नपर्यायशक्तिपक्षोऽप्ययं क्षणिकत्वमनर्पयन्न कुशली । तुरीयपक्षोऽपि विधिप्रतिषेधयोरन्यतरनिषेधे तदपरविधानस्यावश्यंभावादस्तमेतीति ।

तुण्डमण्डपविडम्बनामिमां मुञ्च बालजनताविभीषिकाम् ।
शाक्यशिष्यक सखे सतां पुरः किं करोषि बत धूर्तचेष्टितम् ॥५.९१॥

एतेषु हि पक्षेषु तृतीय एव पक्षः कक्षीक्रियते । तत्र च न कश्चिदेव दूषणोन्मेषक्षणः ।

नन्वत्र पक्षे क्षणिकत्वलक्षणं निरूपितं पूर्वमुदग्रदूषणम् ।
न वाच्यमेतन्निरपात शर्करा क्षीरे यदेषा श्रितशीतले स्वयम् ॥५.९२॥

प्रियमेव ह्यस्माकं वस्तुषु क्षणिकत्वं द्रव्यांशद्वारेणाक्षणिकेषु । तेषु पर्यायांशद्वारेण क्षणिकत्वोपगमात् । क्षणिकैकान्तस्यैव दूषयितुमुपक्रान्तत्वात् । क्षणिकपर्यायेभ्योऽव्यतिरिक्तात्क्षणिकमेव द्रव्यं प्राप्नोतीति चेत् । न । व्यतिरिक्तत्वस्यापि संभवात् । अत्राह—अर्धजरतीयमेतत् । क्षणिकाक्षणिकं यदेकमेव सत्त्वेऽर्धजरतीयमेतत्प्रियमेव प्रमितितः सिद्धेः । यथा ह्येकैव कामिनी पलिताद्याधारतया जरती, समुन्नतघनस्तनादिधर्माधारतया त्वजरतीत्यभिधीयते तथैकमेव वस्तु तत्तदपेक्षया क्षणिकमक्षणिकं चोच्यते किमनुपपन्नम् । एतेन पर्यायविशिष्टं द्रव्यं द्रव्यविशिष्टः पर्यायः, उभयं स्वतन्त्रं शक्तिरित्यपि प्रत्युक्तम् । तुल्ययोगक्षेमत्वात् । अधिकश्चोभयं स्वतन्त्रमित्यत्र दृष्टान्तस्य साधनविकलताकलङ्कः । न खल्वन्यसामग्र्यां द्रव्यपर्यायौ स्वतन्त्रं कार्यं जनयत इति जैनाभ्युपगमः । परस्परापेक्षयोस्तयोस्त—

जनकत्वेन तेनाभ्युपगमात् । अथ द्रव्यस्यावान्तरजातिविशेषः शक्तिः । स किं द्रव्यपर्यायशक्तिभ्यामनतिरिक्तोऽतिरिक्तो वा । प्रथमकल्पे उक्तमेव दूषणम् । द्वितीयकल्पेऽपि न किंचित्प्रसाधकं प्रमाणम् । प्रत्यक्षस्य तत्राप्रवर्तनात् । अनुमानस्य च लिङ्गाभावेनोत्थातुमशक्तेः । एवं यावान्तरजातिविशेषस्वरूपसामर्थ्यस्य परेषामप्रसिद्धेः कुतः प्रमाणप्रवर्तनम् । प्रवृत्तावपि न करोति च विवादास्पदं बीजं कार्यं तो न तथा स्वरूपसामर्थ्यसमन्वितमिति विपर्यये पर्यवसानात्सिद्धसाधनता । न च तादृशं सामर्थ्यं दृष्टान्तेऽप्यस्माकमभीष्टमिति तस्य साधनवैकल्यं च । अथ केयं यदृच्छा न च कस्यचिद्विशेष इष्यते करणमकरणं च प्रोच्यत इति । नैतद्वाच्यम् । प्रत्यासत्तिसाहित्यस्वरूपस्य विशेषस्य स्वीकारात् । अवान्तरजातिविशेषस्य तु स्वभावभेदस्वरूपस्य तस्याननुभूयमानत्वात् । किं च । एतस्मिन्नुपेयमाने कल्पनागौरवमासज्यते । तथा हि—शाल्यादिबीजद्रव्यमवान्तरजातिविशेषविकलमेवानुभूयमानक्रमोत्पत्तिष्णुपर्यायपरम्परापरिगृहीतस्वरूपनिरूपा कार्यकोटीः करोति । एवमनन्तेष्वपि सर्वस्मिन्क्षुण्णे ( सर्वस्मिन् क्षुण्णे ) अनुपलभ्यमानजातिशक्त्यादिकल्पना कापटिकविद्येव विस्तरमात्रोपयोगिनी, इन्द्रियायतनीन्द्रियसाधकप्रमाणाविरोधप्रसङ्गश्चात्र । तथा हि यदि बीजादिगतविशेषः दृष्टमप्युपलभ्यानुपलभ्यमानः कार्यहेतुर्जातिविशेषः स्वीक्रियते तदा तावतैव पर्याप्तत्वात्किं सहकारिकारणकल्पनया । अथ तेऽपि स्वापेक्षमन्तरेण उत्पन्ना इति कल्पनीयास्तर्हि द्वितादिसहकारिषु किमुत्तरम् । न खलु तेषां ज्ञानानुत्पत्तौ व्यापारदर्शनमस्ति । अतीन्द्रियत्वात् । एवं च पुनरनन्तकल्पना स्यात् । अथ ज्ञानाभावेऽपि दृष्टकारणान्तरसामर्थ्ये ज्ञानादर्शने पश्चाद्दर्शने च किंचिदन्यदपेक्षणीयमस्तीति कार्यविशेषात्कल्पनेति चेत् । सत्यम् । अवान्तरजातिभेदमात्रात्सामग्री तत्रोदयादिके तावता कार्यस्य निर्वाहस्योपपत्तिभावात् । किं त्वेवमपि यत्नस्य द्रव्यपर्या-

यशक्तिव्यतिरेकोऽवान्तरजातिविशेषो नोपपद्यते । तथाहि— किमसौ शालेः संग्राहकः स्यात्प्रतिक्षेपको वा । शालित्वमपि तस्य संग्राहकं स्यात् प्रतिक्षेपकं वा । आद्यकल्पे शिलातल्पशायिनोऽपि शालेरङ्कुरोत्पादनप्रसंगः । तज्जनकजातिविशेषसद्भावात् । अथ तस्य प्रतिक्षेपकोऽसौ तदा केदारोदरकर्दमस्यापि शालेः कुतस्त्यमङ्कुरकरणं तस्याभावात् । शालित्वमपि यदि तत्संग्राहकं तदा कोद्रवादेः कुतोऽङ्कुरोत्पत्तिः स्यात् । स्वसंग्राहिकशालित्वस्य तत्राभावेन तस्याप्यभावात् । अथ तत्तस्य प्रतिक्षेपकं तदा शालेर्न कदाप्यङ्कुरोत्पादो भवेत् तस्य तत्राभावात् । अथ जातिविशेषशालित्वेऽन्योन्यं न संग्राहकप्रतिक्षेपकौ । लोकोत्तरमेतत् । लौकिकसकलजातीना संग्राहकप्रतिक्षेपकत्वेनावस्थितेर्विरोधाविरोधाभ्यामन्यस्य प्रकारस्याभावात् । अथ यः शालिभेदो जनकस्तस्यैव संग्राहको जातिविशेषः प्रतिक्षेपकोऽपरस्य शालित्वमप्यन्त्यशालिक्षणसंस्थस्यैव जातिविशेषस्य संग्राहकं, प्रतिक्षेपकमन्यस्येति व्यक्तिभेदेन संग्रहप्रतिक्षेपावपि न विरुद्धाविति चेत् । अस्तमितमिदानीं तदतज्जातीयत्वविरोधेन परिदृश्यमानम् । कतिचिद् व्यक्तिप्रतिक्षेपेऽपि परस्परं तुरङ्गकुरङ्गमयोरपि संभेदस्य क्वचन संभाव्यमानत्वात् । किं च । यो यस्य जातिविशेषः स चेत्तं व्यभिचरेत् । व्यभिचरेदपि शिंशपापि पादपम् । अविशेषात् । तथा च दत्तस्त्वयैव स्वभावहेतुमूले कुद्दालः । अथाकालमेष प्राणिति स्वभावहेतुरनुपहतेन स्वेन विपर्ययबाधप्रमाणयुपा । अत्र तु तन्नास्तीति चेत् । स्यादेतत् यदि त्वदायत्ता वस्तुव्यवस्थितिः स्यात् । न चैवम् । अतोऽत्रापि तदस्त्येव अन्यथा स्वभावत्वस्याप्यनुपपत्तिः । उपपत्तौ वा किं बाधकचापाडम्बरेणेति । अपि च विशेषो विशेष प्रति प्रयोजकः । अवान्तरजातिविशेषश्च कं कार्यगतं विशेषं प्रति प्रयोजकः । अङ्कुरत्वं प्रतीति चेत् । एवं तर्हि न बीजस्याङ्कुरं प्रति प्रयोजकत्वमिति शिलाशकलादेरबीजादपि तदुत्पत्तिप्रसक्तिः । अथ न शिलादावबीजे बीजस्य

विशेष समस्ति यतस्ततोऽप्यङ्कुरोत्पत्ति स्यादिति चेत् । तर्हि शाले-र्विशेष कोद्रवादावशालो नास्तीति कथ ततोऽप्यङ्कुर स्यात् । अथ यथाऽशालिस्वरूपकोद्रवादावसौ विशेषोऽस्ति तथाऽबीजशिलाशकला दावपि विद्यते किंतु बीजत्वेन सहैकस्मिन्नर्थे समवेत एवाङ्कुर प्रति प्रयोजक इति चेत् । नैतदनुपद्रवम् । कोद्रवादावपि तस्य भावेन शालित्वव्यभिचारे शालित्वैकार्थसमवायेनेव शिलादावपि भावेन बीजत्वव्यभिचारे बीजत्वैकार्थसमवायेनापि नियन्तुमशक्यत्वात् । विशेषाभावात् । ततश्च यो यथाभूतो यथाभूतमात्मानमन्वयव्यतिरेकावनुकारयति तस्य तथाभूतस्यैव तथाभूते सामर्थ्यम् । तद्विशेषास्तु कार्यविशेष प्रति प्रयोजका शाल्यादिवदिति न कश्चिद्द्रव्यपर्यायशक्तिव्यतिरेकोऽवान्तरजातिविशेष कार्यहेतुरस्तीति नायमपि शक्ति । नापि पर्यायनैकल्यप्रयुक्तकार्याभाववत्त्वम् । व्याहतत्वात् । तथाहि—य सहकारिढौकितातिशयस्वरूपपर्यायवैकल्ये सति कार्याभाववान् स कथ तत्पर्यायवियोगे कार्यवान् स्यात् । यस्मात एव य न करोति तत्तत्सद्भावे तत्करोत्येवेति तु स्यात् । एव चोत्पश्यता जैनैनयवेनयन्ती स्थैर्यसिद्धेरेवमवश्यभावात् । तथाहि—येनैव द्रव्य पूर्वमनुच्छूनतापर्यायेण विराहितमेव सत नाङ्कुर करोति तेनैव तेन परिगत सदुत्तरकाल करोत्येव । ननु पर्याय एवैक कारकोऽकारकश्चास्तु योऽस्तु किं द्रव्येणेति चेत् । न । तस्यापि व्याप्रियमाणस्योपलब्धे । अस्तु तर्हि कारक पर्यायव्यापारोपलब्धि । अनुपलभ्यमानव्यापारस्य तु तस्य पूर्वं कारकत्वस्वीकरणम् अमूल्यक्रयणम् । असदेतत् । द्रव्यरूपतया तदानीमपि व्याप्रियमाणस्योपलब्धेः व्यापारानुपलम्भस्यासिद्धे । तथाहि—कुशूलवर्तिनो बीजस्य शिलाशकलादङ्कुरानुकूल कश्चिद्विशेष समस्ति न वा । न तावन्नास्ति शिलाशकलपरिहारेण प्रेक्षाकारिणा बीज एव प्रवृत्तेरनुपपत्ते । अथास्ति तस्य परम्परयाऽङ्कुरकारणप्रथमबीजक्षणोत्पादनात् । कदा पुन परम्परयापि तथाभूत बीजक्षणमयमुत्पादयिष्यति

तत्र संशय इति चेत् । स पुनः किंरूपः किं सहकारिषु समवहितेष्वपि तेषु करिष्यति न वेति । किं वा व्यवहितेष्वपि तेषु करिष्यति न वेति । यद्वा यदा सहकारिसमवधानं तदैव करिष्यत्येव किंतु कदा सहकारिसमवधानमिति संदेह इति । न तावत् पूर्वः । सामान्यतश्चेद्बीजस्य कारकत्वमवधृतं तदेतादृशसंशयस्य कावकाशः । अवकाशे वा कारकत्वावधारणमपि बीजस्य न स्यात् । नापि द्वितीयः । सहकारिणा सहकारित्वं चेदनवगतं तदा नेदृशसंशयस्यावसरः । तस्मिन् वा सहकारिणस्तत्त्वेनावगता न भवेयुः । तृतीये तु तत्सन्तानान्तःपातिनो बीजक्षणाः सकलाः समानशीलाः प्राप्नुवन्ति । यत्र तत्र सहकारिसमवधाने सति करणनियमात् सर्वत्र च सहकारिसमवधानसंभवात् । समर्थ एव क्षणे सहकारिसमवधानमिति चेत् । तत्किमसमर्थे सहकारिसमवधानमेव न भवति । सत्यपि वा तत्समवधाने न तस्मात्कार्यजन्म । न प्रथमकल्पः । पाषाणखण्डादावङ्कुरकरणासमर्थेऽपि पाथःपृथिवीपवनातपसम्बन्धदर्शनात् । नापि द्वितीयः । पाषाणखण्डादिव सहकारिसाकल्यवतोऽपि बीजात् कदाचिदङ्कुरानुत्पत्तिप्रसङ्गात् । एवमपि स्यात् । को दोष इति चेन्न तावदिदमुपलब्धम् । आशङ्क्यत इति चेत् । न । तत्समवधाने सत्यकरणवत् विरहेऽपि करणमाशङ्क्येत । आशङ्क्यतामिति चेत् । तर्हि बीजविरहेऽप्याशङ्क्येत । तथा चातिनिष्कलङ्का भिक्षूणां प्रत्यक्षानुपलम्भपरिशुद्धिः । एवं चास्ति स कश्चिद्विशेषः कुसूलस्थबीजस्य, येनान्यपरिहारेण प्रेक्षस्तत्रैव प्रवर्तते । स च कोऽन्यो द्रव्यरूपकारकशक्तिव्यतिरेकेणेति न पर्यायवैकल्यप्रयुक्तकार्याभाववत्त्वमपि शक्तिः । अथ किमनेन विकल्पेन्द्रजालेन तस्य भावस्य यादृशश्चरमक्षणेऽसमर्थो क्षेपक्रियाधर्मा स्वभावतस्तादृश एव चेत्प्रथमक्षणेऽपि तर्हि तदैव प्रसह्य कुर्वाणो गीर्वाणशापेनापि नापहस्तयितुं शक्यत इति चेत् । स्यादेतदेवम् । यदि तादृश एव तदानीं स स्यात् किं त्वन्यादृशोऽपि चरमक्षणे हि सहकारिसंनिधानाविर्भूतपर्यायपेशलोऽसौ

स्वभाव । प्रथमक्षणे तु तद्विकल्प । न चैव भेद एव कारकरूपस्य तस्यैव कथंचित् पूर्वमपि भावात् इत्युक्तमेव । एवं च न किंचिद्विचार्यमाणं सामर्थ्यं प्रसङ्गहेतुत्वेन स्थेमानमास्तिघ्नुत इति कृतं तदुद्धोषणेन । एतेन यदप्युच्यते । " प्रसङ्गहेतौ व्याप्तिप्रसाधनाय जननमन्तरेण सामर्थ्यव्यवस्थाया सर्वस्य सर्वत्र शक्तव्यवहारप्रसङ्ग । नियत श्चाय प्रतिपन्नो व्यवहार. । न चास्य जननादन्यनिमित्तमुपपद्यते । ततो जननाभावेऽपि पक्षे नियमवत्त्वालक्षणव्यापकवियोगे नात्मसत्तया नियुज्यमानोऽय जनन एव विश्राम्यतीति समर्थव्यवहारगोचरत्वमात्रानुबन्धि सिद्ध जननमिति व्याप्तिसिद्धि." इति । तत्प्रतिक्षिप्तमवगन्तव्यम् । समर्थव्यवहारगोचरस्यापि बीजस्याङ्कुराकरणदर्शनात् । नासौ मुख्यस्तत्र व्यवहार । तस्य जननिमित्तत्वात् । जननमन्तरेण सामर्थ्यव्यवस्थाया सर्वस्य सर्वत्र शक्तव्यवहारप्रसङ्गात् अनियतोऽसौ स्यात् इत्युक्तमेवेति चेत् । उक्तमेतत् । किं तु कीदृश जनन मुख्यसमर्थव्यवहारहेतुरित्यप्युच्यताम् । एतदप्यनपेक्षाकारित्वरूपमुक्तमेवेति चेत एतत्प्रतिविधानमप्युक्तमेव मा विस्मारि । नियमवत्त्व च शक्तव्यवहारस्य तथा रूपपर्यायसाहित्ये सत्येव जननमसति साहित्येऽजननमेवेत्येवस्वभावत्वेऽपि कारणस्योपपद्यते । ततश्च सहकारिविरहजननाभावेऽपि शक्तव्यवहारस्य दर्शनात् तेनास्य व्याप्तिसिद्धि । तथा च प्रसङ्गविपर्ययप्रयोगयोरप्रवृत्तेर्नानूते क्षणिकत्वासिद्धेन सपत्न कश्चित् । ततश्च यदुक्त ' सपत्नीकृते जलमुचि विलोकनात ' इत्यादि तदसमञ्जसमेव । किं च क्षणिकैकान्ते कार्यकारणभावस्यानुपपत्ते कथंचित् क्षणिके तूपपत्तेर्विरुद्धमर्थक्रियाकारित्वरूप सत्त्वम् । तथाहि—अत्र किमेकस्मात् कारणादेक कार्यमुत्पद्यते । अनेकस्मादेकम् । एकस्मादनेकम् अनेकस्मादनेक वा । नाद्य पक्ष । एकस्मात्प्रदीपादिकारणाद्‍ग्राम्यन्तर्नेत्रदोषनिमिरस्तोमापनयनाद्यनेककार्यस्य दर्शनात् । नापि द्वितीय । अनेककारणोत्पाद्यस्यैकत्वायोगात् । न खलु कुलालमृत्पिण्डसूत्रखण्डा-

घनेककारणकलापोत्पाद्यस्य कुम्भस्यैक्यं युक्तम्। कारणभेदोपनीततदात्मभूतधर्मनानात्वेन तस्यापि नानात्वात्। कुलालेन हि संस्थानविशेषो मृत्पिण्डेन मृद्रूपतासूत्रखण्डेन चक्रादिच्छेदः कुम्भे क्रियते। अथ संततेर्धर्मा ये परस्परं विरोधिनोऽविरोधिनश्च। न तु धर्मा इत्येव विरोधोऽविरोधो वा। नहि ब्राह्मण्यं वैयाकरणत्वेनाविरुद्धमिति चण्डालत्वेनाप्यविरुद्धमभिधातुं शक्यम्। न चाब्राह्मण्यव्याप्तचण्डालत्वेनेव वैयाकरणत्वेनापि विरुद्धम्। यथा चात्र ब्राह्मण्येतरत्वमेव विरुध्यते न वैयाकरणत्वम्। तथा चतुरस्रतादिसंस्थानविशेषेण परिमण्डलतादिसंस्थानविशेष एव विरुध्यता न तु मृत्स्वभावतादीति कथं संस्थानमृद्रूपताद्यविरुद्धधर्माध्यासादनेककारणोत्पाद्यस्यापि कुम्भस्यानेकता स्यात्। एतदपि परस्य किमपि कुट्टनीकलाप्रागल्भ्यम्। यदयं तावन्निखिलवस्तूना निरंशतामुद्बाहुः फूत्करोति। सन्ति ते धर्मा इति च व्याचष्टे। अथ परमार्थतो धर्माणामभावाद्वस्तूना निरंशतोच्यते कल्पनोपरचितत्वेन तु तेषा भावाद्धर्माः सन्तीत्यभिधीयत इति चेत्। ननु कल्पनाप्यनिमित्ता सनिमित्ता वा स्यात्। अनिमित्ता चेत्तर्हि कौतस्कुती नैयत्येन तस्या. प्रवृत्ति.। तथा च ब्राह्मणोऽपि चण्डालश्चण्डालोऽपि ब्राह्मणोऽभिधीयेत। सनिमित्ता चेत्। किमस्या निमित्तम्, अन्यव्यावृत्तिरिति चेत्। न तर्हि कल्पनामात्रारोपितत्वं धर्माणाम् अन्यव्यावृत्तेस्तन्निबन्धनस्य स्वयमुक्तत्वात्। तस्याश्च वस्त्वंशरूपतया धर्मत्वात्। न किंचिदसौ तत्कुतोऽस्या वस्त्वंशरूपतया धर्मतेति चेत्। तथाभूतापि सा कल्पना नैयत्यनिमित्तं भवतीति न प्रियापि शपथमन्तरेण प्रत्येति। अथास्य साधारणकारणोपजनितत्वं कल्पनानैयत्यनिमित्तं तेन ब्राह्मणजन्यो ब्राह्मण एवोच्यते न चण्डालः। ननु ब्राह्मणजन्यत्वं कल्पनानैयत्यनिमित्तं भवत् न किंचित्, किंचिद्वा। न किंचिच्चेत् तर्हि न किंचिदनेन। किंचिच्चेत्तर्हि किं तद्धर्मादन्यद्भवतु। सन्ति तस्माद्वस्तूनां केचित् कथंचिदात्मभूता धर्मा यतो न व्यवहारसंकरः। अथाऽऽ-

त्मता यथा कथचिद्धर्मास्तथापि चतुरस्रतापरिमण्डलतादयो विरोधेनैव ते धर्मिणं भिन्दन्ति । न पुन सस्थानमृद्रूपतादयोऽविरोधिन इत्युक्तम् । तदसत् । सस्थानमृद्रूपतादीनामपि कथचिद् विरुद्धत्वात् । अन्यथैक्यापत्ते । चतुरस्रतापरिमण्डलतादीनामपि कथचिदविरुद्धत्वात् । अन्यथान्यतरस्य धर्मास्तित्वाभावप्रसगात् । सर्वथा विरोधस्तु न क्वापि सगच्छते । ननु तर्हि श्रोत्रियोऽपि श्वपाक श्वपाकोऽपि श्रोत्रिय प्राप्नोतीति चेत् । उच्यते । यद्यत्र कथचिदित्युपक्षेप कुरुषे तदा तत्प्राप्तावुल्लव कारयाम । यदैव हि जीवद्रव्यमादिपर्यवसानशून्ये ससारे श्वपाकपर्यायपरिणतमभूद्यदि वा तदेवेदानीं श्रोत्रियपर्यायपरिणतमिति द्रव्यरूपतया श्रोत्रियोऽपि श्वपाक सोऽपि श्रोत्रिय किं न स्यात् । ननु यदैवासौ श्रोत्रियस्तदैव श्वपाक किं न भवति । न भवति पर्यायरूपतया तयोर्विरोधसद्भावात् । क्रमभाविपर्यायाणामनेककालत्वात् । सर्वथा विरोधे तु तयो श्रोत्रियद्रव्यस्यैककालभावित्वेऽपि श्वपाकस्याभावापत्त्या सर्वथैवाभावप्रसग । अन्यथा सर्वथा विरोधानुपपत्ति । ननु तथापि कथ सस्थानमृद्रूपतयोर्भेदाद्घटस्य भेदोऽभिधीयते । तयो कथचिदपि विरोधाभावात् । यद्यवच्छेदेन हि यद्विधानं, यद्विधानेन वा यद्व्यवच्छेद तत्तेन विरुद्धम् । न च मृन्मयत्वविधानेन पृथुरताद्यवच्छेदशङ्कापि सभवति । तत सस्थानमृद्रूपतयोर्विरोधात् सिद्धे कथ तदाधारधर्मिणो भेद स्यात् । यत कारणभेदोपनीततदात्मभूतधर्मनानात्वेन तस्य नानात्वादित्युच्यमान समीचीन स्यादिति । अत्रोच्यते । यदि तावदेतल्लक्षणलक्षित परस्परपरिहारविरोध सस्थानमृद्रूपतयोर्नास्ति। मा भूत् । भेदस्तु तयोर्केनापि प्रतिषेद्धुमशक्य । प्रतिषेधे तु तस्य तयोरन्यतरदेव स्यात् । न त्वेवम् । अविरुद्धौ भिन्नावपि धर्मौ कथ धर्मिणं भिन्द्याताम् । उच्यते । तद्धर्मितादात्म्यात् । धर्मिणा हि विभिन्नाना धर्माणा तादात्म्य तदा स्यात् यदि धर्म्यपि कथचिद्

भिद्येत । तस्माद्भिन्ना अपि धर्मा धर्मिस्वाभाव्यभाजो धर्मिभेदका एव । एवं चानेककारणोपजनितं नैकं भवितुमर्हतीति सिद्धम् । एतेन तृतीयपक्षोऽपि प्रतिक्षिप्तः । अनेककार्यमुपादानसहकारिस्वभावेनैकस्योत्पादयतो विरुद्धधर्माध्यासेनैकत्वानुपपत्तेः । एकत्वे तु तस्योपादानसहकारित्वयोरन्यतरत्वापत्त्याऽन्यतरस्यैव कार्यस्योत्पादप्रसङ्गः । यत्तु भट्टोद्भटः प्राचीकटत् । 'न ह्यत्र कारणमेव कार्यात्मतामुपैति यत एकस्याकारणात्मन एककार्यरूपतोपगमे तदन्यरूपाभावात् तदन्यकार्यात्मतोपगतिर्न स्यात् । किं त्वपूर्वमेव कस्यचिद्भावे प्रागविद्यमानं भवत्तत्कार्यम् । तत्र विषयेन्द्रियमनस्काराणामितरेतरोपादानाहितरूपभेदानां सन्निधौ विशिष्टस्वेतरक्षणभावे प्रत्येकं तद्भावाभावानुविधानादनेकक्रियोपयोगो न विरुध्यते । यत एकक्रियायामपि तस्य तद्भावाभावितैव निबन्धनं सा चानेकक्रियायामपि समाना' इति । तत्रोच्यते । मोपगात्कारणं कार्यात्मताम् । ते तावज्जननस्वभावा इष्टा एव । ततश्च तत्सन्निधौ विज्ञानलक्षणकार्यसंभवात्तज्जननस्वभावतैषामवध्रियते । कार्यस्वभावापेक्षया कारणस्य जनकरूपतावस्थापनात् । ततो विज्ञानजननस्वभावेभ्यः प्रत्येकं कथं तदन्यकार्यसंभवः । तद्भावे वा तेषां तदन्यजननस्वभावता स्यात् । ततश्च विज्ञानमेव न कुर्युः । तदन्यजननस्वभावत्वादिति । य पुनरयमत्र व्याजहार परिहारम् । नैष दोषः । तेषामनेककार्यक्रियास्वभावत्वात् । तथाहि—ते तदवस्थाया प्रत्येकं विशिष्टसजातीयेतरक्षणजननात्मकास्तेषां तत्सत्तानन्तर्यदर्शनात् । तत्र विज्ञानजननस्वभावतैवेति तस्या जननस्वभावता व्यवच्छिद्यते । तस्या एव प्रतियोगित्वात् नान्यजननस्वभावता । न चातस्तेषामनेकात्मता स्यात् । 'एकस्यैवात्मातिशयस्यानेककार्यहेतुत्वात्' इत्यादि । तत्राय जरद्विजन्मा महानुभावोऽभिनवमेतमुत्तरमार्गमस्मान् प्रति प्रकाशयति । अनेनैव नैयायिकतस्करः सर्वस्वापहाराय प्रवेक्ष्यति क्षणादिति तु नावेक्षते इति

किमत्र नूनम् । सोऽपि हेतुं न वक्तुं शक्तः । अतिस्थिरैकस्वरूपस्यापि भावस्यायमेकः स्वभावो यत्क्रमिककालाभिमतकालानेककार्यकर्तृत्वं नाम । तथा हि— असौ स्थिरो भावस्तत्सहकारिसन्निधानावस्थासु तत्तत्कार्यजननात्मकः । तस्मिन् सत्येव तेषां दर्शनात् । नन्वेवं व्योमादौ सत्येव घटादिरुत्पद्यत इति सोऽपि तद्धेतुकः स्यात् । एवं तर्हि त्रिलोकीकलितकलशादिसकलवस्तुक्षणसत्त्वानन्तरं सर्वे समुत्पद्यन्तीति तदपि तद्धेतुकं स्यादिति न मात्रयापि विशेष इत्यास्तां तावदेतत् । तत्र तत्काले जलाहरणस्वभावतैवेति घटादेस्तत्काले तज्जननस्वभावता व्यवच्छिद्यते । तस्या एव प्रतियोगित्वान्न तु कालान्तरे । तथा च कालभेदेन तज्जननातज्जननस्वभावता धर्मभेदेऽपि न धर्मिणो भेदो यथा त्वन्मते रूपस्य विज्ञानजननरसजननभेदेऽपीत्यादि तु नैयायिककोत्या न स्थिरत्वैकान्तात्प्रमुच्यसे । अथ किमनेन नैयायिककण्टकोपढौकनेन, तत्र किमुत्तरमिति चेत् । यद्यस्मदुत्तरे कुतूहलमायुष्मतस्तदा तदप्यदूर एव नैयायिकशिक्षायाम् वक्ष्यमाणमाकर्णयिष्यसि भोत्स्यसे च मा त्वरिष्ठाः । यच्चायमेव जगाद । 'एकस्यानेकक्रियानभ्युपगमे च योऽयं रूपरसगन्धस्पर्शविशेषाणां क्वचित् सहभावनियमः प्रमाणपरिदृष्टः स न स्याद् भिन्ननिमित्तानां सहभावनियमायोगात्' इति । तदपि नास्माकं दूषणम् । एकान्तेन भिन्ननिमित्तजन्यत्वस्य विवक्षितरूपादिष्वस्माभिरनभ्युपगमात् । रूपरसादिसमुदायात्मकैकधर्मिणा द्युपादानधर्मिस्वभावा एव ते समुत्पद्यन्ते । तत्र कथं सहभावनियमाभावसंभावनापि स्यात् । यथा च तेषां तद्धर्मितादात्म्यं तथा कथंचित् रूपाद्यात्मकैकधर्मिसिद्धावभिधास्यते । यस्त्वेव नोपेयिवान् तस्यैकहेतुजन्यत्वेऽपि तेषां सहभावनियमो मनोरथमात्रमेव । तथा हि कारणे व्यतिक्रान्ते परस्परमेकान्तव्यतिरिक्ता रूपादयः प्रादुर्भवन्तः सहैव भवन्तीत्याशापिशाचिकैवेयम् । अथ चतुर्थपक्षो रूपादिक्षणपुञ्जरूपा हि पूर्वा सामग्री सन्तानवृत्त्या

प्रवर्तमाना सरूपामुत्तरोत्तरां सामग्रीमारभते । तदप्यसद् । यतः समग्रेभ्यः सामग्री न भिन्ना । अपसिद्धान्तापत्तेः । किंतु समग्रैव । तत्र च पूर्वसमुदायिनोत्तरसमुदायारम्भे तदन्तरगतं समुदायिनमेकैकमेकैक एवोत्पादयेत् सर्वे संभूय वा । नाद्यः पक्षः । एकस्मादेकोत्पत्तेः प्रतिषिद्धत्वात् । अनेकस्मादनेकोत्पत्तिप्रतिज्ञापरिभ्रंशापत्तेश्च । नापि द्वितीयः । यत एकैकसमुदायिनिष्पत्तौ सर्वसमुदायिनां क्रमेण युगपद्वा व्यापारः स्यात् । क्रमपक्षे क्षणिकत्वक्षतिः । युगपत्पक्षे तु निकुरम्बरूपं कार्यं निकुरम्बरूपात्कारणादुत्पन्नमिति कारणप्रविभागे नियमाभावात् । इदं रूपम्, एष रस इत्येवंरूपादिकार्यप्रविभागो न स्यात् । सर्वं रूपं रसो वा स्यात् एकस्मान्निकुरम्बादुत्पन्नत्वात् । अथ निकुरम्बान्निकुरम्बस्योत्पत्तावपि न रूपादीनां स्वरूपसंकरप्रसंगः । पूर्वरूपादिक्षणैरुपादानसहकारितया सामग्रीभेदेन रूपादिक्षणानामुत्पादनात् । यदि हि रूपक्षणो रूपवद्रसादिक्षणान्तरं प्रति उपादानं स्यात्तदा स्याद्रसस्यापि रूपतेति । तदप्यनुपपन्नम् । हेतुरूपाणां रूपादीनामेकस्वभावत्वेनोपादानसहकारिकल्पनाबीजस्याभावात् । अन्यथा तेषां भिन्नस्वभावतापत्तिः । नहि येनैव स्वभावेनोपादानतैषां तेनैव सहकारिता । अभिधानमात्रभेदापत्तेः । इति सामग्रीभेदाद्रूपरसादिफलभेदो दुःस्थित एव । सर्वेषां सर्वजननस्वभावत्वाददुःस्थित इति चेत् । कथं तर्हि तावद्भ्यस्तावतामुत्पादे सर्वेषां रूपादिकार्याणां रूपादित्वेन जातिभेदो निरंशता च स्यादिति शोभनमदुःस्थितत्वम् । एकस्वभावानेकरूपजत्वे ह्यमीषां कार्याणां रूपादीनां सर्वेषां तुल्यतापत्तिः । येभ्य एवैकस्वभावेभ्योऽनेकेभ्य एकमुत्पन्नं तेभ्य एवान्यदपीति कृत्वा स्वभाववैचित्र्यं वा प्राप्नोति । एकैकस्य तावत्तावत्स्वभावजन्यत्वादित्यलङ्घनीया न्यायमुद्रा । अथ किमिदमात्मीयपक्षदोषैः परपक्षोद्धूलनमुपसंक्रान्तम् । हेतुस्वभावसंक्रान्तिपक्षे ह्ययं दोषः । तत्र ह्येकस्वभावानेकरूपादीनामेव तथा भवनमिति

सर्वेषां कार्याणां तुल्यता स्वभावनैचित्र्यं वा अनिवारितम् । यदा तु प्रतीत्योत्पादमात्रेण कार्योत्पादस्तदा न कश्चिद्दोष । तदिदं पिशाचभयात् पितृवनसमाश्रयणम् । नहि कथंचिद्धेतुस्वभावसंक्रान्तिमन्तरेण कार्योत्पाद एव युज्यत इति कार्यकारणानेकान्त उपपादयिष्यते । कश्चाय प्रतीत्योत्पाद इति म त्रस्फोट क्रियता तदनन्तरभावित्वमिति चेत् । नैतत् क्षणिकैकान्तवादिनोऽशेषतत्कालभाविभावसाधारणत्वेन हेतुफलभावनियमहेतु । तथा हि– विवक्षितहेतुक्षणानन्तरं तत्कालभावि सर्वमेव त्रिभुवनोदरवर्ति क्षणजातमुत्पद्यते। ततस्तत्स्वरूपाद्यननुवेधतुल्यतायामयमेवास्य हेतुरस्यैव वास्य फलमिति कुतस्त्यो नियम । तिरस्क्रियन्त करणतिमिरमालोच्यतामेतत् । किमत्रालोच्यम् । हेतुफलस्वभावो नियमसिद्ध सर्वस्य सुस्थितत्वात् । तथा हि– तयोरेव हेतुफलयो स स्वभावो येन स एव तस्यैव हेतुस्तस्यैव तस्यैव च फलमिति । एतदप्युपन्याससामर्थ्योपदर्शनमात्रसारम् । एवमन्वयापत्ते । अन्यथा शब्दार्थायोगात् । तथा हि–स्वो भाव स्वभाव इत्यात्मीया सत्ता । किमुक्तं भवति । तस्यैव हेतोरियमात्मीया सत्ता । यदनन्तरं भवत्तदेव तत्कार्यमिति तस्यैव तथा भवनेऽन्वयसिद्धि । अतत्स्वभावत्वेन हेतोर्विवक्षितहेत्वनन्तरं न विवक्षितकार्यात्पाद । उत्पादे वाऽतिप्रसग इति कुतो हेतुफलभावनियम । नन्वलमनेन वाक्छलेन तस्याय स्वभाव स्वधर्मो यदुपगच्छति तस्मिन्सदनन्तरं तदेव भवति । स्यादेतदेवम् । यदि तदाऽन्यन्न भवेत् । भवति च । किं तेन भवता न तद्विवक्षिताकारणादिति चेत् । विवक्षितकारणाद्विवक्षितमेव कार्यं भवतीत्यत्र किं नियामकम् । तत्स्वभाव एवेति चेत् । नासौ तत्स्वरूपाद्यननुवेधैकरूपे तदनन्तरभावित्वमात्रेण गम्यते । तस्याशेषतत्कालभाविभावसाधारणत्वादिति परित्यज्यतामसदभिनिवेश । तेऽप्यन्याऽन्यतोऽपि भवन्ति । तत्तु त एवेति विशिष्टसत्स्वभावत्वावगतेरदोष इति चेत् । नैतद्वाच्यम् । विवक्षितानामन्य-

दाऽभावेनान्यस्माद्भावासिद्धेर्विशिष्टा हि ते रूपा ( ? ) स्तदैव भवन्ति नान्यदा । सामान्येन तु विवक्षितकार्यस्याप्यन्यतः सिद्धिः । यथाहि तत्कालभावभाविसजातीयवस्तूनि कालान्तरे कारणान्तरेभ्यः प्रभवन्ति । तथा विवक्षितकार्यमपि विवक्षितकारणकार्यं न स्यात् । एवमपि तदेव तज्जननस्वभावमितरदेव च तज्जन्यस्वभावमित्यभ्युपगमे न्यायबाधा । एवं भूतस्य वाङ्मात्रेण स्वभावान्तस्याप्यभिधातुं शक्यत्वात् । तथा ह्येवमपि वक्तुं शक्यत एव । मृत्पिण्ड एव पटजननस्वभाव. पट एव तज्जन्यस्वभाव. । एवं तन्तव एव घटजननस्वभावा घट एव तज्जन्यस्वभाव इति हेतुफलभावापत्त्या न्यायबाधेति । मृत्पिडादिपटाद्योर्देशभेदेनेत्थं तत्स्वभावत्वकल्पना विरुध्यत इति चेत् न । तत्तत्स्वभाववैचित्र्येण मृत्पिण्डादिघटाद्योः कालभेदेनेव देशभेदेनापि तयोर्युष्माकं विरोधासिद्धेः । मृत्पिण्डोऽपि हि युष्माकं भिन्नक्षणघटजननस्वभाव एव । एवं पटमधिकृत्य भिन्नदेशपटजननस्वभावत्वेऽप्यस्याविरोध एव । घट एव मृत्पिण्डरूपानुकारो दृश्यते नेतरत्रेति घट एव तद्धेतुको न पट इति चेत् । अस्त्येतत् । किं त्वसौ न तत्स्वरूपाद्यनुवेधमन्तरेण । ततः किमिति चेत् । अनिवारोऽन्वयः । किं च । किमुपादानकारणस्य स्वरूपम् । किं स्वनिवृत्तौ कार्यजनकत्वमाहोस्विदनेकस्मादुत्पद्यमानैककार्ये स्वगतविशेषाधायकत्वमुत समनन्तरप्रत्ययत्वं नियमवदन्वयव्यतिरेकानुविधानत्वं वा भवेत् । प्रथमपक्षे कथंचित्स्वनिवृत्तिः सर्वथा वा । कथंचित् चेत् परमतप्रसंगः । सर्वथा चेत् । सहकारिणामप्युपादानत्वापत्तिः । द्वितीयपक्षेऽपि स्वगतानां कतिपयशेषाणामाधायकत्वं सकलविशेषाणां वा । तत्राद्यकल्पे रूपस्य रूपज्ञानं प्रत्युपादानभावः प्रसज्येत । स्वगतकतिपयविशेषाधायकत्वाविशेषात् । रूपोपादानत्वे च रूपज्ञानस्य चार्वाकवद्वितीर्णः परलोकाय जलाञ्जलिः । द्वितीयविकल्पे तु कथं निर्विकल्पात् सविकल्पोत्पत्तिरूपाकारात्समनन्तरप्रत्ययाद्रसाकार-

प्रत्ययोत्पत्तिर्वा स्वगतसकलविशेषाधायकत्वाभावात् । किं च । स्वगतसकलविशेषाधायकत्वे सत्यात्मनोपादेयक्षण एवास्योपयोगात् तत्रानुपयुक्तस्यसमानान्तराभावात्क्रमाक्रमाभ्यामन्तर्गतमन्यं प्रति सहकारित्वाभाव । तत कथं रूपादिरसतो गति स्यात् । समनन्तरप्रत्ययत्वमप्युपादानलक्षणमनुपपन्नम् । यतोऽयमत्रार्थ । समोऽनन्तरश्च य प्रत्ययश्च कारणं स उपादानमिति । तत्र च कार्येण समत्वं कारणस्य सर्वात्मना, एकदेशेन वा । सर्वात्मना चेत्तर्हि कार्यकारणयोरेककालता स्यात् । तथा च सव्येतरगोविषाणवत् तयो कार्यकारणभावो न स्यात् । कथंचित् समत्वे तु योगिज्ञानास्मदादिज्ञानयोरप्यान्तर्येण स्थितयो ज्ञानत्वादिना समत्वेनोपादानोपादेयभावप्रसंग । अनन्तरत्वमपि देशकृतं कालकृतं वा भवेत् । न तावत् देशकृतम् । स्वदेशकार्योत्पादकस्याप्युपादानत्वोपगमात् । न कालकृतम् । विवक्षितक्षणानन्तरं निखिलभुवनवर्तिवस्तुक्षणानामुत्पत्ते । सत्त्वादिना समत्वेन च तदपेक्षया तस्योपादानताप्रसंगात् । नियमवदन्वयव्यतिरेकानुविधानत्वं तल्लक्षणमिति तुरीयपक्षोऽप्यस्वीकारार्ह । यतोऽयमत्रार्थ । नियमतोऽन्वयव्यतिरेकयो कार्येणानुविधानं यस्य तदुपादानम् । एतच्च सुगतव्यतिरिक्तसन्तानचित्तैर्व्यभिचारि । तेषां स्वजन्येन सुगतचित्तेन नियमवदन्वयव्यतिरेकानुविधानेऽप्युपादानत्वायोगात् । तदजन्यत्वे तु तस्य तदविषयत्वापत्ति । ' नाकारणं विषय ' इति स्वयमुपगमात् । अव्यभिचारिणान्वयव्यतिरेकानुविधानत्वाविशेषेऽपि प्रत्यासत्तिविशेषवशात् किंचिदेव किंचित्प्रत्युपादानं न सर्वमिति चेत् । स कोऽन्योऽन्यत्रैकद्रव्यतादात्म्यात् । देशप्रत्यासत्तौ रूपरसादिभि, कालप्रत्यासत्तौ समसमयवर्तिभि, भावप्रत्यासत्तौ चैकार्थगोचरानेकपुरुषज्ञानैरनेकान्तात् । न च क्षणिकैकान्तेऽन्वयव्यतिरेकानुविधानं घटते । न हि समर्थे कारणे सत्यभवत् स्वयमेव पश्चाद्भवत्तदन्वयव्यतिरेकानुविधानं नाम नित्यैकान्तवत् । स्वकाले सति समर्थे कारणे

स्वसमये कार्यं जायते नासतीत्येतावना क्षणिकपक्षेऽन्वयव्यतिरेकानुविधाने नित्येऽपि तत् स्यात् । स्वकालेऽनाद्यनन्ते सति समर्थे नित्ये कारणे स्वसमये कार्यस्योत्पत्तेः, असत्यनुत्पत्तेश्च प्रतीयमानत्वात् । सर्वदा नित्ये समर्थे सति स्वकाल एव कार्यं भवन् कथं तदन्वयव्यतिरेकानुविधायीति चेत् । तर्हि कारणक्षणात् पूर्वं पश्चाच्चानाद्यनन्ते तदभावेऽविशिष्टे क्वचिदेव तदभावसमये भवत् कार्यं कथ तदन्वयव्यतिरेकानुविधायीति समः समाधिः । ततो न नियमवदन्वयव्यतिरेकानुविधानत्वमप्युपादानरूपम् । यदपि ज्ञानश्रीः सूक्ष्ममिवोत्प्रेक्षते । ‘ अभ्रान्तसंम्मतैकावसायः[1] प्रकृतिविक्रिये ततो हेतुफलस्योपादानोपादेयलक्षणम् । सभागहेतुफलसंततौ परमार्थतो भ्रान्तोऽपि लोकापेक्षया अभ्रान्तत्वेन संमतः । स एवायमित्येकावसायः प्रत्यभिज्ञानरूप उपादानोपादेयलक्षणं घटतदुत्तरक्षणवत् क्वापि दृश्यते । तत्रायमर्थः । अभ्रान्ता सत्या या समता सादृश्यं तया उपलक्षित एकावसायः अभिमानिकैकत्वावसायः प्रत्यभिज्ञानरूपः पारमार्थिकवस्तु न क्वचिदपि । विसभागोत्पत्तौ तु प्रकृतिरुपादानस्य विकृतिरुपादेयस्य लक्षणम् । काष्ठाङ्गारवदिति ।’ तदप्यसंबद्धम् । यतस्तत्रैकावसाय उपादानोपादेयलक्षणमिति कोऽर्थः । किमेकावसाय एवोपादानोपादेययोर्लक्षयिता । किं वा तेन हेतुना ते लक्ष्येते । यद्वा स तयोर्लक्षणं स्वरूपमिति । नाद्यः कल्प. । एकत्वपरामर्शकुशलत्वेनास्यैकत्वस्यैव लक्षकतयोपादानोपादेयवार्ता प्रति मूकत्वात् । नापि द्वितीयः । साध्यसाधनयोः प्रतिबन्धस्यावधारयितुमशक्यत्वात् । नहि यत्र यत्र हेतुफलसंततावेकावसायस्तत्र तत्रोपादानोपादेयभाव इत्यत्र विपक्षे बाधकं किंचित् प्रमाणमस्ति । यदपि ‘ हेतुफलसंततौ ’ इत्येकावसायस्य विशेषणमभाणि । तदपि

---

१ ‘ अभ्रान्तसमतैकावसायः ’ इति ज्ञानश्रीसमतः पाठ. । स चाग्रे पृ. ७७३ पं १. स्याद्वादरत्नाकरे खण्डयते ।

प्रतिज्ञायासिद्धम् । न खलु कलशमनसो हेतुफलभूतक्षणपरम्परारूप इति वयमास्थिष्महि । सत्त्वानुमानात्तत्सिद्धावितरेतराश्रयत्वम् । अनुमानान्तरमपि नोपन्यसितुं शक्यमिति न द्वितीयपक्षोऽप्युपपन्नः । एकाध्यवसायस्तयोर्लक्षणं स्वरूपमिति तृतीयपक्षेऽपि, ज्ञानमतानगतस्योपादानोपादेयभावस्वरूपं कथ्येत सार्वत्रिकस्य वा । यद्याद्यस्तदा घटतदुत्तरक्षणवर्तिति निदर्शनोपदर्शनमसंगतं स्यात् । तस्याज्ञानरूपत्वात् । न च सर्वत्र ज्ञानेऽप्येकोऽध्यवसायोऽस्ति । नहि भवति येव घटबुद्धिः सैव पटबुद्धिरिति । अथ य एवाहं घटं वेद्मि स एव पटमित्यस्ति ज्ञानैकत्वाध्यवसाय इति चेत् । एतस्याभविषयत्वात् । नन्वात्मनो ज्ञानादन्यस्याभावात् ज्ञानविषय एवायमिति चेत् । न । लौकिकैकाध्यवसायस्य त्वयाऽत्र विवक्षितत्वात् । लौकिकाश्चाहमित्यात्मानमेव मन्यन्ते । प्रामाणिकैकाध्यवसायविवक्षायां तु भवतो विरुद्धसाधिता स्यात् । तथाहि—तत्त्वतोऽभ्रान्तः स एवायमित्येकाध्यवसायः कलशादौ, पुनस्तर्हि तत्र हेतुफलतया संतानता पुनस्तरां चोपादानोपादेयता स्यात् । यदप्ययमेव प्राह—' अस्ति च विषयोपरागविवेच्य चैतन्यमात्रमास्थाय एकपुरुषाभिमततायां संततौ सैवेयं बुद्धिरित्यध्यवसायः ' इति । सोऽप्यस्य निश्चामित्रस्पर्धयेवाभिनवसंगमनोरथः । विषयोपरागविवेकेन लौकिकानामभ्रान्तत्वेन ममतस्यैकाध्यवसायस्य बुद्धिष्वभावात् । यदि हि विषयोपरागविवेकेन प्रवृत्तबुद्धिष्वेकाध्यवसायो लौकिकानां प्रादुःष्यात् तदा समस्तोपाधिपरिहारेण, उपाध्यायशिष्यबुद्ध्योरप्ययं किं न स्यात् । तथा च तयोरप्युपादानोपादेयभावो भवेत् । अथोपाध्यायशिष्यशरीरयोस्तद्भेदग्रहणकारणयोस्तत्र व्यक्तमनुभवात् न तेषां तदेकाध्यवसाय इति चेत् । तर्हि घटबुद्धिरियं पटबुद्धिरियमिति घटपटाद्युपाधीनां तद्भेदकारणानां प्रवृत्तेऽपि व्यक्तमनुभूते कथमयं प्रादुर्भवेत् । अथ सार्वत्रिकस्योपादानोपादेयभावस्यैकाध्यवसायः स्वरूपं तदप्यबाधितोपद्रुतम् । अध्यवसायस्य ज्ञानरूपत्वेनोपादानोपाद-

यभूतसमस्तपदार्थस्वरूपत्वानुपपत्ते. । तत्त्वे वा विज्ञानवादप्रसंगः । स च प्रागेव प्रतिहतः । अथैकावसायशब्देनोपचारात् तद्गोचरो विवक्षितः, एकत्वेनाध्यवसीयमाना हेतुफलसंततिरुपादानोपादेयरूपेति । तथाप्यव्यापकता । सुगतसंवेदनसंताने तस्याभावात् । सुगतज्ञानस्य विधूतकल्पनाजालज्ञानत्वेन लौकिकानां तु तदगोचरत्वेन तत्रैकावसायासंभवात् । प्रामाणिकानां तु तत्रैकावसाये प्रतिपाद्यमाने सुगतज्ञानस्य क्षणिकत्वक्षतिप्रसक्तिरिति न ' अभ्रान्तेत्यादि ' उपादानोपादेययोर्लक्षणम् । यदपि 'विसभागोत्पत्तौ प्रकृतिविक्रिये' इत्युपादानोपादेयलक्षणमलक्षि । तत्र केयं विसभागोत्पत्तिर्नाम । विसदृशसंतानोत्पत्तिरिति चेत् । सा यदि सर्वथा तदा असंभविनी । काष्ठाङ्गारयोरपि द्रव्यत्वादिना सादृश्यप्रतीतेः । अथ कथंचिदसावभिप्रेता तदा देशान्तरे कालान्तरे च समुत्पद्यमानस्य कथचिद्विसदृशाङ्गारसंतानस्यात्रत्येदानीन्तनकाष्ठसंतानापेक्षया विकृतत्वप्रसक्तेरुपादेयता, अत्रत्येदानीन्तनकाष्ठसंतानस्य च तदपेक्षया प्रकृतित्वापत्तेरुपादानता स्यात् । तत्र तत्सत्तानानुगमात् न तेन तस्योपादानोपादेयभाव इति चेत् । तत् किं विवक्षितकार्यदेशकालयोर्विवक्षितकारणस्य सत्तानुगमोऽस्ति । ओमिति चेत् । तर्हि सिद्धान्तबाधा । कार्यदेशकालयोस्तत्सत्तानुवृत्त्या क्षणभङ्गुरताभ्रंशात् । नास्ति चेत् । कथं तर्हि देशान्तरकालान्तरवर्तिकार्येणोपादानोपादेयभावः समुपस्थितोऽतिथिः प्रतिषिध्यताम् । किं च । प्रकृतिभूतस्य काष्ठस्याङ्गारो विकृतिरिति कुतो निर्णय त्वया यावता वह्नेरेवासौ विकारः किं न स्यात् । वह्निसंबन्धिकाष्ठादेव तदुत्पत्तेरिति चेत् नैवम् । काष्ठसंबन्धिवह्नेरेव तदुत्पत्तिरित्यपि कल्पनाया अनिवारितप्रसरत्वात् । पार्थिवं पार्थिवोपादानमेव भवितुमर्हतीति चेत् । कुत एतत् निरणायि । सभागेषु तथा दर्शना-

---

१ ' विधूतकल्पनाजालगम्भीरोदारमूर्तये । नमः समन्तभद्राय समन्तस्फुरणत्विषे ' ॥ इति प्रमाणवार्तिकस्य प्रथमश्लोकः ।

दिति चेत् । एतदपि कुत इति वाच्यम् । अभ्रान्तममतैकानसाया-दिति चेत् । न । नीलपरमाणुषु परस्परप्रत्यासन्नेषु निरन्तरं जायमानेषु परस्परोपादानत्वप्रसङ्गात् । अस्ति हि तेषां तदुत्पत्तौ सत्यां समन्त्वमाभिमानिकैकत्वाध्यवसाय , अभ्रान्तिकत्वा यनमायश्च न क्वचिदपि । एतेन पाठान्तरव्याख्यापि प्रयुक्ता । तस्मात् कथंचिदन्वयाय द्रुघनान प्रकृतिविकृत्ये अप्युपादानोपादेययोर्लक्षणमुपपद्येते । भिन्नत्वात् तु तस्मिन्न किंचित् क्षणमिति । एतेन यदप्युपादानलक्षणं धर्मोत्तर आह– ' यस्य सतानानिवृत्तौ यदुत्पद्यते तन्निवृत्तिधर्म-सतानमुपादानमितरस्य यथा मृत्सतानानिवृत्त्योत्पद्यमानस्य कुण्डस्य मृदुपादानम् ' इति । तत्प्रतिक्षिप्तम् । सर्वथा सतानानिवृत्तिपक्षे सन्तानान्तरेणापि सहोपादानोपादेयभाव स्यात् । कथंचित्सतान-निवृत्तिपक्षे तु कथंचिदन्वयस्य प्रसक्तेः । यदप्ययमेव ' ननु चाङ्कुरस्य बीजमुपादानमपि न सर्वथा विनिवृत्तं म ग्यमागान्निर्यतोऽङ्कुरस्य दर्शनात् ' इत्याशङ्क्य आह– ' न वै बीजमेकं द्रव्यं किं तर्हि परमाणुसमूहस्तस्य त्वस्सारकल्गुभागा भिन्नसततय सारभागम-ततेश्चाङ्कुरप्रभूतिः' इति । तत्राय तावद्व्यवहारगोचरीभूयमनापन्नत्वात् । ( व्यवहारगोचरीभूतमतापन्नत्वात् ) क्षणानामुपादानोपादेयभावमुपेक्ष्य सतानस्यैव व्यावहारिकत्वात् तद्गतमेव तल्लक्षयति । व्यवहारवीथी-व्यवस्थितामेव बीजस्यैकता तिरस्कृत्य व्यवहारानर्हं तस्य परमाणु-मात्रता सन्तानभूयस्ता च प्रतिपादयतीति महत्कौशलमस्य । भवतु वाऽन्येवम् । तथापि कुण्डोत्पादे मृद उपादानता कथमुपाहृता । न खलु कुण्डोत्पादे मृत्सततिः कङ्कणोत्पादे सुवर्णसततिर्वा निवृत्तेति कोऽप्यधूनवद्धिन प्रत्येति । तदापि मृन्मयमिदं हिरण्मयमेतदिति सर्वस्यानुभवात् । क्षणिकत्वान्निवृत्तैव तदा मृदिति चेत् । क्षणिकत्व तावदद्याप्यद्यापि निर्णीयते । अस्तु वा तत्तथापि सतानानिवृत्तावेवेति लक्षणपदं मा विस्मार्षीः । नहि तदा मृत्सतानानिवृत्तिः । तत्क्षणस्यैव

निवृत्तेः । अथात्र मृच्छब्देन तत्पिण्ड एवोच्यते यदि मृन्मयत्वेन तदा कुण्डमप्युच्यताम् । तदविशेषात् । अस्तु वा यथाकथंचित् मृत्पिण्ड एव तच्छब्दवाच्यस्तथापि कथंचिदन्वयं विना नोपादानोपादेयनियम इत्युक्तमेव । यदप्ययमेवोपादानस्य लक्षणान्तरमाह– '**जनकैराधेयातिशयस्य कार्यस्य समस्तविशेषक्रोडीकरणसमर्थ आत्मा यस्मादुत्पद्यते तदुपादानं यथा चक्षुरादिभ्यश्चक्षुर्विज्ञानस्य समस्तोपकारमयं बोधरूपत्वं समनन्तरप्रत्ययादुत्पन्नमिति तदुपादानम्**' इति । तत्रापि किमुच्यतेऽनेन सार्धं स्वमतस्यापि न यः स्मरति । एकरूपमेव हि कार्यमस्योत्पद्यते ततस्तज्जनकैराधेयातिशयमिति कथं संगच्छते । आधेयातिशयतायां हि तस्य साक्षातापत्तेरनेकरूपता स्यात् । स्यान्मतं, भिन्नस्वभावेभ्यो भिन्नस्वभावमेव कार्यं जायते कारणव्यापारविरचितानां कार्यस्वभावविशेषाणामसंकीर्णत्वात् । यथा विषयेन्द्रियमनस्कारबलभाविनो विज्ञानस्य विषयात्तदाकारत्वम् । तत् ज्ञानेन्द्रियात् न मनस्कारात् । इन्द्रियाद्विषयग्रहणप्रतिनियमो नान्यस्मात् । मनस्काराद्बोधरूपता न परतः । न च कारणव्यापारविषये नानात्वेऽपि सति कार्यं नाना भवति । निर्विभक्तरूपस्यैवास्योपलम्भात् । तदपि युक्तिरिक्तम् । कथं हि नामैकस्वभावं कार्यं स्वभावविशेषाश्च तदव्यतिरिक्ता एव चित्राः स्युः । नानात्वैकत्वयोः परस्परव्याहतेः । विषयनिर्भासितादयश्च विज्ञानाव्यतिरेकिणो यथा विषयादिभिः क्रियन्ते तद्वद्विज्ञानाव्यतिरिक्तबोधरूपतादिकारिभिर्मनस्कारादिभिरपीत्येवं सर्वेषामशेषमनस्कारादिजन्यत्वे सति विषयनिर्भासितादिव्यवस्थानुपपत्तिः । तथाहि–न विषयात् तदाकारत्वसंभवो बोधरूपाभेदात् । न चासंभव । तदाकारत्वात् । तथा न मनस्काराद्बोधरूपसंभवो विषयाकाराव्यतिरेकात् । न चासंभवो बोधरूपत्वात् । इतीत्थमिन्द्रियादिष्वपि द्रष्टव्यमिति मिथो विरोधसंभवेन तदनुपपत्तिः । एतेन यदपि धर्मोत्तरविशेषव्याख्यानकौशलाभिमानि

देवनलः प्राह—' निर्भागेऽपि च कार्ये आवापोद्वापाभ्यां विशेषहेतुना विभागसिद्धिरिति ज्वलनोद्यानामनन्तरम् ।' इति । तदपि प्रत्युक्तमवसेयम् । अथ मा भूत्ये दोष इति स्वभावविशेषाः कार्यतो व्यतिरिक्ता इष्यन्ते । एवमपि कारणव्यापारस्य तेष्वेवोपयुक्तत्वात् तत्कार्यमहेतुकमनुपपद्यत इति यत्किंचिदेतदिति । कथं कार्यस्य जनकैराधेयातिशयता संगच्छते । किं च । सर्वैरपि समनन्तरप्रत्ययचक्षुरादिभिरपरैर्ज्ञानकार्ये बोधरूपताद्योऽतिशया आधीयन्ते । ततो लक्षणवाक्ये यस्मादिति यच्छब्देन कतरत् निर्धारयामो यस्योपादानता व्यवह्रियेत । ननूक्तं समस्तविशेषकोडीकरणसमर्थ आत्मा यस्मादुत्पद्यत इति सर्वेष्वपि हि जनकेषु मध्ये यत्समस्तविशेषकोडीकरणसमर्थवस्तूत्पादनगुणयुक्तं तन्निर्धार्यत इति । नैवं वोचथाः । समस्तविशेषकोडीकरणसमर्थस्य कस्यचिदात्मनः कुतोऽप्युत्पत्तिसंभवात् । सत्यां हि तस्यां कार्यस्यापि कारणकालतैव स्यात् अन्यथा कारणकालानाकलनेन कार्यस्य समस्तविशेषकोडीकरणसामर्थ्यस्यासंभवादिति न किंचित् उपादानकारणं संगच्छते । नापि सहकारिकारणम् । क्षणिकैकान्ते सहकारिकारणैरुपादानेऽतिशयस्याधातुमशक्तेः । अत्राह— किमिदं गौरत्वमपि पाण्डुरोगतया प्रत्याकलितम् । अतिशयमनाधत्सतामेव ह्येकं कार्यं कुर्वतां तेषां सहकारित्वं सुन्दरम् । किमर्थं तर्हि तेन अपेक्ष्यन्त इति चेत् । को वै ब्रूतेऽपेक्ष्यन्त इति । प्रत्येकमेव हि कार्यजननाय समर्था अन्त्यावस्थाभाविनः क्षणाः का तेषां परस्परापेक्षा । यत्तु प्रत्यासीदन्ति तदुपसर्पणकारणस्यावश्यभावनियमात् न तु संभूय कार्यकारणाय । तत्काले चोपसर्पणनियमे हेतुः । तेषां वस्तुस्वाभाव्यात् । प्रत्येकं समर्था हेतवः प्रत्येकमेकैकमेव कार्यं जनयेयुः किमित्येकमनेके कुर्वन्तीति चेत् । अत्राप्यमीषां कारणानि प्रष्टव्यानि । यान्यमूनेकार्यनिर्वर्तनशीलान् प्रभावयन्ति । वयं तु यथादृष्टार्थस्वरूपवक्तारो न पर्यनुयोगमर्हाम । कार्यमेकेनैव

कृतं किमपरे कुर्वन्तीति चेत् । न कृतं कुर्वन्ति किं त्वेकेन क्रियमाणमपरेऽपि कुर्वन्ति । यत्रैकमेव समर्थं तत्रापरेषां क उपयोग इति चेत् । सत्यम् । न ते प्रेक्षापूर्वकारिणो यदेवं विमृश्योदासत इति । तदेतदखिलमाकाशचित्रम् । यदि हि बीजादयः प्रत्येकमेव समर्थास्तर्हि किमर्थं कृषीवलः प्रेक्षापूर्वकारी परिकर्मितायां भूमौ बीजकणानावपति पयसा च मधुरेणासिञ्चति । परस्पराधिपत्येन तेभ्यः प्रत्येकमङ्कुरजननयोग्यक्षणोपजननार्थेति चेत् । यद्यङ्कुरजननयोग्यक्षणोपजननाय बीजं स्वहेतुभ्यः समर्थमुपजातं किमवनिसलिलाभ्यामथासमर्थम् । तथापि तयोरकिंचित्करः संनिधिः स्वभावस्यापरित्यागात् । तथा च—

यदि समजनि सत्यं वस्तुसार्थोऽसमर्थः
कथयत सचिवानां संनिधिः स्यात् किमर्थः ॥ ५९२ ॥

क्षित्युदकाभ्यां बीजस्य स्वसंतानवर्तिनी असमर्थक्षणान्तरारम्भणशक्तिर्निरुध्यत इति चेत् । अस्तु तर्हि तस्मात् असमर्थक्षणानुत्पत्तिः। सुसमर्थक्षणोत्पत्तिस्तु दुर्लभा कारणाभावात् । न च स्वभावभूतायाः शक्तेरस्ति निरोधः । भावस्यापि विरोधप्रसंगात् । सहेतुकश्च विनाशः प्राप्नोति । न विशिष्टक्षणोत्पादनशक्त्याधानं च बीजस्य शक्यं क्षणिकत्वात् । स्वभावाव्यतिरिक्तशक्त्युत्पादने चोत्पन्नोत्पादप्रसंगात् । तस्मादसमर्थस्योत्पादवतो न कदाचिदपि क्रिया । समर्थस्य चोत्पादानन्तरमेव करणमिति द्वयी गतिः । नन्वर्थान्तरसाहित्ये सति कारणं तस्यानुपयोगादिति नास्ति किमपि क्षणिकैकान्ते सहकारिकारणमपि । एवं चायुक्तमुक्तम् । निकुरम्बान्निकुरम्बस्योत्पत्तावपि न रूपादीनां स्वरूपसंकरप्रसंगः । पूर्वरूपादिक्षणैरुपादानसहकारितया सामग्रीभेदेन रूपादिक्षणानामुत्पादनादिति । नन्वतिशयाधानपक्षेऽपि कथं सहकारिता । स्वभावभूतातिशयारम्भाभ्युपगमे हि भावस्याप्युत्पत्त्या क्षणिकत्वप्रसक्तिः। अतत्स्वभावभूतातिशयारम्भाभ्युपगमे तु भावस्य प्रागवदसाधकत्वमिति । अत्रोच्यते । [1]नायमस्माकमेकान्तो भिन्नान्येव वस्तून्यभिन्नान्येव वा

१ नायमित्यतः विरोध इत्यन्त पृ. ७७७ प ६ पाठः प्रकरणपञ्जिकायां जी. रक्षाप्रकरणे पृ ५ प. २२ किञ्चित्पाठभेदेन समुपलभ्यते ।

किंतु भिन्नाभिन्नानीति संगिरामहे । तत्र भेदमात्रविकल्पावलम्बनसमर्पि दूषणमभेदाश्रयणेन, अभेदमात्रविकल्पावलम्बनममपि तु भेदाश्रयणेन प्रतिहतम्। नन्वेतौ भेदाभेदौ विरोधिनौ कथमेकत्र निविशेते। उच्यते । नेमौ विरोधिनौ । सह दर्शनात् । सहानवस्थानलक्षणो हि विरोध । अनवस्थानं चादर्शननिबन्धनम् । न चात्र तदस्तीति नास्ति विरोध इति । अत्रैतन्मटिष्णुर्मीमांसानीरक्षाप्रकरणे शालिक प्राह– " न च तयो सहदर्शनमुपपद्यते । एकाकारप्रतीतिरेव खल्वभेददर्शनं विलक्षणाकारप्रतीतिस्तु भेददर्शनम् । तत्र यद्येकाकारप्रतीतिस्तर्हि विलक्षणाकारप्रतीतिर्नास्ति विलक्षणाकारत्वे च प्रतीतेर्नैकाकारप्रतीतिरस्ति " इति । तत्र किमुच्यतेऽस्य मूढस्य यद्दृष्टद्वेषकषायितमना प्रतीतिमपि न पर्यालोचयति । न खल्वेकाकारपरामर्शिन्येव तदितरैव च प्रतीति काप्यस्ति । सती हि ता क समुल्लङ्घयितुमीश । सदृशविसदृशपरिणामापन्नेषु पदार्थेषु तदाकारालेखिनी तु सा युक्ता समस्ति च तादृशी मैव च भेदाभेदप्रतीति । घटो हि प्रतीयमान सकलजन्तुभ्य सदृशविसदृशाकारतयाऽभिन्नो भिन्नश्च प्रतीयत इति । किं च त्वयापि तावत् प्रतिज्ञातं प्रत्यभिज्ञानम् । तस्माच्च सिद्धमेव भेदाभेददर्शनम्। तथा हि– यदेव कनकं कङ्कणतया परिणतं प्रागासीत् तदेवेदानीं केयूरतया संवृत्तमित्यस्ति प्रतीति । अत्र च कङ्कणस्य केयूररूपपर्यायप्रतीतेरनुस्यूतैककनकाकारप्रतीतेश्च कथं न नाम भेदाभेदप्रतीति स्यात् । किं च । क्षणिकस्तु विनष्टसन् कार्यमुत्पादयति, अविनष्ट, उभयरूप, अनुभयरूपो वा । न तावत् विनष्टम्। चिरतरनष्टस्येवानान्तरनष्टस्यापि जनकत्वविरोधात् नाप्यविनष्टम्। क्षणभङ्गभङ्गप्रसङ्गात्। नाप्युभयरूपम्। निरंशैकस्वभावस्य विरुद्धोभयरूपासंभवात् । नाप्यनुभयरूपम्। अन्योन्यव्यवच्छेदरूपाणामेकस्यापरविधाननान्तरीयकत्वेनानुभयरूपतायोगात् । तदेवं क्षणिकपक्षे कार्यकारणभावानुप-

पत्त्या अर्थक्रियाऽनुपपन्नैव । कथंचिदन्वयिन्येव वस्तुनि तदुपपत्त्या तस्या घटनात् । किं च । अर्थक्रिया क्रमयौगपद्याभ्यां व्याप्तेति भवानेवावोचत् । ते च क्षणिकैकस्वभावेषु न संभविनी । तथा हि— तद्रूपाणाममीषां देशक्रमेण कालक्रमेण वा कार्यकरणं नास्ति । एक एव पदार्थः क्वचिद्देशे काले वा किंचित्कार्यं कृत्वा पुनरपेक्षितसहकारिसंनिधिः कथंचिदुपात्तस्वभावान्तरो देशान्तरे कालान्तरे च कार्यं कुर्वाणः क्रमेण करोतीत्युच्यते क्षणमात्रस्थायित्वे त्वर्थस्यैवंविधक्रमकारित्वं कथं संभवेत् । ननु कर्मधर्मोऽत्र क्रमोऽभिप्रेतो न कर्तृधर्मस्तत्र क्रमिककार्याणां कर्तुरेकस्याभावेन क्रमासंभवात् । कार्याणां तु क्रमस्तथोत्पद्यमानानां सुप्रतीत एव । तथा च क्षणिकं वस्तु क्रमिकाणि कार्याणि करोतीत्युच्यमाने किमनुपपन्नम् । अत्रोच्यते । कार्याणि क्रमेणोत्पद्यन्त इति को नाम न मन्यते । किंतु क्षणमात्रजीविना भावेन तानि तथोत्पद्यमानानि कथमुत्पादनीयानीति प्रश्ने न किंचिदुत्तरं व्यतारि । यौगपद्येनापि नास्यार्थक्रियास्ति । निरंशत्वेन युगपदनेकशक्त्यात्मकत्वाभावात् । तथा हि यया शक्त्या रूपं रूपान्तरं करोति न तयैव रसादिकम् । रसादेरपि रूपस्वरूपताप्रसंगात् । ततः सर्वं रूपकार्यं चक्षुषा गृह्येत । न चैतत्प्रतीतम् । तस्माद् रूपं रूपान्तरोत्पादशक्त्या तदेव करोति रसाद्युत्पादशक्त्या च रसादिकमित्येवमनेकाः शक्तयः कथं निरंशस्य क्षणिकस्य स्युः । एवं चार्थक्रियाव्यापकयोः क्रमयौगपद्ययोः क्षणिके विरोध एव । अक्षणिके तु तदविरोधोऽनन्तरमेव निरूपयिष्यते । तथा च सत्त्वं विरुद्धताव्याधिबाधितं नोत्थातुमपि शक्तम् । यदप्युक्तम् ‘ नाप्यनैकान्तिकशङ्का सर्वोपसंहारवत्या व्याप्तेः प्रसाधनात् ’ इत्यादि । तदप्यसंबद्धम् । व्याप्तेरप्रसिद्धेः । यत्तु तत्प्रसाधनाय ‘ कर्तुः सा न क्रिया ’ इत्यादि विपर्यये बाधकमभ्यधायि । तदप्यसत् । अक्षणिकेऽपि परक्रियाया अविरुद्धत्वेन दर्शितत्वात् । यदपि किमपि प्रागल्भ्यमभ्यस्यता ‘अथापि

व्यतिरेकरूपायामेव व्याप्तौ कौतुकमप्यस्ति ' इत्याद्युक्त्वा पर्यन्ते यत् ' क्रमयौगपद्याभ्याम् ' इत्याद्यनुमानमवादि । तत्र क्रमयौगपद्यलक्षणव्यापकानुपलम्भात् अर्थक्रियासामर्थ्यस्वरूपसत्त्वाभावो भावानाम्, एकान्तनित्यानां कथंचित् नित्यानां वा । आद्यपक्षे सिद्धसाध्यता । एकान्तनित्यानां कथमपि विक्रियानुपपत्तेः तथार्थक्रिया नास्तीति को नाम नाभ्युपैति । यं प्रति प्रमाणोपन्यासेनात्मानमायासयसि । कथंचित् नित्यानां तु क्रमयौगपद्याभ्यामर्थक्रिया नोपपद्यत इति मनोरथानामप्यपथे । क्रमयौगपद्यरूपव्यापकानुपलम्भस्य तत्रासिद्धेः । किंचित् कृत्वान्यस्य करणं हि क्रमः । अयं च कलशस्य कथंचिदेकरूपस्यैव क्रमेण घटचेटिकामस्तकोपरिपर्यटनेन तासां क्रमं कुर्वतः सुप्रतीत एव । अत्र हि भवान् अत्यन्ततार्किकमन्योऽप्येतदेव तावत् वक्तुं शक्नोति । यस्मादक्षेपक्रियाधर्मेण समर्थस्वभावादेकं कार्यमुत्पादि स एव चेत् पूर्वमप्यस्ति तदा तत्कालवत्तत्रैव तद्विधानं कथं वार्यतामिति । एतच्च प्रागेव प्रतिविहितम् । यौगपद्यमपि यद्यशेषतत्कार्यक्रियाणामेकस्मिन्नेव क्षणे करणमभिप्रेतम् । तदा तत्तादृशं क्वापि नास्ति । यदा यत्र हि यादृशो वस्तुनः सहकारिकृतः कथंचिदात्मभूतः पर्यायो भवति तदा तत्र तत्तादृशं कार्यं करोति । अथ युगपद्घटादिकार्यकरणेऽपि यौगपद्यमुच्यते । तत्र तत्तादृशं समस्त्येव तस्य । तथाहि– स एव कुम्भः कथंचिदेकस्वभावो भाजनान्तरपिधानम्, अम्बुधारणम्, आत्मगोचरं ज्ञानं च युगपत् कुर्वाणः किं नोपालम्भि भवता तत्राक्षणिकेषु वस्तुषु क्रमयौगपद्याभ्यामर्थक्रियां समर्थयितुमशक्तेर्यदसिद्धतैव तेषु तदनुपलब्धिरिति निरवद्यस्य विपक्षे बाधकस्याभावादनैकान्तिकमेव सत्त्वम् । यदपि ' यतिर्माति ' इत्यादि द्वितीयमनुमानमवादि । तत्रान्द्रियमतिषु सस्कारा एकस्मिन् क्षणे तावत् अवस्थानशीलं प्रतिभान्तीति हेतुत्वया विवक्षितः किं वा एकस्मिन्नेव क्षणे स्यात्सत्त्वो न पूर्वं नापि पश्चादिति । तत्राद्यपक्षे सिद्धसाधनम् ।

को हि नाम प्रामाणिक एकस्मिन् क्षणे स्थितिमतः प्रतिभासमानान् भावास्तत्रानिष्ठतोऽभिदधीत् । अथैकस्मिन्नेव लक्षणे स्थास्नुता साध्यते ततो न सिद्धसाध्यतेति चेत् । तदसत् । तथाहि— तदखिलमिति तच्छब्देन साधनार्थपरामर्शात् । साधने च पूर्वापरत्रुटितैकक्षणप्रतिभासस्याप्यविवक्षितत्वात् । किं चैकक्षणावस्थायित्वनिर्भासनं सर्वेषु प्रत्यक्षेषु नास्माकं प्रसिद्धम् । दीर्घदीर्घतराद्युपयोगरूपेषु तेषु व्यादिक्षणावस्थायित्वस्यापि पदार्थानां प्रतीयमानत्वात् । तदुक्तं भट्टजयन्तेनापि पल्लवे—

किंचाविच्छिन्नदृष्टीनां प्रलयोदयवर्जितः ।
भावोऽस्खलितसत्ताकश्चकास्तीत्यात्मसाक्षिकम् ॥

अत्राह— किं तावत्स्वरूपनिष्पत्तावुपयोगादनेकक्षणस्य व्यापकमध्यक्षम्, अथ क्षणनिष्पन्नस्यैव स्थैर्यात् । तत्राद्यः कल्पस्तावदसंभवी । ज्ञानस्यावयवविरूपतावियोगेन खण्डश उत्पत्तेरयोगात् । अथ क्षणभेदिनश्च तेऽवयवा. प्रत्यक्षस्य परिच्छितिस्वभावास्तदा तावन्त्येव प्रत्यक्षाणीति सिद्धं तेष्वेकक्षणस्थायितानिर्भासनं भावानाम् । अपरिच्छित्तिस्वभावत्वे तु तेषां समुदितमपि प्रत्यक्षं न किमपि निर्भासयेत् । अथ प्रत्यक्षावयवैः खण्डशः समुदायेन तु पूर्णस्य वस्तुनः परिच्छेदः । तदाप्याद्यक्षणपरिच्छिन्नः खण्ड एव सपूर्णं वस्तु । तदप्रविष्टस्य ततो भिन्नत्वात् । अन्यथा क्रमेण प्रतीयमानं विश्वमेकमेव वस्तु स्यात् । सकलं च प्रत्यक्षमेकमेव प्रत्यक्षमिति द्वितीयपक्षेऽपि निष्पन्नग्रहणव्यापारस्य वा क्षणान्तरव्याप्तिरनिष्पन्नग्रहणव्यापारस्य वा । प्रथमपक्षे सिद्ध एकक्षणप्रतिभासः । द्वितीतपक्षेऽप्यनिष्पन्नग्रहणव्यापारस्यास्य स्थितिरिति दुःश्रद्धेयम् । नहि जन्मानन्तरमस्य ग्रहणव्यापारः । तत्स्वभावस्यैवोत्पत्तेः । अत्रोच्यते । स्वरूपनिष्पत्तावुपयोगादित्याद्यपक्ष एव कक्षीक्रियतेऽस्माभिः । तादृशं हि तथोपयोगस्य व्यादिक्षणस्थायि यत्स्वरूपं तत् तावतैव कालेन निष्पद्यते । प्रतिक्षणोपजाय-

मावा परापरपर्यायसमुदायात्मकत्वाद्स्य । एकान्तेनावयवव्यतिरिक्तस्यावयविनोऽनभ्युपगमात् । एव चायुक्तमुक्तम् । 'नानम्यावयविरूपतावियोगेन ' इत्यादि । तैश्च पर्यायैर्यद्यपि क्षणिका पर्याया प्रतिपन्नास्तथापि तावत् प्रमाणपूर्वापरपर्यायपरम्परात्मा पदार्थ कथचित् एकत्वेनावस्थितो न तैरवगत इति तद्ग्रहणप्रवणस्तत्पर्यायसमूहस्वरूपस्तेभ्य कथचिद् व्यतिरिक्त उपयोगस्तमवगच्छति । यदप्युदितम् 'आद्य क्षणपरिच्छिन्न खण्ड एव सपूर्ण वस्त्विति । तत्र तदप्रविष्टस्य ततो भिन्नत्वादिति हेतो समुदायप्रवेशाभावस्तत्खण्डस्य सर्वथा कथ्येन कथचिद्वा । सर्वथा चेत्तदा भिन्नतापि सर्वथा साध्येन कथचिद्वा । यदि समुदाये सर्वथा प्रवेशाभावात् तत्खण्डस्य सर्वथा भेद साध्यते तदा हेतोरसिद्धि । खण्डपरपरात्मक एव हि समुदाय । तत कथ तस्मिन्नेव खण्डस्य सर्वथा प्रवेशाभाव सिध्येत् । कथचिद्भेदसाधने तु विरुद्धता । सर्वथा तत्र प्रवेशाभावस्य सर्वथा भेदेनैवाविनाभूतत्वात् । एव कथचित् प्रवेशाभावात सर्वथा भेदसाधनेऽपि विरुद्धतैव कथचित्प्रवेशाभावात्तु कथ कथचिद्भेदसाधने सिद्धसाध्यतैव । नचैव खण्डस्य सपूर्णवस्तुतैव । तस्य तस्मात् कथचिद्भेदेन सपूर्णवस्तुताया कथचिन्निवृत्तत्वात् । यदप्युक्तम् ' अन्यथा क्रमेण प्रतीयमान विश्वमेकमेव वस्तु स्यात् ' इत्यादि । तदपि न न प्रतिकूल सग्रहनयाभिप्रायेण विश्वस्य प्रपञ्चस्य चैकत्वेन स्वीकृतत्वात् । क्षणिनिष्पन्नस्थैर्यादिति द्वितीयपक्षे त्वनभ्युपगम एवोत्तरम् । अथैकस्मिन्नेव क्षणे स्थास्नवोऽस्मदादिषु भावा प्रतिभान्ति न पूर्वं नापि पश्चादिति हेतुरथ कथ्यते तदाप्येकक्षणस्थायिनि भावे तथा तथाप्रतिभास स्यात् क्षणत्रयस्थायिनि वा । आद्यश्चेत् प्रलाप । अतीतानागतक्षणयो स्वयमविद्यमानेन तेन तत्र तदनवस्थानस्य प्रत्येतुमशक्ते ।

१ 'एकस्मिन्वा बहुषु वा नामादिविशेषितेषु साम्प्रतातीतानागतेषु घटेषु सप्रत्यय सग्रहनय ' इति तत्त्वार्थसू १-३४ भाष्य ।

न च तत्रानवस्थानप्रतीतिमन्तरेणात्रैव क्षणे एतदस्ति न भूतभविष्यतोरिति प्रतीतिर्भवितुमर्हति । तथा च हेतोरसिद्धिः । अथ पूर्वापरक्षणविच्छिन्नत्वेन तस्यानास्थितत्वात् तत्प्रतीतिमन्तरेणापि तत्प्रतीतिरित्युच्यते । ननु पूर्वापरक्षणविच्छिन्नत्वं 'यन्निर्भाति' इत्यादित एवानुमानात् प्रसिद्धमपरस्माद्वा । अत एव चेदितरेतराश्रयम् । अपरमपि न किंचिद् विचारसहम् । यदि चैकक्षणस्थायिनापि तेन पूर्वोत्तरक्षणयोरभावः प्रतीयमानो न विरुध्यते तदा भावोऽपि पूर्वोत्तरक्षणयोः प्रतीयमानोऽविरोधी । विशेषाभावात् । क्षणत्रयस्थायिनि तु ज्ञाने तेषां तथा प्रतिभासे हेतोरेकदेशासिद्धता । पक्षीकृतेषु सकलसंस्कारेष्वेकक्षणस्थायित्वप्रतिभासस्य हेतोर्विज्ञानवर्जं वर्तनात् तस्य क्षणत्रयस्थायिनः स्वयं तथैव प्रतिभासात् । यत्पुनरसिद्धतापरिहारे व्याहारि 'पूर्वापरकालयोरेकत्वे हि पदार्थस्य दृष्टाद्रूपान्तरविरहात्सकलकालकलाकलितस्य देशान्तरजुषोऽपि रूपस्यावश्यं प्रतिभासः' इति । तत्र स्यादेतत् यदर्वाग्दृशोऽपि ज्ञानं विनाशावधेर्वस्तुनो वेदकं स्यात् । न चैवम् । क्षयोपशमानुरूपं तस्य प्रवर्तनात् । यदप्युक्तम् 'शिंशपानुमानेनैव व्यवहारः साधनीय' इति । तदप्यसत् । यतस्तदा व्यवहारसाधनायेदमुपादीयेतानुमानं यदि प्रत्यक्षेण पूर्वापरक्षणविच्छिन्नैकक्षणोपलक्षणं स्यात् । न चैवं, पूर्वमपहस्तितत्वात् । किंच । अनुमानद्वयेऽप्यस्मिन् द्व्यादिक्षणस्थायिना ज्ञानेन तावत्कालस्य भावस्य प्रतीतेः पक्षस्य प्रत्यक्षस्य बाधा । ननु ज्ञानस्य क्षणिकत्वेन द्व्यादिक्षणावस्थायित्वाभावात् कथं प्रत्यक्षेण पक्षबाधेति चेत् । ननु क्षणिकत्वं तस्याभ्यामनुमानाभ्यां सिद्धं वेदिष्यते । तदेतरेतराश्रयम् । अन्यानुमाने तु दारिद्र्यम् । तथा स एवायं स्फटिकः स चायं शतकोटि[1]रित्यहमहमिकया कथंचिदेकत्वं स्फटिकादीनां प्रकटयता प्रत्य-

१ शतकोटिः—वज्रः ।

गोचरो येनात्रापि क्षणिकाक्षणिकस्वभावभावोत्पादकत्वेन कारणाना-सामर्थ्ये भेदः कल्प्येत् । ननु विनशनशीलत्वेऽपि भावानां यदैव वेगवन्मुद्गराद्युपनिपातस्तदैव विनाशो भविष्यतीति चेत् । तदसुन्दरम् । विनश्वरस्यापि प्रतिक्षणमविनाशे मुद्गरादिसंनिधानकालेऽप्यविशेषतो नाशानुपपत्तेः । नहि प्रकाशस्य प्रतिक्षणमप्रकाशताया कालान्तरे प्रकाशतोपलब्धा । अन्ते च भावाना नाशोपलम्भान्नाशित्वेऽभ्युपगम्यमाने प्रकाशस्य प्रकाशकत्ववत् सिद्धः स्वरूपमात्रानुरोधी विनाशो निर्विलम्बमादावप्यविशेषात् । अपि च । शतसहस्रक्षणस्थितिस्वभावो भावः प्रथमक्षणे जातो द्वितीयादिक्षणे तथैवास्ते न वा । तथैवास्ते चेत् तदान्त्यक्षणेऽप्यस्य तथैवास्तित्वप्रसंगात् न कदाचिद्विनाशः स्यात् । तत्र तत्स्वभावत्यागे वा सिद्धं क्षणिकत्वम् । प्रतिक्षणं स्वभावभेदलक्षणत्वात्तस्य । किंच । वेगवन्मुद्गरादिनाशहेतुर्विनश्वरं वा भावं नाशयति, अविनश्वरं वा । तत्राविनश्वरस्य विनाशे हेतुशतोपनिपातेऽपि नाशानुपपत्तिः । स्वभावस्य गीर्वाणप्रभुणापि[1] अन्यथा कर्तुमशक्यत्वात् । नश्वरस्य च नाशे तद्धेतूना वैयर्थ्यम् । नहि स्वहेतुभ्य एवावाप्तस्वभावे भावान्तरव्यापारः फलवान् । तदनुपरतिप्रसक्तेः । अपि च भावात् पृथग्भूतो नाशो नाशहेतुभ्यः स्यादपृथग्भूतो वा । यद्यपृथग्भूतस्तदा भाव एव तद्धेतुभिः कृतः स्यात् । तस्य च स्वहेतोरेवोत्पत्तेः । कृतस्य करणायोगात् तदेव तद्धेतुवैयर्थ्यम् । अथ भिन्नस्तदासौ भावसमकाली तदुत्तरकालभावी वा स्यात् । तत्र सहभावित्वे समकालमेव भावाभावयोरुपलम्भः स्यात् । अविरोधात् । तदुत्तरकालभावित्वे तु घटादेः किमायातम् । येनासौ स्वोपलम्भं स्वार्थक्रियां च न कुर्यात् । नहि तन्त्वादेः समुत्पन्ने पटे घटः स्वोपलम्भं स्वार्थक्रिया च कुर्वन् केनचित्प्रतिषेद्धुं शक्यः । ननु पटस्याविरोधित्वात्तदुत्पत्तौ घटस्य न स्वोपलम्भस्वार्थक्रियाकारित्वाभावः । अभावस्य तु तद्विपर्ययादसौ स्यात् ।

---

१ इन्द्रेणापि ।

ननु किमिदं निरोधित्वं नाम नाशकत्वं नाशस्वरूपत्वं वा । नाशकत्वं चेत्तर्हि मुद्गरादिवन्नाशोत्पत्तिद्वारेणानेन घटादिरुन्मूलयितव्यः । तथा च तत्रापि नाशेऽयमेव पर्यनुयोग इत्यनवस्था । नाशस्वरूपं चेत् । नन्वेवम् । अर्थान्तरत्वाविशेषात् । कथं तु तस्यैवासौ स्यात् अन्यस्यापि कस्मान्नोच्यते । किंच । अयमवस्तुरूपः स्याद् वस्तुरूपो वा । तत्रावस्तुरूपत्वे नास्य कार्यत्वधर्माधारता परोन्मूलनलक्षणार्थक्रियाकारिता च युक्ता । वस्तुरूपतापक्षे । वस्तुनो हि कारणसामग्रीतो भावोऽर्थक्रियाकारित्वं च स्वरूपम् । अभावोऽपि चेदत उत्पद्येत परोन्मूलनलक्षणां चार्थक्रियां कुर्यात् तदा कोऽस्यातो विशेषः स्यात् । वस्तुरूपत्वे तु घटादेरन्यः कपालादिरेव तन्नाशस्तस्य च सहेतुकत्वं केन प्रतिषिध्यते । मुद्गरादीनां विसदृशसन्तानोत्पत्तौ व्यापारस्यास्माभिरभ्युपगमात् । घटादयस्तु स्वोत्पत्तिक्षणानन्तरमनवस्थानशीला स्वकारणादेव सञ्जाता न कालान्तरमनुवर्तन्ते । ततः सिद्धं तेषां कृतकत्वेन क्षणिकत्वम् । ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियताः । यथान्त्या कारणसामग्री स्वकार्योत्पादनं प्रति । विनाशं प्रत्यनपेक्षाश्च सर्वे भावा इत्यतोऽप्यनुमानादुदयानन्तरमस्थायित्वं भावानामिति ।

नैरमेय यदुपैति संगतिं नाशहेतुरिह कश्चिदिष्यते ।
वस्तुजातमखिलं क्षणक्षयि प्रोक्तहेतुवशतः प्रमीयते ॥ ५९६ ॥
अहो समस्तेष्वपि पक्षपातेष्वयं महीयान् मतपक्षपातः ।
व्यपैति नाद्यापि यदस्य भिक्षोः क्षणक्षयैकान्तसमर्थनाय ॥५९७॥

तत्र यदुक्तं 'हेतोरुत्पद्यमानत्वं हि कृतकत्वम्' इति तत् क्षणक्षयैकान्तस्वामिगृहमहिलैर्यथा न प्रत्येतुं शक्यम्, यथा च तत्र तत्र घटनामियर्ति कथंचित्क्षणिकवस्त्वविनाभूतत्वात् । तथा सत्त्वहेतोरर्थक्रियासामर्थ्यस्वरूपस्यासिद्धताविरुद्धताभिधानसमये सविस्तरमुपदर्शितमित्यसिद्धं विरुद्धं च । न च कृतकेन सता क्षणानन्तरमेव नष्टव्यमिति नियमोऽस्ति । कृतकं च स्यात् कालान्तरे च नश्येत् विरोधाभावादिति

संदिग्धनैकान्तिकं च तत् । ननु स्वहेतुभ्यो भावाः समुत्पद्यमाना विनाशस्वभावनियता एवोत्पद्यन्त इत्युक्तं विनाशस्वभावनैयत्येन भावाना कथमपि कालान्तरानुसरणव्यसनासंभवात् कथमनैकान्तिकताशङ्कापि । उक्तमेतत् । किं तूक्तिमात्रमेव । तथाहि— विनाशस्वभावनियता इति कोऽर्थः । किं विनाशे कर्तव्ये स्वभावेन स्वसत्तया नियता इति, किंवा विनाशस्वभावे विनाशरूपताया नियतास्त इति । आद्यकल्पनाया विनाशस्य सहेतुकत्वप्रसक्तिः । पदार्थसत्ताया एव तद्धेतुकत्वात् । अथास्तु वस्तुसत्ताहेतुकत्वेन तस्य सहेतुकत्वं, तथापि क्षणिकत्वमप्रतिक्षेपणीयम् । वस्तुसत्ताहेतुकत्वे हि नाशस्य तत्सत्ताक्षणसमनन्तरं भावात् कथं क्षणिकत्वप्रतिक्षेपः । नन्वसौ नाशो वस्तुसत्ताकार्यः सन् यदि सदैव तथैवावतिष्ठते तदा कृतकत्वहेतोस्तेनैव व्यभिचारः । अथैतेन व्यभिचारोच्चारणमचारु । न किंचिद्रूपत्वादस्येति चेत् । अचतुरस्रमेतत् । वस्तुनिर्वर्तनीयतया तस्य न किंचिद्रूपताविरोधात् । अथ नाशोऽपि क्षणिकः कक्षीक्रियते तर्हि नाशस्य नाशे द्वितीयक्षणे भावोन्मज्जनापत्तिः । अथ विनाशस्वभावे विनाशरूपताया नियता भावा इति पक्षः । सोऽपि न क्षमः । भावाना विनाशस्वभावताया असंभवात् । प्रतिषेध्यप्रतिषेधयोरेकत्वस्यानुपपत्तेः । उपपत्तौ वा विश्वस्य वैश्वरूप्यानुपपत्तिः । ननु कालान्तरेऽर्थक्रिया प्रत्यशक्तिरेवास्य नास्तिता । सा च कालान्तरेऽसमर्थस्वभावत्वमिति चेत् । ननु यदि भावाभिन्ना सती कालान्तरानुषङ्गिण्यस्य नास्तिता तदा नूनमनक्षरमिदमुक्तं, यदयमेव भावः कालान्तरानुषङ्गीति । अथ स्वकालवत्कालान्तरेऽस्य नास्तिता नानुषज्यते तर्हि नास्तिताविरोधिनोऽस्तित्वस्य प्रसंगः । अथ कालान्तरेऽशक्तत्वात् कथं तस्यास्तित्वानुषङ्ग. । शक्तेः सत्तालक्षणत्वादिति चेत् । ननु कालान्तरकार्य प्रत्यशक्तिरसत्त्वम्, किंवा स्वकार्यमपि प्रति कालान्तरेऽशक्तिरसत्त्वम् ।

प्रथमकल्पनायां स्वकालेऽप्यसत्त्वप्रसङ्गः । तदानीमपि तस्य कालान्तरकार्ये ऽप्यशक्तत्वात् । कालान्तरकार्यापेक्षया तस्यासत्त्वमेवेति चेत् । किमयं मन्त्रपाठः । नहि यो यत्राशक्तः स तदपेक्षया नास्तीति व्यवह्रियते धूमं प्रत्यशक्तस्य रासभस्याभावव्यवहारे गोचरत्वप्रसङ्गात् । न चाशक्तस्य स्वरूपमपि निवर्तत इति । स्वकार्यमपि प्रति कालान्तरेऽशक्तिसत्त्वमिति पक्षे तु यदि कालान्तराधारेयमशक्तिस्तदा कथं तदात्मिका । अथ स्वकालाधारा तदा तदैवासत्त्वप्रसङ्गः । कालान्तरे तु तत्कालाधारायाः शक्तेरसत्त्वात् सत्त्वप्रसङ्गः । एवं च भावस्य सम्बन्धी विधिरात्मा प्रतिषेधः पुनरन्योऽन्य । सोऽपि च पदार्थात्मेति त्वदनुवाददशायामपि प्रतिपादयन्तश्रमामहे । ततो विनाशरूपतायां नैयमपि न विनाशस्वभावनियतता सगतेर्यनैकान्तिकमेव कृतकत्वमिति । एतेन शङ्करनन्दनोक्तकारिका यावदुक्तमपास्तम् । यदपि शङ्करनन्दन एव व्याकरोति ।

' नहि स्वहेतुतो नाशो नाशिना नश्वरात्मता ।
नाशार्थता भवन्तस्ते मूर्त्यैव न भवन्ति तत् ॥

नाशिना नश्वरात्मतैव नाशार्थो नतु विनाशहेतुतो विनाशो नाशार्थस्ततो यथा भावविशेषः स्वहेतोर्घटात्मको भवन् घट एव भवति घटजनकात् भावाद्घटात्मताया असम्भवात् तथा विनश्वरो भवन् विनश्वर एव भवति । मूर्त्यैव समनन्तरं नाशात् । नान्यथा नश्वरः स्यात् । नश्वरात्मतयात्मलाभमभवनन्तरनाशितैव क्षणिकत्वम्' इति । तदाच्यते । कीदृशी नश्वरात्मतेह विवक्षिता किं वेगाद्दण्डदण्डाद्यभिनिपाते प्रणाशनशीलता, किं वा स्वयमेव । पौरस्त्य नुपपत्र सिध्यति । अनन्तास्तु विनाशहेतवोऽनियतकालाश्च तेषां सर्वदा सर्वथा प्रतिसन्धातुमशक्यत्वात् । कश्चित्को निपतन्त्येव कालान्तरे । स च निपतन् क्षणेनैव भावं विनाशयतीत्युपपद्यते । सापेक्षत्वेऽपि ध्रुवो नाशः । तथा च त्रिलोचनः प्रकीर्णके ।

'सर्वेषां नाशहेतूनां वैफल्यप्रतिबन्धयोः ।
सर्वदाऽसंभवान्नाशः सापेक्षोऽपि ध्रुवत्वभाक् ॥'

एवं च ध्रुवभावित्वस्यानपेक्षत्वावष्टम्भमस्तम्भस्य भवत्वान्नाशस्यानपेक्षत्वमसिद्धम् । किं च । अत्र कोऽयं नाशोऽनपेक्षतया विवक्षितः । किं विनश्यतीति विनाशोऽनवस्थायिभावस्वभावः पर्युदासप्रतिषेधरूपः । किं वा विनशनं विनाशोऽभावमात्रं प्रसज्यप्रतिषेधरूपम् । नाद्यः कल्पः । अनवस्थायिभावस्वभावस्याहेतुकत्वेन केनाप्यनभ्युपगतत्वेनासिद्धत्वात् । [1]द्वितीयपक्षेऽपि प्रसज्यरूपो यद्ययमहेतुस्तदा सदा सत्त्वमसत्त्वं वा स्यात् व्योमवद् व्योमाम्बुरुहवच्च । तथा च प्रथमपक्षे भावाभावयोर्यदि विरोधस्तदा कदाचिद् भावोपलम्भो न भवेत् । अथाविरोधस्तयोस्तदा भावाभावयोः सहावस्थितबान्धवयोरिव युगपदेकत्रावस्थानं स्यात् । द्वितीयपक्षेऽपि समस्तवस्तूनां शाश्वतिकताप्रसक्तिः स्वविरोधिनो नाशस्य सदैवासत्त्वात् । ननु नास्माकं भावस्य किंचिद् भवति केवलमेकक्षणायुः स्वकारणादुत्पन्नः क्षणान्तरे स एव न भवति । तथा च रहस्यम्—न तस्य किंचिद् भवति न भवत्येव केवलम्' इति । अहो चिराय मुग्धाः स्वरहस्योपदर्शनेनानन्दिताः स्म. । परमिदमपि समसूक्ष्मदृष्टिर्भूत्वा परिभावयित्वायुष्मान् भवतात् । अनन्तरभवनं भवत् तावत् कदाचित्कतयोत्पत्तिमदिति दैवेनापि दुर्वारम् । अत एव चाभवनस्य विनाशितया भवनोन्मज्जनं प्रसज्यमानं प्रतिषेधयितुं त्वया कथं शक्यम् । अथ न भवतीति भवनक्रियाप्रतिषेधमात्रमहेतुकमेतत् तत्कथमस्य कादाचित्कत्वं स्यादिति चेत् । उच्यते । भवनस्य कादाचित्क-

---

१ 'प्रसज्य प्रतिषेधो हि क्रियया सह यत्र नञ् ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥'

इति प्रसज्यप्रतिषेधस्य पर्युदासस्य च लक्षणम् । असूर्यंपश्या राजदारा इति प्रसज्यप्रतिषेधस्योदाहरणम् । अब्राह्मणमानयेति पर्युदासस्योदाहरणम् ॥

तथा तत्पूर्वकत्वेन तद्धेतुत्वोपपत्तेः । अन्यथा भवनेऽप्युत्तरत्रायभावस्त स्याप्यभवनक्रियाप्रतिषेधमात्रत्वात् । उभयत्र तदतिरिक्तक्रियाया अभावात् । किं च । नायं भवनक्रियाप्रतिषेधो ज्यायान् । विकल्पैरनुपपद्यमानत्वात् । स हि भवनस्वभावस्याभवनस्वभावस्य वा क्रियेत । न तावद् भवनस्वभावस्य । अशक्यत्वात् । अन्यथा भवनस्वभावत्वविरोधात् । अभवनस्वभावस्य भवनक्रियाप्रतिषेधे तु प्रयासवैयर्थ्यम् । न हि अभवनस्वभावो भवनं भवितुमर्हति । अभवनस्वभावभवनप्रतिषेधे वा बलाद् भवनापत्तिः स्यात् । एवं च स एव न भवतीति वाङ्मात्रमेतत् । उक्तवदभवनायोगात् । शब्दानुपपत्तेश्च । तथाहि— स एवेति भवनस्वभावं भावं परामृश्य न भवतीत्यभिदधतः शब्दार्थविरोधः प्रकटः । यदा न भवति न तदा भवनस्वभाव इति चेत् । एवं तर्हि अभवनस्वभावः स न भवतीति प्राप्तम् । ततश्च स एवेति क्षीणा वाचोयुक्तिः । तत्क्षणभवनस्वभाव एवेति चेत् कथं द्वितीयक्षणे न भवति । एकक्षणभवनस्वभाव इति चेत् । किमेतावता । नहि द्वितीयक्षणोऽपि नैकः । तदेकक्षणभवनस्वभाव इति चेत् । कोऽयं भवनातिरेकेण क्षणो नाम, यत उच्येत तदेकक्षणभवनस्वभाव इति । अतिरिक्तक्षणसद्भावे हि क्षणस्याक्षणिकत्वं स्यात् । तदैव तदपरक्षणाभावात् । भावे त्वनवस्थापत्तिः । तस्यापि भिन्नत्वेनावश्यमपरक्षणादिव्यतिरिक्तक्षणापेक्ष्यनिरूपणाभावात्समेतत् 'तदेक्षण' इत्यादि । एवं चाविशिष्टभवनानन्तरमभवनमिति प्राप्तम् । तथा च सति क्षणिकत्वेऽप्यनिश्चयः । भवनकादाचित्कतया स्वभवनोत्पत्तिः, तन्नाशोत्तरभवनोन्मज्जनं चापह्नुतमेव । उक्तनीतेस्तदवस्थत्वात् । न नश्वरमभवनं तुच्छत्वादिति चेत् । भवनेऽप्यतुच्छतया समानमेतत् । न समानम् । तस्याभवनाविरोधादिति चेत् । अभवनस्य भवने को नाम विरोधः । नीरूपस्य सरूपत्वासंभव इति चेत् । सरूपस्य कथं नीरूपत्वासंभव इति वाच्यम् । स्वहेतोस्तत्स्वभाव

भावादिति चेत् । अभवनस्यैवस्वभावभवने को दोषः । तुच्छस्वभाव-निःस्वभावते इति चेन्न । तद्भवनस्यैवाभावादनहेतुत्वात् तद्भावभावित्वात् । कस्तुच्छस्य भाव इति चेत् । भावाभवनमेवेति ब्रूमः । एतदेव ह्यभावभवनं यद्भावाभवनमिति । एवं च तुच्छतया तद्भावसिद्धिः । अन्यथा भवननाशायोगादिति । नापि निःस्वभावता । तस्य तुच्छतया ज्ञेयस्वभावत्वात् । अन्यथा तज्ज्ञानानुपपत्त्या तदेव न भवतीत्यज्ञातोक्तिप्रसक्तिः । भवनज्ञानेनाभवनाज्ञानात् । भवनस्य भिन्नकालत्वेनाभावस्वरूपत्वात् । अथ तस्यैव क्षणादूर्ध्वमभवनस्वभावत्वात् प्रत्यक्षेण च तथैव ग्रहणात्तथात्वे तत्प्रवृत्तेरभवनज्ञानोपपत्तेरुक्तदोषाभाव इति चेत् । न । विहितोत्तरत्वाद् भवनस्य भिन्नकालत्वेनेत्यादिना । अन्यथा त्वभवनानुपपत्तिरेव । तथाहि तत्कालभाविभवनादभिन्नमभवनं यदीष्टं तर्हि भवनमेवैतदिति कथमभवनोपपत्तिः । किं च । नास्य भाविनो नीरूपस्य चेन्द्रियेण ग्रहणमुपपद्यते । अतिप्रसंगात् । तथा न प्रत्यक्षेण कश्चिद् भवनवदभवनस्य ग्रहः । तथा निश्चयाभावात् । न च निरंशानुभवभावेऽपि विभ्रमात्तदभाव इति भाषणीयम् । भवननिश्चयस्याप्यभावापत्तेः । न च भवननिश्चयनिबन्धनानुभवे भ्रान्तिर्नास्तीति वाच्यम् । अभवननिश्चयनिबन्धनानुभवस्यैव भवननिबन्धनत्वात् । न चैकस्यैव कश्चिद् विभ्रमः । कश्चिन्नेति युक्तम् । एकत्वविरोधात् । न चान्तेऽभवननिश्चयात्पूर्वमपि तद्गतिः । अस्य पूर्वं सविस्तरमपास्तत्वादिति । एवं च स्वगृहे मङ्गलगानमेतत् ‘ न भवत्येव केवलम् ’ इति । अपि चास्मिन्नुच्यमाने नष्टशब्दस्य कश्चिदर्थोऽस्ति न वा । नास्ति चेत् किमनेनोक्तेन । अस्ति चेत् किं सत्त्वाद्भिन्नोऽभिन्नो वा । भेदपक्षो न युक्तः । भावातिरिक्ताभावानभ्युपगमात् । अथाभिन्नस्तदास्तिनास्तिशब्दयोः पर्यायता तद्बुद्ध्योश्चैकता स्यात् । तथा च क्षणक्षयिणो भावा, निरन्वयनाशो, न भवत्येव केवलम्, इत्यादिशब्दाना सत्त्वातिरिक्तार्थानभिधायित्वादुच्चा-

रणवैयर्थ्यम् । एवं च विनाशस्य कस्यचिद्बौद्धानामसिद्धेः 'ये यद्भा-वम्' इत्यत्राप्रसिद्धविशेषणः पक्षः इति तस्मादतोऽपि नो हेतोः

अथास्तु संयोगादिरतिशयः किं त्वेकान्तव्यतिरिक्तस्यैतस्योत्पादे पदार्थस्य कदाचिदप्यनुपपत्तेः कथं न स्थिरतास्थितिरिति चेत् । नैवम् । तद्धर्मत्वान्यथानुपपत्त्या तस्यैकान्तव्यतिरेकासिद्धेः । किं च । यदि कश्चन विशेषमकुर्वाणोऽपि सहकारी स्वीक्रियते तदा समस्तवस्तूनां समस्तसहकारिताप्रसक्तिः । विशेषाकरणेन निःशेषाणामविशेषादिति । न विशेषविधानं विना सहकारी कश्चिदुपपद्यते । स्यान्मतम् । एवंभूत एव भावस्य स्वभावो येन विशेषाकारकमपि प्रतिनियतमेव सह-कारिणमपेक्ष्य कार्यं जनयतीति । एषापि कदाशा । विकल्पैरनुपपद्य-मानत्वात् । तथाहि—यदाऽभीष्टसहकारिसंनिधौ कार्यमसौ समुत्पादयति तदैतस्य प्राचीनोऽकिंचित्करसहकारिकलापापेक्षालक्षणः स्वभावो व्यावर्तते न वा । यदि व्यावर्तते तदा कथं न कथंचिदस्थैर्यप्रतिक्षेपः । स्वभा-वव्यावृत्तौ स्वभाविनोऽपि तदव्यतिरेकेण तद्वदेव व्यावृत्तेः । अथ न व्यावर्तते कथं तर्हि कर्हिचित्कार्योत्पत्तिः स्यात् । अकिंचित्करसह-कार्यपेक्षालक्षणस्वभावस्याव्यावृत्तेः पूर्ववत् । तथाहि—य एव तस्य कार्याजननकाले स्वभावः स एव तज्जननकालेऽपि । एवं च यद्यसौ पूर्वं तन्नाजीजनत् पश्चादपि माजीजनत् । अथ पश्चाज्जनयति तदा पूर्वमपि जनयतु ननु प्रभोरिव स्वैराचारोऽस्य युक्तः । अथाचक्षीत, विवक्षितसहकारिणा सह जननस्वभावत्वात् तद्भावेऽसौ तदा तज्जन-यति । न पूर्वमपि तदभावादिति । एतदप्यापातपेशलम् । यस्माद्विव-क्षितसहकारिणा सह तस्य तज्जननस्वभावत्वमपि यदि स्थिरैकरूपं तदा पूर्वमेव तत्कार्यमजनयतो न मुनिशापेनापि प्रतिहन्तुं शक्यः । अन्यथा कथमविकृतस्वभावस्य स्थैर्यं स्यात् । तथाहि— यदि यावदायुरप्यसौ तेन सहकारिणा साकं तत्कार्यजननस्वभावस्तर्हि तत्स्वभावशृङ्खलया

तत्सहकारिणोऽप्यवश्यमाकर्षणीयत्वेन सदैव सत्त्वात् किमिति सदैव तन्नोत्पादयेत्। अनुत्पादयन्वा कथं तत्स्वभाव इति। ततश्च यदैवास्य तत्कार्यमुन्मज्जति तदैवानेन सार्धमेव तज्जननस्वभावो न पुनरन्यदेति सत्त्वापरणमस्य। एवं च स्वभावभेदे कथं स्थिरता स्यात्। अथोच्यते स्थिरभावस्य स्वभावभेद इति कथापि प्रायश्चित्ताय। तस्य तथा चित्रसहकारियोगादनेककार्यसाधकत्वेन यावज्जीवमेकस्वभावत्वात्। तथाहि—यावत्सत्त्वमेवंविधैकस्वभाव एवायं भावो येन तस्मादेव ततत्सहकारिसम्पर्क एव तत्रैव तत्रैव काले तस्यैव तस्यैव कार्यस्याविर्भावः। तथा च सति तदनन्तरोदितस्वभावाव्यावृत्तावपि न पूर्ववत् कार्यस्याभावः। तस्य सहकारिणस्तदैव भावात्। न च पूर्वमपि कार्यस्य भावः। तत्सहकारिण एवाभावात्। न चाधिकृतकार्योत्पादेऽप्यनन्तरोदितस्वभावव्यावृत्तिर्भावस्य। तस्य तथास्वभावत्वात्। न च कृतकार्यस्यैव पुनः करणम्। तस्य तथास्वभावत्वादेव। अथ किमिदं लीलाविलासचेष्टितमस्य भावस्य। समचिन्त्योऽपर्यनुयोगाश्च स्वभावो भावानां किमत्र कुर्म इति। अहो मोहमहोपाध्यायप्रागल्भ्यं यदेवंविधानप्येवं नर्तयति। तस्मात् स्वभावादुत्पादेऽपि कार्यस्य न तत्कार्यनिबन्धनस्य तस्य व्यावृत्तिः। तथैव तत्स्वभावस्य सद्भावेऽपि न पुनस्तस्यैव कार्यस्य करणमिति हि कः स्वस्थः श्रद्दधीतापि। तथाहि—यदि तावत् तत्स्वभावस्याव्यावृत्तिः कथमकरणं नाम। तच्चेत् कथमव्यावृत्तिः। यदैव हि तदनेनोत्पादि पुनश्च न करिष्यते। तदैवास्य तत्करणस्वभावस्तदकरणस्वभावेन व्यपनीतः पाण्डित्येनेव जाड्यम्। अन्यथा तत्करणस्वभावस्य भावेन हठाद् विवक्षितकार्यप्रसंगः। नहि दहनो दहनस्वभावे नैश्चयिकेऽनपगते न दहति। स्वभावापगमे वाऽनियत कथंचिदस्थैर्यम्। अनादेवस्थस्यैवास्थैर्यात्। अथोच्यते यथा दहनैकस्वभावोऽपि पावको दग्धदारूणि न दहति दग्धत्वात्। तेषामितराणि तु तानि दहति अदग्धत्वात्। एवं कालभेदेऽप्येकस्वभावो

भावस्तत्कार्यं करोति न करोति चेत् किमसमञ्जसमसमञ्जसमपि किंचित् । दृष्टान्तेऽप्येकस्वभावत्वानुपपत्तेः । न खलु सर्वथा स्वभाव-भेदमन्तरेण दहनो दहति न दहति चेत्युपपद्यते यतो दार्ष्टान्तिकसिद्धिः स्यात् । इत्थं नास्यानेककार्यकारिणो यावत्सत्त्वमेकस्वभावस्य सत्यता-मनुसरति । तदभावे च नैकान्तस्थिरतापि । एवं च प्रतीयमानमतिशयमकुर्वन्तोऽपि सहकारिणः स्वीकृताः । न च सर्वथा स्थिरत्वं साधयितुं शक्तमिति 'कृतश्च शीलविध्वंसो न चानङ्गः शमं गतः' इति न्यायभाजनतां गतोऽसि । तस्मादवश्यं प्रतीयमानातिशयाधायकत्वेनैव सहकारित्वं स्वीकृतम् । तत्र च सिद्धसाध्यत्वमुक्तमेव । हेतावपि विनाशाभिमतस्य तदुत्पत्तिनिश्चयविषयीभूतबीजेन सजातीयत्वं सर्वथाभिमतं कथंचिद्वा । प्रथमकल्पनायां प्रतिवाद्यसिद्धिः । जनकरूपा-जनकरूपविसदृशपरिणामपरिणतयोः सर्वथा सदृशपरिणामानुपपत्त्या सर्वथा सजातीयत्वेन जैनैरनभ्युपगमात् । अस्तु वा सर्वथा सजातीयत्वं तस्य । तथापि सहकारिसमवधानहीनेन बीजेन किंचित्कालमङ्कुरमकुर्वता व्यभिचारी हेतुः । सत्यपि तत्र तज्जातीयत्वेऽङ्कुरादिकार्य-वैकल्यप्रयुक्ततासम्भवात् । सहकारिसाकल्यस्यैव तदानीमसद्भावात् । अथ यत्संनिधानादनन्तरमेव कार्यमुपजायते त एव सहकारिणो न पूर्वकालभाविनोऽपीति चेत् । नन्वेवं वदन्तः सौगता एव शोभन्ते येषां पूर्वापरकालयोरत्यन्तभेदः । भवता तु यः प्रागावरणे संनिधि-भावी समभूत् स एवाङ्कुरोपजननसमयेऽपीत्युभयदशायां सहकारितास्तु यद्वा मा भूत् । कस्यचिदपि संनिधानादेर्विशेषस्योभयदशायामप्यन-तिरिक्तत्वात् । अथ पूर्वकालभाविनस्तेऽन्ये चोत्तरकालिकास्तद्वी-र्यमपि तदन्यत् चौत्तरकालिकमिति किं न स्यात् । अथेष्यत एव तेन [illegible] तद् बीजमन्यदेव पाकजरूपादिपरिणतपरमाणुभि-रारब्धमङ्कुरोत्पादकमिति चेत् । दिष्ट्या तर्हि ननु मम जातोऽसि

---

१ नैष्ठिकाचार । अनङ्ग काम

वीजस्यैवं स्थिरत्वोपपादनेन कृतार्थः । किंच । यदि पौर्वकालिकाः क्षित्यादयो नाङ्कुरकरणे सहकारिणस्तर्हि किमिति कृपीवलस्तान् वीजस्य सन्निधापयति । क्रमेण तस्यातिशयपरम्परोपजननार्थेति चेत् । तर्हि सिद्ध कथंचिदस्थिरत्वं वीजस्य । अतिशयपरम्परायाः कथंचित्ततोऽव्यतिरिक्तत्वात् । अपि चैव शिलाशकलस्वरूपव्यतिरेकोदाहरणस्य कथं न साध्यव्यावृत्तता । यदि हि तत्र सहकारिसाकल्ये सत्यपि स्वरूपसामर्थ्याभावमात्राप्रयुक्त कार्यवैकल्यमुपदर्शित स्यात्तदा स्यात्तस्मात् साध्यव्यावृत्तिः । यावता त्वदभिप्रायेण तत्र न सहकारिसाकल्यं कदाचिदस्ति । यत्संनिधानादनन्तरमेव कार्यमुपजायते तस्यैव सहकारितया त्वया प्रतिपादितत्वात् । शिलाशकलादेश्च क्षित्यादिसंनिधानेऽपि कदाचिदङ्कुरानुत्पत्तेः । अथ सन्तु सहकारिणस्ते किंतु न शकलाः सपर्किणस्तदानीमभूवन्निति । तत्साकल्यासिद्ध्या न सहकारिमध्यमध्यासीनेन वीजेन कंचित्कालमङ्कुरमकुर्वता व्यभिचार इति चेत् । ननु किं नाम न संनिहित तत्र क्षेत्रजलादेः सकलस्य मिलितस्य दर्शनात् । अथ न मिलितमद्यापि प्राणिनामदृष्टमिति चेत् । नैवम् । यत्र हि अदृष्टस्य दृष्टकारणोपहारेणोपयोगस्तत्र तेषां पूर्णतायां कार्यमुपजायते एव । अन्यथा त्वन्मतेऽन्त्यतन्तुसंयोगेऽपि कदाचित्पटो न जायेत । जातोऽपि वा कदाचिन्निर्गुणः स्यात् । वलवता कुलालेन दृढनुन्नमपि चक्र कदाचिन्न भ्राम्येत् तथाविधादृष्टवैगुण्यादित्यपि स्यात् । यत्र तु दृष्टकारणानुपहारेणैवादृष्टस्य व्यापारस्तत्र तद्वैगुण्यात्कार्यस्यानुदयो यथा त्वन्मत एव परमाणुकर्मणा । तदिहापि यदि जलादीनि दृष्टकारणानि सकलानि मिलितानि किमदृष्टं न मिलित नाम । तत्प्रयुक्तत्वात्तन्मेलकस्य । अतः कथं साकल्यमसिद्धं तत्र । अस्माकं तु सहकारिसाकल्ये सत्यपि तदानीं पर्यायस्वरूपसामर्थ्यस्याभावान्नाङ्कुरोत्पादः । उपढौकिते तु तत्साकल्येन तस्मिन्नुच्छूनोच्छूनतरोच्छूनतमादिक्रमेणावश्यमन्त्यक्षणे कार्यो-

पजन स्यादेव । इति कथंचित्पुनस्तस्य तदुत्पत्तिनिश्चयविषयीभूत बीजजातीयत्वे तदुत्पत्तिनिश्चयेत्यादिहेतुविशेषणस्य वैयर्थ्यम् । यत एतद्विशेषणोपादानेऽपि कथंचित् तज्जातीयत्वविवक्षाया बीजत्वमात्रेणैव सजातीयत्वमीप्सितमायुष्मत । तच्च बीजजातीयत्वादित्येतावतैव कृतार्थं किमर्थं तद्विशेषणोपन्यास । यदप्यवादि 'विवादाध्यासितो भाव' इत्यादि । तत्र कथंचिद्भेदाभावे साध्ये सिद्धसाध्यता । कालभेदेऽपि तस्याभिन्नत्वेनास्माभिरपि स्वीकारात् । द्रव्यरूपतया तस्यैव भावस्यावस्थानात् । सर्वथा भेदाभावे तु साध्येऽनुमानबाध । तथाहि—विवादाध्यासितो भाव कालभेदे कथंचिद् भिद्यते । स्वात्मभूतधर्मनिवृत्त्युपलब्धिमत्त्वान्यथानुपपत्ते । येन हि कुशूलमूलावलम्बिना न स्वात्मभूताजनयद्रूपधर्मधाम समासीत् तदैवेदानीं क्षितिजलानलादिसामग्रीसंपर्कात् तथाविधतद्धर्मापगमेन स्वात्मभूता जनयद्रूपतामाकलयति । न च धर्मस्य भावात्मभूतत्वमसिद्धमभिधानीयम् । अस्य प्रसाधयिष्यमाणत्वात् । विरुद्धधर्मासंसृष्टत्वलक्षणहेतुरपि कथंचिच्चेदुच्यते तदा विरुद्धतामधिरोहति । तथाहि—सर्वथा भावस्याभेदप्रसिद्ध्यर्थमयमुपादायि । अथवाऽस्मात् सर्वथा भेदविरुद्ध कथंचिद्भेद एव प्रसिध्यतीति । सर्वथापक्षे त्वसिद्ध । विवादास्पदीभूतभावे जनयद्रूपाजनयद्रूपयोगेन विरुद्धयोर्धर्मयो सद्भावात् । अथ न न प्रयोगाप्रयोगमात्रेण विरोध । अन्यथा बीजस्याङ्कुररासभजनकत्वाजनकत्वापेक्षया भेद स्यात् किंतु प्रकारभेदेन । यदा हि यज्जननं तदा तदजननं विरुद्ध न पुनरन्यदेति कथ कालभेदेन जनयद्रूपाजनयद्रूपयोर्विरुद्धत्व भवेदिति चेत् । तदप्यचतुरस्रम् । अङ्कुरजनकत्वरासभाजनकत्वाभ्या बीजस्य भिन्नत्वेनाभ्युपगमात् । ननु रासभापेक्षाजनकत्ववदनन्तपदार्थापेक्षाजनकत्वानामनन्ताना धर्माणा संभवेन तदात्मकबीजस्यापि तावद्धा भेदात् किमिदानीं बीजमस्तु । तदयुक्तम् । तत्तदनन्तधर्माविष्वग्भावपरिणतपदार्थविशेषस्यैव बीजत्वात् न खल्वमी धर्मा सर्वथैव व्यतिरिक्ततनवो यतस्तदात्मा बीजाख्यो

धर्मो न स्यात् । तत् सिद्धं बीजं कथंचिदनेकमेककालम् । तद्वदनेककालमपि । मा भूद्वा जनयद्रूपाजनयद्रूपयोर्विरुद्धत्वम् । तथापि नानयोस्तावद्दैवेनापि भेदोऽपह्नोतुं पार्यते । सति चास्मिंस्तदात्मनो धर्मिणोऽपि कथं न भेदो भवेत् । अन्यथा धर्माणां तद्धर्मितादात्म्यमपि न स्यात् । एवं च भेदस्य भवदभिमतस्य विरुद्धधर्माध्यासेन व्याप्त्यसिद्धेरनैकान्तिकोऽयं व्यापकानुपलम्भः । दृष्टान्तोऽपि परमाणुरूपः साध्यसाधनविकलः प्रतिसम्बन्धिपरमाणुसंबन्धनिबन्धनभिन्नस्वभावेभ्यः कथंचिदस्याभिन्नत्वेन कथंचिद् भिन्नत्वात् । धर्माणां च कथंचिद् विरोधस्याभिहितत्वात् ।

यौगपुङ्गव तवैष सर्वथा स्थैर्यसाधनमनोरथद्रुमः ।
दोषदुष्पवनपीडितस्ततः सत्यमापदफलत्वलाञ्छनम् ॥ ५९८ ॥

तदेवमेकान्तेनानित्यत्वं नित्यत्वं च न कस्यचित्प्रमाणस्य गोचरः नित्यानित्यत्वं तु वस्तुनो द्रव्यपर्यायोभयरूपत्वेनानुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् प्रत्यक्षसिद्धमेव । तथाहि—मृत्पिण्डशिवकस्थासकोशकुशूलकलशकपालादिभेदेष्वविशेषेण सर्वत्र मृदन्वयः संवेद्यते प्रतिभेदं च व्यावृत्तिः । तथा च न यथाप्रतिभासं मृत्पिण्डादिषु संवेदनं तथाप्रतिभासमेव शिवकादिष्वाकारभेदानुभवात् । न च यथाप्रतिभासभेदं तद्विजातीयेषु पयःपावकपवनादिषु तथाप्रतिभासभेदमेव शिवकादिषु मृदन्वयानुभवात् । न चास्यानुभूयमानस्यापि संवेदनस्यापलापः कर्तुं पार्यते । सर्वापलापप्रसंगात् । न चास्य संवेदनस्य बाधकः प्रत्ययोऽस्ति । तस्य कदाचिदप्यनुपलब्धेः । तस्मादन्वयाविनाभूतो व्यतिरेको व्यतिरेकाविनाभूतश्चान्वय इति वस्तुस्वभावः । एवं च यत एव नित्यमत एवानित्यत्वं द्रव्यात्मना नित्यत्वात् तस्य चाभ्यन्तरीकृतपर्यायत्वात् । यत एवानित्यमत एव नित्यं पर्यायात्मनाऽनित्यत्वात् तस्य चाभ्यन्तरीकृतद्रव्यत्वात् । उभयरूपस्य चानुभवसिद्धत्वात् । एकान्तेनाभिन्नस्य भिन्नस्य चोभयस्याभावात् । तथा चोक्तम्—'[1]द्रव्यं पर्यायवियुतं पर्या-

१ एतदर्थिका गाथा सम्मतितर्कप्रकरणे प्रथमकाण्डे दृश्यते—' दव्वं पज्जवविउअं दव्वविउत्ता य पज्जवा नत्थि '। इति ।

या द्रव्यवर्जिता । क्व कदा केन किंरूपा दृष्टा मानेन केन वा ॥' इति । तथा च तयोरभेदसिद्धौ तावत् प्रयोगः । विवक्षितद्रव्यपर्यायौ एकं वस्तु, अशक्यविवेचनत्वान्यथानुपपत्तेः । पर्यायादवान्तरात् पृथग्भूतमेव द्रव्यं वास्तवमेकेषाम् । द्रव्यादवान्तरात् पृथग्भूत एव पर्यायो वास्तवः परेषाम् । ततोऽसिद्धमशक्यविवेचनत्वमिति न मन्तव्यम् । तत्स्वरूपाभावेऽर्थक्रियाया अनुपपत्तेः । न हि द्रव्यं केवलपरस्परविविक्तस्वस्वलक्षणत्वमपि द्रव्यपर्याययोर्भेदं साधयति । परस्परविविक्तस्वरूपलक्षणत्वं च स्याद् भेदश्च न स्याद् विरोधाभावात् । ततः संदिग्धविपक्षव्यावृत्तिको हेतुरत्रेति नाशङ्कनीयम् । परस्परविविक्तस्वरूपलक्षणत्वेनापि भेदानभ्युपगमे नानात्वं दुर्घटं जगतः स्यादिति विपक्षे बाधकप्रमाणसद्भावात् । निश्चितव्यतिरेकमेतत्साधनम् । अत्र भट्टचट्टः समाचष्टे–' यदि हि स्वभावतो न भेदो धर्मधर्मिणोः संख्याभेदादपि नैव भेदः । न हि परस्पराभिद्यमाना अपि संख्यादय आत्मभूतभेदं साधयितुं समर्थाः ' इति । तत्रायं तावत् न सम्यक् परमतं वेत्ति तद्दूषणाय प्रगल्भते चेति विनीयते नश्चेतः । न खलु नैयायिकैरिवास्माभिः संख्यादय एकान्तेन धर्मिणो भिन्ना अभ्युपेयन्ते । यतः पररूपाद्याभिधीयमानं शोभां बिभृयात् । किंतु कथंचिद् भिन्ना अपि । कथंचिद्भिन्नाश्च ते धर्मिणस्ते यथा परस्परं भिद्यन्ते तथा धर्मिणमपि कथंचिद् भिन्दन्त्येव । अन्यथा तेषामपि भेदो न भवेत् । यदप्ययमेव माह–' संख्याभेदस्तावदसमर्थः एकस्मिन्नपि द्रव्ये बहुत्वेन व्यवहारदर्शनात् । यथा गुरवः ' इति । तदप्यपर्यालोचितवचः । अनन्यसाधारणस्वरूपानामादिगुणानां प्राधान्यविवक्षया तत्र बहुत्वस्योपपत्तेः । यत्त्वाह–' रूपादिनिमित्तत्वे हि गुणीति न कदाचिदेकवचनं स्याद् ' इति तदपि परिफल्गु । न खलु सर्वत्र गुणानां प्राधान्यविवक्षयैव शब्दाः प्रयुज्यन्ते । धर्मिप्राधान्यविवक्षयापि तेषां प्रयुज्यमानत्वात् । ततो गुरुरियत्र धर्मिप्राधान्य

विवक्षयैकवचन प्रयुज्यमान कथं विरोधमध्यासीत् । किं च । यदि संख्याभेदो न भेदकस्तदैकत्रापि कुटे कुटकोटेः कुटकोटावप्येककुटस्य प्रतीतिः किं न स्यादिति प्रतिनियतव्यवहारविरामः प्रसज्येत । यापि दारा इत्यादिकतिपयशब्दकदम्बके बहुत्वसंख्या सापि शब्दशक्तिमाहात्म्यात् सदैव गुणाना प्राधान्यविवक्षया तच्छब्दानां प्रवृत्तेरविरुद्धैव । यत्तूच्यते ‘ संज्ञापि संकेतनिबन्धना स चेच्छायत्तवृत्तिरिति कुतस्ततोऽर्थभेदः । एकस्मिन्नपि च संज्ञाभेददृष्टेः कथमस्य भेदनिमित्तता । यथेन्द्रः शक्रः पुरन्दर ’ इति । तत्रेच्छायत्तवृत्तिः सकेत इति कुहेवाकमात्रम् । सकेतस्य वस्तुनिष्ठतया प्रतिपादितत्वात् । इन्द्रशक्रादिसज्ञाभेदोऽपि सर्वथैकस्वरूपे सुरपतौ नास्माक सिद्धो यतोऽनैकान्तिकः स्यात् । इन्दनशकनादिशक्तिकदम्बकात्मको हि शक्रस्तत्तच्छक्तिप्राधान्यविवक्षया तैस्तैर्वाचकैरुच्यते । डित्थडवित्थादिशब्दा अपि तत्तच्छब्दवाच्यतारूपा कांचिदभिधेयगतां शक्तिमपेक्ष्य प्रयुज्यन्ते । ततश्च यदुच्यते ‘येषां च पर्यायाणां न कदाचिदर्थानुगममात्रा तत्र किं वक्तव्यम्’ इति तदज्ञतामेवास्य सूचयतीति । यदपि प्रतिपाद्यते–लक्षणभेदोऽप्यहेतुरसिद्धत्वात् । न ह्येको भावः क्वचिदप्यन्वयी सिद्धः ’ इत्यादि । तदपि नोपपन्नम् । यतोऽन्वयित्वं सहक्रमभावि तत्तत्पर्यायानुगामित्वमुच्यते । तच्च कथंचिदेकस्या एव मृदो रूपादिगुणेषु स्थासकोशकुशूलकपालकलशादिपर्यायेषु चानुगतायाः समीक्षणात् सुप्रसिद्धम् । यत्पुनरुच्यते ‘ पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेस्तस्योपलब्धिलक्षणप्राप्तस्य तद्विवेकानुपलक्षणात् पर्यायेषु च तुल्यरूपकार्यकर्तृषु द्रव्याभिमानो मन्दमतीनां न पुनस्ततो विलक्षणमुपलक्ष्यते ’ इति । तदस्य स्वमतानुरागान्धितदृशो यथावद्वस्तुदर्शनासमर्थस्य व्याहृतम् । अत्र हि यथा घटविवेकेन पटस्योपलक्षणं तथा पर्यायविवेकेन द्रव्यस्योपलक्षणं नास्तीति नास्ति पर्यायेभ्यो विविक्तं द्रव्यमिति न[1] तावत्तवाभिप्रेतं तथास्माभिरप्यभ्युपगमात् । किंतु

---

१ इदं नेतिपदं तथास्माभिरिति वाक्ये संबन्धनीयम् ।

पर्यायरूपतया परिणतस्य तस्यानुपलम्भगमिष्ट, तत्र चासिद्धता । तथा परिणतस्य तस्योपलब्धे प्रतिपादितत्वात् । यदप्यभिधीयते—'कार्यं भेदस्यास्मात् प्रत्यसिद्ध एव । रूपादीनामेव केषाचित् तत्कार्यं कर्तृत्वात्' इति । तदप्यसत् । यदि हि रूपादय एव द्रव्यनिर्वर्त्यं कार्यं कुर्युस्तदा व्यस्तदशावर्तितन्तुस्तोमतोऽपि शीतापनोद किं न स्यात् । तज्जनकरूपादीना तदानीमपि विद्यमानत्वात् । तथा च दृष्टबाधा, कार्यकारणभावविलोपप्रसङ्गश्च । तन्मात्रस्य सर्वत्राप्यविशेषेण सर्वस्य सर्वकार्यतापत्ते । अथ विशिष्टास्ते तत्तत्कार्यकारिणस्ततो न दृष्टबाधा, नापि कार्यकारणभावविलोप इति चेत् । किमिद तेषा वैशिष्ट्य द्रव्यादन्यत् प्रसाधयिष्यते च तेस्य कथचिन्न्यद्रव्यमिति । यत्तूच्यते—'कार्यं हि द्विविध भिन्नकालमभिन्नकाल च । तत्र पूर्वं भवति भेदनिबन्धन यदीह सभवेत् । तत्तु न सभवति धर्मधर्मिणोस्तुल्यकालत्वात् । अभिन्नकालस्तु कार्यभेदोऽनैकान्तिको विभक्तपरिणामेषु पटादिषु सभवात् पटादयोऽपि हि विभक्तपरिणामा अनेककार्यं कुर्वन्तो दृष्टा न च धर्मिरूपेण भिद्यन्ते' इति । तत्रोच्यते । अभिन्नकाल कार्यभेदो भेदकस्तावत् इह कश्चि क्रियत । तस्य चानैकान्तिकत्वकीर्तनमकिंचित्करम् । धर्मिरूपतया पटादीनामभेदेऽपि हि विचित्रकार्यजननशक्त्यादिधर्मरूपतया भेदोऽपि विद्यत एव । न खलु कार्यभेदाद्भेद एवेति ब्रूम । किंतु यत्र कार्यभेदस्तत्र कारणभेदो भवत्येवेति । स च पटादिषु स्पष्ट एवेति नानैकान्त । यत्तु भणिष्यते—'एकस्यानेकक्रियाविरोधात्' इत्यादि । तत्क्षणभङ्ग एव प्रतिहनिष्यते । एव च 'द्रव्यपर्यायरूपत्वात् द्वैरूप्य वस्तुन किल । तयोरेकात्मकत्वेऽपि भेद सत्यादिभेदत' इत्याशङ्क्य

' इन्द्रियाणाभिमाभि वस्तुरूप हि गोचर ।
शब्दाना नैव तत्त्वेन सत्याभेदादिभिन्नता ॥ '

इत्यादि य कारिकाकदम्बकमभिहितं तदपि निरवकाशमिति । एव च

भट्टचट्ट समुत्तिष्ठ व्रज मज्ज नले यत ।
आशास्ते निष्फलीभूताः सर्वाः स्याद्वाददूषणे ॥ ५९९ ॥

यद्प्यपरैरत्र प्रेर्यते–'पर्यायनिवृत्तौ द्रव्यस्य निवृत्तिर्भवति न वा। यदि भवति, अनित्यमेव तत् । निवृत्तिमत्त्वात् पर्यायस्वात्मवत् । अथ न भवति तर्हि द्रव्यपर्याययोर्भेदप्रसंगः । तथाहि पर्यायेभ्योऽन्यद्द्रव्यं तन्निवृत्तावपि तस्यानिवृत्तेस्तुरङ्गादिव कुरङ्ग इति । तदपि प्रत्यादिष्टं भवति, उपन्यस्तनीत्या द्रव्यपर्याययोः । कथंचिद्भेदाभेदसिद्धौ सत्यां पर्यायनिवर्तने कथंचिद् द्रव्यनिवर्तनस्य स्याद्वादिनामभीप्सितत्वात् । विजृम्भितं चात्र श्रीमदनेकान्तजयपताकायां पूज्यैः श्रीहरिभद्रसूरिभिरित्यलमिह द्राघीयस्या चर्चया । एवं नित्यानित्यात्मके वस्तुनि व्यवस्थापिते उत्पादव्ययध्रौव्यात्मकत्वं वस्तुनः सत्त्वमिति परमार्थतः प्रतिष्ठितं भवति । 'उत्पादव्ययध्रौव्ययुक्तं सत्' इति भगवदुमास्वातिवाचकवचनात् । तथाहि–सर्वं वस्तु द्रव्यात्मना

... .... .... .... ... .... .... .... ....

.... त्वानुपपत्तेरुत्पादव्ययध्रौव्ययुक्तत्वेनैवास्य सत्त्वं प्रतिपत्तव्यम् । न चोत्पादादयः प्रत्येकं वस्तुरूपा येन तेषामप्यपरोत्पादादियोगतः सत्त्वेन भवितव्यमित्यनवस्था स्यात् । तेषां वस्त्वेकदेशत्वेन व्यवस्थितत्वात् ।

तेनोत्पादव्ययध्रौव्ययुक्तं सदिति भारती ।
ददाति विद्वल्लोकाय नूनं जगति भारती ॥ ६०० ॥
नित्यानित्यात्मकं सर्वव्यवहारप्रसाधकम् ।
एवं च सिद्धिमानीतं समस्तं वस्तु मानतः ॥ ६०१ ॥

अभिलाप्यानभिलाप्यैकान्तस्य खण्डनम् ।

अभिलाप्यानभिलाप्यानेकान्तः सिद्धिमेति यन्मानात् ।
सर्वत्र वस्तुजाते तत् संप्रति दर्श्यते सतः ॥ ६०२ ॥

१ अ. ज. पताकायां चतुर्थाधिकारे । २ तत्त्वा सू. ५-२९.

तथाहि—एवमस्तु वस्तु, अभिलाप्यात्मकम्, तथोपलम्भस्यान्यथानुपपत्तेः । न खल्वेकान्तेनाभिलाप्यस्वभावं वस्तु उपलम्भभाजनं भवितुमर्हति । अभिलाप्ययोग्यपर्यायैरेव स्थूलैः कालान्तरस्थायिभिर्व्यञ्जनपर्यायापराभिधानैश्चेतनाचेतनस्य सकलवस्तुनोऽभिलाप्यत्वप्रतीतेर्न पुनरभिलापयोग्यपर्यायैरपि । नाप्येकान्तेनाभिलाप्यस्वरूपमनभिलापयोग्यपर्यायैरेव सूक्ष्मैः प्रतिक्षणभाविभिरर्थपर्यायापरनामधेयैः सर्वस्यानभिलाप्यत्वप्रतीतेः नाभिलापयोग्यपर्यायैरपि । स्यादेतत् । यदि वस्तु, अभिलाप्यानभिलाप्यधर्मकं, एवं तर्ह्यभिलाप्यानां धर्माणां शब्देनाभिधीयमानत्वात् । किमित्यकृतसंकेतस्य श्रोतुः पुरोऽवस्थितेऽपि घटसादौ वाच्ये शब्दात् न सम्प्रत्ययप्रवृत्ती स्यातामिति । उच्यते । अकृतसंकेते वाच्ये ज्ञानावरणकर्मक्षयोपशमाभावात्तस्य च संकेताद्यभिव्यङ्ग्यत्वात् । तथाहि—तत्स्वभावस्यात्मनो मिथ्यात्वादिजनितज्ञानावरणादिकर्मपटलाच्छादितस्वरूपस्य संकेतश्रवणदानप्रतिपक्षभावनादिभिस्तज्ज्ञानावरणकर्मक्षयोपशमः क्रियते ततो विवक्षितार्थाकारसंवेदनं प्रवर्तते । अन्यथा तत्प्रवृत्त्यभावात् । नन्वभिलाप्यानभिलाप्यस्वभावमेकं वस्तु विरोधशार्दूलकवलीकृतत्वान्न समञ्जसमेव । तथाहि—अभिलप्यते यत्तदभिलाप्यम् । तद्विपरीतं चानभिलाप्यमिति । ततश्च तत् यद्यभिलाप्यं न तर्हि अनभिलाप्यमनभिलाप्यं चेन्न तर्हि अभिलाप्यमिति । एकस्यानेकविरुद्धधर्माध्यासानुपपत्तेः । एतदसमीचीनम् । अभिलाप्यत्वानभिलाप्यत्वयोर्भिन्ननिमित्तत्वेनैकत्र वस्तुनि विरोधासिद्धेः । ययोर्भिन्ननिमित्तत्वं न तयोरेकत्र वस्तुनि विरोधो यथा ह्रस्वत्वदीर्घत्वयोः । भिन्ननिमित्तत्वं चैकत्र वस्तुनि, अभिलाप्यत्वानभिलाप्यत्वयोरिति । न चानयोर्भिन्ननिमित्तत्वमसिद्धम् । व्यञ्जनपर्यायापेक्षयाऽभिलाप्यत्वस्यार्थपर्यायापेक्षया त्वनभिलाप्यत्वस्य व्यवस्थापितत्वात् । विरोधनिरासस्तु प्रपञ्चतः सामान्यविशेषानेकान्तवादिवदिहाप्यनुसर्तव्यः ।

यस्तु शब्दाद्वैतवादी शब्दार्थयोस्तादात्म्यमभिसंधायाभिलाप्यतैकान्तं प्रतिजानीते । नायमवधानार्हः परीक्षकाणाम् । तथाहि—शब्दार्थयोस्तादात्म्यमिति कोऽर्थः । यदि तदात्मनोर्भावस्तादात्म्यं तर्हि द्वावपीष्टावेव । पृथग्भावाभिधानान्नानयोरैक्यमेवेति । एवं च न शब्दब्रह्मविवर्तमात्रं जगदिति कथमभिलाप्यतैकान्तः संभाव्येतापि । अथ तदात्मनो भावस्तादात्म्यमिति । तदसुन्दरम् । शब्दार्थयोस्तादात्म्यमित्यत्र द्वयोरपि प्रधानत्वे तदात्मनो भाव इत्येकतरप्राधान्येन संगत्यसंभवात् । अस्तु वासौ तथापि कस्यायमात्मा यदात्मनो भाव इति । यदि शब्दस्य तर्हि तद्व्यतिरेकेणार्थाभावान्निखिलस्य जगतः शब्दमात्रत्वाच्छब्दार्थयोस्तादात्म्यमिति न न्यायानुकूलं स्यात् । न खलु देवदत्तवन्ध्यास्तनन्धययोस्तादात्म्यमिति प्रतिपादयन्ति विद्वांसः। अथार्थस्यायमात्मा तदाप्यर्थव्यतिरेकेण शब्दाभावादखिलस्यापि विश्वस्यार्थमात्रत्वाच्छब्दार्थयोस्तादात्म्यमित्यसंगतमेव स्यात् । किं च, अत्र पक्षे लाभमिच्छतो मूलोच्छेदस्तवायातः । अर्थमात्रात्मकत्वसिद्ध्या विश्वस्य शब्दमात्रात्मकत्वासिद्धेः । विस्तरतश्च शब्दब्रह्मवादः प्रागेव प्रतिहत इत्यलमिह तद्दूषणप्रबन्धेनेति । योऽप्यनभिलाप्यतैकान्तं **ताथागतः** समातिष्ठते सोऽपि न पटिष्ठः । यदि हि एकान्तेनानभिलाप्यं वस्तु प्रतिज्ञायते कथं तर्हि तथाविधशब्दार्थप्रतीत्यादिकमुपपद्येत । दृश्यते च वैयावृत्यकरशिरोमणे **पद्मचन्द्रगणे** बालवृद्धविद्वल्लोकसमाकुलातुच्छस्वच्छगच्छोपष्टम्भार्थमन्नपानादिकमानयानयेत्याचार्यवचनश्रवणसमयसमनन्तरं तथाविधार्थावगमपुरःसरा तस्य महात्मनोऽन्नपानाद्यानयने स्खलनविकला प्रवृत्तिः, तत्समासादनं, समासादिते चाचार्याणां पुरस्तथा निवेदनमिति कथं नाभिलाप्यत्वासिद्धिः । अपि चानभिलाप्यतैकान्ते स्ववचनविरोधापत्तिः ।

१ 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।' इति वाक्यं शब्दार्थतादात्म्य एव सङ्गच्छते ।

१ भक्तादिभिर्धर्मोपग्रहकारिवस्तुभिरुपग्रहकरणं वैयावृत्यम् ।

अनभिलाप्यैकान्तशब्देनानभिलाप्यैकान्तस्याभिधानात् । अनभिलाप्यैकान्तस्याप्यनभिलाप्यत्वे कुतः परप्रतिपादनम् । तद्वचनाच्चेत् कथमनभिलाप्यैकान्तः कान्तः स्यात् । परमार्थतो न कश्चित् वचनात्प्रतिपाद्यते चेत्, स्वयमवाच्यताप्रतिपत्तिः कथम् । वस्तुनि वाच्यतानुपलब्धेश्चेत् । सा यदि दृश्यानुपलब्धिस्तदा सिद्धा क्वचिद्वाच्यता । क्वचित्सिद्धसत्ताकस्यैव कुम्भादेर्दृश्यानुपलब्धिवशादभावप्रतीतेः । विकल्पप्रतिभासिन्यपोहे प्रतिपन्नाया एव वाच्यतायाः स्वलक्षणे प्रतिषेधान्नेदोष इति चेत् । नैवम् । वस्तुवाच्यताया प्रतिषेधायोगात् । तदन्यापोहमात्रवाच्यताया एव प्रतिषेधात् । न चान्यापोहवाच्यतैव वस्तुवाच्यता । तत्प्रतिषेधविरोधात् । अथेयमदृश्यानुपलब्धिर्न तर्हि वस्तुनि वाच्यत्वाभावनिश्चयः । अतिप्रसक्तेः । निरस्तश्चायमवाच्यैकान्तः प्रपञ्चेनापोहव्यपोहप्रस्तावे प्रागेवेति पर्याप्तमिहातिविस्तरेण । स्याद्वादाभ्युपगमे तु न कश्चिद्दोषः कथंचिद् वाच्यत्वावाच्यत्वयोर्यथोक्तनीत्या वस्तुनि प्रतीयमानत्वादिति ।

अभिलाप्यानभिलाप्यं प्रमाणपर्यङ्कशायि विश्वमिदम् ।
तस्मादङ्गीकार्यं नन्वेकान्तद्वयमनर्थम् ॥ ६०३ ॥

कार्यकारणभेदाभेदैकान्तवादस्य खण्डनम् ।

इत्थं कार्यकारणयोर्भेदाभेदैकान्तोऽपि कुतीर्थिककल्पनाशिल्पिप्रतिलब्धमूर्तिर्न प्रमाणवीथीमाक्रामति । न खलु कापिलपरिकल्पितः कार्यकारणयोरभेदैकान्तः स्वप्नेऽपि प्रतीयते । सत्त्वासत्त्वादिलक्षणाद्भिन्नतन्त्वादिकारणपटादिकार्ययोर्भेदस्याप्यनुभूयमानस्य निर्बाधानुभवसिद्धत्वात् । विस्तरतश्चायं तन्मतमथनप्रस्तावेऽग्रेऽस्तविष्यते । नापि वैशेषिकाभिमतस्तयोर्भेदैकान्तः कदाचनाप्यनुभवपथमवगाहते । परस्परमसाधारणलक्षणस्याभेदस्यापि प्रतीयमानत्वात् । अथोच्यते । कार्यकारणे अत्यन्तभिन्ने, भिन्नप्रतिभासत्वात् । यदित्थं तदित्थम् । यथा पावकपयसी । तथा च कार्यकारणे तस्मादत्यन्तभिन्ने इति । न

चात्र हेतुरसिद्धः। साध्यधर्मिणि भिन्नप्रतिभासत्वस्य सद्भावनिश्चयात्। नाप्यनैकान्तो विरुद्धो वा। विपक्षादत्यन्त व्यावृत्तेः। नापि कालात्ययापदिष्टम्। पक्षस्य प्रत्यक्षागमाभ्यामबाधितत्वात्। नापि प्रकरणसमः। प्रतिपक्षोत्थापकस्यानुमानस्यासंभवात्। ननु कार्यकारणयोस्तादात्म्यं, अभिन्नदेशत्वात्। ययोरतादात्म्यं न तयोरभिन्नदेशत्वम्। यथा सह्यविन्ध्ययोः। अभिन्नदेशत्वं च प्रकृतयोः। तस्मात् तादात्म्यमिति प्रतिपक्षजीवातुर्विद्यत एवानुमानमिति चेत्। न शास्त्रीयदेशभेदस्यासिद्धत्वात्। कार्यस्य स्वकारणदेशत्वात्। कारणस्यापि स्वकारणदेशत्वात्। लौकिकदेशभेदस्य तु व्योमात्मादिभिर्व्यभिचारादस्यानुमानस्य प्रतिपक्षोत्थापकत्वानुपपत्तेः। ततश्च कथं प्रकरणसमत्वस्यात्रावकाशः।

अभ्युपगम्या तस्माद् विभिन्नतैवात्र कार्यकारणयोः।
यस्या भजते न्यायः साक्षात् साक्षित्वमक्षूणम् ॥ ६०४ ॥
एवमिह **यौगशिष्यैः** कृतं स्वपक्षप्रसाधनमिद तु।
वैदग्धीदयिताना विभासते दुर्भगाभरणम् ॥ ६०५ ॥

तथाहि—यत्तावत्कार्यकारणे अत्यन्तभिन्न इत्याद्यनुमानमुक्तम्। तत्र भिन्नप्रतिभासत्वं किं सर्वथा विवक्षितं कथंचिद्वा। प्रथमपक्षे प्रतिवाद्यसिद्धो हेतुः। कार्यकारणयोः सर्वथा भिन्नप्रतिभासत्वस्य स्याद्वादिनामसिद्धत्वात्। द्वितीयपक्षे तु वाद्यसिद्धि.। तयोः कथंचिद्भिन्नप्रतिभासत्वस्य **यौगै**रनङ्गीकरणात्। विरुद्धश्चात्र पक्षे हेतुः। साध्यविपर्ययसाधनात्। कथंचिद् भिन्नप्रतिभासत्वस्य सिषाधयिषितत्वात्। न भेदविपरीतेन कथंचिद्भेदेनैवाविनाभूतत्वात्। अथ सर्वथा कथंचिद्वेत्येवंरूपौ विशेषविकल्पौ परित्यज्य भिन्नप्रतिभासत्वमात्रं हेतुत्वेनोपादीयते। तथापि संदिग्धविपक्षव्यावृत्तिकत्वेनानैकान्तिको हेतुः। कथंचित्तादात्म्येऽपि कार्यकारणयोर्भिन्नप्रतिभासत्वमात्रस्याविरोधात्।

---

१ जीवातु.—जीवनौषधम्।

कालात्ययापदिष्टश्च । प्रत्यक्षबाधितपक्षानन्तरमुपन्यस्तत्वात् । प्रत्यक्षेण हि तन्त्वादिकारणपटादिकार्ययोः कथंचित्तादात्म्यमेव प्रतीयते न त्वेकान्तभेदः । प्रकरणसमश्च । विनाशापन्नकारणत्वात् । कार्यम्, एकान्तेन नान्यत्, तत्र तस्य वर्तमानत्वान्यथानुपपत्तेः । इत्यनुमानस्य प्रतिपक्षप्रसाधकस्य भावात् । ननु तत्र तस्य वर्तमानत्वमनैकान्तिकं व्यक्तिषु वर्तमानस्यापि सामान्यस्य ततोऽत्यन्तमन्यत्वात् । तदप्यसत्यम् । अत्यन्तान्यत्वस्य सामान्ये सामान्यविशेषानेकान्तवादचर्चायां सविस्तरमपास्तत्वात् तथाभूते तत्र वृत्तेर्निराकरिष्यमाणत्वाच्च । ननु तथापि स्थालीस्थितेन दध्नानैकान्तिकमेतत् । ततोऽन्यस्यापि दध्नस्तत्र वर्तमानत्वोपलब्धेः । संयोगो ह्यत्र वृत्तिः । स चार्थान्तरभूतयोरेव प्रतीयत इति चेन्न । संयोगिनोः संयोगपरिणामात्मनोः सर्वथान्यत्वासिद्धेः । अन्यथा तदभावप्रसंगात् । ताभ्यां भिन्नस्य संयोगस्योत्पत्तौ हि कथं स्थालीदध्नोः संयोग इति व्यपदेशः स्यात् । ताभ्यां तस्य जननात् तथा व्यपदेश इति चेत् । न । कर्मणा कालादिना च तज्जननात्तथा व्यपदेशप्रसंगात् । स्थालीदध्नोः समवायिकारणत्वाद्युक्तः संयोगस्य तथा व्यपदेश इति चेत् । कुतः समवायित्वं तयोरेव न पुनः कर्मादेरिति नियमः । इह संयोगिनोः संयोग इति प्रत्ययात्तत्र तस्य समवायसिद्धिरिति चेत् । स तर्हि समवायः पदार्थान्तरभूतः कथमत्रैवेहेदमिति प्रत्ययं कुर्यान्न पुनः कर्मादिषु दधिस्थालीभ्यामेव समवायिभ्यां विशेषणविशेष्यभावसिद्ध्या समवायस्य तत्रैवेहेदमिति प्रत्ययोत्पत्तिः । ननु कर्मादिषु तदसिद्धेरिति चेत् । समवायस्य विशेषणविशेष्यभाव एव कुतः सर्वत्र न स्यात् । तादृगदृष्टविशेषनियमादिति चेत् । तर्हि किं विशेषणविशेष्यभावेन समवायेन संयोगेन वा कार्यं तादृगदृष्टविशेषादेव समवायविशिष्टाः समवायिन इति प्रत्ययस्येहेदं समवेतमिति विनाप्यस्यात्रेदं संयुक्तमिति बुद्धेश्च जननप्रसंगात् । सर्वस्य वा प्रत्ययविशेषस्यादृष्टविशेषवशान्निर्व-

सिद्धेः किं पदार्थतद्भेदप्रभेदपरिकल्पनयेति विज्ञानवादप्रवेशः स्यात् । ततः स्थाल्या संयोगवृत्त्यां वर्तमानेन दध्नानैकान्तिकत्वं प्रकृतहेतोः । ततोऽसिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाख्यदूषणमुद्गरनिर्दलितशरीरत्वान्न भिन्नप्रतिभासत्वादिति हेतुः कार्यकारणयोरत्यन्तभेदमर्पयितुं प्रभवतीति । किं च कारणात्कार्यस्य स्वरूपेणात्यन्तभेदे देशकालाभ्यामपि तस्य ततो भेदप्रसक्तिः । अथात्माकाशयोः स्वरूपेणात्यन्तभेदेऽपि देशकालाभ्या भेदाभावान्न ततः कार्यकारणयोस्तद्भेदप्रसक्तिरिति चेत् । नैवम् । आत्माकाशयोरपि सत्त्वद्रव्यत्वादिना भेदाभावादत्यन्तभेदासिद्धेरभिन्नदेशकालत्वाविरोधात् । स्वरूपेणात्यन्तभिन्नानामप्येकद्रव्यवर्तिनां वर्णादीना देशकालभेदेनोपलम्भात्तैर्व्यभिचार इति चेत् । नैवम् । तद्व्यतिरेकैकान्तानभ्युपगमात् । यथैव हि वर्णगन्धरसस्पर्शादीना स्वाश्रयादत्यन्तभेदो नेष्टो दृष्टो वा तथा परस्परतोऽपीति न तैर्व्यभिचारः । ननु स्वरूपभेदेऽपि कार्यकारणयोः समवायेन परस्परं प्रतिबन्धात्कुतो देशकालाभ्या भेदप्रसक्तिरिति चेत् । समवायस्तर्हि समवायिनोः कार्यकारणयोः समवायान्तरेण तस्य तत्र वृत्तावनवस्थाप्रसंगात् । स्वतो वृत्तौ द्रव्यादेरपि तथोपपत्तेः । समवायवैयर्थ्यात् कार्यकारणयोः कुतः परस्परं प्रतिबन्ध स्यात् । यदि पुनरनाश्रितत्वात् संबन्धान्तरानपेक्षः समवायोऽभिमन्यते तदाप्यसंबद्धोऽसौ कथं द्रव्यादिभिः सह वर्तेत यत. पृथक् सिद्धिर्न स्यात् । न ह्यसंबद्ध एव समवायिभिः समवायसंबन्धो युक्तिमान् कालादेरपि संबद्धत्वप्रसंगात् । संबद्ध एव हि स्वसबन्धिभिः संयोगसंबन्धो दृष्टस्तस्य तैः कथंचित्तादात्म्यसंबन्धात् । समवायोऽपि विशेषणविशेष्यभावसंबन्धाद् समवायिभिः संबद्ध इति चेत् । न । तस्यापि विशेषणविशेष्यभावान्तरेण स्वसंबन्धिभिः संबन्धेऽनवस्थाप्रसंगादन्यथा संबन्धत्वविरोधात् । तस्य स्वसंबन्धिभि. कथंचित् तादात्म्ये कार्यकारणयोरपि तदेवास्तु कि समवायेन पर्यायान्तरभूतसत्तासामान्येनेव कल्पितेन । तथा

चासिद्धस्तयोः स्वरूपभेदः । तादात्म्यस्य स्वरूपभेदापरपर्यायत्वात् । प्रागसतः सत्तासमवायात् कार्यस्योत्पत्तेर्युक्तमेव सत्तासमवाययोः कल्पनमिति चेत् । नैव, अनुत्पन्नस्य सत्तासमवायासंभवात् उत्पन्नस्यापि तद्वैयर्थ्यात् । स्वरूपलाभस्यैव स्वरूपसत्तात्मकत्वात् स्वरूपेणासतः सत्तासम्बन्धेऽतिप्रसङ्गात् । तदित्थं कार्यकारणयोः परस्परप्रतिबन्धहेतोः समवायस्यानुपपत्तेः स्वरूपेणोत्पत्त्यभेदाभ्युपगमे देशकालाभ्यामपि तयोरत्यन्तभेदः स्यादित्यायातम् । तत्र वैशेषिकाद्यभ्युपगतः कार्यकारणयोर्भेदैकान्तः कथंचिदुपपद्यते । तस्माद्भेदाभेदः स्वीकर्तुं हेतुकार्ययोर्युक्तः । एकान्तस्तु न सङ्गतिमञ्चति तीर्थान्तरीयाणाम् । एवं समस्तवस्तुविषयोऽपि भेदाभेदैकान्तः परपरिसूत्रितः प्रमाणबाधितः । न खलु भेदैकान्तोऽद्वैतवादिसंमतः स्वप्नेऽपि प्रतीतः । सत्सामान्यात्मना जीवादिवस्तूनामभेदस्येव कुम्भाद्यात्मना भेदस्यापि प्रतीयमानत्वात् । नापि भेदैकान्तः परमाणुताथागतप्रार्थितः कदाचिदनुभवामः । कुम्भाद्यात्मना भेदस्येव सत्सामान्यात्मना तेषामभेदस्याप्यनुभूयमानत्वात् । अत्राह बौद्धः—कथमेकस्य भावानाम् । स्वभावसाङ्कर्यापत्तेः । न चाभावाः परस्परभावान् मिश्रयन्ति । भेदप्रतीतिविरोधात् । तेषामतत्कार्यकारणव्यावृत्त्या समानव्यवहारसाधकत्वेऽपि परमार्थतोऽसंकीर्णस्वभावत्वात् । तदुक्तम्—'सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थिताः । स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः ॥ तस्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः । जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥ तस्माद्यो येन धर्मेण विशेषः संप्रतीयते । न स शक्यस्ततोऽन्येन तेन भिन्ना व्यवस्थितिः ॥' अयमर्थः । सर्वे भावाः ननु कतिपये स्वभावसजातीयान् परमाणवादिविजातीयाश्च व्यावृत्तिं भजन्त इति शिक्षणं । स्वभावेन स्वलक्षणात्मकेन व्यावृत्तिभागिन इति सम्बन्धः । कस्मात्पुनः स्वभावेन व्यावर्तन्त इति स्वस्वभावव्यवस्थितेः कारणात् । एतदुक्तं भवति ।

यतः स्वस्वभावे सर्व एव भावा व्यवस्थिता नातः परस्पर स्पन्दन्ते । तस्मात् स्वभावेनासंसर्गिणा समानजातीयविजातीयाद् व्यावर्तन्ते । यतश्चैवं तस्माद् यतो व्यावर्त्यादर्थादर्थान्तराणा व्यावृत्तानां व्यावृत्तिस्तन्निबन्धना । विशिष्टव्यावर्त्यविषयव्यावृत्तिनिबन्धना जातिभेदाविशिष्टा जातयः शब्दवाच्याः परिकल्पन्ते । तथा ह्येकस्य घटस्य यथाऽघटाद् व्यावृत्तिस्तथाऽन्येषां घटानाम् । सा च साधारणा व्यावृत्तिः शब्दवाच्या जातिरुच्यते । तस्य स्वलक्षणस्य ये विशेषास्तानवगाहन्त इति । आरोपितजातिप्रतीतौ स्वलक्षणविशेषस्याध्यवसायस्तदवगाहनम् । तस्मादन्यान्यव्यावर्त्यव्यपेक्षया व्यावृत्तय. परिकल्पितभेदा विकल्पैर्विषयीक्रियन्ते । यस्मान्न वस्तुस्वरूपमेकमनेकव्यावृत्तिकं विकल्पेन प्रत्यक्षवद्विषयीकर्तुं पार्यते । व्यावृत्तौ च व्यावर्त्यविशिष्टायामेकस्यां विषयीकृतायामन्यस्या व्यावर्त्यान्तरव्यावृत्तेरविषयीकरणाद्भिन्नाभिन्नविषया विकल्पात्मिका व्यवस्थितिरिति .... ....

.... .... .... .... .... .... .... .... ....

हेतुद्वयमप्येतन्नासिद्धम् । तदेकान्तवादिनां तथाभ्युपगमात् । नाप्यैकान्तिकं विरुद्धं वा विपक्षे वृत्त्यभावात् । ततः परस्परसापेक्षाभ्या पृथक्त्वैकत्वाभ्यां न जीवादिवस्तु विरुध्यत इत्यभ्युपगन्तव्यम् । नन्वेक परस्परविरुद्धोभयाकाराक्रान्तमित्यतिसाहसम् । हन्त कः सन्नेवं प्रत्यवतिष्ठते । ताथागतश्चेत्, तत्किंचिन्निवेदन नीलादिनिर्भासैरद्वयसवेदनं न ग्राह्यग्राहकाकारविवेकसंविदाकारैरनेकैराकीर्णमप्येकं स्वीकुर्वाणः सन्नेवं जल्पन् न लज्जसे । ब्रह्मवादी चेत्तर्हि परब्रह्मतेजःशब्दज्ञानज्योतिराकारैर्विद्येतराकारैर्वानेकैः परिकरितमप्येकं प्रतिपद्यसे । स्याद्वादे तु विप्रतिपद्यस इति किमपि वैशसम् । वैशेषिकादिश्चेत् । तदा स्वारम्भकावयवैरनेकैरप्यारब्धमेकस्वभावं कुम्भादिकमभ्युपगच्छसि स्याद्वादे पुनर्दूषणं प्रयच्छसीत्यनल्पतमतमोविलसितम् । कापिलश्चेत् । तर्हि सत्त्वरजस्तमोभिरनेकैरप्याकीर्णमे-

का प्रकृतिमङ्गीकुरुषेऽनेकान्त पुन पराकुरुष इति महत्कैतवम् । किं चामी सपक्षविपक्षयोर्भावाभावाभ्या समन्वितमेत साधनमिच्छन्ति । स्याद्वाद तु नेच्छन्तीति स्वच्छन्दवृत्तय । तदेवमेते कुतर्कतिमिरतिरस्कृतमतिप्रकाशा कुतीर्थ्या सकलवादमूर्धाभिषिक्तमनेकान्तवादमनङ्गीकुर्वाणा स्वदर्शनमपि व्यवस्थापयितु न पर्याप्ता इत्युपेक्षापात्रमेव न्यायवेदिनाम् । तत स्थितमेतत् । स सामान्यविवक्षाया सर्वथा मैक्यम् । कुम्भादिभेदविवक्षाया तु पृथक्त्वम् । इतरस्या विवक्षाया गुणाभावात् । नन्वयुक्तमेतत् विवक्षाविवक्षयोरसद्विषयत्वेन तद्वशात् पृथक्त्वैकत्वयोर्व्यवस्थानानुपपत्तेरिति चेत् । तदसम्बद्धम् । अनन्तधर्मात्मके वस्तुनि विशेष्यविशेषणयो पृथक्त्वैकत्वयो सतोरेव तदर्थिभि प्रतिपत्तृभिर्विवक्षाया अविवक्षायाश्च करणात्र त्वसतो । असति कस्यचिद् अर्थित्वानर्थित्वयोरसम्भवात् । तस्य सकलार्थक्रियाशक्तिशून्यत्वात् खरविषाणवत् । न हि कस्यचिद्विवक्षाविषयस्य मनोराज्यादेरसत्त्वे सर्वस्यासत्त्व युक्तम् । कस्यचित्प्रत्यक्षविषयस्य केशोण्डुकादेरसत्त्वे सर्वस्य प्रत्यक्षविषयस्यासत्त्वप्रसङ्गात् । प्रत्यक्षाभासविषयस्यासत्त्व न पुन सत्यप्रत्यक्षविषयस्येति चेत् । तर्ह्यसत्यविवक्षाविषयस्यासत्त्वमस्तु । सत्यविवक्षाविषयस्य तु माभूत् । न काचिद्विवक्षा सत्या विकल्परूपत्वात् मनोराज्यादिविवक्षावदिति चेत् । न । अस्यानुमानस्य सत्यत्वेऽनेनैव हेतोर्व्यभिचारात् । तदसत्यत्वे साध्याप्रसिद्धे । यतोऽनुमानविकल्पादर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियाया न विसंवाद्यते तद्विषय सन्नेवेति चेत् । तर्हि यतो विवक्षाविशेषादर्थं विनिश्चित्याप्रवर्तमानो न विसंवाद्यते तद्विषय कथमसन् भवेत् । अविवक्षाविषयोऽसन्नेव । अन्यथा तदनुपपत्तेरिति चेत् । न । सकलवाग्गोचरातीतेनार्थस्वलक्षणेन व्यभिचारात् । सर्वस्य वस्तुनो वाच्यत्वात् नाविवक्षाविषयत्वमिति चेत् । न । नामस्वलक्षणाना च नामान्तराभावादन्यथानवस्थानुषङ्गात् । तेषामविवक्षाविषयत्वेऽपि सत्त्वे कथमन्यदपि विशेषणमविवक्षाविषयत्वे सन्नेव

न सिध्येत् । तदेव विधिप्रतिषेधधर्माणां सतामेव विवक्षेतराभ्यां योगस्तदर्थिभिः क्रियेतान्यथार्थनिष्पत्तेरभावात् । न ह्यर्थक्रियार्थिनामर्थनिष्पत्तिमनपेक्ष्य विवक्षेतराभ्यां योगः संभवति येन तदभावेऽपि स स्यात् । उपचारमात्रं तु स्यात् । न चाग्निर्माणवक इत्युपचारात् पाकादावुपयुज्यते माणवकः । ननु चान्यव्यावृत्तय एव विवक्षेतराभ्यां युज्यन्ते न वस्तुस्वभावा यतस्तयोः सद्विषयत्वमिति चेत् । न । शब्देभ्यो वस्तुनि प्रवृत्तिविरोधात् । व्यावृत्तितद्वतोरेकत्वाध्यारोपात् तद्वति प्रवृत्तिरिति चेत् । न । अध्यारोपस्य विकल्पस्येनार्थाविषयत्वात् । स्वाविषयेणार्थेन व्यावृत्तेरेकत्वारोपणायोगात् । सामान्येनार्थोऽध्यारोपविकल्पविषय एवेति चेत् । तदपि यद्यन्यव्यावृत्तिरूपं तदा व्यावृत्त्यैव व्यावृत्तेरेकत्वारोपात् कुतोऽर्थप्रवृत्तिः । ततस्तामिच्छता एकैकशः परस्परव्यावृत्तयोऽपि परिणामविशेषा एषितव्याः । तस्मात्सूक्तम् ' सत्सामान्यविवक्षाया सर्वेषां जीवादीनामैक्यं, कुम्भादिभेदविवक्षाया तु पृथक्त्वम् ' इति । प्रयोगश्चात्र, सांवृत्तभेदवादिनं सौगतं प्रति तावदेवं कर्तव्यः । अभेदः परमार्थसन्, प्रमाणगोचरत्वात् भेदवत् । सांवृत्तभेदाभिधायिनमद्वैतवादिनं तु प्रत्येवमयं विधेयः । भेदः, परमार्थसन्, प्रमाणगोचरत्वात्, अभेदवत् । सांवृत्तभेदाभेदोभयप्रतिपादिनं शून्यवादिनं पुनः प्रतीत्थमेष विरचनीयः । भेदाभेदौ, परमार्थसन्तौ, प्रमाणगोचरत्वात्, स्वाभिमततत्त्ववत् । न चैतेषु प्रयोगेषु साध्यसाधनधर्मविकलान्युदाहरणानि । भेदाभेदतदनुभयैकान्ताभिधायिनां यथोक्तसाध्यसाधनधर्मसहितोदाहरणप्रसिद्धेः स्याद्वादिवादिनि ।

स्यादभेदश्च भेदश्च भावानां तद्व्यवस्थितः ।
एकान्तस्तु प्रमासिन्धुमध्यं नैवावगाहते ॥ ६०६ ॥

एवं सूक्ष्मस्थूलप्रतिभासैकान्तोऽपि प्रतीतिपराहतः । न हि प्रत्यक्षे भिक्षुलक्षितं सूक्ष्मपरमाणुलक्षणमेव प्रतिभासते । स्थूलस्यापि घटाद्यात्मनः प्रतिभासनात् । ननु परमाणुष्वेवात्यासन्नासंसृष्टेषु निर्विकल्प-

चाप्रत्यक्षे प्रतिभासमानेषु कुतश्चिद्विभ्रमनिमित्तादात्मनि परमाणुषु चासन्नमेव स्थूलमाकारं दर्शयन्ती संवृतिरविचारितरम्यप्रतीतिलक्षणा तान् संवृणोति केशादिभ्रान्तिवदिति चेत् । नैवम् । बहिरन्तश्च प्रत्यक्षस्याभ्रान्तत्वकल्पनापोढत्वाभावप्रसङ्गेन संव्यवहारतः परमार्थतो वा 'प्रत्यक्षं कल्पनापोढमभ्रान्तम्' इति तल्लक्षणस्यासंभवदोषानुषङ्गात् । परमाणूनां जातुचिदध्यक्षबुद्धावप्रतिभासनात् । त इमे परमाणवः प्रत्यक्षबुद्धावात्मानं च न समर्पयन्ति प्रत्यक्षतां च स्वीकर्तुमिच्छन्तीत्यमूल्यदानक्रयिणः । एतेन स्थूल एव सूक्ष्मावयवव्यतिरिक्तोऽवयवी प्रतिभासत इति यद् वैशेषिकादिमतम् । तत्रावयव्यप्यमूल्यदानक्रयी प्रतिपादितः । न ह्यवयव्यपि सूक्ष्मस्वावयवव्यतिरिक्तो महत्त्वोपेतः प्रत्यक्षे प्रतिभासते कुण्डादिव्यतिरिक्तदध्यादिवत् । समवायात्स्वावयवेभ्योऽर्थान्तरमप्यवयवी प्रतिभासत इति चेत् । नैवम् । अवयविप्रत्यक्षस्य सर्वत्र भ्रान्तत्वप्रसङ्गात् । तथा चाव्यभिचारित्वं प्रत्यक्षलक्षणमसम्भवि स्यात् । न चेमेऽवयवा अयमवयवी समवायश्चायमनयोरिति त्रयाकारं प्रत्यक्षमनुभूयते मनागपि यतोऽसावप्यमूल्यदानक्रयी न स्यात् । प्रत्यक्षबुद्धावात्मानर्पणेन प्रत्यक्षतास्वीकरणाविरोधात् । तस्मादियं प्रत्यक्षबुद्धिरन्तर्बहिश्चाभिनिधा करचरणरसनदन्तनखघननयननासाशिरःश्रवणभालकपोलकण्ठकन्धरास्कन्धस्तनस्थलजङ्घोरुप्रभृत्यवयवसन्निवेशविशिष्टमाकारं बिभ्राणा सूक्ष्मस्थूलानेकान्तात्मकमेव तत्त्वं स्फुटयतीत्यनुभवन्नपि सौगतो वैशेषिकादिर्वा स्वदर्शनान्तैकान्तावष्टम्भाद्विमात्मानं विपर्यासयन् विगम्यमानेऽपि प्राकृतजनप्रतिपन्नसन्मार्गेऽपि परिस्खलतीति सविस्मयं नश्चेतः । एवं सूक्ष्मस्थूलानेकान्तात्मके वस्तुनि स्वभावान्तरस्य प्राधान्यविवक्षायामाकारान्तरस्य गुणभावः कुम्भोऽयं परमाणवो वेति । कुम्भार्थिनो हि कुम्भविवक्षायां कुम्भः प्रधानं परमाणवस्तु गुणीभूतास्तदनर्थितया विवक्षाप्रसिद्धेः । परमाण्व

१ न्या बि १ ११

र्थिनस्तु तद्विवक्षायां परमाणव एव प्रधानं न पुनः कुम्भस्तद्विवक्षायाः संभवाभावात्तदर्थित्वानुपपत्तेः । न च तदुभयसत्ताविशेषादविशेषेणार्थित्वमनर्थित्वं वा प्रसज्यते । तयोः कुम्भादिसत्ताज्ञानानिबन्धनत्वान्मोहविशेषोदयस्यापि मिथ्यादर्शनादिकालादिनिमित्तकत्वात् । तदित्थं प्रतीत्यनुरोधेन सूक्ष्मस्थूलाकारात्मकं वस्तु प्रेक्षावद्भिः प्रतिपत्तव्यम् ।

शतशः पराकृतोऽपि स्वमतप्रीत्याकुलीकृतस्वान्तः ।
स्थूलार्थमसहमानः किमपि ब्रूतेऽत्र सुगतसुतः ॥ ६०७ ॥

परमाणूनामन्योन्यं संबन्धाभावतः स्थूलाकारप्रतीतेर्भ्रान्तत्वात् कथं तदुभयात्मकं वस्तु स्यात् । संबन्धो हि स्वरूपेणैव तावन्न संभवति । तथाऽयमर्थानां पारतन्त्र्यलक्षणो वा स्यात्तादात्म्यापरपर्यायरूपश्लेषलक्षणो वा । प्रथमपक्षे किमसौ निष्पन्नयोः संबन्धिनोः स्यादनिष्पन्नयोर्वा । न तावदनिष्पन्नयोः । स्वरूपस्यैवासत्त्वात् तुरगखरविषाणवत् । निष्पन्नयोश्च पारतन्त्र्याभावादसंबन्ध एव । तदाह कीर्तिः—

‘ पारतन्त्र्यं हि संबन्धः सिद्धे का परतन्त्रता ।
तस्मात्सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः ॥’

नापि यथोक्तरूपश्लेषलक्षणोऽसौ । संबन्धिनोर्द्वित्वे तस्य विरोधात् । तयोरैक्ये वा सुतरां तदभावः । द्विष्ठत्वात्संबन्धस्य । अथ नैरन्तर्यं तयोरूपश्लेषः । न । अस्यान्तरालाभावरूपत्वे तात्त्विकत्वायोगात् । प्राप्तिरूपत्वेऽपि प्राप्तेः संयोगापरनामिकायाः परमार्थतः कार्त्स्न्यैकदेशाभ्यामसंभवात् ।

‘ तस्मात्प्रकृतिभिन्नानां संबन्धो नास्ति तत्त्वतः ॥’

किं च । परापेक्षयैव संबन्धः । तस्य द्विष्ठत्वात् । परं चापेक्षते भावः स्वयं सन्नसन्वा । न तावदसन् । तस्यापेक्षाधर्माश्रयत्वविरोधात्

१ ‘ निष्पन्नयोस्तु ’ इति न. पुस्तके पाठः ।

खरशृङ्गवत् । नापि सन् । तस्य सर्वनिराशंसत्वात् । अन्यथा सत्त्वविरोधात् । तत्र परापेक्षा नाम, यद्रूपं संबन्धः सिध्येत् । उक्तं च—

'परापेक्षा हि संबन्धः, सोऽसन्कथमपेक्षते ।
संश्च सर्वनिराशंसो भावः कथमपेक्षते ॥'

किं चासौ संबन्धः संबन्धिभ्यां भिन्नः स्यादभिन्नो वा । यद्यभिन्नस्तदा संबन्धिनावेव न संबन्धः कश्चित् । भिन्नश्चेत्तर्हि संबन्धिनौ केवलौ कथं संबद्धौ स्याताम् । संबन्धान्तरं विना संबन्धिभ्यां सह कथं भिन्नः संबन्धः संबध्यते । संबन्धान्तराभ्युपगमे चानवस्था स्यात् । तत्रापि संबन्धान्तरानुषङ्गात् । तस्मात् संबन्धमतिं सुदूरमपि गत्वा द्वयोरेकाभिसंबन्धमन्तरेणापि संबन्धे प्रथममेव तथास्तु किमेकाभिसंबन्धेन तथा वचनसंबन्धमतिः । केवलयोः संबन्धिनोर्गतिप्रसङ्गात् । यदि च संबन्धिनौ संबन्धश्च स्वेनासाधारणेन रूपेण स्वलक्षणापरनाम्ना स्थितास्तदा सिद्धममिश्रणमर्थानां परमार्थतः । तदाह—

'द्वयोरेकाभिसंबन्धात्संबन्धो यदि तद्द्वयोः ।
कः संबन्धोऽनवस्था च न संबन्धमतिस्तथा ॥'

तद्द्वयोः कः संबन्ध इति चेत् । अत्र तच्छब्दस्तर्हिशब्दार्थः । ततोऽयमर्थः । संबन्धाख्यैकवस्तुसद्भावाद्द्वौ संबद्धौ भवत इति यदि कल्प्यते तर्हि द्वयोः संबन्धिनोः कः संबन्धः एकेन संबन्धेन सहेति । तथा—

'तौ च भावौ तदन्यश्च सर्वे ते स्वात्मनि स्थिताः ।
इत्यमिश्राः स्वयं भावास्तान् मिश्रयति कल्पना ॥'

अस्यार्थः—तौ च भावौ संबन्धिनौ ताभ्यामन्यश्च संबन्धः । सर्वे ते स्वात्मनि स्वस्वरूपे स्थिताः । तेनामिश्रा व्यावृत्तस्वरूपाः स्वयं भावास्तथापि तान्मिश्रयति योजयति कल्पनेति । अत एव च वास्तवसंबन्धाभावेऽपि तामेव कल्पनामनुरुन्धानैर्व्यवहर्तृभिर्भावानां भेदस्यान्यापोहापरपर्यायस्य प्रत्यायनाय क्रियाकारकादिवाचिनः शब्दाः प्रयु

ज्यन्ते देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादयो न खलु कारकाणां क्रियया संबन्धोऽस्ति । क्षणिकत्वेन तत्काले तेषामसंभवात् । तदुक्तम्—

' तामेव चानुरुन्धानैः क्रियाकारकवाचिनः ।
भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ॥ '

कार्यकारणभावस्तर्हि सबन्धो भविष्यतीत्यप्यसमीचीनम् । कार्यकारणयोः सहभावाभावात् । न खलु कारणकाले कार्यम् । तत्काले वा कारणमस्ति । तुल्यकाले कार्यकारणभावानुपपत्तेः । सव्येतरगोविषाणवत् । तन्न सबन्धिनौ सहभाविनौ विद्येते येनानयोर्वर्तमानः सबन्धः स्यात् । अद्विष्ठे च भावे संबन्धतानुपपन्नैव । तदाह—

' कार्यकारणभावोऽपि तयोरसहभावतः ।
प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे संबन्धता कथम् ॥'

कारणे कार्ये च क्रमेणासौ संबन्धो वर्तत इत्यप्यसांप्रतम् । यतः-

' क्रमेण भाव एकत्र वर्तमानोऽन्यनिस्पृहः ।
तदभावेऽपि तद्भावात्संबन्धो नैकवृत्तिमान् ॥'

अस्यार्थ —क्रमेणापि भाव· संबन्धाख्य एकत्र कारणे कार्ये वा वर्तमानोऽन्यनिस्पृहः कार्यकारणयोरन्यतरानपेक्षो नैकवृत्तिमान् संबन्धो युक्तस्तदभावेऽपि कार्यकारणयोरभावेऽपि तद्भावादिति ।

' यद्यपेक्षितयोरेकमन्यत्रासौ प्रवर्तते ।
उपकारी ह्यपेक्षः स्यात्कथं चोपकरोत्यसन् ॥ '

व्याख्या—यदि पुनः कार्यकारणयोरेक कार्ये कारण वापेक्षान्यत्र कार्ये कारणे वासौ सबन्धः क्रमेण वर्तत इति सस्पृहत्वेन द्विष्ठ एवेष्यते । तदा तेनोपेक्ष्यमाणेनोपकारिणा भवितव्यम् । यस्मादुपकारी अपेक्ष्यः स्यान्नान्यः । कथं चोपकरोत्यसन् । यदा कारणकाले कार्या-

स्यो भावोऽस्तु । तत्काले वा कारणास्यस्तत्र नैवोपकुर्यात्सामर्थ्यात् । किं च—

' यद्येकार्थाभिसम्बन्धात्कार्यकारणता तयो ।
प्राप्ता द्वित्वाभिसम्बन्धात्सव्येतरविषाणयो ॥
द्विष्ठो हि कश्चित्सम्बन्धो नातोऽन्यत्तस्य लक्षणम् ।'

अस्य सार्धश्लोकस्यार्थ । द्विष्ठो हि कश्चित्पदार्थ सम्बन्ध । नातोऽन्यत्तस्य लक्षणम् । ततश्च यद्येकेनार्थेन सम्बन्धलक्षणेन योग एव कार्यकारणत्वम् । तदा द्वित्वसङ्ख्यापरत्वापरत्वाद्येकार्थसम्बन्धात् सव्येतरविषाणयोरपि कार्यकारणता प्राप्तेति । क्वचित् द्वित्वाभिसम्बन्धा दिति पाठ । स च स्पष्टार्थ । किं च—

' भावाभावोपधिर्योग कार्यकारणता यदि ।
योगोपाधी न तावेव कार्यकारणतात्र किम् ॥
भेदाच्चेन्नन्वय शब्दो नियोक्तार समाश्रित ।'

अस्यार्थ —स्थिते कार्यकारणरूपत्वे तदाश्रित सम्बन्ध कार्य कारणभाव इति । कस्मिंश्चिद्भवति भावस्तदभावे चाभाव कार्यकारणभावो यस्माद्विशिष्ट सम्बन्ध कार्यकारणभावो भवति । तेनैवदीप्यते तदा सम्बन्धस्य विशेषणतया यावभिमतौ भावाभावौ तावेव कार्य कारणभावो भवतु । किंतु कार्यकारणयोस्परेण कार्यकारण भावेन सम्बन्धेन प्रतिलब्धकार्यकारणरूपयोर्हि किमपरेण सम्बन्धेन । तावतैव वस्तुपपद्यमानात् । तथाविधेन स्वरूपप्रतिलम्भेन तु सम्बन्ध आक्षिप्यत इति न्यायो नाप्यनुभव इति । न युक्तमेतत् । ननु कार्यकारणयो सम्बन्ध इति भेदाद्भवितव्य तथाभूतयोरपि सम्बन्धेनेति चेत् । तदयुक्तम् । यत शब्दोऽय नानुभव । सोऽपि च सङ्केतप्रयोक्तृपरतन्त्रो नार्थाश्रय इति नैवमादेर्वस्तुव्यवस्थेति तावेव कार्यकारणेति युक्त । न त्वपर सम्बन्ध । तथा हि—

'पश्यन्नेकमदृष्टस्य दर्शने तददर्शने ।
अपश्यन्कार्यमन्वेति विनाप्याख्यातृभिर्जनः ॥'

पश्यन्नेकं कारणाभिमतमदृष्टस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धस्य कार्याख्यस्य दर्शने सति । तस्यैकस्य कारणाभिमतस्यादर्शने च सत्यपश्यन्कार्यमन्वेतीदमतो भवतीति निर्विकल्पकप्रत्यक्षतः प्रतिपद्यते जनोऽत इदं जातमित्याख्यातृभिर्विनापि । ततश्च—

'दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसंभवात् ।
कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥'

दर्शनादर्शने मुक्त्वा विषयिणि विषयोपचाराद्भावाभावौ मुक्त्वा कार्यबुद्धेरसंभवात् । कार्यादिश्रुतिरप्यत्र भावाभावयोर्मा लोकः प्रतिपद्भिरियन्तीं शब्दमालामभिदध्यादिति व्यवहारलाघवार्थं निवेशितेति । अथापि स्याद्यदि दर्शनादर्शने एव कार्यबुद्धिस्तर्हि भावाभावौ कार्यं, न चैतदस्ति । भावाभावाभ्यां कार्यत्वसाधनात् । तस्मादन्यदेव कार्यत्वमित्यन्या कार्यत्वबुद्धि । तदयुक्तम् । यतः—

'तद्भावभावात्तत्कार्यगतिर्याप्यनुवर्ण्यते ।
संकेतविषयाख्या सा सास्नादेर्गोगतिर्यथा ॥'

तद्भावभावाल्लिङ्गात्तत्कार्यतागतिर्याप्यनुवर्ण्यतेऽस्येदं कार्यमस्येदं कारणं चेति संकेतविषयाख्यानमेतदुपदर्श्यते । यथा गौरयं सास्नादिमत्त्वादित्यनेन गोव्यवहारस्य विषयः प्रदर्श्यते । यतः—

'भावे भाविनि तद्भावो भाव एव च भाविता ।
प्रसिद्धे हेतुफलते प्रत्यक्षानुपलम्भतः ॥'

प्रत्यक्षानुपलम्भतो हि कार्यकारणते प्रतीयेते न तु तद्भावभावात् । तद्भावभाव एव तु ते । तथा हि—भावेऽग्न्यादौ भाविनि धूमस्य भावः प्रत्यक्षावगतः । भाव एव च तस्याग्न्यादेर्भाविता धूमस्य न तु पूर्वमेव भाव इत्यनुपलम्भतोऽवगतम् । प्रागग्निसंनिधेरुपलब्धिलक्षणप्राप्तस्य

'जननेऽपि हि कार्यस्य केनचित्समवायिना ।
समवायी तदा नासौ न ततोऽतिप्रसंगतः ॥'

जननेऽपि कार्यस्य केनचित्समवायिनाभ्युपगम्यमाने समवायी नासौ तदा जननकाले कार्यस्यानिष्पत्तेः । न च ततो जननात् समवायित्वं सिध्यति । कुम्भकारादेरपि घटसमवायित्वप्रसंगात् ।

'तयोरनुपकारेऽपि समवाये परत्र वा ।
संबन्धो यदि विश्वं स्यात्समवायि परस्परम् ॥'

संबन्धिनोरनुपकारेऽपि समवाये संयोगे वा संबन्धो यदीष्यते तदा विश्वमपि समवायि । उपलक्षणं चैतदिति । संयोगि च स्यात्संयोगेन समवायेन वा विश्वं संबन्धि स्यादित्युक्तं भवति ।

'संयोगजननेऽपीष्टौ ततः संयोगिनौ न तौ ।
कर्मादेरपि संयोगिता स्याज्जननात्ततः ॥'

यदि संयोगजननात्संयोगिता तयोस्तदा संयोगजननेऽपीष्टावभिलषितौ । ततः संयोगजननान्न तौ संयोगिनौ । कर्मणोऽपि संयोगितापत्तेः । संयोगो ह्यन्यतरकर्मज उभयकर्मजः संयोगजश्चेष्यते । आदिग्रहणात्संयोगजस्यापि संयोगिता स्यात् । न सं ... .. .... .... .... .... कयोर्हि जन्यजनकभावात्मान्या स्थितिरिति । अस्तु वा कार्यकारणभावलक्षणः संबन्धः, तथाप्यस्य प्रतिपन्नस्याप्रतिपन्नस्य वा सत्त्वं सिध्येत् । न तावदप्रतिपन्नस्य । अतिप्रसंगात् । प्रतिपन्नस्य चेत् । कुतोऽस्य प्रतिपत्तिः । प्रत्यक्षेण चेत् । कारणस्वरूपग्राहिणा कारणकार्योभयस्वरूपग्राहिणा वा । न तावदग्निस्वरूपग्राहिणा । तद्धि तत्सद्भावमेव प्रतिपद्यते । न धूमस्वरूपम् । तदप्रतिपत्तौ च तदपेक्षयाग्नेर्न कारणत्वावगमो न हि प्रतियोगिस्वरूपप्रतिपत्तौ तं प्रति कस्यचित् कारणत्वमन्यद्वा धर्मान्तरमवगम्यते । नापि हि वह्निधूमयोः स्वरूपमेव प्रतिभासते । न तु वह्नेर्धूमं प्रति कारणत्वं, न खलु

स्वस्वरूपनिष्ठपदार्थस्यैकज्ञानप्रतिभासमात्रेण कार्यकारणभावप्रतिभासः। स्तम्भकुम्भादेरपि तत्प्रसङ्गात्। नाप्येकप्रतिभासानन्तरमपरप्रतिभासयोगात्तेन। स्तम्भप्रतिभासानन्तरं हि कुम्भोऽपि प्रतिभासत इति तयोरपि कार्यकारणभावः स्यात्। न च क्रमभाविपदार्थद्वयप्रतिभासमध्येऽप्येकं ज्ञानमिति वक्तुं शक्यम्। सर्वत्र प्रतिभासभेदस्य भेदनिबन्धनत्वात्। अथाग्निमति धूमस्य प्रत्यक्षमासनाद्भावः सविकल्पकप्रत्यक्षप्रसिद्ध इत्यप्यसमीचीनम्। गन्धस्यापि लोचनज्ञानविषयत्वप्रसङ्गात्। गन्धस्मरणसहकारिलोचनव्यापारानन्तरं सुरभि चन्दनमिति प्रत्ययप्रतीतेः। ततः प्रत्यक्षेणासौ प्रतीयते। नापि प्रत्यक्षानुपलम्भाभ्यां प्रत्यक्षस्यैवानुपलम्भस्यापि प्रतिषेध्यविविक्तवस्तुमात्रविषयत्वेनात्रासामर्थ्यात्। अथाग्निसद्भाव एव धूमस्य भावस्तदभावे चाभावः। स चैताभ्यां प्रतीयत इत्युच्यते। तर्हि वक्तृत्वस्यासर्वज्ञत्वादिना व्याप्तिः स्यात्, तद्धि रागादिमत्त्वासर्वज्ञत्वसद्भावे स्यादसत्येव दृष्टं, तथा च सर्वज्ञवीतरागाय दत्तो जलाञ्जलिः। अथाग्न्यभावे धूमस्य भावे तद्धेतुकताविरहादन्यहेतोरभावे तस्य भावो न स्यात्। दृश्यते च महानसादावग्नितस्तस्य भावस्ततो नानग्नेर्धूमसद्भाव इति प्रतिबन्धसिद्धिरित्यभिधीयते। तदप्यभिधानमात्रम्। यथैव हीन्धनाग्नेरेकदा समुद्भूतोऽप्यग्निरन्यदाऽरणिनिर्मथनान्मण्यादेर्वा समनुपलभ्यते। धूमो वाग्नितो जायमानोऽपि गोपालघुटिकायां[1] पावकोद्भूतधूमादप्युपजायते। तथाग्न्यभावेऽपि कदाचिद्धूमो भविष्यतीति कुतः प्रतिबन्धसिद्धिः। अथ यादृशोऽग्निरिन्धनाग्निसामग्रीतो जायमानो दृष्टो न तादृशोऽरणितो मण्यादेर्वा धूमोऽपि यादृशोऽग्नितो न तादृशो गोपालघुटिकादौ वह्निप्रभवधूमाद्यादृशात्तादृशभावेऽतिप्रसङ्गादिति नाग्निजन्यधूमस्य तत्सद-

---

१ गोपालादयोऽत्र यस्मिन् पात्रे दारुनारिकेलादिनिर्मिते तमाखुपत्रप्रसर्पि निधाय प्रज्वाल्य च तद्धूमं पिबन्ति तदधोभागे यद्गुलाकृति जलमयपात्रं तत् घुटिकापदेनाभिधीयते। तद्देशीभाषायां हुक्का गुडगुडी इत्यभिधीयते।

तस्य चानग्नेर्भावो भावे वा तादृशधूमजनकस्याग्निस्वभावत्वेनेति न व्यभिचारः । तदुक्तम्—

'अग्निस्वभावः शक्रस्य मूर्धा यद्यग्निरेव सः ।
अथानग्निस्वभावोऽसौ धूमस्तत्र कथं भवेत् ॥'

इत्यादि । तदेतद्वक्तृत्वेऽपि समानम् । तद्धि सर्वज्ञे वीतरागे वा यदि स्यादसर्वज्ञाद्रागादिमतो वा कदाचिदपि न स्याद्धेतोः सकृदप्यसंभवात् । भवति च ततः । अतो न सर्वज्ञे तस्य तत्सदृशस्य वा संभव इति प्रतिबन्धसिद्धिः । किंच कार्यकारणभावः सकलदेशकालावस्थिताखिलाग्निधूमव्यक्तिक्रोडीकरणेनावगतोऽनुमाननिमित्तं नान्यथा । न च निर्विकल्पकस्य सविकल्पकस्य वा प्रत्यक्षस्येयति वस्तुनि व्यापारः प्रत्यक्षानुपलम्भयोर्वा । एतेन तृतीयोऽपि पक्षश्चिन्तितः । एवं च न संबन्धस्य स्वरूपमप्यस्ति । तथा च—

परमाणवः परस्परमिह संश्लेषं श्रयन्ति न कथंचित् ।
तस्मात्तत्प्रचयात्मा स्थूलाकारोऽस्तु कथमर्थे ॥ ६०८ ॥

स्थूलाकारनिराकृतिविषयं ताथागतैरिदं गदितम् ।
घुणितमिव दारु विदलति जैनोदितयुक्तिमार्गेण ॥ ६०९ ॥

तथा हि—यत्तावत् 'परमाणूनामन्योऽन्यं संबन्धाभावत' इत्यादि तदसंबद्धम् । संबन्धस्यार्थानामबाधिताध्यक्षे प्रतिभासनात् । पटो हि तन्तुसंबद्ध एवावभासते । रूपादयश्च पटादिसंबद्धा । संबन्धाभावे च तेषां विश्लिष्टताप्रतिभासः स्यात्तमन्तरेणान्यस्य संश्लिष्टताप्रतिभासहेतोरभावात् । संबन्धानभ्युपगमेऽर्थक्रियाविरोधश्च परमाणूनामन्योन्यमसंबन्धतो जलधारणाद्यर्थक्रियाया अघटनात् । रज्जुवंशदण्डादीनामेकदेशाकर्षणे तदन्याकर्षणं चासंबन्धवादिनो दुर्लभं स्यात् । अस्ति चैतत्सर्वमत एतदन्यथानुपपत्तेश्च संबन्धप्रसिद्धिः । यदपि 'अयमर्थानां पारतन्त्र्यलक्षणो वा स्यात्, तादात्म्यापरपर्यायरूपश्लेषलक्षणो वा' इति विकल्प्य पारतन्त्र्याभावात्संबन्धनिराकरणं कृतम् । तदप्ययुक्तम् । यतः पारतन्त्र्य-

स्याभावाद्भावाना सम्बन्धाभावमभिदधानास्तेन सम्बन्धयाप्तं क्वचित्प्रतिपद्यन्ते न वा। प्रतिपद्यन्ते चेत् कथं सर्वत्र सम्बन्धाभावमभिदध्युर्विरोधात्। नो चेत् कथमव्यापकभावाद्व्याप्याभावसिद्धिः। परोपगमात्तस्य तेन व्याप्तिसिद्धेरदोष इति चेत्। न। तथा स्वप्रतिपत्तेरभावानुपगमात्। परोपगमाद्धि परं प्रतिपादयितुं शक्यं सर्वथा सम्बन्धाभावं नासौ। शक्य एव प्रत्यक्षत इति चेत्। न। तस्य निर्विकल्पकत्वेन न कश्चित्केनचित्कथंचित्कदाचित्सम्बद्धं इतीयतो व्यापारान्कर्तुमसमर्थत्वात्। अन्यथा सर्वार्थवेदित्वापत्तेः। समस्तार्थानां साक्षात्करणमन्तरेण सम्बन्धाभावस्य तेन प्रतिपत्तुमशक्तेः। केषांचिदर्थानां स्वातन्त्र्यमसम्बन्धेन व्याप्तम्। सर्वोपसंहारेण प्रतिपद्य ततोऽन्येषामसम्बन्धप्रतिपत्तिरानुमानिकी स्यादिति चेत्, तर्हि स्वातन्त्र्यमर्थानां न तावत्सिद्धानाम्। सिद्धानां तु स्वातन्त्र्यात्सम्बन्धाभावे तत्त्वतः किं तु देशादिनियमेनोद्भवो दृश्यते। तस्य पारतन्त्र्येण व्याप्तत्वात्। न हि स्वतन्त्रोऽर्थः सर्वनिरपेक्षितया नियतदेशकालद्रव्यभावजन्मास्ति। न चान्यासम्बन्धार्थनियामसमर्थः। स्वयं तस्यापाकरणात्। प्रत्यासत्तिविशेषाद्देशादिभिर्नियतोत्पत्तिरर्थस्य स्यादिति चेत्। तर्हि स एव प्रत्यासत्तिविशेषः सम्बन्धः पारमार्थिकः सिद्धः। तदुक्तम्—

‘द्रव्यतः क्षेत्रतः कालभावाभ्यां कस्यचित्सतः।
प्रत्यासत्तिरतः सिद्धः सम्बन्धः केनचित्स्फुटः॥’

कस्यचिद्धि पर्यायस्य सतः केनचित्पर्यायेण सहैकद्रव्ये समवायाद्द्रव्यप्रत्यासत्तिर्यथा स्मरणस्यानुभवेन सहात्मन्येकत्र समवायस्तमन्तरेण तत्रैव यथानुभवं स्मरणानुपपत्तेः सोमभिदानुभवाद्विष्णुमित्रस्मरणानुपपत्तिवत्। समानार्थत्वादुपपत्तिरिति चेत्। न। समानस्यासत्त्वे तन्नियमहेतुत्वाघटनात्। सत्त्वे वा नाममात्रं भिद्येत। समानार्थं द्रव्यमिति न कश्चिद्विशेषः। यत्समानं वासनाप्रबोधस्य सतानं स्मरणमिति नियमोपगमोऽपि न श्रेयान्। प्रोक्तदोषानतिक्रमात्। सन्तानस्याप-

द्रव्योपपत्तौ यदात्मद्रव्यपरिणामो वासना प्रबोधस्तदात्मद्रव्यविवर्तः स्मरणमिति परमतसिद्धेः कथं परस्परं भिन्नस्वभावकालयोरनुभवस्मरणयोरेकमात्मद्रव्यं व्यापकमिति च न नोद्यम् । सकलनानाकारव्यापिना ज्ञानेनैकेन प्रतिविहितत्वात् । समसमयवर्तिनो रूपरसयोरेकगुणिव्यापृतयोरनुमानानुमेयव्यवहारयोग्ययोरेकद्रव्यप्रत्यासत्तिरनेनोक्ता । तदभावे तयोस्तद्व्यवहारयोग्यतानुपपत्ते । एकसामग्र्यधीनत्वात्तदुपपत्तिरिति चेत् । केयमेका सामग्री नाम । एकं कारणमिति चेत् । तत्सहकारि, उपादानं वा । सहकारि चेत् । कुलालकलशयोर्दण्डादिरेका सामग्री स्यात्समानक्षणयोस्तयोरुत्पत्तौ तस्य सहकारित्वात् । तथा तयोरनुमानानुमेयव्यवहारयोग्यता न व्यभिचारिणी स्यात् । तदेकसामग्र्यधीनत्वात् । एकसमुदायवर्तिसहकारिकारणमेका सामग्री न भिन्नसमुदायवर्ति यतोऽनमतिप्रसङ्ग इति चेत्, कः पुनरयमेकः समुदायः । साधारणार्थक्रिया नियता प्रविभागरहिता रूपादय इति चेत् । कथं प्रविभागरहितत्वमेकत्वपरिणामाभावे तेषामुपपद्यतेऽतिप्रसङ्गात् । सांवृतकपरिणामोऽस्त्विति चेत् । न । तस्य प्रविभागभावहेतुत्वायोगात् । प्रविभागाभावोऽपि तथा सांवृत इति चेत् । तर्हि तत्त्वतः प्रविभक्ता एव रूपादयः समुदाय इत्यापन्नम् । न चैवं केषाचित्समुदायेतरव्यवस्था । साधारणार्थक्रियानियतत्वेतराभ्यां सोपपन्नेति चायुक्तम् । सूर्याम्बुजयोरपि समुदायत्वप्रसङ्गात् । तयोरम्बुजप्रबोधाख्यसाधारणार्थक्रियानियतत्वात् । ततो वास्तवमेव प्रविभागरहितत्वं समुदायविशेषस्तेषामेकत्वाध्यवसायहेतुरङ्गीकर्तव्यः । स चैकत्वपरिणामं तात्त्विकमन्तरेण न घटत इति सोऽपि प्रतिपत्तव्य एव । स चैकं द्रव्यमिति सिद्धम् 'स्वगुणपर्यायाणां समुदायः स्कन्धः' इति वचनात् । तथा च सति रसरूपयोरेकाग्र्यात्मकयोरेकद्रव्यप्रत्यासत्तिरेव लिङ्गलिङ्गिव्यवहारहेतुः कार्यकारणभावस्यापि नियतस्य तदभावेऽनुपपत्ते. संतानान्तरवत् । न हि क्वचिदेव द्रव्ये वर्तमाना. पूर्वे रसादिपर्यायाः

परस्परमपि पर्यायाणामुपादानं न पुनरन्यत्रेति नियमस्तेषामेकद्रव्यतादात्म्यविरहे कथंचिदुपपन्नः । एकमुपादानम्, एका सामग्रीति द्वितीयः पक्षः समागतानामसमाख्य एव । नानाकार्यस्यैकोपादानत्वविरोधात् । यदि पुनरेकं द्रव्यमनेककार्योपादानं भवेत्तदा सैवैकद्रव्यपर्यायप्रत्यासत्तिरायाता स्वरूपयोः । क्षेत्रप्रत्यासत्तिर्यथा बलाकासलिलयोरेकस्यां भूमौ स्थितयोः । संयुक्तसंयोगो हि ततो नान्यः प्रतिष्ठामियर्ति । जन्यजनकभाव एव तयोः परस्परं प्रत्यासत्तिरिति चेत् । न । अन्यतः समुद्भूतयोरेकत्र सरसि बलाकायाः निवासमात्रात् । नैका बलाका पूर्वं सरः प्रविश्य सरोऽन्तरमवतिष्ठन्ती काचिदस्ति । प्रतिक्षणं तद्भेदादिति चेत् । न । बलाकाद्रव्यस्य तत्स्थैर्यप्रतीतेर्बाधकाभावात्तदन्यथानुपपद्यते । स्थिते प्रतिपन्नेन भेदैकत्र प्रदेशे बलाकासलिलयोरवस्थानात्क्षेत्रप्रत्यासत्तिरिति चेत् । न । भिन्नावयवनिष्ठत्वाधारस्यैकस्य साधनात् । न चैकस्यावयविनो नानावयवव्यापिनः सद्भावमसत् । प्रतीतिसिद्धत्वाद्वैद्याकारव्याप्यैकज्ञानवत् । कालप्रत्यासत्तिर्यथा— सहचरयोः सम्यग्दर्शनसम्यग्ज्ञानसामान्ययोः शरीरे जीवस्य विशेषयोर्वा । पूर्वोत्तरचरयोर्भरणिकृत्तिकयोः कृत्तिकारोहिण्योर्वा तयोः प्रत्यासत्त्यन्तरस्याप्यवस्थानात् । भावप्रत्यासत्तिर्यथा— गोगवययोः केवलिसिद्धयोर्वा । तयोरेकतरस्य हि यो भावसंस्थानादिरनन्तज्ञानादिर्वा नाहत्तदन्यतरस्यापि सुप्रतीत इति न प्रत्यासत्त्यन्तरम् । कयोश्चिदेकप्रत्यासत्तिसद्भावे वा न किंचिन्निष्टम् । प्रतिनियतोद्भूते सत्पदार्थानां द्रव्यादिप्रत्यासत्तिचतुष्टयव्यतिरेकेणानुपपद्यमानत्वेन प्रसिद्धे सत्र चतुर्विधा प्रत्यासत्तिः स्फुटः सम्बन्धो बाधकाभावादिति सम्बन्धाभावे व्यवतिष्ठते । यच्चोक्तम् 'निष्पन्नयोरनिष्पन्नयोर्वा पारतन्त्र्यलक्षणसम्बन्धः स्यात्' इत्यादि । तदपि न रम्यम् । कथंचिन्निष्पन्नयोस्तस्य स्वीकरणात् । पटो हि तन्तुद्रव्यरूपतया निष्पन्न एवान्वयिनो द्रव्यस्य पटपरिणामोत्पत्तेः प्रागपि सत्त्वात् । स्वरूपेण त्वनिष्पन्नोऽसौ । तन्तु

द्रव्यमपि स्वरूपेण निष्पन्नं पटपरिणामरूपतया त्वनिष्पन्नं ....(तथा-कुल्यादिद्रव्यं स्वरूपेण निष्पन्नं ) संयोगिपरिणामात्मकत्वेन त्वनिष्पन्नमिति । यदपि 'न रूपश्लेषलक्षणोऽसौ' इत्यादि प्रत्यपादि तदेतदेकान्तवादिनं प्रत्येयम् । न पुनरनेकान्तवादिनाम् । न हि कथंचिदेकत्वापत्तिं संबन्धिनो रूपश्लेषं संबन्धमाचक्षते । न च सा द्वित्वविरोधिनी । कथंचित्स्वभावनैरन्तर्यं वा ते संबन्धमभिदधते । तदपि नान्तरालाभावरूपमवास्तवम् । छिद्रमध्यविरहेष्वन्यतमस्यान्तरालस्याभावो हि स्वभावान्तरात्मको वस्तुभूत एव यदा रूपश्लेषः कयोश्चिदाम्रीयते निर्बाधस्तथा प्रत्ययविषयस्तदा कथं कल्पनारोपितः स्यात् । केनाचिदंशेन तादात्म्यमतादात्म्यं च संबन्धिनोर्विरुद्धमित्यपि न मन्तव्यम् । तथानुभवाच्चित्राकारसंवेदनवत् । एतेन प्राप्तिरूपं नैरन्तर्यं रूपश्लेष इत्यपि स्वीकृतम् । कथंचित्तादात्म्यानतिक्रमाद्यथैव हि कार्यकारणक्षणाभ्यां तन्मध्यक्षणस्यैकदेशेन संबन्धे सांशत्वमनवस्था वा । तदेकदेशस्याप्येकदेशान्तरेण संबन्धात् । कार्त्स्न्येन संबन्धे पुनरेकक्षणमात्रसंतानप्रसंगः । कार्यकारणभावाभावश्च सर्वथैकस्मिंस्तद्विरोधादित्येकदेशकार्त्स्न्यपक्षानुपेक्ष्य संबन्ध एवेति कथ्यते । तथा परमाणूनामपि युगपत्परस्परमेकत्वपरिणामहेतुः संबन्धो नैकदेशेन सर्वात्मना वा येन सांशत्वानवस्थाप्रसंगः एकपरमाणुमात्रपिण्डप्रसंगश्च स्यात् । किं तर्हि संबन्ध एवेति कथ्यते । सक्तुतोयादिवत् । परमाणूनां सांशत्वमित्यत्र चांशशब्दः स्वभावार्थोऽवयवार्थो वा स्यात् । यदि स्वभावार्थो न कश्चिद्दोषः । परमाणूनां विभिन्नदिग्भागव्यवस्थितानेकाणुभिः संबन्धान्यथानुपपत्त्या तावद्धा स्वभावभेदोपपत्तेः । अवयवार्थस्त्वत्रांशशब्दो न युक्तिमान् । अणूनामभेद्यत्वेनावयवासंभवात् । न चैवं तेषामविभागित्वं विरुध्यते । यतोऽविभागित्वं भेदयितुमशक्यत्वं न पुनरेकस्वभावत्वमिति । यच्चोक्तम् 'न स तात्त्विकः संबन्धोऽस्ति प्रकृतिभिन्नानां व्यवस्थितेः' इत्यादि । तदपि नावदातम् । स्वस्वभावव्यवस्थितिरेव तेषां संबन्धसिद्धेः । स्वस्वभावो हि भावानां प्रतीयमानः

१ अयं पाठोऽत्र त्रुटितमिव भाति ।

कथचित्प्रत्यासत्तिर्विप्रकर्षश्च । अन्यथा तत्प्रतीतिस्तेन व्यवस्थिति कथ मन्यथाभावेकान्त साधयेत्, सम्बन्धव्यवस्थापकाभावात् । न चापेक्षिकत्वा- त्सम्बन्धस्वभावो मिथ्याप्रतिभास सूक्ष्मत्वाद्यविदसम्बन्धस्वभावस्यापि तथानुपपत्ते । न चासम्बन्धस्वभावोऽनापेक्षिक कश्चिदर्थस्तत्पक्षे कस्य चिदप्यव्यवस्थितेरन्यथानुपपत्ते स्थूलत्वादिवत् । प्रत्यक्षबुद्धौ प्रतिभास मानोऽनापेक्षिक एवाय तत्पृष्ठभाविना तु विकल्पेनाध्यवसीयमानो यथापेक्षिकस्तथा वास्तवो न भवतीति चेत् । सम्बन्धस्वभावे समान- मेतत् । न हि स प्रत्यक्षे न प्रतिभासते । यतोऽनापेक्षिको न स्यात् । एतेन ' परापेक्षे सम्बन्धस्तस्य द्विष्ठत्वात् ' इत्यादि प्रत्याख्यातम् । असम्बन्धेऽपि समानत्वात् । किं चैवंवादी सर्वथा सत्त्वाद्य- भावस्य परापेक्षाया विरोधमप्रतिपद्यमान कथ ता प्रतिषेधेत् । प्रति- पद्यमानस्तु सुतरा प्रतिपेद्धुमसमर्थस्तस्या क्वचित्सिद्धेरन्यथा विरोधा- योगात् । कथ वा निराकुर्वन्नपि परापेक्षा सम्बन्धस्यानापेक्षिकस्य प्रत्याचक्षीत न चेदुन्मत्त । स्वलक्षणमेव सम्बन्धोऽनापेक्षिक स्यात् ततोऽन्य स चेष्टो नाममात्रे विवादात्, वस्तुन्यविवादादिति चेत् । क पुन सम्बन्धस्वलक्षणमाह । तस्यापि स्वेन रूपेण लक्ष्यमाणस्य स्वलक्षणत्वात् । यदपि ' सम्बन्ध सम्बन्धिभ्या भिन्न स्यादभिन्नो वा ' इत्यादि न्यगादि तदपि स्याद्वादिमतानभिज्ञभाषितम् । स्याद्वादि मत हि भेदाभेदैकान्तपराङ्मुखमिति न तद्दोषास्पदम् । एव च ' वास्तवसम्बन्धाभावेऽपि तामेव कल्पनाम् ' इत्यादि, अनुपपन्नम् । क्रियाकारकादीना सम्बन्धिना तत्सम्बन्धस्य च वस्तुरूपस्य प्रतीयर्थ तदभिधायकाना प्रयोगप्रसिद्धे । अन्यापोहस्य च प्रागेवापास्तस्व- रूपवाच्यत्वाद्यर्थत्वमनुपपन्नमेव । यच्चोक्तम ' कार्यकारणभावस्तर्हि सम्बन्धो भविष्यति ' इत्यादिकम् । ' भिन्ने का घटनाऽभिन्ने कार्यकार णतापि का ' इति कारिकाव्याख्यान यावदकार्यकारण- भावेऽपि सर्वं समानम् । साऽपि हि द्विष्ठा कथमसहभाविनो कार्य-

कारणत्वाभ्यां प्रतिषेध्ययोर्भावयोर्वर्तेत । न चाद्विष्टोऽसौ संबन्धाभावत्वविरोधात् । पूर्वत्र भावे वर्तितत्वात्परत्र क्रमेण वर्तमानोऽपि यदि सोऽन्यनिस्पृह एवैकत्र तिष्ठन्कथमसंबन्धः । परस्य ह्यनुत्पन्नस्याभावेऽपि पूर्वप्रवर्तमानः । पूर्वस्य च नष्टत्वेनाभावेऽपि परत्र वर्तमानोऽसाविकवृत्तिरेव स्यात् । पूर्वत्र वर्तमानः परमपेक्षते परत्र च तिष्ठन्पूर्वमतोऽसबन्धो द्विष्ठ एवान्यनिस्पृहत्वाभावादिति चेत् । कथमनुपकारकं तयोरन्यतरमपेक्षत इति प्रसंगात् । स्वोपकारमपेक्षत इति चेत् । न । असतस्तदुपकारत्वायोगात् । यदि पुनरेकेनाभिसंबन्धात्पूर्वपरयोरर्थयोः कार्यकारणभावस्तदा सव्येतरविषाणयोरसौ संभवति । एकेन द्वित्वादिनाभिसंबन्धात् । तथा च सिद्धसाध्यता । द्विष्ठो हि कश्चिदसबन्धो नातोऽन्यलक्षणो येनाभिमतसिद्धिः । यदि पुनः पूर्वस्याभाव एव यो भावोऽभावे वाऽभावस्तदुपाधिर्योगोऽकार्यकारणभावस्तदा तावेव भावाभावावयोगोपाधी किं नाकार्यकारणभावः स्यात् । तयोर्भेदादिति चेत् । न । शब्दस्य नियोक्तृसमाश्रितत्वेन भेदेऽप्यभेदवाचिनः प्रयोगाभ्युपगमात् । स्वयं हि लोकोऽयमेकमदृष्टस्य दर्शनेऽप्यपश्यंस्तददर्शनेऽपि च पश्यन् विनाप्याख्यातृभिरकार्यमवबुध्यते । एवं चादर्शनदर्शने मुक्त्वा न कश्चिदकार्यबुद्धिरस्ति । न च तयोरेकार्थादिश्रुतिर्विरुध्यते । लाघवार्थत्वात्तन्निवेशस्य । या पुनरतद्भावाभावादतत्कार्यगतिरुपवर्ण्यते सा संकेतविषयाख्या, यथाऽसास्नादेर्गोगतिर्नैतावता तत्त्वतोऽकार्यकारणभावो नाम । भावे ह्यभाविनि भावो भाविनि चाभावितात्राहेतुफलते प्रसिद्धे प्रत्यक्षानुपलम्भाभ्यामेव । तदेतावन्मात्रतत्त्वार्था एवाकार्यकारणगोचरा विकल्पा दर्शयन्त्यर्थान् । मिथ्यार्थान्स्वयमघटितानिव घटितानपीति समायातम् । भिन्ने हि भावे का नामाघटना तस्याऽन्याऽवभासते । येनासौ तात्त्विकी स्यात् । अभिन्ने सुतरां न घटना । न च भिन्नावर्थौ केनचिदकार्यकारणभावेन योगादकार्यकारणभूतौ स्यातां संबन्धसिद्धिप्रसंगात्

न्त्येव न तात्त्विकोऽर्थानामकार्यकारणभावो व्यवतिष्ठते । कार्यकारणभाववत् । स्वस्वभावव्यवस्थितार्थान्विहाय नान्यः कश्चिदकार्यकारणभावोऽस्ति । तथा व्यवहारस्तु कल्पनामात्रनिमित्त एव कार्यकारणव्यवहारवदिति चेत् । तर्हि वास्तव एव कार्यकारणभावोऽकार्यकारणभाववत् । केवलं तद्व्यवहारो विकल्पशब्दलक्षणो विकल्पनिर्मित इति किमनिष्टम् । वस्तुरूपयोरपि कार्यकारणभाव इतरथाऽभावो वस्तुत्विति तु न युक्तम् । व्याघातात् । क्वचिन्नीलेतरत्वाभाववत् । ततो यदि कुतश्चित्प्रमाणादकार्यकारणभावः परमार्थतः केषांचिदर्थानां सिध्येत्, तत एव कार्यकारणभावोऽपि । प्रतीतेरविशेषात् । यथैव हि गवाश्वादीनामकार्यकारणभावः परस्परमतद्भावभाविनां प्रतीतेर्व्यवतिष्ठते तथाग्निधूमादीनां कार्यकारणभावोऽपि । तद्भावभावित्वप्रतीतेर्बाधकाभावात् । नन्वकस्मादग्निं धूमं वा केवलं पश्यतः कारणत्वं कार्यत्वं वा किं न प्रतिभातीति चेत् । किं पुनरकारणत्वमकार्यत्वं वा प्रतिभाति । सातिशयमतिना प्रतिभात्येवेति चेत् । कारणत्वं कार्यत्वं वा तत्र तेषां न प्रतिभातीति कोशपानं विधेयम् । अस्मदादीनां तु तत्प्रतिभासनं तथा निश्चयानुत्पत्तेः क्षणक्षयादिवत् । तच्चोभयत्र समानम् । यथैव हि तद्भावभावितानध्यवसायिनां न क्वचित्कार्यकारणत्वनिश्चयोऽस्ति तथा स्वयमतद्भावभावितानध्यवसायिनामकार्यकारणत्वनिश्चयोऽपि । प्रतिनियतसामग्रीसापेक्षत्वाद्वस्तुधर्मनिश्चयस्य । न हि सर्वत्र समानसामग्रीप्रभवो निर्णयस्तथान्तरङ्गबहिरङ्गसामग्रीवैचित्र्यदर्शनात् । धूमाग्न्यानन्तरसामग्रीमात्रात्कार्यत्वादिनिश्चयानुपपत्तेर्न कार्यत्वादि धूमादेः स्वरूपमिति चेत् । तर्हि क्षणिकत्वादिरपि तत्स्वरूपं मा भूत्तत एव । क्षणिकत्वाभावे वस्तुत्वमेव न स्यादिति चेत् । कार्यकारणत्वाभावेऽपि कुतो वस्तुत्वं खरशृङ्गवत् । सर्वथाप्यकार्यकारणस्य वस्तुत्वानुपपत्तेः कूटस्थवत् । विशेषाभावात् । ननु च सत्यपि कार्यत्वे कारणत्वे वा वस्तुस्वरूपे न सम्बन्धो द्विष्ठत्वाभावात् । कार्यत्वं कारणे

हि न वर्तते कारणत्वं च कार्ये येन द्विष्ठं भवेत् । कार्यकारणभावस्तयोरेको वर्तमानः संबन्ध इति चेत् । न । तस्य कारणाभ्यां भिन्नस्याप्रतीतेः । सतोऽपि प्रत्येकपरिसमाप्त्या तत्र वृत्तौ तस्यानेकत्वापत्तेः । एकदेशेन वृत्तौ सावयवत्वानुषङ्गः । सावयवेष्वपि वृत्तौ प्रकृतपर्यनुयोगस्य तदवस्थत्वाविनाशात् । कार्यकारणान्तराले तस्योपलम्भप्रसंगाच्च । ताभ्यां तस्याभेदेऽपि कथमेकत्वं भिन्नाभ्यामभिन्नस्याभिन्नत्वविरोधात् । स्व .... .. ... .... .... .... देकपरमाणुमात्रं जगत्स्यात् । सकलजगत्स्वरूपो वा परमाणुरिति भेदाभेदैकान्तवादिनोरुपालम्भः । स्याद्वादिनस्तथानभ्युपगमात् । कार्यकारणभावस्य हि संबन्धस्याबाधितप्रत्ययात्कस्य स्वसंबन्धिनोर्वृत्तिः कथंचित्तादात्म्यमेवानेकान्तवादिनोऽपीति कथं संबन्धस्यैकत्वं न विरुध्यत इति चेत् । नानाकारतादात्म्ये ज्ञानस्यैकत्वं कुतो न विरुध्यते । तदशक्यविवेचनत्वादिति चेत् । तत एवान्यत्रापि कार्यकारणयोर्हि द्रव्यरूपतयैकत्वात्कार्यकारणभावस्यैकत्वमुच्यते । न च तस्य शक्यविवेचनत्वं मृद्द्रव्य .... .... .... .... .... ... रेतुमशक्तेः । क्रमभुवोः पर्याययोरेकद्रव्यप्रत्यासत्तेरुपादानोपादेयत्वस्य वचनात् । न चैवंविधः कार्यकारणभावः सिद्धान्तविरुद्धः । सहकारिकारणेन कार्यस्य कथं तत्स्यादेकद्रव्यप्रत्यासत्तेरभावादिति चेत् । कालप्रत्यासत्तिविशेषात्तत्सिद्धिः । यदनन्तरं हि यदवश्यं भवति तत्तस्य सहकारिकारणमितरत्कार्यमिति संनिहितदेशस्यैव दूरदेशस्यापि चक्षुषो रूपज्ञानोत्पत्तौ सहकारित्वदर्शनात् । सदशकादृश्यासुवर्णस्वभावस्य सौवर्णकटकोत्पत्तौ । यदि पुनर्यावत्क्षेत्रं यदस्योत्पत्तौ सहकारि दृष्टं यथाभावं च तत्तावत्क्षेत्रं तथाभावमेव च सर्वत्रेति नियता व्याप्तिः स्यात्तदा नोक्तगतिः स्यात् । न चैवमिति । एतेन ‘ संयोगि समवाय्यादि सर्वमेतेन चिन्तितम् ’ इत्याद्यपि प्रतिहतम् । कार्यकारणभावसिद्धौ संयोगिसमवाय्यादिकारणस्यापि सिद्धेः । यच्चोक्तम् ‘ अस्तु वा कार्यकारण-

मात्रलक्षण समन्यस्तथाप्यस्य प्रतिपन्नस्याप्रतिपन्नस्य वा सत्त्वं सिध्येत्। न तावदप्रतिपन्नस्य। अतिप्रसङ्गात्। प्रतिपन्नस्य चेत् 'कुतोऽस्य प्रतिपत्ति' इत्यादि, तत्त्वकार्यकारणभावप्रतीति प्रत्यक्षानुपलम्भसहाये नात्मना नियते व्यक्तिविशेषे तर्कसहायेन चानियते प्रसिद्धा। एकमेव च प्रत्यक्ष प्रत्यक्षानुपलम्भशब्दाभिधेयम्। तद्धि कार्यकारणभावाभिमतार्थविषयं प्रत्यक्षमुच्यते। तद्विविक्तान्यवस्तुविषयं वस्तु अनुपलम्भशब्दाभिधेयम्। तथा हि— एतावद्भि प्रकारैर्धूमोऽग्निजन्यो न स्यात्। यद्यग्निसंनिधानात्प्रागपि तत्र देशे स्यात्, तदन्यतो वा गच्छेत्, तदन्यहेतुको वा भवेत्। एतच्च सर्वमनुपलम्भपुरःसरेण प्रत्यक्षेण प्रत्याख्यातम्। एतेन 'प्रागनुपलब्धस्य रासभस्य कुम्भकारसंनिधानानन्तरमुपलभ्यमानस्य तत्कार्यता स्यात्' इति प्रतिव्यूढम्। यदि हि तस्य तत्र प्रागसत्त्वमन्यदेशादनागमनमन्याहेतुकत्वं च निश्चेतुं शक्येत स्यादेव कुम्भकारकार्यता, तत्तु निश्चेतुमशक्यम्। न च प्रतीतार्थग्राहि प्रत्यक्षद्वयं द्वितीयग्रहणे तदपेक्षं कारणत्वं कार्यत्वं वा ग्रहीतुमसमर्थमित्यभिधातव्यम्। क्षयोपशमविशेषवशात् धूममात्रोपलम्भेऽप्यस्याग्निजन्यतावच्छिन्नस्यावगमप्रतीतेः। अन्यथा बाष्पादिविलक्षणस्याप्यनवधारणात्, ततोऽप्यनुमानाभावे सकलव्यवहारोच्छेदप्रसङ्ग। तत्र कथञ्चित्कारणाभिमतपदार्थसद्गुणपरिणामापरित्यागवतात्मना कार्यस्वरूपप्रतीतिरभ्युपगन्तव्या। नीलाद्याकारव्याप्यैकज्ञानेन तत्स्वरूपप्रतीतिवत्। न च कार्यस्यानुत्पन्नस्यैव कार्यत्वं धर्मोऽसत्त्वात्। नाप्युत्पन्नस्यात्यन्तभिन्नं कार्यत्वं धर्म। तदन्यतद्धर्मवत्। तत एव कारणस्यापि कारणत्वं धर्मो नैकान्ततो भिन्नम्। तच्च तस्मादभिन्नत्वात्प्रत्यक्षादिप्रमाणैरेव प्रतीयते तद्व्यक्तिस्वरूपवत्। दृश्यते हि विशाखाशाखान्तरेतराभिमतार्थस्वच्छेदेनाभावात् तदपनोदसमर्थे जडादौ तत्प्रत्यक्षप्रवृत्ति। ननु कार्यप्रतिपत्तौ कथं कारणस्य कारणताप्रतिपत्तिस्तदपेक्षत्वादस्या इति चेत्। कथमेव पूर्वापरक्षणप्रतिपत्तौ प्रत्यक्षस्य

ताभ्यां व्यावृत्तिप्रतिपत्तिरपेक्षाकृतत्वाविशेषात्ततः पश्यन्नयं क्षणिकमेव पश्यतीति वचो विरुध्यते। ननु मध्यक्षणस्वभावत्वात्पूर्वापरक्षणव्यावृत्त्योर्मध्यक्षणग्राहिज्ञानेनैव प्रतिपत्तिरिति चेत्। तर्हि कारणत्वधर्मस्यापि कारणस्वभावत्वात्तद्ग्राहिणैव ज्ञानेन प्रतिपत्तिरिष्यतां विशेषाभावात्। वक्तृत्वस्य चासर्वज्ञत्वादिना व्याप्त्यसंभवः सर्वज्ञसिद्धिप्रघट्टके प्रकटित इति नेह प्रकाश्यते। न चेन्धनादिप्रभवपावकस्य मण्यादिप्रभवपावकादभेदो येन नियतः कार्यकारणभावो न स्यात्। अन्यादृशाकारो हीन्धनप्रभवः पावकोऽन्यादृशाकारश्च मण्यादिप्रभवः, तद्विचारे च निपुणेन प्रतिपत्त्रा भवितव्यम्। यत्नतः परीक्षितं हि कार्यं कारणं नातिवर्तते। कथमन्यथा वीतरागेतरव्यवस्था। तच्चेष्टयोः साङ्कर्योपलम्भात्। कथं चैवंवादिनो मृतेतरव्यवस्था स्यात्। व्यापारव्याहारादिकार्यविशेषस्य हि क्वचिच्चैतन्यकार्यतयोपलम्भे सति। अन्यत्र जीवच्छरीरे चैतन्य व्यापारादिकार्यविशेषोपलम्भात्। मृतशरीरे तु नास्ति तदनुपलम्भादिति कार्यविशेषस्योपलम्भानुपलम्भाभ्यां कारणविशेषस्य भावाभावप्रसिद्धेस्तद्व्यवस्था युज्येत। तन्न प्रमाणतः प्रतीयमानः संबन्धः स्वाभिप्रेतत्ववन्निन्हवनीयो येन परमाणूनां सम्बन्धाभावतः स्थूलादिप्रतीतेर्भ्रान्तत्वात्तदात्मकत्वं वस्तुनो न स्यात्। तस्मादिति व्यवस्थितम्। विवादविषयापन्नं वस्तु, सूक्ष्मस्थूलाकारात्मकं वस्तुत्वान्यथानुपपत्तेः। न खल्वेकान्ततः सूक्ष्मं स्थूलं वा तद्वस्तुतामास्तिघ्नुते। तथाविधस्य निर्बाधप्रतिभासनावलम्बनत्वेनाम्बराम्बुरुहस्येवावस्तुत्वाद्यथाप्यसर्वथा सूक्ष्माकारं स्थूलाकारं वा परपरिकल्पितं वस्तु न ....

.... .... .... .... .... .... .... .... .... .... .... ....

द्वा। आद्यपक्षे तस्येदं स्वभावद्वयमिति संबन्धानुपपत्तिः। सर्वथा भिन्नस्य च स्वभावद्वयस्य कार्यकर्तृत्वे किमायातं स्वभाविनो रूपक्षणस्य येनासावपि कार्यकारीति व्यपदेशभाजनं भवेत्। कथंचिदर्थान्तरभूतत्वपक्षे पुनः समायातमेकस्य रूपक्षणस्यानेकस्वभावाक्रान्तत्वम्।

यदि चैकक्षणवर्तिनस्तस्य सामग्रीभेदेन भेदमननुभवत एव भिन्नदेशानेककार्यकारित्वमिष्यते तर्हि नित्यस्यापि सामग्रीभेदेन भेदमननुभवत एव भिन्नकालानेककार्यकारित्वमिष्यतामविशेषात्। तथा च हत स्वयमेव हस्त स्थैर्यपक्षप्रसिद्धये। क्षणविनश्वररूपादिस्वलक्षणानां प्रतिभासभेदेन वैलक्षण्यप्रतिज्ञा चेत्थं निर्निमित्ता भवेत्। कौटस्थ्यालिङ्गितस्यापि द्रव्यस्यान्यान्यसामग्रीसंदेहान्तर्भूततया नवपुराणादिविपर्ययरूपरसगन्धस्पर्शाभासलक्षणानेककार्यकरणाविरोधप्रसङ्गात्। अन्यच्च संवेदनमर्थं स्वस्वरूपापेक्षया बहिर्मुखान्तर्मुखसविकल्पाविकल्पभ्रान्ताभ्रान्तादिप्रतिभासमेकं स्वीकुर्वाणोऽपि शाक्यस्तात्त्विकानेकधर्मात्मकं वस्तु तिरस्करोतीति कथं स्वस्थः। अपि च युगपत्प्रथमाननीलपीतादिवस्तुव्यवस्थित्यन्यथानुपपत्त्या नानादेशसमाश्रितानेकवस्तुसमुपनीताकारोपरक्तमेकमाकारभेदेऽपि संवेदनमातिष्ठमानः, कथं भिन्नसमयभाविसुखदुःखाद्यनेकपरिणतिनिरासात्तद्भेदमैकान्तिकं ताथागतः कथयेत्। न्यायस्य समानत्वात्। अथ युगपद्भाविन्यात्मसंवेदनान्तर्भूताकाराणामेकत्वं न पुनः सुखादीनां क्रमभाविनामित्यभिधीयते तत्र तथ्यम्। युगपद्भाविनां नानादेशव्यवस्थितानां वस्तूनामप्यभेदप्रसक्तेः। तदित्थं बहिरन्तश्चानेकान्तमन्तरेण सौगतस्य स्वमतव्यवस्थापि दुरुपपादेति तात्त्विकानेकधर्मात्मकत्वेनैव साध्येन प्रमेयत्वादस्य हेतोर्व्याप्तिप्रसिद्धेर्न संदिग्धविपक्षव्यावृत्तिकतया नैकान्तिकत्वं शङ्कितुमपि युक्तमिति। नापि प्रकृतिपुरुषाख्यद्रव्यमात्रवादिना कापिलेन प्रकृतानुमाने पक्षस्य प्रत्यक्षबाधितत्वं दोषः प्रकाशनीयः। तस्याप्यनेकान्ताभ्युपगमं विना स्वदर्शनव्यवस्थानस्यासंभवात्। तथा ह्यन्तरं एकं चैतन्यतत्त्वं द्रष्टृत्वभोक्तृत्वाद्यनेकपरिणामसमनुगतं बहिश्च स्तम्भादिकं वस्तु नवपुराणवृत्तचतुरस्रत्वाद्यनेकपरिणामसमनुगतमेव व्यवहारसमर्थने प्रवर्तते। ननु प्रकृतिपुरुषस्वभावं द्रव्यमेवैकं तात्त्विकम्। परिणामस्तु पर्यायापराभिधानो न

तात्त्विक इति चेत् । मैवम् । उभयोरपि समस्तप्रमाणेषु प्रथमानयोः सकलव्यवहृतिहेतुभूतयोः पक्षपातं विना तात्त्विकतातात्त्विकत्वाभ्युपगमे किं पराजयो न दुर्निवारः स्यात् । अथ कथ्यते ' द्रव्यं सर्वत्राव्यभिचरितस्वभावत्वात्तात्त्विकम् । पर्यायास्तु व्यभिचारित्वादतात्त्विकाः' इति तदप्यवद्यम् । यतो यदि नामद्रव्यमभेदरूपत्वात्सर्वत्रानुवर्तते पर्याया. पुनर्भेदरूपत्वाद्व्यावर्तन्ते नतावता पर्यायस्वरूपं तदतात्त्विकमतिप्रसक्तेर्विश्वस्य परस्वभावपरित्यागावस्थायित्वेनातात्त्विकत्वापत्तेः । अथ द्रव्यमेव पर्यायास्तदभिन्नत्वात्तत्स्वरूपवत् । न सन्ति वा द्रव्यादर्थान्तरभूताः पर्याया निःस्वभावत्वान्नभोऽम्बुरुहवदिति तदपि न सत् । पर्याया एव द्रव्यम् । तदभिन्नत्वात्तत्स्वरूपवत् । नास्ति वा पर्यायेभ्योऽर्थान्तरभूतं द्रव्यं नि.स्वभावत्वान्नभोऽम्बुरुहवत्, इत्यन्योऽप्यभिदधानः केन प्रतिषिध्येत । तस्मादुभयोरपि पक्षयोर्न कश्चिद्विशेषोपलम्भः समस्तीति यथैवानेकसहक्रमवर्ति पर्यायपरिकरितं द्रव्यमेकमनुभूयते । तथैव तदभ्युपगन्तव्यमिति न तन्निषेद्धुमसौ पटीयानिति सिद्धम् । एतेनात्मत्वव्यतिरिक्तधर्मधर्मिवादी वैशेषिकादिरपि प्रस्तुतानुमाने पक्षस्य प्रत्यक्षबाधां पुरस्कृत्य हेतोः कालात्ययापदिष्टत्वं वदन् अपहस्तितः । यदि धर्मधर्मिणोरत्यन्तं भेद एव तदा धर्मधर्मिणोऽत्यन्तभिद्यमानमूर्तयस्तत्रैव कथं वर्तेरन्, भेदाविशेषेण सर्वत्रापि तेषां वृत्तिप्रसक्तेः । प्रतिनियत एव धर्मिणि धर्माणां समवायान्नापरत्र वृत्तिरिति चेत् । नन्वत्रापि वक्तव्यं धर्मधर्मिणोर्यद्युपकार्योपकारकभावः स्यात्तदेयमपि स्यात् । अस्त्येव धर्मधर्मिणोरुपकार्योपकारकभाव इति चेत् । तर्ह्यायातमनेकधर्मोपकारकस्यैकस्य धर्मिणोऽनेकस्वभावत्वम् । तदन्तरेणानेकोपकारकत्वासंभवात् । न खलु येन स्वभावेनैकस्य धर्मस्योपकारस्तेनैवान्यस्य धर्मान्तरोपकारकत्वस्वभावस्य पूर्वस्वभावोपमर्दद्वारेणोत्पत्तेरितरथैकमेवोपकुर्वाणोऽसौ तिष्ठेत्तदेकस्वभावत्वात् । नन्वर्थान्तरभूताभिः शक्तिभिरनेकस्याय-

सुपकुरुते । न पुनर्भिन्ने धर्मास्ततो नानेकान्तावकाश इति चेत् ।
ह्

वराकश्च कथं चित्ररूपर्णायमेत सव ण्वामी सयोगादयन्ते स्वीक्रियन्ते । निराबाधप्रत्ययेषु तेषां तथैव प्रथनात् । अन्यथा प्रथमानानामन्यथा कल्पनायां तु दृष्टान्यदृष्टकल्पनापत्ते । तत्र वैशेषिकादिः प्रकृतानुमाने हेतो कालात्ययापदिष्टतां प्रकटयितुं पटुरिति स्थितम् । मीमांसकस्तु प्रायेण सर्वत्र जैनोच्छिष्टभोजीति न सोऽपि प्रस्तुतानुमानदूषणार्थमुपगच्छतीति । चार्वाकस्तु वराकः प्रतीयमानजीवादितत्त्वग्रामलुण्टाकत्वादप्रामाणिकसदसि प्रवेशमपि न प्राप्नोतीति कस्तदीयक्षुद्रतर्कस्येहावसर । तदेवमनेकान्तात्मकं बहिरन्तश्च वस्तु प्रतिसमयमनुसरन्तोऽपि परे ध्यान्ध्यादिदुरनुबन्ध कुतर्कविभ्रमानेकान्तपक्षमवलम्ब्यामानं परं वा बालिश साधुवर्त्मनः स्खलयन्तः स्वप्रतिपन्नभावस्वभावान्यथानुपपत्त्या तथा प्रतिपादनीया यथा तात्त्विकानेकधर्मात्मकं न सर्वस्य वस्तुनः प्रमेयत्वात्प्रतिपद्येरन्निति । तथा वास्तवानेकधर्मात्मकोऽयं परस्परविलक्षणानेकार्थक्रियाकारित्वात्पितृपुत्रपौत्रभ्रातृभागिनेयाद्यनेकसम्बन्धानेकार्थक्रियाकारिदेवदत्तवत् । नात्रासिद्धो हेतु । आत्मनो मनोनुकूलनाविलोकनालिङ्गनमधुरस्वराकर्णनमहकारफलादिरसास्वादनघनसारादिगन्धाघ्राणश्रवणरसायनीभूतवचनोच्चारणचङ्क्रमणास्थानहर्षविषादानुवृत्तव्यावृत्तज्ञानान्योन्यविलक्षणानेकार्थक्रियाकारित्वेनाध्यक्षतोऽनुभवात् । कुम्भादेश्च स्वरूपपररूपाद्यपेक्षसत्सत्प्रत्ययसजातीयविजातीयापेक्षानुवृत्तव्यावृत्तप्रत्ययद्रव्यपर्यायापेक्षनित्यानित्यप्रत्ययजलाहरणादिपरस्परविलक्षणानेकार्थक्रियाकारित्वेन प्रत्यक्षत प्रतीते । दृष्टान्तोऽप्यत्र न साध्यसाधनविकलो वास्तवानेकधर्मात्मकत्वपरस्परविलक्षणोऽनेकार्थक्रियाकारित्वयोस्तत्र सद्भावात् । ननु भिन्नप्रतिभासत्वेन धर्मधर्मिणोरत्यन्तभेदसिद्धे सिद्धेऽपि धर्मिणि वास्तवा-

---

१ ज्ञानादयोऽन्य इति न पुस्तके पाठ ।

नेकधर्माणा सद्भावे तादात्म्याप्रसिद्धिरिति वैशेषिकादेः प्रत्यवस्थानं नोपपत्तिस्थानम् । भिन्नप्रतिभासत्वस्य भेदसिद्धावसमर्थत्वेन प्रतिपादितत्वात्सामान्यविशेषानेकान्तसिद्धाविति । एवं सर्वं वस्तु, अनेकान्तात्मकम, तथाप्रतीयमानत्वात् । सत्त्वादर्थक्रियाकारित्वात् । यत्पुनरनेकान्तात्मकं न भवति तन्न अभिहितसाधनत्रयाधिकरणं यथा खरविषाणम् । अभिहितसाधनत्रयाधिकरणं च सर्वं वस्तु, तस्मादनेकान्तात्मकमिति । तथा वस्तुभूतानेकधर्माधिष्ठानं भावः सामान्यविशेषसामानाधिकरण्यविशेषणविशेष्यभावादिव्यवहाराणामन्यथानुपपत्तेरिति । ननूत्तरपदार्थे निश्चिते सर्वत्र नञः प्रयोगो दृष्टोऽब्राह्मणादिवत् । एकान्तश्च यदि क्वचिन्निश्चितः कथं सर्वस्यानेकान्तात्मकत्वं भवेत् । तथानेकान्तवादस्वीकारे मुक्तोऽपि न मुक्त एव । अनेकान्तवादोच्छेदापत्तेः । अपि तु अमुक्तोऽपीति न मुक्तत्वमुपादेयप्रकर्षः स्यात्तदन्यसाधारणत्वात् । तथा संसार्यपि न सर्वथा संसारी । एकान्तवादापत्तेः । किं तर्ह्यसंसार्यपीति न ससारित्वं हेयोत्कर्षः स्यान्मुक्तत्वसंवलितत्वात् । किं च, अनेकान्तवादिनो मानमपि न मानमेव । एवं हेत्वाभासोऽपि न तदाभास एव । परमतप्रवेशापत्तेः । यदाह—

'मुक्तो न मुक्त एव हि संसार्यपि सर्वथा न संसारी ।
मानमपि न मानमेव हि हेत्वाभासोऽप्यसावेव ॥
एवं सप्रतिपक्षे सर्वस्मिन्नेव वस्तुतत्त्वेऽस्मिन् ।
स्याद्वादिनः सुनीत्या न युज्यते सर्वमेवेह ॥' इति ।

अपि च । अनेकान्तात्मकत्वे वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसंगः । तथा हि—विषमोदकादि व्यक्त्यभिन्नमनानास्वभावमेक सामान्यं वर्तते । ततश्च न विषं विषमेव मोदकाद्यभिन्नसामान्याव्यतिरेकात् । नापि मोदको मोदक एव विषाभिन्नसामान्याभेदात् ।

२ अत पर प्रवृत्ति० श्लोकान्तो पृ ८३५ प. ४ ग्रन्थोऽनेकान्तजयपताकायामुपलभ्यते । पृ. १५ प. १९.

किं तर्ह्युभयमुभयरूपम् । ततश्च विषार्थी विषे प्रवर्तेत मोदके च । एवं मोदकार्थ्यपि मोदके विषे च । लोकश्च विषार्थी विष एव प्रवर्तते न मोदके। मोदकार्थ्यपि मोदक एव न विष इति । तदुक्तम्—

'प्रवृत्तिनियमो न स्याद्विषादिषु तदर्थिनः ।
मोदकाद्यपृथग्भूतसामान्याभेदवृत्तिषु ॥'

इति तदयुक्तम् । यतो यत्तावत् 'उत्तरपदार्थे निश्चिते' इत्यादि तदवितथमेव । नयप्रतीत्या निश्चित एवैकान्ते तत्र प्रयोगाभ्युपगमात् । न चैवं सर्वस्यानेकान्तात्मकत्वमित्यभ्युपगमविरोधः । प्रमाणविषयापेक्षया सर्वस्य तदात्मकत्वाभ्युपगमात् । नयगोचरापेक्षया त्वेकान्तात्मकत्वस्यापि स्वीकारात् ।

'अनेकान्तोऽप्यनेकान्तः प्रमाणनयसाधनः ॥'

इत्यभिधानात् । यदपि निगदितमनेकान्तवादस्वीकारे 'मुक्तोऽपि न मुक्त एव' इत्यादि तदपि न चतुरस्रम् । द्विप्रकारो ह्यत्रानेकान्तोऽक्रमानेकान्तः क्रमानेकान्तश्च । तत्र ज्ञानसुखाद्यनेकाक्रमिधर्मापेक्षयाऽक्रमानेकान्तो युगपदप्येकत्रात्मनि तथाविधानेकधर्माणां समवात् । मुक्तेतराद्यनेकक्रमिधर्मापेक्षया तु क्रमानेकान्तः क्रमेणैव तादृग्धर्माणामुपपत्तेः । तथा च य एवात्मा पूर्वममुक्तः स एवोत्तरकाले मुक्त इति न किंचिद्विरुध्यते । एकरूपत्वे पुनरात्मनो बन्धमोक्षाभावः स्यात् । तद्धस्य हि मुक्तत्वम् । न च सर्वथैकरूपस्यावस्थाद्वययोगो युक्तः । विरोधात् । यद्वा स्वमुक्तत्वेनैव मुक्तत्वान्मुक्तान्तरमुक्तत्वे तदयोगान्मुक्तत्वामुक्तत्वयोरेकत्राविरोधः । स्वपरभावाभावोभयाधीनात्मकत्वात्सर्ववस्तूनाम् । अथवा सत्त्वचैतन्यसर्वगतत्वासत्त्वात् प्रदेशत्वादिभ्यो मुक्तामुक्तसाधारणत्वादमुक्तपर्यायेभ्यः कथंचिदव्यतिरिक्तत्वात्मकलङ्कक्षयाभिव्यक्तत्वपर्यायस्य स्यान्मुक्तः स्यादमुक्त इति न कश्चिद्दोषः । न च य एव सत्त्वादिपर्यायः स एव मुक्तत्वपर्यायः । प्रतीतिभेदात् । एकान्तैक्ये सत्त्वादेरेव मुक्तप्रसङ्गात् ।

अस्त्वेवमपि न कश्चिद्दोष इति चेत्। न देवदत्तादिषु संसारिषु सत्त्वादिभावेन मुक्तत्वप्रसंगात्। देवदत्तादिष्वन्य एव सत्त्वादिरिति चेत्। कस्तयोरन्यत्वे हेतुरिति वाच्यम्। मुक्तत्वामुक्तत्वे एवेति चेत्। तर्हि मुक्तत्वामुक्तत्वधर्मयोः सत्त्वभेदहेतुत्वेन सत्त्वाद्भिन्नत्वं सिद्धम्। सर्वथैकत्वे तु मुक्तत्वामुक्तत्वयोः सत्त्वमात्रत्वाविशेषाद्भेदाभावस्तथा च सत्यभिहित एव दोष इति सूक्ष्मधिया भावनीयमेतत्। एतेन 'संसार्यपि न सर्वथा संसारी' इत्याद्यपि प्रागुक्तं प्रत्युक्तम्। उक्तन्यायस्य तत्त्वतस्तुल्ययोगक्षेमत्वात्। तथा हि— अङ्गारमर्दकादेः[1] संसारिणः स्वस्वरूपेणैव संसारित्वं न संसार्यन्तररूपेण। अन्यथा तदभावप्रसंग इति। यच्च कीर्तितम् 'अनेकान्तवादिनो मानमपि न मानमेव' इत्यादि। तत्र सिद्धसाधनम्। विजातीयादिमानान्तरत्वेन विवक्षितमानस्यामानत्वात्। अन्यथा तदभावप्रसंगादितरेतररूपतापत्तेः। तथा हि— प्रत्यक्षं प्रत्यक्षमानत्वेन मानम्, अनुमानादिमानत्वेन पुनरमानम्। एवमनुमानाद्यपि, अन्यथा तस्य प्रतिनियतत्वाभावः। एवं तदाभासोऽपि कथंचिदेव तदाभासस्तस्याप्यनेकान्तात्मकत्वात्। विसंवादेन हि तदाभासत्वस्य व्याप्तिस्तत्र चास्याव्यभिचारेण मानलक्षणयोगः। विसंवादोऽपि हि ज्ञेयः स च तदाभासात्प्रतीयत एवेति कथं तदाभासस्यापि कथंचिन्न प्रमाणता। न च प्रमेयमिवापरिच्छित्त्यात्मकमेव तदाभासं तथा प्रतीत्यभावात्। एवं हेत्वाभासेऽप्यसिद्धादौ साध्यागमकत्वप्रतिबद्धतया तत्र हेतुत्वेऽन्यत्राहेतुत्वमित्यनेकान्तात्मकता तस्यापि सुप्रतीतैव। एवं च 'मुक्तो न मुक्त एव हि' इत्यादि कारिकायुग्ममपास्तम्। यदपि 'अनेकान्तात्मकत्वे वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसंगः' इत्यादि प्रत्यपादि तदपि स्याद्वादैदंपर्यापर्यालोचकत्वसूचकमेव। न हि विषमोदकादिविशेषानर्थान्तरं सर्वथैकस्वभावमेकं निरवयवं सामान्यमित्यभिदधति स्याद्वादिनः। किं तर्हि समानपरिणाम

१ 'अङ्गारमर्दक' इति देवदत्तादिवत् सञ्ज्ञाशब्दः।

इति । स च भेदाविनाभूतत्वात्तत्र एव विपाकभिन्न स एव मोदकादिभ्योऽपि । सर्वथा तदैक्ये समानतायोगात् । नन्वत्र समानपरिणामस्यापि प्रतिविशेषमन्यत्वात्तद्वारानुपपत्तिरिति चेदसत्यम् । सत्यप्यन्यत्वे समानासमानपरिणामयोर्भिन्नस्वभावत्वात् । तथा हि— समानबुद्धिजननिबन्धनस्वभावः समानपरिणामो विशिष्टबुद्ध्यभिधानजननस्वभावस्त्वितर इति यथोक्तसंवेदनाभिधानव्यवस्थया एव च विपाक्य इति प्रतीतम् । अन्यथा यथोक्तसंवेदनाद्यभावप्रसक्तिः । अतो यद्यपि द्वयमुभयरूपं तथापि विपार्थी विष एव प्रवर्तते । तद्विशेषपरिणामस्यैव तत्समानपरिणामविनाभूतत्वात् न तु मोदके तत्समानपरिणामाविनाभावाभावात्तद्विशेषस्य । अत प्रयासमात्रफला प्रवृत्तिनियमोच्छेदनोदनेति । एवं—

'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥'

इति केनचित् कुग्राहीयमतिना यदभिहितं तदपि प्रतिहतम् ।
इत्थं च—

तीर्थाभिप्रेततत्त्वं घनघनितमस्तोमरूपं समन्ता-
न्नीत्वा प्रत्यक्षधाम स्फुरदमलमिति स्फारस्मिप्रतानैः ।
सत्त्वानेकान्तभास्वानुदयमनुसृतस्तीर्थनाडथापहारी
कुर्वाणः कोविदानां हृदयसरसिजोज्जृम्भणं नित्यमस्तु॥६१०॥

अत्राह वृत्तिपिका —

वैशेषिकाभिमतपदार्थोपन्यासः ।

षट् हो अनेकान्तरहस्यवेदिन्,
समास्तु द्रागमुं विदुः ।
एवैते यस्मादिह षट्पदार्थाः
प्रयान्ति गोचरतां प्रमायाः ॥ ६११ ॥

तथा हि—अत्र द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः, न्यूनाधिकत्वप्रतिपादकप्रमाणाभावे सति षट्पदार्थव्यवस्थापक

प्रमाणविषयत्वात् । य एवं न एवम् । यथोभयाभिमता घटादयः षट् पदार्थास्तथा चामी तस्मात्तथा । एते च पदार्थाः सर्वथान्योन्यासंभविलक्षणलक्षितत्वेनैकान्ततः परस्परं भिन्नाः । तथा हि—द्रव्यलक्षणं तावद्गुणादिषु न संभवति । तद्धि द्रव्याभिसंबन्धो न चासौ गुणादिषु विद्यते । तत्र द्रव्यमिति प्रतीत्यभावादिति । 'पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांस्येव' एतल्लक्षणलक्षितानि । लक्षणं च सकलं केवलव्यतिरेक्यनुमानमामनन्ति मनीषिणः । साध्यं च तत्र समानासमानजातीयव्यवच्छेदः । तथा हि—द्रव्यस्य गुणकर्मणि समानजातीये सत्तासामान्यस्य द्रव्य इव तयोरपि भावात् । सामान्यविशेषसमवायास्त्वसमानजातीयाः । सत्तासामान्यस्य तेष्वभावात् । द्रव्यत्वादिसंबन्धेन च तेभ्यः समानासमानजातीयेभ्यो व्यवच्छेदः साध्यते । अथ वा द्रव्यस्य गुणकर्मसामान्यविशेषसमवायाः समानजातीयाः, वस्तुत्वात् । अभावस्तु असमानजातीयः । तद्विपरीतत्वात् । एवं सर्वत्रापि यथासंभवं भावनीयम् । यदाहोद्योतकरः—'समानासमानजातीयव्यवच्छेदो लक्षणार्थः' इति । तदिह यो नाम द्रव्यं स्वीकरोति किंतु नागुणादिभ्यो भेदेनावधारयितुं शक्नोति तं प्रति तस्य स्वपरजातीयव्यावृत्तस्वरूपप्रतिपादनार्थमसाधारणो धर्मः कथ्यते द्रव्यत्वाभिसंबन्धाद्द्रव्यमिति । द्रव्यत्वाभिसंबन्धश्च द्रव्यत्वसामान्योपलक्षितः समवायः । न चैवंरूपो द्रव्यत्वाभिसंबन्धो गुणादिषु विद्यत इति । प्रयोगश्च—द्रव्यम् , इतरेभ्यो भिद्यते, द्रव्यत्वादिसंबन्धवत्त्वात् । यत्तु नैवं न तदेवम् । यथा गुणादयः । न तत्तस्मादितरेभ्यो भिद्यते । व्यवहारो वात्र साध्यः । यो हि स्वरूपतो द्रव्यं जानन्नपि कुतश्चिद्व्यामोहाद्द्रव्यमिति न व्यवहरति तं प्रति विपर्ययपरिहाराव्यभिचारेण व्यवहारसाधनार्थमसाधारणो धर्मः कथ्यते । द्रव्यत्वाभिसंबन्धाद्द्रव्यमिति प्रयुज्यते च । विवादास्पदी-

१ प्र. पा. भा. पृ. ३ प. २ ।

मूत वस्तु द्रव्यमिति व्यवहृतव्य तत एव यत्तु न द्रव्यमिति व्यवह्रियते न तत्तथा यथा गुणो न च न तथैतत्तस्मात्तथेति । क्रियावद्गुणवत्समवायिकारणत्व वा द्रव्यस्य लक्षणम् । यदाह कणाद — क्रियावत् गुणवत्समवायिकारणत्व वा द्रव्यस्य लक्षणम्'। अत्राप्यनुमाने पूर्ववत्कार्य एव लक्षणोपेत च । द्रव्य, नवैव, न्यूनाधिकत्वप्रतिपादकप्रमाणाभावे परस्परव्यावृत्तनवलक्षणयोगित्वात्, यन्नैव तदेवम् । उभयाभिमततत्त्वनिर्धारि (?) पदार्थवत् । तथा चेद तस्मात्तथा । तथापि च पृथिव्यप्तेजोवायुरूपस्य तावल्लक्षण पृथिवीत्वाभिसम्बन्धात्पृथिवीत्यादिपूर्ववद्व्यतिरेक्यनुमानरूपमवसेयम । द्विविध चैतत्पृथिव्यादि नित्यानित्यभेदात् । तत्र परमाणुरूप नित्य, सत्कारणवत्त्वात् । द्व्यणुकाद्यवयविरूप त्वनित्यम्, उत्पत्तिमत्त्वात् । आकाशकालदिशा त्वेकैकत्वादवान्तरभूतापरसामान्याभावेऽपि पारिभाषिक्यस्तिस्र सज्ञा एव लक्षणम् । यस्या सज्ञाया विना निमित्तेन शब्दमात्रक्रिया सङ्केत सा पारिभाषिकी । यथाय देवदत्त इति । यस्या पुनर्निमित्तमादाय सङ्केत सा नैमित्तिकी यथा गौरिति । व्यतिरेक्यनुमान च भेदव्यवहारापेक्षयात्र लक्षणीयम् । आकाशकालदिग्, इतरेभ्यो भिद्यन्ते । विवादास्पदीभूत वा द्रव्य, आकाश कालो दिगिति व्यवहर्तव्यम, अनादिकालप्रवाहायाताकाशादिशब्दवाच्यत्वात यन्नैव न तन्नैवम् । यथा रूपादि। न च न तथेद तस्मात्तथेति । आत्ममनसोरप्यात्मत्वमनस्त्वाभिसम्बन्धो लक्षणम् । अत्रोत्तरत्र च व्यतिरेक्यनुमान पूर्ववद्विरचनीयम् । एतानि चाकाशादीन्येकान्तेन नित्यानि निरशानि मनोवर्ज्यानि व्यापकानि । मनस्तु अणुपरिमाणम् । एव गुणत्वाभिसम्बन्धेन

१ क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणम् । १।१।१५ इति कणादसूत्रे वैशेषिकसूत्रोपस्कारे । २ पदादि इति पुस्तकान्तरे ।

द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इत्यनेन वा लक्षणेन लक्षिता रूपादयश्चतुर्विंशतिर्गुणा नित्याश्चानित्याश्च । कर्मत्वाभिसंबन्धेनैकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमित्यनेन वा लक्षणेन लक्षितमुत्क्षेपणादि पञ्चविधं कर्मानित्यमेव । 'अनुवृत्तप्रत्ययकारणत्वलक्षणं सामान्यं द्विविधं परमपरं च नित्यमेव' । 'नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः' । इति लक्षणोपेता विशेषा अनन्ता नित्या एव । 'अयुतसिद्धानामाधार्याधारभूतानामिहेति प्रत्ययहेतुर्यः संबन्धः स समवायः' इति । लक्षणस्तु समवाय एको नित्य एव ।

इत्थं प्रमाणतः सेयं षट्पदार्थी व्यवस्थिता ।
प्रमाणगोचरा सैव तस्मादस्तु विपश्चितः ॥ ६१२ ॥

एतां प्रमाणविमुखीमतिजर्जरां च
वैशेषिकास्त्यजथ किं न पदार्थकन्थाम् ।
एषा हि नः स्फुरदनुत्तरजाड्यजात-
पीडाविडम्बनपटुर्भवतां भवित्री ॥ ६१३ ॥

आसेवध्वमहो तस्मात्तदाडम्बरखण्डनम् ।
सत्यमेकमनेकान्तं पावकं त्रिजगत्यपि ॥ ६१४ ॥

तथा हि—यत्तावदुक्तं 'द्रव्यगुणकर्मसामान्यविशेषसमवायाख्याः षडेव पदार्थाः' इति तन्न तथ्यम् । तत्र षट्त्वनियमस्य विचार्यमाणस्यानुपपत्तेः । यदि हि द्रव्यं गुणः कर्म सामान्यं विशेषाश्च परस्परं समवायाच्च भिद्यमानानि प्रत्येकमेककान्येव समवायवदभ्युपगम्येरंस्तदा द्रव्यादयः षट् पदार्थाः सिध्येयुः । न चैव तेषां नवादिसंख्योपेतत्वेन स्वीकारादिति कथं षट्पदार्थव्यवस्थितिः । अथ यद्यपि

१ द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् । क. सू. १।१।१६. २ एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् । क. सू. १।१।१७. ३ एतदर्थकं वाक्यं प्रशस्तपादभाष्ये पृ. ४.:४ प्र. पा. भा. पृ. ४. ५ प्र. पा भा. पृ. ५ पं. १

पृथिव्यादीनि द्रव्याणि तावन्नवसङ्ख्यानि तथाप्येतेष्वेकं लक्षणमस्त्येवेति चेत् । तत्किमिदानीं द्रव्यलक्षणमेव द्रव्यपदार्थोऽस्तु न पृथिव्यादीनि । न चैतद्युक्तम् । लक्ष्यभूतानां तेषामभावे लक्षणस्य द्रव्यत्वादेरसंभवात् । तस्य तद्द्रव्यपदार्थत्वे सत्यामप्येकताया न द्रव्यपदार्थ एकः सिध्यति । न खल्वन्येन पायसभक्षणेऽन्यस्य क्षुदुपशमः । अथ लक्षणस्य लक्ष्येष्वभिसम्बन्धात्तदैक्ये लक्ष्यमप्येकं युक्तमेवेति चेत् । न नाम युक्तम् । यतस्तत्कथंचिदविष्वग्भावेन तत्राभिसम्बध्येत समवायादिना वा । नाद्यः पक्षः । परमतप्रवेशात् । द्वितीये तु नोपचारमन्तरेण तस्यैक्यं प्रयुज्यते । पुरुषस्येव यष्टित्वम् । यथा हि पुरुषे यष्टियोगिन्यपि नोपचारमन्तरेण यष्टित्वं तथा पृथिव्यादावपि स्वयमनेकस्मिन्सत्यप्येकलक्षणसम्बन्धेनोपचारमन्तरेणैक्यं युज्यत इति । नन्वेवं भवतामपि प्रमाणादिष्वैक्यमुपचरितमेव स्यात् । प्रत्यक्षपरोक्षादिभेदेषु स्वपरव्यवसायित्वादिलक्षणगतैक्यस्योपचरितत्वात् । नैतद्वक्तव्यम् । स्वपरव्यवसायित्वादिलक्षणादेकस्मात्प्रत्यक्षपरोक्षादिप्रकाराणां कथंचिदव्यतिरेकात्कथंचिदैक्यस्य तात्त्विकस्य प्रसिद्धेः । न चैवं पृथिव्यादिष्वैक्यमभावो द्रव्यलक्षणस्य तेभ्योऽत्यन्तं त्वया भेदाभ्युपगमात् । कथं चैवं सामान्यपदार्थो विशेषपदार्थश्चैकः सिध्येत् , परापरसामान्ययोर्विशेषाणां च सामान्यादिनैकेन लक्षणेनाभिसम्बन्धायोगादिति समवाय एवैकः पदार्थः स्यात् । यदि पुनरिहेदमिति प्रत्ययाविशेषादेकः समवायस्तथा द्रव्यादिरयमिति प्रत्ययाविशेषाद्द्रव्यादिरप्येक एव पदार्थ इत्यभिधीयते । तदापि वैशेषिकतन्त्रव्याघातो दुःशकः परिहर्तुम् । स्याद्वादिमतस्यैव प्रसिद्धेः । स्याद्वादिना हि शुद्धसंग्रहनयात्सत्प्रत्ययाविशेषादेकं सन्मात्रं तत्त्वं शुद्धद्रव्यमिति मतम् । तथैवाशुद्धसंग्रहनयादेकं द्रव्यमेको गुणादिरिति । व्यवहारनयात्तु यत् सत् तद्द्रव्यं पर्यायो वेति भेदः । यद्द्रव्यं तज्जीवद्रव्यमजीवद्रव्यं च । यः पर्यायः सोऽपरिस्पन्दात्मकः परिस्पन्दात्मकश्चेति । सोऽपि

सामान्यात्मको विशेषात्मकश्चेति । सोऽपि द्रव्यादविष्वग्भूतो विष्वग्भूतश्चेति यथाप्रतीति निश्चीयते सर्वदा बाधकाभावात् । वैशेषिकाणां तु तथाभ्युपगमो व्याहत एव । तन्त्रविरोधात् । न हि तत्तन्त्रे सन्मात्रमेव तत्त्वं सकलपदार्थाना तत्रैवान्तर्भावादिति नयोऽस्ति । स्यान्मतं, द्रव्यपदेन सकलद्रव्यव्यक्तिभेदप्रभेदाना संग्रहादेको द्रव्यपदार्थः । गुण इत्यादिपदेन चैकैकगुणादिभेदप्रभेदसंग्रहाद्गुणादिरप्येकैकः पदार्थो व्यवतिष्ठते । तथा च—

‘ विस्तरेणोपदिष्टानामर्थानां तत्त्वसिद्धये ।
समासेनाभिधानं यत्संग्रहं तं विदुर्बुधाः ॥

इति पदार्थधर्मसंग्रहः प्रवक्ष्यते इत्यत्र पदार्थसंग्रहस्य धर्मसंग्रहस्य चैवं वैशेषिकव्याख्यानादिति । तदप्यविचारितरम्यम् । परमार्थतस्त्वेकैकस्य द्रव्यादिपदार्थस्य प्रतिष्ठानुपपत्तेस्तस्यैकपदविषयत्वेनैकत्वोपचारात् । न चोपचरितपदार्थसंख्याव्यवस्थाया पारमार्थिकी पदार्थसंख्या समवतिष्ठते । अतिप्रसंगात् । अथ नात्रैकपदविषयत्वेनैकत्वोपचारो वाच्यः । यतोऽयमत्रापि प्रायोऽस्माकं द्रव्यमित्येकः पदार्थः, एकपदवाच्यत्वात् । यद्यदेकपदवाच्यं तत्तदेकः पदार्थः । यथा संप्रतिपन्नः कश्चित् । तथा च द्रव्यम्, एकपदवाच्यम् । तस्मादेकः पदार्थः । एव गुणादिष्वपि वाच्यम् । एतदपि न वाच्यम् । व्यभिचारात् । सेनावनादिपदे हस्त्यादिधवादिपदार्थस्यानेकस्य वाच्यस्य सद्भावात् । ननु सेनापदे वाच्य एक एवार्थः प्रत्यासत्तिविशेषः संयुक्तसंयोगाल्पीयस्त्वलक्षणो हस्त्यादीनामस्ति वनशब्दे च धवादीनामिति न व्यभिचार इति चेत् । न । सेनाशब्दादनेकत्र हस्त्याद्यर्थे प्रतीतिप्रवृत्तिप्राप्तिप्रसिद्धेर्वनशब्दाच्च धवखदिरपलाशादावनेकत्रार्थे । यत्र हि शब्दात्प्रतीतिप्रवृत्तिप्राप्तयः समधिगम्यन्ते स शब्दस्यार्थः

---

1 ‘ प्रणम्य हेतुमीश्वर मुनिं कणादमन्वत’ । पदार्थधर्मसग्रह. प्रवक्ष्यते महोदयः ॥ ’ इति प्रशस्तपादभाष्ये मङ्गलश्लोकः ।

सिद्धस्तथा वृद्धव्यवहारात् । न च सेनावनादिशब्दात्प्रत्यासत्तिविशेषप्रतीतिप्रवृत्तिप्राप्तयोऽनुभूयन्ते येन स तस्यार्थः स्यात् । प्रत्यासत्तिविशिष्टा हस्त्यादयो धवादयश्च सेनावनादिशब्दानामर्थ इति चेत् । सिद्धस्तर्हि एकपदवाच्योऽनेकार्थस्तेन कथमेकपदवाच्यत्वं न व्यभिचरेत् । न च प्रत्यासत्तिरप्येका हस्त्यादिषु काचिदस्ति । संयुक्तसंयोगानामनेकेषां तत्र भवद्भिरभ्युपगमात् । न च तद्वर्तीयस्त्वमेकमस्तीति वाच्यम् । तद्धि संख्याविशेषरूपं संयुक्तसंयोगेषु कथं युज्यते । निर्गुणत्वाद्गुणानाम् । गौरिति पदेनैकेन पश्वादेरनेकस्य वाच्यस्य दर्शनादपि व्यभिचारी हेतुः । कश्चिदाह—'न गौरित्येकमेव पदं पश्वादेरनेकस्यार्थस्य वाचकं तस्य प्रतिवाच्यं भेदात् । अन्य एव हि गौरिति शब्दः पशोर्वाचकोऽन्यश्च दिगादेः । अर्थभेदाच्छब्दभेदव्यवस्थितेः । अन्यथा सकलपदार्थस्यैकपदवाच्यत्वप्रसङ्गात्' इति तस्याप्यनिष्टानुषङ्गः स्यात् । द्रव्यमिति पदस्याप्यनेकत्वप्रसङ्गात् । पृथिव्याद्यनेकार्थवाचकत्वात् । अन्यदेव हि पृथिव्यां द्रव्यमिति पदं प्रवर्तते, अन्यदेव च जलादिषु । इत्येकपदवाच्यत्वं द्रव्यपदार्थस्यासिद्धं स्यात् । ननु द्रव्यत्वाभिसंबन्ध एको द्रव्यपदस्यार्थो नानेकः पृथिव्यादिः । तस्य पृथिव्यादिशब्दवाच्यत्वात् । तत एकमेव द्रव्यपदं नानेकमिति चेत् । तर्हि किमिदानीं द्रव्यत्वाभिसंबन्धो द्रव्यपदार्थः स्यात् । न चैतद्युक्तम् । तस्य द्रव्यत्वोपलक्षितसमवायपदार्थत्वात् । एतेन गुणत्वकर्मत्वाभिसंबन्धो गुणकर्मपदयोरर्थ इत्येतदप्यपाकृतम् । गुणत्वकर्मत्वाभिसंबन्धस्य गुणत्वकर्मत्वोपलक्षितसमवायपदार्थत्वात् । न चैवं सामान्यविशेषौ पदार्थौ सिध्यतः । सामान्ययोर्विशेषेषु च सामान्याभिसंबन्धस्यासत्त्वात्स्वयुक्तं प्राक् । ततो न द्रव्यगुणकर्मसामान्यविशेषसमवायाः षडेव पदार्था इति पक्षः क्षेमकरः । हेतावपि न्यूनाधिकत्व-

---

१ 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इति कोशात् गोशब्दः पशुवाचकस्यापि दिग्स्वर्गादेः वाचकः ।

प्रतिपादकप्रमाणाभावे सतीति विशेषणमसिद्धम् । यतो न न्यूनत्वग्राहकप्रमाणाभावः सिद्धः । सामान्यविशेषमात्रग्राहकस्यैव प्रमाणस्य प्रागुक्तस्य तद्ग्राहिणः सद्भावात् । तत्र यदेतत्परापरभेदं सामान्यं यच्च नवप्रकारं द्रव्यमुच्यते तत्तिर्यगूर्ध्वताभिख्यसामान्यप्रकारद्वयस्यैवान्तर्भिन्नम् । गुणादिकं तु समग्रं गुणपर्याययोर्विशेषयोरन्यतरदेवेति नातोऽन्यद्भवितुमर्हति । न चान्यलक्षणलक्षितौ सामान्यविशेषौ संगच्छेते । यतो द्रव्यादीनां ततो भिन्नलक्षणलक्षितत्वेन तत्र नान्तर्भूतौ भवेताम् । सामान्यविशेषयोरनन्तरमेव निराकरिष्यमाणत्वात्, इत्यसिद्धो न्यूनत्वग्राहकप्रमाणाभावः । एवमधिकत्वग्राहकप्रमाणाभावोऽपि षट्पदार्थाधिकाभावप्रतिपादकस्य प्रत्यक्षादिप्रमाणस्य सद्भावात् । नायं पदार्थ इति चेत्, कुत एतत् । किमयं पदस्यार्थो न भवति । यद्वास्य तत्त्वज्ञानं न निःश्रेयसहेतुः । अथ वा नायं विधिस्वरूपः । किं वा भावपरतन्त्रः । उत कणभुजा न भणित इति । नाद्यः पक्षः । भावपदार्थत्वेनास्य व्यवस्थितत्वात् । यथा द्रव्यादिपदानां द्रव्यादयः । नापि द्वितीय. । यतोऽपदार्जितैनसा प्रध्वंसाभावस्तेषामेव निर्वर्तकस्य प्रकृष्टपुण्यस्य प्रागभावः पृथिव्यादिभ्यश्चात्मनः स्वरूपपरिहारः परिज्ञातो भवति । तदा प्रेक्षाकारी निःश्रेयसाय यतत इति सुतरामेतत्तत्त्वज्ञानं निःश्रेयसोपयोगि । नापि तृतीयः । यतो नेयं परिभाषावयोः प्रतिपन्नास्ति यद्विधेरूपेणैव पदार्थेन भवितव्यमिति । नाप्येतदर्थे विप्रतिपन्नं परं प्रति प्रमाणमेव । अन्यथा प्रतिषेधरूप एव पदार्थ इत्यपि ब्रुवाणः कश्चिद्वावदूको दुःप्रतिषेधः स्यात् । नापि चतुर्थः । यतः किमिदं पारतन्त्र्यं नाम । किं भावाश्रितत्वं भावनिरूपणाधीननिरूपणत्वं वा । आद्यकल्पनायामाश्रितत्वं किं समवेतत्वं, संयोगिविशेषत्वं, विशेषणीभूतत्वं वा । प्रथमपक्षद्वयेऽसिद्धता । अभावस्य द्रव्याद्यन्यतरत्वाभावेन समवायसंयोगयोरसंभवात् । संभवेऽपि चाव्यभिचारित्वमनित्यद्रव्यगुणकर्मसामान्य-

विशेषाणा भावाश्रितत्वेऽपि पदार्थत्वानपायात् । विशेषणीभूतत्वमपि समवायेन व्यभिचारि, तस्य समवायिविशेषणस्यापि पदार्थत्वात् । अथ भावनिरूपणाधीननिरूपणत्व भावपारतन्त्र्यम् । तथा हि—नाप्रसिद्धभावसद्भावस्य नालिकेरद्वीपनिवासिनस्तदभावप्रतीतिरिति भावपरिज्ञानापेक्षितत्वादभावस्य न पदार्थत्वमिति । तदपि न पेशलम् । एवं सत्यनित्यद्रव्यस्याप्यपदार्थत्वापत्ति । न खल्वनित्यद्रव्यमवयवनिरूपणमन्तरेण निरूपयितु पार्यते । भूयोऽत्र

रेककालत्वात्तु तस्योऽसति द्रव्यत्वाभिसबन्ध इति चेत् । अस्मादेव त्वदुक्तहेतोरेककालत्वात् । सच्चासच्च यत्खलु सद्वस्तु । न चासौ द्रव्यत्वाभिसबन्धात्प्रागस्य सममुत्पदानीमेव भवनात् । एव च द्रव्यमितरेभ्यो भिद्यते द्रव्यत्वाभिसबन्धत्वादित्यत्र हेतु स्वरूपासिद्ध ।

किं चाभिव्यज्यते जाति सस्थानाद्येन केनचित् ।
गोत्व लाङ्गूलशृङ्गादिसंस्थानवशतो यथा ॥ ६१५ ॥
यथा वा तद्वयोस्तुल्यरूपयोर्घृततैलयो ।
घृतत्वतैलत्वे तादृग्गन्धेनोल्लसता भृशम् ॥ ६१६ ॥
न चापि व्यञ्जक किंचिद्द्रव्यत्वप्रतिपत्तये ।
कणभक्षमुनेर्दीक्षामाश्रिता वक्तुमीश्वरा ॥ ६१७ ॥

क्रियावत्त्वगुणवत्त्वसमवायिकारणत्वमस्त्येव तद्व्यञ्जकमिति चेत् । प्रत्येकं समुदित यथासभव वा तत्तया स्यात् । नाद्य पक्ष । यतो नान्तरिक्षादौ क्रियावत्त्व समस्ति । नापि सद्य समुत्पन्नेषु पटादिषु गुणवत्त्वमस्ति । लब्धात्मलाभो ह्यवयवी द्वितीयक्षणे गुणोत्पत्तौ समवायिकारण भवतीति भवद्भिरेवेष्टम् । तथा च योगिनां तत्र द्रव्यबुद्धिर्न स्यात् । नापि समवायिकारणत्व सर्वदैव वस्तुषु विद्यते । यदैव कार्यमुत्पद्यते तदैवास्य भावात् । ततो न प्रत्येकमेतद्द्रव्यत्वस्य व्यञ्जकम् । नापि समुदितम् । सद्य समुत्पन्नेषु पटादिषु त्रितयस्याप्य-

स्यासंभवात् । व्योमादौ तु क्रियावत्त्वस्य सर्वथैवाभावाच्च । यथा सभवमिति पक्षोऽपि सद्यः समुत्पन्नपटादिष्वस्याभावादेव परास्त इ न द्रव्यत्वस्याभिव्यञ्जकं किंचिदस्ति । भवदुक्तौ च सामान्यसमवाये पुरः पराकरिष्येते इत्यतोऽपि स्वरूपासिद्धं द्रव्यत्वाभिसंबन्धल साधनम् । किं च, अस्य केवलव्यतिरेकिणो हेतोः केवलव्यतिरे कित्वमेव गमकत्वे कारणमन्तर्व्याप्तिर्द्वयमपि वा प्रोच्यते । नाद्य पक्ष. । सर्वं, सात्मकम्, सत्त्वात् । यन्नैवं न तदेवम् । यथा गगनेन्दी वरम् । इत्यादेरपि गमकत्वप्रसक्तेः । अथात्र पक्षस्यैकत्र देशे सिद्ध साधनम् । अन्यत्र पुनरनुमानबाधा । कुम्भस्तम्भाम्भोल्हादौ तथा विधपरिस्पन्दप्राणादेरात्मकार्यस्य व्यापकस्य योग्यस्याप्यनुपलब्धेः । च न कार्यं क्वचन व्यापकं भवति । कार्यमन्तरेणापि कारणसद्भावात् न ह्यवश्य कारणानि कार्यवन्ति भवन्तीति वक्तव्यम् । लैङ्गिकवेद्यस वस्तुनो योग्यलिङ्गोपलम्भस्यैव व्यापकत्वात्तदनुपलम्भेनैव च तस्या सत्त्वावधारणात् । यथा स्तनजघनजङ्घाजानुपादादिप्रतीकेषु गन्धानु पलम्भेन प्राणादेरिति चेत् । एवमेतत् । इह न कोऽपि प्रतीपवाकोऽ कोविद. समस्ति सर्वथा । किंतु केवलविपक्षानास्तितानिश्चितं गमकत्वकारणम् । यत एव हि तत्र साध्यं वाच्यतेऽत एव न केव लव्यतिरेकित्वं गमकत्वे कारणम् । यदि तु स्यात्तदा बलात्साध्यमप येत् । अथान्तर्व्याप्तिरत्र गमिकेष्यते । नन्वसाविह नास्त्येव, विप बाधकप्रमाणाभावात् । द्रव्यस्यापि गुणाद्यात्मकत्वप्रसंगो विप बाधकमस्तीति चेत् । नैवम् । इष्टत्वाद्गुणपर्यायात्मकत्वाद्द्रव्यस्य यथा चैतदेवं तथा प्रत्यातिष्ठिपाम प्राक् । एतेन द्रयपक्षोऽपि व्य पास्त. । ततो नेदमनुमानमुदात्तम् । एवं व्यवहारानुमाने पृथिवीत्वा भिसबन्धात्पृथिवीत्वाद्यनुमानेऽपि दूषणं भाषणीयम् । ततो न द्रव्य त्वाभिसबन्धो द्रव्यलक्षणमक्षुण्णम् । नापि क्रियावदित्यादि । क्रिय

1 ‘ अङ्ग प्रतीकोऽवयव ’ इत्यमरः ।

संबद्धं हि वस्तु क्रियावदित्युच्यते । न च द्रव्यादन्यत्क्रियावदस्ति यद्व्यवच्छेदाय शेषविशेषणं क्रियेत । यत्पुनरात्रेय प्रोचिवान्— ' न क्रियात्वे प्रसङ्गात् । क्रियात्वमपि क्रियावद्भवति क्रियाधारत्वात् । न च तद् द्रव्यमिति तद्व्यवच्छेदार्थं गुणवदिति । न च स्वल्वाधार एवाधेयेन तद्वान् भवत्याधेयमप्याधारेण तद् व्यपदिश्यते ' इत्यादि । तत्रायं वर्षीयान्विप्रपुङ्गवोऽनन्तरमेव स्वयमुक्तं नाप्यनुसन्धातीति किं ब्रूमः । कर्म उत्क्षेपणादि यस्मिन्समवायेन वर्तते तत्क्रियावदिति हि तत्रादावनेन विवृतं । न च क्रियात्वे क्रिया समवायेन वर्तते विपर्ययसद्भावात् । अथ क्रियावदिति क्रियासम्बद्धतामात्रमुच्यते । तच्च क्रियात्वेऽप्यस्तीति युक्तं तद्व्यवच्छित्तये गुणवत्त्वविशेषणमिति चेत् । न । एवमपि तद्व्यवच्छेदासिद्धेः । गुणैरपि क्रियात्वस्य सम्बद्धत्वाद्गुणवत्त्वोपपत्तेः । कोऽत्र सम्बन्ध इति चेत् । सर्वत्र शिंशपात्वं वृक्षत्ववदित्यादौ वृक्षत्वस्य शिंशपात्वसम्बद्धत्वेनाभिधीयमानस्य क इति वाच्यम् । एकार्थसमवाय इति चेत् । अत्रापि परम्परैकार्थसमवाय इति प्रतीहि । एकत्रैव द्रव्ये सामान्यगुणानां क्रियासमवायद्वारेण तु क्रियात्वस्य च वृत्तेः । गम्यगमकभावः शिंशपात्ववृक्षत्वयोः सम्बन्ध इति चेदत्रापि स एवास्तु । गुणवत्त्वाविनाभावित्वेन क्रियावत्त्वस्य गमकत्वात् । इतरस्य तु गम्यत्वात् । अथास्तु यत्र समवायेन क्रिया वर्तते । तदेव क्रियावत् । तथापीदमव्यापकं व्यापकद्रव्येषु क्रियावत्त्वासम्भवात्, इति तत्प्रसङ्गार्थमुक्तं गुणवदिति । तदस्मिन्नेवास्तु कृतमितरेण । अथैवं गुणत्वेऽपि प्रसङ्गः । गुणत्वमपि हि गुणवद्भवति । गुणाधारत्वात् । न च तद्द्रव्यमिति तद्व्यवच्छेदार्थं क्रियावदिति । तदपि न सुसूत्रमात्रेयेणाभाणि । गुणा आश्रयन्ते यस्मिन्समवायेन वर्तन्ते तद्गुणवदित्यादौ स्वयमेव व्याख्यानात् । गुणसम्बद्धतामात्रे तु गुणवत्त्वे व्याख्यायमाने क्रियावत्त्वविशेषणोपादानेऽपि न गुणत्वव्यवच्छेदः । प्रागुक्तनीत्या सम्बन्धमात्रस्य

गुणवत्त्वेऽपि क्रियया सह संभवात् । अथ विशेषणोभयेऽप्याधाराधेयभूतयोर्वस्तुनोर्यः समवायः स एव संबन्धो विवक्ष्यते । न तु परम्परैकार्थसमवायादिरपीत्युपपन्नमेवेदं द्वयमपीति चेत् । तर्हीदमेव भवतु पर्याप्तं तृतीयेन । अथैवमपि सत्ताया प्रसंगः । सत्ता हि क्रियागुणयोर्भावात्क्रियावती गुणवती न च सा द्रव्यमिति । तद्व्यवच्छेदार्थं समवायिकारणमिति । भवतु तर्हीदमेव किमपराभ्याम् । न हि द्रव्यादन्यत्समवायिकारणं किंचिदुपेयिवान् । यद्व्यवच्छेदमिच्छेः । यत्तूच्यते समवायिकारणमित्यस्मादेव स्वजात्यवधारणे परजातिव्यवच्छेदे च ।सिद्धे क्रियावद्गुणवदिति वचनं सपक्षैकदेशवृत्तिसपक्षव्यापकयोरन्वयिनोरवरोधार्थम् । कथं, द्रव्यं वायुः, क्रियावत्त्वाद्गुणवत्त्वात्, आकाशवदिति । तत्र पूर्वसपक्षैकदेशवृत्तिरुत्तरः सपक्षव्यापकः । कथं द्रव्यत्वे साध्ये द्रव्यमात्रं सपक्षो न च सर्वद्रव्येषु क्रियावत्त्वं वर्तत इति सपक्षैकदेशवृत्तिगुणवत्त्वं तु सर्वद्रव्यवृत्तित्वात्सपक्षव्यापकं भवतीति ।

त्वया सोऽयमुपक्रान्तः प्रकारः प्रपलायने ।
त्रपापात्रत्वमात्रेय स्वस्य स्वीकृत्य सर्वथा ॥ ६१८ ॥
क्षणोऽयं लक्षणस्यैव लक्षणानुगुणं ततः ।
लक्ष्यलक्षणदक्षस्य जल्पितुं तत्र युज्यते ॥ ६१९ ॥
सहान्वयौ सपक्षस्य व्याप्यव्यापकौ मतौ ।
द्रव्यसिद्धाविमौ हेतू केदमत्रोपयुज्यते ॥ ६२० ॥

किं चोचे .... .... .... .... .... .... ....
चेत्तदेतदन्यत्रापि समानम् । न हि सकलार्थगतिस्थितयोऽपि सकृद्भाविन्यो धर्माधर्मलक्षणसाधारणनिमित्तमन्तरेणोपपद्यन्ते । शंकर एवासां साधारण निमित्तमस्त्वित्यप्ययुक्तम् । तस्य पूर्वं निरस्तत्वात् । तर्हि वसुधैव साधारणं निमित्तमस्तु । तत्र सकलार्थगतिस्थितीनां

१ छन्दोभङ्गो दृश्यते । व्याप्यव्यापकसंमताविति स्यात् ।

समवादित्यप्यसगतम् । गगनवर्तिपदार्थगतिस्थितीना तदसभनात् । तर्हि नभ साधारण निमित्तमासामस्तु । सर्वत्र तत्सभवात् । इत्यप्यपेशलम् । तस्यावगाहनिमित्तत्वप्रतिपादनात् । तस्यैकस्यैवानेककार्यनिमित्तत्वायामनेकसर्वगतपदार्थपरिकल्पनानर्थक्यप्रसक्तिः । कालात्मदिक्सामान्यसमवायकार्यस्यापि यौगपद्यादिप्रत्ययस्य क्षुधादेरिदमत पूर्वेणेत्यादिप्रतीतेरन्वयव्यतिरेकाभ्यामिदमिति सर्वस्य च नभोनिमित्तत्वोपपत्तेस्तस्य सर्वत्र सर्वदा सद्भावात् । कार्यविशेषात्कालादिनिमित्तभेदव्यवस्थाया तत एव धर्मादिनिमित्तभेदव्यवस्थाप्यस्तु । विशेषाभावात् । एतेनादृष्टनिमित्तत्वमप्यासा प्रत्याख्यातम् । पुद्गलानामदृष्टासभवाच्च । ये यत्रोपभोग्या पुद्गलास्तद्गतिस्थितयस्तदात्मादृष्टनिमित्ताश्चेत्तर्हि, असाधारण निमित्तमदृष्ट तासाम् । प्रतिनियतात्मादृष्टस्य प्रतिनियतद्रव्यगतिस्थितिहेतुत्वप्रसिद्धे । न च तदनिष्टम् । भूम्यादिवत्तदसाधारणकारणस्यादृष्टस्यापीष्टत्वात् । साधारण तु कारण तासा धर्माधर्मावेवेति सिद्ध कार्यविशेषात्तयो सद्भाव ।

एत च वैशेषिक दु स्थ ण्प द्रव्येष्वनाधिक्यमनोरथस्ते ।
धर्मेऽप्यधर्मेऽप्यथवा विपक्षे किं नाम कुर्वन्तु मनोरथौघा ॥ ६२१ ॥
प्रौढप्रमाणप्रतिपन्नरूप तम प्रसूत्यन्ति तथा ततोऽन्यत् ।
ततोऽपि च त्वत्समुपात्तहेतौ विपक्षणासिद्धिरिहोभयस्मिन् ॥ ६२२ ॥

ननु द्वेपस्तु पितस्वान्तस्य तवायमुल्लाप । न हि तमो नाम द्रव्यान्तरमस्ति भासामभावस्य तमस्त्वात् । तथा च प्रयोग । अभावरूप तमो द्रव्यगुणकर्मातिरिक्तकार्यत्वात् । यन्नैव तन्नैवम् । यथा कुम्भप्रध्वसस्तथा चैतत्तस्मात्तथा । एव छायापि । ननु यदि छायाया द्रव्यान्तरता नापेयेत तदा तस्या छत्रादिरूपान्तरभूताया भास्वरूपतया प्रतीतिर्न स्यात् । अस्ति चासौ । ततो वीनादक्षुस्मत्तस्मादसौ द्रव्यान्तर सिद्धा । तदसदद्यम् । आलोकाभावरूपतयास्या द्रव्यान्तरत्वाभावेऽपि विभ्रमवशाद्यथा प्रतीतेरुपपत्ते । तथा हि—येन येन प्रदेशेना

प्रतीतिप्रसंगात् । नाप्यत्यन्ताभावः । आलोकस्य स्वकारणकलापोपनिपातकाले समुत्पद्यमानत्वात् । यदि ह्यालोकस्यात्यन्ताभावस्तमः स्यात्तदास्य व्योमकुसुमसमत्वमिति निमग्नमेतत्त्रिभुवनमनाद्यनन्तेऽन्धतमसे । एवं च नाभावरूपं तमः प्रागभावाद्यस्वभावत्वाद्व्योमवदित्यमुनाप्यनुमानेन बाधितः पक्षः[1] । तमो भावरूपम्, उत्पत्तिमत्त्वे सति, अनित्यत्वाद्घटवदित्यनुमानेनापि प्रकृतानुमानपक्षबाधा निरोद्धुमशक्या । प्रागभावेन व्यभिचारनिरासार्थमुत्पत्तिमत्त्वे सतीति कृतम् । प्रध्वंसेनानैकान्तिकत्वं मा भूदित्यनित्यत्वादित्युपात्तः । यच्च शंकरन्यायभूषणकारावाचक्षाते– ' यो हि भावो यावत्या सामग्र्या गृह्यते तदभावोऽपि तावत्यैवेत्यालोकग्रहणसामग्र्या गृह्यमाणं तमस्तदभाव एव ' इति तदपि न किंचित् । तमोग्रहणसामग्र्या गृह्यमाणस्यालोकस्यैव तदभावताप्रसंगेनानैकान्तिकत्वात् । घटपटयोर्वा समानग्रहणसामग्रीकतया परस्पराभावत्वप्रसंगः । तस्मात्पदार्थान्तररूपविवेकेन प्रतिभासमानामध्यक्षेऽन्धकारमालोकविरोधि वस्त्वेव । विरोधित्वे तर्हि कदाचिदालोकमप्यन्धकारः परिभवेदिति न प्रेर्यम् । प्रतिनियतस्वभावाक्रान्तत्वाद्भावानामन्यथानलस्तूलं यथा दहति तथाऽनलमपि तूलः कदाचिद्दहेदुभयोः परस्परं विरोधाविशेषात् । तन्नालोकस्तमः किंतु वस्त्वेवेति गृहाण । किमङ्ग कष्टसंकटे सुखिनमात्मानमावेशयासि । यमपि पूर्वमतारोचकितया कन्दलीकारः स्वकीयं मार्गमुत्पेक्षा चक्रे– ' रूपविशेषोऽयमत्यन्तं तेजोभावे सति सर्वतः समारोपितस्तम इति प्रतीयते ' इति । सोऽपि कापथः । निशादावत्यन्ततेजोऽभावे सत्यारोपाधिकरणभूतलादिवस्तुमात्रस्याप्यनुपलब्ध्या रूपविशेषारोपानुपपत्तेः । उपलभ्यमान एव हि कम्बौ पीततारोपः प्रतीत इति ।

छायाया द्रव्यत्वसिद्धिः।

यच्चातिदिष्टं ' एवं छायापि ' इति तदप्येतेन तत्त्वतः प्रत्यादिष्टम् । यत्पुनरूचे ' आलोकाभावरूपत-

१ न्यायकन्दल्यां पृ. ९ पं. २३।

याम्या द्रव्यान्तरत्वासंभवेऽपि विभ्रमवशात्तथा प्रतीतेरुपपत्तेः ’ इति तत्र भवत एव विभ्रमो यदत्र विभ्रमवशादिति ब्रवीषि । यदि हि द्रव्यताया बाधकं किमपि स्यात्तदा युक्ता द्रव्यतया तत्प्रतीतेर्विभ्रमरूपता । बाधकं च न तावत्प्रत्यक्षम् । तद्द्रव्यान्तरतायामेव प्रत्यक्षस्य साक्षित्वात् । अनुमानमपि—अभावरूपा छाया, द्रव्यगुणकर्मातिरिक्तकार्यत्वादित्येव, अन्यद्वा । न तावदाद्यम् । पूर्वमेव पराहतत्वात् । नाप्यन्यदनुमानं बाधकमवेक्षामहे । साधकं तु तस्या द्रव्यताया निश्चित एवेदमनुमानम् । तथा हि—छाया द्रव्यम्, क्रियावत्त्वात् । कुम्भवत् । चक्षुर्व्यापारा छाया गच्छतीति प्रत्ययोत्पादात्तस्याः क्रियावत्त्वमप्यसिद्धमेव । अनुमानात्मेयमपि । तथा हि—गतिमती छाया, देशाद्देशान्तरप्राप्तिमत्त्वात्, चैत्रवदिति । यच्चात्र व्योमशिवेनोपान्यस्ति—‘ तदेतदसत् । भाभावरूपत्वाच्छायायाः । तथा हि—यत्र यत्र वारकद्रव्येण तेजसः संनिधिर्निषिध्यते तत्र छायेति व्यवहारः । वारकद्रव्यगता च क्रियामातपाभावे समारोप्य प्रतिपाद्यते छाया गच्छतीति । अन्यथा हि वारकद्रव्यक्रियापेक्षित्वं न स्यात्’ इति सोऽयं पङ्गोस्तुरङ्गवेगविनिर्जयमनोरथः । मुख्यार्थबाधाया हि सत्यामारोपः प्रतिष्ठां प्राप्नोति । न चात्र छायाया गतिमत्त्वे बाधकस्य कणमपि प्रेक्षामहे । न हि छायाया गतिमत्त्वस्य माणवके दहनानुत्वस्येव बाधकं प्रत्यक्षम् । तस्य तद्ग्राहकत्वेन प्रवृत्तेः प्रतिपादितत्वात् । अथ यथासिद्धेन्द्रियव्यापाराधीनं प्रत्यक्षं प्रमाणम् । इह तु वारकद्रव्यगमनगतिगोचरप्रत्ययोत्पादकत्वेनेन्द्रियव्यापारोऽन्यथासिद्धो न छायागतिज्ञानं प्रति हेतुर्भवतु इति । तदप्यानन्दनाय । यतो यदा युगपच्छत्रं तच्छाया च लोचनगोचरतामनुसरतस्तदा तावत्प्रमाणभावेन कथंचिदिन्द्रियव्यापारस्यान्यथासिद्धता । यदा तु मत्यन्तिके मत्येऽन्तरिक्षे परिभ्राम्यतः शकुनेश्छाया गच्छन्ती पृथिव्यामवनतवक्त्रेण प्रमात्रा प्रेक्ष्यते तदा उद्भवैव गतिरिन्द्रियव्यापारस्य गोचरः । शकुनिगतिस्त्वनुमानगम्यैवेति

नात्रेन्द्रियव्यापारस्यान्यथासिद्धिसंभावनापि । शकुनेस्तदानीमत्यन्तं लोचनागोचरत्वात् । अपि च सिद्धेऽभावस्वभावत्वे छायाया गतिक्रियाया असंभवात्तत्रेन्द्रियव्यापारस्यान्यथासिद्धताभिधानं साधीयस्तां दध्यात् । तत्पुनरद्यापि दैवकटाक्षितमस्ति । किं च यदि छायायां गतिरारोपितप्रसादोपनतेत्युच्यते तदा मस्तकन्यस्तघटाया घटचेटिकायामटत्यां चेटिकागतिरेव घटे समारोपात्प्रतिभातीति घटोऽपि तदानीं निष्क्रिय एव स्यात् । अथ तस्यापि चलतो विलोकनान्न निष्क्रियत्वम् । एतच्छायायामपि समानमायुष्मान्किं नावधारयति । नाप्यत्र गतिमत्त्वस्य व्योम्नीव नीलिम्नोऽनुमानं बाधकमस्यात्रासंभवात् । नन्वभावरूपतैव तस्या गतिमत्त्वबाधिका । नैवम् । इतरेतराश्रयपराहतत्वात् । अभावरूपतायां हि सिद्धायां तस्या गतिमत्त्वबाधसिद्धिः । सत्यां च तस्यामभावरूपतासिद्धिरिति । भवतु वात्रारोपिता गतिस्तथापि तस्या भावरूपता तत एवापतन्ती दुरपन्हवेत्यहो शरणहेतुरपि मरणहेतुस्ते । तथा हि—भावरूपा छाया, अध्यारोप्यमाणगतित्वात् । वृक्षवत् । यथैव हि जवनप्रभञ्जनप्रेर्यमाणयानपात्रारूढस्य पुंसस्तीरतरुषु भावरूपेष्वेव स्वगतकर्माध्यारोपो नाभावरूपेष्वेवं छायाया अपि भावरूपायामेव गतिसमारोप उपपन्नो नेतरस्यामिति सुस्थितं तस्या गतिमत्त्वं देशाद्देशान्तरप्राप्तिमत्त्वानुमानेन । यत्पुनरनेनैवोच्यते 'यच्चेदं देशान्तरप्राप्तिमत्त्वं तत् किं देशान्तरेण संयोगः समवायो वा । न संयोगस्तस्यापि साध्यत्वात् । तथा हि—द्रव्यत्वसिद्धौ संयोगः सिध्यति । संयोगाच्च द्रव्यत्वमितीतरेतराश्रयत्वं स्यात् । अथ देशान्तरप्राप्तिः समवायः सोऽप्यसिद्धः। न ह्येकत्र समवेतमन्यत्र समवैति । छाया त्वेकत्र संबद्धाप्युपलब्धा पुनर्देशान्तरेऽप्युपलभ्यते' इति । तदपि यत्किंचित् । यतोऽत्र छायाया देशान्तरेण प्राप्तिसंयोगोऽभिधीयते । यत्र वास्येतरेतराश्रयोद्भावनं तदनुसंधानशून्यतावशात् । न हि देशान्तरप्राप्तिमत्त्वाद्द्रव्यत्वं प्रसाधयितुमुद्यताः स्मः । किंतु गतिमत्त्वं

तस्मात् द्रव्यत्वमिति । नन्वेवमपि महति चक्रकसङ्कटे यूयं पतिताः । तथा हि— देशान्तरसंयोगात् क्रियावत्त्वं क्रियावत्त्वाद् द्रव्यत्वं द्रव्यत्वाद्देशान्तरसंयोगवत्त्वमिति । उन्मत्तभाषितमेतत् । देशान्तरप्राप्तेः प्रत्यक्षत एव छायायाः प्रसिद्धस्वरूपत्वात् । यदि हि द्रव्यत्वसिद्ध्या देशान्तरप्राप्तिः प्रसाध्येत तदा स्याच्चक्रकदूषणम् । प्रत्यक्षेणैव सिद्धेन देशान्तरप्राप्तिमत्त्वेन सिद्धात् क्रियावत्त्वात् सिद्धं छायायाः द्रव्यत्वम् । गुणवत्त्वाच्च कुम्भवत्तस्याः सिध्यति । न चासिद्धं गुणवत्त्वं नीला छायेत्यादिप्रतीतेस्तस्याः रू

र्णाः प्रसारयन्तोऽपि प्रतिदिशं तस्याः कमपि स्पर्शमुपलभामहे । तत्किमालोकस्य तमुपलब्धवान् भवान् । अथातिप्रतीत एव मध्याह्नचारिणां खल्वाटानामालोकस्योष्णः स्पर्शः । किं नातिप्रतीतः पथिकानां दिनकरकरनिकरनिरन्तरोपनिपातसन्तापितवपुषामविरलदलकिसलयकलापाभिराममहाकारमहीरुहमहिमातिमनोहरैस्तस्थितानां तच्छायायाः शीतः स्पर्शः । अथ समीरलहरीसमुह्यमानजलकणानुप्रवेशाद्भूतशीतस्पर्शाध्यासेन तत्र शीतला छायेति प्रतिभासस्तर्हि प्रभञ्जनप्रेर्यमाणौर्वाग्नि[1]कणानुप्रवेशाद्भूतोष्णस्पर्शारोपेण प्रभाकरमरीचिनिचय उष्णस्पर्शप्रतिभास इत्यपि किं न स्यात् । अथ निर्वातेऽपि तथैव प्रतिभासाद्भूत एवाय निश्चीयते तर्हि निरन्तरतरनिकुरम्बविटपिताम्बरमणिप्रतापे क्वापि प्रदेशे वातरहितेऽपि शीतस्य स्पर्शस्य प्रतिभासात्तत्रापि छायागत एवेति निश्चयीताम्, अलं पक्षपातेन । तथा चायुर्वेदरहस्यम्— ' आतपः कटुको रूक्षः, छाया मधुरशीतला । कषायमधुरा ज्योत्स्ना, सर्वव्याधिहरं तमः ' । इति । यत्त्वत्र रसस्पर्शयोरौपचारिकत्वं प्रकटयाञ्चकार व्योमशिवः —' ये हि मधुरस्य शीतद्रव्यस्य गुणास्ते छायायाः सेवनाद्भवन्तीति तत्कार्यकर्तृत्वेन तथोक्ता ' इति तदप्यपरिणामभाषितम् । मु

१ और्वाग्नि – दावाग्नि । वडवानल ।

ख्यार्थबाधायामुपचारप्रवृत्ते.। न चेयमत्रास्ति। अथ छाया मधुरशीतला न भवति, अभक्ष्यापेयत्वात्, पावकवदिति व्यापकानुपलब्धिर्बाधकमस्ति। तथा हि– मधुरस्य शीतस्पर्शवतश्च द्रव्यस्य शर्कराक्षीरादेर्व्यापकं भक्ष्यपेयत्वं तस्यात्रानुपलब्धिरिति। तदवन्धुरम्। मधुरशीतलद्रव्यस्य भक्ष्यपेयत्वेन व्याप्तेरप्रसिद्धेः। तथा हि– ज्योत्स्ना भवति मधुरं शीतलं च द्रव्यं न च भक्षयितुं पातु वा शक्या। अथ नासौ मधुरशीतलेति नानया व्याप्तिव्याहतिः। ननु कुतोऽस्य तदभावसिद्धिः। न तावदमुष्मादेवानुमानात्। अत्रास्याः पक्षकुक्षौ निक्षेपस्याकृतत्वात्। साम्प्रतं तु नायं कर्तुं लभ्यते। अथ यदा पूर्वमेवैषा पक्षीकृता भवति तदा को दोषः। नन्वेतत्पक्षप्रस्ताव एवैकान्तनित्यत्वसिध्यर्थं पक्षान्तरे गीतनर्तनादौ वा क्रियमाणे को दोषः। अत्यन्तमप्रस्तुतकारित्वमिति। एतदन्यत्रापि समानम्। समदृष्टिः पश्यतु भवान्। तथा हि—अस्मद्रुदिते छायाया माधुर्यशैत्ये बाधितुं भवतोऽत्र समारम्भ.। तत्किं ज्योत्स्नया। अथास्यास्तैजसत्वान्मधुरस्य शीतस्पर्शस्य वा न सद्भावः। तदसत्। तैजसत्वासिद्धेः। अथ ज्योत्स्ना तैजसी, रूपादिषु रूपस्यैवाभिव्यञ्जकत्वात्, प्रदीपवदित्यतस्तस्यास्तत्सिद्धिः। नैवम्। अत्र हेतोरञ्जनादिनानैकान्तिकत्वात्। पराकृतं चेदमनुमानं पूर्वमेवेति मुख्यार्थस्य बाधाया असंभवादनुपचरितमेवैतच्छाया मधुरशीतलेति। ननु यदि छाया शीतस्पर्शवती तदाप्यत्वमस्याः स्यात्। अम्लस्यैव शीतस्पर्शदर्शनात्। नैतत्पवनेऽप्यस्मदभ्युपगमेन शीतस्पर्शसंभवादम्लस्यैवेत्यवधारणसिद्धेः। त्वदभ्युपगमेनाप्यस्या नियतशुक्लरूपानधिकरणत्वादनाप्यत्वप्रसिद्धेः। सिद्धे चानाप्यत्वे शीतस्पर्शस्याप्युदकशीतस्पर्शविलक्षणस्यात्र सत्त्वमविरुद्धम्। यथानुष्णाशीतस्पर्शस्य पृथिव्या सद्भावेऽप्यवान्तरविशेषवतस्तस्य समीरे। अन्यथास्यापि पृथिव्यामन्तर्भावप्रसंगः। तदेवं सिद्धा स्पर्शवत्येव

1 आप्यत्व जलीयत्वम्।

छाया । तदित्थ छाया कृष्णगुणवती न भवति स्पर्शरहितत्वात्स्थिम्या-युक्तत्वात्सिद्धस्तत्र कृष्णगुण । एव सत्यापरिमाणपृथक्त्वसयोग-विभागपरत्वापरत्ववेगवत्त्वान्यपि । तस्माद्गुणवत्त्वादपि सिद्धा छाया द्रव्यम् । अत्र प्राभाकर प्राह— ' नन्वस्तु छाया द्रव्य तथाप्य-गतालोककाश्यपीप्रदेशाद्यतिरेकिणी नामी समस्ति ' इति । तद-स्याभिनवोत्प्रेक्षापाण्डित्यकण्डूविडम्बनामात्रम् । यतो भूभागादेरेव छायात्वेन प्रतीतेरिदमभिधीयेत । भूभागाद्यतिरिक्तछायासद्भावे प्रमा-णाभावाद्वा । न तावदाद्य पक्ष । असिद्धत्वात् । न ह्यत्र सामाना-धिकरण्येन प्रतीतिरस्त्यय भूभागादिश्छायेति । किंत्वस्मिन्निति वैय-धिकरण्येन । अथ भ्रान्ता वैयधिकरण्येन प्रतीति । अभ्रान्ता तर्हि कीदृक् । सामानाधिकरण्येनेति चेत् । न तावदियमस्ति । सोऽय हस्तगतग्रासत्यागेन पादाङ्गुलीलिलिक्षितीसुपेक्ष्य प्रेक्षाणाम् । इद चात्र चित्रम् । यदय प्राभाकरत्वेन गर्विनोऽपि प्रतीतिभ्रान्तता मापने । अथ नेय भ्रान्ति किं तु भूमागादिच्छाययोरभेदस्याख्याति , तिक्तशर्करामतीताविव माधुर्यस्य । नन्वस्त्वभेदस्याख्यातिस्तु कौतस्कु-ती भूमागादौ छायेति । भूभागाद्यतिरिक्तछायासद्भावे प्रमाणाभा-वादित्यप्यक्षमम् । प्रत्यक्षस्यैवालोकवद्भूभागाद्भिन्नायाश्छायाया । परिच्छेदकत्वात् । न चेद् तदाभासम् । आलोकपरिच्छेदकस्यापि तस्य तदाभासतापत्तेरविशेषात् । अथ नालोकविलोकिप्रत्यक्षस्य तदा-भासता । भास्वररूपस्य भूभागाद्यतिरिक्तस्य तद्ग्राह्यस्यालोकस्य सद्भावात् । छाया तु नास्त्येव काचिदिति तद्ग्राहि प्रत्यक्ष तदाभास-मेव । नन्वस्या असत्त्व पुन सिद्धम् । भूभागादेरेव छायात्वेन प्रतीते-र्भूभागाद्यतिरिक्तछायासद्भावे प्रमाणाभावाद्वेति पूर्वोक्तविकल्पावर्तनेना-निवृत्त पर्यनुयोग । अपि च यदि भूभागादिरेव छाया तदापगता-लोकेति किमर्थम् । आलोकापगमविशिष्टो य काश्यपीप्रदेशादिस्त-

१ काश्यपी पृथिवी ।

स्यैव छायात्वेनाभिधानार्थमिति चेत् । नन्वालोकापगमशब्देनालोकाभावोऽभिधीयते केवलभूतलादिर्वा । आद्यपक्षे वैशेषिकपक्षक्षोद एवास्य शिक्षा । द्वितीयपक्षे त्वभावमन्तरेण भूभागादेः कैवल्येऽभिधीयमानेऽतिप्रसक्तिः । आलोककलितेऽपि तस्मिन्कैवल्यव्यपदेशप्रसक्तेः । यदि चालोकापगमशब्देन केवलभूतलादिर्भण्यते तदालोकापगमविशिष्ट इत्यादिना केवलभूतलविशिष्टो यः कार्श्यपीप्रदेशादिरित्यसंबद्धमेवोक्तं भवेत् । एतेन यदाह शालिकस्तत्त्वालोकप्रकरणे—‘ आलोकेऽपवारिते छायेतीष्यते । अपगतालोकभूभागव्यतिरेकिणी न रूपान्तरवच्छाया दृश्यते । तेन मन्यामहेऽपवारितालोकभूभागादिकमेव छाया ’ इति तदपि प्रत्याहतम् । यदपि प्रत्यवादि ‘ द्रव्यान्तरत्वे तु तदपायेऽप्यालोकेन सहावस्थितायास्तस्याः प्रतीतिः स्यात ’ इति तदपि नोपपन्नम् । छत्रस्य संबन्धिनश्छायाणवो हि केचिदालोकाभावमपेक्ष्य प्रसारिणस्तथापरिणताश्छायाद्रव्यतया स्वीक्रियन्ते । ततश्छत्रापायेऽप्यालोकेन सहावस्थानप्रसंजनमसमञ्जसमेव । परिणामिकारणापाये कार्यस्यावस्थानविरोधात् । न खलु मृदादिप्रलये क्षणमपि नीपादेरवस्थितिरुपलब्धचरीति सिद्धा छाया द्रव्यान्तरम् ।

एवं प्रतिबिम्बमपि । छायाविशेषस्वभावत्वादस्य । ननु यदि

**प्रतिबिम्बस्य द्रव्यान्तरत्वसिद्धिः ।**

प्रतिबिम्बं द्रव्यान्तरं तर्हि वक्त्रादिविनिर्गताश्छायापुद्गलाः कथं कठिनमादर्शमण्डलं विभिद्यान्तः प्रविशेयुः । कथं वा द्वयोः सावयवयोः समानदेशता समगच्छत । कथं वाश्रयस्यान्तः प्रविष्टं प्रतिबिम्बद्रव्यान्तरं

१ ‘ यदा तु नियतदेशाधिकरणो भासामभावस्तदा तद्देशसमारोपिते नीलिम्नि [illegible] । अत एव दीर्घा ह्रस्वा महती अल्पीयसी छायेत्यभिमान [illegible] नीलिम्नः प्रतीति ’ । अभावपक्षे च भावधर्माध्यारोपोऽपि दुरुपपाद ’ इति न्या. कं. पृ. ९. पं. २१. २ प्रकरणपञ्जिकाया पृ. १४४. पं. १२. ३ घटादेरिति शेषम् ।

तस्य परिणामगौरवयोरल्पत्वं न स्यात् । कथं वा लघीयस्यपि दर्पणतले महीयसो महीध्रादेः प्रतिबिम्बस्योपलम्भः स्यात् । कथं वा सव्यदक्षिणपार्श्वयोर्विपर्ययेण प्रतिबिम्बे प्रतीतिः । कथं वा बिम्बे चलत्यवश्यं तदपि चलेत्तिष्ठति च तिष्ठेत् । कथं वा बिम्बापाये तस्याप्यपायः स्यात् । अपाये वा कथं न पृथक्तद्द्रव्यावयवोपलब्धिरित्यालक्षणीयोऽयं प्रतिबिम्बस्य द्रव्यतावादः । तस्मादिदमिह रहस्यम् । यन्मुखादिबिम्बमेव तत्प्रतिभातीति । आह किमेतत् । मुखादिबिम्बमेव तत्प्रतिभात्यथ च पुरः स्थितमिति गृह्यते । उच्यते । दर्पणकृपाणोदकादिपतिता नयनरश्मयः प्रत्यावर्तन्ते प्रत्यावृत्त्य मुखेन सन्निकृष्य च मुकुरादिषु मुखमित्युपलम्भयन्ति । तत्राभिमुखं मुखमेतदिति भ्रान्ता प्रतीतिः । मुखमित्येतावता तु सम्यगिति । कथमेतदवगम्यते स्वच्छेषु दर्पणादिषु पतिता नयनरश्मयः प्रत्यावर्तन्त इति नयनरश्मयः, स्वच्छदर्पणादिषु पतिताः प्रत्यावर्तन्ते, तेजस्त्वात् । आदित्यरश्मिवत्, इत्यतोऽनुमानात् । अथ कथमग्रतमत्र मुखप्रतिभासो न भ्रान्त इति । अलकतिलकादिविपर्ययाभावात् । ये हि यत्र यथा विन्यस्ता अलकतिलकादयस्ते तत्र तथैवोपलभ्यन्ते । ननु दर्पणाभिघातप्रत्यावृत्तनेत्ररश्मिसन्तानग्राहकत्वक्रमे मुकुरमुखयोः क्रमेण ग्रहणं स्यात् । नायं प्रसङ्गः सङ्गतः । तथाग्रहणस्याभिप्रेतत्वात् । कथं तर्हि न लक्ष्यत इति चेत् । आशुभावादिति ब्रूमः । दर्पणपतिता हि नयनरश्मयः प्रथमं मुकुरप्रत्ययमुत्पाद्य प्रत्यावृत्त्य मुखेन सन्निकृष्य च मुखमुपलम्भयन्ति । तस्मान्मुकुरमुखयोरिन्द्रियसन्निकर्षस्याशुभावेनान्तरालस्याग्रहणाद्दर्पणविशेषणो मुखप्रत्ययो भवति दर्पणे मुखमिति । अत्राभिदध्महे । यदवादि ' छायापुद्गलाः कथं कठिनमादर्शमण्डलं विभिद्यान्तः प्रविशेयुः ' इति तत्र तस्य छायापुद्गलैर्भिदाभावः किमेषां मूर्तत्वाद्बादरपरिणामापन्नत्वात्कठिनत्वाद्वा । नाद्यः पक्षः । मूर्त

१ बादरपरिणाम—स्थूलपरिमाणम् ।

स्यापि परमाणोरत्यन्तनिबिडवितोजः प्रहरणादेरपि मध्ये प्रवेशसंभवात् । नापि द्वितीयः । बादरपरिणामापन्नस्यापि पावकस्यायःपिण्डान्तः प्रवेशदर्शनात् । अथ नायःपिण्डादौ विद्यमानस्यैव पावकस्यान्तः प्रवेशः । किं तु तत्संयोगात्, सति तद्विनाशे विरलीभूतेष्वयःपरमाणुष्विति चेत् । तदसत् । न खलु तदानीमुन्मीलितलोचनानि भाल्यन्तोऽपि प्रतिकालं तत्प्रलयमुपलभामहे । अथानुपलभ्यमानोऽप्ययं परिकल्प्यते, दर्पणादिष्वपि परिकल्प्यताम् । प्रतीतिबाधः पुनरुभयत्र । अथाग्निसंयोगस्य तेजोरूपायःपिण्डावयविसमुष्टम्भकपार्थिवावयवविरोधित्वादुपष्टम्भकविनाशेऽयं पिण्डविनाशः संगतो न तु छायापुद्गलसद्भावे दर्पणस्य केनचिद्विरोधाभावादिति चेत् । नन्वग्निसंयोगोऽयःपिण्डोपष्टम्भकविरोधीति कुतोऽवगतवानसि । पार्थिवे काष्ठादौ तथा दर्शनादिति चेत् । तर्हि पार्थिवे काष्ठादौ लोहलेख्यत्वं दृष्टमिति शतकोटावपि तन्निष्टंक्यताम् । अथ तत्र प्रत्यक्षबाधः, किं नायमग्निसंयोगादयःपिण्डप्रलयोऽपि । नापि तृतीयो भेदः । असिद्धत्वात् । न हि प्रतिबिम्बपुद्गलेषु जलपुद्गलेष्विव काठिन्यं संभवति । ततश्च यथा नितान्तकठोरचन्द्रकान्तशिलान्तर्जलं न विरुध्यते तथा दर्पणान्तः प्रतिबिम्बमपि । यदप्युक्तं ‘ कथं वा द्वयोः सावयवयोः समानदेशता संगच्छते ’ इति तदपि समानदेशप्रसारिसमीरातपाभ्यां व्यभिचारि । अथ सावयवयोरपि रूपिद्रव्ययोरेव समानदेशता नोपपन्ना समीरातपौ त्वरूपसरूपाविति न दोषः । तर्हि रूपित्वे सति सावयवयोरिति विशेषणं करणीयम् । न च तदकारि । संप्रतिकरणेऽपि विशेष्यस्य वैयर्थ्यम् । समर्थविशेषणोपादानेनैव साध्यस्य सिद्धत्वाद्विशेष्यस्य व्यवच्छेद्याभावात् । तथा हि—यदि रूपिणां पार्थिवाप्यतैजसपरमाणूनां समानदेशता स्यात्तदा तद्व्यवच्छेदाय सावयवेत्यस्य साफल्यं स्यात् । न चैवं सकलपरमाणूनां स्वस्वदेशत्वात् । अस्तु तर्हि रूपित्वमेव समानदेशत्वा-

भावसाधनायेति चेत् । नैव करम्बितकनकपारदाभ्यामनैकान्तिकत्वात् । एतेन प्रतिबिम्बरूपद्रव्यान्तरप्रवेशे परिणामगौरवयोरुत्कर्षमात्रस्य व्यभिचारित्वमभिहितम् । न च वाच्यं काञ्चनस्य तदानीमभावादेव नास्ति तत्र प्रवेश इति । तथाविधौषधसंपर्केण तत्परिणामस्य तद्वर्णिकाकान्तस्य च तस्य तस्माद्विनिवृत्तस्य पुनर्दर्शनात् । न चान्यदेव तत्तदानीमुत्पन्नम् । तत्र प्रमाणाभावात् । तद्रूपतायां तु तस्य तत्परिमाणता तद्वर्णिकाकान्तता च प्रमाणं प्रोक्तमेव । यदपि 'कथं वा लघीयस्यपि दर्पणतले' इत्याद्यवादि तत्रापि प्रदीपकलिकायां तुङ्गलस्य सकलापवरकोदरपूरणप्रवीणोऽपि प्रभावयवी कथं कलशाभ्यान्तः प्रदीपे प्रक्षिप्यमाणे तदन्तः प्रविशेदिति समः पर्यनुयोगः । अथास्य स्वाश्रयसापवरकोदरपूरणात्कलशोदरपूरकः प्रभावयवी क्षणिकत्वात्प्रदीपकलिकायाः । तदिहापि तुल्यम् । न हि यदेव बिम्बं तदेव प्रतिबिम्बं नाम । किं तु तत्कार्यम् । अथ भवत्वन्यथा तस्य न तु तावतैव लघुत्वं घटते । बिम्बसमानस्य तस्य कदाचिदुत्पत्तिप्रसङ्गात् । अन्यत्रास्य तदापि सत्त्वात् । असाधारणं तु निबन्धनं किं तत्रेति वक्तव्यम् । ननु लघावपि प्रदीपप्रभावयवीति तद्वाच्यम् । न ह्यपवरकपूरकः कुम्भपूरकः प्रभावयवी पृथगिति लाघवमस्यानवम् । अतिप्रसङ्गे । अथास्यात्र लघुत्वनिबन्धनमवकाशस्य तावत्त्वमिति चेत् । तदन्यत्राप्याश्रयस्य तावत्त्वमेवास्तु निबन्धनं, कनीनिकाद्याश्रयभेदेन हि तदपि लघुतामाबिभर्त्युपनायते । ननु भवतु कनीनिकादिषु तथा । बिम्बाद्विस्तीर्णे गगनाङ्गणप्रभृत्याश्रये पुनस्तन्महीयो न भवति । आश्रयस्य महीयस्त्वादिति चेत् । नहि तुङ्गगिरिशिखरादिनिरन्तरावकाशावस्थितप्रदीपप्रभावयव्यपि व्योममण्डलमखिलं किं न व्याप्नोति तावत्त्वादवकाशस्येति समः प्रश्नः । अथ विततावकाशसद्भावेऽपि तदवयवानां कुण्ठत्वान्न व्योमव्यापकप्रभावयविप्रारम्भ इति चेत् । तर्हि प्रतिबिम्बार-

1 अनवाप्य महदप्यन्यत् ।

५०

म्भकाणां बिम्बछायावयवानामपि तुच्छत्वादेव न बिम्बाधिकप्रतिबिम्बारम्भसंभव इति समः समाधिः । ननु शरीरादिच्छाया प्रत्यूषादौ पूषाद्यालोकाभावमपेक्ष्य बिम्बात् द्विगुणत्रिगुणादिरप्युपजायते । ततः किं यदि हि तत्रैव तदा प्रस्तुते किमायातम् । छायात्वात्प्रतिबिम्बछायापि तद्वत्क्वचिद्बिम्बाद्विस्तीर्णाप्युपदर्शितमिति चेत् । प्रत्यक्षापहस्तितमेतत् । महत्यप्याश्रये बिम्बसमानस्यैव प्रतिबिम्बस्य दर्शनात् । किं चैवमालोकत्वादर्कालोकवत्प्रदीपालोकोऽपि जगत् प्रकाशयतु । न चैवं विचित्रा हि वस्तूनां शक्तयः । ननु कथं कृपाणे कृष्णवर्णस्य दीर्घस्य च प्रतिबिम्बस्योपलम्भः । उच्यते । आश्रयस्य श्यामत्वादायतत्वाच्च तत्र तस्य तथोत्पत्तेः । दर्पणस्य त्वतिस्वच्छत्वाद्बिम्बाकारानुकारेणैव तत्र प्रतिबिम्बोत्पत्तिः । यदप्यकथि- 'कथं वा सव्यदक्षिणपार्श्वयोर्विपर्ययेण' इत्यादि तदपि प्रतिबिम्बशब्दनिरुक्त्यैव कृतोत्तरम् । परं मिथ्याभिनिवेशान्न चेतयते भवान् । प्रत्यर्थिबिम्बं प्रतिबिम्बमुच्यते । प्रत्यर्थिता चास्य सकलदोर्वालकतिलकभ्रूभङ्गभ्रुकुट्यादिविशेषस्वीकरणेनाभिमुखतया पुरःस्थायित्वम् । तच्च सव्यदक्षिणपार्श्वविपर्यासव्यतिरेकेणात्र नोपपद्यत इति तथैवोत्पत्तिरुपपन्ना । अन्यथा तु प्रतिबिम्बमिति व्यपदेश एवास्यानुपपन्नः स्यात् । किंच यन्मते प्रतिबिम्बमर्थान्तरं तस्य सव्यदक्षिणपार्श्वयोर्विपर्यासो गुण एव । यत एव बिम्बधर्मविपरीतधर्मयोगोऽत एवातोऽस्यान्यत्वमिति । यदप्युक्तं– 'कथं वा बिम्बे चलत्यवश्यं तदपि चलेत्' इत्यादि । तदप्यवद्यम् । अर्थान्तरस्यास्योत्पत्तावपि नियमेन परिणामकारणक्रियानुकारितया तस्मिंश्चलति चलनस्य तिष्ठति स्थानस्य च तत्रोपपत्तेः । यथा चलति तिष्ठति वा प्रदीपे तत्क्रियानुयायितया प्रकाशावयविन्यपि नियमेन चलनस्थाने । ननु प्रदीपान्निःसृत्य प्रकाशावयवाः प्रकाशावयविनमारभन्त इति युक्ते तच्चलनाचलनयोस्तत्र चलनाचलने । अत्र तु कथम् । उच्यते । यथा प्रकाशावय-

विन्येन छायापुद्गला हि बिम्बाभिमुख्य प्रतिबिम्बरूपतया परिणमन्त इति । यदपि गदितं— 'कथं वा बिम्बापाये तस्याप्यपायः स्यात्' इति तत्रायमभिप्रायस्ते न निमित्तकारणापाये कार्यस्याप्यपाय उपलब्ध । कुलालाद्यपायेऽपि कलशादिलक्षणकार्यस्य दर्शनादिति । अदभिप्रायोऽसौ । बिम्बस्य प्रतिबिम्बं प्रति परिणामिकारणतया तदपाये तत्राप्यपायस्य न्यायानुगृहीतत्वात् । न खलु मृदाद्यपाये कलशादावपायो नोपलब्ध इति । अपाये वा कथं न पृथक्तदवयवोपलब्धिरिति त्वनैकान्तिकं सौगन्धिनीर्गन्धेपादिद्रव्याणां विनाशेऽपि पृथक्तदवयवानामनुपलम्भात् । अपि च बिम्बाश्रयाभ्यां भिन्ने प्रतिबिम्बे प्रत्यक्षानुमानाभ्यां प्रतीयमाने विविधकुबोधानामनवसरः । तथा हि— स्वच्छे दर्पणादौ वदनादिप्रतिबिम्बमवलोकयामीति प्रतीतिः प्रतिप्राणि प्रसिद्धा । न हीयं वदनं दर्पणं वा विलोकयामीत्येवमन्वयोपजायते किं तर्हि वदनादिप्रतिबिम्बमिति । न चेयं भ्रान्ता । तत्र नैतत्त्वमित्येवंरूपस्य बाधकप्रत्ययस्य कदाचिदप्यभावात् । तथा यतो विलक्षणप्रतीतिग्राह्यं ततः भिन्नं यथा मुद्रातः प्रतिमुद्रा । विलक्षणप्रतीतिग्राह्यं चाधःसमुद्दर्पणादिवक्त्रादिबिम्बाभ्यां वक्त्रादिप्रतिबिम्बमिति । न चैतदसिद्धम् । बिम्बाकारानुकारितया हि बिम्बं प्रत्यभिमुख्येन यद्भवति तत्प्रतिबिम्बमिति प्रतीयते यथा मुद्राकारानुकारिणी प्रतिमुद्रेति । तथा प्रतीतौ च कथं ततो विलक्षणप्रतीतिग्राह्यत्वमस्यासिद्धम् । यदुक्तम्— 'दर्पणकृपाणोदकादिप्रतिफलिता नयनरश्मयः प्रत्यावर्तन्ते' इत्यादि तद्व्योमकुसुमभावेव स्योत्तमसूत्रणम् । चक्षुषो रश्मिप्रतिपादनमेव हि तावत्सुधियां क्षिरं दुर्घटम् । पूर्वमपास्तत्वादमीषां किं पुनस्तेषां परावृत्त्या तस्यैव मुखस्य ग्रहणमिति । सन्तु वा रश्मयः परिच्छिन्दन्तु च दर्पणप्रतिहतास्ते तेन वदनम् । कृपाणे तु कथं कठोरकिरणादिप्रतिबिम्बप्रतिभासः । अधोमुखस्य हि सतात्पनान्यारस्यितवाथ सन्मुख सतां रश्मय

पाथः परिच्छिन्दन्तु प्रत्यावृत्त्यास्तु वक्त्रम् । सूर्यादिबिम्बस्य तु परिच्छेदः कथम् । चक्षुरनार्जवावस्थितत्वेन तस्य रश्मिप्रवृत्त्यविषयत्वात् । अथादृष्टवशात्ते तत्र तेनापि प्रकारेण प्रवर्तन्त इत्युपगम्यते तर्हि विनैव रश्मीन् व्यवहितमेव च चक्षुरदृष्टवशाद्वारिवस्त्रादिवस्तूनि गृण्हातीति किं नाभ्युपगम्यते । अथात्र कारकत्वं बाधकमस्ति । तथा हि—यत्कारकं तत्संनिकृष्य कार्यकारि कुठारवत् । संनिकर्षश्चात्र रश्मिद्वारेणैवोपपद्यत इति चेत् । नन्वत्रापि रश्मित्वं बाधकमस्त्येव । तथा हि—ये रश्मयस्ते स्वाश्रयप्रगुणावस्थितपदार्थानेवाभिसर्पन्ति यथा प्रदीपादिरश्मयो, रश्मयश्च चक्षुषि त्वयोपगता इति । अथ दर्पणप्रतिघातपरावृत्तमार्तण्डीयरश्मिभिर्व्यभिचारि रश्मित्वं हेतुस्तेषां रश्मित्वेऽपि प्रभाकरप्रगुणावस्थितापवरकप्रविष्टपदार्थान्प्रति प्रसारित्वात् । तदपसर्पद्दर्पणतलोत्पन्नदिनकरप्रतिबिम्बरूपद्रव्यान्तररश्मीनामेव तथा प्रवर्तनात् । तत्र च व्यभिचाराभावात् । न चादित्यरश्मीनामेव तथा प्रवर्तने प्रमाणमस्ति । यदि चादर्शादिप्रतिहता रश्मयः मुखं प्रकाशयन्ति तदा शिलातलादिप्रतिहता अपि ते तत्प्रकाशयेयुः । विशेषाभावात् । न चात्र स्वच्छतोपयोगिनी, रश्मिप्रतिघातमात्रस्यैवात्रोपयोगात् । तच्चोभयत्राप्यविशिष्टम्, प्रत्युत शिलादिना घनद्रव्येणातिशायी प्रतिघातो विधीयते । अतस्तत्रातिशयवता तत्प्रतिभासेन भाव्यम् । कारणातिशयाद्धि कार्यातिशयो दृष्टो यथा पित्तधातूद्रेकातिशयाच्छङ्खादिषु पीतत्वावभासातिशयः । अस्मन्मते तु स्वच्छ एवादर्शादौ बिम्बसंनिधाने तद्गतच्छायापुद्गलसंक्रमात्प्रतिबिम्बमुत्पद्यते । न पुनः शिलादौ तद्विपरीतेऽतस्तत्र तत्प्रतिभासाभावः । किं च, आदर्शादिना प्रतिहता रश्मयो यदि बिम्बं प्रकाशयन्ति तदा महतो हस्त्यादेः स्वपरिणामानतिक्रमेणैव प्रतीतिप्रसंगाल्लघुत्वप्रतीतिर्न स्यात् । न चैवम् । अतः प्रतिबिम्बमेव तत्र तथाभूतमुत्पन्नं प्रतिभासत इत्यभ्युपगन्तव्यम् । आदर्शाद्याश्रयानुसा-

रितया हि छायापुद्गलैः प्रतिबिम्बमारभ्यते । अतो महतो लघुत्वप्रतिपत्तिरविरुद्धा । अपि च यदि काचदृषणादौ प्रतिहतास्ते व्यावृत्त बिम्बमेव प्रकाशयन्ति तदा तत्रायतस्याममुखप्रतीतिर्न स्यात् । एतेन यदुक्तं—' कथमेतदवगम्यते ' इत्यादि तदपि तत्त्वत प्रत्युक्तमवगन्तव्यम् । यदपि प्रभाचन्द्र. प्राह—प्रतिबिम्बोत्पत्तौ हि जलादिकमुपादानकारणं चन्द्रादिकं च निमित्तकारणं गगनतलावलम्बिनं चन्द्रं निमित्तीकृत्य जलादेस्तथा परिणामात् ' इति, तदस्यात्यन्ताज्ञानविजृम्भितम् । यथा हि तेनोऽभावमपेक्ष्य ते पत्रादेश्छायापुद्गला पृथिव्यादावाश्रये छायारूपद्रव्यान्तरतया परिणमन्ते तथात्रापि यदि वदनादिनिष्क्रम्य छायापुद्गला दर्पणादिप्रमन्नद्रव्यसामग्रीमपेक्ष्य प्रतिबिम्बरूपतया परिणम्यन्ते तदा किं नाम क्षूण स्यात् । अस्यापि छायाविशेषस्वभाववात् । तथा चागम.—' सामा उदिया छायाऽभासुरगया निसिम्मि कालाभा । स चेह भासुरगया सदेहवन्ना मुणेयव्वा । जे आदरिसस्संतो देहावयवा हवंति संकंता । तेसिं तत्थुवलद्धी पगासजोगा न इयरेसिं ' ॥ प्रकरणचतुर्दशशतीकारोऽपि धर्मसारप्रकरणे प्राह—'न ह्यङ्गनावदनछायानुसंक्रमातिरेकेणादर्शके तत्प्रतिबिम्बसम्भव ' इत्यादि ।

सिद्धमित्थं तमश्छाया प्रतिबिम्बमिति त्रयम् ।
द्रव्यान्तरं ततो हेतौ विशेषणमसिद्धिमृत् ॥ ६२२ ॥
विशेषासिद्धताप्यत्र हेतौ हन्त कृतास्पदा ।
एकान्तेन विविक्तं यन्नित्यात्तन्नास्ति लक्षणम् ॥ ६२३ ॥
क्षित्यादीनि हि सर्वाणि द्रव्याणि द्रव्यतात्मना ।
एकेन परिणामेन तादात्म्येनावतस्थिरे ॥ ६२४ ॥

---

1 श्यामोदिता छायाऽभास्वरगता निशि कालाभा । सा चेह भास्वरगता स्वदेहवर्णा ज्ञातव्या । ये आदर्शस्यान्तर्देहावयवा भवन्ति संक्रान्ता । तेषां तत्रो पलब्धि प्रकाशयोगान्नेतरेषाम् ॥

तथाभूतान्यपीमानि समस्तान्यपि सर्वथा ।
व्यावृत्तलक्षणानीति को ब्रूयाद्भवत परः ॥ ६२५ ॥

अपि च—

पृथ्वीपयःपावकमारुतानां द्रव्यप्रबन्धे पुरतश्चतुर्णाम् ।
आबिभ्रतां पौद्गलिकत्वमेकं कामं पृथग्लक्षणता कथं स्यात् ॥६२६॥
न पुद्गलात्मत्वमसिद्धिबन्ध्यकीमसमृद्धसंबन्धधुरंधरं बुधाः ।
वसुन्धरादेरभिधातुमीशते यतोऽनुमानं निरवद्यमस्ति नः ॥६२७॥

तथा हि—पृथिव्यप्तेजोवायवः पुद्गलद्रव्यपर्यायाः, स्पर्शादिमत्त्वात् । ये तु न तत्पर्याया न ते स्पर्शादिमन्तो यथाकाशादयः । स्पर्शादिमन्तश्च पृथिव्यादयस्तस्मात्पुद्गलद्रव्यपर्याया इति । नन्वयं सचेतनाः तरवः, स्वापवत्त्वादितिवत्पक्षैकदेशासिद्धो हेतुः प्रतिनियमेनैव स्पर्शादीनां पृथिव्यादिषु वृत्तेर्न पुनः साकल्येन । तथा हि—गन्धरसरूपस्पर्शाश्चत्वारोऽपि पृथिव्यामेव वर्तन्ते गन्धवन्ध्यास्तु पाथांसि । गन्धरसरहितास्तेजांसि । गन्धरसरूपशून्याः समीर इति ।

तदुक्तम्—

'गन्धादयो नियोक्तव्याश्चत्वारः पृथिवीगुणाः ।
अप्तेजोमरुतामेकं पूर्वं पूर्वमपोह्य तु ॥' इति ।

जलादिषु गन्धादीनामनुपलब्धेः सिद्धमस्य पक्षैकदेशासिद्धत्वमिति चेत् । ननु किमियमनुपलब्धिः प्रत्यक्षमात्रनिवृत्तिर्विवक्षिता समस्तप्रमाणनिवृत्तिर्वा । न प्रथमा । यतोऽसौ सामान्येनाभावसाधनी स्यात् । योग्यस्यैव वा । नाद्यः पक्षः सूक्ष्मः । सूक्ष्माणामन्तरिक्षादृष्टादीनां चातीन्द्रियाणामभावापत्तेः । न द्वितीयः । तोयादिवर्तिनां तेषामनभिव्यक्तत्वेन योग्यत्वासिद्धेः । शातकुम्भानुद्भूतोष्णस्पर्शवत् । अथ यत्तेजोद्रव्यं, तदुष्णस्पर्शवत् । यथा ज्वलज्ज्वलनज्वालाजालम्, तथा च काञ्चनम् । इत्यनुमानेन सत्त्वसिद्धेः । तत्र तस्यानुद्भूतत्वे-

१ बन्ध्की– व्यभिचारिणी । २ गन्धबन्ध्याः–गन्धरहिताः

नावस्थानमदुष्टम् । इष्टं तु सत्त्वसिद्धिरेव दुर्लभा तेषु तेषामिति चेत् । तदपि विरूपम् । पयसि गन्धस्य तेजसि गन्धरसयोः समीरे गन्धरसरूपाणामनुमानेन सत्त्वसिद्धेः । तथा हि— पयो गन्धवत्, तेजो गन्धरसवत्, वायुर्गन्धरसरूपवान् स्पर्शवत्त्वात्पृथिवीवत् । नात्र कालात्ययापदिष्टत्वनिष्टङ्कं स्पष्टं । अनुद्भूतस्वभावे वस्तुनि विधिप्रतिषेधयोः प्रत्यक्षस्य मूकत्वात्तेन पक्षबाधानुपपत्तेः । अन्यथा ज्ञातकुम्भीयोष्मस्पर्शमात्रेऽपि कथं न तत्प्रसङ्गः । नाप्यागमेनात्र पक्षबाधा । 'स्पर्शरसगन्धवर्णवन्तः पुद्गलाः' इत्यागमस्य तत्सद्भावसाधकस्यैव सत्त्वात् । स्याद्वादागमस्य प्रमाणत्वमेव न विद्यत इति चेत् ।

निरङ्कुशा क्षणभङ्गपक्षे हहो हताशा भवता तदेतत् ।
सज्जीकृतास्कैमगिरा किशोराद्भ्रूङ्गोत्पाटनलम्पटत्वम् ॥ ६२८ ॥

स्याद्वादागमो हि भगवानपास्तसमस्तकलङ्कपङ्कः प्रमाणतामास्पदीकरोत्येव । अस्तु वास्याप्रामाण्यं तथापि न कालात्ययापदिष्टतास्याः, पयस्तेजोवायुषु गन्धादेः क्रमेणासत्त्वमाचक्षाणस्य कस्यचिदागमस्याभावात् । अस्त्यागमोऽस्मदीयेति चेत् । तत्किमिदानीं प्रतिवाद्यागमेनापि पक्षबाधा भवतु । ओमिति चेत् ।

हन्त हन्त हहहा तपस्विनी तर्हि सेयमुपशान्तिमीयुषी ।
तर्ककर्कशविकाशशालिनो जल्पकेलिकलनाकलाविदः ॥ ६२९ ॥

प्रथममेव प्रतिवाद्यागमबाधानुप्रेक्षमाणेन वादिनानुमानस्यानुपन्यासात् । अथ युक्त्यनुगृहीतेनैव तेन तद्बाधा न तन्मात्रेण तर्हि युक्तिरेवोद्भाव्यतां परप्रतिक्षेपाय किमनेनान्तर्गडेऽभ्यर्पणतलावलोकनकल्पेनागमेन । परं प्रति तस्याप्रामाण्यात् । युक्तिमुखप्रेक्षणैकबद्धलक्ष्यत्वादस्य । इति पयआदिष्वपि गन्धादिसिद्धेः सिद्धमनुद्भूतानां तेषां तत्रावस्थानम् । अत्र पृथिव्यादीनां चतुर्णामपि पुद्गलपर्यायत्वेनाभिन्नलक्षणत्वे पृथिव्यामिव जलादिष्वपि तेषामुद्भूतत्वं भवेत् । अन्यथा तु

---

१ तत्त्वार्थ ५।२३

सर्वथा भिन्नलक्षणत्वैषामिति चेत् । न । नायनेन तेजसा व्यभिचारात् । न ह्यनभिव्यक्तभास्वररूपोष्णस्पर्शं नायनं तेजोऽभिव्यक्तभासुररूपोष्णस्पर्शात्पावकाद्भिन्नलक्षणं भवतां प्रसिद्धम् । द्रव्यसंख्याव्याघातप्रसंगात् । एव पृथिव्यादेरप्यभिव्यक्तानभिव्यक्तगन्धादियोगेऽपि नान्योन्यमत्यन्तभिन्नलक्षणत्वम् । अथैतदभावे पृथिवीत्वादिप्रतिनियतजातिसम्बन्धस्तेषां कुतस्त्यः । एकान्तेन भिन्नलक्षणत्वाभावे हि यथा पृथिव्या पृथिवीत्वाभिसंबन्धस्तथा तेजःप्रभञ्जनेष्वप्येव स्यात् । दृष्टः खल्वेकलक्षणवस्तु कम्बुग्रीवादिमत्सु संबन्ध एकस्या घटत्वजातेरिति चेत् । तदप्यसंगतम् । अवान्तरजातियोगस्य सर्वथा लक्षणभेदाप्रसाधकत्वाद्व्यक्तिभेदमेव ह्यसौ प्रसाधयति । अन्यथा क्षत्रियत्वाद्यवान्तरजातियोगादात्मनामप्यैकान्तिकं न स्यादेकलक्षणत्वमिति । एवं च द्रव्याणां य. किल नवधात्वसिद्धयेऽभिदधे हेतुस्तत्र विशेष्यं कटाक्षितं ध्रुवमसिद्धतया ।

यच्च परमाणुरूपं सदकारणवत्त्वहेतुना नित्यम् ।
गदितं द्रव्यचतुर्णां तदप्यसिद्धतास्पदं नूनम् ॥ ६२९ ॥
.... .... .... .... ... . .
अणूनां स्कन्धभेदस्य कारणस्य विनिश्चयात् ॥ ६३० ॥
भेदे हि द्व्यणुकादीना जायन्ते परमाणवः ।
अणूनां संहतौ यद्वज्जायन्ते द्व्यणुकादयः ॥ ६३१ ॥

परः प्राह—

यत्र स्कन्धस्य भेदोऽस्ति तत्राथ परमाणवः ।
जायन्तां न च सर्वत्र स्कन्धभेदो विभाव्यते ॥ ६३२ ॥
केषांचित्परमाणूनां स्वतन्त्राणामपि स्थितेः ।
सर्वदैव ततो नित्याः सिद्धा केऽपीति कश्मलम् ॥ ६३३ ॥
तेषां स्वातन्त्र्यसंसिद्धौ काचिन्ना ....
.... .... .... .... ॥ ६३४ ॥

तदनुसारेण च परमाणुष्वपि स्कन्धभेद एव कारणमकथि । व्यवहारनयार्पणेन च स्कन्धभेदः कारणमभाणि । निश्चयनयार्पणेन तु य एव स्कन्धविभागः स एव परमाणवः । अथ यद्यणवो जायन्ते तदा यत्कार्यद्रव्यं तत्स्वपरिमाणादल्पपरिमाणैः कारणैरारब्धं घटवदिति व्याप्तिसिद्धेर्विवादास्पदपरमाणूनामप्यल्पीयोभिः कारणैर्भवितव्यम् । तेषामप्यपरैस्तैरित्यनवस्थानात्परमाणूनामभाव एव भवेदिति चेत् । नैतद्वाच्यम् । व्याप्तेरसिद्धेः । श्लथावयवकर्पासपिण्डानां संघाताद्धनावयवकर्पासपिण्डेन सूक्ष्मेण संजायमानेन व्यभिचारात् । ननु यदीयं व्याप्तिरपसार्यते तदा परमाणूनामभाव एव भवेत्तत्साधकप्रमाणस्याभावादिति चेत् । तदरमणीयम् । अणुपरिमाणतारतम्यं, क्वचिद्वा श्रान्तं, परिमाणतारतम्यत्वान्महापरिमाणतारतम्यवत् । यत्र चास्य विश्रान्तिस्ते परमाणव इतीत्थं तेषां प्रसिद्धेः । एवं च सदकारणवत्त्वादित्यस्य विशेष्यासिद्धता सिद्धैव । अपि च यद्यमी नित्या भवेयुस्तदा तत्प्रभवकार्याणां सकृदेवोत्पत्तिः स्यात् , अविकलकारणत्वात् । येऽविकलकारणास्ते सकृदेवोत्पद्यन्ते । यथा समानसमयोत्पादा बहवोऽङ्कुरा. । अविकलकारणाश्च जननैकस्वभावाणुकार्यत्वेनाभिमता भावा इति प्रसंगः । अविकलकारणानामप्येषामनुत्पादे सर्वदानुत्पत्तिप्रसक्तिर्विशेषाभावादिति विपर्यये बाधकं प्रमाणम् । ननु समवाय्यसमवायिनिमित्तभेदात्त्रिविधं कारणम् । यत्र कार्यं समवैति तत्समवायिकारणम् । यथा तन्तवः पटस्य । यत्तु समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं च सत्कार्यं जनयति तदसमवायि-

१।२ लोकव्यवहाराभ्युपगमपरो नयो व्यवहारनय उच्यते । स च कालवर्णस्यैव उत्कटत्वेन लोके व्यवह्रियमाणत्वाद्भ्रमति प्रतिपादयति ' कालको भ्रमर ' इति । परमार्थतस्तु पारमार्थिकार्थवादी नैश्चयिको निश्चयनय उच्यते । स पुनर्मन्यते ' पञ्चवर्णो भ्रमर ' बादरस्कन्धत्वेन तच्छरीरस्य पञ्चवर्णपुद्गलैर्निष्पन्नत्वात्, शुक्लादीना च न्यग्भूतत्वेनानुपलक्षणादिति ॥ विशे० ३५८९ ।

कारणम् । प्रत्यासत्तिश्च द्वेधा । लघ्वी महती च । कार्येण सहैकस्मिन्नर्थे समवायो लघ्वी । यथा पटेन सार्धमेकस्मिंस्तन्तुरूपेऽर्थे समवेतस्य तन्तुसंयोगस्य । कार्यकारणेन सार्धमेकस्मिन्नर्थे समवायो महती । यथा पटगतरूपासमवायिकारणेन पटेन सममेकस्मिंस्तन्तुरूपेऽर्थे समवेतानां तन्तुरूपादीनाम् । तदेतदुभयमप्यसमवायि कारणम् । शेषं तूत्पादकं निमित्तकारणम् । यथाऽदृष्टाकाशादि । एवं च संयोगादेरपेक्षणीयस्याभावादविकलकारणत्वं तेषामसिद्धमित्यपि श्रद्धामात्रम् । यतोऽसौ संयोगः सत्तामात्रेण तेषामपेक्षणीयः स्यादतिशयाधायकत्वेन वा । आद्ये पक्षे सर्वं सर्वस्यापेक्षणीयं स्यात्सत्तामात्रस्य सर्वत्राविशेषात् । द्वितीये त्वभिन्नो भिन्नो वासौ तेन तेषामाधीयते । यद्यभिन्नस्तदा तेषां कार्यतापत्तिः । अथ भिन्नः कथंचित्सर्वथा वा । कथंचिच्चेच्चिरं जीवतात् । कथंचित्कार्यतायास्तेषामित्यमूरीकरणात् । सर्वथा चेत्कथं तेषामेवाय व्यपदिश्येत । सम्बन्धाच्चेत्क पुनरयं स्यात्, समवायः संयोगो विशेषणीभावोऽविष्वग्भावो वा । नाद्यः । समवायस्य क्षेप्स्यमाणत्वात् । न द्वितीयः । तस्य द्रव्यत्वापत्तेः । संयोगस्य गुणत्वेन द्रव्याधारत्वात् । न तृतीयः । तदुभयाभावे विशेषणीभावाङ्गीकरणेऽतिप्रसङ्गात् । तुरीयस्तु स्यात् । परमाणूनां कथंचित्कार्यतासमर्पणेन पवित्रत्वात् । किं च, एकान्तेन भिन्नः सन्नुपकार्योपकारकभावं विना कथमयं तत्र संबध्येत । उपकारकरणे च भेदाभेदविकल्पदिशा तदेवावर्तत इत्यनवस्थादौःस्थ्यं नापनीपद्यते । अथ संयोग एवामीषामतिशयेनामुनातिशयः कश्चिदासूत्र्यते तर्हि नित्योऽनित्यो वाऽयं भवेत् । नित्यश्चेत्, नित्यं कार्योत्पत्तिः । तदतिशयभूतस्य संयोगस्य नित्यं सत्त्वात् । अथानित्यस्तदा तदुत्पत्तौ कोऽतिशयः, संयोग एव क्रिया वा । संयोगश्चेत्किं स एव, संयोगान्तरं वा । नाद्यः । तस्याद्याप्यसिद्धेः । स्वोत्पत्तौ स्वस्यैव व्यापारविरोधाच्च । नापि संयोगान्तरम् । तदपि हि

नित्यमनित्यं वेत्याद्यावर्तनेनानवस्थापत्तेः । अथ क्रियातिशयः । तथा हि— आत्माऽणुसंयोगाददृष्टापेक्षात्परमाणुषु क्रियोत्पद्यते । क्रियातश्च परस्परं संयुज्यन्ते । नन्वात्माणुसंयोगस्य सदैव विद्यमानत्वान्नित्यं तेषु क्रियोत्पत्तिप्राप्तिः । अथादृष्टापेक्षोऽसौ कादाचित्क एव । नन्वदृष्टमात्मनां परमाणुषु क्रियानुत्पत्तिकालेऽप्यविकलं विद्यत एव । ततः कथं न तदपेक्षात्माणुसंयोगोत्पादः । अदृष्टानामविकलत्वमसिद्धम्, ईश्वरसंजिहीर्षया तदानीं तेषां प्रतिबद्धवृत्तिकत्वादिति चेत् । एवं तर्हि न कदाचन कस्यापि कार्यस्योत्पत्तिः स्यात् । ईश्वरेच्छाया नित्यत्वात् । अथ नित्याप्यसौ तत्तत्सहकारिकारणकलापोपनिपातात्सर्गविषया संहारविषया च व्यवस्थाप्यते । ननु सहकारिणोऽपि तदायत्तोत्पत्तय इति किं तस्यास्तत्परायत्तताकल्पनेन ।

ईश्वरवादश्च पुरा पराकृतः किमपि कर्कशैर्दोषैः ।
तत्किं हन्त तदिच्छा तवोत्तरीकर्तुमिह युक्ता ॥ ६३९ ॥
संयोगेऽस्ति तदैव नापेक्षा काप्यणुप्रबन्धस्य ।
अविकलकारणताख्यः सिद्धो वस्तुषु ततो हेतुः ॥ ६४० ॥
न च युगपज्जायन्ते जन्यान्यणुसञ्चयेन वस्तूनि ।
तस्माद्विपर्ययोऽयं समस्तु निःशेषदोषपरिहीणः ॥ ६४१ ॥
यज्जायते यदा न हि न तत्तदा विकलकारणं नियमात् ।
अङ्कुर इव शिलाया न च जायन्ते सकृत्पदार्थास्ते ॥ ६४२ ॥
सर्वथा स्थिरपदार्थसंकथा विस्तरेण च पुरैव फुंसिता ।
स्याच्चतश्च परमाणुनित्यता पक्ष एष कुशली कथं बुधाः ॥६४३॥
द्व्यणुकाद्यवयविरूपं त्वनित्यमुत्पत्तिहेतुवशात् ।
इति जगदे यदपि तदप्युपैति युक्तिक्रमं नैव ॥ ६४४ ॥

तथा हि—इत्थं द्व्यणुकाद्युत्पत्तिं प्रत्यपीपदन् । इहैकस्तावत्परमाणुः कार्यद्रव्यस्यानारम्भक एकस्य नित्यस्यारम्भकत्वे कार्यस्य सततोत्पत्तिः स्यात् । अपेक्षणीयाभावात् । अविनाशित्वं च कार्यस्य

भिन्नार्थक्रियाकारित्वाद्वा कलशकुलिशवत् । एकवचनबहुवचनविषयत्वाद्वा नक्षत्रनक्षत्रेशवत् । विरुद्धधर्माध्यासितत्वाद्वा दहनतुहिनवत् । यदि चावयवी, अवयवेभ्यो भिन्नो न भवेत्, तदा स्थूलप्रतिभासो न स्यात् । परमाणूनां सूक्ष्मत्वात् । न चान्यादृग्भूतः प्रतिभासोऽन्यादृगर्थव्यवस्थापकः । अतिप्रसंगात् । न च स्थूलाभावे परमाणुरिति व्यपदेशोऽपि संभवी स्थूलापेक्षत्वादणुत्वस्येति ।

प्रेमितितभिः प्राकटयत वैशेषिकपक्षदीक्षितैरेषा ।
कृत्रिममौक्तिकमालेव हरति हृदयं किन्तु तज्ज्ञानाम् ॥६४५॥

तथा हि–यत्तावत् ' लोचनव्यापारसमनन्तरमेव' इत्यादि गदितम् । तन्न युक्तम् । न खलु तन्तुभ्यो भिन्न एव पटः कस्यापि कदापि प्रतिभासते । त एव हि तथा परिणतिमुपेयिवांसः पटोऽयमिति प्रतीयन्ते । ननु यदि तन्तव एव तथाभूतास्तथा चकासति तर्हि प्रत्येकमपि तेषु तथा प्रतीतिः स्यान्न पुनरयं तन्तुरिति । तदसत् । प्रतितन्तु तथा परिणतेरभावात् । सर्वेषामेव हि तेषां स तथारूपः परिणामः कथं प्रत्येकं चकास्यात् । न चैकान्तेनाभिन्नमेव तेभ्यस्तथा परिणाममाचक्ष्महे । यतोऽयं दोषः प्राप्तावसरः स्यात् । प्रत्यक्षेण भिन्नस्यैव तस्य प्रतिभासे चायं पट इमे तन्तव इति युगपदेव विभक्तानां चाक्षुषाणां तेषां चन्द्रनक्षत्राणामिव प्रतिभासो भवेत् । अथ विभक्तानामिति विभक्तत्वं किं विभक्तस्वभावत्वं विवक्षितं विभक्तदेशत्वं वा । आद्यं चेत्तदास्त्येव विभक्तस्वभावानामवयवावयविनां प्रतिभास इति कः प्रसंगार्थः । द्वितीयं त्वनैकान्तिकम् । ज्ञेयत्वादिधर्माणां भिन्नानामपि भिन्नदेशतया प्रतिभासाभावादिति चेत् । तत्रोत्तरमेव पक्षमाचक्ष्महे । न च व्यभिचारो ज्ञेयत्वादीनामप्येकद्रव्यगतानां तद्द्रव्यतादात्म्येनावस्थितत्वादत्यन्तं भेदासिद्धेः । वातातपाभ्यां भिन्नाभ्यामपि, अभिन्नदेशत्वेनोपलभ्यमानाभ्यां व्यभिचार इति चेत् । न ।

१ छन्दोदृष्ट्यार्थदृष्ट्यायमशुद्ध इव भाति ।

चाक्षुषद्रव्याणामिव भिन्नदेशतयोपलम्भस्य प्रसञ्जितत्वात् । तप्ताय-पिण्डेनानेकान्त इति चेत् । न । वह्निसंनिधाने तथाविधद्रव्यान्तरोत्पत्त्या तत्र भिन्नद्रव्यद्वयस्याभिन्नदेशोपलम्भासिद्धेः । अथ पटेऽपि भिन्नदेशत्वेनोपलम्भोऽस्त्येव । पटावयविनस्तन्त्ववयवेषु तेषां च पक्ष्मादिस्वावयवेषु स्थितानामनुपलम्भादिति चेत् । न । देशशब्देनान्तरालस्य विवक्षितत्वात् । कथमन्यथा भवानेव वातातपाभ्यां व्यभिचारमुदचीचरत् । न हि तयोरेकत्र समवायिकारणे वृत्त्याऽभिन्नदेशत्वमस्ति । द्रव्यद्वयस्य समकालं समवायिकारणैक्यविरोधात् । किं च— अवयविभिन्न एव गृह्यमाणः समस्तावयवग्रहणाद्गृह्येतावयवमात्रग्रहणाद्वा । प्रथमे कल्पे मध्यापरविभागावयवानामग्रहणादग्रहणमेव तस्य स्यात् । द्वितीयेऽपि तन्त्वग्रमात्रोपलम्भेऽपि पटोपलम्भो भवेत् । अथ भूयोऽवयवेन्द्रियसंनिकर्षानुगृहीतेनावयवीन्द्रियसंनिकर्षेण तस्य ग्रहणम् । ननु कियन्तोऽमी अवयवा भूयांसोऽभिधीयेरन् । दशैकादशादिसंख्या लक्षिताः । यावता वाऽपटेऽवयविबुद्धिरुल्लसेत् । आद्यपक्षो न क्षमः । क्वचित्करचरणशिरोग्रीवाद्यवयवचतुष्टयग्रहणेऽप्यवयविबुद्ध्युत्पादाद्दशैकादशादितन्तुग्रहणेऽपि चानुत्पादात् । द्वितीये परस्पराश्रयः । अवयविबुद्धौ हि सिद्धायामवयवभूयस्त्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति । किं च कथं भूयोऽवयवग्रहणादवयविग्रहणमुपपादि । यतोऽर्वाग्भागमात्रावयवग्राहिणा प्रत्यक्षेण परभागमध्यावयवाग्रहणात्तेन तद्व्याप्तिरवयविनो ग्रहीतुं शक्यते । व्याप्याग्रहणे तेन तद्व्यापकत्वस्यापि ग्रहीतुमशक्तेः । ग्रहणे वातिप्रसङ्गात् । न च परभागमध्यव्यवहितावयवाप्रतिभासनेऽप्यव्यवहितोऽवयवी प्रतिभातीति वक्तुं शक्यम् । व्यवहितावयवाप्रतिभासने तद्गतत्वेनावयविनः प्रतिभासयितुमशक्यत्वात् । नापि परभागमात्रावयवग्राहिणा प्रत्यक्षेणार्वाग्भागमात्रावयवव्याप्तिर्वा तस्य गृह्यते । तत्र हि तदवयवानां प्रतिभासाभावे सत्यवयविनोऽपि प्रतिभासेन नार्वाग्भागमात्रव

वयवसंबन्धि । तेषां तत्राप्रतिभासनात् । तदप्रतिभासने च तत्संबन्धिरूपस्याप्यप्रतिभासनात् व्याप्त्याप्रतिपत्तौ तद्व्यापकत्वस्याप्रतिपत्तेः । अथात्मार्वाक्परभागावयवव्यापित्वमवयविनो ग्रहीतुं समर्थ इत्युच्यते । तन्न । सत्तामात्रेण तस्य ग्राहकत्वानुपपत्तेः । अन्यथा स्वापमूर्च्छाद्यवस्थास्वपि तत्प्रतिपत्तिप्रसंगात् । किं तु दर्शनसहायस्तत्र दर्शनं नावयविनोऽवयवव्याप्तिग्राहकं संभवतीति प्रतिपादितम् । अथार्वाग्भागदर्शने सत्युत्तरकालं परभागदर्शनानन्तरस्मरणसहकारीन्द्रियजनितं स एवायमिति । प्रत्यभिज्ञानमध्यक्षमवयविनः पूर्वापरावयवव्याप्तिग्राहकम् । तदयुक्तम् । प्रत्यभिज्ञाज्ञानस्यैव तद्विषयस्य प्रत्यक्षत्वानुपपत्तेः । अक्षानुसारि हि प्रत्यक्षम् । न चाक्षाणामर्वाक्परभागभाव्यवयवग्रहणाव्यापार संभवति । व्यवहिते तेषां व्यापारासंभवात् । संभवे वाऽतिव्यवहितेऽपि व्यापारः स्यात् ।

तथा च—

पुरः शचीशस्य सुचारुचारिसंचारि शच्या प्रविरच्यमानम् ।
महीस्थिता अप्यवलोकयेयुर्लास्यं स्फुरत्कौतुकलोलचित्ताः ॥६४६॥

न च स्मरणसहायस्यापीन्द्रियस्याविषये व्यापारः संभवति । यद्यस्याविषयो न तत्र स्मरणसहायमपि प्रवर्तते, यथा परिमलस्मरणसहायमपि लोचनं गन्धादौ । अविषयश्च व्यवहितोऽक्षाणां परभागभाव्यवयवसंबन्धित्वलक्षणोऽवयविनः स्वभाव इति न प्रत्यभिज्ञाप्रत्यक्षेणापि भिन्नैकावयविग्रहणमुपपद्यते । ननु भवतामपि कथमवयविग्रहणम् । न हीदं नास्त्येव । नापि मध्यभागभाव्यवयवावभासोऽस्तीति । उच्यते । नास्त्येवास्माकमर्वाग्दृशां सर्वात्मनावयविप्रत्यक्षता । यदा यावन्तोऽवयवा गृह्यन्ते तदा तदात्मकस्यैवावयविनः साक्षात्करणात् । कथं तर्हि घटोऽयमिति प्रतीतिरिति चेत् । कतिपयावयवदर्शनेनापरेषामपि तेषां परामर्शात् । न तदप्रत्यक्षं स्यादिति चेत् । एवमेवैतत्परमार्थतः । सांव्यावहारिकत्वादस्मदादिप्रत्यक्षाणामतीन्द्रिय-

प्रत्यक्षस्यैव सर्वात्मना वस्तुग्राहकस्य परमार्थतः प्रत्यक्षत्वात्। मन्दमन्दप्रकाशेऽवयवप्रतिभासमन्तरेणाप्यवयवी प्रतिभासते। ततस्तेभ्योऽत्यन्तभिन्न एवायमिति कश्चित्। सोऽपि न विपश्चित्। तदानीमप्यवयवानां प्रतिभासमानत्वात्। ननु के नाम तदानीमवयवाः प्रतिभासेरन्, अवयवी क इति कथ्यताम्। यो यत्रास्ति स तत्रेति चेत्। अवयवा अपि तस्यैव केचनेति बुद्ध्यस्व। ननु तिमिरपरिकरिते प्रदेशे न चक्षुश्चरणादयो निश्चेतुं शक्यन्ते। तत् किं शकुन्तादिः शक्यते। संस्थानमात्ररूपः शक्यत एवायमिति चेत्। अवयवा अपि तथैव किं न शक्यन्त इत्यवयवात्मकस्यैव सर्वत्रास्य प्रतिभासात् प्रत्यक्षेण भिन्नस्यैवावयविनो ग्रहणम्। अथ भिन्न एवायं गृह्यते स्वरूपेण समवायात्तु तथा प्रतिभास इति चेत्। तत् किं समवायोऽपि कश्चित्परमार्थतोऽस्ति। आमिति चेत्। अयमपरो गण्डस्योपरि पिटकोद्भेदः। अवयवावयविनावपि तावद्भेदैकान्तेन पृथग्भूतौ समर्थयितुम्, किं पुनरपरः समवायः। अथानिष्पन्नभाव एव तेषां समवायः। तर्हि सिद्धः कथंचिद्भेदः। ग्रन्थस्थमपि चात्रैव चहस्तकम्।

एवं च—

प्रयत्नसाधितश्च परस्य क्षिपति तेऽनुमानततिम्।
गम्भीकरोति किं न हि पलाण्डुकूटदृष्टानुकरणं ॥ ६४७ ॥
प्रयत्नाभिमते च हेतूनामभिधानतः।
कालात्ययापदिष्टत्वं स्पष्टं निष्टङ्कयता त्वया ॥ ६४८ ॥

नावयवेभ्योऽवयवी भिन्न एवावयवविवेचनस्यान्यथानुपपत्तेरित्यनुमानबाधितश्च पक्षः। निरस्तितावयवेभ्योऽन्यत्र नेतुमशक्यत्वं ह्यत्रावयवविवेचनत्वम्। तच्च तन्त्वादिभ्यः पटादेः पृथक्कृत्य नेतुमशक्यत्वेन सुप्रसिद्धम्। न चैकद्रव्यवर्तिरूपादिभिर्व्यभिचारः। तेषामपि तद्द्रव्यतादात्म्यात्कथंचिदेकत्वात्। अपि च व्यवच्छेदस्य भेदसाम्प्रदत्तादीनि साधनानि सर्वाण्यपि कथंचित्तया सामान्येन वा संगी

येरन्। आद्ये कल्पे विरुद्धता कथंचिद्व्यवच्छेद्यव्यवच्छेदकभावास्पदत्वादीनां कथंचिद्भेदेनैव व्याप्तत्वात्। द्वितीये तु प्रतिवाद्यसिद्धिः। जैनानां सर्वथा व्यवच्छेदकभावास्पदत्वादेस्तन्तुपटादिष्वप्रसिद्धेः। तृतीये तु संदिग्धानैकान्तः। सामान्येन व्यवच्छेद्यव्यवच्छेदकभावास्पदत्वादिसद्भावेन भवितव्यमेव। कथंचिद्भेदेनेत्यत्र प्रमाणाभावात्। निश्चितव्यवहारश्च व्यवच्छेद्यव्यवच्छेदकभावास्पदत्वहेतुः। षण्णां पदार्थानामस्तित्वमित्यादौ तद्भावेऽपि भेदाभावात्। अथ सदुपलम्भकप्रमाणविषयत्वं धर्मान्तरं षण्णामस्तित्वमिष्यत इति न हेतोर्व्यभिचारः। तदचारु। सप्तमपदार्थप्रसक्तेः। अथ षट्पदार्थव्यतिरिक्तानामपि धर्माणामभ्युपगमान्नायं दोषः। तथा च पदार्थप्रवेशकग्रन्थः— 'एवं धर्मैर्विना धर्मिणामुद्देशः कृतः'[1] इति। असदेतत्। तेष्वेषां संबन्धानुपपत्तेः। तमन्तरेण च धर्मधर्मिभावायोगात्। अन्यथातिप्रसंगात्। न च संयोगलक्षणोऽत्र संबन्धः। संयोगस्य गुणत्वेन द्रव्येष्वेव भावात्। नापि समवायस्वरूपः। स तावत्तस्य सर्वत्रैकत्वाभ्युपगमात्। समवायेन च सह समवायसंबन्धे द्वितीयसमवायाभ्युपगमप्रसंगात्। षड्भिः पदार्थैर्धर्माणामुत्पादनात्। तथा ते. संबन्धाभ्युपगमे पटादयोऽपि तन्त्वादिसंबन्धिनस्तथैव स्युरिति समवायाख्यसंबन्धान्तरकल्पनावैयर्थ्यप्रसक्तिः। भवतु वा षण्णामस्तित्वं धर्मान्तरम्। तथापि व्यभिचार एव। तदस्तित्वेऽपरास्तित्वाद्यभावेऽपि तदस्तित्वप्रमेयत्वाभिधेयत्वानीति व्यवच्छेद्यव्यवच्छेदकभावप्रवृत्तेः। अथ तत्राप्यपरास्तित्वाद्यभ्युपगमस्तदानवस्थाप्रसक्तिः। न चेष्टत्वान्न दोषः। सर्वेषामप्युत्तरोत्तरधर्माधारत्वाद्धर्मित्वप्रसक्तेः षडेव धर्मिणः प्रोक्ता इत्येतस्यानुपपत्तेः। न च धर्मिरूपा एव ये त एव षट्त्वेनावधारिता इति वक्तव्यम्। गुणादीनामनिर्देशप्रसंगात्। न हि गुणादीनां धर्मिरूपतैव किंतु द्रव्याश्रितत्वाद्धर्मरूपत्वमिति। यस्त्वाह— सदुपल-

1 प्र. पा. भाष्ये पृ. ५५. ३.

म्मकप्रमाणगम्यत्व पणामस्तित्वमभिधीयते । तच्च पदपदार्थविषय ज्ञान, तस्मिन्सति सदिति व्यवहारप्रवृत्ते । एव प्रमाणजनित प्रमेयत्वमभिधानजनितमभि

नीलादिविलक्षणे पीतादौ प्रतिभासमाने नीलादिप्रत्यभिज्ञानमस्ति । तस्मात्कथचिद्विरुद्धनीलादितादात्म्येनावस्थित कथचिदेक चित्ररूपमुपगन्तव्यम् । तथा च व्यभिचार स्पष्ट ।

एव च वैशेषिककुञ्जराणा दर्शानुमानीदर्शनावलीयम् ।
दोषैरनेकैश्चलिताद्य मूलात्क्लेशस्थिते केवलमस्ति हेतु ॥ ६४९ ॥

यच्चोक्तम्—' स्थूलप्रतिभासो न स्यात् ' इति तदप्यसाधीय । तदवयवानामवयविशेषस्य कथचिदविष्वग्भूतस्यैकस्य चावयविशब्दवाच्यस्याभ्युपगमात् । एव च तादृशस्थूलावयविव्यपेक्षयाऽणुत्वव्यपदेशोऽपि परमाणुषु सूपपाद एव । अपि च शुचिविचारचातुरीचुञ्चुचेतसा शेमुषीचक्षुषि नायमेकान्तेनैकरूप परिस्फुरतीति कथचिदनेकैनानेन भवितव्यम । न चानेकेऽमी अवयवेभ्यो भिद्यमानमूर्तय समुपलभ्यन्त इति यावन्तोऽवयवास्तावन्मात्रमेकत्वमवयविन स्वीकर्तव्यम् । तथा हि– यदेकान्तेनैकरूप न तदनेकवृत्ति चलाचल रक्तारक्तमावृतानावृत्त वा भवितुमर्हति । एकान्तैकरूपश्चावयवी स्वीकृतस्त्वयेति व्यापकविरुद्धोपलब्ध । अनेकवृत्त्यादि व्यापकमनेकत्व तद्विरुद्ध चैकत्वमत्रोपलभ्यमानमनेकत्व व्यावर्तयति । तच्च व्यावर्तमानमनेकवृत्त्यादि स्वव्याप्यमादायैव व्यावर्तत इति । अथात्र यौग , किमिद स्वतन्त्रसाधन प्रसगसाधन वा । न प्रथमम् । अवयविन प्रमाणासिद्धत्वेन हेतोराश्रयासिद्धत्वदोषात् । प्रमाणसिद्धत्वे वा तत्प्रतिपादकप्रमाणाबाधितपक्षनिर्देशानन्तरप्रयुक्तत्वेन तस्य कालात्ययापदिष्टत्वदोषदुष्टत्वात् । न च परस्यावयवी सिद्ध इति नाश्रयासिद्धत्वदोष इति वक्तु युक्तम् । यत परस्य किं प्रमाणतोऽसौ सिद्ध स्यादप्रमाणतो वा । प्रमाणतश्चेद्भवतोऽपि किं न

सिद्धः । प्रमाणसिद्धस्य सर्वान्प्रत्यविशेषात् । तथा च तदेव कालात्ययापदिष्टत्वं हेतोः । अथाप्रमाणतस्तर्हि प्रमाणं विना प्रमेयस्यासिद्धिरित्येव च वाच्यम् । किमनुमानोपन्यासेन । अप्रमाणासिद्धश्च परस्यापि न सिद्ध इति पुनरप्याश्रयासिद्धत्वम् । नापि प्रसंगसाधनमेतत् । यतो व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको यत्र प्रदर्श्यते स प्रसंगः । व्याप्याभ्युपगमश्च परस्य प्रमाणपूर्वकत्वेन त्वयावधारितोऽन्यथा वा । आद्यपक्षे न प्रसंगस्योत्थानम् । तेनैव प्रमाणेन तद्व्याप्तेः पराकरणात् । द्वितीयपक्षे तु प्रमाणमेव परः प्रष्टव्यः । किंप्रमाणकोऽयं तवाभ्युपगम इति । न च परस्यैकान्तैकरूपत्वस्यानेकवृत्त्यभावादेश्च व्याप्यव्यापकभावः प्रासिध्यत् । अनेकवृत्त्यादिसद्भावेऽपि सामान्यादावेकत्वस्य प्रमाणसिद्धत्वादिति । तदेतदखिलमनल्पलुष्टपलालपूलपर्यन्तमनुकरोति । यतः प्रथमपक्षस्तावदनभ्युपगमादेव निरस्तः । प्रसंगसाधनकल्पे तु यौ विकल्पावकल्पयिषाता तौ यदा शब्दनित्यत्वादितूष्णीकामाकलय्य स्थातुमर्हसि त्वम् । तत्प्रतिषेधानुमानस्य सकलस्य तेन तिरस्करणात् । अथाप्रमाणसिद्धस्तर्हि पर एव प्रमाणं प्रष्टव्यो, न चैवम् । तत्र तत्र तत्प्रतिषेधानुमानोपन्यासात् । अथाप्रमाणसिद्ध एव पराभ्युपगमः परं.... .... .... .... .... ....राभ्युपगमप्रतिषेधं परित्यज्यान्यत्र प्रसंगः प्रत्यपादि । तथा हि— यद्येकान्तैकरूपत्वमूरीक्रियतेऽवयविनस्तदा तद्व्यापकमनेकवृत्त्यभावादिकमपि भवेदिति संभावनागर्भाभ्युपगमद्वारेण प्रसंगमभिधाय तस्य न .. .... .... .... प्रतिपाद्यते । एकान्तैकरूपत्वाविरुद्धं ह्यनेकरूपत्वं तेन व्याप्तस्यानेकवृत्त्यादेरत्रोपलम्भः । विपर्ययहेतुरेव च मौलो हेतुः । न चायं नोभयोरपि सिद्धोऽनेकवृत्त्यादेस्तत्रोभयसंमतत्वात् । नाप्याश्रयासिद्धोऽवयव .... .... .... .... माणस्यात्रानेनोपस्थानात् । यत्खलु यन्मात्रनिमित्तं तत्तस्मिन्सति भवत्येव यथाऽ-

न्यकारणसामग्रीमात्रनिबन्धनोऽङ्कुरस्तस्या सत्या भवत्येव। विरुद्ध-धर्माध्यासमात्रनिमित्तश्चानेक

भावास्सर्वत्राभवनप्रसङ्गोऽत्र विपर्यये बाधकं प्रमाणम्। तथा हि-यथा निमित्ताभावेऽपि भवतोऽहेतुकता। तथाऽविकले

विरुद्धधर्माध्यासस्यानेकत्वनिबन्धनत्वाभावेऽनेकत्वर्कि...न्ती च सुर-नेऽस्तमियात। यदुक्तम्-' यदि विरुद्धधर्माभ्याम पदार्थाना भेदको न स्यात्तदान्यस्य तद्भेदकस्याभावाद्विश्वमेकं स्यात्। प्रतिभासभेदस्यापि

तस　सर्वात्मनैकदेशेन वा

वर्तेत। यदि सर्वात्मना तदा यावन्तोऽवयवास्तावन्त एवावयविन स्यु। स्वभावभेदमन्तरेण प्रत्यवयवं तस्य सर्वात्मना वृत्त्यनुपपत्ते। एवं च युगपदनेककुण्डादिव्यवस्थितबिल्वादिवदन

भागाभावान्नियतत्व च

कार्यद्रव्यस्य भवेत्। एकस्यापि च जनकत्वेन सामग्र्याऽजनकत्व प्रतीयमान व्याहन्येत। अवयवेषु चावयवीति प्रत्ययाभाव प्रसज्यते। वृत्तौ चैकस्मिन्नवयवे युगपद्भावाभावौ स्याताम्। तथा ह्ये

वर्तते तदपि न

प्रशस्यम्। निरंशस्यावयविन स्वीकारात्। सांशत्वे वा तेऽपि ततो भिन्ना स्युरभिन्ना वा। भिन्नत्वे पुनरप्यनेकांशेषु वृत्तेरेकस्य सर्वात्मनैक-देशविकल्पा नेति

निमज्जेदंशिनि वांश। प्रथमपक्षे तद्वत्करचरणशिरोग्रीवादिष्वप्य-वयवेषु किं नास्य निमज्जनमभ्युपगम्यते। तथाभ्युपगमे चापरावयवि-कल्पना न स्यात्। अवयवप्रचयात्मकत्वात्तस्य। द्वितीयपक्षे तु निर शोंऽशी भवेत्तत्र च पूर्वनीतिनोऽनेकवृत्तित्वे वा विरुद्धधर्माध्यासि-

षु पुरुषावयविन सम्बधयति तावदन्त्यादिष्वपि किं न सम्बधयेदवृ-त्तेरविशेषात्। अथ वर्तते तदा तत्रापि यदि समवायो

वृत्तिन्तदाऽनवस्था । किं च वृत्तेः समवायरूपत्वपरिभाषायामपि न विरुध्यते .... .... .... .... द्वितीये तु यावदवयव-मवयविनो भवेयुरिति सिद्धो विरुद्धधर्माध्यासः । अथ सर्वैकदेशादि-भेदशब्दः । न च भेदशब्दस्याभिन्नेऽवयविन्युपपत्तिर्बहुषु दृष्टत्वात् । तथा हि– बहूनामन्यतम ए.... .... .... ... दृश्यत एव । अथौपचारिक एवायं पटकारणेषु तन्तुषूपचारतः पटा-भिधानप्रवृत्तेस्तत्सामानाधिकरण्येन सर्वादिशब्दप्रयोगादिति चेत् । नैवम् । एवं सर्वदैव पटशब्दाद्बहुवचनप्र.... .... .... ति वाच्यमस्य व्यपदेशस्य गौणत्वे स्खलद्वृत्तितयाऽगौणाद्भेदप्रसक्तेर्न चासावस्ति । तथा हि– सर्वः पटः कुण्डेषु वर्तत इत्यत्र नैवं बुद्धिर्न पटो वर्तते किंतु तत्कारणभूतास्तन्तव इति । किं च भेदे.... .... युक्तः । सोपपादि वाऽत्र सर्वादिशब्दप्रयोगस्तथापि न शब्दप्रवृत्त्य-नुपपत्तिमात्रप्रेरणया वस्त्वर्थस्य प्रतिषेधः शक्यते विधातुम् । तत्र तच्छब्दाप्रवृत्तावपि व्यासव्यासिशब्दयोः प्रवृत्त्युपपत्तेः । तथा ह्य.... .... .... .... स्न्यैकदेशाभ्यां व्याप्ता तौ विहाय प्रकारान्तरेण वृत्तेरसंभवात् । यत्खल्वर्थान्तरभूतं यत्र वर्तते तदेक-देशेन य.... .... .... ....त्वं तच्चैकस्य व्याहन्यते । अथावयवानामेव चलाचलत्वं विरुद्धधर्मसंसर्गः । ततोऽ-र्थान्तरभूतस्यावय .... .... .... .... विनमायोगात् । तथा हि– यदा पुरुषो हस्तमुत्क्षेप्तुमपक्षेप्तुं वेच्छति तदा हस्तवत्यात्मप्रदेशे प्रयत्नो जायते .... .... .... तं प्रयत्नं हि तस्योत्क्षेपणापक्षेपणयोरशक्यकरणत्वाद्गुरुत्वस्यापि कारणत्वम् । यदा तु शरीरं चलयितुमिच्छति तदा .... .... स्तु निमित्तकारणमिति चेत्तद .... .... तमावतः स्यात् । अथ नाय तत्र स्थितिस्तर्हि गच्छती.... .... .... .... दैव स्वावयवेषु समवायात् । अथ गमननिवृत्तिः स्थितिस्तदा प्रोक्त

एव दोप । अथ व्याप्यवृत्त्येव कर्मेति तावत्न
सयोगस्तत्र समुपलभ्यते चैत्रोऽत्र सयुक्त इति प्रतीतेर्नाहि करशाखा-
मात्रेऽपि चलिते चैत्रस्य चलनमुपलभ्यत
अथात्रावयविसयोगो भवत्येव तत्कारणस्यावयवसयो-
चैत्रश्चलतीति
प्रत्ययानुत्पत्तेरिति तनुद्धोऽप्यमेव तस्यावा यमानस्यानुभवात् । अथा-
त्मनि शरीरचलनेच्छया श रक्तत्वाव-
दवयविरूपस्यारक्तत्वप्रसक्तेर्युगपद्रक्तारक्तरूपद्वयोपलब्धिप्रासे । अपि
च तदारम्भकोऽप्यवयवो यदवयविरूपस्तदा सयोगस्याव्याप्यवृत्ति
तया तत्राप्येकदेशवृत्तित्वमिति तुल्य पर्यनुयोग । अथाणुरूपस्तदा
णूनामतीन्द्रियावयवाश्रित सयोगोऽप्यनाद्रिय एवेति न रक्तोपलम्भो
भवेत् । अथ तृतीय पक्ष । तदप्ययुक्तम् । सयोगस्याप्याश्रयानुप-
लब्धावनुपलब्धे । अन्यथा घटपिशाचसयोगस्याप्युपलब्धि स्यात् । एव
चाङ्गुलिरूपवद्रागस्याप्यदृष्टाश्रयस्यानुपलब्धेराश्रयोपलब्धावेवोपलब्धेरि-
ति व्याप्यवृत्तिरसावपि स्यात् । एतेन च व्याप्यवृत्तिना व्यभिचार ।
तस्याश्रयानुपलब्धावप्युपलम्भात् । अथारब्धेष्ववयवेषु समवेतद्रव्यस्यो-
पलब्धावपि न रागसयोगस्योपलब्धिरित्याश्रयोपलब्धौ नास्योपलब्धिरेवे-
त्यव्याप्यवृत्तित्वमुच्यते । नैतदपि युक्तम् । रक्तारक्तावयवसमवेतस्याव-
यविन एकत्वात्तदुपलम्भे रागद्रव्यसयागस्याप्यवश्यमुपलम्भोपपत्ते ।
अन्यथा तदैक्यायोगात् । अनैकान्तिक चेदमव्याप्यवृत्तित्वमाश्रयो-
पलब्धावपि व्याप्यवृत्ते रसादे कदाचिदनुपलम्भात् । तन सिद्ध
रक्तारक्तत्व विरुद्धधर्मससर्ग इति । आवृतानावृतत्वमपि तथैव ।
तथा हि– कौपीनादिना शरीरस्यैकदेशावरणे सकल तदाव्रियते न
वा । प्रथमपक्षे निरवितवास्यवत्सकलस्यानुपलब्धिप्रसग । अथ
नेति पक्ष । अवयवावरणेऽपि हि न शरीरस्यावरणमवयवावारकद्रव्य-

१ न पुस्तके अत्र कानिचिदक्षराण्यसगतानि सन्ति ।

संयोगस्य तदावरणे सामर्थ्याभावात् । न खलु यावानवयवद्रव्यसंयोगोऽवयवमावृणोति तावानेवावयविनं तस्य महत्त्वात् । यद्येवं प्रदेशतस्तस्यावरणमस्ति न वा । अस्ति चेत् । न युक्तमेतत् । अनंशस्य प्रदेशाभावस्तथा तस्यावरणस्यानुपपत्तेः । उपपत्तौ तु विरुद्धधर्मसंसर्गः स्पष्ट एव । अथावयवावारकद्रव्यसंयोगेनावयविनः प्रदेशतोऽपि .... .... .... .... .... शे तस्योपलब्धिप्रसंगात्समग्रोऽप्यवयवी विलोक्येताविशेषात् । न ह्यवयवानामावरणे चावयविनः कश्चिद्विशेषोऽस्ति । उभयत्रास्यानावृतस्याभ्युपगमात् । समग्रासमग्रशब्दयोश्च यथात्र वृत्तिस्तथोक्तमेव । अवयवावरणेऽप्यवयविनोऽनावरणे च तत्र तस्य वृत्तिविरोधः । यत्खलु यत्र वर्तते.... .... .... यथा घटादावाव्रियमाणे तद्गत .... .... .... दिना कतिपयावयवानामावरणात्तस्याप्यावरणं स्वीकर्तव्यम् । यथा च सिद्धो विरुद्धधर्मसंसर्गस्ततोऽपि कथंचिदनेकत्वं ततोऽपि चावयवेभ्यः कथंचिदविष्वग्भाव इति ।

यच्चोक्तम्—' अनेकवृत्त्यादिसद्भावेऽपि सामान्या ... .... .... तदप्यनवद्यतम् । कथंचिदनेकत्वप्रतिपादकस्यैव प्रमाणस्य तत्र प्राक्प्रतिपादनात् ।

इति विचारधुरामधिरोपितो न पुनरेति घटामवयव्यसौ ।
अवयवव्यतिरेकमुपेयिवानतितरां कथमस्तु सखे ततः ॥ ६५० ॥

स्वकप्रतीकप्रकरात्कथंचिद्भिन्नस्वरूपं कलशादिवस्तु ?
प्रत्यक्षल .... .... लक्षणं सम्प्रति शिक्षयाम ॥ ६५१ ॥

एवं खल्वमी समाचक्षते न रूपादिभ्यः पृथग्भूतोऽवयवी प्रत्यक्षे लक्ष्यते । चक्षुराद्यक्षप्रभवप्रत्यये रूपादिपरमाणुप्रचयस्यैव प्रतिभासात् । नाप्यनुमानेनावयविभावाविनाभावभाजो लिङ्गस्य कस्याप्यसंभवात् । प्रत्युत बाधकमेव तत्रानुमानमुत्तिष्ठते । तथा हि— यदुत्पत्तौ निमित्तं नोपपत्तिमियर्ति तन्नास्ति यथा वान्ध्येयो नोपपद्यते चावयव्युत्पत्तौ

किंचिन्निमित्तमिति । तथा हि– द्व्यणुकाद्यवयव्युत्पत्तौ निमित्त परमाणुसंयोग समयो　　　　　　कदेशेन वा स्यात् । यदि सर्वात्मना तत्र पिण्डस्याणुमात्रतापत्तेर्विनीर्णस्तोयाञ्जलिरवयविकथाये । अथैकदेशेनेति पक्ष । सोऽपि न क्षम । परमाणूना देशाभवात् । तत्समेत तेषा परमाणुत्वायोगात । दिग्भागभेदेन परमाणुषट्के न युगपद्युज्यमानाना तेषा षडंशतानुषङ्गात् । तस्मादस्य स्थूलाकाररूपा परमाणव एव परमार्थसन्त स्वीकर्तव्या । त एव च स्थूलतयानिर्भासन्निच्छुना अपि तदाकारप्रतीतेर्निमित्ततामुपयान्ति चिकुरा इव तैमिरिकोपलब्धेरिति ।

करोत्यहो रक्तपटेषु राज्यमेकान्तपक्षास्थितिमोहराज ।
यल्लक्ष्यमाणे जगतापि साक्षाद्विशिष्य जल्पन्ति तदन्यदेते ॥६५२॥

तथा हि– यत्तावदिद ' रूपादिपरमाणुप्रचयस्यैव प्रतिभासात् ' इति तन्मत् । यत किमिद प्रचयशब्दाभिधेय धीमताभीतम् । देश, प्रत्यासत्ति, सयोगविशेषो भूयस्त्वमात्र वा । प्रथमपक्षद्वयेऽवयविसिद्धिरप्रत्यूहा । देशस्य व्योमादेरात्मभावस्य स्वयमवयवित्वादवयविना समानन्यायतया सयोगस्य स्वीकारे प्रागेवावयविकक्षीकाराच्च । तृतीयपक्षे न चक्षुरादे परमाणुप्रचयस्य प्रतिभास स्यात । रूपादीना प्रतिनियतेन्द्रियग्राह्यतया तत्परमाणुप्रचयस्यैकेन्द्रियाविषयत्वात् । नापि प्रतिनियतैरपीन्द्रियै प्रतिनियतानामपि तेषा ग्रहणमनुगुण परमाणूना हृषीकगोचरतामसत्त्वाद्विषयलक्षणरहितत्वाद्स्वाकारानाननकत्व हि विषयलक्षणमाचक्षते भिक्षव । न च तदणूना विद्यते । सत्र स्थूलाकारस्यैव सवेदनात् । विलक्षणाकारानाननकस्यापि विषयभावे चक्षुरादेरपि विषयत्व स्यात् । अथ नीलाद्याकारापकत्व परमाणूनामस्ति तद्रूपेणैव विषयत्वम् । तदयुक्तम् । यतोऽय नीलाद्याकार स्थूलात्मकत्वेनैव सवेद्यते न परस्परासंश्लिष्टपरमाण्वात्मकत्वेन । कुतश्चाय विशेषोऽवधार्यते नीलाद्याकारस्यैव बाह्यतन्यत्र न स्थूला

कारस्येति । न ह्याकारतादिना स्थूलाकारवन्नीलाद्याकारोऽपि ज्ञानस्याद्याकाराद्र्थान्तरभूतः कदाचिद्दर्शि । तत्कथं प्रत्यक्षानुपलम्भाभ्यामपि विशेषस्तदाकारयोः कार्यकारणभावो व्यवस्थाप्यते । अर्थापत्त्या तु स्थूलाकारस्यापि बाह्यजन्यत्वसिद्धिः स्यात् । समानयोगक्षेमत्वात् । बहवः संनिविष्टाः परमाणव एव स्थूलत्वेनावभासन्त इति चेत् । नैवम् । संनिवेशस्तेषां देशप्रत्यासत्तिः संयोगविशेषो वेत्यादिनास्य प्रचयवन्निर्मूलनार्हत्वात् । प्रत्येकमसंचितास्थूलेषु परमाणुषु तथाकारं ज्ञानं च भ्रान्तमेव स्यात् । अथ बुभुक्षाक्षामकुक्षेः क्षीरोपढौकनं प्रातरेवैतत्प्रियमेव हि मे स्थूलैकप्रतीतिर्भ्रान्तत्वमिति चेत । स्यादेतदेवम् । यदि कालकूटच्छटालाञ्छनं तत्र न स्यात् । एवं हि क्वचिदभ्रान्तेन स्थूलैकाकारप्रत्ययेनावश्यं भवितव्यम् । सर्वत्राभ्रान्तिपूर्वकत्वात् भ्रान्तेः । न खल्वनाकलितसत्यकलधौतस्य पुंसः शुक्तिशकले कलधौतभ्रान्तिर्भवितुमर्हति । वासनावशादेवामूदृशी प्रतीतिः प्रादुर्भवतीति चेत् । तत्किं शुक्तौ रजतप्रतीतिर्न वासनानिमित्ता यदगृहीतरजतस्य कदाचिन्नोल्लसति । ततो वासनाप्यस्य प्रत्ययस्यास्तु निमित्तम् । किं तु नेयमणुगृहीततया स्थूलाकारस्योद्बोद्धुमर्हति । किं च यदि वासनावशात्तथा प्रतीतिस्तदा कथं कोटिप्रमाणानामपि पुंसां घटे घटोऽयं घटोऽयमित्येकाकारैवाहंप्रथमिकया प्रतीतिरुज्जिहीते । वासनाया एकत्वादिति चेत् । नन्वेकत्वमेकस्वरूपमेकाढक्षत्वं वा विवक्षितम् । नाद्यः कल्पः । अनेकसंतानस्थितैकवासना .... .... .... ....

.... किमुत्तरं वितरति । अथास्त्वेवं बाह्यस्याभावो ज्ञानस्यैव परमार्थसत्त्वादिति चेत् । न । तस्यापि परमाणुरूपत्वेन प्रकृतदूषणानतिक्रमात् । मा भूत्तदप्यस्तु । परमकाष्ठानिष्ठं शून्यमेवेति चेत् । नैवम् । तस्य प्रागेव प्रतिघातात् । संयोगहेतुस्वभावापेक्षयेति पक्षस्तु कक्षीक्रियत एव । दिग्भेदेनाणुसंयोगहेतुभूतस्वभावलक्षणांशानां पर-

माणुषु समतत्वात् । कथमन्यथा नीराहरणाद्यर्थक्रियाकारिण कुम्भादेर्निवृत्ति । न हि परमाणवस्तत्कारिण परस्परमसंश्लिष्टत्वात्कपालप्रतिकपालादिकल्पपवत् । अथ देशप्रत्यासत्तिभाजस्ते तत्कारिण । नैवम् । अवयविनोऽनभ्युपगमे देशप्रत्यासत्तेरप्यनुपपत्ते । घटाधारभूप्रदेशस्यावयवित्वात् । नैरन्तर्येणोत्पन्नास्तत्कारिण इति चेत् । ननु नैरन्तर्यमेकत्र देशेऽवस्थानम्, अन्तरालाभावो वा । आद्यपक्षोऽस्मदृष्टाद्विक्षित । सौगतानामेकदेशस्यासम्भवात् । द्वितीये तु किमन्तरालशब्दवाच्यं स्यात् । यद्याकाशं तन्न सिद्धं स्वावयवी तस्यापि सप्रदेशत्वात् । आलोकमन्त परमाणवोऽन्तरालं तस्य चाभावो घटादिपरमाणूनामन्तरेषु स्पष्ट एवेति चेत् । न त्वन्तरशब्दवाच्यं व्योम स्यादन्तरालमेव वा । आद्ये कृतोत्तर एव । द्वितीये तु सुतरामालोकतम परमाणूनां तत्र भावोऽभिहितो भवेत् । अन्तराले हि यदान्तरालाभावोऽभिधीयते तदाऽन्तरालशब्दाभिधेया आलोकतम परमाणवस्तत्र सिद्धा स्वीकर्तव्या । न चालोकतम परमाणवो नियता केचन निश्चिता सन्ति येषु क्वापि तदपेक्षयाऽऽलोकतम परमाणूनामभावोऽभिधीयेत । कपालानि च जलाहरणं कथं न कुर्यु । तदन्तरालभूतेष्वालोकतम परमाणुषु तदपेक्षया तेषाममावात् । अस्तु वा यत्किंचिदन्तरालशब्दवाच्यं तथापि पाषाणखण्डपरमाणव किमिति न जलाहरणं कुर्वन्ति । तेषां नैरन्तर्यात्पाषाणस्य तत्रापि भावात् । अथ तेनैवाकारेणोत्पन्नास्ते तत्कारिणो नान्यथा । नन्वेतदप्यस्मदृहभिक्षितमेव । आकारशब्देन संयोगविशेषादे कस्यचिदभिधानात् ।

अहो नु खलु बौद्धाना भिक्षुत्वमपि युज्यते ।
भिक्षाशीलतयैवैषां यद्गृहे जायतेऽखिलम् ॥ ६७३ ॥

एवं च—

संयोगहेतुभूतस्वभावपक्षे स्थितेऽणुषु प्रकटे ।
अवयविजन्मनिमित्तं संयोगं सगतिमगच्छन् ॥ ६७४ ॥

सिद्धे चास्मिन्नुपन्यस्तं यत्पुन साधनं त्वया ।
स्थूलस्याभावसंसिद्धौ तदसिद्धमिति स्थितम् ॥ ६५५ ॥

त एव च स्थूलतथाविधाकृति-
च्युता अपीत्यादि यदप्यजल्पत ।
तदप्यशेषं गदितोत्तरक्रमा-
दपास्तमेवेति बुधेन बुध्यताम् ॥ ६५६ ॥

परिहर ततो दूरादेतान्कलङ्कविसंस्थुला-
नवयविकथाच्छेदे विह्वलीकमनोरथान् ॥
न खलु विदुषां निन्दापात्रं कथंचन कश्चन
क्वचन कुरुते प्रेक्षाकारी परिग्रहपातकम् ॥ ६५७ ॥

एवं च महीप्रमुखं द्रव्यचतुष्कं कणादनिर्दिष्टम् ।
कथमपि नोपैति घटां यन्नित्यानित्यतास्पदं सिद्धम् ॥ ६५८ ॥

यदप्युक्तम्– ‘ आकाशकालदिश इतरेभ्यो भिद्यन्ते’ इत्यादि । तत्र दिशोऽसत्त्वेन वक्ष्यमाणत्वात्पक्षैकदेशासिद्धो हेतुः । आकाशे तु द्वयी विप्रतिपत्तिरावयोरेकान्तनित्यत्वे निरंशत्वे च । तत्रैकान्तनित्यत्वमपहस्तितं प्रागेव । निरंशत्वं तु निरस्यते ।

आकाशस्य निरंशत्व-खण्डनम् ।

अथ कथमेवं शक्यं निरंशमाकाशम्, सर्वजगद्व्यापित्वात् । यन्न निरंशं न तत्तथा दृष्टम् । यथा घटः । न च न तथेदं तस्मात्तथा, इत्यनुमानस्य निरंशत्वासिद्धौ बद्धकक्षस्य सत्त्वात् । तदयुक्तम् । पक्षस्यानुमानेन बाधितत्वात् । तथा हि– नाकाशमनंशम् , सकृद्भिन्नदेशद्रव्यसंबद्धत्वात् । काण्डपटवत् , इति । यदप्युच्यते– ‘ निरंशमाकाशं सदावयवानारभ्यत्वात्परमाणुवत्’ इति । तदप्यनेनैव निरस्तम् । अनुमानबाधितपक्षत्वाविशेषात् । किं च यदि सर्वथा सदावयवानारभ्यत्वं हेतुस्तदा प्रतिवाद्यसिद्धः पर्यायार्थादेशात्पूर्वपूर्वाकाशप्रदेशेभ्य उत्तरोत्तराकाशप्रदेशोत्पत्तेः कथं-

१ ध्वजदण्डस्थवस्त्रवत् ।

चित्तद्भिन्नस्य व्योम्नोऽपि समुत्पादादारभ्यारम्भकभावोपपत्तेः । अथ कथंचिदवयवानारभ्यत्वं हेतुस्तदा विरुद्धः । कथंचित्सांशत्वस्य सर्वथा निरंशत्वविरुद्धस्य साधनात् । स्यान्मतम् । नाकाशस्य प्रदेशा मुख्याः सन्ति स्वतोऽनवधार्यमाणत्वात्परमाणुवत् । पटादीनां हि मुख्याः प्रदेशाः स्वतोऽवधार्यमाणाः सिद्धाः । सुरसरणौ[1] तु स्वतोऽवधार्यमाणत्वं न तेषामस्ति । घटाकाशं पटाकाशमित्युपाधिवशादेवावधारणात्तदनुपपन्नम् । द्व्यणुकादीनां द्व्यणुकाद्यवयवैरनेकान्तिकत्वात् । तेषामस्मदादिभिः स्वतोऽनवधार्यमाणानामपि मुख्यतया भावात् । अत्यन्तपरोक्षत्वात्तेऽस्मदादिभिः स्वतो नावधार्यन्त इति चेत् । तत एवाकाशप्रदेशाः स्वतोऽनवधार्यमाणाः सन्त्वस्मदादिभिः । अतीन्द्रियार्थदर्शिनां तु यथा द्व्यणुकादयः प्रदेशाः स्वतोऽवधारणीयास्तथाकाशप्रदेशा अपीति स्वतोऽनवधार्यमाणत्वादित्यसिद्धो हेतुः । उपचरितत्वे चाकाशप्रदेशानां मुख्यकार्यकरणं न स्यात् ।

मज्जनतयोपचरितोऽपि दुर्जनप्रकृतिरत्र कोऽपि पुमान् ।
न खलु जनकर्णकुहरं सिञ्चति वचनामृतच्छटया ॥ ६५९ ॥

अन्यथा मुख्यसज्जनत्वप्रसंगात् । प्रतीयते च मुख्यं कार्यमनेकपुद्गलादिद्रव्यावगाहनलक्षणम् । निरंशस्यापि विभुत्वात्तद्युक्तमिति चेत् । कथं विभु निरंशं चेति । सर्वद्रव्यव्यापकत्वं हि विभुत्वम् । तत्कथं निष्प्रदेशस्य स्यात् । किं च कथंचित्सांशमाकाशं परमाणुभिरेकदेशेन संयुज्यमानत्वात्पटवत् । तस्य तैः सर्वात्मना संयुज्यमानत्वे परमाणुमात्रत्वप्रसंगः । तथा चाकाशबहुत्वापत्तिः । स्यान्मतम् । नैकदेशेन सर्वात्मना वा परमाणुभिराकाशं संयुज्यते किं तर्हि संयुज्यत एव यथावयवी स्वावयवैः, सामान्यं वा स्वाश्रयैः समवेयत एवेति । तदसत् । साध्यसमत्वान्निदर्शनस्य । तस्याप्यवयव्यादेः सर्वथा निरंशत्वे स्वावयवादिभिरेका-

---

१ सुरसरणि — आकाश । अनन्तं सुरवर्त्म खम् इत्यमरः ।

न्ततो भिन्नैः संबन्धे यथोक्तदोषानुषङ्गात् । कार्त्स्न्यैकदेशव्यतिरिक्तस्य प्रकारस्य तत्संबन्धनिबन्धनस्यासिद्धेः । कथंचित्तादात्म्यस्य तत्संबन्धत्वे स्याद्वादमतसिद्धिः । सामान्यतद्वतोरवयवावयविनोश्च कथंचित्तादात्म्योपगमात् । न चैवमाकाशस्य परमाणुभिः कथंचित्तादात्म्यमित्येकदेशेन संयोगोऽभ्युपगन्तव्यः । तथा च सांशत्वसिद्धिः । किं च सांशमाकाशम्, श्येनमेषाद्यन्यतरोभयकर्मजसंयोगविभागान्यथानुपपत्तेः । श्येनेन हि स्थाणोः संयोगो विभागश्चान्यतरकर्मजः । तत्रोत्पन्नं कर्म स्वाश्रयं श्येनं तदाकाशप्रदेशाद्वियोज्य स्थाण्वाकाशदेशेन संयोजयति । ततो वा विभज्याकाशदेशान्तरेण संयोजयतीति प्रतीयते । न चाकाशस्यांशाभावे तद्घटते । कर्माश्रयभूतश्येनस्थाण्वोरेकदेशत्वात् । एतेन मेषयोरुभयकर्मजः संयोगो विभागश्चाकाशस्याप्रदेशत्वे न घटत इति निवेदितम् । क्रियानुपपत्तिश्च तस्या देशान्तरप्राप्तिहेतुत्वेन व्यवस्थितत्वाद्देशान्तरस्य चासंभवात् । तत एव परत्वापरत्वपृथक्त्वाद्यनुपपत्तिः पदार्थानां विज्ञेया । यदि च निरंशमाकाशं तर्हि तद्वत्तदाश्रितस्य शब्दस्यापि व्यापित्वापत्तिः । तस्याव्याप्यवृत्तित्वे वा कथं तदधिकरणस्य व्योम्नः सांशत्वं न स्यात् । यतो व्याप्यवृत्तित्वमस्य पर्युदासरूपं वा स्यात् । आद्यपक्ष एकदेशवृत्तित्वमेवाभिहितम् । भवेदाकाशं व्याप्य शब्दो न वर्तत इति ब्रुवतस्तदेकदेशे वर्तत इत्यापत्तेः । व्याप्यवृत्तित्वं हि सामस्त्यवृत्तित्वं तत्प्रतिषेधे त्वेकदेशवृत्तित्वमेव भवति ।

एवं च—

ध्वनिरेकदेशवृत्तिः प्रदेशशून्ये च वर्तते व्योम्नि ।
इति मे माता वन्ध्येत्यस्य चिरान्मित्रमीक्षितं सूक्तम् ॥६६०॥

प्रसज्यपक्षे तु व्याप्यवृत्तौ निषिद्धायां नभसः एकदेशानभ्युपगमे तेनापि वृत्त्यसंभवे वृत्तिमात्रस्यापि प्रतिषेधः स्यात् । न चैतत्त्वोपपद्यते । शब्दस्य गुणत्वस्वीकाराद्गुणस्य चावश्यं द्रव्याश्रितत्वा-

स्समवाय एव वृत्तिरिति चेत् । न । तस्य निराकरिष्यमाणत्वात् । यदि च निरंशं नभो भवेत्तदा श्रवणसमवेतस्येव ब्रह्माण्डवर्तिनोऽपि शब्दस्यास्मदादिभिरुपलम्भः स्यात् । निरंशैकाकाशलक्षणश्रोत्रसमवेतत्वात् । अथ धर्माधर्माभिसंस्कृतकर्णशष्कुल्यवच्छिन्नाकाशदेश एव श्रोत्रम् । तत्र ब्रह्माण्डवर्तिनः शब्दस्यासमवायान्नास्मदादिभिरुपलम्भः । नन्वयमधर्मपिनिलप्रवेशन्यायेन सावयवत्वाङ्गीकार एव परिहारः । श्रोत्राकाशदेशात् ब्रह्माण्डवर्तिशब्दाधाराकाशस्यान्यत्वात् । किं चैतस्मिन्नभ्युपगमे सन्तानवृत्त्या शब्दस्यागतस्य श्रोत्रेणोपलब्धिर्न स्यात् । अपरापराकाशदेशोत्पत्तिद्वारेणास्य श्रोत्रसमवेतत्वासंभवात् । कृशानुवेश्मान्तर्नाभैकदेशनाशस्य चापनीपद्येन । अभिनैकनभःसंसर्गात् । तथा हि— येनैव वियत्स्वभावेन स कृशानुसंयुक्तस्तेनाखिलमपरमपि वेश्म विपिनपलालकूटादिकमित्यनल्पज्वालाजालकरालकृशानुसत्त्वेऽत्र त्रिभुवनमप्यासज्येत ।

तदेवमस्मिन्निरामुपस्थिते समन्ततोऽपि व्यसने सुदुस्तरे ।
स्वैरं वैशेषिक साधनानि च किमाग्रहैरभिहृदङ्ककर्कशैः ॥६६१॥
यत्तु नामसत् व्योम स्वरूपेणापि सौगताः ।
तेषामपोऽनुमानास्य सेनानी शिरसाग्रम ॥ ६६२ ॥

तथा हि— युगपन्निखिलद्रव्यावगाहः साधारणकारणापेक्षो, युगपन्निखिलद्रव्यावगाहत्वात् । य एव स एवम् । यथैकसरःसलिलान्तःपातिमत्स्याद्यवगाहः, तथावगाहश्चाय तस्मात्तथा । यच्चापेक्षणीयमत्र साधारणं कारणं तदाकाशमिति । नन्वालोकतमसोरेवाशेषपदार्थावगाहे साधारणकारणत्वं भविष्यति कथमस्मादाकाशसिद्धिरिति चेत् । तदयुक्तम् । आलोकतमसोरप्याकाशाभावेऽवगाहस्यायोगात् । ननु समवायिनां यथाकाशेऽवगाहस्तथा तस्याप्यपराश्रयेऽवगाहेन भाव्यमित्यनवस्था वे । अस्य स्वरूपेऽवगाहेऽखिलार्थानामपि स्वात्मन्येवावगा

१ इत्याद्युत्तम पाठः स्यात् ।

हप्रसक्तेः कथमाकाशस्यातः सिद्धिरित्यपि न किंचन । आकाशस्य व्यापित्वेन स्वावगाहित्वसंभवादनवस्थानुपपत्तेरन्यार्थानामव्यापित्वेन स्वावगाहित्वाभावाच्च । न हि किंचिदल्पपरिणामं वस्तु स्वाधारं दृष्टं पुण्डरीकादेस्तोयाद्याधारत्वदर्शनात् । कथं तर्हि दिक्कालात्मना व्योम्न्यवगाहो व्यापित्वादिति कश्चित् । सोऽपि न सूक्तवादी । तेषां व्यापित्वासिद्धेः । तदसिद्धिश्च दिग्द्रव्यस्यासत्त्वेन कालात्मनोश्चासर्वगतद्रव्यत्वेनाभिधास्यमानत्वात्प्रतीता । नन्वेवमपि कालात्मनोरमूर्तत्वेनानाधेयतासंभवात्कथमाकाशाश्रयता । इत्यप्यमनोज्ञम् । ज्ञानादेरमूर्तस्याप्यात्मन्याधेयताप्रतीतेः । एतेनामूर्तत्वान्नाकाशं कस्यचिदधिकरणमित्यपि परास्तम् । आत्मनोऽमूर्तस्यापि ज्ञानाधिकरणत्वप्रतीतेः । आत्मसिद्धिश्च करिष्यते ।

एवं च—

अस्त्येव नित्यं विभु सप्रदेशं कथंचिदाकाशमितीहितं नः ।
संन्यायमार्गोपनिपन्निषण्णस्वान्तस्थितीनामसिधत्कृतीन्द्राः ।६६२।

कालविचार. ।

काले तु त्रयो विवादा एकान्तनित्यत्वे निरंशत्वे व्यापित्वे च । तत्राद्यः समादधे । द्वितीयोऽप्याकाशनिरंशत्वनिरसनदिशाऽपसारणीयः । नित्यनिरंशैकरूपत्वे चास्य कथं भिन्नदेशानेककार्यकारित्वं घटते । ब्रह्मणोऽप्येवंविधस्यानेकग्रामारामादिकार्यकर्तृत्वानुषङ्गतस्तदद्वैतासिद्धिप्रसङ्गात् । विचित्रसहकारिवशात्तस्य तथाविधस्यापि तत्कर्तृत्वाविरोध इत्यप्यन्यत्राविशिष्टमविद्यादेः सहकारिणो ब्रह्मण्यपि संभवात् । न च स्वरूपमभेदयतां सहकारित्वं संभवतीति स्थाने स्थाने प्रागवोचाम । अतोऽत्र यौगपद्यादिप्रत्ययानुपपत्तिरेव । यत्खलु कार्यजातमेकस्मिन्क्षणे कृतं तद्युगपत्कृतमित्युच्यते । कालस्य च नित्यैकत्वादिरूपत्वे तदुत्पाद्यत्वेन कार्याणामेकदैवोत्पत्तिप्रसंगान्न किंचिदयुगपत्कृतं स्यात् । तथा च युगपत्कृतमपि न किंचिद्भवेत् । अयुगपत्कृतापेक्षयैव

तेऽन्योन्यमविशिष्टाः । परस्परस्वरूपविविक्ततया तेषां प्रत्यक्षतः प्रतीतेः । प्रत्येकमपि चैषां विशिष्टतानुभूयत एव । न हि युगपद्भुक्ता सुप्ताः स्थिता गताश्चेत्यादौ तत्प्रत्ययानामविशेषोऽस्ति । प्रतीतिविरोधात् । अस्तु वा तत्प्रत्ययाविशेषस्तथाप्यतः कालस्यैकस्वरूपत्वाभ्युपगमे गुरुत्वादिप्रत्ययाविशेषाद्गुरुत्वपरिमाणादेरप्येकत्वस्वरूपत्वप्रसंगः । तुल्याक्षेपसमाधानत्वात् । ततो गुरुत्वपरिमाणादेरप्यनेकगुणरूपतावत्कालस्यानेकस्वरूपताभ्युपगन्तव्या । नित्यनिरंशैकस्वरूपत्वे चास्यार्थानां भूतभविष्यद्वर्तमानत्वं दुर्घटम् । अतीतानागतवर्तमानकालभेदाभावात् । सिद्धे हि तद्भेदे तत्संबन्धादर्थानां तथा व्यपदेशः स्यान्नान्यथा । अतिप्रसंगात् । अस्तु वा तत्र तद्भेदः । तथाप्ययं स्वतोऽपरातीतादिकालसंबन्धादतीतादिक्रियासंबन्धाद्वा स्यात् । न तावत्स्वतः । नित्यनिरंशत्वभेदरूपत्वयोर्विरोधात् । नाप्यपरातीतादिकालसंबन्धात् । अपरकालस्यैवासंभवात् । संभवे वाऽनवस्था । तदतीतत्वादेरप्यपरातीतादिकालसंबन्धेनैवोपपत्तेः । अथातीतादिक्रियासंबन्धात्तथाविधकालसंबन्धाद्वा । प्रथमविकल्पेऽनवस्था । द्वितीयविकल्पे त्वन्योन्याश्रयः । सिद्धे हि क्रियाणामतीतादित्वे तत्संबन्धात्कालस्यातीतादित्वसिद्धिः । तत्सिद्धौ च तत्संबन्धात्तासां तत्सिद्धिरिति । भवतु वा कुतश्चित्तत्रातीतादिभेदसिद्धिस्तथापि कालस्य सर्वथैकस्वरूपत्वप्रतिज्ञाने स्ववचनविरोधः । स्ववाचैवास्यातीतादिरूपतया भेदप्रतिपादनात् । लोकविरोधश्च । न खलु लौकिका अतीतादिरूपस्य पूर्वाह्णमध्याह्नापराह्णस्वभावस्य शीतोष्णवर्षास्वरूपस्य च कालस्यैकत्वं प्रतिपद्यन्ते । प्रत्येकं तस्य तैर्भेदाभ्युपगमात् । अनुमानविरोधश्च । तथा हि—यत्सूक्ष्मेतरधर्माध्यस्तं द्रव्यं तदनेकस्वरूपं, यथा पृथिव्यादि । सूक्ष्मेतरधर्माध्यस्तं च कालद्रव्यमिति । यथैव हि पृथिव्यादिद्रव्यस्य परमाण्वितररूपतया जीवद्रव्यस्य च कुन्थु[1]गजादिस्वभावतया सूक्ष्मेतरधर्माध्यस्तत्वादनेकस्व-

१ कुन्थुः- स्वल्पप्रमाणो जन्तुः ।

रूपत्वं तथा कालद्रव्यस्यापि समयमुहूर्तादितद्विशेषापेक्षया तत्तद्धर्मायत्तत्वसमवायानेकत्वस्वरूपत्वं प्रतिपत्तव्यम् । व्यापकत्वं चास्य नोपपादि प्रसाधकप्रमाणाभावात् । अथ कालः सर्वगतो द्रव्यत्वे सत्यमूर्तत्वाद् व्योमवत्, तदस्यैव तद्युक्तम् । यतः किमिदममूर्तत्वं नाम विवक्षाञ्चकृवानसि । अचाक्षुषत्वं रूपादिरहितत्वं सर्वगतद्रव्यपरिमाणास्पदत्वम्, असर्वगतद्रव्यपरिमाणाभाववत्त्वम्, असर्वगतद्रव्यपरिमाणसमवायाभाववत्त्वं वा । आद्ये भेदे समीरेण व्यभिचारः । तस्याचाक्षुषद्रव्यस्याप्यसर्वगतत्वात् । द्वितीये तु मनसा तस्य त्वया रूपादिरहितत्वेन स्वीकृतस्यासर्वगतत्वेनोपगमात् । तृतीये पुनरितरेतराश्रयसमवतारः । सर्वगतद्रव्यपरिमाणास्पदत्वसिद्धौ हि कालस्य सर्वगतत्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरिति । चतुर्थे तु कोऽयं कालेऽसर्वगतद्रव्यपरिमाणस्याभावः । किं प्रागभावः प्रध्वंसोऽत्यन्ताभावः इतरेतराभावो वा । न तावत्प्रथमौ । त्वन्मतेन कालेऽसर्वगतद्रव्यपरिमाणस्य कदाचिदवर्तिष्यमाणत्वात् अवृत्तत्वाच्च । यदि हि कदाचित्कालस्य तद्भावि भवेत्तदा संप्रति प्रागभावः स्यात् । यदि च भूतं भवेत्, तदा संप्रति प्रध्वंसः स्यात् । न चैवम् । न तृतीयः । कालेऽस्माकमसर्वगतद्रव्यपरिमाणात्यन्ताभावस्यासिद्धत्वात् । नापि चतुर्थः । घटादेरपि सर्वगतत्वापत्तेः । तस्याप्यसर्वगतद्रव्यपरिमाणस्वरूपेणासङ्कीर्णत्वादितरेतराभाववत्त्वात् । अथासर्वगतद्रव्यपरिमाणसमवायाभाववत्त्वमिति पञ्चमः पक्षः । न च घटादेः सर्वगतत्वापत्तिः । तत्र तादृक्परिमाणसमवायाभावस्याभावादिति चेत् । ननु तत्समवायस्याप्यभावो न तावत्प्रागभावप्रध्वंसस्वरूपः प्रतिपादनीयस्तादृक्परिमाणसमवायस्य त्वन्मतेन काले कदाचिदभावात् । अत्यन्ताभावः पुनरसिद्धः कालस्यासर्वगतद्रव्यपरिमाणादिस्वरूपत्वेनास्माभिः स्वीकृतत्वात् । इतरेतराभावस्तु तस्य तेन कथञ्चित्स्वरूपमभिश्रयतः समस्त्येव । किं त्वयमनैकान्तिकः कुम्भादिना । तस्यासर्वगतद्रव्य-

परिमाणसमवायेन स्वरूपेणासंकीर्णस्वभावतया नदितरतराभाववत्त्वेऽप्यसर्वगतत्वात् । ततो नेदमनुमानं साधु । अनुमानबाधितपक्षत्वाच्च । तथा हि– कालः सर्वगतो न भवति व्योमान्यत्वे सति द्रव्यत्वात् । यदेवं तदेवम् । यथा पुद्गलद्रव्यम् । तथा चायं तस्मात्तथेति ।

एवं च—

नित्यनिरंशव्यापकरूपो यः पर्यकल्पि किल कालः ।
अटति स न घटाकोटिं तद्विपरीतस्ततोऽस्तु बुधाः ॥ ६६३ ॥
आलोक्य स्वीकृतं कालद्रव्यमस्माभिरस्फुटः ।
करोत्यकाण्ड एवात्र शाक्यस्तल्लोपडम्बरम् ॥ ६६४ ॥

नातीतादिभेदभिन्नः कालः कोऽप्यस्ति यत्संबन्धादर्थानामतीतादित्वं स्यात् । स्वतः परतो वाऽस्यैतद्भेदानुपपत्तेः । स्वतो हि कालस्यातीतादित्वेऽर्थानामपि स्वत एव तदस्तु । अलं कालकल्पनया । परतोऽप्यतीतादिकालान्तराभिसंबन्धादतीतादिक्रियाभिसंबन्धाद्वा । तस्यातीतादित्वाभ्युपगमे प्रागुक्तदोषानुषङ्गः । अतः पौर्वापर्यादिनोत्पन्नेषु पदार्थेषु पूर्वापरादिसंकेतसमुद्भूतमनस्काराभोगनिबन्धनमतीतादिज्ञानमात्रमेवास्ति न पुनरतीतादित्वम् ।

तदुक्तम्—

‘विशिष्टसमयोद्भूतमनस्कारनिबन्धनम् ।
परापरादिविज्ञानं न कालान्नो दिशश्च तत् ॥ १ ॥’

अहो वाचाटतादोषादेष सौगतदुर्दुरः ।
एतेषां दोषसर्पाणां दृष्टिगोचरतां गतः ॥ ६६५ ॥

तथा हि— यदवादि ‘नातीतादिभेदभिन्नः कालः कोऽप्यस्ति’ इति । तत्र तस्यासत्त्वं प्रमाणबाधितमेव । कार्यत्वहेतोस्तत्स्वरूपानुमापकस्य सद्भावात् । तथा हि— कटकमुकुटादिवस्तूनां वर्तना बहि-

---

१ तत्त्वसंग्रहे श्लो ६२९।

रङ्गकारणापेक्षा कार्यत्वात्तन्दुलपाकवत् । यवद्बहिरङ्गं कारणं स काल । का पुनरियं वर्तना नाम प्रतिद्रव्यपर्यायमन्तर्णीतैकसमया स्वसत्तानुभूतिर्वर्तना ।

'अन्तर्णीतैकसमय स्वसत्तानुभवोऽभिधा ।
य प्रतिद्रव्यपर्यायं वर्तना सह कीर्त्यते ॥'

इति वचनात् । ननु कालवर्तनाया व्यभिचार स्वयं वर्तमाने कालस्यैकत्र समये तदभावात् । न हि कालसमय स्वसत्तानुभूतौ प्रयोजकमपरमपेक्षते । स्वयं सर्वप्रयोजकस्वभावत्वात् । स्वप्रयोजकस्य सर्वप्रयोजकस्वभावत्वविरोधात् । सवनविज्ञानस्य स्वरूपपरिच्छेदकत्वाभावे सर्वपरिच्छेदकस्वभावत्वविरोधवत् । तदसत् । काले वर्तनाया अनुपचरितरूपणासद्भावात । यस्य हि सत्तान्येन वर्त्यते तस्य सा मुख्या वर्तनात्र विवक्षिता । क्रमसाधनत्वात्तस्या । कालस्य तु नान्येन सत्ता वर्त्यते । स्वयं सत्तावृत्तिहेतुत्वादन्यथानवस्थानुषङ्गात् । ततः कालस्य स्वतो वृत्तिरेव । उपचारतो वर्तनात् । वृत्तिवत्तयोर्विभागाभावान्मुख्यवर्तनानुपपत्ते । ननूपचरितवर्तनात्मकवृत्त्यापि व्यभिचारो दुर्निवार । कार्यत्वे सत्यप्यस्या बहिरङ्गनिमित्तत्वासम्भवात । तद्युक्तम । अकालवृत्तित्वे सति कार्यत्वादिति सविशेषणस्य हेतो सामर्थ्यादवसीयमानत्वात् । यथा पृथिव्यादय स्वतोऽर्थान्तरभूतज्ञानवेद्या प्रमेय

दि नान तन्मूर्तद्रव्यव्यतिरिक्तपदार्थनिबन्धन तत्प्रत्ययविलक्षणत्वात । सुखादिप्रत्ययवत । यद्यपि दिग्लिङ्गविशेषाणामेकैव तथापि प्रदक्षिणावर्तपरिवर्तमानमार्तण्डमण्डलमरीचिनिचयचुम्ब्यमानकाञ्चनाचलकटकसंयोगोपाधिवशात् पूर्वापूर्वदक्षिणादक्षिणेत्यादयो दश प्रकारा कल्प्यन्ते देवतापरिग्रहवशाच्च पुनर्दशैव दिग्भेदा व्यपदिश्यते । ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ऐशानी नागीया ब्राह्मी चेति । अत्रोच्यते । यदप्युक्तम 'मूर्तष्वेव द्रव्येषु' इत्यादि । तदसंगतम् ।

यतोऽमी प्रत्ययाः कार्यभूताः सन्तः कारणमात्रस्यैवानुमापकाः । न दिग्द्रव्यलक्षणकारणविशेषस्य । तत्र च सिद्धसाध्यता । तेषामाकाशलक्षणकारणपूर्वकत्वाभ्युपगमात् । तस्यैव दिगिति नामान्तरकरणे नाम्न्येव विवादो नार्थे । दिशस्ततो द्रव्यान्तरत्वासिद्धेः । न च दिग्द्रव्यासंभवे क्व प्राच्यादिव्यवहारः स्यादित्यभिधातव्यम् । आकाशप्रदेशश्रेणिष्वेवादित्योदयादिवशात्प्राच्यादिव्यवहारोपपत्तेः । तथा चैषा न निर्हेतुकत्वं स्यात् । तथाभूतप्राच्यादिदिक्संबन्धाच्च मूर्तद्रव्येषु पूर्वापरादिप्रत्ययविशेषस्योत्पत्तेर्न परस्परापेक्षया मूर्तद्रव्याण्येव तद्धेतवो येनैकतरस्य पूर्वत्वासिद्धिः । तदसिद्धौ चैकतरस्य पूर्वत्वासिद्धिरितीतराश्रयत्वेन पूर्वापरप्रत्ययाभावः स्यात् । ननु मूर्तद्रव्येषु पूर्वादिप्रत्ययस्याकाशप्रदेशश्रेणिहेतुत्वे आकाशप्रदेशश्रेणावपि तत्प्रत्ययस्य किं हेतुत्वं स्यादिति चेत् । स्वरूपहेतुत्वमेवेति ब्रूमः । तत्प्रदेशपङ्क्तेः स्वपररूपयोः पूर्वापरादिप्रत्ययहेतुस्वरूपत्वात् । प्रकाशस्य स्वपररूपयोः प्रकाशहेतुस्वरूपवत् । कथमन्यथा दिक्प्रदेशेष्वपि तत्प्रत्ययोत्पत्तिः स्यात् । तत्र हि पूर्वापरादिप्रत्ययोत्पत्तिः स्वभावतो दिग्द्रव्यान्तरापेक्षया परस्परापेक्षया वा स्यात् । यदि स्वभावतस्तदा तत्प्रत्ययपरावृत्तिर्न स्यात् । यत्र हि दिक्प्रदेशे पूर्वप्रत्ययहेतुत्वं तत्र तदेव नापरप्रत्ययहेतुत्वं स्यात् । यत्र च तत्र तत्र पूर्वप्रत्ययहेतुत्वमिति । अस्ति च तत्परावृत्तिः । यत्र हि दिक्प्रदेशे विवक्षितप्रदेशापेक्षया पूर्वप्रत्ययहेतुत्वं दृष्टं तत्रैवान्यप्रदेशापेक्षयाऽपरप्रत्ययहेतुत्वम् । तदाह—

‘प्राग्भागो यः सुराष्ट्राणां मालवानां स दक्षिणः ।
प्राग्भागः पुनरेतेषां तेषामुत्तरतः स्थितः ॥’ इति ।

दिग्द्रव्यान्तरापेक्षया तत्र तत्प्रत्ययहेतुत्वेऽनवस्था । तत्रापि तत्प्रत्ययहेतुत्वस्यापरदिग्द्रव्यहेतुत्वप्रसङ्गात् । परस्परापेक्षया च तत्प्रदेशानां तत्प्रत्ययहेतुत्वेऽन्योन्याश्रयानुषङ्गः । ‘सवितुर्मेरुप्रदक्षिणमावर्तमान-

---

१ वै. द. प्र. पा. भा. पृ. २९ प. ४ ।

स्य' इत्यादिन्यायेन दिग्द्रव्ये प्राच्यादिव्यवहारोपपत्तौ नभोदेशपङ्क्तिष्वप्यत एव तद्व्यवहारोपपत्तेरलं दिग्द्रव्यकल्पनया । अन्यथा देशद्रव्यस्यापि कल्पनाप्रसङ्ग । अथ मतं पूर्वो देश इत्यादिप्रत्ययस्यापि देशद्रव्यमन्तरेणानुपपत्ते । तथा च नव द्रव्याणीति द्रव्यसंख्याव्याघात स्यात् । पृथिव्यादिरेव देशद्रव्यमित्यनुपपन्नम् । तस्य पृथिव्यादिप्रत्ययहेतुत्वेनायमतः पूर्वो देश इति प्रत्ययहेतुत्वानुपपत्ते । अथ पूर्वादि … गुणेनापि प्रत्यक्षेण शब्देनानैकान्त इति चेत् । नैवम् । एतस्मिन्नाकाशगुणत्वस्य निषेत्स्यमानत्वात् । तत्र यदात्मा मध्यमो यदि बुद्धिस्तदानीमप्रत्यक्षैव स्यात् । न च तदेति प्रमाणविपर्ययावतार । तथा हि— यदस्मदादिप्रत्यक्षं न तदत्यन्तपरोक्षगुणिगुण । यथा घटरूपादि । तथा च बुद्धिरिति सिद्धं प्रत्यक्षेणैवात्मनोऽस्मद्गतत्वम् । ननु नास्य प्रत्यक्षेण तथा प्रतीतिर्युक्ता । तस्य नियतदेशावच्छेदेनाहमिति शब्दप्रयोगानास्पदत्वात् । न ह्येतावति प्रदेशे ममास्यात्मेति प्रत्ययमानि कस्याप्युदेति । तदपि नोपपद्यते । शरीरमात्रेऽहमास्मि मदीय इत्युल्लेखवता स्वसंवेदनेन तत्प्रतीतिसद्भावात् । अस्तु वा नियतदेशोल्लेखिशब्दप्रयोगानास्पदत्वम् । तथापि कथं प्रत्यक्षेण तदनुभवः । न हि शब्दानुविद्धत्वं प्रत्यक्षस्य स्वरूपम् । येन तदभावे तस्याथस्वरूपविवेचकत्वाभाव स्यात् । तत्र तदनुविद्धत्वस्य प्रागेव कृतोत्तरत्वात् । सतोऽनुभवोत्तरकालीन एव सर्वत्र शब्दप्रयोग । अनुभूते तत्कथमाध्यासितवस्तुनि यत्राऽनुभवप्रबोधनिबन्धन संकेतस्मरणमुपजायते तत्रैव शब्दप्रयोगो नान्यत्र तत्कथं तत्प्रयोगादनुभवाभाव । नियतदेशोल्लेखिशब्दाप्रयोगादेशनैयत्यानुभवे न कालाकारनैयत्यस्याप्यननुभव स्यात् । न हि घटस्य सुखित्वस्य च बहिरन्तप्रतीतौ तत्कालाकारनैयत्ययोरिदमिदानीमित्थमिति शब्दानां प्रयोगोऽस्ति । अतोऽत्र प्रतीतौ प्रतिनियतस्य वस्तुस्वरूपस्य कस्यचिदपि

प्रतिभासाभावात्खपुष्पप्रतीतितो नास्याः कश्चिद्विशेषः स्यात् । सत्त्वासत्त्वप्रतिभासकृतः सोऽत्रास्तीति चेत् । न । सदसच्छब्दयोरप्रयोगे तस्याप्यसंभवात् । अस्तु वासौ तथापि परमाण्वाकाशप्रतीतितः किंकृतोऽस्याविशेषः स्यात् । स्फुटत्वास्फुटत्वप्रतिभासकृत इति चेत् । न । नियतदेशकालाकारग्रहणव्यतिरेकेण स्फुटत्वास्फुटत्वप्रतिभासस्यैवासंभवात् । ततः प्रत्यक्षप्रतीतेरितरप्रतीतितो विशेषमिच्छता देशादिनैयत्यप्रतिभासस्तच्छब्दाप्रयोगेऽप्युपेतव्यः । न च भवतापि शब्दानुविद्धमेव प्रत्यक्षं कक्षीचक्रे निर्विकल्पकस्यापि प्रत्यक्षस्याभ्युपगमात् । इति सिद्धा प्रत्यक्षेणात्मनः सर्वगतत्वबाधा । अनुमानेनापि साऽस्त्येव । तथा हि— नात्मा सर्वगतः क्रियावत्त्वात् । यदेवं तदेवम् । यथा वायुस्तथा चायं तस्मात्तथेति । न चास्य क्रियावत्त्वमसिद्धम् । प्रत्यक्षेणैव तत्प्रतीतेः । तथा हि— प्रत्यक्षेण सर्वो देशान्तरमायान्तमात्मानं प्रतिपद्यते । तथा च अहमद्य योजनमेकमागत इति । मनः शरीरं वा समागतमिति चेत् । किं पुनस्तदहंप्रत्ययवेद्यम् । तथा चेच्चार्वाकमतानुषङ्गः । अथ यथा स्थूलोऽहमिति शरीरमात्रनिमित्तः । प्रत्ययस्तथागतोऽहमित्यादिरपीति चेत् । नन्वहं सुखीत्यादिरपि किं न तथा स्यात् । सुखस्यात्मनि समवायादात्मगोचर एवायमिति चेत् । गतिरप्यात्मनि समवत्येवेति सोऽपि तन्निमित्तः किं न स्यात् । अथ नात्मा क्रियावान्, सर्वगतत्वात्, गगनवदित्यनुमानबाधितत्वात्तत्र गतेरसंभव एव । नैवम् । इतरेतराश्रयापत्त्या हेतोरसिद्धत्वात् । सिद्धे हि तस्य क्रियावत्त्वाभावे सर्वगतत्वासिद्धिः । तत्सिद्धौ च क्रियावत्त्वाभावसिद्धिरिति । सिद्धं प्रत्यक्षेणैव तत्र क्रियावत्त्वम् । अनुमानतोऽपि तत्सिध्यति । तथा हि— क्रियावान् आत्मा, अन्यत्र द्रव्ये क्रियाहेतुत्वात्, समीरणवदिति । कालेन व्यभिचारान्न हेतुर्गमकोऽत्रेति चेत् । न । कालस्य क्रियाहेतुत्वाभावात् । क्रियानिर्वर्तकत्वं हि क्रियाहेतुत्वमिह साधनम् । न पुनः क्रियानि-

मित्तमात्रत्वम् । तस्य काले सद्भावाभावान्न व्यभिचारः । कालो हि परिणामिनां निमित्तमात्रम् । स्थविरगतौ यष्टिवत् । न पुनः क्रियानिर्वर्तकः पर्णादिपतनवत् । नात्मा शरीरादेः क्रियाहेतुः । निर्गुणस्यापि मुक्तस्य तद्धेतुत्वप्रसङ्गात् । प्रयत्नो धर्मोऽधर्मश्चात्मनो गुणो हि शरीरेऽन्यत्र चाद्रव्ये क्रियाहेतुस्ततोऽसिद्धो हेतुरिति परेषामाशयो न युक्तः । प्रयत्नस्य गुणत्वासिद्धेः । वीर्यान्तरायक्षयोपशमादिकारणादिना ह्यात्मप्रदेशपरिस्पन्दः प्रयत्नः क्रियेति स्याद्वादिभिः स्वीकारात् । धर्माधर्मयोरपि पुद्गलपरिणामत्वसमर्थनान्नात्मगुणत्वम् । सत्यप्यात्मनः प्रयत्नादेरात्मगुणत्वे सर्वथात्मनो भिन्नो न प्रमाणसिद्धोऽस्तीति निवेदितम् । कथंचित्तदभिन्नस्तु शरीरादेः क्रियाहेतुरित्यात्मैव तद्धेतुरुक्तः स्यात् । तथा च कथमसिद्धो हेतुः प्रयत्नवदात्मसंयोग एव शरीरादेः क्रियाहेतुरिति चेत् । नैवम् । एवमप्यस्य स्वाश्रयादात्मनः कथंचिदभेदेनात्मन एव क्रियाहेतुत्ववचनात् । भेदेऽपि क्रियावान्, आत्मा, तद्धेतुगुणाश्रयत्वात्, वायुवत् । इत्यनुमानात्तस्य क्रियावत्त्वमेव सिध्यति । गगनेन व्यभिचारोऽत्रेति चेत् । न । तस्य क्रियाहेतुगुणाश्रयत्वासिद्धेः । संयोगस्तद्धेतुस्तत्र गुणोऽस्तीति चेत् । नैवम् । तस्य तद्धेतुत्वासिद्धेः । समीरसंयोग एव हि तृणादेः क्रियाहेतुः । न पुनराकाशतृणादिसंयोगः । सदा तत्सद्भावेन सदैव तत्र तदुत्पत्तिप्रसक्तेः । न च य एव तृणादेः समीरसंयोगः स एवाकाशेऽस्तीति प्रतिसंयोगि, संयोगस्य भेदात् । अथ यथाऽप्स्वप्यपेक्षया वह्निसंयोगः कुम्भादेः रूपादीन्पाकजाञ्जनयति न पुनः स्वाश्रये कृष्णवर्त्मनि तथात्मसंयोगोऽपि शरीरादौ क्रियाहेतुर्नात्मनि स्वाधार इति चेत् । तदयुक्तम् । यतो यदि नामायं संयोगः स्वाश्रये पाकजानजनयन्नन्यत्र ताञ्जनयति । तदा प्रस्तुते किमायातम् । न हि चापेन पञ्चाशद्ध्वनिनिदर्शनमात्रोपन्यासेन हि क्रियाहेतुगुणाश्रयत्वहेतोर्नाम मनागपि व्याप्तिं खण्डयितुं पार्यते । अथ तस्य सक्रियत्वे लेष्ट्वादिव मूर्तत्वमि-

मवन्य. स्यात् । तत्र कथं मूर्तिर्नाम । असर्वगतद्रव्यपरिमाणं रूपादिमत्त्वं वा । तत्राद्यः पक्षः कक्षीकृतत्वान्न दोषावहः । द्वितीये तु नास्ति व्याप्तिः । न खलु सक्रियेण तथाविधमूर्तिमतैव भाव्यम् । मनसानैकान्तिकत्वात् । तस्य रूपादिरहितस्यैव परैः स्वीकारात् । अथात्मनः सक्रियत्वे कुम्भादिवदनित्यत्वं स्यात् । तन्न । परमाणुभिर्मनसा च व्यभिचारात् । किं च । अस्यानुतः कथंचिदनित्यत्वं प्रसज्यते । सर्वथा वा । यदि कथंचिन्न प्रसङ्गः । तथास्माभिरभ्युपगमात् । सर्वथा त्वनित्यत्वस्य घटादावप्यसिद्धत्वात्साध्यविकलत्वं दृष्टान्तस्य । किं च । आत्मनो निष्क्रियत्वे संसाराभावः स्यात् । संसारो हि शरीरस्य मनस आत्मनो वा भवेत् । न तावच्छरीरस्य । मनुष्यलोके भस्मीभूतस्य तस्यामरपुरादावगमनात् । नापि मनसः । निष्क्रियस्यास्यापि तद्विरहात् । सक्रियत्वेऽपि क्रियायास्तस्मादभेदे तद्वदनित्यत्वप्रसङ्गान्नास्य क्वचित्क्षणमात्रमप्यवस्थानं स्यात् । भेदे तु संबन्धासिद्धिः । समवायस्य निषेत्स्यमानत्वादन्यस्य चासंभवात् । अचेतनं च मनोऽनिष्टनरकादिपरिहारेणाभिमते स्वर्गादौ कथं प्रवर्तेत । स्वभावत ईश्वरात्तदात्मनोऽदृष्टाद्वा । प्रथमपक्षे दत्तः सर्वत्र ज्ञानाय जलाञ्जलिः । द्वितीये तु शम्भुप्रतिषेध एव समाधानम् । को वायमीश्वरस्याग्रहो यतस्तत्प्रेरयति न तदात्मानम् । आत्मप्रेरणाच्चेदमप्यनुगृहीतं भवति ।

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥' इति ।

तृतीये तु ज्ञातमज्ञातं वात्मना मनः प्रेर्येत । न ज्ञातम् । जन्तुमात्रस्य तत्परिज्ञानाभावात् । नाप्यज्ञातम् । अज्ञातस्य बाणादिवत्प्रेरणासंभवात् । ननु स्वप्ने हस्त्यादयोऽज्ञाता एव प्रेर्यन्ते ।

---

1 महाभा. व. प. अ. ३० श्लो. २८। 2 अयं पाठः प्र. क. मार्तण्डेऽस्ति मूले तु 'न तु' इत्यसंगतमस्ति ।

तदनुचितम् । अहितपरिहारेण हिते प्रेरणासम्भवात् । ज्वलज्ज्वलनज्वालाजालेऽपि तस्य हस्तादिप्रेरणोपलम्भात् । चतुर्थपक्षोऽपि न साधीयान् । अचेतनस्यादृष्टस्यापि तत्प्रेरकतायोगात् । तत्प्रेरितस्यात्मन एव वर प्रवृत्तिरस्तु । चेतनत्वात्तस्य । दृश्यते हि वशीकरणौषधप्रयुक्तस्य चेतनस्यानिष्टस्थानगमनपरिहारेण विशिष्टप्रदेशगमनम् । तत्र मनसोऽपि समानम् । आत्मनस्तु स्यात्, यदि कस्यचित्परित्यागेन देहान्तरसंसर्गो भवेदिति सिद्धमात्मनः क्रियावत्त्वम् । ततोऽपि चासर्वगत्वमिति । यत्पुनरात्मनो विभुत्वसिद्धावभिधीयते । देवदत्तं प्रत्युपसर्पन्तः पश्वादयो देवदत्तविशेषगुणाकृष्टाः प्रत्युपसर्पणवत्त्वाद्ग्रासादिवत् । ग्रासो हि देवदत्तं प्रत्युपसर्पन्देवदत्तविशेषगुणेन प्रयत्नरूपेणाकृष्यमाणो दृष्टः । तत्र पश्वादयोऽपि तथैव युक्ताः इति तदाकृष्टिहेतोर्गुणस्य सिद्धिः । न वा प्राप्तानां तेषां तेन गुणेनाकर्षणं सम्भवतीति तैस्तद्गुणस्य प्राप्तिसिद्धिः । तथा देवदत्ताङ्गनाङ्गादिकं, देवदत्तगुणपूर्वकम्, कार्यत्वे सति तदुपकारकत्वात्, ग्रासादिवत् । कार्यदेशे च सन्निहितं कारणं कार्यजन्मनि व्याप्रियते नान्यथा । अतिप्रसङ्गात् । अतस्तदङ्गनादिकायप्रादुर्भावदेशे तत्कारणत्वेनास्ति-चेद्देवदत्तगुणसिद्धिः । यत्र च गुणाः प्रतीयन्ते तत्र तद्गुण्यप्यनुमीयते । तमन्तरेण तेषामनुपपत्तेः । स्वाश्रयसंयोगापेक्षाणां गुणानामाश्रयान्तरे कर्मारम्भकत्वोपपत्तेश्च । तथा हि— अदृष्टं स्वाश्रयसंयुक्ते आश्रयान्तरे कर्मारभते । एकद्रव्यत्वे सति क्रियाहेतुगुणत्वात्प्रयत्नवत् । न चास्य क्रियाहेतुगुणत्वमसिद्धम् । अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनम्, अणुमनसोश्चाद्यं कर्म, देवदत्तविशेषगुणकारितं, कार्यत्वे सति तदुपकारकत्वात्, पाण्यादिपरिस्पन्दवदित्यनुमानतस्तत्सिद्धेः । नाप्येकद्रव्यत्वमसिद्धम् । एकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत्, इत्यतस्तत्सिद्धेः । एकद्रव्यत्वादित्युच्यमाने रूपादिभिर्व्यभिचारः । तन्निरासार्थं क्रियाहेतुगुणत्वादित्युक्तम् । अस्मिन्नेवाभिधीयमाने

तु करमुसलसंयोगेन स्वाश्रयासंयुक्तस्तम्भादिक्रियाहेतुनाऽनेकान्तः । तन्निरासार्थमेकद्रव्यत्वे सतीति ।

तदेतदफलं सर्वमूपरे कृषिकर्मवत् ।
निर्निमेषपरीक्षाख्यचक्षुषा लक्ष्यते बुधैः ॥ ६६५ ॥

तथा हि—

शरीरमात्मा तद्योग शरीरं युक्तमात्मना ।
आत्मा शरीरसंयुक्त आत्मांशो वा तथाविधः ॥ ६६६ ॥
देवदत्तध्वनेर्वाच्यप्रयोगः प्राचि कथ्यते ।
इत्युग्राम्येति षड्ढी षण्मुखस्येव षण्मुखी ॥ ६६७ ॥
शरीरं चेत्तदा सिध्येत्तदेव व्याप्तिमत्तव ।
नात्मा तथा च जातोऽयं पिपासोः पावकागमः ॥ ६६८ ॥
अथात्मा तत्र नित्यत्वव्यापित्वाभ्यामयं यतः ।
आकृष्यमाणवस्तूनां विद्यते देशकालयोः ॥ ६६९ ॥
न चामूर्तमात्मानं प्रति कस्यापि सर्पणम् ।
युज्यतेऽत्यन्तमाश्लिष्टं यथा मातुः शिशुं प्रति ॥ ६७० ॥

तथा हि—

अर्थोऽन्यदेशोऽपरदेशमर्थं प्रति प्रयातीह यथा शरादिः ।
यद्वान्यकालोऽपरकालमेनं यथा घटादीन्प्रति मृत्तिकादिः ॥ ६७१ ॥
एवं च यत्प्रोक्तमिहानुमाने विशेषणं धर्मिणि यच्च साध्यम् ।
यश्चापि हेतुः सकलं तदेतत्परस्य यज्ञे स्वविकल्पमात्रम् ॥ ६७२ ॥

नापि तत्त्वात्मसंयोगपक्षः संगतिमञ्चति ।
यतो गुणस्वरूपोऽयमिष्यते कणभुक्सुतैः ॥ ६७३ ॥
युक्तो गुणो न चैकस्मिन्गुणानां निर्गुणत्वतः ।
पश्चाद्याकृष्टिकृत्तस्मिन्नदृष्टं तत्कुतो भवेत् ॥ ६७४ ॥
चतुर्थपञ्चमौ पक्षौ प्रतिक्षेप्यौ यथा पुरा ।
प्रतिक्षिप्तौ पुरश्चारिद्वैतीयीकाविमौ स्फुटम् ॥ ६७५ ॥

षट्प्रकारे पुनरात्मनोंऽश
मतात्त्विक स्याद्भिनात्त्विकी वा ।
अतात्त्विकश्चेत्कथमत्र मिथ्ये
न तात्त्विकी नैव भवेद्गुण म ॥ ६७६ ॥

तादृशा गुणनिमिता तत
प्रेत्यतापि परिकल्पिता भवेत् ।
कल्पिनाभिनगनिर्मिता क्वचि
त्तात्त्विकी किमिह तिग्मताम्नि मो ॥ ६७७ ॥

स्वीकृत हन्त वैशेषिकेण त्वया
व्यक्तमेव च तायगत दर्शनम् ।
आत्मसक्त प्रदेशस्ततोऽनात्त्विक
कीर्त्यमान कथ कीर्तये कल्पनाम् ॥ ६७८ ॥

तात्त्विकश्चन्मिनोंऽथवा मेऽव्या
त्स्यात्य तावगायो न पश्य मम ।
प्रस्तुनात्मप्रकारमति वेपहृत्
स्पष्टनिष्टङ्कितागोपगोपायित ॥ ६७९ ॥

मित्र त चेत्प्रश्रयेधाम्न्नानी
पश्चात्ति स्याद्गुणाहृत एव ।
एव चैनस्यैर सयामभावि
किं कनस्य मोक्षम्न्येन पुमा ॥ ६८० ॥

अपि च । शरीरमयुक्तात्मप्रदेशस्य देशान्तरवर्तिपश्चाग्निना प्रातेर-
सभवात् । न चाभासाना तेषा तेन गुणाकर्षण सभवतीति
प्रागुक्त व्याहन्यते । प्रातिसभवे वा प्रत्यग्यापि व्यापकत्वात्कथ
न प्रति पश्चादेश्यसर्पण स्यादिति प्रागुक्त एव दोष । अत्र तस्यापि
देशस्थापर प्रदेश कोऽपि देवदत्तगात्राणस्ताहि तत्रापि तस्य

दूषणमित्यनवस्था । अपि चात्मनः सकाशात्प्रदेशस्य भिन्नत्वे कथं तस्यायमिति व्यपदेशः । तेषु वर्तमानाच्चेत्तदाऽन्वयविपक्षनिक्षिप्ताशेषदूषणानुषङ्गः । अवयविवद्विनाशितापत्तेश्च परलोकाभावः स्यात् । तत्र देवदत्तशब्दवाच्यः कश्चित्परस्य घटते, यं प्रत्युपसर्पणवन्तः पश्वादयः स्वाकर्षणकारणस्य गुणत्वं साधयेयुः । आकर्षणकारणत्वेन च संमतो देवदत्तात्मगुणः किं ज्ञानदर्शनादिरदृष्टं वा स्यात् । प्रथमपक्षे कालात्ययापदिष्टो हेतुः । ज्ञानादीनां पश्वाद्याकर्षणे व्याप्रियमाणानां तद्देह एव प्रत्यक्षादितः प्रतीतेः । अथादृष्टं तर्हि तदाकर्षणं तन्निमित्तमस्माभिरपीष्यत एव । तदात्मगुणत्वं तस्य प्रमाणबाधितमित्यग्रे दर्शयिष्यते । अस्तु वा तस्यात्मगुणत्वं तथापि देवदत्तशरीरसंयुक्त आत्मप्रदेशे वर्तमानमदृष्टं देशान्तरवर्तिपश्वादिषु देवदत्तं प्रत्युपसर्पणवत्सत्क्रियाहेतुरुत देशान्तरवर्तिपश्वादिसंयुक्तात्मप्रदेशे किं वा सर्वत्र । तत्राद्यपक्षो न श्रेयान् । अतिव्यवहितत्वेन तत्रास्य प्राप्तेरभावादाकर्षणहेतुत्वासंभवात् । अथ स्वाश्रयसंयोगसंबन्धसंभवात्तदभावोऽसिद्धः । तदसत् । तस्य सर्वत्र सद्भावेन सर्वस्याकर्षणप्रसक्तेः । यददृष्टेन यज्जन्यते तददृष्टेन तदेवाकृष्यते । न सर्वमित्यवद्यम् । देवदत्तोपभोग्यपश्वादिशरीरारम्भकपरमाणूनां नित्यत्वेन तददृष्टाजन्यतयाकर्षणाभावप्रसंगात् । तथाप्याकर्षणेऽतिप्रसङ्गः । अथ यदेव योग्यं तदेवाकृष्यते । तदवद्यम् । स्वरूपसहकारिव्यतिरिक्ताया योग्यतायास्त्वयानभ्युपगमात् । तस्याश्च विवक्षिताकृष्यमाणपदार्थवदविवक्षितेऽपि भावात् । द्वितीयपक्षेऽपि यथा वायुः स्वयमुपसर्पन्नन्येषां तृणादीनां तं प्रत्युपसर्पणहेतुः । तथाऽदृष्टमपि स्वयं तं प्रत्युपसर्पदन्येषामुपसर्पणहेतुः देशान्तरवर्तिद्रव्यसंयुक्तात्मप्रदेशस्थमेव शब्दवत्प्रतिक्षणमन्यदन्यच्चोत्पद्यमानं वा । प्रथमपक्षे सक्रियत्वेनादृष्टस्य वायुवद्द्रव्यत्वापत्त्या गुणत्वं बाध्येत । किं च । इदं स्वयमेव तं प्रत्युपसर्पत्यदृष्टान्तराद्वा । स्वयमेवास्य तं प्रत्युपसर्पणे देशान्तरवर्तिपश्वादीनामपि तथैव तत्प्रसं-

गान्ददृष्टकल्पनावैफल्यम् । न प्रत्युपसर्पणवत्त्वादिति हेतुश्च व्यभिचारी । अदृष्टान्तरात्तस्य तु प्रत्युपसर्पणेऽनवस्था । तस्याप्यदृष्टान्तरात्तु प्रत्युपसर्पणप्रसङ्गात् । अथ देशान्तरवर्तिपश्वादिसंयुक्तात्मप्रदेशस्यैव तत्रैषां न प्रत्युपसर्पणहेतुः । नैवमन्यत्र प्रयत्नादौ गुणे तथानभ्युपगमात् । न खलु प्रयत्नो ग्रासादिसंयुक्तात्मप्रदेशस्य एव ग्रासादेर्वक्त्रमुखं प्रत्युपसर्पणहेतुः । अन्तरालप्रयत्नवैफल्यप्रसङ्गात् । अथ प्रयत्नवैचित्र्यदर्शनेऽदृष्टेऽप्यन्यथाकल्पनम् । तथा हि— कश्चित्प्रयत्नः स्वयमपरापरदेशवानपरत्र क्रियाहेतुः । यथानन्तरोदितोऽपरश्चान्यत्र । यथा धनुरादिनामकस्थानसंयुक्तात्मप्रदेशस्य एव शरादीनां दूरदेशप्राप्तिक्रियाहेतुरिति चेत् । तर्हीयं विचित्रता पश्वादिसमाकर्षणहेतुभूतगुणानां स्वाश्रयसंयुक्तासंयुक्तपदार्थाकर्षणहेतुत्वेन किं नेष्यते । विचित्रशक्तित्वाद्भावानाम् । तथा दर्शनाभावादिति न वाच्यम् । अयस्कान्तस्पर्शगुणस्य स्वाश्रयासंयुक्तलोहद्रव्यं प्रत्याकर्षणदर्शनात् । अथात्र द्रव्यमाकर्षणकारणं न स्पर्शगुणः । द्रव्यरहितस्य तस्याकृष्टिहेतुत्वादर्शनात् । एवं तर्हि तत एव प्रयत्नस्यापि न ग्रासाद्याकर्षणनिमित्तता स्यात् । तथा च ग्रासादिवदिति दृष्टान्तः साध्यविकलो भवेत् । अथ द्रव्यस्य तत्र कारणत्वे प्रयत्नरहितस्यापि तत्प्रसक्तिरिति चेत् । स्पर्शरहितस्यायस्कान्तस्यापि किं न तत्प्रसक्तिः । तद्रहितस्य तस्यादर्शनादयं दोष इति चेत् । दृष्टिश्चेत्प्रमाणं तर्हि लोहद्रव्याकर्षणोत्पत्तावुभयं दृश्यत इत्युभयमपि तत्र कारणमस्तु । विशेषाभावात् । तथा च न प्रत्युपसर्पणवत्त्वादिति व्यभिचारी हेतुः । तृतीयपक्षेऽपि शब्दवत्परापरस्योपचयापचयमदृष्टं कारणं न तूपपत्ता प्रसक्तं तत्राप्यपरमित्यनवस्था । अन्यथा शब्देऽपि किमदृष्टलक्षणनिमित्तपरिकल्पनया । अथ सर्वत्रादृष्टस्य वृत्तिस्तर्हि सर्वद्रव्यक्रियाहेतुत्वम् । यददृष्टं तद्द्रव्यमुत्पादयति । तदैव तत्र क्रियामुपरचयतीत्यभ्युपगमे शरीरारम्भकेषु परमाणुषु क्रिया न स्यादिति प्रागेवोक्तम् ।

किं च । यथा तद्विशेषगुणेन प्रयत्नाख्येन समाकृष्टास्तं प्रत्युपसर्पन्तो ग्रासादयः समुपलभ्यन्ते तथा नयनाञ्जनादिद्रव्यविशेषेणापि समाकृष्टाः स्त्र्यादयस्तं प्रत्युपसर्पन्त समुपलभ्यन्त एव । ततः किं प्रयत्नसधर्मणा केनचिदाकृष्टाः पश्वादय उत नयनाञ्जनादिसधर्मणेति संदेहः । शक्य ह्येवमनुमानं रचयितुं परेणापि, नयनाञ्जनादिसधर्मणा, विवादगोचरचारिणः पश्वादयः समाकृष्टा देवदत्तं प्रत्युपसर्पन्ति तं प्रत्युपसर्पणवत्त्वाद्वनितादिवत् । अथ तदभावेऽपि प्रयत्नादप्युपसर्पणदृष्टेरनैकान्तिकत्वमस्य प्रयत्नसधर्मणो गुणस्याभावेऽप्यञ्जनादेरपि तद्दृष्टेस्त्वदीयहेतोरपि किं नानैकान्तिकत्वम् । अथाञ्जनादावनुमीयमानस्य प्रयत्नसधर्मणोऽदृष्टाख्यस्य हेतोः सद्भावादव्यभिचारो, अन्यत्राप्यञ्जनादिसधर्मणोऽनुमीयमानस्य सद्भावेनाव्यभिचार एव । तत्र प्रयत्नसामर्थ्याददृष्टस्य वैफल्येऽन्यत्राप्यञ्जनादिसामर्थ्यात्तद्वैफल्यं समानम् । अथाञ्जनादेरेव तद्धेतुत्वे सर्वस्याञ्जनादिमतः स्त्र्याद्याकर्षणप्रसक्तिः । न चाञ्जनादौ सत्यप्यविशिष्टे तद्वतः सर्वान्प्रति तदाकर्षणमवसीयते । ततो यद्वैकल्यात्तत्राकृष्यते तदपि कारणं नाञ्जनादिमात्रमिति । तदेतत्प्रयत्नकारणेऽपि समानम् । न हि सर्वं प्रयत्नवन्तं प्रति ग्रासादय उपसर्पन्ति । तदपहारादिदर्शनात् । ततोऽत्राप्यन्यत्कारणमनुमीयताम् । अन्यथा न प्रकृतेऽप्यविशेषात् । ततः प्रयत्नवदञ्जनादेरपि तं प्रति तदाकर्षणहेतुत्वात्कथं न संदेहः । अञ्जनादेः स्त्र्याद्याकर्षणं प्रत्यकारणत्वेन तदर्थिना तदुपादानं स्यात् । न च दृष्टसामर्थ्यस्याप्यञ्जनादेः कारणत्वाभावक्लृप्तिपरिहारेणान्यकारणत्वकल्पने भवतोऽनवस्थामुक्तिः । अथाञ्जनादिकमदृष्टसहकारि तत्कारणं न केवलमिति । नन्वेवं सिद्धम् । अदृष्टवदञ्जनादेरपि तत्र कारणत्वं ततः संदेह एव । किं ग्रासादिवत्प्रयत्नसधर्माकृष्टाः पश्वादयः किं वा स्त्र्यादिवदञ्जनादिसधर्मणा देवदत्तसंयुक्तेन द्रव्येणेति संदिग्धं तं प्रत्युपसर्पणवत्त्वादित्येतत्साधनम् । सपरिस्पन्दात्मप्रदेशमन्तरेण ग्रासा-

ऽन्तःकरणहेतो प्रयत्नस्यापि देवदत्तविशेषगुणस्य परं प्रत्यसिद्धत्वात्। साध्यविकलता चात्र दृष्टान्तस्य। एतेन देवदत्ताङ्गनाङ्गादिकमित्यपि प्रयुक्तम्। उक्तदोषाणां तुल्यत्वात्। यदुक्तं ‘ अदृष्टं स्वाश्रयसंयुक्त आश्रयान्तरे कर्मारभते ’ इत्यादि। तत्र हेतौ कालात्ययापदिष्टत्वम्। प्रत्यक्षबाधितपक्षानन्तरप्रयुक्तत्वात्। प्रत्यक्षेण हि देशान्तरवर्तिदेवदत्ताङ्गनाङ्गमणिमौक्तिकादिभिरसंयुक्त एवात्मानुभूयते। अथानेनैवानुमानेन प्रत्यक्षं बाध्यत इति चेत्तर्हि तत्रापि प्रकृतदोषापरिहार एव स्यात्। अथानन्यथासिद्धं तत्र प्रत्यक्षमिति तेनैवानुमानं बाध्यते। तर्हि प्रकृतेऽपि तद्देशमेवेति तेनैवानुमानं बाध्यताम्। अथ तावन्मात्रदेशे प्रत्यक्षप्रमाणसमवायाच्चया प्रतीतिः। नैवम्। आत्मनो निरंशस्य त्वया स्वीकारात्। कल्पितत्वे तु प्रदेशस्य सर्वथा प्रतीत्युत्पत्तिरेव न स्यात्। कल्पिताग्नौ माणवके पाककारित्ववत्। न च समवायः प्रतीतौ कारणं कुम्भादिसमवेतायाः अपि प्रत्यक्षसमवायाभावस्य प्रत्यायकत्वात्। अथेन्द्रियार्थसन्निकर्षेण तद्विषयतया प्रत्यक्षप्रमोत्पादनात् कुम्भादिप्रतीतिः। नन्वेवं तर्हि त्वया स्वयमेव समवायस्य प्रतीतौ कारणत्वमपहस्तितम्। किं च, एवमप्यात्मनः सन्निकर्षगोचरतया प्रत्यक्षप्रमोत्पादनात्कथं न व्याप्त्यात्मप्रतीतिर्जायते। ननु प्रदेशवृत्तित्वात् समवायः सन्निकर्ष इति तर्हि तामुत्पादयितुमीष्टे। कुम्भादावयवेष्वपि परिपूर्णप्रत्यक्षमोत्पादि। सर्वं सन्निकर्षस्य तत्राप्यभावात्। मध्यपरभागावस्थितावयवैर्नयनरश्मीनां संयोगाभावात्। तस्मात्तावन्मात्रदेशे एवात्मनस्तथा प्रत्यक्षोपलब्धिरिति सिद्धं हेतौ कालात्ययापदिष्टत्वम्। विशेष्यासिद्धत्वं च। अदृष्टस्य पौद्गलिकत्वप्रतिपादकप्रमाणस्य वक्ष्यमाणत्वात् गुणत्वासिद्धेः। तेनैव च प्रमाणेन बाधितपक्षत्वाद्भेदस्वरूपैकत्वानुमानमपि नोत्थातुं शक्तम्। कार्यत्वे सति तदुपकारकत्वादिति हेतुश्चाञ्जनतिलकादिनाकृष्यमाणकामिनीप्रमुखपदार्थे व्यभिचारी।

देवदत्तविशेषगुणकारितमित्यत्र च विशेषणशब्दस्य वैयर्थ्यम् । देवदत्तगुणकारितमित्येतावतैवादृष्टस्य क्रियाहेतुगुणत्वसिद्धेः । विशेषणासिद्धत्वं चास्य हेतोर्येन एकद्रव्यत्वमेकस्मिन्द्रव्ये समवायित्वमुच्यते । तच्चायुक्तम् । समवायस्य निषेत्स्यमानत्वात् । यत्तूक्तं 'नाप्येकद्रव्यत्वमसिद्धमेकद्रव्यमदृष्टं विशेषगुणत्वाच्छब्दवत्' इति तत्रादृष्टशब्दयोः पौद्गलिकत्वेन साधयिष्यमाणत्वाद्धेतोरसिद्धिः । दृष्टान्तस्य साधनवैकल्यं च । एकद्रव्यत्वस्यैकत्र द्रव्ये समवायरूपस्य शब्दे प्रसिद्धेः । गुणरूपस्य चास्य सतः क्रियाहेतुत्वं किं देवदत्तशरीरसंयुक्तात्मप्रदेशे द्वीपान्तरवर्ति .... .... .... .... नत्वात्कलशादिवत् । न हि कलशादिरचेतनात्मको ज्ञाताहमिति प्रत्येति । चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेत् । न । अचेतनस्यापि चैतन्ययोगाच्चेतनोऽहमिति प्रतिपत्तेर्निरस्तत्वात् ।

एवं चात्मा स्याद्भिन्नः स्वबुद्धेः संसिद्धोऽयं शुद्धयुक्तिप्रसादात् ।
हंहो तस्माद्यौगपक्षप्रवीणाः कक्षीकार्यं नात्र जाड्यं कदाचित् ॥६८१॥

ये तु सौगतमतावलम्बिनः शेमुषीक्षणकदम्बकात्पृथक् ।
नाभ्यमंसत पुमांसमग्रतस्तत्पराकरणमातनिष्यते ॥ ६८२ ॥

मनस्यपि विप्रतिपत्तित्रयम् । नित्यत्वे निरंशत्वेऽणुपरिमाणत्वे च । तत्र नित्यत्वं प्रोक्तदृशा निरसनीयमनुदिशा ।

विज्ञानवादातिरिक्त पुरुषमनङ्गीकुर्वतां बौद्धानां खण्डनम् ।

ननु कथमस्य नित्यत्वनिरासः । तथा हि—मनो नित्यमस्पर्शत्वाद्व्योमवदित्यतस्तन्नित्यमेव सिध्यति । तदसत् । यस्मादतः कथंचित्सर्वथा वा तन्नित्यत्वं साध्येत । प्रथमे सिद्धसाधनम् । द्वितीये साध्यविकलो दृष्टान्तः । सर्वथा नित्यत्वस्य व्योमन्यप्यसिद्धेः । अथास्यानित्यतायामारम्भकं कारणं विजातीयं सजातीयं वा भवेत् । न विजातीयम् । तस्यारम्भकत्वासंभवात् । विजातीयानां नारम्भकत्वमित्यभिधानात् । नापि सजाती-

यत् । यतो मनःप्रादुर्भावे कारणभूतानेकमनःसद्भावप्रसक्तिरेकस्य द्रव्यान्तरोत्पादाकारणत्वात् 'द्रव्याणि द्रव्यान्तरमारभन्ते' इति वचनात् । न चैकत्र शरीरेऽनेकमनःसद्भावोऽस्ति । प्रतिशरीरमेकैकतया मनसः स्थितत्वात् । अन्यथा प्रतिशरीरं युगपदेव रूपादिज्ञानोत्पत्तिः स्यात् । न च प्रतिनियतशरीरसम्बद्धत्वेनान्योन्यं कारणाभिमतमनसां संयोगः सम्भवति । नाप्यमुक्तानां मनोजनकत्वं तेषामनिष्टमके । अथ मुक्तमनसां तत्सम्बद्धत्वाभावेन परस्परं संयोगसम्भवात्तज्जनकत्वमिष्यते । तदसङ्गतम् । धर्माधर्मानधिष्ठितानां तेषां तज्जनकत्वानुपपत्तेः । अतोऽस्य कार्यत्वानुपपत्तेर्नित्यत्वमेव श्रेयसीति । तदयुक्तम् । यतो यदि मनआरम्भकाणां मनस्त्वेन सजातीयत्वमभिधीयते तदा तन्तुपटादीनामपि कार्यकारणभावो न स्यात् । तेषामन्योन्यासमवायिनान्तरसामान्याधारतया तदपेक्षया सजातीयत्वासम्भवात् । न हि तन्तुत्वापेक्षया पटस्य पटत्वापेक्षया तन्तूनां वा सजातीयत्वमस्ति । अथ पृथिव्यादिमपेक्ष्य सजातीयत्वमुच्यते तर्हि तदपेक्षया यथा तन्तुपटादीनां सजातीयत्वसम्भवात्कार्यकारणभावस्तथा पुद्गलद्रव्यापेक्षया स्यादिना मनस सजातीयत्वसम्भवात्स्यादविशेषात् । न च मनसः पौद्गलिकत्वमसिद्धम् । अनुमानात्तत्सिद्धेः । तथा हि-विवादास्पदं मनः पौद्गलिकं द्रव्येन्द्रियत्वान्नयनादिवत् । ननु नयनादीनां प्रतिनियतरूपादिप्रकाशकत्वं प्रतिनियतभूतकार्यतां निश्चायति । मनसस्त्वविशेषेण सकलरूपादिप्रकाशकत्वान्न कार्यत्वासम्भवात्कथं नयनादिदृष्टान्तेन तस्य पुद्गलकार्यत्वं साधयितुमपि दुःशकमात्रम् । प्रतिनियतभूत

द्विगणना स ॥

यदप्युक्तं 'गुणवद्भिन्नत्वेन द्रव्याश्रयी गुणवान् । संयोगविभागेष्वकारणमनपेक्ष इत्यनेन वा लक्षणेन' इत्यादि । तत्र गुणत्वाभिमतस्यास्य गुणत्वं द्रव्यत्वाभिमतस्य च द्रव्यत्वमालोचनीयम् ।

द्रव्याश्रयीत्यादि पुनरित्थं तज्ज्ञापयति । द्रव्यं तूभयथा । द्रव्याश्रितमनाश्रितं च । तथा सर्वं कर्म । आत्रेयो व्याख्यातवान्— ' नित्यमस्याश्रयः पारतन्त्र्यं द्रव्ये ' इति द्रव्याश्रयी । द्रव्याश्रयीत्यतिशायने मत्वर्थीय । तेनैतद्द्रव्याश्रितम् । न तु सर्वद्रव्याश्रितमाकाशकालदिगात्मनामक्रियत्वात् । गुणा अस्य सन्तीति गुणवान् न गुणवान् अगुणवानित्यनेन द्रव्यद्वैधर्म्यं दर्शयति । संयोगाश्च विभागाश्च संयोगविभागाः । तेषु संयोगविभागेष्वकारणं ।किं सर्वथा । न । किं तर्ह्यनपेक्षः । किमुक्तं भवति । सापेक्षः कारणमिति । किं सर्वो गुणो न किं तर्हि संयोगविभागावेव । कथं संयोगस्तावत्संयोगे कर्तव्ये द्रव्योत्पत्तिमपेक्षते । कस्मात् । संयोगजसंयोगसमवायिकारणत्वात्कार्यद्रव्यस्य । तथा हि—तन्त्वोराकाशेन सह यः संयोगः स द्वितन्तुकाकाशसंयोगे कर्तव्ये द्वितन्तुकलक्षणस्य तन्त्वोः कार्यद्रव्यस्योत्पत्तिमपेक्षते । तथा कारणयोर्वंशदलयोर्विभागोऽपि स किं यस्य वंशदलस्याकाशदेशेन विभागमभिनिर्वर्तयिष्यन्वंशविनाशमपेक्षते । कस्मात् । अविनष्टेऽस्वातन्त्र्यात् । स्वतन्त्रावयववृत्तिर्हि विभागो विभागमारभते न तु कार्यवद्द्व्यवयववृत्तिरिति । व्यवच्छेद्यव्यवच्छेदकभावं च विशेषणानामेवं निरदीदिशत् । द्रव्याश्रयी गुण इत्येतावदस्तु । मा भूदगुणवान् । संयोगविभागेष्वकारणमिति । न कार्यद्रव्ये प्रसंगात् । कार्यद्रव्यमपि द्रव्याश्रयि न च गुण इति तद्व्यवच्छेदार्थमगुणवानित्यगुणवान् । गुण इत्येतावदस्तु । मा भूद्द्रव्याश्रयी संयोगविभागेष्वकारणमिति । न । कर्मत्वे प्रसंगात् । कर्मत्वमप्यगुणवत् । न च तद्गुण इति तद्व्यवच्छेदार्थं द्रव्याश्रयीति । द्रव्याश्रयी अगुणवान्गुण इत्यस्तु, मा भूत्संयोगविभागेष्वकारणमिति । न । कर्मणि प्रसंगात् । कर्मापि द्रव्याश्रयि अगुणवत् । न च तद्गुण इति तद्व्यवच्छेदार्थं संयोगविभागेष्वकारणमिति । संयोगविभागेष्वकारणम्, इत्येतावदस्तु मा भूद्द्रव्याश्रयी अगुणवा-

निति । कस्मात् । द्रव्यकर्मणोर्विभागसंयोगकारणत्वात । कर्म खलु स्वाश्रयमाश्रयान्तराद्विभज्याश्रयान्तरेण संयोजयतीति द्रव्यकर्मणो-र्विभागसंयोगकारणत्व तद्विपरीत संयोगविभागेष्वकारण गुण इत्युक्ते न क्वचित्प्रसग । तस्माद्द्रव्याश्रयी अगुणवानिति नाभिधेयमिति न हेतु । विशेषणार्थत्वाद्द्रव्याश्रयीत्यभिधानस्य । द्रव्याश्रयीत्य-भिधान हेतुविशेषणार्थमुपादीयते । कथ यथा गन्धेन रूपाद्य केन-चिज्ज्ञा

— सद्भावत्वात् । अथानेन सविशेषणेनानुमानेन गुणत्व-सामान्य रूपादिषु प्रसाध्य तद्विशिष्टाना तेषा संयोगविभागेष्वित्यादिल क्षणमाख्यायत इति चेत् । तच्चतुरस्रम् । यदा ययमुनोऽनुमाना-द्गुणत्वेन प्रसिद्धा रूपादयस्तदा किमपरेण सिद्धोपस्थायिना लक्षणेन कर्तव्यम । यच्चोक्तम् ' अगुणवानिति स्वरूपोपवर्णनमेतत् ' इत्यादि तत्रेदानीं बहुतरमस्य स्वरूपमुपवर्णनीय भवेद्द्रव्यत्वमकर्मत्वमविशेषव-मित्यादीति न किंचिद्गुणलक्षणमुपपद्यते । येऽप्यमी तल्लक्ष्यभूता रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुख-दु खेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दस्वरूपा ' रूप-रसगन्धस्पर्शा संख्या' परिमाणानि पृथक्त्व संयोगविभागौ पर-त्वापरत्वे बुद्धय सुखदु खे इच्छाद्वेषौ प्रयत्नाश्च गुणा ' इति कणादवचनात् । 'चकारेण येऽत्रानुक्ता गुणत्वेन च लोके प्रसिद्धा गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दास्ते सप्त सूच्यन्ते' इति तद्व्याख्या-नाच्च चतुर्विंशतिर्गुणा गीयन्ते । तेऽपि न समगमन्त । तत्समतायाः-स्तेषा संख्याया स्वरूपस्य च विचार्यमाणस्यानुपपत्ते । तथा हि—संख्या तावद्विदितैव । स्वरूप तु रूपत्वाद्यभिसबन्ध । रूप चामीषु चक्षुरिन्द्रियग्राह्य पृथिव्युदकज्वलनवृत्ति । रसो रसनेन्द्रियावसेय

---

१वै द १।१।६। २एतस्याश वै द उपस्कारे विवृत। परमुपस्कारकार स्तत्सर्व पक्षताऽर्वाचीनत ।

पृथिव्युदकवृत्तिः । गन्धो घ्राणेन्द्रियपरिच्छेद्यः पृथिवीवृत्तिः । स्पर्शस्त्वगिन्द्रियाववोध्यः पृथिव्युदकज्वलनपवनवृत्तिः । एते च रूपरसगन्धस्पर्शाः पार्थिवपरमाणुष्वनित्याः पावकसंयोगात् । तत्र पाकजानां तेषामुत्पत्तेः । तथा हि—केचित्कन्दुके पच्यमानस्य कलशादेः प्रागवस्था । विसदृशरूपादियोगिनः पाककारणभूतवेगवदग्निसंयोगपर्यालोचनया प्रलयोदयौ कल्पयाम्बभूवुः । यद्यपि हि कन्दुकनिक्षिप्ताः कुम्भादयस्तृणपर्णादिपिहितवपुषोऽपि तद्विवरप्रसृतनयनरश्मिना न विनष्टा इत्युपलभ्यन्ते । यद्यपि तत्संख्यास्तत्परिमाणास्तत्सन्निवेशास्तद्देशाश्च पक्का अपि दृश्यन्ते तथापि पतन्तो विभाव्यन्ते । यद्यपि च तदा तेषां कर्त्रादिकारककला .... .... .... .... .. ....

'विनोस्तु संयोगजः संयोगः' इति केचित् । तदसारम् । सक्रियस्यावयविनः क्रियात एवावयव्यन्तरेण संयोगात् । यदि चैवं नेष्यते तदावयवानामपि स्वावयवापेक्षयावयवित्वेन सर्वत्रावयविषु कर्मजस्य संयोगस्योच्छेदः स्यात् । तथासति चावयविनि कर्माभावो भवेत् । संयोगजस्तु संयोगः समुत्पन्नमात्रस्य चिरोत्पन्नस्य वा निष्क्रियस्य कारणं संयोगिभिरकारणैः सह कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः । स चैकस्माद्द्वाभ्यां बहुभ्यश्च संयोगेभ्यो भवति । एकस्मात्तावत्तन्तुवीरणसंयोगाद्द्वितन्तुवीरणसंयोगः । उभयकर्मजो मेषयोरपसर्पणात् । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्य एकः पटतुरीसंयोगः । अयं च सद्यः समुत्पन्नस्य निष्क्रियस्य द्रव्यस्य संयोगजः संयोगः । चिरोत्पन्नस्य तु देवदत्तस्य निष्क्रियस्य सक्रियहस्तकुड्यसंयोगपूर्वको देवदत्तकुड्यसंयोगः । स हि न हस्तक्रियाकार्यो व्यधिकरणस्य कर्मणः संयोगहेतुत्वादर्शनात् । सर्वश्चायं संयोगो मूर्तामूर्तानेकद्रव्यप्रदेशवृत्तिः समानासमानजात्यारम्भकः । समानजातीयस्य संयोगस्यासमानजाती-

१ कन्दुके घटपचन्या 'भट्ठी' इति देशीभाषायाम् ।

त्वेनाविनाशनिश्चयात् । इयं तु पाटयमाने वंशे दलक्रिया द्रव्यारम्भकसंयोगप्रतिद्वन्द्वीभूतविभागारम्भिकोपलभ्यते इति नासौ नभसो विभागमारभेतेत्यत एषा स्थितिरस्तीति विभागजविभागकल्पना क्रियते संयोगान्न कर्मेति तावत्स्थितम् । अन्यथा हि तस्य कालान्तरस्थायित्वे नित्यद्रव्यसमवेतस्य च नित्यत्वं स्यात् । तस्मात्कर्मणोऽचिरजीवित्वात्तद्विनाशकेन संयोगेन भवितव्यम् । उत्तरश्च संयोगः पूर्वसंयोगोपरमे सति जायते नान्यथा । न च विभागव्यतिरिक्तः कश्चन संयोगस्य हन्ता समस्ति ।

कर्मानन्तरसंयोगजन्म निर्जातकौशलम् ।
न हि प्राक्तनसंयोगविनाशाय प्रकल्प्यते ॥ ६८३ ॥

तस्माद्विभागेनैव संयोगवैरिणा भाव्यम् । स च यदधिकरणो विभागस्तदधिकरणमेव संयोगमुपशमयति । न ह्यङ्गुलिविभागः कुण्डबदरसंयोगोपमर्दाय प्रभवतीत्यतो न वंशदलवृत्तिर्विभागो दलाकाशसंयोगमपहन्तुमलमिति । नूनं दलाकाशसंयोगविरोधिना दलाकाशविभागेन भवितव्यम् । तदिदानीं तस्योत्पत्तिकारणचिन्तायां क्रियाया वंशदलविभागमात्रोपजननचरितार्थत्वात्तन्निर्माय विभागान्तरनिर्माणे विरम्य व्यापारासंवेदनादवश्यं वंशविभाग एव प्रत्यासन्नतया दलाकाशविभागारम्भकोऽभ्युपगमनीयः । एवमनभ्युपगमे कर्मनित्यत्वप्रसंगात् । कारणाकारणविभागात्तु विभागः करकुड्यविभागात्कुड्यकलेवरविभागः । कलेवरकारणं हि करस्तदकारणं च कुड्यं तयोर्विभागादयं जायते । न ह्ययं शरीरक्रियाकार्यः । तदानीं शरीरस्य निष्क्रियत्वात् । नापि हस्तक्रियाकार्यः । व्याधिकारणस्य कर्मणो विभागहेतुत्वादर्शनात् । अतः कारणाकारणविभागस्तस्य कारणमिति कल्प्यते । संयोगवदस्यापि मूर्तामूर्तानेकद्रव्यप्रदेशवर्त्योदयो- ( तित्वात् । येन )[2] वरमयं विभागशब्दहेतुः । विभागहेतुत्वं दर्शितम् । शब्दहेतुत्वं तु वंशे पाट्यमाने सति योऽयमाद्यः

शब्दस्तस्य च शब्दविभागः कारणम्। परत्वमपरत्वं च परापराभिधानप्रत्ययनिमित्तम्। तद्द्विविधं दिक्कृतं कालकृतं च। दिक्कृतं देशविशेषप्रत्यायकम्। कालकृतं वयोभेदप्रत्यायकम्। तत्र दिक्कृतस्योत्पत्तिरभिधीयते। कथमेकस्यां दिश्यवस्थितयोः संयुक्तसंयोगबहुत्वाल्पत्वे सत्येकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा तस्माद्विप्रकृष्टोऽयमिति परत्वाधारे विप्रकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्य परेण दिक्प्रदेशेन योगात्परत्वस्योत्पत्तिः। विप्रकृष्टं चावधिं कृत्वेतरस्मिन्सन्निकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्यापरेण दिक्प्रदेशेन योगादपरत्वस्योत्पत्तिः। कालकृतयोरपि कथं वर्तमानकालयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयोः रूढश्मश्रुकार्कश्यवलीपलितादिसांनिध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्य परेण कालप्रदेशेन योगात्परत्वस्योत्पत्तिः। स्थविरं चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते। तामपेक्ष्यापरेण कालप्रदेशेन योगादपरत्वस्योत्पत्तिः। एते चापेक्षाबुद्धिविनाशादाश्रयविनाशाद्वा विनाशिनी मूर्तैकद्रव्यव्याप्यवृत्तिनी सामान्यगुणरूपे द्वीन्द्रियग्राह्ये अयावद्द्रव्यभाविनी सर्वत्र कारणं च। बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः। सा चानेकप्रकारार्थानन्त्यात्प्रत्यर्थनियतत्वाच्च। तस्याः सत्यप्यनेकविधत्वे समासतो द्विविधा। विद्या चाविद्या च। तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा। विद्यापि चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा। द्विविधापीयमेकद्रव्यप्रदेशवृत्तिर्नैमित्तिकगुणरूपाऽयावद्द्रव्यभाविनी अन्तःकरणमात्मात्ममनःसंयोगजन्मा परत्वापरत्वद्वित्वद्विपृथक्त्वादीनां निमित्तम्। अनुग्रहलक्षणं सुखम्। अनुगृह्यतेऽनेनेत्यनुग्रहः। अनुग्रहलक्षणमनुग्रहस्वभावमित्यर्थः। सुखमनुकूलस्वभावतया स्वविषयानुभवं कुर्वत्पुरुषमनुगृह्णाति। अयमर्थः स्रगाद्यभिमतविषयसांनिध्ये सतीष्टोपलब्धीन्द्रियार्थसंनिकर्षाद्धर्माद्यपेक्षा निमित्तादात्ममनसोः संयोगादसमवायिनो यदनुग्रहाभिष्वङ्गनय-

नादिप्रमाऽजनकमुत्पद्यते तत्सुखं संनिहितेऽप्यभिमतेऽर्थे विषयान्तरव्यासक्तस्य सुखानुत्पादादिष्टोपलब्धेः कारणत्वं गम्यते । वियुक्तस्य सुखाभावाद्विषयसंनिकर्षस्यापि कारणत्वावगमः । अनुग्रहस्त्विह सुखविषयं संवेदनम् । तच्च सुखमतीतविषयेषु स्मृतिजम् । अनागतेषु संकल्पजम् । यत्तु विदुषामसत्सु विषयानुस्मरणसंकल्पेष्वाविर्भवति तद्विद्याशमसंतोषधर्मविशेषनिमित्तमिति । शेषमस्यात्मैकद्रव्यप्रदेशवृत्त्यादिबुद्धिवत् । उपघातलक्षणं दुःखम् । उपहन्यतेऽनेनेत्युपघातः । उपघातलक्षणमुपघातस्वभावमित्यर्थः । दुःखमुपजातं प्रतिकूलस्वभावतया स्वात्मविषयमनुभवं कुर्वदात्मानमुपहन्ति । अयमर्थः— विषाद्यनभिप्रेतविषयसांनिध्ये सत्यनिष्टोपलब्धीन्द्रियार्थसंनिकर्षादधर्माद्यपेक्षानिमित्तादात्ममनसोः संयोगाच्चासमवायिनो यदमर्षोपघातदैन्यनिमित्तमुत्पद्यते तद्दुःखम् । अमर्षोऽसहिष्णुता द्वेष इति यावत् । उपघातो दुःखानुभवः । दुःखे सति तदनुभवलक्षण आत्मोपघातः स्यात् । दैन्यं विच्छायता । तेषां निमित्तम् । अतीतेषु सर्पव्याघ्रचौरादिषु स्मृतिजम् । अनागतेषु संकल्पजम् । अस्यापि शेषमात्मैकद्रव्यप्रदेशवृत्त्यादिबुद्धिवत् । स्वार्थं परार्थं वा । अप्राप्तप्रार्थना इच्छा । सा चात्ममनसोः संयोगात्सुखापेक्षात्स्मृत्यपेक्षाद्वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्मनिमित्तं कामोऽभिलाषो रागः संकल्पः कारुण्यं वैराग्यमुपधाभाव इत्येवमादयः । इच्छाभेदाः मैथुनेच्छा कामोऽभ्यवहारेच्छाऽभिलाषः । पुनःपुनर्विषयानुरञ्जनेच्छा रागः । अनागतकरणेच्छा संकल्पः । स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम् । दोषदर्शनाद्विषयपरित्यागेच्छा वैराग्यम् । परवञ्चनेच्छा उपधा । अन्तर्निगूढेच्छाभावश्चिकीर्षा जिहीर्षेति क्रियाभेदादिच्छाभेदा भवन्ति । शेषमस्या अपि सर्वं बुद्धिवत् । प्रज्वलनात्मको द्वेषः । यस्मिन्सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः । स चात्ममनसोः संयोगाद्दुःखापेक्षात्स्मृत्यपेक्षाद्वोपजायते प्रयत्नधर्माधर्म-

स्मृतिनिमित्तम् । तत्रैव हन्मीति प्रयत्नो द्वेषात् । वेदार्थविप्लवकारिषु द्वेषाद्धर्म । तदर्थपरिपालनपरेषु द्वेषादधर्म । स्मृति

गणनया गुणाना चतुर्विंशतेरधिकत्वात् । अथ नीलधवलादिव्यक्तिभेदेऽपि सर्वत्र रूपत्वसामान्यानिपातादेक एकरूपोऽयं गुण इति न तत्सङ्ख्यातिरिति चेत् । तर्हि धर्माधर्मयोरप्यदृष्टत्वसामान्यविशेषादेक एवायमपि गुण स्यादिति कथं न तत्सङ्ख्याव्याघात । अथादृष्टत्व नाम नास्त्येव सामान्यम् । ननु रूपत्वमपि कथं भवेत् । नीलादौ सर्वत्र रूप रूपमिति प्रत्ययानुवृत्तेरिति चेत् । इतरत्राप्यदृष्टमदृष्टमिति प्रत्ययानुवृत्तिरस्तु । अथौपाधिक एवाय प्रत्ययो न सामान्यनिमित्त । सामान्येषु सामान्यप्रत्ययवदिति चेत् । नीलादावपि किं न तथा । कस्तत्रोपाधिरिति चेत् । धर्माधर्मयो क इति वाच्यम् । दर्शनयोग्यपदार्थेतरत्वमिति चेत् । इतरत्रापि चक्षुर्ग्राह्यत्व भविष्यति । दर्शनयोग्यपदार्थेतरत्वस्य चोपाधित्वे गुरुत्वमप्यदृष्ट इति व्यपदिश्येत । तस्योपाधेस्तत्र भावात् । अथ नीलादिषु रूपप्रत्ययानुवृत्ती रूपत्वसामान्यनिमित्ता तावदुभाभ्यामपि प्रतिपन्नेति चेत् । एवमेतत् । न हि तदस्माभि प्रतिषिध्यते किं तु प्रसङ्ग प्रवर्त्यते । यदि धर्माधर्मयोरदृष्टप्रत्ययानुवृत्तिरौपाधिकी तदाऽन्यत्रापि सा तथैव स्यात् । समानयोगक्षेमत्वात् । किं च भवतापि यत्र वस्तुन्युपपद्यमाने बाधकोपनिपातस्तत्रैव तत्प्रत्ययस्यौपाधिकत्वमुपागामि । यथा सामान्येषु सामान्योपगमेऽनवस्थोपनिपाते सामान्यप्रत्ययस्य । न चादृष्टत्वोपगमे किंचिद्बाधकमस्ति । गुणेषु चतुर्विंशतिसङ्ख्याव्याघातोऽस्तीति चेत् । असदेतत् । अस्याद्यापि विवादास्पदीभूतत्वात् । अथ धर्माधर्मा तदुभयवर्त्येकसामान्यानुगतौ न भवतो गुणत्वात् । यावेवं तावेवम् । यथा सुखदुःखे तथा चैतौ । ततस्तयोरनुमानमस्त्येव बाधकमिति चेत् । तदशुभम् । सुरभ्यसुरभिगन्धाभ्यां गुणत्वस्य व्यभिचारित्वात् । तौ हि गुणौ तदुभयवर्तिनैव सामान्येन गन्धत्वेनानुगतौ च । न च

वाच्य ' अनुष्णाशीतस्पर्शवत् सुरभ्यसुरभ्योरुभयाभावसमन्वितस्तृतीयो राशिर्गन्धत्वानुगतोऽस्तीत्यनयोस्तदुभयवर्त्येकसामान्यानुगतत्वान्न गुणत्वस्य व्यभिचारः ' इति प्रशस्तकरभाष्योक्तिविरोधापत्तेः । तथा चायमाह—'सुरभिरसुरभिश्च' इत्यन्यथा त्वनुष्णाशीतवेदनमप्यपह्नुयादिति न चतुर्विंशतिसंख्यानीपु संगच्छते । यथात्रसरमेषाग्रेऽपि पराकरिष्यते । योऽपि पृथिव्युदकज्वलनवृत्तीत्यादिश्चतुर्णां रूपादीनां पृथिव्यादौ वृत्तिनियमो न्यगादि । सोऽपि नोपपादि । पृथिव्यादीनां चतुर्णामपि पौद्गलिकत्वेन तच्चतुष्टयाधिष्ठानत्वात् । यत्तु न तथा तेषामनुभवनं तदनुद्भूतत्वादिति प्राक्प्रतिपादितमेव । यच्च पाकजोत्पत्तिप्रक्रियोद्घोषणेन पार्थिवपरमाणुषु रूपादीनामेकान्तेनानित्यत्वमाप्यादिपरमाणुकार्यद्रव्येषु नित्यमनित्यं चावाचि तदपि [1] नित्यानित्यानेकान्तस्य प्राक्समर्थनादपास्तम् । यच्च ' मूर्तैकद्रव्यव्याप्यवृत्तयः ' इत्युक्तं तत्रैकान्तरूपे द्रव्येऽमीषां वृत्तिरीप्सामासे तद्विपरीते वा । तत्र न तावत्प्राच्यः पक्षः पेशलः । द्रव्यस्य स्वावयवेभ्यः कथंचिदविष्वग्भूतस्य प्रसाधितत्वेनैकान्तैकरूपत्वस्य तत्राप्रसिद्धेः । द्वितीयपक्षे तु न किंचिदनिष्टम् । व्याप्यवृत्तित्वं चामीषामेकान्तैकरूपाणामननुरूपमेव । एवं हि कुञ्चिकादिविवरवर्तिसूक्ष्मप्रदीपाद्यालोकोद्योतितापवरकादिव्यवस्थितपृथुतरपटादिद्रव्यसमवेतशुक्लादिरूपाभिव्यक्तौ यावद्द्रव्यवर्तिनो रूपादेरुपलब्धिः स्यात् । अन्यथा निरंशैकरूपताव्याहतिः । तर्हि तद्रूपस्य प्रतिभासाप्रतिभासलक्षणविरुद्धधर्माध्यासो युक्तो विरोधात् । कथंचिदेकरूपाणां तु तेषां युक्ता व्याप्यवृत्तिः । रूपरसगन्धस्पर्शाद्यात्मकत्वात्पटादिद्रव्यस्य । स्वाश्रयादन्यत्रारम्भका इत्यपि स्वगृहमान्यम् । यतोऽयमत्राभिप्रायः—अवयवैः स्वसमवेतकार्ये निष्पाद्यमाने तद्वर्तिनो रूपादयस्तत्रैव रूपादीनारभन्ते न स्वाश्रयभूतेष्ववयवेष्विति ।

---

१ प्र पा. भा. पृ. ४५ ।

तस्य स एवायं पटादिरिति प्रत्यभिज्ञानेन बाधनात्। न च सदृशापरापरोत्पत्तिविप्रलब्धबुद्धीनां प्रमातॄणामपनीतोद्गतनखशिखरादिष्विवात्रापि भ्रान्तमेवेदं प्रत्यभिज्ञानमिति वक्तव्यम्। नखादेरिव पटादेरपि प्रध्वंसोत्पादसिद्धिनिबन्धनप्रमाणमन्तरेणैवंविधव्यवस्थायाः कर्तुमशक्तेः। न रूपादीनां प्रध्वंसोत्पादावेव पटादिप्रध्वंसोत्पादयोः प्रमाणम्। तद्विनाशोत्पादयोर्द्रव्यस्यापि ताभ्यां भवितव्यमेवेति नियमाभावात्। न च तेषां यावद्द्रव्यभावित्वनिर्णयात्तन्नियमः साधीयान्, यावद्द्रव्यभावित्वस्याद्यापि विवादपङ्कनिमग्नत्वात्। ननु रूपादिपर्यायप्रध्वंसोत्पादयोर्द्रव्यस्यापि कथंचित्तावुपगतावेव। अन्यथा सर्वथा द्रव्यपर्याययोर्भेदापत्तेः। तथा च सिद्धममीषां कथंचिद्यावद्द्रव्यभावित्वमपीति चेत्। एवमेतत्। किं त्वेवं न कश्चिद्यावद्द्रव्यभावी गुणो नाम स्यात्। संयोगादिगुणानामप्येवं यावद्द्रव्यभावित्वसिद्धेः। एवमग्रेऽपि सर्वं दूषणं स्वयमूहनीयम्। विशेषस्तु दूषयिष्यते। यस्तु ताथागतो रूपादयोऽणव एव न गुणा इत्यवादीत्तस्य कुतोऽयमभ्युपगमः। भेदानुपलम्भेनेति चेत्। ननु किमयमणूनुपलभते संचितांस्तानिति चेत्। ननु संचयस्तेषां स्थूलाकारपरिणामः परमाणुभ्यः कथंचिद्व्यतिरिक्तः प्राक्साधितस्ततस्तस्यैवोपलब्धिरस्ति नाणूनाम्। अयमपि रूपरसगन्धस्पर्शात्मैव न तद्वानिति चेत्। कुतः। एतद्भेदानुपलम्भेनेति चेत्। सा यदि देशकालभेदेनानुपलब्धिर्विवक्षिता तदा रूपादिभिरेव व्यभिचारिणी। अथ स्वरूपभेदेन तदाऽसिद्धा। पटस्य रूपादय इति तेषां भिन्नस्वरूपेण प्रतीतेः। ततः सिद्धा अमी कथंचित्स्थूलाकारातिरेकिणः। यदुक्तम् 'द्वित्वादिसंख्यानुपरार्धतः(र्धतोऽ)नेकद्रव्या' इति। तत्र परार्धान्तैव संख्येति कुतस्त्या नियतिः। परार्धमेव यावद्व्यवहारदर्शनादिति चेत्। नन्वयं व्यवहारः पामरप्रायपुरुषाणामेव संबन्धी विवक्षितो विदुषां वा। प्रथमे कल्पे शतादेरपि संख्यात्वं दुरापम्।

ष्वमिति न किंचिज्जानीमो विशतिपद्यकं तु दृष्ट इत्येव तेषां व्यवहारदर्शनात् । द्वितीये तेकाधिकपरार्थेऽपि निवृद्धिर्व्यवहरणा- रम्भ न तस्या सम्यात्व स्यात् । तथा च दृश्यते विदुषां व्यवहार 'परार्थाना परार्थानि प्रवृत्ते श्लोकवर्गकान्' इत्यादि । अथ गणित- शास्त्रे–'मध्य परार्धमाहुर्यथोत्तर दशगुण तज्ज्ञाः' इति परार्धमेव यावत्संख्या अभिधानात्तन्नैवैयमवसीयत इति चेत् । तत्युक्तम् । तदभितस्याभिधेयाव्यापकत्वात्स्थिता हि सम्या समाम्नायते । सा च परार्थ इवैकादिकपरार्धादावप्येवंभूतैवानुभूयते । किंचेद् गणितशास्त्र नियामकतया व्याप्येय किंतु लक्षक (ण) तया । परमन्य- त्रापि तद्गुणया वृद्धया अङ्कस्थान नेयमिति । 'यत्र इयत्ताव्यवहार' परिसमाप्यते स परार्ध'' इति श्रीधर । सोऽपि यदेव तेन वचसा तत्गुणित मध्य परार्धशब्दाभिधेयमभिदधीत तत्र प्राप्तनैवेनापाय । अथ यत्र कुतोऽपि पुरस्तादियत्ताव्यवहारो नास्ति तत्परार्धाभिधेयम- भिप्रायतस्तत्र सर्वत्रायविरतात्प्रतिनियतप्रामाण्यगणितशास्त्रबाधापत्ति । तत्र तद्दशगुणितमध्यस्य परार्धाभिधेयत्वेन प्रसिद्धे । यच्चोक्तम- 'एकत्वेभ्योऽपेक्षानामकानेकविषयबुद्धिसहितेभ्यो निष्पत्ति ' इति तदप्ययुक्तम् । यतोऽनेकविषयबुद्धिसहितेभ्य इत्यत्र किमेकविषयबुद्धि- सहिता यामावो विशेषाया चक्रे द्वित्वादिपरार्धगोचरसाहित्य वा । प्रथमे पक्षस्तत्र मूलमवर्तिष्ठतापरस्याम्यप्यस्य भावाद्वित्वादि सम्योत्पत्ति कथ न स्यात् । अथ द्वितीयपक्ष । तथा च श्रीधर — 'अनेकवस्तु एको न भवतीति व्युत्पत्त्या द्वयोर्बहुषु च द्रष्टव्य' इति । अत्र च पक्षाश्रय पि । उत्पद्यते हि द्वित्वादी नत्र तद्बुद्धि- रुत्पद्यते । तदुक्तम् च द्वित्वादस्याविशिनि । अथ नैकमनेकमक- त्वाभावविशिष्ट वस्तु तद्विषयबुद्धिसहितेभ्य इत्यत्र विवक्षितम् ।

---

१ न्या क प ११५ ७ अत्र इत्यत्र'दृष्टिमन् इयसि वाचकस्याम्। २ ग क पृ ११२ प ११ ।

तदप्यक्षमम । द्वयादिवस्तुष्वेकत्वाभावस्याभावात् । तेषां स्वेन स्वेनैकत्वेनाधिष्ठितत्वात् । अथ द्व्यादिष्वेकस्यैकत्वस्याभाव उपनीत एव । नन्वेकमेकत्वमिति स्वसिद्धान्तविरुद्धमभिधीयते । एकत्वस्य गुणत्वेन तत्रैकत्वगुणान्तराभावस्य 'निर्गुणा गुणाः' इति त्वत्सिद्धान्तेऽभिधानात् । औपचारिकं तत्तत्र भविष्यतीति चेत् । किंगतस्य तस्य तत्रोपचारः । द्रव्यगतस्येति चेत् । ननु द्रव्येऽपि तावत्तदेकत्वमस्ति नान्यदिति तदेव तत्रोपचर्यत इत्यहो शुद्धा बुद्धिः । अस्तु वा यथाकथंचिदनेकविषयबुद्धिसहितशब्दार्थस्तथापि यदि बुद्धिसकाशाद्बाह्यार्थस्योत्पादः स्यात्तदा द्वित्वादिवदन्यस्याप्यर्थस्यायं किं न भवेत् । अथ द्वित्वादेरेव तदन्वयव्यतिरेकानुविधायित्वात्तस्यैव ततः समुत्पत्तिरिति चेत् । नैवम् । अभिव्यञ्जकत्वेनापि तस्यास्तेनान्वयव्यतिरेकयोरनुविधानस्य संभवात्प्रदीपस्येव पटादिना । अथ यदि द्वित्वादिकमबुद्धिजं स्याद्रूपादिवत्पुरुषान्तरेणापि प्रतीयेत । नियमहेतोरभावात् । बुद्धिजत्वे तु यस्य बुद्ध्या तज्जन्यते तेनैवोपलभ्यत इति नियमोपपत्तेः । प्रयोगस्तु—द्वित्वादि बुद्धिजं नियमेनैकप्रतिपत्तृवेद्यत्वात् । यन्नियमेनैकप्रतिपत्तृवेद्यं तद्बुद्धिजं यथा सुखादिकम् । नियमेनैकप्रतिपत्तृवेद्यं च द्वित्वादि तस्मादिदमपि बुद्धिजमिति । तदपि नोपपद्यते । नियमेनैकप्रतिपत्तृवेद्यस्यासिद्धेश्चैत्रेणेव मैत्रेणापि द्वित्वादेर्वेद्यमानत्वात् । अन्यदेव द्वित्वादि मैत्रेण वेद्यत इति चेत् । कुत एतत् । तदपेक्षाबुद्धिवशादन्यस्यैव तस्योत्पत्तेरिति चेत् । तदचतुरस्रम् । चक्रकचक्राकीर्णत्वात् । तथा हि—सिद्धे द्वित्वादेर्बुद्धिजत्वे चैत्रापेक्षया मैत्रस्यान्यद्वित्वादिवेदकत्वसिद्धिः । तत्सिद्धौ चैत्रस्य नियमेनैकप्रतिपत्तृवेद्यत्वसिद्धिः । तत्सिद्धौ चैत्रस्य बुद्धिजत्वसिद्धिरिति । किं च यदेव चैत्रेण द्वित्वादिकमवेद्यते यदि तदेव मैत्रेणापि वेद्येत तदा को दोषः स्यात् । न खलु योग्यदेशावस्थितः पदार्थः प्रतिनियतेनैव प्रमात्रा प्रतीयत इति नियमोऽस्ति । रूपादेरनियतप्रतिपत्तृपरिच्छेद्यत्वदर्शनात् । ननु सुखादि-

धर्मः प्रतिनियतेनैव वेद्यमानो दृश्यते । सत्यम् । तस्य प्रतिनियताऽसमवायित्वे तमेव प्रतियोग्यत्वात् । द्वित्वादिकं तु बाह्यार्थधर्मतया रूपादिवत्तद्देशवर्तिप्रमातॄनशेषाननपेक्ष्य योग्यदेशमेवेति तद्वत्प्रकाशेत । न च नियतप्रमातृबुद्धिजन्यत्वात्तस्यैव तद्दर्शने योग्यम् । एवं हि सति कलशादिरपि येनैव जनितस्तस्यैव ग्रहीतुं योग्यः स्यात् । असिद्धं चाद्यापि प्रमातृबुद्धिजन्यत्वं द्वित्वादेः । नन्वेवं रूपादिवद्द्वित्वादेरपि प्रथमदर्शनसमय एव किं न प्रतिभासः । ननु निरन्तरतरतिमिरनिकरपरिकरिते मूले कुम्भस्यापि किं नासौ । अभिव्यञ्जकस्यालोकस्यासन्निधानादिति चेत् । इतरत्राप्यभिव्यञ्जिकाया अपेक्षाबुद्धेरभावादित्यवेहि । यदा त्वसौ सन्निधत्ते भवति तत्प्रतिभासः । ननु कुम्भाद्यभिव्यक्ते यथा तद्देशवर्तिनिःशेषप्रमातॄणां तत्प्रतिभासः प्रभवति तथा चैत्रसकापेक्षाबुद्ध्यभिव्यक्ते द्वित्वादौ मैत्रादीनामपि तद्बुद्धिर्भवेत् । न चैवमिति । न व्यक्तिपक्षः क्षेमकर इति चेत् । नैवम् । उत्पत्तिपक्ष एवैतद्दूषणावताराज्जनकादन्यैरपि प्रतिभासदर्शनात् । अभिव्यक्तिपक्षे तु नायं दोषो यतश्चक्षुःस्पर्शनसहकारिणोऽभिव्यञ्जका स्वयमुपलभ्यमाना एवान्यमुपलम्भयन्ति । घटाद्यभिव्यञ्जकप्रदीपाद्यालोकशरीरसमवेतनोष्णशीतस्पर्शाभिव्यञ्जकवायुवत् । न च चैत्रबुद्धिर्मैत्रादीनां प्रत्यक्षा । तस्यैव प्रति तस्याः स्वसंविदितत्वाच्चक्षुराद्यगोचरत्वाच्चेति न प्रत्येकमभिव्यञ्जिका किंविषयमात्रापेक्षाबुद्धिरिति चेत् । अनेकार्थगोचरेति ब्रूमः । तथा हि—पदार्थे एकस्मिन् ज्ञाते पदार्थान्तरमेकमपेक्ष्य द्वित्वमभिव्यज्यते । एकस्मिन् द्वयोर्वा ज्ञातयोर्द्वावेकं वापेक्ष्य त्रित्वमभिव्यज्यते । एकस्मिन् द्वयोस्त्रिषु वा ज्ञातेषु त्रीन् द्वावेकं वापेक्ष्य चतुष्ट्वमभिव्यज्यत इत्यादि तावज्ज्ञेयं यावत्पर्यन्तसंख्येति न नियमेनैकप्रतिनियतैवेयमित्यसिद्धम् । अनुमानबाधितश्चायं पक्षः । तथा हि—द्वित्वादिकं बुद्धिजं न भवति संख्यात्वादेकत्ववदिति । परार्द्धे चैव द्वित्वादिबुद्धिजनेऽपेक्षाबुद्धि

विनाशाद्विनाश इति दूरोत्सारितमेव । एवं च सिद्धमेकत्वबहुत्वादेरपि पदार्थेषु सदैव सत्त्वमिति ।

ये सुगतसमयवासितमनसः सङ्ख्यास्वरूपमात्रेऽपि ।
विप्रतिपत्तिं विदधति तेषामेषा क्षणं शिक्षा ॥ ६८४ ॥

यदि हि सङ्ख्या काचिन्न स्यात्तदानीं तत्प्रत्ययो निरालम्बनः स्यात् । अथ न सङ्ख्याप्रत्ययोऽस्तीन्द्रियजस्तत्रैकस्मिन्स्वलक्षणे प्रतिभासमाने स्पष्टमेकत्वसङ्ख्यायाः प्रतिभासनाभावात् । न हीदं स्वलक्षणमियमेकत्वसङ्ख्येति प्रतिभासद्वयमनुभवामः । नापि लिङ्गजोऽयं सङ्ख्याप्रत्ययः, सङ्ख्याप्रतिबद्धलिङ्गस्य प्रत्यक्षसिद्धस्याभावात् । तत एव न शब्दोऽयं प्रत्यक्षानुमानमूलः । योगिप्रत्यक्षमूलोऽयमिति चेत् । न । तस्य तथावगन्तुमशक्यत्वात् । ततोऽयं मिथ्याप्रत्ययो निरालम्बन एवेति । तदयुक्तम् । एवं हि तस्य देशादिप्रतिनियमो न स्यात् । कारणरहितत्वादन्यानपेक्षणात्सर्वत्र सर्वदा सत्त्वमसत्त्वं वा प्रसज्येत । निरालम्बनोऽपि समनन्तरप्रत्ययनियमात्प्रतिनियतोऽयमिति चेत् । न । बहिःसङ्ख्यायाः प्रतिनियतायाः प्रतीतेः । बहिर्वस्तुषु सङ्ख्याध्यवसीयमाना वासनामात्रहेतुका मिथ्याकल्पनात्मिकैव । आपेक्षिकत्वात्स्थविष्ठत्वादिधर्मवदिति चेत् । न । नीरूपेषु शशविषाणादिष्वपि तत्प्रसंगात् । तत्कल्पनास्वस्त्येवेति चेत् । तर्हि ता कल्पनाः स्वरूपेणासत्याः सत्या वा । न तावदसत्याः । स्वमतविरोधात् । सत्याश्चेत्कथमिदानीं स्वरूपेण सत्यासु कल्पनासु सङ्ख्या परमार्थतो न स्यात् । तास्वपि स्वकल्पनान्तरारोपितापेक्षिकत्वाविशेषाद्बहिर्वस्तुष्विवेति चेत् । स्यादेवं यदि कल्पनारोपितत्वेनापेक्षिकत्वं व्याप्तं सिध्येत् । न चैव वस्तुसत्स्वपि नीलादिरूपेष्वस्य प्रसिद्धेः । नीलनीलतरयोर्हि रूपयोर्यथा नीलापेक्षं नीलतरं रूपं तथा नीलतरापेक्षं नीलमिति नीलादिरूपेषु वस्तुसत्स्वपि भावादापेक्षिकतायां न कल्पनारोपितत्वेन व्याप्तिरवगम्यते । यतः संख्ययोर्बहिरन्तश्च नीलरूपत्वं

स्यात्। यदि पुनरस्पष्टावभासित्वे सत्यापोषिकत्वादिति हेतुस्तदा साधनविकलो दृष्टान्तः । स्थविष्ठत्वादिधर्माणां स्पष्टावभासित्वात् । तत्तत्र भ्रान्तमिति चेत् । न । बाधकाभावात् । स्थविष्ठत्वादिधर्मप्रतिभासो न स्पष्टो विकल्पत्वादनुमानादिविकल्पवदित्यनुमानं तद्बाधकमिति चेत् । न । पुरोवर्तिनि वस्तुनीन्द्रियजविकल्पेन स्पष्टेन व्यभिचारात् । तस्यापि पक्षीकरणाद्व्यभिचार इति चेत् । तर्हि समाद्व्यभिचारी हेतुः स्पष्टत्वेन विकल्पत्वस्य विरोधासिद्धेः । क्वचिद्विकल्पत्वस्यास्पष्टत्वेन दर्शनात् । स्पष्टत्वेन व्यभिचारात्तस्यापि पक्षीकरणाद्व्यभिचार इति चेत् । तर्हि समाद्व्यभिचारी हेतुः स्पष्टत्वेन विकल्पत्वस्य विरोधासिद्धेः क्वचिद्विकल्पत्वस्यास्पष्टत्वेन दर्शनात् । स्पष्टत्वेन विरोधे चन्द्रद्वयप्रतिभासे प्रतिभासत्वस्यासत्त्वेन दर्शनात्सत्यप्रतिभासस्यापि सत्यत्वं मा भूत्तथाविरोधासिद्धेरविशेषात् । अथ प्रतिभासत्वाविशेषेऽपि स्वसंविदितप्रतिभासं सत्यं शशिद्वयप्रतिभासं त्वसत्यं सबाधकत्वाच्च प्रोच्यते । तर्हि विकल्पत्वाविशेषेऽपीन्द्रियजविकल्पः स्पष्टः साक्षादर्थग्राहकत्वात् । नानुमानादिविकल्पोऽसाक्षादर्थग्राहकत्वादित्यनुमन्यताम् । तथा चेन्द्रियजविकल्पेन व्यभिचार एव । निर्विकल्पत्वादिन्द्रियजस्य नास्य नेन्द्रियजो विकल्पोऽस्तीति चेत् । न । तस्य प्रागप्रमाणितत्वात् ।

विध एव तथा व्यवस्थित इति किं नाङ्गीकुरुथ किमिति परापानानपेक्ष न क्षणमास्ते । अथ न संस्थानविशेषरूपाणि पृथुत्वादीनि महत्त्वपरिमाणमेव तु तरतमेण अपि च पूर्वापरकोणतयाऽध ऊर्ध्वचापस्यायामतया व्यवस्थितं नाह पूर्वपश्चिमे अपि च महत्त्वमपदीर्घत्वत्वेन व्यवस्थितामिति कथं चातुर्विध्यम् । किं च किमाकारस्सुमानिति संस्थानविशेषे प्रश्नेऽपि प्रोच्यते प्रागुक्तस्तो नेति । ततोऽनयोः संस्थानरूपतैव ज्यायसी । अथैव महत्त्वमपि संस्थानविशेष एव स्यात्, न परिमाणमिति चेत् । सत्यम् । अस्य निःशेषसंस्थानविशेष

सह वृत्तेः । अशेषमपि हि वृत्तत्र्यस्रचतुरस्रदीर्घह्रस्वपृथुसंकीर्णादिकं वस्तु महदुच्यत एव । संस्थानविशेषरूपत्वे तु महत्त्वस्य नैवं स्यात् । न हि संस्थानविशेषः संस्थानविशेषान्तरेणाशेषेण समानाश्रयः समुपलभ्यते । वृत्तत्वस्य त्र्यस्रचतुरस्रतादिपरिहारेण त्र्यस्रत्वादेर्वृत्तत्वचतुरस्रतादिपरिहारेणावस्थितेः । न च महत्त्ववद्दैर्घ्यह्रस्वत्वे अपि समस्तसंस्थानविशेषसमावेशिनी । वृत्तत्र्यस्रादौ तदभावात् । न हि बदरापेक्षयामलकं दीर्घं व्यवहरन्ति प्रमातारः किं तु महदेवेति । एवं चापेक्षिकमणुत्वमपि संस्थानातिरिक्तपरिणामरूपमिति मन्तव्यम् । यत्पुनरनापेक्षिकमन्त्यमणुत्वं परमाणौ तस्यासंयुक्तद्रव्याधारत्वान्न संस्थानविशेषरूपताशंकामपि गच्छतीति सिद्धं द्वे एव परिमाणे इति । ताथागतं प्रति पुनारूपादिवेदितयोर्निशितमतिभिर्द्रव्यात्कथंचिदतिरेकिरूपयोः सिद्धिरिह वाच्या । यच्च नित्यमाकाशकालदिगात्मसु परममहत्त्वमित्युक्तम् । तदप्ययुक्तम् । आकाश एव । कथंचिदनित्यस्य तस्य भावात् । दिशोऽसत्त्वेन कालात्मनोरव्यापकत्वेनाकाशस्य कथंचिदनित्यत्वेन च निरूपितत्वात् । यदुदितम् 'अनित्यं द्व्यणुकादिद्रव्येष्वणवपि नित्यानित्यविकल्पाद्द्विभेदम्' इत्यादि तत्रापि वस्तूनां नित्यानित्यत्वेन साधनात्कथंचिदनित्यत्वमेव द्रष्टव्यम् । यदपि कुवलादौ भाक्तत्वमणुव्यवहारस्य व्याहारि । तदपि न चेतोहारि । महत्त्वव्यवहारस्यापि तत्र भाक्तत्वापत्तेः । अथाणुत्वव्यवहार एव भाक्तः । आपेक्षिकत्वात् । कुवले ह्यामलकमपेक्ष्याणुत्वं व्यवह्रियते न त्वणु वस्तुतस्तदण्विति चेत् । तर्हि तत एव महत्त्वव्यवहारो भाक्तोऽस्तु । तत्र सर्षपमपेक्ष्य महत्त्वव्यवहारात् । न पुनराकाशवत्तत्त्वतो महदिति समानम् । न च यदापेक्षिकं तेन भाक्तेनैव भवितव्यमिति नियमो नीलापेक्षया नीलतरस्वरूपस्यापेक्षिकस्याप्यभाक्तत्वात् । मुख्यस्य नीलतरत्वस्य तत्रानुभवात् । अथ यदि तत्राणुत्वं तात्त्विकं स्यात्तदा महत्त्वाभाव एव भवेत् । अणुत्वमहत्त्वयोरेकत्र विरोधात् । तथा च कुवलादेरचाक्षुषत्वमेव स्यात् ।

महत्त्वाभावात्। 'महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः'[1] इति वचनादिति चेत्। तदसम्बद्धम्। विशेषस्यासिद्धेः। भिन्नाभिन्नरूपेण तयोस्तत्रावस्थानात्सामान्यविशेषवत्। यदि हि यथामलकाद्यपेक्षया कुवलेऽप्यणुत्वं तथा तदपेक्षयैव महत्त्वमप्यधीयेत तदा स्याद्विशेषविरोधः। नचैवं सर्षपाद्यपेक्षयैव तत्र महत्त्वव्यवहारात्। एवं च समिदिकुवलादिषु ह्रस्वव्यवहारस्य नाकत्वमपाकरणीयम्। यदुक्तम्—'संयुक्तमपि द्रव्यं यद्वशात् इत्यादि तदपि न सङ्गतमवादि। अपोद्धारव्यवहारस्य परस्पराभावादेव सिद्धेः। पृथक्त्वकल्पनाया निष्प्रमाणकत्वात्। ननु कथमभावस्येदमस्मात् पृथगिति विधिप्रत्ययविषयत्वं सगच्छते, तस्येदं न भवतीत्यादिप्रतिषेधप्रत्ययस्यैव गोचरत्वेन प्रसिद्धेरिति चेत्। नवम्। इह छायेत्यभावेऽपि विधिप्रत्ययस्य त्वया स्वीकारात्। यस्तु नीलरूपारोपस्वरूपां छायामाह—तस्य घटप्रध्वंसोऽत्रेति कथं विधिप्रत्ययः। अथ प्रध्वंसो नामाभाव इति तत्प्रत्ययोऽभावप्रत्यय एव तर्हि पार्थक्यमप्यन्यस्यान्यस्वरूपत्वप्रतिषेध इति तत्प्रत्ययोऽप्यभावप्रत्ययः किं न स्यात्। यत्तु व्योमशिवो व्याचष्ट—'नव पदार्थान्तराणि विनिकृत्यादिसंख्यादिविशिष्टस्य पृथगिति व्यवहारस्य ततोऽर्थान्तरत्वात्। तथा हीतरेतराभावविशिष्टो व्यवहारः पदार्थान्तरावधित्वेन प्रवर्तते। न चैकत्वादिसंख्यानुरक्तस्तद्विलक्षणश्चायमितरेतरनिमित्तः' इति तदपि स्वसिद्धान्तश्रद्धाविजृम्भितम्। वैलक्षण्यासिद्धेः। पृथक्त्वव्यवहारस्याप्ययमस्मात् पृथगिति सावधित्वेनैव प्रवृत्तेरितरेतराभावस्यापि क्वचिदेकस्य द्वयोर्बहूनामभावः इति संख्यानुरक्तत्वेन प्रतीतेः। नियमेन तु पृथक्त्वव्यवहारोऽपि न। तथायमस्मात्पृथगिति सङ्ख्यासम्बन्धमन्तरेणापि भावात्। अथायमित्येकवचनेनोल्लिख्यमानैकत्वसङ्ख्यास्त्येवात्रेति चेत्। अयमत्र न भवतीत्यत्राप्येवमस्तु। यत्तूदयनः प्राह—'पृथगादिशब्दाः पर्याया इत्यनुमन्यामहे न त्वभावार्था

---

[1] वै० ४।१।६।

इति पञ्चम्या सम्बन्धानुपपत्तेर्न हि घटात्पटः पृथगिति घटात्पटो न भवतीति वाक्यार्थः ' इति तदपि न कुशलाय । यतो यदि पञ्चमीसंबन्धानुपपत्तिमात्रेणैतेषा शब्दाना सर्वथाप्यभावार्थत्व प्रतिपिध्यते तदा षष्ठीसबन्धानुपपत्त्याऽभावशब्दस्याभावार्थत्वमपि कथं स्यात् । न हि घटस्याभावोऽत्रास्तीति घटस्यात्र नास्तीत्यपि वाक्यार्थ. संगच्छते । कि तु घटोऽत्र नास्तीति । तत. कथमभावशब्दस्याभावार्थत्वं स्यात् । अथ घटस्याभावोऽत्रेत्यभावोल्लेखिनी प्रतीतिः । न चात्राभावशब्दस्याभावोऽभिधेय इति महच्चित्रम् । अयमस्मात्पृथगित्यन्यत्रान्यस्य स्वरूपाभावोल्लेखिनी प्रतीति' । न चात्र पृथक्शब्दस्याभावोऽभिधेय इति किं न चित्रम् । अथ घटोऽत्र नास्तीति नञोऽभावद्योतकत्वात्कर्तृवाचकेन घटशब्देनैव क्रियाया अभिसंबन्ध. । ततश्च प्रथमैव घटशब्दात् । घटस्याभावोऽत्रास्तीत्यत्र त्वभावशब्देन कर्तृवाचकेन क्रियाया अभिसंबन्धसंभवात् । तत एव प्रथमा । तत्सबन्धत्वेन तु घटशब्दात्षष्ठी । तात्पर्य प्राति तूभयत्रापि नास्ति विशेषः । तर्हि घट. पटो न भवतीत्यत्रापि नञो द्योतकत्वेनान्यार्थत्वाभावान्न तद्योगे घटशब्दात्पञ्चमी । पृथक्शब्दस्य तु वाचकत्वेनान्यार्थत्वात् ' अन्याराद्दितरर्ते ' इत्यनेन द्योतने ततः सा भवत्येव । तात्पर्य प्राति तूभयत्रापि नास्ति कश्चिद्विशेष इति सर्व तुल्यम् । यदा तर्हि घटे पटस्याभाव इत्यभावध्वनेर्वाचकस्य प्रयोगस्तदा कथं न पञ्चमीति चेत् । अस्याप्यन्यार्थत्वाभावात् । स एव ह्यन्यार्थ. शब्दो योऽर्थान्तराभावोपहितेऽर्थान्तरे वर्तते । यथा घटात्पट' पृथगित्यत्र घटाभावोपहिते पटे वर्तमान पृथक्शब्द' । न चाभावशब्दस्तथा । सर्वदाऽभावमात्रनिष्ठत्वात् । न हि भवति घटे पटोऽभाव इति । किं तु पटस्याभाव इति । यदा तर्ह्यपटो घट इत्युच्यते तदानीमपटशब्दोऽभावोपहितपदार्थान्तरवाचकोऽन्यार्थोऽस्त्येव ।

१ पा सू. २।३।२९ ।

पटाभावोपलक्षितघटप्रतिपादकत्वादिति कथं नात्र पञ्चमीति चेत् । ननु युक्त शब्दादेव पञ्चमी प्रेयते किमपटशब्दाद्धटशब्दाद्वा । नाद्य पक्ष । अन्यार्थशब्दयोगे शब्दान्तरादेव पञ्चमीप्रयोगप्रतिपादनात् । न हि घट पटात्पृथगित्यत्र पृथक्शब्दादेव पञ्चमी प्रयुज्यते । नापि द्वितीय । यतो यस्यान्यार्थेन शब्देन साक्षात्सम्बन्धो न भवति तस्मादेवेयं पञ्चमी विधीयते । यथा घट पटात्पृथगित्यत्र घटात् । न चात्रापटशब्दस्तथा । तस्य साक्षाद्घटशब्देनैव सम्बन्धात् । न चात्र शब्दान्तरमस्ति यत पञ्चमी शङ्क्येत ततोऽपटशब्दस्याप्यन्यादिशब्द समानयोगक्षेमत्वात्समानान्यार्थत्वम् । अपि च पृथगादिशब्दा पर्याया इत्यनेनेतरशब्दोऽपि पृथक्शब्दसमानार्थतया समस्ते । इदमस्मात्पृथगन्यदर्थान्तरमितरद्भिन्नमिति स्वयं स्वग्रन्थेऽभिधानात् । तच्चासङ्गतम् । इतरशब्देनैवान्यार्थतायाम् 'अन्यादिरितरत' इत्यत्रान्यार्थेनैवास्य गतत्वात्तमितरस्योपादानं स्यात् । अथापोद्धारव्यवहारे तथा तस्य पर्यायता द्वयोरप्युपलक्षितयोरेकवचनरूपेण तु विशेषेणेतरशब्द सूत्रे भेदेनोद्दिष्ट । तर्हि तत्पक्षे यत्र नञादेरपि पर्यायतास्तु । द्योतकत्वादिना तु विशेषेण सूत्रेऽन्यार्थत्वेन न गृह्यत इति किं न स्यात् । पृथक्त्वगुणाङ्गीकरणे चायं विशेषलाभो यद्गुणकर्मणा पृथग्गुणकर्मणी सामान्याद्गुणकर्मसामान्यानि विशेषेभ्यो गुणकर्मसामान्यविशेषा समवायादित्यस्खलत्प्रतीत्यनुभूयमान पृथक्त्वव्यवहारोऽनुपचरितवृत्त्यैव समर्थित स्यात् । अन्यथा तु द्रव्येष्वेव पृथक्त्वस्य भावात्तेष्वेव तस्यैयो मुख्य स्यादिति । यच्च 'अप्राप्तिपूर्विका प्राप्ति संयोग ' इत्युक्त तत्रापि यदा साम्प्रतिसान्तरत्वस्वरूपपरिणामपरित्यागेन निरन्तररूपतया य कथञ्चित्तादात्म्यपरिणाम स संयोग सम्मतस्तदा न कश्चित्प्रत्यर्थी । नैरन्तर्येण परिणतानि हि वस्तूनि संयुक्तव्यवहारगोचरतां प्रतिपद्यन्ते । निरन्तरावस्थितनिर्वर्त्तयत्तन्तुगृहवत् । ननु नायं दृष्टान्त कान्त । स्वस्मादनेकपदार्थसंयोगस्वगतयोर्गृहयो

संयोगगुणाश्रयानुपपत्तेः । निर्गुणत्वाद्गुणानामिति चेत् । नैवम् । गृहस्यावयवित्वेन संयोगगुणस्यायोगात् । कथं पृथ्वीपाथस्तेजसां विजातीयानामारम्भकत्वमिति चेत् । नीलधवलादितन्तूनां कथं पार्थिवा एवामी सर्वेऽपीति चेत् । पृथिवीपाथस्तेजांस्यपि द्रव्याणि किं न भवन्ति द्रव्यत्वेन सजातीयत्वे कालाकाशादिद्रव्यान्तरमपि तदारम्भकं स्यादिति चेत् । पार्थिवत्वेन सजातीयत्वे मृत्स्नादिकमपि किं न पटारम्भकं स्यात् । तन्तुत्वेन सजातीयत्वमत्र विवक्ष्यत इति चेत् । अत्रापि पौद्गलिकत्वेनेति विद्धि । पौद्गलिकत्वेन सजातीयत्वे पर्वतसमुद्रारम्भप्रभृतिकमपि गृहारम्भकं भवेदिति चेत् । तन्तुत्वेनापि सजातीयत्वे पर्वततुल्यस्तन्तुकूटोऽपि पटारम्भकः किं न भवेत् । भवत्येव यदि तावत्परिमाणपटनिष्पादननिपुणस्तन्तुवायः स्यादिति चेत् । इतरत्रापि भवत्येव तद्गृहारम्भकं यदि तथाविधः सूत्रधारः स्यात् । यथा तु भूयांसस्तन्तुवायास्तदंशैर्भूयसः पटान्निष्पादयन्तीति संभाव्यते तथान्यत्रापि संभावनेयमनिवार्या । ननु पौद्गलिकोऽप्यौर्ववन्हिर्न कदाचिद्गृहारम्भको दृष्टस्तत्किं जरत्तरतन्तुसंतानः पटारम्भकः कदाप्यालोकि । यथा तु नूतनपरिणामापन्नानां प्रागारम्भसामर्थ्यं तेषामासीत्तथौर्वानलादेरपि परिणामान्तरापन्नस्य तदासीदेवेति सर्वं तुल्यम् । एवं च गृहं द्रव्यं सजातीयद्रव्यारभ्यत्वात्पटवदिति सिद्धम् । तथा च सिद्धस्तत्र संयोगः । न च सन्नप्यसौ भिन्न एव भविष्यतीति वाच्यम् । तथानीक्षणाद्भिन्नत्वाविशेषेण चैत्रकुण्डलसंयोगस्यापि मैत्रकुण्डलसंयोगापत्तेश्च । तत्र तस्य समवायान्न कश्चिद्दोष इति चेत् । सिद्धस्तर्हि कथंचिदव्यतिरेकः कथंचिदविष्वग्भावादन्यस्यास्य निराकरिष्यमाणत्वात् । यस्तु संयोगं स्वरूपतोऽपि पराकुरुते सौगतस्तस्य संयुक्तावेताविति प्रत्ययः किमालम्बनः स्यात् । न तावद्रूपालम्बनः । तत्प्रत्ययविलक्षणत्वाद्रूपादिनिमित्तो हि प्रत्ययो नीलं पीतमित्याकारेणैवोल्लसेत् । अस्तु तर्हि

वस्यैव न द्रव्यं वंशोऽपि दारुद्रव्यावस्थैव न द्रव्यमिति किं न स्यात्। वंशस्य द्रव्यत्वं त्वयापि स्वीकृतमिति चेत्। न केवलस्यैव। विफणद्रव्यस्यापि। ननु विफणता यदि द्रव्यं न तदा भावप्रत्ययेन तन्निर्दिश्येतेति चेत्। वंशोऽपि यदि द्रव्यं तदा दारुद्रव्यस्य वंशतेति कथं भावप्रत्ययेन निर्दिश्यते। यथा च दारुद्रव्यपर्यायतामपेक्ष्य तथा निर्देशो द्रव्यत्वं पुनरपेक्ष्य वंश इति निर्देशस्तथाऽन्यत्राप्येकत्र विफणता। अन्यत्र तु विफणं द्रव्यमित्यभिधीयतां को दोषः। ननु वंशस्य स्वकीयनवपुराणादिपर्यायपरम्परापेक्षया द्रव्यत्वं युज्यतां नाम। विफणद्रव्यस्य तु तत्कथमिति चेत्। नन्वत्रापि सन्त्येवोच्छ्वासनिश्वासा अनन्तप्रतिक्षणभाविनः शुद्धपर्यायरूपा अर्थपर्यायास्तदपेक्षया तत्किं न भविष्यति। ततः सिद्धमिदं विफणद्रव्यावयवक्रिया द्रव्यारम्भकसंयोगविरोधिविभागोत्पादिका नभोभागविभागकारिणी चेति सिद्धो व्यभिचारः। कथमेकैव क्रियावयवविभागमाकाशावयवविभागमुत्तराकाशसंयोगं च कर्तुं शक्तेति चेत्। तत्किमेकेन वस्तुनैकमेव कार्यं कर्तव्यं, तथात्वे हि कथमेकोऽपि प्रदीपस्तैलापहारं तिमिरसंहारं कज्जलभारं स्वगोचरं ज्ञानं च कर्तुं समर्थः स्यात्। ततो विचित्रशक्तयो भावा विचित्राणि कार्याणि कर्तुमीशत एव। विकसत्कमलदलरूपो व्यतिरेकदृष्टान्तोऽपि साधनाव्यावृत्तः संकुचितकमलद्रव्यदलेषु क्रियाया द्रव्यारम्भकसंयोगविरोधिविभागोत्पादकत्वात्तद्विनाशेन विकस्वरत्कमलद्रव्यान्तरस्यैवोत्पत्तेः। कालात्ययापदिष्टता चास्य हेतोरनुमानबाधितप्रतिज्ञानन्तरं प्रयुक्तत्वात्। तथा हि विवक्षितावयवक्रिया, आकाशदेशेभ्यो विभागं करोति। क्रियात्वात्, यैवं सैवम्। यथाङ्गुलिक्रिया। तथा चेयं तस्मात्तथेति। न चात्र तथाविधविभागजनकत्वक्रियात्वयोः सहभावमात्रं न व्याप्तिरिति वाच्यम्। व्यभिचारादर्शनात्। तदप्युपाधेरनुपलम्भात्। अन्यथा धूमादावपि कार्यकारणभावस्य शङ्क्यमानोपाधिकत्वेन व्याप्त्य-

गतं प्रति समर्थनीये । यदपि बुद्धिभेदस्याविद्यायाश्चातुर्विध्यमभ्यधायि । तदप्यसाधीय । स्वप्नस्य विपर्ययेऽन्तर्भावात् । विपरीतैककोटिनिष्टङ्कनं हि विपर्ययलक्षणम् । तच्चात्रापि विद्यत एव । स्वप्ने हि यदा देशान्तरस्थितो वयस्य इह स्थितो दृश्यते तदा तत्र देशान्तरस्थितत्वाद्विपरीतस्येहस्थत्वस्य धर्मस्य निर्णयो विपर्ययलक्षणमक्षूणमस्त्येव । अथ विपर्ययान्तर्गतस्याप्यमुख्योपरतेन्द्रियग्रामत्वं प्रलीनमनस्कत्वं च विशेषमपेक्ष्य शुक्तिकादौ रजतादिप्रत्ययरूपाद्विपर्ययाद्भेदेनोपादानमिति चेत् । ननु किं प्रयोजनोऽस्य ततो भेदोपन्यासः । प्रयोजनमन्तरेणापि तथोपन्यासे हि कस्यचिदात्मालोकैकतानतया जाग्रद्दशायामप्युपरतेन्द्रियग्रामस्याङ्गुष्ठप्रमाणः श्यामाकतण्डुलप्रमाणो वायमात्मेत्यादिर्विपर्ययो ज्ञानमपि भेदेनोपन्यसनीयं स्यात् । ऐन्द्रियकविपर्ययाद्विशेषसद्भावात् । विद्यापि न चतुर्थत्वमाढयाति । तर्कागमादेरपि विद्याभेदस्य विद्यमानत्वात् । यथा चैतस्य प्रत्यक्षानुमानाभ्यां भेदः प्रामाण्यं च तथा प्रागेवावोचाम । आत्मप्रदेशवृत्तित्वायावद्द्रव्यभावित्वेऽपि नास्या उपपद्येते । कथंचिद्बुद्ध्यात्मन आत्मनः प्राक्प्रसाधितत्वात् । न च बुद्धिरूपस्वरूपापायेऽप्यात्मनः क्वचित्कदाचिदवस्थानमुपपन्नम् । निःस्वरूपस्य खरविषाणादेरपि सत्त्वप्रसङ्गात् । न चैते आत्मप्रदेशवृत्तित्वायावद्द्रव्यभावित्वे सर्वबुद्धिव्यापिनी विरूपाक्षबुद्धौ स्वयमनिष्टे । तस्या आत्मव्यापिकाया नित्यायाश्च स्वीकारात् । न चास्मदादिबुद्ध्यपेक्षयैवात्र विशेषणे नेश्वरबुद्ध्यपेक्षया । तस्या अस्मद्बुद्धिभ्यो वैशिष्ट्यादिति वक्तव्यम् । एवं हि तत्त्वादेव गुणत्वमप्यस्या मा भूदिति सप्तमपदार्थापत्तिः । यदपि 'परत्वादिनिमित्तत्वम्' अस्याः प्रागुक्तं तदपि परत्वादीनामबुद्धिजन्यसमर्थनादेव परास्तमवगन्तव्यम् ।

यच्च 'सुखदुःखेच्छाद्वेषप्रयत्नानामात्ममनःसंयोगजत्वम्' अगादि तदपि नावदातम् । सुखदुःखयोर्वेदनीयोदयजन्यपरिणामविशिष्टस्येच्छाद्वेषयोर्मोहनीयोदयोत्पाद्यपरिणामापन्नस्य प्रयत्ने वीर्या-

न्तरायक्षयोपशमविशेषसगतस्यात्मन एव कारणत्वनिर्णयात । उत्पन्ना एव ह्यमी मन सापेक्षमुत्पन्नमवेद्येन वेद्यन्त इति । प्रयत्नस्य चैतेषु परिस्पन्दरूपत्वेन कर्मतैव युज्यते न गुणत्वम् । न चात्मनो व्यापकत्वात्कथ परिस्पन्द इति वक्तव्यम् । व्यापकत्वस्यात्मनि प्रागेव प्रतिक्षेपात्परिस्पन्दस्य च साधनात् । किं च यथात्मन्यमी गुणास्तथा मनस्यपि किं न गुणत्वेन निगद्यन्ते । अथ कुतोऽपि स्वस्यापार्थत्वता मय ( स्वस्यापार्थत्व तद्वयम् ) मिति बुद्धिविशेष एव मय तर्हि— 'अप्राप्तप्राप्तिचिन्ता इच्छा । परापकारचिन्ता द्वेष ' इत्येतावपि बुद्धिविशेषावेव किं न स्याताम् । अथाप्राप्तप्रार्थनेच्छाप्रज्वलनात्मको द्वेष इति कथमनयोर्बुद्धिरूपता स्यादिति चेत् । नहि उद्रेकस्वरूप मयमपि कथ तद्रूप स्यात् । अथ बुद्धिरनयो कारण न तु तद्रूपावेवाम् । तथा हि—प्रथम प्रमाता वस्तु जानाति, तत इच्छति, द्वेष्टि वा । तदिसत्रापि तुल्यम् । प्रथम हि पाटच्चरादिज्ञानाति ततो बिभेतीति । अथास्तु तज्ज्ञानपूर्वकता भयस्य न तु तावन्मात्रेणास्य बुद्धेर्भेदो युक्त । पाटच्चरादिबुद्धितो बुद्ध्यन्तरस्वरूपस्यैवास्योत्पादिति चेत् । तदखिल तदितरत्राप्यन्यूनातिरिक्तमेव । अथ कथमिच्छाद्वेषयोर्बुद्धिरूपता भवन्तो वर्णयन्ति । ततो भिन्नकारणजन्यत्वेनानयोर्युष्मन्मते वर्णनात् । ज्ञानावृतिक्षयक्षयोपशमजन्या हि बुद्धिमोहनीयोदयकार्या पुनरिच्छाद्वेषौ । न वा कारणभेदेऽपि कार्यस्याभेदो युज्यते । घटपटयोरप्यभेदापत्तेरिति चेत् । एवमेतत् । अत एव प्रसगरूपतयैवोपन्यासो मोहनीयकारणकमपि चेद्भय बुद्धिरूपतया प्रकल्प्यते तदानीमिच्छाद्वेषौ वराकौ केनापराधेन परिभूयेते । तावपि हि बुद्धिरूपतया वर्ण्येताम् । न चैवम् । ततस्तत्त्रयमपि गुणान्तरमेवेति स्थितम् । एव शोकजुगुप्सादयोऽपि । सौगत मनि पुनरमीषा विज्ञानाभिन्नहेतुजन्यस्य हेतो प्रागपाकृतत्वात्कथचिन्निराकिणा सिद्धि इतीव । गुरुत्वमपि पतनाख्या पतनशक्तिरतीन्द्रियेति केचित । सोऽपि यदि गुणो गम्यते तर्हि स्पोट-

वटनशक्तिरपि कृपीटयोनिर्गुणोऽस्तु । नास्त्येव सा काचिदिति चेत् । गुरुत्वमपि मा भूत् । तदभावे कथ पतनमिति चेत् । शक्त्यभावे स्फोटोऽपि कथम् । प्रतिबन्धाभावसहकृता कृशानोरिति चेत् । पतनमपि संयोगरूपप्रतिबन्धकविशेषाभावेन सहकृतात्फलादेरस्तु । ततो यदि गुरुत्व गुणोऽभ्युपगम्यते तदा प्रतिकार्यं भिन्नशक्तिकल्पाद्भावानामायातमानन्त्यं गुणानाम् । लघुत्व च कुतो न गुण । गुरुत्वाभावरूपत्वात्तस्य न गुणत्वमिति चेत् । गुरुत्वमपि लघुत्वाभावः किं न स्यात् । ननु गुरुत्वाभावरूपत्वे तारतम्यं न स्यादित्यन्यत्रापि समानम् । ननु पतनरूपकार्यदर्शनाद्गुरुत्वमनुमिमीमहे । लघुत्वं तु कुतोऽनुमातव्यमिति चेत् । कुत्रापि तावदुत्पतनात् । प्रतीत हि निर्वातनिष्कम्पप्रदीपकुङ्कुमलेप्यपतन क्वचित्तिर्यक्पवनान्निर्णीत हि तिर्यक्पवन पवने । यद्यपि चात्र स्पर्शवद्बादरपुद्गलत्वेन गुरुत्वमपि जलभूम्योरिव निर्णीतमस्ति तथापि वस्तुस्वाभाव्याल्लघुत्वमेवात्रातिशयवत् । जलभूम्योस्तु गुरुत्वमेव । अत एव न तयो पवनवदुत्पतनमपि सपद्यते । यदा तु नाराचे समारोपस्तयोः क्रियते तदैकतरपार्श्वारोपितगरीयो द्रव्येणान्यतरगुरुद्रव्यस्य गुरुत्वे प्रतिबद्धे लघुत्वस्योत्कलितस्य भावाद्भवत्येवोत्पतनम् । अत एव च निश्चीयतेऽस्मात्तस्य लघुत्वं यतो व्यवहरन्तीदमस्माल्लघ्विति निपतद्गरीयो द्रव्यकारितमेवास्योत्पतनमिति चेत् । नैव विपर्ययस्यापि कल्पयितुं सुशकत्वात् । शक्यं ह्येवमपि वक्तुमुत्पतल्लघुद्रव्यकारितमिति सिद्धम् । स्वतन्त्रावस्थाया तु तस्य गुरुत्वमेवातिशयवदिति तस्यैव कार्यं जायते न लघुत्वस्येति । सैद्धान्तास्तु गुरुत्व लघुत्वं च स्पर्शविशेषावेतौ स्पर्शनप्रत्यक्षोपलक्ष्याविस्याहु. । तौ च कथंचिद्भिन्नौ प्राक्स्पर्शगुणसाधनादेव सौगतं प्रति प्रसिद्धौ बोद्धव्यौ । एवमेव स्नेहरूक्षतास्पर्शावपि वक्ष्यमाणौ । द्रवत्वमपि यदि परिणामविशेष. स्कन्धानाम-

---

१ कृपीटयोनि. — अग्नि. ।

निर्धार्यते तदासौ स्पर्शेन्द्रिय एव । परमाणुषु शक्तिरूपतयैव तदस्मिन खलु बाधका अस्मदादीनां तु विशदशतज्ञाद्युपलक्षिता परमाणवः केचिन्सन्ति पुद्गलमात्ररूपत्वात्तेषामित्युक्तं प्राक् । ते न पुनः संघातमापन्नास्तथा तथा व्यपदिश्यन्ते इति कुतोऽणुषु तत्सम्भवन् । नीलगुणादिरत्नास्यापि सौगतं प्रति सिद्धिः । स्नेहोऽपि स्पर्शेन्द्रियेण न पुनरस्येव पार्थिवद्रव्येष्वपि दर्शनात् । प्रतीतो हि तैलघृतनवनीतमधुच्छिष्टादिषु पामरप्रायपुंसामप्यङ्गव्यवस्थितविशेषोऽसौ । न हि शुद्धान्ते कुम्भे सप्तमे तत्कार्यं तथा दृश्यते यथा तैलादिकुम्भे । अथोपष्टम्भकात्तद्द्रव्यगत एव तत्र स्नेहः प्रतिभासते न पुनः स्वगत एवेति चेत् । मैवम् । विपर्ययस्यापि कल्पनाप्रसक्तेः । शक्यते वक्तुमम्भसि पार्थिवोपष्टम्भकद्रव्यगतोऽसौ चकास्ति न तु स्वगत इत्यम्भस्येव तदभावः । तस्माद्यत्र यथा प्रतीतिस्तत्र तथैवाभ्युपगमः सङ्गत इत्युभयस्या अपि विनायाः सद्भावात् उभयत्रापि तदुपगमो युक्त एव । यथा च स्नेहो गुणः कथ्यते तथा तत्समानयुक्ति रूक्षत्वमपि गुणो गणनीयः । न रूक्षत्वं नाम गुणोऽस्ति स्नेहाभावे रूक्षत्वव्यवहारसिद्धेरिति चेत् । न । रूक्षताभावे स्नेहव्यवहारप्रसङ्गात् स्नेहस्याप्यभावापत्तेः । शीतोष्णस्पर्शावच्छिन्नस्पर्शनेन्द्रियनत्स्नेहस्य विधिमुखेन प्रतिभासमानगुणरूपतास्वीकारे रूक्षत्वस्यापि साऽस्तु । द्वयमपि चतत्स्पर्शविशेषरूपमेवेति स्नेहस्य स्पर्शात्पृथगभिधानमसङ्गतमेव । यदि स्नेहः स्पर्शविशेषरूपः स्यात्तर्हि चक्षुषा निरीक्षितमात्र एव तैलादौ स्निग्धोऽयमिति प्रतीतिर्न भवेदिति चेत् । नेयं चाक्षुषी प्रतीतिरपि त्वानुमानिकी । दूरद्वासुरम्यं निरीक्षितेः उष्णोऽयं वह्निरिति प्रतीतिवत् । यथा हि तादृशं रूपं तादृशस्पर्शाविनाभावितया सम्युपलब्धं पुनः क्वचिद्दृश्यमानं तं गमयति तथात्र तैलं तथाभूतस्पर्शाविनाभावविनिश्चितं तं गमयत्येव । एतच्चास्य द्वीन्द्रियग्राह्यत्वमपि व्यपाकृतमवगन्तव्यम् । योऽपि संस्कारस्त्रेधा व्यावर्णि । तत्र न

वेगो नाम सातत्येन क्रियोत्पादादन्य. कुतश्चित्प्रमाणात्प्रतीयते । वेगेन गच्छतीति प्रतीतेरेवासौ प्रतीयत इति चेत् । तर्हि क्षिप्रं गच्छतीति प्रतीतेः क्षिप्रता गुणो भवेत् । क्रियाणां शीघ्रमुत्पादे प्रतीतिरियमिति चेत् । अन्यत्रापि तथास्तु । क्रियासातत्योत्पादनिमित्तत्वे चास्याः प्रतीतेः स्वीकृता । वेगेन शास्त्रं जानाति वेगेन षष्टिका[1]. पच्यन्त इत्यादिप्रतीतिरप्यस्खलन्ती सकलप्रमातृकाणामुत्पद्यमानानुपचरितवृत्त्यैव समर्थिता स्यात् । न ह्यत्र वेगो गुण. संभवति । तस्य नियतदिक्क्रियाप्रबन्धहेतुत्वेनाभ्युपगमात् । तस्याश्चात्र भावाद्वेगेनाभ्युपगमे कथं शरादौ सातत्येन क्रियोत्पत्ति. स्यात् । तदुत्पादककारणाभावाद्धनुःसंयोगादाद्यक्रियाया एवोत्पत्तिरिति चेत् एवं तर्हि सातत्येनोत्पद्यमानानां शब्दानां हेतुर्व्योमन्यपि वेगोऽङ्गीकरणीयः । संयोगाद्विभागाद्वाद्यशब्दस्यैवोत्पादात् । आद्यो द्वितीयस्य द्वितीयस्तृतीयस्येत्येवमुत्तरोत्तरः शब्द उत्तरोत्तरस्य शब्दस्य कारणमिति चेत् । कर्मस्वप्येवमस्तु । कथमेवं कदाचित्कर्मविराम इति चेत् । वेगाभ्युपगमेऽपि कथं वेगस्य तत्कारणस्य क्वचित्कुड्यादिसंयोगेन विरोधिना विनाशात् क्वचित्तु स्तिमितमारुतसंयोगेनेति चेत् । अस्माकमपि तेनैव संयोगेन कारणभूतस्य कर्मणो विनाशात्तदग्रतस्तदनुत्पादोऽस्ति । एवं चेयतैव सर्वस्याक्षुण्णस्योपपत्ते. किमनेन कर्तव्यम् । भावनास्थितिस्थापकावपि स्मृतौ । स्थितिस्थापने च जनयितव्ये शक्तिविशेषौ भावानामभ्युपगम्येते । शक्तिरूपयोरप्यनयोर्गुणतायामानन्त्यं गुणानां तासामानन्त्यात् । आत्मनोऽसत्त्वात् । किमधिकरणा स्मरणशक्तिः प्रतिक्षणमपरापरेषामेव तथा

---

१ षष्टिका'—तन्दुलजातिविशेषा' । एते तन्दुला बीजवापानन्तरं रात्रीणां षष्ट्या—मासद्वयेनेति यावत् पच्यन्ते । षष्टिका षष्टिरात्रेण पच्यन्त इति व्युत्पत्तिः ।

तथा पदार्थानामुत्पादात्कस्य स्थितिस्थापनशक्तिरपि स्यादिति सौगत.। सोऽप्यात्मन समर्थयिष्यमाणत्वात् । क्षणिकत्वस्य च प्रागप्रतिषिद्धत्वात्पास्त एवावगन्तव्य । धर्माधर्मयोस्तु द्रव्यरूपत्वेन समर्थितत्वात्समर्थयिष्यमाणत्वाच्च न गुणत्वम् । अनुगुणे तत्सम्भावन एव च शाक्यचार्वाकयोस्पैतत्परिपन्थिनो प्रतिक्षेप प्रेक्षणीय । यदपि शब्दस्याम्बरगुणत्वेन प्रतिपादनम् । तदपि नावदातम् । पौद्गलिकत्वेनास्य प्रावसाधनात् । ननु च वक्तृव्यापारादुद्गलस्कन्ध शब्दतया परिणमन्नेकोऽनेको वा परिणमेत् । न तावदेक । तस्य सकृत् सर्वदिग्गमनायोगात् । नाप्यनेक । एकस्माद्वक्तृव्यापारादनेकशब्दोत्पत्तेरनुपपत्ते । न च व्यापारानेकत्व सकृदेकस्य वक्तु सम्भवति । प्रयत्नस्यैक्यात् । अस्तु वानेकोऽय तथापि यावद्भि सर्वदिक्के श्रोतृभि श्रूयते शब्द । तावत्सख्या वक्तृव्यापारान्निष्पन्नास्तच्छ्रोत्राभिमुख गच्छन्ति । तस्मिन्सदृशशब्दकोलाहलश्रवण श्रोतॄनमस्य कुतो न

1 वेगाख्यो भावनाख्यश्च स्थितिस्थापक एव च ।
संस्कारस्त्रिविध प्रोक्तो नासौ साध्वेऽखिल ॥ ६८४ ॥
क्षणिकत्वात्पदार्थाना न काचिद्विद्यते क्रिया ।
स प्रवृत्तस्य हेतु स्यात्संस्कारो वेगसज्ञक ॥ ६८५ ॥
भावनाख्यस्तु संस्कारश्चेतसो वासनात्मक ।
युक्तो नात्मगुणश्चेद युज्यते तन्निराकृते ॥ ६८६ ॥
स्थितिस्थापकरूपस्तु न युक्त क्षणभङ्गत ।
स्थितावपि समत्वादाने ताद्रूप्येणैव सस्थिति ॥ ६८७ ॥
क्षण स्थैर्यमवस्थान स्वहेतोरेव जायते ।
पूर्वरूपस्वभावाच्च प्रवृत्त्यैवानुवर्तनम् ॥ ६८८ ॥
नान्यथोत्पद्यमानस्य कस्यासौ स्थापकस्तत ।
न चास्य दृष्टहेतुत्व संस्कारोऽन्योऽपि वा भवेत् ॥ ६८९ ॥
उत्पन्नस्यैव चेष्टोऽय यत्नादेः स्यात्प्रको गुण ।
गुणसंस्कारनामैव गत्वपादि न सम्भवा ॥ ६९० ॥
मनोयोगात्मना पूर्वं विस्तरेण निराकृतात् ।
परोक्तलक्षणोपेता नान्यस्मुपपद्यते ॥ ६९१ ॥ इति तत्त्वसग्रहे ।

भवेत् । सर्वेषां शब्दानामेकैकश्रोतृग्राह्यत्वपरिणामाभावादिति चेत् । तर्ह्येकैकः शब्द एकैकश्रोतृग्राह्यत्वपरिणतः सर्वदिशो गच्छन्नेकैकदिक्केनैव श्रोत्रा श्रूयेत इत्यायातम् । तच्चायुक्तम् । एकदिक्केषु प्रणिधानवत्सु श्रोतृषु स्थितेष्वत्यासन्नश्रोतृश्रुतस्य परापरश्रोतृश्रवणविरोधात् । परापर एव शब्दः परापरश्रोतृभिः श्रूयते न पुनः स एवेति चेत् । स तर्हि परापरः शब्दः किं वक्तृव्यापारादेव प्रादुर्भवेदाहोस्वित्पूर्वपूर्वश्रोतृश्रुतशब्दात् । प्रथमपक्षे कथमसौ परापरैः श्रोतृभिः श्रूयमाणः पूर्वपूर्वैः समानाकाशश्रेणिस्थैरपि न श्रूयत इति महदाश्चर्यम् । श्रवणेऽनुकूलकलश्रुतिरेव भवेत्तेषाम् । तद्ग्राह्यत्वपरिणामाभावस्योक्तत्वान्नायं दोष इति चेत् । नन्वयमपि कुतो न स्यात् । तत्कारणानां तथाजनकस्वभावत्वादिति चेत् ; सेयं पादप्रसारिका । द्वितीयविकल्पे तु पर्यन्तस्थितश्रोतृश्रुतशब्दादपि शब्दान्तरोत्पत्तिः कथं न भवेत् । पुद्गलस्कन्धस्य तदुपादानस्य सद्भावात् । वक्तृव्यापारजनितवायुविशेषस्य तत्सहकारिणस्तत्राभावादिति चेत् । तर्हि वायवीयः शब्दोऽस्तु किं वा परेण पुद्गलविशेषेण तदुपादानेन कल्पितेन कर्तव्यम् । तथोपगमे स्वमतविरोधः स्याद्वादिनो दुर्निवार इति । तदेतदखिलं सविशेषमम्बरगुणत्वेऽपि शब्दस्यावतरत्येव । तथा हि—ताल्वाद्याकाशसंयोगादाकाशे शब्दः प्रादुर्भवन्नेक एव प्रादुर्भवेदनेको वा । प्रथमपक्षे कुतस्तस्य नानादिक्कैः श्रोतृभिः श्रवणं सकृत्सर्वदिक्कगमनासंभवात् । द्वितीयपक्षोऽपि नोपपद्यते । एकस्मात्ताल्वाद्याकाशसंयोगादनेकशब्दोत्पत्तिविरोधात् । न चानेकस्ताल्वाद्याकाशसंयोगः सकृदेकस्य वक्तुः संभवति । प्रयत्नस्यैकत्वात् । न च प्रयत्नभेदं विना ताल्वादिक्रियापूर्व ........ रागकस्ताल्वाद्याकाशसंयोगो युज्यते । यतोऽनेकः शब्दः स्यात्, अस्तु वा यतः कुतश्चिदाद्यः शब्दोऽनेकस्तथापि सदृशशब्दानां कोलाहलश्रुतिप्रसङ्गः । समानशब्दस्यानेकसकृत्सर्वदिक्काशेषश्रोतृश्रवणाभिमुखस्योत्पत्तेः । यदि पुनरेकैकस्यैव शब्दस्यैकैकश्रोतृग्राह्यस्वभाव-

तयोपवर्णे समानशब्दकर्त्तृकश्रुतिरिति मतम् । तदेकदिक्षु समानप्रणिधिषु श्रोतृषु स्थितेष्वत्यासन्नश्रोतृश्रुतस्य परापरश्रोतृश्रवणविरोधः । परापर एव शब्दः परापरश्रोतृभिः श्रूयते न पुनः स एवेति चेत् । स तर्हि परापरः शब्दः पूर्वपूर्वश्रोतृश्रुतशब्दात्प्रादुर्भवत्ताल्वाद्याकाशसंयोगात्स्यात् वा । न तावत्ताल्वाद्याकाशसंयोगात् । यतो यत्रैवायमसमवायिकारणभूतोऽस्ति तत्रैव कार्यमुत्पादयितुमीष्टे । तन्तुसंयोगादौ तथा दर्शनात् । न च परापरश्रोतृश्रोत्रप्रदेशेषु ताल्वाद्याकाशसंयोगः समस्ति । नापि पूर्वपूर्वश्रोतृश्रुतशब्दात्प्रत्यासन्नतमश्रोतृश्रुतस्य शब्दस्यान्त्यत्वाच्छब्दान्तरारम्भकत्वविरोधात् । तथा च कथं शेषश्रोतृणा तच्छ्रवणं स्यात् । तस्यापरशब्दारम्भकत्वे चान्त्य एव शब्दः श्रूयते नानन्त्य इति सिद्धान्तव्याघातः । अथ प्रत्यासन्नतमश्रोतारं प्रथमः शब्दोऽन्त्यस्तेन श्रूयमाणत्वात् प्रत्यासन्नतरं तेनाप्यश्रवणादेन च श्रूयमाणोऽसौ तमेव प्रत्यन्त्यो न तु प्रत्यासन्नं प्रति । तत एव सोऽपि तमेव प्रत्यन्त्यो न दूरश्रोतारं प्रतीति मतिः । सापि न श्रेयसी । शब्दस्यैकस्यान्त्यत्वानन्त्यत्वविरोधात् । एतेन यः शब्दः सामान्यविशेषवत्त्वे सति बाह्यैकेन्द्रियप्रत्यक्षत्वाद्रूपादिवदित्यतोऽनुमानात् । अत्र परमाण्वादिभिर्व्यभिचारपरिहारायेन्द्रियप्रत्यक्षत्वादिति तथापि घटादिभिरनैकान्तिकत्वनिवृत्त्यर्थमेकेति । एकेन्द्रियप्रत्यक्षत्वादित्युच्यमानेऽप्यात्मना व्यभिचारस्तन्निरासार्थं बाह्येति । रूपत्वादिनानैकान्तनिराकरणार्थं च सामान्यविशेषवत्त्वे सतीति । तथा कर्मापि शब्दो न भवति संयोगविभागाकारणत्वाद्रूपादिवत् । आ( च )नश्च न च न कर्म शब्दः, अनित्यत्वे सति नियमेनाचाक्षुषप्रत्यक्षत्वात् । यदेवं तदेवं । यथा रूपादि । तथा च शब्दस्तस्मात्तथेति । आत्मना व्यभिचारपरिहारार्थमनित्यत्वे सतीति । तथाप्यचाक्षुषप्रत्यक्षत्वादृष्टकर्मस्यानैकान्त्यम् । तत्परिहृतये नियमेनेति । तथा शब्दादिवदचाक्षुषप्रत्यक्षत्वानियमासम्भवात् । तथा शब्दो न द्रव्य-

न कर्म । व्यापकद्रव्यसमवेतत्वात् । सुखादिवदिति । ततः सिद्धं द्रव्यकर्मान्यत्वे सतीति हेतोर्विशेषणम् । द्रव्यकर्मान्यत्वादित्युच्यमाने सामान्यादिना व्यभिचारः । तन्निवृत्त्यर्थं सत्तासंबन्धित्वादिति । ततः सिद्धमस्य गुणत्वम् । स च पारिशेष्यादाकाशस्यैव गुणः । तथा हि— न तावत्स्पर्शवतामणूनां विशेषगुणः शब्दोऽस्मदादिप्रत्यक्षत्वात् । कार्यद्रव्यरूपादिवत् । नापि कार्यद्रव्याणां पृथिव्यादीनां विशेषगुणोऽसौ कार्यद्रव्यान्तराप्रादुर्भावेऽप्युपजायमानत्वात् । सुखादिवत् । कारणगुणपूर्वकत्वादिच्छादिवत् । अयावद्द्रव्यभावित्वात्तद्देवाश्रयाद्वेर्यादेरन्यत्रोपलब्धेश्च । स्पर्शवतां हि पृथिव्यादीनां यथोक्तविपरीता गुणाः प्रतीयन्त इति । नाप्यात्मनो विशेषगुणः शब्दोऽहङ्कारेण विभक्तग्रहणाद्बाह्येन्द्रियप्रत्यक्षत्वादात्मान्तरग्राह्यत्वाच्च । बुद्ध्यादीनां पुनरात्मगुणानां तद्वैपरीत्येनोपलब्धेः । नापि मनोविशेषगुणोऽसौ, अस्मदादिप्रत्यक्षत्वाद्रूपादिवत् । नापि दिक्कालविशेषगुणोऽसौ । तत एव तद्वत् । अतः पृथिव्यादिव्यतिरिक्ताश्रयाश्रितोऽसौ तद्वृत्तिबाधकप्रमाणसद्भावे सति गुणत्वात् । यस्त्वेवं न भवति नासौ तथा । यथा रूपादिः । तथा च शब्दस्तस्मात्तद्व्यतिरिक्ताश्रयाश्रित इति । स च तद्व्यतिरिक्त आश्रय आकाशमेवेति सिद्धमस्याम्बरगुणत्वमिति । तदखिलमलीकम् । गुणः शब्द इत्यादौ हेतोर्विशेष्यैकदेशासिद्धत्वात् । कर्मान्यत्वे सत्यपि हि शब्दस्य द्रव्यान्तरत्वप्रसिद्धम् । द्रव्यलक्षणलक्षितत्वेनास्य द्रव्यत्वोपपत्तेः । गुणक्रियावत्त्वं हि द्रव्यलक्षणम् । तच्चाविकलं शब्देऽस्तीत्यतो द्रव्यं शब्दो गुणक्रियावत्त्वाद्यदि .... .... .... .... .... महान् शब्दोऽस्मदादिप्रत्यक्षत्वात्पटादिवदिति नात्मना व्यभिचारी हेतुस्तस्याव्यापकत्वेन प्राक्प्रसाधितत्वादिति सिद्धः शब्दः पुद्गलस्कन्धपर्याय इति । स चायं द्वेधा भाषात्मकोऽभाषात्मकश्च । भाषात्मकोऽपि द्विप्रकारोऽक्षरात्मकोऽनक्षरात्मकश्च । प्रथमः शास्त्राभिव्यञ्जकसंस्कृतादिभेदादार्यम्लेच्छव्यवहारहेतुः । अनक्षरात्मको द्वीन्द्रिया-

र्शनामनतिशयनानास्वरूपप्रतिपादनहेतुः । स एष प्रायोगिक एव । अभाषात्मकोऽपि द्वेधा—प्रयोगविस्रसानिमित्तत्वात् । तत्र प्रयोगनिमित्तश्चतुर्द्धा तताद्भिदेन । ततस्तन्त्रीप्रभवः, आनद्धो मुरजादिसमुद्भवः, घनः कांस्यतालादिजनितः । सौषिरो वंशादिनिमित्तः । विस्रसानिमित्तः शब्दो मेघादिप्रभवः इति ।

गुणाश्चतुर्विंशतिरेनमते परीक्षिता येन सदाद्रियन्ते ।
जिनाश्चतुर्विंशतिरप्यमुष्य प्रसादसान्द्रे नयने भजन्ते ॥ ६८५ ॥

वैशेषिकोक्तकर्मलक्षणपरीक्षा ।

यच्चावाचि ‘ कर्मत्वाभिसम्बन्धेनैकद्रव्यमगुणं संयोगविभागेष्वनपेक्ष कारणमित्यनेन वा लक्षणेन लक्षितमुत्क्षेपणादि पञ्चविधं कर्म ’ इति । तत्र कर्मत्वाभिसम्बन्धो द्रव्यत्वाभिसम्बन्धवत्प्रतिरोधनीयः । लक्षणान्तरं पुनरात्रेयो विवृणोति— ‘ एकं द्रव्यमिति नाद्रव्यं न चानेकद्रव्यमित्यर्थो नास्य गुणाः सन्ति स्वयं च गुणो न भवतीत्यगुणं संयोगाश्च विभागाश्च संयोगविभागास्तेषु संयोगविभागेषु कारणमित्युत्पन्नं कर्म स्वाश्रयमाश्रयान्तराद्विभज्य संयोजयतीति । तेषु च संयोगविभागेषु कर्तव्येषु कर्म कारणान्तरं नापेक्षत इत्यनपेक्षं न पुनः समवायिकारणमपि नापेक्षत इति । यद्वा संयोगविभागाः कर्मासाधारणं नापेक्षते, इत्यनपेक्षं न पुनः साधारणमपि नापेक्षत इति । दिशा खलु संयोगविभागापेक्षं कर्म स्वाश्रयस्य संयोगविभागावारभते तथा च प्रेरकस्य या दिशा प्रति प्रयत्नस्तमारम्भमस्तदभिमुखं कर्म जायते तस्माच्च कर्मणस्तदभिमुखौ संयोगविभागौ भवतः ’ अनेनादृष्टेश्वराद्यपेक्षस्य कर्मणः संयोगविभागारम्भो व्याख्यातः इति । तत्र गुणो न भवतीत्यगुणमिति तत्पुरुषसमासमाचक्षाणोऽयमात्मनो महद्वैयाकरणत्वमाविष्करोति तत्पुरुषश्चोत्तरपदार्थप्राधान्याद्धि न गुणोऽगुण इति पुल्लिङ्ग एवागुणशब्दः संगच्छते न त्वगुणमिति नपुंसकलिङ्गः । न चैवं कृते कश्चि-

द्विशेषलाभोऽस्य संयोगविभागेष्वनपेक्षं कारणमित्यनेनैव गुणेभ्यो व्यवच्छेदस्यैतद्धर्माद्दृष्टस्य सिद्धत्वात् । यदाह स एव– 'संयोगविभागेष्वनपेक्षं कारणमित्येतावत्कर्मलक्षणमेकद्रव्यमगुणमित्यभिधानं तु कर्मस्वरूपोपवर्णनार्थं न पुनः कर्मलक्षणार्थम्' इति । एवं ह्यनेन ब्रुवतानक्षरमिदमाख्यायि निरर्थकमेवेदमभिधानमत्रेति । किं चेदमपि लक्षणं नावदातमिति व्याप्तिदोषावतारात् । संयोगविभागयोर्गुणयोरपि संयोगविभागोत्पत्तावनपेक्षकारणत्वात् । तावपि हि तदुत्पत्तौ समवायिकारणव्यतिरिक्तं कारणान्तरं नापेक्षेते । नन्वपेक्षेते एव कारणान्तरं तत्साधारणमसाधारणं वा । साधारणं चेत्तत्किं कर्मपक्षे कोऽकर्मक्षितं साधारणस्येश्वरबुद्ध्यादेः कारणस्योपेक्षणीयस्य त्विः स्वयमेवानेनाभिधानात् । असाधारणं चेत्तदप्यत्राक्षूणमीक्ष्यत एव । असाधारणस्य पूर्वसंयोगाभावस्योत्तरे संयोगे कर्तव्येऽनेनापेक्षणात् । कर्म हि विभागमारभ्य विभागात्पूर्वसंयोगनिवृत्तावेवोत्तरसंयोगमारभत इति । अथ पूर्वसंयोगे सत्युत्तरसंयोगो न भवतीत्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगः प्रतिबन्धकस्तस्मात्पूर्वसंयोगाभावविशिष्टं कर्मोत्तरसंयोगमारभते । न च प्रतिबन्धकाभावविशिष्टस्य कर्मणः कारणत्वे सापेक्षकारणत्वप्रसंगो गुरुत्ववत्, यथा पतनकर्मणि निरपेक्ष कारण गुरुत्वम् । अथ च संयोगाभाववदेव पतनकारणमिति चेत् । तदप्ययुक्तम् । यतो यदि प्रतिबन्धकाभावसहकारिसापेक्षत्वेऽप्यस्यानपेक्षकारणत्वं कथ्यते । किमिदानीं सापेक्षकारण स्याद्बीजादेरप्यनपेक्षकारणत्वापत्तेः । यत्तु गुरुत्व दृष्टान्तीकृतम् । तदपि नोचितम् । तस्यापि सापेक्षस्यैव पतनकारणत्वोपपत्तेः सामग्र्या एव निरपेक्षकारणत्वव्यवस्थापनात् । यच्च पञ्चप्रकारत्वमेतस्योपादेशि तदपि नोपपद्यते । तथा ह्यमी अस्य पञ्च प्रकाराः । उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति । तथा च सूत्रम्– 'उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं

१ वै द. १।१।७।

गमनमिति कर्माणि' इति। तत्रोत्क्षेपणं यदूर्ध्वाधःप्रदेशैः संयोगविभागकारणं कर्मोत्पद्यते। यथा शरीरावयवे तत्सम्बद्धे च मुसलादौ ऊर्ध्वदिग्भागभाविभिराकाशाद्यवयवैः संयोगकारणमधोदिग्भागभाविभिश्च विभागकारणमिति। यदुक्तविपरीतसंयोगविभागकारणं तदपक्षेपणम्। ऋजुनो द्रव्यस्य कौटिल्यकारणं कर्माकुञ्चनम्। तद्यथा—ऋजुकं बाह्वादिद्रव्यं स्वावयवानामङ्गुल्यादीनां तादृशैः स्वसंयोगिभिराकाशादिविभागे सति मूलप्रदेशैश्च संयोगे येन कर्मणा कुटिलं सम्पद्यते तदाकुञ्चनम्। तद्विपर्ययेण तु संयोगविभागोत्पत्तौ येन कर्मणावयवी ऋजुः सम्पद्यते तत्कर्म प्रसारणम्। अनियतदिग्देशैर्यदाकाशादिभिः संयोगविभागकारणं तद्गमनम्। उत्क्षेपणादिकं तु चतुष्प्रकारमपि नियतदिग्देशसंयोगविभागकारणम्। अत एव पञ्चैव कर्माणि भवन्ति भ्रमणस्यन्दनरेचनादीनां गमन एवान्तर्भावादिति। तदेतदसङ्गतम्। उत्क्षेपणादीनामशेषाणामपि गमनरूपत्वाद्यथाविधप्रत्ययस्य सर्वत्रैवोत्पादात्। तथा हि—ऊर्ध्वं गच्छत्यधःप्रदेशान्मूलप्रदेशं गच्छति, मूलप्रदेशादग्रप्रदेशं गच्छतीति सर्वेषामपि भवति प्रत्ययः। तथा च प्रयोगविस्रसोभयनिमित्तापेक्षो देशाद्देशान्तरप्राप्तिहेतुः परिस्पन्दात्मा परिणामविशेषः कर्मत्वेनावसेयोऽस्तु कृतमुत्क्षेपणादिगणनया। अथ यथा सत्त्वस्य सत्तान्तरं पुरस्तात् तथा गमनत्वमपि। गमनस्य भेदव्यापकत्वात्कर्मत्वस्य। यत्तु विशेषसंज्ञया पृथग्गमनग्रहणं कृतं तदुत्क्षेपणादिशब्दैरनवरुद्धानां भ्रमणादीनां संग्रहार्थम्। तदकरणे हि विशेषसंज्ञोद्दिष्टानामुत्क्षेपणादीनामेव कर्मत्वमन्या नियमश्च भवेत्। अथ च भ्रमणादयो हि लोके कर्मत्वेन प्रतीताः। ततस्तेषामपि परिग्रहार्थं तस्य पृथग्ग्रहणमिति चेत्। एवं तर्हि सुतरां कर्मसंख्यता पञ्चता व्याप। उत्क्षेपणादिवत् भ्रमणादीनां गमनभेदानामुपमाभावात्। यथा खलु गमनभेदाः केचिदुत्क्षेपणापक्षेपणादयः, तथा भ्रमणस्यन्दनस्फूत्कारीकरणाङ्गहारादि (हसनकम्पनादयस्त्वराणादि) सन्तीति कथं पञ्चैव कर्माणि स्युः। अथ सर्वस्यापि भ्रमण-

स्पन्दनादेः कर्मणोऽनियतदिग्देशसंयोगविभागहेतुत्वेनैक्यात्कथं तत्संख्याव्याघातः। तर्हि, उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणानामपि नियतदिग्देशसंयोगविभागकारणत्वेनैक्यादनियतदिग्देशं नियतदिग्देशमिति द्वावेव कर्मभेदौ भवेतामिति कथं न तत्संख्यापरिक्षयः। अथ तदविशेषेऽप्यवान्तरविशेषसमुद्भवादुत्क्षेपणादिभेदपरिकल्पना तर्हि तत एव। तदविशेषेऽपि भ्रमणस्पन्दनादिभेदकल्पनापि किं न स्यात्। अथ यदि भ्रमणस्पन्दनादेरुत्क्षेपणादिवद्भिन्नजातीयत्वं स्यात्तदानीमेकत्रैकदैव कर्मद्वयं युज्येत। रूपादिवदव्याप्यवृत्तित्वात्कर्मणः। तस्मादेकमेवेदं गमनाख्यं कर्मेति निर्णीयते भ्रमति स्पन्दते चेति। प्रत्ययभेदस्तु तत्तत्संयोगविभागहेतुक इति चेत्तर्हि, उत्क्षेपणादि भ्रमणादि चैकमेव कर्म स्वीकर्तव्यम्। भवति हि भ्रमद्भ्रमरकादौ दारकेण करतलेनोत्क्षिप्यमाणे भ्रमणोत्क्षेपणप्रतीतिरिति। अनियतदिग्देशसंयोगविभागकारणं भ्रमणादिकमेव गमनशब्देनोच्यते। उत्क्षेपणादिषु तु तथाप्रत्ययो भाक्त इति कश्चित्तस्यापि न पञ्चतैव कर्मणि व्यवतिष्ठते। विपर्ययस्यापि कल्पयितुं सुशकत्वात्। नियतदिग्देशसंयोगविभागकारणमुत्क्षेपणादिकमेव गमनशब्देनोच्यते। भ्रमणादिषु तु गमनप्रत्ययो भाक्त इत्यपि हि वदता न नाम वक्त्रं कश्चित्प्रातिरुणद्धि। तथा चोत्क्षेपणादिचतुष्टयस्य गमनरूपतयैक्यात् भ्रमणादीनां च भूयस्त्वात्कुतो न तत्संख्याव्याहतिः। न चोत्क्षेपणादौ गमनप्रत्ययो बाध्यते। यतस्तस्य भाक्तत्वं तत्र भवेत्। यच्चैतत्कर्मणां साधर्म्यमुच्यते। उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसंबन्ध एकद्रव्यवत्त्वं क्षणिकत्वं मूर्तद्रव्यवृत्तित्वं अगुणवत्त्वं गुरुत्वद्रवत्वप्रयत्नसंयोगजन्यत्वं स्वकार्यसंयोगिविरोधित्वं समवायिकारणत्वं संयोगविभागनिरपेक्षकारणत्वं स्वपराश्रयसमवेतकार्यारम्भकत्वं समानजातीयानारम्भकत्वं प्रतिनियतजातियोगित्वं चेति। तत्र कर्मत्वाभिसंबन्धः प्राक्परास्तः। एकद्रव्यत्वमिति कोऽर्थः। एकैकस्मिन्द्रव्ये एकमेव कर्म वर्तते एकं कर्म एकत्रैव द्रव्ये वर्तत इति

चेत् । तत्रैकमेकत्रैव वर्तत इति युक्तम् । एकत्रैकमेव वर्तत इति त्वयुक्तम् । एकत्रापि कर्मद्वयोपलम्भात् । अथैकस्मिन्द्रव्ये युगपद्विरुद्धोभयकर्मसमवायः स्यात्तदितरो वा । आद्यस्तावन्न सम्भवी । तयोः परस्परं प्रतिबन्धात् । दिग्विशेषसंयोगविभागानुत्पत्तौ देशाद्देशान्तरप्राप्तिहेतुत्वलक्षणाभावात् । अथ द्वितीयस्तदेकस्मादेव कर्मणस्तद्देशद्रव्यसंयोगविभागयोरुत्पत्तेर्द्वितीयकल्पनावैयर्थ्यमिति । तन्न तथ्यम् । पक्षद्वयस्याप्युपपत्तेरेकत्र चैत्रादिशरीरावयविनि हस्तोत्क्षेपस्य पादापक्षेपस्य च विरुद्धस्य आभ्यन्तरभ्रमरकादौ भ्रमणोत्क्षेपणादेरविरुद्धस्य च कर्मणो युगपत्प्रतीतेः । न च वाच्यं हस्तपादयोरवयवयोरेव ते कर्मणी न त्वेकस्यावयविनस्तदुभयमस्तीति । एवं हि श्येनस्थाणुसंयोगादिरपि न स्यात् । तत्रापि चरणमस्तकयोस्त्ववयवयोरेव संयोगो न श्येनस्थाण्वोरिति वक्तुं शक्यत्वात् । चरणमस्तकयोरपि वा न संयोगस्तयोरप्यवयवित्वात् तेन च तदवयवयोरप्यवयवित्वेन परम्परया तत्कारणभूतानामणूनामेवासौ भवेत् । तथा चावयवी निष्क्रमः संयोगस्य च परोक्षमेव भवेत् । संयोगस्य प्रदेशवृत्तित्वादवयवे वृत्तिरुपपन्नैव न तु कर्मण इति चेत् । न एतत् । प्रदेश एव तदुपलम्भाद्वयस्य कर्मण्यपि न नाम नास्ति । यदि विरुद्धयोरप्युत्क्षेपणापक्षेपणयोरेकत्र सम्भवः स्यात् । तदा छायातपयोरप्येवं किं न भवेदिति चेत् । ननु भवत्येव । एकस्मिन्पटे तयोर्द्वयोरप्यवस्थानात् । यत्र पटांशे छाया तत्र नास्त्यातप इति चेत् । तर्हि किं यत्रोत्क्षेपणं तत्रैवांशेऽपक्षेपणमप्यस्माभिरभ्युपगतं येनेत्थमुच्येत । ततोऽवयवभेदेन विरुद्धेऽपि कर्मणी एकत्रावयविनि स्त एव । सामस्त्येन तु ते तत्रापि न स्तः । यस्त्वेकस्मादपवरकादपवरकान्तरं गच्छति पुंसि तन्मध्यवर्तिनः प्रमातृद्वयस्य युगपत्प्रवेशनिष्क्रमणविरुद्धकर्मद्वयप्रत्ययः स औपाधिक एव । अपवरकोपाधेरतादृशेऽभावात् । तस्माद्गमनमात्रनिमित्त एवायं प्रविशति गच्छतीति प्रतीतेरुपाधिमात्राभाव

दशायामविशेषात्। न .... .... .... .... .... ... .... .... .... प्यौपाधिक एवेति वक्तव्यम्। तत्रोपाधेः कस्याप्यनुपलक्षणात्। तथापि तत्कल्पनायामुत्क्षेपणादिप्रत्ययस्यापि तथात्वापत्तेः कुतः कर्मणः पञ्चधात्वं स्यात्। यदपि क्षणिकत्वं साधर्म्यमिति चेत्। तदपि नोपपन्नम्। धानुष्कदेशाल्लक्ष्यदेशं यावद्बाणादावेकस्यैव कर्मणः समुपलम्भात्। सदृशापरापरकर्मक्षणोत्पादात्केशनखादिवत्तत्र तथा प्रतीतिरिति चेत्। नैतत्सत्यम्। एकत्वबाधकोपदर्शनमन्तरेण तथा कल्पनानुपपत्तेः। क्षणिकत्वे चास्य कथमुत्क्षेपणमिदमित्यादिप्रत्ययोत्पत्तिः स्यात्। तदुत्क्षेपणत्वादिजात्यभिव्यञ्जकः कर्मक्षणस्तत्समुदायो वा भवेत्। न तावत्तत्क्षणो यतो यावति प्रदेशे परमाणोरनुप्रवेश .. .... .... .... .... .... ....

**सामान्यपदार्थपरीक्षणम्।**

यदप्यवादि 'अनुवृत्तप्रत्ययकारणलक्षणं, सामान्यं द्विविधं परमपरं नित्यमेव' इति तत्र कोऽयमनुवृत्तः प्रत्ययो नाम। किं च परमपरं वा सामान्यमिति। अनुगतप्रत्ययोऽनुवृत्तप्रत्ययः। परसामान्यं सत्ताख्यम्। तच्च त्रिषु द्रव्यगुणकर्मसु पदार्थेष्वनुवृत्तप्रत्ययस्यैव कारणत्वात्सामान्यमेवोच्यते न विशेषः। अपरं तु द्रव्यत्वगुणत्वकर्मत्वादिलक्षणम्। तच्च स्वाश्रयेषु पृथिव्यादिष्वनुवृत्तप्रत्ययहेतुत्वात्सामान्यमित्युच्यते। स्वाश्रयस्य च विजातीयेभ्यो व्यावृत्तप्रत्ययहेतुतया विशेषणात्सामान्यमपि सद्विशेषसंज्ञां लभते। तथा हि— द्रव्यादिष्वगुण इत्यादिकापीयं व्यावृत्तबुद्धिरुत्पद्यते। तां प्रति द्रव्यत्वादिसामान्यानामेव हेतुत्वं नान्यस्य। न ह्यगुणत्वादिकमपरमस्ति। अपेक्ष्यभेदाच्चैकस्य सामान्यविशेषभावो न विरुध्यते। यद्वा सामान्यरूपता मुख्यतो विशेषसंज्ञा तूपचारतो विशेषाणामिव द्रव्यत्वादीनामपि व्यावृत्तबुद्धिनिबन्धनत्वादिति चेत्। अत्रोच्यते। यदुक्तम्— 'अनुगतप्रत्ययोऽनुवृत्तप्रत्ययम्' इति तत्रानुगतश्चासौ प्रत्ययश्चेत्यनुगत-

प्रत्यय किं चानुगते वस्तुनि प्रत्यय इति । आद्यपक्षे कोऽयं प्रत्ययस्यानुगमो नाम, ऐक्यं सादृश्यं वा । न तावदैक्यम् । प्रत्ययानां क्षणिकत्वेन प्रतिविशेषमैक्यासम्भवात् । अथ सादृश्यमनुगमः प्रत्ययस्य । ननु किंकृतं तस्य सादृश्यं विषयसादृश्यकृतं विषयैक्यकृतं वा । यद्याद्यः पक्षः । तदा न कश्चिद्विवादः । सदृशपरिणामात्मकस्य प्रतिव्यक्ति व्यवस्थितसामान्यस्य तादृक्प्रत्ययहेतुतयास्माभिरपि स्वीकारात् । अस्यैव चानुभवसमृद्धिबन्धुरत्वात् । विषयैक्यकृते तु प्रत्ययसादृश्यस्वीक्रियमाणानुगते वस्तुनि प्रत्यय इत्ययमेव पक्षोऽभ्युपेतः स्यात् । न चासौ सङ्गच्छते । अनुगतस्यैकस्यानेकस्थस्यैकान्तभेदिनः सामान्यस्य विचार्यमाणस्यायोगात् । अथ किं विचारैः । प्रत्यक्षमेव तावत्प्रमाणं विभिन्नगवादिव्यक्तिव्यतिरिक्तमेकं सामान्यमुपयाति । गवाद्यनुगताकारेन्द्रियप्रभवप्रत्यये तथाविधस्यैव तस्य प्रतिभासनात् । न हीदं प्रत्यक्षमेकाकारवस्त्वालम्बनमन्तरेणोपपद्यते । निरङ्कुशं सर्वदा सत्त्वस्यासत्त्वस्य वा प्रसङ्गात् । गोपिण्डेष्विवान्यत्रापि वा नियामकाभावेन प्रवृत्त्यनुपपत्तेः । न च व्यक्त्यालम्बनतान्यमदोष इति वाच्यम् । व्यक्तीनां व्यावृत्तरूपतयैकाकारप्रत्ययालम्बनत्वायोगात् । अन्याकारप्रत्ययस्यान्यालम्बनत्वे सर्वत्रानाश्वासादिति । तदपि नोपपद्यते । शाबलेयादिसदृशव्यक्तिव्यतिरेकेणापरस्यैकाकारस्य सामान्यस्याक्षजप्रत्यये प्रतिभासाभावात् । न खलु व्यापारेण शाबलेयादिषु व्यवस्थितं सूत्रकण्ठे गुण इव भिन्नमनुगताकारं सामान्यं केनचिल्लक्ष्यते । अथ न सूत्रकण्ठे गुणवत्प्रतिभासनादभावः स्वरूपेणैव सर्वार्थानां प्रतिभासनादन्यथा सूत्रकण्ठानामपि गुणवत्प्रतिभासनादभावः स्यादिति चेत् । तदपि पराभिप्रायानभिज्ञभाषितम् । यतोऽयमत्राभिप्रायः — यदि सामान्यमनेकसम्बद्धमेकमिष्यते तदा यथा सूत्रकण्ठेष्वनेकेष्वेक एव गुणः सम्बद्धः प्रतिभासते तथेदमपि प्रतिभासेत । न चैवम् । ततो नैतत्तथारूपमुपेतव्यमिति । अथ यथा चित्रज्ञानस्यानेकनीलादिस्वभावा-

त्वेनेष्टस्य गुणवदप्रतिभासनेऽपि नाभावो भवति तथास्यापि न भविष्यतीति चेत् । सत्यम् । यदि हि चित्रज्ञानवत्सामान्यमभ्युपगम्यते तदा को नामैतत्प्राकुर्यात् । न खलु चित्रज्ञानमप्येकमेव किं त्वनेकनीलाद्याकारात्मकत्वादनेकमपि । तद्यदि सामान्यमप्यनेकव्यक्त्यात्मकत्वात्कथंचिदनेकं स्यात् । तदा को नामैतत्तथा नातिष्ठेत । कीदृशश्चाय गवाद्यनुगताकारप्रत्ययः । किं य एवायं गौः स एवायमपि । किं वायमपि गौरयमपि गौः । यद्वा गौर्गौरिति सामान्येनेति । नाद्यः पक्षः श्रेयान् । शाबलेयबाहुलेयविशेषयोरैक्यापत्तेः । द्वितीयपक्षस्तु युक्तः । अयमित्यनेन सदृशाकारसाधारणं वस्तुमात्र परामृश्य गौरित्यनेन सदृशपरिणामपरामर्शात् । गौर्गौरिति प्रत्ययो न त्वत्संमतसामान्योल्लेखवानेव भवितुमर्हति । सदृशपरिणामात्मसामान्येऽप्यविरोधात् । कि च यद्येकमेव सामान्यमिष्यते तदानीमेकत्रैव व्यक्तौ तस्य परिसमाप्तत्वात्कथं व्यक्त्यन्तरे समुपलम्भो भवेत् । सर्वगतत्वादिति चेत् । ननु सर्वसर्वगतत्वं व्यक्तिसर्वगतत्व वाङ्गीकृत्येदमुच्यते । सर्वसर्वगतत्वे खण्डादिव्यक्त्यन्तरालेऽपि गोत्वोपलम्भप्रसगः । तत्रानुपलम्भो हि तस्याव्यक्तत्वाद्व्यवहितत्वाद्दूरस्थितत्वाददृश्यात्मत्वात्स्वाश्रयेन्द्रियसम्बन्धविरहादाश्रयसमवेतरूपाभावाद्वा । नाद्यः पक्षः श्रेयान् । यस्मादव्यक्तत्वादन्तराले तस्यानुपलम्भे व्यक्तिस्वात्मनोऽप्यनुपलम्भोऽत एव तत्रास्तु । अन्तराले व्यक्त्यात्मनः सद्भावावेदकप्रमाणाभावादसत्त्वादेवानुपलम्भे सामान्यस्यापि सोऽसत्त्वादेव तत्रास्तु । विशेषाभावात् । किं च प्रथमव्यक्तिग्रहणवेलाया तदभिव्यक्तस्य सामान्यस्य सर्वात्मनाभिव्यक्तिर्जातैव । अन्यथा व्यक्ताव्यक्तस्वभावभेदेनानेकत्वानुषङ्गादसामान्यरूपतापत्तिः । तस्मादुपलब्धिलक्षणप्राप्तस्य व्यक्त्यन्तराल सामान्यस्यानुपलम्भादसत्त्वं व्यक्तिस्वात्मवत् । ननु स्वव्यक्त्यन्तरालेऽस्ति सामान्यं युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्येकत्वाद्वंशादिवत्, इत्यनुमानात्तत्र तत्सद्भावसिद्धिरिति चेत् । तदप्ययुक्तम् ।

पक्षस्य अगमस्तकशृङ्गासङ्गतमित्यादिवत्पदार्थान्तरोपलम्भस्यानुपलम्भबाधितत्वाद्धेतो स्वरूपसिद्धत्वाच्च । न हि भिन्नदेशासु व्यक्तिषु सामान्यमेकं युगपद्वर्तमानं प्रत्यक्षत स्थूणादौ वंशादिवत्प्रतीयते । यतो युगपद्भिन्नदेशस्वाधारवृत्तित्वे सत्येकत्वं तस्य सिद्ध्यत्स्वाधारान्तरालेऽस्तित्वं साधयेत् । किं चाव्यक्तत्वात्तत्र तस्यानुपलम्भस्तदा सिध्येद्यदि व्यक्त्यभिव्यङ्ग्यता सामान्यस्य सिद्धा स्यात् । न चैव नित्यैकरूपस्याभिव्यक्तेरेवानुपपत्ते । तथा हि-व्यक्तिरुपकारं कुर्वती सामान्यं व्यञ्जयेदितरथा वा । कुर्वती चेत्कोऽनया तस्योपकारः क्रियेत । तज्ज्ञानोत्पादनयोग्यता चेत् । सा ततो भिन्ना, अभिन्ना वा विधीयेत । भिन्ना चेत्तत्करणे सामान्यस्य न किंचित्कृतमिति तदवस्थास्यानभिव्यक्ति । अभिन्ना चेत्तत्करणे सामान्यमेव कृतं स्यात् । तथा चानित्यत्वम् । तज्ज्ञानं चेत्तर्हि कथं सामान्यासिद्धि । अनुगतज्ञानस्य व्यक्तिभ्य एव प्रादुर्भावात् । तत्सहायस्याप्यत्र व्यापार इत्यपि श्रद्धामात्रम् । यतो यदि घटोत्पत्तौ दण्डाद्युपेतकुम्भकारवत्सत्युपेतं सामान्यमनुगतज्ञानोत्पत्तौ व्याप्रियमाणं प्रतीयेत । स्यादेतत् । तच्च नास्त्येव । न किंचित्कुर्वत्याश्च व्यञ्जकत्वे विजातीयव्यक्तेरपि व्यञ्जकत्वप्रसङ्ग । तत्राव्यक्तत्वात्तस्य तत्रानुपलम्भ । नापि व्यवहितत्वात् । सर्वसर्वगतत्वविरोधापत्ते । नापि दूरस्थितत्वात् । अत एव । नाप्यदृश्यात्मत्वात् । निराश्रितव्यक्तिदेशेऽप्यनुपलम्भापत्ते । न चैकस्यैव कश्चिद्दृश्यत्वं क्वचित्पुनरदृश्यत्वमुपपद्यते । विरोधात् । अदृश्यसामान्यप्रदेशे व्यक्तिप्राप्तावपि तदनभिव्यक्तिप्रसङ्गाच्च । न चादृश्यमपि प्राक्सामान्यं तदानीं दृश्यस्वभावमेवाभूदिति वक्तव्यम् । अनित्यत्वप्रासे । स्वाश्रयेन्द्रियसन्निकर्षाद्धारित्वमयुक्तम् । आश्रयाश्रयिभावस्योपकार्योपकारकभावे सत्येव कुण्डबदरादिषु सम्भवात् । बदराणां हि गुरुत्वादधो गच्छतां गतिप्रतिबन्धेन स्थितिलक्षणोपकारकर्तृत्वात्कुण्डमाधारः स्यात् । सामान्यस्य तु निष्क्रियत्वेन पतनाभावान्न कश्चिदाधारः सम्भवतीत्यनाश्रितत्वा

त्सागूर्ध्वमप्युपलम्भः स्यात् । यत्तु केनचिदुच्यते– 'सामान्यस्य क्रमेण स्वात्मप्रकाशनं कार्यान्तरकरणं वा स्थितिः । सा तदाधारसामर्थ्याद्भवति । तदाधाराभावे ह्यसामर्थ्यप्राप्तिरेव गतिः । सा चासत्याधारे न भवतीत्याधारः स्थापक उच्यते' इति तदप्यसंगतम् । गतिस्थितिशब्दयोः कर्मविशेषे तन्निवृत्तौ च लोके रूढत्वान्नूतनशब्दार्थपरिकल्पनानुपपत्तेः । तथा परिकल्पनायां हि न किंचित्कचिद्दूषणं स्यात् । अनित्यः शब्दश्चाक्षुषत्वादित्युक्तेऽपि चाक्षुषत्वस्य कृतकत्वार्थपरिकल्पनायामसिद्धेर्ध्वंसयितुं शक्यत्वात् । न च सामान्यचलनरूपं गमनं संभवति यतस्तन्निवृत्तिराधारः क्रियेत । किं च स्वाश्रयेन्द्रियसंबन्धवशाद्यत्कीचिद्गृह्यते सामान्यं तस्मादन्यत्रागृह्यमाणमपि तदभिन्नमेवेति । तत्राप्यनेन स्वाश्रयेन्द्रियसंबन्धवतैव भाव्यम् । अन्यथा भेदापत्तेरिति कथं न तत्रापि तद्ग्रहणम् । एतेनाश्रयसमवेतरूपाभावादित्यपि प्रत्युक्तम् । ततः सर्वसर्वगतत्वे सामान्यस्य व्यक्त्यन्तरालेऽप्युपलम्भः स्यादेव । अथान्तरालशब्देन किं पिण्डान्तरं कर्कादिकमाकाशादिदेशो मूर्तद्रव्याभावो वाभिधीयते । यद्याद्यपक्षस्तदा कर्कादौ गोत्वादेरवृत्तेरग्रहणमनुपपन्नमेव । न हि यद्यत्र नास्ति तत्तत्र गृह्यत इति परस्याप्यभ्युपगमः । एतेनाकाशादिदेशमूर्तद्रव्याभावपक्षावपि प्रतिक्षिप्ताविति चेत् । तदप्यसंगतम् । एवमभिधाने सर्वत्र तदभिधानानिवृत्तेर्घटद्वयान्तराले पटादिद्रव्यस्याग्रहणादभाव इत्यत्रापि विकल्पै(ल्प्यै)तद्दोषाणामभिधातुं शक्यत्वात् । अथान्तरालशब्दस्यात्र लोकप्रसिद्ध एवार्थः सुषिरमात्ररूपोऽविचारितरमणीयः प्रकल्पते । तर्ह्येतदन्यत्रापि समानमिति न पर्यनुयोगावकाशः । अपि च कर्कादौ गोत्वादेरवृत्तेरिति कोऽर्थः । किं तत्र समवायाभावात्सत्त्वाभावाद्वा । नाद्यः पक्षः । न हि यद्यत्र समवेतं न भवति न तत्तत्रोपलभ्यत इति नियमोऽस्ति । भूतले कलशादेरनुपलम्भप्रसङ्गात् ।

प्रत्ययः पिण्डादिव्यतिरिक्तनिमित्तनिबन्धनो विशिष्टप्रत्ययत्वान्नीलादिप्रत्ययवद्गोपिण्डादर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वाद्रूपस्पर्शादिवत्तस्येति व्यपदेशत्वाच्चैत्रतुरङ्गमवत् । गौर्गौरित्यभिन्नाभिधानप्रत्ययावनुवृत्तवस्तुनिमित्तावभावसामान्याभिधानप्रत्ययान्यत्वे सत्यनुवृत्ताभिधानप्रत्ययत्वात् । चर्मवस्त्रादिषु नीलद्रव्यसंबन्धान्नील नीलमित्यभिधानप्रत्ययवदित्यादीन्यनुमानानि । तत्र पिण्डादेर्व्यतिरिक्तमात्रमेकान्तेन वा व्यतिरिक्तं निमित्तान्तरं साध्येत । आद्यपक्षे सिद्धसाधनम् । सदृशपरिणामस्य कथंचिद्व्यतिरिक्तस्य निमित्तान्तरस्येष्टत्वात् । द्वितीयपक्षे तु पक्षस्य प्रत्यक्षबाधा कथंचिद्व्यतिरिक्तात्मकसामान्योपलम्भेन तद्व्यतिरेकैकान्तस्य बाधात् । अत एव कालात्ययापदिष्टत्वं हेतोः । साध्यविकलता च दृष्टान्तस्य । जैनानामेकान्तस्य क्वचिदप्रसिद्धेः । ये क्रमित्वानुगमित्ववस्तुत्वोत्पत्तिमत्त्वसत्त्वादिधर्मोपेताः प्रत्ययास्ते नित्यसर्वगतसामान्यनिबन्धना न भवन्ति । यथा भावेष्वभावोऽभाव इति । सामान्येषु वा सामान्यं सामान्यमिति प्रत्ययाः । तथा च विवादाध्यासिताः प्रत्यया इत्यनुमानबाधश्च सर्वत्र । यदुक्तम्— 'परसामान्यं सत्ताख्यम्' इति तत्रैतया भिन्नैकरूपया सत्तया सत्त्या सतो वस्तुनः समवायः स्यादसतो वा । सतः सत्तासमवाये वैयर्थ्यम् । तथापि तत्समवायेऽनवस्था । असतः सत्तासमवाये खरविषाणादेरपि स भवेत् । अविशेषात् । अथ तत्समवायात्प्राग्वस्तु स्वयं न सन्नाप्यसत् । अत एव सत्तासमवायात्तत्सदित्युच्यते । तदेतदलौकिकं किमपि प्रमेयरहस्यमनेनालोकितम् । तथा हि—सदिति वचनात्तस्य सत्तासंबन्धात्प्रागभाव उक्तः । सत्प्रतिषेधलक्षणत्वादस्य । नो अप्यसदित्यभिधानात्पुनर्भावोऽसत्त्वनिषेधरूपत्वाद्भावस्य रूपान्तराभावात् । तथा च वैयाकरणाः— 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति । तार्किका अपि नेदं निरात्मकं जीवच्छरीरमित्यत्र नैरात्म्यनिषेधेन सात्मकत्वं साधयतो निषेधद्वयस्य विधायक-

त्वमेव प्रतिपन्ना । कश्चिदाह नैव प्रयोगः क्रियतेऽपि तु सात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति । तेनाप्येवं प्रयोगं कुर्वता सात्मकत्वाभावो नियमेन प्राणादिमत्त्वाभावेन व्याप्तोऽभ्युपगन्तव्यः । अन्यथा व्यभिचाराशङ्कानतिवृत्तेः । तदभ्युपगमे चेदमवश्यवक्तव्यम् । जीवच्छरीरे प्राणादिमत्त्वं प्रतीयमानं स्वभावं निवर्तयति । स च निवर्तमानः स्वव्याप्यं सात्मकत्वाभावमादाय निवर्तते । अन्यथा तेनासौ व्याप्तो न स्यात् यस्मिन्निवर्तमानेऽपि यन्न निवर्तते न तेन तद्व्याप्तं यथा निवर्तमानेऽपि प्रदीपेऽनिवर्तमानः पटादिः । न निवर्तते च प्राणादिमत्त्वाभावे निवर्तमानेऽपि सात्मकत्वाभाव इति निवर्ततेऽसाविति चेत् । तन्निवृत्तावपि सात्मकत्वं यदि न सिध्यति न तर्हि सात्मकत्वाभावो निवर्तते सात्मक

मासते सर्वव्यक्तिभेदानामन्योऽन्यमेकरूपताप्रसक्तिः । एकव्यक्तिग्राहिनिष्ठितस्वभावसामान्यसंसृष्टत्वात् । एकव्यक्तिरूपवत् । सामान्यस्य चानेकरूपतापत्तिर्युगपदनेकवस्तुपरिसमाप्तरूपत्वात् तिरस्कृतैकदेशानवस्थितानेकभाजनव्यवस्थितानेकाम्रादिफलवदित्यनुमानबाधः । यत्तु 'प्रत्येकसमवेतार्थ' इत्यादिकारिकाव्याख्याया जयसिंहराशिकायां (?) माह—'गोमतिर्धर्मिणी कृत्स्नवस्तुविषयेति साध्यो धर्मः कृत्स्नरूपत्वादिति हेतुः । या या कृत्स्नरूपा सा सा कृत्स्नवस्तुविषया व्यक्तिबुद्धिवदिति दृष्टान्तः' इति, तत्र सर्वात्मना कृत्स्नवस्तुविषयत्वं गोमतेरनेनेन विवक्षितं तदानीमेकव्यक्तिगतस्यापि तस्य निश्चये सकलव्यक्तिनिष्ठतया निश्चयः स्यात् । न चासौ सकलव्याप्तिमन्तरेणोपपद्यत इति तन्निर्णयोऽपि प्रसज्यते कथंचित्कृत्स्नवस्तुविषयत्वे पुनरस्या सिषाधयिषिते सिद्धसाध्यता । यदपि 'एकाकारबुद्धिग्राह्यत्वात्' इत्येकत्वसाधनं तदप्यनन्तरमेव दत्तोत्तरम् । नक्तुर्धेषु धावत्सु ब्राह्मणादिनियतनमिति दृष्टान्तोऽपि साध्यविकलः । इतरेतराभावरूपाया ब्राह्मणादिनिवृत्तेरैक्यायोगात् । न

खल्वभावः कश्चिदेकस्तुच्छ उभयाभिमतोऽस्ति । भावान्तरस्वभावत्वेन तस्यास्माभिः प्रागुपपादितत्वात् । त्वयापि तथैव प्रतिपन्नत्वाद्भावान्तराणां चानेकत्वेन तदात्मकाभावस्याप्यनेकत्वात्कथमैक्यं साध्यं तत्र वर्तेते । अनुमानबाधितश्चात्र पक्षः । तथा हि—ये यत्र नोत्पन्ना न च प्रागवस्थायिनो नापि पश्चादन्यतो देशादागतिमन्तस्ते तत्र न वर्तन्ते यथा रासभशिरसि तद्विषाणादयः । तथा च सामान्यं तच्छून्यदेशोत्पादवति शाबलेयादिके वस्तुनीति व्यापकानुपलब्धिरिति । नैकं किंचन शाबलेयादिषु गोत्वादिसामान्यमुपपद्यते ततः । सदृशपरिणामरूपमेव तदभ्युपगन्तव्यम् । ब्राह्मणत्वादिकं तु सदृशपरिणामरूपमपि नास्त्येव । प्रत्यक्षादिना तदप्रतीतेः । तथा हि—प्रत्यक्षेण प्रतीयमानं ब्राह्मण्यं किं निर्विकल्पकेन सविकल्पकेन वा प्रतीयते । न तावन्निर्विकल्पकेन । तत्र जात्यादिप्रतिभासाभावात् । तथा चावाचि भट्टेन—

'[1]अस्ति ह्यालोचना ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥' इति ।

नापि सविकल्पकेन । विस्फारिताक्षस्य पुरोवर्तिखण्डमुण्डककर्कादिव्यक्तिषु गवाश्वादिजातिवन्मनुष्यव्यक्तिषु मनुष्यत्वपुंस्त्वाव्यतिरिक्तब्राह्मणस्य कस्यचिदप्रतिभासात् । अथ प्रतिभासत एवैतद्विशिष्टसहकारिसमन्वितेन्द्रियप्रभवप्रत्यक्षे पुरश्चारिषु क्षत्रियादिषु तद्वैलक्षण्येन ब्राह्मणेष्वेव ब्राह्मणोऽयं ब्राह्मणोऽयमिति प्रत्यक्षदर्शनादिति चेत् । ननु किमिदमिन्द्रियसहकारित्वेनात्रेष्टं ब्राह्मणभूतस्य पितृजन्यत्वं, पितृगोचरोऽविप्लुतत्वोपदेशः, आचारविशेषः, संस्कारविशेषः, वेदाध्ययनं, यज्ञोपवीतादिकं, ब्रह्मप्रभवत्वं वा । तत्राद्यपक्षोऽनुपपन्नः । यतः पित्रोर्ब्राह्मण्ये सिद्धे तज्जन्यत्वेन पुत्रस्य ब्राह्मण्यं सिध्येत् ।

१ मी. श्लो. वा. सू. ४ प्रत्य. सू. श्लो. ११२।१२०।

नचानयोर्ब्राह्मणभूतपितृजन्यत्वात्सिध्येत् । तथाभूतपुत्रजनकत्वाद्वा । प्रथमपक्षेऽनवस्था । बीजाङ्कुरवदनादित्वात् । तत्कार्यकारणप्रवाहस्य नानवस्था दोषायेत्यप्ययुक्तम् । यतो बीजाङ्कुरयोः कार्यकारणभावः पूर्वबीजाङ्कुरकार्यकारणभावग्रहणनिरपेक्षः प्रमाणतः प्रतीयते । अत्र तु पूर्वपूर्वब्राह्मण्यप्रतिपत्त्यभावेऽपरापरब्राह्मण्यप्रतिपत्तेः कर्तुमशक्यत्वात् दृष्टान्तदार्ष्टान्तिकयोः साम्यम् । द्वितीयपक्षे त्वन्योन्याश्रयः । सिद्धे हि पितृब्राह्मण्ये ब्राह्मणभूतपितृजन्यत्वेन पुत्रब्राह्मण्यसिद्धिः । तत्सिद्धौ च ब्राह्मणभूतपुत्रजनकत्वात्पितृब्राह्मण्यसिद्धिरिति । अविप्लुतेन ब्राह्मणेनाविप्लुतायां ब्राह्मण्यामुत्पादितो ब्राह्मण इत्यविप्लुतमातापित्रुपदेशस्य मद्कारीष्वपि श्रद्धामात्रम् । प्रमाणतोऽप्रतिपन्नेऽर्थे वास्तवोपदेशासम्भवात्मकण्ठशून्यतोपदेशवत् । अथ प्रत्यक्षत एव ब्राह्मण्यं प्रतीत्य यथोक्तोपदेशो विधीयते । तदसम्यक् । परस्पराश्रयप्रसङ्गात् । सिद्धे हि ब्राह्मण्यप्रत्यक्षत्वे प्रमाणभूतयथोक्तोपदेशसिद्धिः । तत्सिद्धौ च तथाभूतोपदेशसहकृतेनेन्द्रियेण ब्राह्मणप्रत्यक्षतासिद्धिरिति । अविप्लुतत्वं च विवक्षितपित्रपेक्षयाऽनादिकालपितृप्रवाहापेक्षया वाभिप्रेतम् । यदि विवक्षितपित्रपेक्षया तत्रापि तयोस्तज्जन्मन्यविप्लुतत्वमभिमतमनादिकाले वा । तज्जन्मनि चेत्तर्हि केन तत्र तयोः प्रतीयेत पुत्रेणान्यैर्वा । न तावत्पुत्रेण । स्वजन्मकाले तस्य तद्विवेचनासामर्थ्यात् । नाप्यन्यैः । तद्धि तैः प्रत्यक्षतः प्रतीयेतानुमानादागमाद्वा । न तावत्प्रत्यक्षतः । अयमतस्मादेवैतस्यामुत्पन्न इत्येवंरूपस्याध्यक्षस्यार्वाग्दृशा प्रत्यक्षीकर्तुमशक्यत्वात् । नाप्यनुमानात् । प्रत्यक्षाविषये भवतानुमानानभ्युपगमात् । न च पित्रोरविप्लुतत्वे किंचिल्लिङ्गमस्ति । तद्धि महत्ताकारादिविशेषोऽन्येभ्यो विलक्षणता वा । न तावत्प्रथमः पक्षः । दुश्चारिणीनामपि महत्ताकारदर्शनात् । द्वितीयपक्षोऽपि न श्रेयान् । यतो यदि विप्लुतेतरप्रसवेषु विलक्षणाकारता सिद्ध्येत्, तदानीमविलक्षणाकारापत्योत्पादात्पित्रोरवि-

प्लुतत्वं निश्चीयेत । न चासौ सिद्धा । न खलु वडवाया रासभतुरगप्रभवापत्येष्विव ब्राह्मण्या ब्राह्मणाप्रभवापत्येषु वैलक्षण्यं प्रतीयते । आगमतोऽप्यपौरुषेयात्पौरुषेयाद्वा । तयोरविप्लुतत्वस्य प्रतिपत्तिः स्यात् । न तावदपौरुषेयात् । तत्प्रतिपादकस्यापौरुषेयस्यागमस्यैवासंभवात् । पौरुषेयोऽप्यागमस्तत्प्रणेत्रा प्रमाणान्तरेण तयोरविप्लुतत्वे प्रतिपन्ने सति प्रवर्तमानः प्रमाणतां भजते । न च तत्प्रतिपत्तिः कुतश्चिदप्यस्तीत्युक्तम् । तत्र तज्जन्मन्यनयोरविप्लुतत्वं कुतश्चित्प्रत्येतु शक्यम् । एतेनानादिकाले तयोस्तत्प्रतिपत्तिः प्रत्युक्ता । ययोर्हि तज्जन्मन्यप्यविप्लुतत्वं प्रत्येतुं न शक्यम् । तयोरनादिकाले तत्प्रतीयत इति महच्चित्रम् । एतेनैवानादिकालपितृप्रवाहापेक्षयाविप्लुतत्वप्रतिज्ञापि प्रतिक्षिप्ता । किं च सदैवाबलाना प्रबलकामातुरतयेह जन्मन्यपि व्यभिचारोपलम्भादनादौ काले ता. कदा किं कुर्वन्तीति ब्रह्मणापि ज्ञातुमशक्यम् । एतेन तदपि प्रत्युक्तं स्वविशेषव्यङ्ग्या जातिविशेषाश्चेतरजातिपरिहारेणावभासमाना जात्यन्तरपरिहारेण स्वजातिं व्यञ्जयन्ति यथा गवादयः । अतः प्रथमदर्शने प्रतिभातमपि ब्राह्मण्य व्यञ्जकभेदग्रहणान्नोल्लिखति । व्यञ्जकभेदाग्रहण चात्यन्तसुसदृशावयवत्वादुपपन्नम् । अत्यन्तसुसदृशगोगवयवत् । दृश्यते च द्रव्यपरीक्षकाणां कूटाकूटविवेके मणिपरीक्षकाणां च मणिकाचादिविवेकेऽवधानवतां नैसर्गिकाभ्यासिकप्रतिभासामग्रीसद्भाव एव कूटाकूटविवेको मणिकाचादिविवेकश्च । एवमिहाप्यविप्लुतेन ब्राह्मणेनाविप्लुताया ब्राह्मण्यामुत्पादितो ब्राह्मण इत्यौपदेशिकमातापितृब्राह्मण्यज्ञानलक्षणसामग्रीसद्भाव एव । ब्राह्मणोऽयमिति विवेकेन प्रतिभासः प्रवर्तत इति । अविप्लुतनिर्णयस्य कर्तुमशक्तेरुक्तत्वात् । आचारविशेषश्चक्षुः सहकारीति चेत् । न त्वसौ ब्राह्मण्यस्याधारणो याजनाध्यापनप्रतिग्रहादिः । स च तत्प्रत्यक्षतानिमित्तं न भवति । अव्याप्तेरतिव्याप्तेश्चानुषङ्गात् । याजनादिरहितेषु हि ब्राह्मणेष्वपि तन्निश्चयाभाव-

प्रसङ्गान्प्राप्ति । धूर्तैः शूद्रेऽप्यशिक्षितस्य यावनाचारस्योपलक्षितो ब्राह्मण्यनिर्णयानुपपत्तेश्चातिव्याप्ति । अथ मिथ्यायमाचारस्तत्र । अन्यत्र कुत सत्य । ब्राह्मण्यसिद्धेश्चेदन्योन्याश्रय । सिद्धे ह्याचारसत्त्वे ब्राह्मण्यसिद्धि । तत्सिद्धौ चाचारसत्यत्वसिद्धिरिति । एतेन संस्कारविशेषस्य वेदाध्ययनस्य यज्ञोपवीतादेश्च चक्षु सहकारिता प्रत्युक्ता । अव्याप्त्यतिव्याप्त्योरव्यविशेषात् ब्रह्मप्रभवत्वमपि न लोचनसचिवीभवितुमर्हति । अतिप्रसङ्गात् । सकलप्राणिनां तत्प्रभवतया ब्राह्मण्यप्रसङ्गात् । किं च ब्रह्मणो ब्राह्मण्यमस्ति न वा । नास्ति चेत्, कथमतो ब्राह्मणोत्पत्ति । न ह्यमनुष्यान्मनुष्योत्पत्ति प्रतीता । अथास्ति किं सर्वत्र, मुखप्रदेश एव वा । यदि सर्वत्र तर्हि सर्वप्राणिनां ब्राह्मण्यानुषङ्ग । अथ मुखप्रदेश एव तदान्यत्राप्य शूद्रत्वानुषङ्गात् विप्राणां तत्पादादयो वन्द्या स्यु । न च प्रभवत्व विशेषण ब्राह्मण्यप्रत्यक्षताकाले केनचित्प्रतीयते । न चाप्रतिपन्न विशेषण विशेष्यप्रतिपत्तुमाधातु समर्थम् । अतिप्रसङ्गात् । तन्न प्रत्यक्षेण ब्राह्मण्यपरिच्छेद ।

अथानुमानेन परिच्छेद । तथा हि– ब्राह्मण इति ज्ञान व्यक्तिवर्णविशेषाध्ययनाचारयज्ञोपवीतादिव्यतिरिक्तनिमित्तनिबन्धन तन्निमित्तकबुद्धिविलक्षणत्वाद्वस्त्रादिज्ञानवदिति । तदुपेक्ष्यम् । यतो यदि व्यक्त्यादिभ्यो व्यतिरिक्तनिमित्तमात्रमस्य ज्ञानस्य विषयत्वेन साध्यते तदा सिद्धसाध्यता । तत्समुदायस्य समुदायिभ्य कथञ्चिद्व्यतिरिक्तस्य तद्विषयत्वेन स्वीकारात् । अथ प्रतिव्यक्ति परिसमाप्तमेकमेकान्तव्यतिरिक्तमभिधीयते तदा पक्षस्य प्रतिपक्षबाधितत्वम् । कठकालापादिब्राह्मणव्यक्तिषु हि ब्राह्मणज्ञान व्यक्त्यादिव्यतिरिक्तसामान्यनिमित्तरहितमेवाध्यक्षत प्रतीयते । अथाकारणत्वविविक्तशब्दवत् । अनैकान्तिकश्चात्र नगरादिज्ञानेन हेतु । तत्र व्यक्त्यादिव्यतिरिक्तनिबन्धनाभावेऽपि तन्निमित्तबुद्धिविलक्षणत्वस्य त्वन्मतेनोपलम्भात् । न खलु नगर

सेना वनमित्यादिज्ञाने व्यक्त्याऽव्यतिरिक्ततथाभूतप्रत्ययनिबन्धनं किंचित्त्वयाभ्युपगमनमस्ति । ततो नानुमानादपि ब्राह्मण्यनिर्णयः । नाप्यागमात् । यतोऽसौ पौरुषेयो वा स्यादपौरुषेयः । न तावदपौरुषेयः । तस्य कार्य एवार्थे प्रामाण्याभ्युपगमात् । ब्राह्मण्यस्य नित्यतयेष्टितोऽकार्यत्वात् । नापि पौरुषेयात् । तस्य प्रमाणान्तरसापेक्षत्वात्तस्य चात्रासंभवात् । नाप्यनुमानात् । तस्य सादृश्यालम्बनत्वात् । अप्रतिपन्ने च प्रमाणान्तरेण ब्राह्मण्ये कथं तेन सादृश्यं कथंचित्प्रतीयेत । यतस्तद्दर्शनात् ब्राह्मण्यमवगम्येत । नाप्यर्थापत्तेः । तत्प्रतिपत्तिर्ब्राह्मण्यजातिव्यतिरेकेणानुपपद्यमानस्य प्रमाणषट्कविज्ञातस्य कस्यचिदप्यर्थस्याप्रतीयमानत्वात् । ननु ब्राह्मणत्वसामान्याभावे वर्णाश्रमव्यवस्था तन्निबन्धनस्तपोदानादिव्यवहारश्च सर्वजनसंप्रतिपन्नो नोपपद्येतेति कल्पनीयम् । नन्वेवम् । क्रियाविशेषयज्ञोपवीतादिचिन्होपलक्षिते प्रकृतिविशेषे तद्व्यवस्थायास्तद्व्यवहारस्य चोपपत्तेः । अथैवं गोत्वादिसदृशपरिणामस्याप्यभावापत्तिः । शक्यं हि तत्राप्येवं वक्तुं सास्नाककुदाद्युपलक्षिते वस्तुनि गवादि (?) ज्ञान .... .... .... यवानामेकत्राविष्वग्भावेनावस्थितानां खण्डमुण्डादिपिण्डान्तरसाधारणो मातङ्गतुरङ्गविहङ्गाद्यसाधारणश्च यः कथंचिद्व्यतिरिक्तः । तथानुभवेन व्यवस्थाप्यमानसमुदायः स एव सदृशपरिणामः प्रोच्यते । न चैतादृशोऽवयवसमूह .... .... .... .... .... यत एव स कश्चन विशेषो यः परस्परमसाधारण । लक्षयन्ति चैनं निपुणधियः परस्परासंकीर्णव्यवहारप्रवर्तनात् । प्रकृते तु नायं काश्चिन्निश्चेतुं शक्यते । ब्राह्मणभूतपितृजन्यत्वादेर्दुर्ज्ञेयत्वेन प्रतिपादितत्वात् । तन्न भवत्कल्पे .... .... .... .... .... .... .... पमन्यथा वेश्यापाटकादि[1]प्रविष्टानां ब्राह्मणीनां ब्राह्मण्याभावो भवेत् । न हि विद्यमानमेव तां व्यक्तिं सामान्यं

१ वेश्यापाटकः—वेश्यासंनिवेशः ।

तदानीमुच्छ्रिति । पुनर्सिद्धिप्रसङ्गात् । अथास्त्येव तदानीमपि तदवस्थं तत्, तर्हि कथं तासां निन्दानादानं च स्यात् । जाति-र्येन पवित्र

दीनां गृहे चिरोषितानामपीष्ट शिष्टैरादानं न तु ब्राह्मणीनाम् । अथ क्रियाभ्रंशात्तासां निन्दनादानं चेष्यते तर्हि किमनेनान्त-र्गडुना ब्राह्मण्येन कल्पितेन । कल्पयित्वापि तत्क्रियानिरोधान्निदानमेव वचनाया ब्राह्मणव्यवहारस्य चाभ्युपगम

तस्मान्न ब्राह्मण्यसामान्यमपि परोपगतमुपपद्यते ।

सामान्यमनन्तस्य पदार्थ सिद्धिं चतुर्थाऽपि न तीर्थिकानाम् ।
समेति मन्ययित्र प्रमान्तरेण प्रमाणमूना सकला हि सिद्धिः ॥६८॥

यत्पुनरगादि 'नियतद्रव्यवृत्तयोऽन्त्या विशेषाः' इत्यादि ।

तत्रायमर्थः ।

विशेषपदार्थनिराकरणम् ।

त्यद्रव्येष्वेव वर्तन्त एव य इति विशेषाः । नियतद्रव्येष्वेवेति द्रव्यगुणकर्मसामान्यानां व्यवच्छेदः । द्रव्यगुणकर्माणि हि द्रव्येष्वेव वर्तन्ते न नियतेष्वेवेति । सामान्यानि तु न द्रव्येष्वेव न नियतेष्वेवेति वर्तन्त एवेति बुद्ध्यादीनां व्यवच्छेदः । तेषां समस्त

पर्यन्तरूपत्वादन्त्याश्च तेषु सता अन्त्याः । तेषु स्फुटतरमालक्ष्यमाणत्वात् । वृत्तिस्त्वेषां समभिन्नैव परमाण्वाकाशकालदिगात्ममनोलक्षणे नित्यद्रव्ये विद्यते । अत एव नियतद्रव्यवृत्तयोऽन्त्या इत्युभयपदोपादानम् । एते च प्रतिद्रव्यमे

दीनां गवादिषु तुल्याकृतिनिमित्तो गौरिति । गुणनिमित्तः शुक्ल इति । क्रियानिमित्तः शीघ्रगतिरिति । अवयवनिमित्तः ककुद्मानिति । संयोगनिमित्तो महाघण्ट इति, अश्वादिभ्यो व्यावृत्तः प्रत्ययः प्रादुर्भवति । तस्माद्विशिष्टानां

.... .... लक्षणोऽयं विलक्षणमिति प्रत्ययवृत्तिर्देशकालविप्रकर्षोपलब्धेः स एवायमिति प्रत्यभिज्ञानं च यतो भवति ते योगिनां विशेषप्रत्ययेनोन्नीतसत्त्वा अन्त्या विशेषा अस्मदादीनां प्रसिद्धाः । तथा च प्रयोगोऽत्र तुल्यजातिगुण .... .... .... .... .... .... ष्वपरविशेषयोगाद्व्यावृत्तिबुद्धिपरिकल्पनायामनवस्थादिबाधकोपपत्तेः । उपचारात्तु तद्बुद्धिः । तर्हि परमाण्वादिष्वपि भिन्नविशेषनिबन्धना नैवमभ्युपगन्तव्या । तेषां तत्र भिन्नाभिन्नव्यावृत्तरूपकरणानुपपत्तेर्बाधकस्य सद्भावात् । भिन्नस्य हि व्यावृत्तरूपस्य करणे न किंचिदण्वादीनां कृतं स्यात् । तथा चाव्यावृत्तेषु स्वयं तेषु व्यावृत्तबुद्धिर्वा नैव योगिनां भवेत् । अभिन्नस्य तु तस्य करणे त एव कृता इति तेषामनित्यतापत्तिः । ननु यथा दीपादीनां स्वत एव भासुररूपता तत्स्वभावत्वान्न घटादिसम्बन्धात् । घटादीनां तु तत्सम्बन्धादेवं विशेषेषु स्वत एव व्यावृत्तप्रत्ययहेतुत्वं तत्स्वभावत्वान्न विशेषान्तरसंबन्धात्, परमाण्वादौ तु तद्योगादिति । एतदप्यपर्यालोचितवचनम् । यतः प्रदीपादिसंबन्धाद्घटादयः पदार्थाः परित्यक्तप्राक्तनाभासुरत्वपर्यायाः कथञ्चिदन्य एव भासुरत्वपर्यायजुषो जायन्त इति युक्तं तेषां तत्सम्बन्धाद्भासुररूपत्वम् । न च परमाण्वादिष्वेतत्संभवति । तेषां सर्वथा नित्यत्वाभ्युपगमतः प्राक्तनाविविक्तरूपत्यागेनापरविविक्तरूपतयानुत्पत्तेः । ननु परमाण्वादावविविक्तरूपस्यैवासम्भवात्कस्य परित्यागेन ते विविक्तस्वभावाः स्युः । नित्यैकरूपाणां तेषां सर्वदा विशेषपदार्थालिङ्गितत्वेन सर्वदा विविक्तरूपस्यैव संभवादित्यपि श्रद्धामात्रम् । तन्नित्यैकरूपत्वस्य परमाणुविचारावसरे परास्तत्वात् । अनुमानबाधितश्च व्यतिरिक्तविशेषेभ्यस्तत्प्रत्ययप्रादुर्भावः । तथा हि— विवादापन्नेषु भावेषु विलक्षणप्रत्ययस्तद्व्यतिरिक्तविशेषनिबन्धनो न भवति । विलक्षणप्रत्ययत्वाद्गुणादिषु तत्प्रत्ययवदिति ।

एवं च—

न पञ्चमोऽप्ययं विशेषनामा वैशेषिकाणां घटते पदार्थः ।
तल्लक्षणं कुञ्जरकर्णतालीलासमानं प्रतिभाति तस्मात् ॥ ८८७ ॥

समवायस्य निराकरणम्।

यच्च जल्पितम् 'अयुतसिद्धानामाधार्याधारभूतानामिहेति प्रत्ययहेतुर्यः सम्बन्धः स समवायः' इत्यादि तत्र केयमयुतसिद्धिर्नाम । अभिन्नदेशे वृत्तिः, अभिन्नकालता, अभिन्नधर्मिता, अभिन्नकारणप्रभवत्वं, अभिन्नस्वरूपत्वं वा । नाद्यः पक्षः । असिद्धत्वात् । न हि य एव तन्तूनां देशस्स एव पटस्यापि । तन्तवो हि स्वावयवेषु स्थिताः । पटस्तु तन्तुष्विति । न द्वितीयः । असिद्धत्वादेव । तन्तुपटादीनां कार्यकारणभावेन पूर्वापरकालत्वात् । न तृतीयः । तत एव । न ह्यवयव्यादीनां क्वचिदेकस्मिन् धर्मिण्याश्रितत्वमस्ति । नापि चतुर्थः । तस्मादेव हेतोस्तन्तूनां प्रवेण्यादेः पटस्य तन्त्वादेः कारणस्य प्रसिद्धेः । अभिन्नस्वरूपत्वे तु, अन्यस्यान्यस्वरूपतापत्तिः, एकलोलीभावेनात्मलाभो वा भवेत् । प्रथमपक्षे प्रत्यक्षविरोधः । न खलु जात्यादेर्व्यक्त्यादिस्वरूपापत्तिः प्रत्यक्षतः प्रतीयते । द्वितीयपक्षे तु तथा परिणतिरेवाविष्वग्भावस्वभावा पदार्थानामयुतसिद्धत्वमिति अस्मन्मतसिद्धिः । अपि च सिद्धिशब्देनात्र किं ज्ञप्तिरुत्पत्तिर्वाऽभिप्रेता । यदि ज्ञप्तिस्तदा सामान्यतद्वदादीनां युतसिद्धिप्रसक्तिः । अनुवृत्तव्यावृत्ताभिलापतया तेषां परस्परं पृथगेव स्वरूपसंवेदनात् । तथा च तत्र समवायाभावो भवेत् । अथोत्पत्तिस्तदा युतसिद्धिरपृथगुत्पत्तिरित्यायातम् । तदपि जात्यादेर्नित्यत्वाभ्युपगमाद्दुर्घटम् । अथ युतसिद्धेरभावमात्रमयुतसिद्धिः । सा च जात्यादावस्ति । तेनायमदोष इति चेत् । नैवम् । इत्थमाकाशादीनामप्ययुतसिद्धिप्रसक्तेः । अथ युतसिद्धिवैपरीत्येनायुतसिद्धिर्व्यवस्थाप्या । तत्र नित्यानां तावद् द्वयोरेकस्य वा परस्परं संयोगविभागहेतुभूतकर्मसमवाययोग्यतोऽयुतसिद्धिः । द्वयोः परमाण्वोः पृथग्गमनमाकाशपरमाण्वोश्चान्यतरस्य पृथग्गमनमिति । अनित्यानां तु द्वयो-

इह तन्तुषु पट इति प्रतीतेस्त्वप्रसिद्धिरिति चेत । कस्येयं प्रतीतिः रचने स्यन्दनादितसंस्कारस्य भवतोऽपरापरानिनोऽन्यस्यापि वा । नाद्यपक्षः । तथात्वेऽस्या कल्पनामात्रप्रभवत्वात् । न च कल्पनाया पदार्थस्वरूपानुरोध । तस्याः स्वातन्त्र्यवृत्तित्वात् । ततो वस्तुव्यवस्थायाने व्यवस्थाप्रसक्ते स्वतःकल्पितस्यापि वस्तुनोऽन्यथान्यथा कल्पयितु शक्यत्वात् । द्वितीयपक्षे त्वसिद्धिः । तन्तुसमुदायावस्थायां पट इति पटेऽत्र तन्तव इति वा सदा प्रतीत्युत्पत्ते । एव च पृथगाश्रयाश्रयित्वरूपयुतसिद्धेरसिद्धेः कथं तद्व्यवच्छेदेनायुतसिद्धिः सिध्येत । कन्दलीकारोऽप्येतादृशीमेवायुतसिद्धिमभिदधानोऽनेनैव निरस्त । यत्पुनरयमाह— 'अयुतसिद्धावाश्रिताश्च न सिद्धाश्चेत्ययुतसिद्धा आश्रिता एव सन्ति न वियुक्ता इति यावत्तेषां सम्बन्ध आश्रितलक्षणः समवायस्तेन संयोगो व्यवच्छिन्नस्तस्याप्राप्तिपूर्वकत्वाद्, जसंयोगाभावो लक्ष्यते' इति तस्याप्ययुतसमन्यस्यातिप्रसक्तनवातूत्रलक्षणविशेषणत्वेनसमनथाय शरीरेन्द्रियथयोर्घटाकाशयोराकाशात्मनोश्च आश्रयोरेव सिद्धयोरयुतसिद्धत्वेन समवायप्रसंगात् । अस्तु वा यथाकथञ्चिदयुतसिद्धं च तथापि कोऽत्र व्यवच्छेद्यव्यवच्छेदकभाव । अत्र श्रीधरस्तावद्व्याहरति— 'अयुतसिद्धयो सम्बन्ध इत्युच्यमाने धर्मस्य सुखस्य च य कार्यकारणभावलक्षण सम्बन्धे सोऽपि समवाय प्राप्नोति । तयोरभिक्राश्रितयोर्युतसिद्ध्यभावात्, तदर्थमाधाराधार्यभूतानामिति पदम् । न ह्याकाशशकुनिसम्बन्धनिवृत्त्यर्थमयुतसिद्धिपदेनैव तस्य निवर्तितत्वात् । एवमप्याकाशस्याकाशशब्दस्य च वाच्यवाचकभावः समवाय स्यात्तन्निवृत्त्यर्थमिहप्रत्ययहेतु ' इत्येतावतैवास्याभिमतसिद्धेः । न चैव धर्मसुखयो कार्यकारणभावस्य

१ न्या क पृ १८५ । २ किरणावली पृ १३३ सके पाठभेदो वर्तते । न्या क पृ १४५ १८।

.... नानेव विशेषणेन किंचित् । व्योमशिवानुसारी तु वक्ति–'अयुतसिद्धानामित्येक लक्षणं, आधार्याधारभूतानामिति तु द्वितीयम् । पदद्वयस्याप्यस्य सावधारणस्य व्याख्यानात् । तथा ह्ययु .... .... .... .... .... द्वयोर्घटस्तद्वाचकशब्दयोस्तु युतसिद्धयोर्वाच्यवाचकभावः । आत्मतद्गोचराहमितिज्ञानयोरयुतसिद्धयोर्घटतद्गोचरज्ञानयोस्तु युतसिद्धयोर्विषयविषयिभाव इति । तथा, आधार्याधारभूतानामेव यः सम्बन्धः स समवाय. । न च संयोगो वाच्यवाचकभावो विषयविषयिभावश्चाधार्याधारभूतानामेव भवति । अन्यथाभूतानामपि भावाना तद्दर्शनादिति न हि .... .... य. स सम्बन्धकार्यो यथेह कुण्डे दधीति प्रत्ययः । तथा चायमबाध्यमानेहप्रत्ययस्तस्मात्सम्बन्धकार्य इति । तदपि नोपपद्यते । यतो यदि वाच्यवाचकभावादिना सामान्येनैव व्यभिचार उद्भाव्येत तदाऽवधा .... .... .... .... .... .... .... द्भावनं तदा कथमेतत्स्यात् । य. खलु विशिष्टो वाच्यवाचकभावादिः सम्बन्ध सोऽयुतसिद्धानामेवाधार्याधारभूतानामेव चेति नानेनावधारणेन तस्य व्यवच्छेद. । अपि चाधार्याधारभूताना .... ... .... .... .... .... .... .... मिति विशेषणं सिध्यति । तत्सिद्धौ च समवायसिद्धिरिति । द्वितीयपक्षे तु किं समवायेन कर्तव्यमाधाराधेयभावेनैव पर्याप्तत्वात् । यच्चा .... .... .... .... .... ....नानार्थविशेषणत्व नाना । न पुनः सत्त्वम् । तस्य ततो भेदादिति चेत् । तर्हि घटादिविशेषणत्वाधारत्वेन सत्त्वस्य प्रतीतौ सर्वार्थविशेषणत्वाधारत्वेनापि प्रतिपत्तेः । स एव संशयापाय. स चार्थसंशयापायः सर्वार्थविशेपत्वाधारत्वस्य ततोऽनर्थान्तरत्वात् । तस्यापि नानारूपस्य सत्त्वाद्भेदेनार्थविशेषणत्वाधारत्वमपि नानारूपं सत्त्वाद्भिन्नमेष्टव्यम् । तथा तदाधारत्वमपीत्यनवस्थापत्तिः । पर्यन्ते तस्य ततोऽनर्थान्तरत्वे प्रथमत एव नानार्थविशेषणत्वान्नानारूपादन-

र्थान्तरत्वसिद्धि । सिद्धे नानास्वभावे सत्त्वे सकृन्नानार्थविशेषणे तद्वत्समवायोऽस्तु । अनेन द्रव्यत्वादिसामान्यं द्वित्वादिसंख्यानं पृथक्त्वादिकमवयविद्रव्यमाकाशादि विभुद्रव्यं च स्वयमेकमपि युगपदनेकार्थविशेषणमिति निरस्तम् । सर्वथैकस्य तथाभावविरोधसिद्धेरिति । समवायस्य नानात्वेऽनित्यत्वप्रसङ्गः संयोगवदिति चेत् । न । आत्मभिर्व्यभिचारात्कथंचिदनित्यत्वस्येष्टत्वाच्च । किं चायं सम्बन्धिभ्योऽत्यन्तभिन्नमूर्तिः सन्समवायः कथं तैः सह सम्बध्येत यतस्तद्विशेषणतया चकास्यात् । न ह्यसम्बद्धं विशेषणं नाम । अतिप्रसङ्गात् । अभावस्यापि कथंचित्स्वभावभूततया भावसमासत्तिमस्य विशेषणतोपपत्तेः । ततोऽयमपि विशेषणं स केन सम्बन्धेन सम्बध्येत । न तावत्संयोगेन । तस्य गुणत्वेनाद्रव्यस्वभावे समवाये सम्भवाभावात् । नापि समवायान्तरेण । तस्यैकरूपतयाभ्युपगमात् । नापि विशेषणविशेष्यभावात् । यतः कोऽयं विशेषणविशेष्यभावो नाम । षट्पदार्थेभ्योऽतिरिक्तोऽनतिरिक्तो वा । अतिरिक्तो भावरूपोऽभावरूपो वा । न तावद्भावरूपः । षडेव पदार्था इति नियमविघातप्रसङ्गात् । नाप्यभावरूपः । अनभ्युपगमात् । अनतिरिक्तोऽपि किं द्रव्यरूपो गुणादिस्वभावो वा । नाद्यः पक्षः । गुणाद्याश्रितत्वाभावप्रसङ्गात् । अत एव न गुणकर्मस्वभावोऽपि । नापि सामान्यादिरूपः । तेषु तदभावप्रसङ्गात् । न हि सामान्यानां सामान्यादीनि सम्भवन्ति । अनवस्थादिदोषोपनिपातात् । ततो नायं विशेषणविशेष्यभावः परस्य कश्चिद्घटते । अस्तु वायं कश्चित्तथापि समवायसमवायिभ्यो यद्यभिन्नस्तदा समवायसमवायिना तादात्म्यसिद्धिरभिन्नात् । अभिन्नानां तेषां तद्वद्वैतविरोधाद्भिन्न एवेति चेत् । तन्वयमप्यत्र भिन्नः पुनरन्तरेण नियम्येत । समवायाच्चेदितरेतराश्रयः । सिद्धे हि समवायनियमे ततो विशेष्यभावनियमसिद्धिः । तत्सिद्धौ च समवायनियमसिद्धिरिति । परस्पराद्विशेष्यविशेषणभावादिति चेत् । तर्हि पर्यनुयोगोऽनवस्था च । सुदूरमपि गत्वा स्वपरविभि

संबन्धस्य तादात्म्योपगमे परमतप्रसिद्धिः । अथात्यन्तभिन्नमूर्तेरपि समवायः स्वत एव संबन्धिभिरभिसंबध्यत इति चेत् । पदार्था अपि स्वत एव परस्परमभिसंबद्धा भवन्तु । किममुना कर्तव्यम् । अथ समवाय एव स्वतोऽभिसंबध्यते संबद्धरूपत्वात् । न पदार्थास्तद्विपरीतत्वात् । यथा दहन एव स्वतो दहति दहनरूपत्वात् । न पुनरन्ये पदार्था इति । प्रयोगः— समवायः संबन्धान्तरं नापेक्षते स्वयं संबन्धत्वात्, यस्तु नैवं यथा घटादिः । स्वयंसंबन्धश्च समवायस्तस्मात्संबन्धान्तरं नापेक्षत इति । तदप्ययुक्तम् । संयोगेनानैकान्तत्वात् । स हि स्वयंसंबन्धः संबन्धान्तरापेक्षश्च । ततः समवायस्य संबन्धिभ्योऽत्यन्तभेदाभ्युपगमे संबन्धासिद्ध्या विशेषणत्वाभावप्रसंगात् । कथंचित्तादात्म्यपरिणामेनावभासमानोऽयं गुणादिवद्वस्तुपर्यायस्वरूपः स्वीकर्तव्यः ।

षष्ठोऽपि नाभ्येति ततः पदार्थः सद्युक्तिकोटीं समवायनामा ।
स्वाधारतोऽत्यन्तपृथक्तयैकः प्राजल्पि वैशेषिकदर्शने यः ॥ ६८८ ॥

एवं च वैशेषिकतन्त्रसिद्धा प्रमाणगम्यास्ति न षट्पदार्थी ।
स्याद्वाद एवास्तु ततः कृतान्तः प्रमाणवीथीमवगाहमानः ॥ ६८९ ॥

नैयायिकोक्तषोडशपदार्थपरीक्षणम् ।

नैयायिकोपकल्पितषोडशतत्त्वव्यवस्थितौ ।
सत्यां मानानामधिगम्य कथमार्ता नन्वनेकान्तः ॥ ६९० ॥

तथा हि—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां षोडशपदार्थानां क्रमेण लक्षणमिदम्— 'अर्थपरिच्छित्तिसाधनं प्रमाणम्'[1] तच्चतुर्विधम्— 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[2] इत्यभिधानात् ।

---

१ न्या. म. पृ. ७ पं. २५ । २ गौ. सू. १।१।३ ।

'तत्परिच्छेद्यमात्मादि' द्वादशविध प्रमेयम् । तथाच सूत्रम्–'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति । 'तत्रात्मा सर्वस्य सुखदुःखसाधनस्य द्रष्टा । सर्वस्याश्च सुखादिसंवित्तेराश्रयत्वेन भोक्ता । तस्य भोगायतन शरीर भोगसाधनानीन्द्रियाणि भोक्तव्या इन्द्रियार्थाः' । 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ।' सर्वथोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषय मन । वाङ्मन कायव्यापार शुभाशुभफलप्रवृत्तिरित्युच्यते, पुरुषस्य कर्मसु प्रवर्तयितारो रागद्वेषमोहा दोषा । देहेन्द्रियादिसंघातस्य संघातान्तरग्रहण प्रेत्यभाव । प्रवृत्तिदोषजनित सुखदुःखोपभोग फलम् । 'बाधनालक्षण दुःखम्' तस्य च यत्नेन परिहार्यत्वात्फलात्पृथगुपादान शरीरादेरेकविंशतिभेदभिन्नेन दुःखेनात्यन्तिको वियोगोऽपवर्ग । एकविंशतिभेदास्तु शरीर षडिन्द्रियाणि षड्विषया षड्बुद्धय सुख दुःख इति । शरीर दुःखायतनत्वाद् दुःखम् । इन्द्रियाणि विषया बुद्धयश्च तत्साधकभावात् । सुख दुःखानुषङ्गाद् दुःख स्वरूपत इति । 'नानार्थविमर्श संशय' । 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श संशय' इति सूत्रकारवचनात् । स च वार्तिककारमते त्रेधा । तथा हि–समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श संशय । समानधर्मस्य स्थाणुपुरुषयोरूर्ध्वतालक्षणस्योपपत्तेरुपलब्धे । स च समानो धर्म उपलभ्यमानो न केवल संशयहेतुः किं तूपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषांशे साधकबाधकप्रमाणाभावाद्विशेषापेक्ष स्थाणुर्वा पुरुषो वेति विमर्श संशय । तथा

---

१ न्या म पृ ७५ २६। २ गौ सू १।१।९। ३ गौ सू भा १।१।९। ४ गौ सू १।१।१५। ५ गौ सू १।१।२१। ६ न्या म पृ ७५ २६। ७ गौ सू १।१।२३। ८ न्या वा पृ ८७ प १९ (वार्तिकेऽक्षरभेदो ऽनुपलभ्यते)

समानजातीयमसमानजातीयं वानेकमनेकस्मात् व्यावृत्तो धर्मोऽनेकधर्मस्तदुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथाशब्देन विभागजत्वदर्शनात् । किमयं गुणो द्रव्यं कर्मेति विभागजत्वं सजातीये क्वचिद्गुणे विजातीये वा द्रव्ये कर्मणि च न वर्तते । अतः संशयहेतुः । किं भूतस्यास्य विभागजत्वमिति । तथा विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथा, अस्त्यात्मेत्येके । नास्त्यात्मेत्यपरे । न च सद्भावासद्भावौ सममेकत्र भवतः । तस्मात्तत्त्वानवधारणमस्त्यात्मा नास्त्यात्मेति वा संशयः । भाष्यकारमते तूपलब्ध्यनुपलब्धी पृथक्संशयकारणमिति पञ्चधा संशयः । तथा हि—उपलब्ध्यनुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयः । यथोदकं सदुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानम् । इदानीं क्वचिदुदकोपलब्धौ तत्त्वव्यवस्थापकप्रमाणस्यानुपलब्धेः सद्वोदकमसद्वेति संदेहः । तथानुपलब्ध्यनुपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षः संशयो यथा सन्मूलकीलकादि नोपलभ्यते । सच्चानुपपन्नं विरुद्धं वा । इदानीं पिशाचोऽपि सन्नोपलभ्यते । सत्त्वेति संशयः समानोऽनेकश्च धर्मो ज्ञेयस्थः । विप्रतिपत्त्युपलब्ध्यनुपलब्धयस्तु ज्ञातृस्था इति भेदः । हिताहितप्राप्तिपरिहारौ तत्साधनं च प्रयोजनम् । 'यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्' तच्च द्विविधम् । मुख्यं सुखदुःखप्राप्तिपरिहारौ तत्साधनं गौणम् । प्रतिबन्धावरणस्थानं दृष्टान्तः । तथा च सूत्रम्—'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः' नैसर्गिकं वैनयिकं चातिशयमाप्ता लौकिकाः । तद्विपरीताः

१ गौ. सू. वा. भा. पृ. ४२ प. ५ । २ गौ. सू. १।१।२४ । ३ गौ. सू. १।१।२५ ।

कृतकं तत्तदनित्यं दृष्टम् । यथा घट इति । यत्र साध्याभावः ख्याप्यते स वैधर्म्यदृष्टान्तः । तस्य व्याप्यव्यापकभावगर्भं तथाभूतमेव वचनमुदाहरणम् । यत्रानित्यत्वं नास्ति तत्र कृतकत्वमपि नास्ति यथाकाश इति साधर्म्यवैधर्म्योदाहरणानुसारेण तथेति न तथेति वा साध्यधर्मिणि हेतोरुपसंहार उपनयः । यत्कृतकं तदनित्यं दृष्टं यथा घट इति साधर्म्योदाहरणे । तथा च कृतकः शब्दः इत्युपनयः । यदनित्यं न भवति तत्कृतकमपि न भवति यथाकाशमिति वैधर्म्योदाहरणेन च । तथा कृतकः शब्दः इत्युपनयः । हेत्वपदेशेन पुनः साध्यधर्मोपसंहरणं निगमनम् । तस्मात्कृतकत्वादनित्यः शब्द इति । अविज्ञाततत्त्वे धर्मिण्येकतरपक्षानुकूलार्थदर्शनेन तस्मिन्सम्भावनाप्रत्यय ऊहस्तर्कः । यथा चात्र केलिप्रदेशादावूर्ध्वत्वदर्शनात्पुरुषेणानेन भवितव्यमिति सम्भावनाप्रत्ययः । न चायं संशयोऽश्ववाहनप्रदेशे पुरुषवत्स्थाणोरसंभाव्यत्वेन समकक्षतया स्थाणुपुरुषयोरनुल्लेखात् । न च पुरुषनिर्णयोऽयं रात्रावपि स्थाणुत्वसम्भावनया । तत्पक्षस्य सर्वात्मनानपनोदात् । पुरुषनिश्चयहेतूनां च शिरःपाण्यादिविशेषाणामप्रतिभासात् । पक्षप्रतिपक्षविषयसाधनोपलम्भपरीक्षया तदन्यतरपक्षावधारणं निर्णयः । 'वीतरागकथा वस्तुनिर्णयफला' [1] । 'वादो विजिगीषुकथा । पुरुषशक्तिपरीक्षणफला जल्पः' [2] । जल्पविशेषो वितण्डा । अहेतवो हेतुवदाभासमाना हेत्वाभासाः । हेतोः पञ्च लक्षणानि पक्षधर्मत्वादीनि । तेषामेकैकापाये पञ्च हेत्वाभासा भवन्त्यसिद्धविरुद्धानैकान्तिककालात्ययापदिष्टप्रकरणसमाः । तत्र पक्षधर्मत्वं यस्य नास्ति सोऽसिद्धः । यथाऽनित्यः शब्दश्चाक्षुषत्वादिति । सपक्षे सत्त्वं यस्य नास्ति विपक्षे चास्ति स साध्यविपर्ययसाधनाद्विरुद्धः । यथाश्वोऽयं विषाणित्वादिति । विपक्षादपरिच्युतः पक्षसपक्षयोर्वर्तमानो हेतुः सव्यभिचारित्वा-

१ न्या. म. पृ. ८ पं. ३। २ न्या. म. पृ. ८ पं. ३।

स्वावयवेभ्यः सर्वथार्थान्तरभूतमवयविनिरासादेव निरस्तम् । भौतिकानि प्राप्यकारीणीन्द्रियाणि रूपाद्यस्तदर्था बुद्ध्यन्तरवेद्या बुद्धिरणुपरिमाणं मनश्चेति चतुष्टयमपि पुरैव पराकृतम् । सर्वगतत्ववाङ्मनःकायानामव्यवस्थितेस्तद्व्यापाररूपा प्रवृत्तिरप्यव्यवस्थितैव । कूटस्थनित्यस्य व्यापकस्य निष्क्रियस्य चात्मनः कर्मसु प्रवर्तयितारो दोषा अपि रागादयो न घटन्ते । परिणामिन्येवात्मनि तेषामुपपत्तेः । एतेन नित्यादिस्वरूपस्यात्मनः प्रेत्यभावोऽपि परास्तः । प्रवृत्तिदोषदूषणात्तज्जन्यं सुखदुःखोपभोगलक्षणं फलमपि दूषितम् । अनेन बाधनास्वरूपं दुःखमपि प्रत्याख्यातम् । अपवर्गश्च भवत्कल्पितो मोक्षस्वरूपनिरूपणप्रबन्धके विघटयिष्यते । तन्न द्वादशविधं प्रमेयमवतिष्ठते । अपि चास्य द्वादशविधत्वावधारणं तावत्स्वेव प्रमाणव्यापारपरिसमाप्तेः प्रयोजनपरिसमाप्तेर्वा स्यात् । आद्यः पक्षोऽनुपपन्नः । कालाकाशादिप्रपञ्चेऽपि प्रमाणव्यापारप्रतीतेः । न च तत्प्रपञ्चस्यैवात्रान्तर्भाव इत्यभिधातव्यम् । ततोऽस्यात्यन्तविलक्षणत्वात् । तथाविधानामप्येषामत्रान्तर्भावे आत्मन्येवाशेषार्थानामन्तर्भावात् । ब्रह्माद्वैतप्रसंगतो गता षोडशपदार्थकल्पना । द्वितीयपक्षेऽपि प्रयोजनस्यापवर्गलक्षणस्य नैतेष्वेव परिसमाप्तिः । तत्प्रसाधकानां दीक्षातपोध्यानादीनामत्र संग्रहाभावात् ।

तथा चानुपपन्नमिदमगादि जयन्तेन —

'इत्येष षोडशपदार्थनिबन्धनेन
निःश्रेयसस्य मुनिना निरदेशि पन्थाः ।
अन्यस्तु सन्नपि पदार्थगणोऽपवर्ग-
मार्गोपयोगविरहादिह नोपदिष्टः ॥' इति ।

पदार्थसंख्याया संशयपरिगणने च विपर्ययानध्यवसाययोरपि परिगणनप्रसंगः । न्यायप्रवृत्त्यङ्गत्वमप्यनयोः संशयवदनिवार्यम् । विपरीतानध्यवसितयोरपि प्रतिपाद्यत्वात् । ततो नैतदपि तस्यैव

परिगणने कारणम् । न्यायप्रवृत्त्यङ्गत्वाचास्य । परिगणने चानुग्रहेच्छा-परिमवाभिलापलाभपूजाख्यातिरपि परिगणनप्रसङ्ग । तत्प्रवृत्त्यङ्गत्वाविशेषात् प्रयोजनस्यापि लौकिकस्य तावन्त्प्याप्तिप्राप्ति-लक्षणस्य मुमुक्षुशास्त्रे पदार्थत्वेन गणनमननुगुणम् । तज्ज्ञानस्य निःश्रेयसाधिगमव्यभिचारोपलम्भात् । लोकोत्तरस्यापि तस्य निःश्रेयसाधिगमलक्षणस्य पदार्थत्वेन कथन न तथ्यम् । भवन्म्युपगतनिःश्रेयसस्य निराकरिष्यमाणत्वेन तज्ज्ञानतदधिगमयोरनुपपत्ते । दृष्टान्तस्याप्यनुमानाङ्गतत्वेन पृथक्परिसंख्यानमनुपपन्नम्। अन्यथा लिङ्गादेरपि तत्प्रसङ्ग । सिद्धान्तस्तु प्रतिज्ञाना नार्थान्तरम् । अतोऽस्य पृथग्लक्षणाभिधानमनर्थकम् । सर्वैरेव हि शास्त्रकारैरपसिद्धान्त नुसारो निगृह्यते । न च सिद्धान्तलक्षणप्रतिज्ञान पृथक् क्रियते । तस्या एव सिद्धान्तत्वेन सर्वेषा सुप्रसिद्धत्वात् । अवयवाना च परार्थमन्याया परिगणनेऽनुमानस्यापि पृथक्परिगणनप्रसङ्ग । तस्य प्रमाणान्तर्गतत्वात । पृथक्परिगणनेऽवयवानामनुमानात्मकत्वात्र पृथक्परिगणन स्यात । प्रधानभूत चानुमान प्रमाणान्तर्गतत्वान्न पृथगुपादीयते । तदन्तर्भूतास्त्ववयवा पृथगुपादीयन्त इति महती प्रेक्षापूर्वकारिता । उपादानेऽप्येषामियत्तावधारणमयुक्तम् । यावद्भिर्विवक्षितार्थप्रतिपत्तिर्भवति तावतामेवोपादानार्हत्वात् । सा च क्वचित्कियद्भिर्भवतीत्युदयनोऽपि पञ्चमाध्याये तात्पर्यपरिशुद्धौ — ‘ स्यादेतदेव तर्हि दूषणस्यापि पञ्चावयवप्रयोगप्रतिपाद्यता प्राप्नोति परार्थानुमानात् ’ इत्याशङ्कयाह— ‘ अत परपक्षप्रतिसाधनपेक्षितत्वात्पञ्चावयवप्रयोगानभिधानमिति ’ इति । तर्कस्य च प्रमाणविषयपरिशोधकत्वमुच्यते भवद्भि । तच्च प्रमाणविषयविरोधायकापनेतृत्व मन्यायान्यिवत्त्वेन तन्निश्चायकत्व तद्ग्रहणे प्रवृत्तस्य प्रमाणस्याप्रेसरतया तत्स्वरूपविवेचनमात्र वा । प्रथमपक्षे प्रतीतिविरोध । घटादितिरोधायकस्यान्धकारादेस्तत्कापनयनाप्रतीते । द्वितीयतृतीयपक्ष-

योरप्रमाणात्मकोऽसौ तथा तन्निश्चयं तद्विवेचनमात्रं च कुर्यात्प्रमाणात्मको वा । न तावदप्रमाणात्मकः । प्रमाणविषयस्याप्रमाणात्मना तेन परिशोधनानुपपत्तेः । यदप्रमाणं न तत्प्रमाणविषयपरिशोधकम् । यथा मिथ्याज्ञानम् । प्रमेयो वार्योऽप्रमाणं च भवद्भिः परिकल्पितस्तर्क इति । तत्परिशोधकत्वे चास्य प्रमाणत्वप्रसंगः । यत्प्रमाणविषयपरिशोधकं तत्प्रमाणं यथानुमानादि । प्रमाणविषयपरिशोधकश्च भवद्भिः परिकल्पितस्तर्क इति । अस्तु तर्हि प्रमाणात्मक एवासाविति चेत् । न । चत्वार्येव प्रमाणानीति प्रमाणसंख्याव्याघातप्रसक्तेः । निर्णयश्च प्रमाणस्य फलम् । तस्य च तस्मादेकान्तेन भिन्नस्य भवदभ्युपेतस्य फलपरिच्छेदे प्रतिषेत्स्यमानत्वान्नात्र पदार्थतया निर्देशः कर्तुं युक्त इति । वादजल्पवितण्डानां तु स्वरूपं वादलक्षणैककथाव्यवस्थापनावसरे निराकरिष्यते । हेत्वाभासानामपि पृथक्पदार्थतया परिगणनं निष्प्रयोजनम् । अन्यथा प्रत्यक्षाद्याभासानामपि तथा परिगणनप्रसङ्गात्षोडशपदार्थसंख्याक्षतिप्रसङ्गः । प्रत्यक्षादिप्रमाणनिर्देशसामर्थ्यादेव तदाभासानां लब्धत्वादपरिगणने पञ्चलक्षणकहेतुनिर्देशसामर्थ्यादेव हेत्वाभासानामपि लब्धत्वादपरिगणनमस्त्वविशेषात् । छलं तु बालक्रीडाप्रायं न प्रामाणिकानां निःश्रेयसार्थिनामवलम्बितुमुचितमिति । जातिस्तु दूषणाभासस्वभावा हेत्वाभासैरेव संगृहीतेति किमित्येभ्यः पृथगुच्यते । निग्रहस्थानं पुनरनन्तत्वान्नेयत्तयावधारयितुं शक्यमिति न तल्लक्षणमपि सोपयोगमिति । विस्तरस्तु छलजातिनिग्रहस्थानानां प्रत्येकदूषणं वादलक्षणैककथावस्थापनसमये प्रकाशयिष्यते ।

अभ्येत्यतः षोडशतत्त्वमार्गोऽप्ययं प्रमाणस्य न गोचरत्वम् ।
सांख्योक्ततत्त्वान्यपि चैव तर्क..णः परिभावयन्तु ॥ ६९१ ॥

तथा हि— एवममी प्रधानादीनि पञ्चविंशतितत्त्वानि व्यावर्णयन्ति ।

सांख्यतत्त्वपरीक्षणम् ।

प्रदधाति धारयति महदादीन्विकारानिति प्रधानम् । तच्च संक्षेपतस्त्रिविधं

कार्यं करणं शक्तिरिति । त्रेधा हि जगत्, स्थितं कार्यं तन्मात्रादिकरणं स्वादिशक्तिर्गुणत्रयमित्यभिधानात् । न हि कार्यकरणशक्तिव्यतिरिक्तो जगत्प्रपञ्चोऽस्ति । तत्र कार्यं दशविधम् । तन्मात्रमहाभूतलक्षणं करणं त्रयोदशविधं बुद्धीन्द्रियकर्मेन्द्रियान्तःकरणबुद्ध्यहङ्कारभेदात् । शक्तिश्चाननुभूयमानस्वभावा प्रकृतिरेव । मूलोपादानभूततत्सद्भावे हेतु—

' भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥' इति ।

हेतुपञ्चकं परिमितत्वं ह्येककारणपूर्वकत्वेन प्रतिपन्नम् । यथा घटघटीशरावोदञ्चनादेरेकमृत्पिण्डपूर्वकत्वम् । परिमितं चेदं व्यक्तमेका बुद्धिरेकोऽहङ्कारः पञ्च तन्मात्राणि, एकादशेन्द्रियाणि पञ्चभूतानि । अत एतेषां भेदानां परिमितस्वभावानां यदेकं कारणं तत्प्रधानमेवेति तदस्तित्वसिद्धिः । समन्वयाच्च यद्यज्जातिसमन्वितं हि यत्तत्तदात्मक-कारणकार्यं यथा घटाद्या विशेषा मृज्जातिसमन्विता मृदात्मककारणकार्याः सत्त्वरजस्तमोजातिसमन्वितं चेदं महदादि व्यक्तं ततस्तदात्मकप्रधानपूर्वकमिति सत्त्वस्य हि प्रसादलाघवाद्युपप्रीत्यादिकं कार्यं, रजसस्तापशोषोपष्टम्भोद्वेगादिकं, तमसो विषाददैन्यगौरवनाम संवरणादिकम् । तदुक्तम्— ' सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥' इति । अस्य व्याख्या—'सत्त्वमेव लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः । तत्र कार्यस्योद्गमनहेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि । यतोऽग्नेरूर्ध्वज्वलनं भवति । तदेव लाघवं केषाञ्चित्तिर्यग्गमनहेतुः यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतुर्लाघवं गुरुत्वे हि मन्दानि स्युः । प्रकाशकत्वं तु सत्त्वस्य स्पष्टप्रतिपत्तिहेतुत्वमुक्तमेव, सत्त्वतमसी स्वयमक्रियत्वात् स्वकार्यप्रवृत्तिं प्रयत्नमीहन्ती रजसोपष्टभ्येते । अवसादात्प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कार्यते तदिदमुक्तम् 'उपष्टम्भकम्' इति ।

१ सां का १५ । २ सां का १३ । ३ सां त कौ १३ ।

कस्मादित्यत उक्तम् 'चलम्' इति । तदनेन रजसः प्रवृत्त्यर्थत्वं दर्शितम् । इतश्चाव्यक्तमस्तीत्याह–'शक्तितः प्रवृत्तेश्च' इति । कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम् । अशक्तात्कारणात्कार्यस्यानुपपत्तेः शक्तिश्च कारणगता न कार्यस्याव्यक्तत्वादन्या । न हि सत्कार्यपक्षे कार्यस्याऽव्यक्ततायाः अन्यस्यां शक्तावस्ति प्रमाणम् । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतासु' इति । कारणकार्यविभागाच्च कारणकार्ययोर्विभाग इदं कारणमिदं कार्यमिति बुद्ध्या द्विधावस्थापनं सोऽवस्थितैकभावपूर्वको दृष्टः । यथा स्थासकोशादिकारणकार्यविभागोऽवस्थितैकमृत्पूर्वकः । अस्ति चायं महदादिषु तस्मादवस्थितैकभावपूर्वकः । यश्चावस्थित एको भावस्तदव्यक्तम् । तथा– अविभागाद्वैश्वरूप्यस्य । विश्वरूपमेव वैश्वरूप्यमिति स्वार्थिकः ष्यञ् । इह यद्विश्वरूपं नानाप्रकारं तस्याविभागो दृष्टः । तद्यथा मृदपेक्षया घटघटीशरावोदञ्चनादीनां विश्वरूपाश्च महदादयस्ततस्तेषामप्यविभागेन भवितव्यम् । योऽसावविभागस्तदव्यक्तम् । एवं प्रमाणतः प्रसिद्धसत्ताका प्रकृतिरनेन क्रमेण तत्त्वसृष्टौ प्रवर्तते ।

'प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥' इति ।

प्रथमं हि प्रकृतेर्महानेको व्यापको विषयाध्यवसायरूप आसर्गप्रलयस्थायी बुद्ध्यपराधीनः प्रभवति । स चास्मादृशामसंवेद्यस्वभावः । ततस्तु याः प्रतिप्राणिविभिन्ना बुद्धिवृत्तयो निःसरन्ति ताः संवेद्यस्वभावाः । ततश्चाहंकारस्तथाविधो जलनिधेरिव प्रतिप्राणिविभिन्नैस्तैस्तैः स्थूलोऽहं सुरूपोऽहमित्याद्यहंकारतरङ्गविशेषैः प्रसरति । स चाहङ्कारो वैकृतो भूतादिश्चेति प्रथमतो द्विप्रकारः प्रसरति । तत्र वैकृतात्सत्त्वप्रधानादहङ्कारात्प्रकाशरूप एकादशविध इन्द्रियगणोऽयं प्रादुर्भ-

१ सा का २२।

वन्ति । पञ्च श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणानि बुद्धये बुद्धिमभिव्यक्तुमिन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि कर्मणे कर्माभिव्यक्तये । इन्द्रियाणीति मनः सङ्कल्परूपं ग्रामेऽहं प्रस्थितः सुवर्णस्य प्राप्तिर्भविष्यति द्रव्यस्य चेत्यादिसङ्कल्पवृत्तिभूतादेस्तु तमःप्रधानादहङ्कारात्पञ्च तन्मात्राणि प्रादुर्भवन्ति । 'तेभ्यः षोडशकगणादपकृष्टेभ्यः सूक्ष्मशब्दस्पर्शरूपरसगन्धस्वभावेभ्यः पञ्च भूतान्याकाशादीन्याविर्भवन्ति । तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी जायत इति । मात्रग्रहणं च भूतस्वाभाव्यनिवृत्त्यर्थं शब्दतन्मात्रादिषु विनयम् । भूतस्वभावानि शब्दतन्मात्रादीनि न भवन्ति । भूतकारणानि तु भवन्तीति भावः । एतानि च योगिनामेव श्रोत्रादिभिरिन्द्रियैः परिच्छिद्यन्ते । सूक्ष्मस्वभावाक्रान्तत्वात् । अस्मदादीनां तु श्रवणादीन्द्रियैः स्थूला एव शब्दादयो विषयीकर्तुं शक्यन्त इति । अयं च महदादिप्रपञ्चः प्रकृतौ सत्त्वाविर्भावं प्रतिपद्यते ।

'असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम् ॥'

इति वचनात् । अस्यार्थः—असदकरणादिति । असच्चेत्कारणव्यापारात्पूर्वं कार्यं घटादि तर्हि नास्य सत्त्वं शक्यं कर्तुम् । न हि नीलं शिल्पिसहस्रेणापि पीतं शक्यं कर्तुम् । सदसत्त्वे घटस्य धर्माविति ।

दभिन्नत्वाद्वस्तु सत्र भवति तत्कारणादभिन्नमपि न भवति ।

---

१ सां० का० ९ । १०० । २ सां० का० ९ ।

यथा करिकेसरनिकुरम्बमिति । न च कारणादभिन्नत्वं कार्यस्यासिद्धं तत्साधकानुमानसद्भावात् । तथा हि– न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात् । यद्यतो भिद्यते तत्तस्य धर्मो न भवति । यथा गौरश्वस्य धर्मश्च पटस्तन्तूनां तस्मात्तेभ्यो न भिद्यते । यथा तन्तुपटौ परस्परं न भिद्येते । उपादानोपादेयरूपत्वात् । यौ पुनर्भिद्येते न तावुपादानोपादेयरूपौ यथा घटपटौ । इतश्चानर्थान्तरत्वं तन्तुपटयोः संयोगप्राप्त्यभावात् । अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोरप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः । न चेह संयोगाप्राप्ती स्तः । तस्मान्नार्थान्तरत्वम्' इति । 'तदेवमभेदे सिद्धे तन्तव एव तेन संस्थानभेदेन परिणताः पट इति स्वात्मक्रियानिरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति । एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेषामविरोधात् । यथा कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति । न तु कूर्मस्तदङ्गानि चोत्पद्यन्ते ध्वंसन्ते वा । एवमेकस्या मृदः सुवर्णस्य वा कुटकटकादयो विशेषा निःसरन्ति, आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः । यथाह व्यासः— 'नासतो विद्यते भावो नाभावो विद्यते सतः ॥' इति । तथा च कूर्मः स्वावयवेभ्यः संकोचविकासिभ्यो न भिन्नः । एवं कुटकटकादयो मृत्सुवर्णादिभ्यो न भिन्नाः । एवं चेह तन्तुषु पट इति बुद्धिव्यपदेशश्च । यथेह वने तिलका इत्युपपन्नः । न चार्थक्रियाभेदो भेदमापादयत्येकस्यापि नानार्थक्रियस्य दर्शनात् । यथैक एव वह्निर्दाहकश्च पाचकश्चेति । तस्मात्प्रत्येकं तन्तवः प्रावरणमकुर्वाणा अपि मिलिता आविर्भूतपटभावाः प्रावरिष्यन्ति । न च भेत्स्यन्ते । स्यादेतदाविर्भावः पटस्य कारणव्यापारात्प्राक्सन्नसन्वा । स

---

१ सा. त. कौ. पृ. ६४ ५ ८ । १ भ. गी. २।१६।

चेदसन्प्राप्तमसत उत्पाद इति । अथ सन्, कुत तर्हि कारणैः । न हि सति कार्ये कारणाना प्रयोजन पश्याम । आविर्भाव चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्ग. । तस्मादाविर्भूतघटभावास्तन्तव इति रिक्त वचः । अत्रोच्यते । असदुत्पद्यते इत्यत्रापि मते केयमसतामुत्पत्ति सत्यसती वा । सती चेत्कुत कारणैः । असती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था । अथोत्पत्ति पटान्नार्थान्तरमपि तु पट एवासौ तथापि यावदुक्त भवति पट इति तावदुक्त भवत्युत्पद्यत इति । ततश्च पट इत्युक्ते उत्पद्यत इति । न च वाच्य पौनरुक्त्याद्विनश्यतीत्यपि न वाच्य विरोधात् । तस्मादसामीभिर्विकल्पैरनवस्थामुपप्लावनीयम् । तथा च सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् । न च पटरूपेण कारणानामन्वयस्तद्रूपस्याक्रियत्वात्, क्रियासम्बन्धित्वाच्च कारकाणामन्यथा कारकत्वाभावात् ।' तदित्थ कार्यस्य कारणादभेदे प्रतिपिद्धे सत्येवासौ महदादिप्रपञ्च प्रकृते सकाशादाविर्भवतीति सिद्धम् । नन्वेवमभेदे व्यक्ताव्यक्तयो कथ कार्यकारणभावव्यवस्थेति चेत् । उच्यते—

'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रित लिङ्गम् । सावयव परतन्त्र व्यक्त विपरीतमव्यक्तम् ॥' इति लक्षणभेदात । तथा हि— 'व्यक्त हेतुमत्, हेतु कारणमस्यास्तीति कृत्वा' प्रधानेन हि हेतुमती बुद्धि । बुद्ध्याहकारोऽहकारेण षोडशको गण पञ्चभिस्तन्मात्रै पञ्च महाभूतानि न त्वेकमव्यक्त तत्कारणभावात्, चिद्रूपश्च पुरुषो न जडस्वरूपस्य कारणमत्यन्तविलक्षणत्वात । तथा महदादि व्यक्तमनित्य विनाशि तिरोभावीत्यर्थ । न त्वेवमव्यक्त तस्या अहेतुमत्त्वेनानित्यत्वायोगात् । अन्यापि च व्यक्त नियतदेशवर्तित्वात् । न त्वेवमव्यक्त विभुत्वात । तथा व्यक्त सक्रिय परिस्पन्दवत् । तथा हि—

---

१ सा का १० । २ मा त की पृ ७० प २ । ३ मा त की पृ ५० प ३ ।

बुद्ध्यादय उपात्तमुपात्तं देहं त्यजन्ति देहान्तरं चोपाददते इति तेषां परिस्पन्दः । शरीरपृथिव्यादीनां च परिस्पन्दः प्रसिद्ध एव । न पुनरेवमव्यक्तं, यद्यपि तस्यास्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति । अनेकं च व्यक्तं महदादिसंनयस्मरणत्वात् । अव्यक्तं पुनरेकमन्यथा बहूनां प्रधानानामीश्वराणामिव परस्परमतभेदेन कार्यारम्भे प्रवर्तमानानां कालत्वात्( ? ) कार्यनिष्पादकत्वं स्यात् । आश्रितं च व्यक्तं यस्मादुत्पद्यते तस्य तदाश्रितत्वात् । नन्वेवमव्यक्तं 'अभेदेऽपि कथंचिद्भेदविवक्षाश्रयाश्रयिभावो यथेह वने तिलकाः ' इत्यत्र लिङ्गं च व्यक्तं लीनं सूक्ष्मं स्वकारणं गमयतीति लयं गच्छतीति वा । प्रलये हि महदादि यथास्वं कारणेषु लीयते न निरन्वयं नश्यति । न त्वेवं प्रधानं तदस्यकारणान्तरस्यासंभवात् । सावयवं च व्यक्तमवयवनमवयवो मिश्रणं संयोग इति यावत् । अप्राप्तिपूर्विका प्राप्तिश्च संयोगस्तेन सह वर्तत इति सावयवम् । तथा हि— पृथिव्यादयः परस्परं संयुज्यन्ते । एवमन्येऽपि । न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् । नापि सत्त्वरजस्तमसां परस्परं संयोगोऽप्राप्त्यभावात् । परतन्त्रं च व्यक्तं बुद्ध्या हि स्वकार्येऽहंकारे जनयितव्ये प्रकृत्या पूरोऽपेक्ष्यते । अन्यथा क्षीणा सती नालमहंकारं जनयितुमिति स्थितिः । एवमहंकारादिभिरपि स्वकार्यजनन इति सर्वं स्वकार्यजनने प्रकृत्यापूरमपेक्षते । तेन प्रकृतिं परामपेक्षमाणं कार्योपक्रमणे परतन्त्रं व्यक्तम् । नन्वेवमव्यक्तं कारणान्तरासंभवेन । तस्य स्वतन्त्रत्वात् । न चैवमनयोरात्यन्तिको भेद एव । 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानं तद्विपरीतं तथा च पुमान् ' ॥ इति लक्षणाभेदात्तयोर्भेदस्याप्युपपत्तेः । तथा हि— त्रिगुणमिति त्रयो

१ सां. त. कौ. पृ. ७१ प. २। २ सां. त. कौ. पृ. ७१ प. ७। ३ सां. का. ११। ४ सां. त. कौ. पृ. ७२ प. १४।

गुणाः सुखदुःखमोहा अस्येति त्रिगुणं व्यक्तं प्रधानं च। तन्नेन सुखादीनामात्मगुणत्वं परामिमतं पराकृतम्। अविवेकि यथा प्रधानं स्वतो न विविच्यते। एवं महदादयो (¹) प्रधानाद्विविच्यन्ते तदात्मकत्वात्। ये प्राहुर्विज्ञानमेव हर्षविषादशब्दाद्याकारं न पुनरितोऽन्यस्तद्धर्मेति तान्प्रतीदमुक्तं विषय इति। व्यक्तं प्रधानं च विषयो विज्ञानाद्बहिरिति यावत्। अत एव सामान्यं साधारणं सर्वपुरुषोपभोग्यं दासीवद्वार्दासवत्। विज्ञानाकारत्वे पुनरसाधारणत्वाद्विज्ञानानां वृत्तिरूपाणां घटादयोऽप्यसाधारणाः स्युरिदमाचक्षाणः एकस्मिन्नर्तकीभ्रूभङ्गे बहूनां प्रतिसंधानमुपनायेत। अचेतनं सर्वं एव बुद्ध्यादयोऽचेतना न तु बौद्धादीनामिव बुद्धेश्चैतन्यमित्यर्थः। प्रसवधर्मि प्रसवः कार्यजननं धर्मोऽस्यास्तीति। तथा हि प्रकृतिर्बुद्धिं जनयति, बुद्धिरप्यहंकारम्। अहंकारोऽपि तन्मात्राणीन्द्रियाणि चैकादश तन्मात्राणि तु महाभूतानि जनयति। व्यक्तवृत्तापदेशार्थं प्रधानस्योक्तम्। तथा प्रधानमिति व्यक्ताव्यक्ताभ्यां पुरुषस्य वैधर्म्याभिधानार्थमभिहितम्। तद्विपरीतः पुमानिति। स्पष्टम्। अहेतुमत्त्वनित्यत्वादि प्रधानसाधर्म्यमस्ति पुरुषस्य। एवमनेकत्वं व्यक्तसाधर्म्यमस्ति। तत्कथमुच्यते तद्विपरीतः पुमानित्यत कथितम्—तथा चेति। चकारोऽप्यर्थे। यद्यप्यहेतुमत्त्वादि साधर्म्यमस्ति तथापि त्रैगुण्यादिकं पुरुषस्य वैपरीत्यं व्यक्ताव्यक्ताभ्यामित्यर्थः।

सख्यात्तु साङ्ख्यानामुचितं सख्यानिना मतं तस्मात्।
यत्र कामानिव प्रधानमगमन्निवेर्वाणम् ॥ ६९२ ॥

---

¹ सां त कौमुद्यां तु 'विज्ञानं यथा परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वा दित्यभिप्राय। तथा च नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसंधानं युज्यम्' इति।

कपिकुलपरिपन्थि चापलं नेदं यदि किल चक्रुरुद्धताः ।
कपिलस्य मुनेस्तत् क्षणं कुर्मः शिक्षणमेषु युक्तितः ॥ ६०.३ ॥

तथा हि — यत्तावदवादि 'तत्सद्भावावेदकं तु भेदानां परिमाणात्' इत्यादि हेतुपञ्चकं तदाश्रयासिद्धिदोषदुष्टत्वादयुक्तम् । प्रकृतेरसर्वथाप्यसद्भावतया स्वरूपेणासिद्धत्वाद्व्यतिरेकेणासिद्धत्वाच्च । परिमितत्वादिकं हि साधने भेदेषु वर्तते । अस्तित्वं तु साध्यं प्रकृताविति । अथ महदादिभेदानामेवानेककारणपूर्वकत्वं प्रसाध्यते । तेनैकतोऽप्यद्वयाभावः । तदपि न सुन्दरम् । प्रधानतुल्यदोषनिपातात् । तत्रैकत्वानेकत्वसंख्यया महापरिमाणेन च परिमितत्वेऽप्येककारणपूर्वकत्वासंभवात् । किं च परिमितं न स्यादेककारणपूर्वकं च न भवेत्, किं विरुध्येत । दृष्टान्तस्तु साध्यविकलः । कुम्भादेरेककारणपूर्वकत्वासंभवात् । न ह्येकं किंचिज्जनकं प्रतीयते सहकारिकारणभेदत्वात्कार्याणाम् । मृद्द्रव्यस्याप्यनेकावयवसमुदायात्मकत्वान्न सर्वथैकत्वम् । अतः परिमितत्वमनेककारणपूर्वकत्वेनैव व्याप्तत्वाद्विरुद्धम् । समन्वयादित्यप्यनैकान्तिकम् । प्रकृतिपुरुषाणामेककारणपूर्वकत्वाभावेऽपि नित्यव्यापित्वादिधर्मैः समन्वयसंभवात् । पुरुषाणां च भोक्तृत्वादिधर्मैरिति । भिन्नजातीनां च जलानिलादीनामेकोपादानप्रभवत्वं दुरुपपादम् । पदार्थजातिभेदस्य कारणैकत्वविरोधित्वात् । असिद्धं चेदं साधनम् । न हि समग्रभूतग्रामस्य सुखदुःखमोहमयत्वेनान्वितत्वसिद्धिरस्ति । सुखादीनामन्तः संविद्रूपतया प्रतिभासतो बाह्यार्थानां तन्मयत्वानुपपत्तेः । न हि कश्चिद्बाह्यं स्रक्चन्दनादिकं सुखमिति प्रतिपद्यते । सुखजनकत्वेनाबाह्यं तत्प्रसिद्धम् । न च कार्यकारणयोरेकत्वमनौपचारिकं प्रामाणिकैराद्रियते । एतेन 'सत्त्वं लघु प्रकाशकमिष्टम्' इत्यादिकारिका सव्याख्याना प्रत्याख्याता । स्रक्चन्दनादीनां सुखदुःखमोहमयत्वाप्रसिद्धौ सत्त्वरजस्तमोमयत्वस्याप्रसिद्धेः । शक्तितः प्रवृत्तेरित्यस्यापि शक्तेः कार्याव्यक्ततारूपायाः सकाशात्कार्यप्रवर्तनादित्यर्थः । तत्र केयं

कार्यप्रकता नाम । कारणामन्यव्यक्त कार्यमेवेति चेत् । ननु तद्व्यक्तकार्याद्यतिरिक्तमतिरिक्तं वा । न तावदतिरिक्तम् । सत्कार्यवादप्रतिप्रसक्तेः । नाप्यतिरिक्तम् । तस्य व्यक्ताव्यक्तरूपतानुपपत्तेर्व्यक्ताव्यक्तसिद्धेः शक्तिः प्रवृत्ति

त्वमविद्यमानमप्याश्रय परमते कारकत्वेनाभिमता पदार्था इति । न चासत्यभिव्यक्तौ तेषां व्यापारः । तत्रापि सत्त्वासत्त्वपक्षयोः कारणासंभवात् । न खलु सति विद्यमाना कर्तुं युक्ता । करणानुपरमप्रसंगात् । अविद्यमानायाश्च तस्याः करणे सत्कार्यवादहानिः स्यादिति कारकव्यापारस्याभावे कथं क्रियमाण

त्वात्, क्रियमाणत्वादिति साधनं न कारणव्यापारापाकरणसमर्थं तदसिद्धेः प्रभवति । नाप्युपादानग्रहणादिति प्रत्यक्षबाधप्रत्याख्यानात् । उपादानेन च कार्यस्य सम्बन्धस्तादात्म्यमेव न संयोगादिस्तथापि तत्र च कार्यकारणयोस्तादात्म्यं सर्वथा वा स्यात् कथंचिद्वा । प्रथमकल्पनायामुपा

सर्वथा तादात्म्यस्य कार्यकारणयोर्जैनैरनभ्युपगमात् । द्वितीयकल्पनायां तु बाधसिद्धं । न खल्वनेकान्तवादिभिरिव कापिलैः कार्यकारणयोः कथंचित्तादात्म्यं प्रतिज्ञातम् । प्रतिज्ञाने वा सर्वथा सत्कार्यवादविरोधापत्तिः । न हि रूपेण कार्यस्य कारणेन सह न

घटमेव । तथा विन्ध्योऽप्यसद्धेतुर्भवति । प्रकृतसाध्यविच्छेदेन कथंचित्सत्त्वेनैवान्यथानुपपन्नत्वात् । न च कारणव्यापारात्पूर्वं कार्यस्य कथंचिदसत्त्वस्वीकारे तदर्थिना प्रतिनियतोपादानग्रहणं दुरुपपादमिति वाच्यम् । अन्वयव्यतिरेकसमधिगम्यो हि कार्यकारणभावः । यद्यस्मादन्वय

भिन्नोपादीयते न सर्वम् । तथा च प्रागसत्पदार्थादीनां स्वार्थ । तदर्थिनां मृत्पिण्ड एवोपादानग्रहणाभावप्रसक्तेन हि विद्यमानतन्तु

सिद्ध्यर्थं कश्चिदुपादानं गृह्णाति ... .... .... .... ग्रहणानुषङ्गात् । तत्रोपादानसंबद्धत्वादपि सत्कार्यवादसिद्धिः । नियतरूपेण नियतादुत्पन्नत्वादित्यपि साधनं वाद्यसिद्धम् । यत्खलु स्वरूपेणाविद्यमानं तत्प्रतिनियतं कारणमासाद्य प्रतिनियतेनात्मना समुत्पाद्यते .... .... कार्यं सर्वात्मना विद्यमानमेव तथाविधस्य चोत्पत्तिप्रतिपादनमसंगतमपि प्रसंगात् । प्रकृतिपुरुषयोरपि सर्वात्मना विद्यमानयोरुत्पादापत्तेरविशेषात् । तथा च हेतुमदनित्यमित्यादिना त्रिगुणमविवेकिविषय .... .... .... .... .... .... ....व्यक्तविपरीत्याभिधानमसंबद्धमेव स्यात् । किं च 'सर्वं सर्वत्र विद्यते' इति कापिलैः प्रतिज्ञायते ततो यथा तिलादिषु तिरोहितेनात्मना तैलादिकं समस्ति तथा तरङ्गिणीतीरवर्तिनीषु सिकतास्वपीति ताभ्योऽपि तैलादेराविर्भावः प्रतिरोद्धुं न पार्यते । तथा च कथं नियतरूपेण नियतादुत्पन्नत्वादिति साधनं कपिलमतानुयायिनां नासिद्धम् । विरुद्धं चेदं नियतरूपेण नियतादुत्पन्नत्वस्य साध्यत्वाभिमतसर्वथासत्त्वविरुद्धेन कथंचित्सत्त्वेनैवाव्यभिचारित्वात् । पक्षदूषणं चात्रापि पूर्ववदनुसरणीयमिति कर्तुं शक्यत्वादित्येतदपि साधनं वाद्यसिद्धमेव । न खलु स ... .... विपर्ययेऽपि कार्यत्वापत्तेः । विरुद्धत्वादिकं च दूषणमिहापि प्राग्वत्सूच्यम् । कारणादभिन्नत्वादित्यपि साधनं न सत्कार्यवादपक्षमुत्थापयितुं समर्थम् । असिद्धत्वादिदोषदुष्टत्वात् । तथा हि—सर्वथा कार्यस्य कारणादभिन्नत्वमत्र हेतुत्वेनाभिमतं कथंचिद्वा । तत्राद्यपक्षे प्रतिवाद्यसिद्धत्वम् । हेतोः सिद्धत्वात् । द्वितीयपक्षे तु वाद्यसिद्धत्वम् । कारणात्कार्याणां कथंचिद्भेदस्य कापिलैरप्रतिज्ञानात् । अपरं च दोषजालमिहापि प्रागिव स्याद्वादानेण्णात्ममतिभिः स्वयमेव तर्कणीयम् । यानि च न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वादित्येवमादीनि कारणात्कार्यस्याभेदसाधनान्यनुमानानि परेषां तान्य .... .... .... .... ....

साफल्यार्थमसतो निर्णयस्योत्पत्तिः सतः सन्देहस्य विनाशश्चाभ्युपगम्यते तर्हि 'नासतो विद्यते भावो नाभावो विद्यते सतः'। इत्यादिवचः कथं न विरोधमास्कन्देत। कथं वा सत्कार्यवादसिद्धये प्राक्प्रयुक्तस्य क्रियमाणत्वादेर्हेतुपञ्चकस्यानेनैव व्यभिचारो न भवेत्। तदेवं प्रकृतिसद्भावस्य प्रकृतौ महदादिसद्भावस्य च कुतश्चिद्धेतोरप्रसिद्धेरनयोर्भेदाभेदप्रतिपादकं 'हेतुमदनित्यम' इत्यादि, 'त्रिगुणमविवेकि' इत्यादि च कारिकाद्वयं सङ्ख्याख्यातं खपुष्पसौरस्यव्यावर्णनप्रख्यमित्येतदप्युपेक्षणीयं प्रेक्षादक्षैः।

एवं च—

कापिलकुलशैलजालं मतविश्वविलोडनलालसं किलासीत् ।
दृढनयदम्भोलिपाततस्तच्चक्रे जैनेन्द्रेण भिन्नपक्षम् ॥ ६९४ ॥

तस्मान्मानेष्वशेषेष्वपि विषयनयानेकधर्मस्वभावो
भावग्रामः प्रवीणैः प्रथत इति मुहुर्भावनीयं भवद्भिः ॥
एकान्तास्तु प्रणीताः सुगतसुतमुखैर्ये विनाशित्वमुख्याः
ख्यातिर्मानेषु तेषां गगननलिनवन्नावकाशं समेति ॥ ६९५ ॥

यस्मात्प्रादुरभूदियं व्यवहृतिश्चित्रा नृणां मूलतः
तस्मै येन सुदुष्करं तप इह त्यक्त्वैव राज्यश्रियम् ॥
दिव्यज्ञानमहोदधौ त्रिभुवनं यस्यैकरत्नायते
कुर्यादीप्सितसिद्धिमेष भगवान् श्रीनाभिराजाङ्गजः ॥६९६॥

नम्रानेकत्रिदशमुकुटाश्लिष्टनानामणीनां
भाभिः कीर्णं कुवलयदलश्यामलं यस्य गात्रम् ॥
लक्ष्मीं व्योम्नः सुरपतिधनुःसङ्गिनः संचकर्ष
श्रीमानिष्टं स भुवनगुरुः सुव्रतो नस्तनोतु ॥ ६९७ ॥

वाग्वैभवं निरुपमा विनुता विभूतिः
शुभ्रांशुरश्मिपटली धवलं यशश्च ।

१ छन्दोभङ्गो दृश्यते ।

यस्याः प्रसादवशतः कृतिनो भवन्ति
सा भारती वितनुतां मम वाञ्छितानि ॥ ६९८ ॥
सौगन्ध्येन मनोरमे विकसिते पङ्केरुहेऽवस्थिता
लक्ष्मीं नियमेव मथितवती तत्स्पर्धया भारती ॥
शङ्के यत्कमलेऽ निरुपम येषां समासीप्सित
श्रीमन्तो मुनिचन्द्रसूरिगुरवः कुर्वन्तु ते मङ्गलम् ॥ ६९९ ॥

इति शास्त्रवार्तासमुच्चयसमुद्रसमुल्लासनपूर्णचन्द्रश्रीमन्मुनिचन्द्रसूरिपादपद्मोपजीविना श्रीदेवाचार्येण विरचिते स्याद्वादरत्नाकरे प्रमाणनयतत्त्वालोकालङ्कारे विषयस्वरूपनिर्णयो नाम पञ्चमः परिच्छेदः ॥ ५ ॥

पञ्चमपरिच्छेदः समाप्तः ॥

आर्हतमतप्रभाकरस्य

चतुर्थो मयूखः

श्रीमद्वादिदेवसूरिविरचितः

# प्रमाणनयतत्त्वालोकालङ्कारः

तद्व्याख्या च

# स्याद्वादरत्नाकरः

---

पुण्यपत्तनस्य
ओसवालवंशश्रेष्ठिलाधानीतनूजमोतीलाल इत्येतैः टिप्पणी-
भिरुपोद्घातेन च परिष्कृत्य संशोधितः ।

यह ग्रंथ श्री रतनाजी रुगनाथजी शिलदर,
(जि सिरोही-मारवाड) वाळे तरफ से भेट

वीरसंवत् २४५७

---

प्रथमेयमङ्कनावृत्तिः ।

मूल्य रूप्यकद्वयम् ।



वागड (कच्छ) दशोद्धारक दादा श्री जीतविजयजी महाराजना प्रशिष्य
प्रात स्मरणीय शान्तमूर्ति परमपूज्य आचार्यदेव
**श्री विजयकनकसूरीश्वरजी महाराज**

| अशुद्धम्, | शुद्धम्, | पृष्ठम्, | पंक्ति, |
|---|---|---|---|
| ता | ता | ६२८ | १० |
| समातन्वते | समा मन्वते | ६३३ | ४ |
| लब्ध्वन्यथा | लब्ध्यन्यथा | ६५६ | ६ |
| मिषणो | भीषणो | ६५७ | ८ |
| सीयते | सीयन्ते | ,, | १० |
| वातशः | वांगतः | ,, | १७ |
| **चतुर्थभागे—** | | | |
| कालमेद | कालभेद | ७३६ | ८ |
| कदाचित्कनयो | कादाचित्कनयो | ७८८ | १९ |
| तदेक्षण | तदेक्क्षण | ७८९ | १९ |
| द्रव्यपर्याययोः। | द्रव्यपर्याययोः | ८०० | ७ |
| प्रतिभासमाना | प्रतिभासमान | ८५२ | १८ |
| लोकस्तम. | लोकाभावस्तम. | ८५२ | १८ |
| **पंचमभागे—** | | | |
| च ज्ञानस्य | चाज्ञानस्य | ९९३ | १७ |
| न वर | नवर | ९९४ | ३ |
| द्वितीयादि | द्वितीयादि | ,, | ८ |
| माध्यस्थमुपेक्षेते | माध्यस्थ्यमुपेक्षिते | ,, | १० |
| एतेनादृष्टि | एतेनादृष्ट | ९९५ | १ |
| तथा वा मे (?) | तथाचात्म | ,, | ७ |
| सुखोपेक्षा | सुखोपेक्षा | ,, | १४ |
| पेक्षा बुद्धय | पेक्षाबुध्य | ,, | २१ |
| तत | तत् | ९९६ | ३ |
| धर्मे | धर्मी | ,, | ५ |
| प्रमाणभेद | प्रमाणादभेद | ,, | १३ |
| व्यवस्था विप्लव. | व्यवस्थाविप्लव. | ९९७ | १० |
| प्रमाणान, | प्रमाणात् | ,, | २० |
| सावृतत्वा | सावृतत्व | १००२ | १८ |
| तस्माद पार | तस्मात् पार | ,, | १९ |
| सख्या विषय | सख्याविषय | १००३ | १९ |
| " तद्वदा- भासते इति कृत्वा ' | चतुर्विंशसूत्रा- रम्भे योजित- मसत्। त्र- योविंशसूत्र- वृत्तिपर्यवसाने योजनीयम्। | | |
| यदा भासते | यदाभासते | १००५ | ३ |
| भासकस्तर्को | भासमस्तर्को | ,, | २ |
| नुपपत्त्या | नुपपत्त्य | ,, | ९ |
| करणाच । | करणाच | १००८ | ६ |
| यनेकान्तस्तद्वर्ज | येकान्तस्तद्वर्ज | ,, | १६ |
| पक्ष. प्रयोगः | पक्षप्रयोग' | ,, | २३ |
| र्थिकप्रमाण | र्थिक प्रमाण | १०११ | १३ |
| स पार | स न पार | ,, | १९ |
| लोके प्रतीत्या | लोकप्रतीत्या | ,, | २० |
| इति लोक | इति । लोक | ,, | २२ |
| नाप्यनुभूयत | नाप्यनुभयत | १०१२ | २५ |
| प्रमाण भाव | प्रमाणाभाव | १०१३ | ४ |
| पहिहारा | परिहारा | १०२० | २२ |
| नुपपत्तेः | नुपपत्ति. | १०२४ | ७ |
| प्रतीयते । | प्रतीयते, | ,, | २१ |
| समानवर्मा | सावनवर्मा | १०३५ | १ |
| इति | इति सन्दिग्धो भयवर्मा | ,, | ४ |
| ज्ञानाभ्रान्तत्व | ज्ञानाद् भ्रान्तत्व | १०३६ | १८ |
| नित्यत्वस्य | नित्यत्वस्य सत्त्वस्य | १०३७ | १ |
| गौद्धोदनो | शौद्धोदनो | ,, | १९ |
| बुद्धे। | बुद्धो | १०३८ | १० |
| ज्ञायते । किं | ज्ञायते किं | ,, | ११ |
| फल । तस्य | फल तस्य | १०४२ | ११ |
| नैगमा | नैगमा | १०५३ | ७ |
| रपाश्चा | रपारमा | १०५८ | २ |
| व्यवहारो | व्यवहारा | ,, | १० |
| च सत्य | चासत्यं | १०५९ | १३ |
| सिद्ध्ये | सिध्ये | ,, | १४ |
| वैसादृश्य | वैसदृश्यं | ,, | १८ |
| भविष्य | भविष्यद् | १०६० | ९ |
| न घट- | न घटशब्द- वाच्य, घट- | १०६५ | २१ |
| प्रवृत्त | प्रवृत्ति | ,, | २२ |
| नैगमा | नैगमो | १०६६ | २३ |
| नर्जुसुत्रा | नर्जुसूत्रा | १०६८ | ५ |
| स्थितत्वात्ट- | स्थितत्वात् । | | |
| थिव्या | पृथिव्या | १०७५ | २१ |

# अथ षष्ठः परिच्छेदः ।

यत्रान्यपरभागमेति न महः पारेऽन्धकारं सदा
यस्याविस्थितिनिर्वृतिं न भजते यन्मेघमालादिभिः ॥
अस्तं यन्न समेति यच्च परितस्त्रैलोक्यविद्योतकं
तज्ज्योतिर्जगतां तनोतु महतीं तत्त्वावबोधश्रियम् ॥७००॥

एवं प्रमाणस्य लक्षणसंख्याविषयान् प्रसाध्य फलं प्ररूपयन्नाह—

## यत् प्रमाणेन साध्यते तदस्य फलमिति ॥ १ ॥

यद्वक्ष्यमाणमज्ञाननिवृत्त्यादिकं प्रमाणेन प्रत्यक्षादिना साध्यते निष्पाद्यते तदस्य प्रमाणस्य फलमवगन्तव्यमिति ॥ १ ॥

अथैतत्प्रकारमस्याह—

## तद्द्विविधमानन्तर्येण पारम्पर्येण चेति ॥ २ ॥

एकं प्रमाणस्य फलमानन्तर्येण साक्षात्, परं तु पारम्पर्येण व्यवहितमित्यर्थः ॥ २ ॥

अथाद्यफलाविर्भावनायाह—

## तत्रानन्तर्येण सर्वप्रमाणानामज्ञाननिवृत्तिः फलमिति ॥ ३ ॥

तत्र तयोरानन्तर्यपारम्पर्यभेदभिन्नयोः फलयोर्मध्यादानन्तर्येण सर्वप्रमाणानामसर्वदर्शिनानां योगिनानां च ज्ञानस्य विषयया-देर्निवृत्तिः प्रथमं स्वपरव्यवसितिस्वरूपा फलं प्रतिपत्तव्यमिति ।

ननु केवलिनां सदा सर्वप्रमेयस्य प्रत्यक्षत्वादज्ञाननिवृत्तिः फलाभाव इति चेत् । मैवम् । प्रतिसमयमशेषविषयाज्ञाननिवृत्तिपरिणतेः फलरूपायास्तेषां सद्भावात् । ननु प्रथमसमय एवाशेषार्थप्रकाशा-

रूपेण परिणतो केवलस्य केवलिनः प्रतिसमयाज्ञाननिवृत्तिपरिणामो नास्तीति चेत् । न । द्वितीयादिसमये तदनभ्युपगमे तस्याज्ञत्वप्रसङ्गात् । न वरं केवलज्ञानोत्पत्तिप्रथमसमयेऽज्ञानस्य निवृत्तिः प्रथमसमयविशेषेण समस्ति । द्वितीयादिसमये पुनः सैव द्वितीयादिसमयविशिष्टेति न फलाभावलक्षणो दोषः ॥ ३ ॥

इत्थमानन्तर्येण प्रमाणफलं निरूप्य पारम्पर्येण तत्प्रकाशयन्नाह—

## पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यमिति ॥ ४ ॥

औदासीन्यं साक्षात्समस्तार्थानुभवेऽपि हानोपादानेच्छाविरहान्माध्यस्थ्यमुपेक्षेत्यर्थः । कुत इति चेत् । उच्यते । सिद्धप्रयोजनत्वात्केवलिनां सर्वत्रौदासीन्यमेव भवति । हेयस्य संसारतत्कारणस्य हानात्, उपादेयस्य मोक्षतत्कारणस्योपादानात्, सिद्धप्रयोजनत्वं नासिद्धं भवताम् । ननु करुणावतां परदुःखजिहासूना कथमौदासीन्यम् । करुणाया असम्भवे वा कथमाप्तत्वं तेषां स्यादिति चेत् । न । मोहविशेषात्मिकायाः करुणायास्तेषामसम्भवात् । स्वदुःखनिवर्तनवदकरुणयापि परदुःखनिराचिकीर्षायां प्रवृत्तेः । नन्वस्मदादिवद्दयालोरेवात्मदुःखनिवर्तनं केवलिनः समीचीनम् । तथा चात्र प्रयोगः— यो यः स्वात्मनि दुःखं निवर्तयति स स्वात्मनि करुणावान् । यथाऽस्मदादि, तथा च योगी स्वात्मनि संसारदुःखं निवर्तयतीति । न चात्र हेतुर्विरुद्धोऽनैकान्तिको वा । विपक्षे सर्वथाप्यभावात् । भयलोभादिनात्मदुःखनिवर्तकैर्व्यभिचारी हेतुरिति चेत् । न । तेषामपि करुणोत्पत्तेः । न ह्यात्मन्यकरुणावतः परतो भयं लोभोऽभिमानो वा सम्भवति । तेषामात्मकरुणाप्रयुक्तत्वादिति परम्परया करुणावानेवात्मदुःखमनशनादिनिमित्तं निवर्तयति भयादिहेतुका वा कस्यचिदात्मनि करुणोत्पद्यते । सोत्पन्ना सती स्वदुःखं निवर्तयतीति साक्षात्करु-

णयामन्तु भनिवर्तने प्रवर्तने । ततो न व्यभिचारः । एतेनादृष्टविशेषवशादात्मनि दु मनिवर्तनपरैर्व्यभिचारचोदना निरस्ता । तत्र करुणोत्पत्तेरेव तन्निवर्तनात् । तथाकरुणस्यात्मन्तु मनिवर्तनं दृष्टमतो यममसाधिरिति चेत् । न । स्वभावतोऽपि स्वतु मनिवर्तननिरन्तनलोपपत्ते । यथा खलु तस्वाभाव्यादेव भास्करो लोकं प्रकाशयति न पुनः कृपालुतया । तथा यदि केवली स्वतु स निवर्तयिष्यति तदा को दोषः । तथा चास्मे (१) दु मनिवर्तनकत्वस्य हेतोः करुणावत्त्वेनान्यथानुपपत्तेः सन्दिग्धत्वाद्व्यभिचारित्वम् । ततो निःशेषान्तरायक्षयादभयदानस्वरूपमेवात्मनः प्रक्षीणावरणस्य परमा दया । सैव च मोहाभावाद्रागद्वेषयोरप्रणिधानादुपेक्षा । तीर्थकरत्वनामोदयात्तु हितोपदेशप्रवर्तनापरत्तु मनिगकारणसिद्धिरिति । न तु बुद्धस्करणयाऽस्य प्रवृत्तिर्भगवतो येनापेक्षा केवलस्य फलं न स्यात् । ननूपेक्षायाः केवलज्ञाने मुक्तस्यापि फलत्वं वक्तुमुचितमन्यथा 'केवलस्य सुखोपेक्षा' इति पूर्वाचार्यवचनविरोधो दुष्परिहर इति चेत् । सत्यम् । किन्तु न महत्यशोऽयमोऽस्य केवलज्ञानस्य सुखफलत्वप र, इत्युपेक्षितोऽस्माभिः । मुक्तस्य हि संसारिणि मोहनीयकर्मोदयफलत्वम् । मुक्ते तु समस्तकर्मक्षयफलत्वं प्रमाणोपपन्नम् । न पुनर्ज्ञानफलत्वम् । तन्न मुक्तः पारम्पर्येण केवलज्ञानस्य तात्त्विकमौदासीन्यमिति ॥ ४ ॥

अथ केवलव्यतिरिक्तप्रमाणानां परम्पराफलमकटयन्नाह—

## शेषप्रमाणानां पुनरुपादानहानोपेक्षा बुद्धय इति ॥ ५ ॥

पारम्पर्येण फलमिति प्राक्सूत्रादत्र सम्बध्यते । तत्र शेषप्रमाणानां केवलज्ञानव्यतिरिक्तानां पुनरुपादानं परिग्रहो हानं परित्याग उपेक्षा औदासीन्यं तद्विषया बुद्धयोऽपि बुद्धयः पारम्पर्येण फलमिति यावत् ॥ ५ ॥

प्रमाणफलं प्रमाणाद्भिन्नमेवेति यौगाः, अभिन्नमेवेति ताथागताः, इत्येकान्तद्वयनिरासार्थं स्वमतं प्रमाणतो व्यवस्थापयन्नाह—

**ततः प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेरिति ॥ ६ ॥**

तत् सामान्यलक्षणलक्षितं फलं धर्मि प्रमाणतः स्याद्भिन्नमभिन्नं चेति साध्यो धर्मः प्रमाणफलत्वान्यथानुपपत्तेरिति हेतुः ॥ ६ ॥

अथास्य हेतोर्व्यभिचारं पराकुर्वन्नाह—

**उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन हेतोर्व्यभिचार इति न विभावनीयमिति ॥ ७ ॥**

प्रमाणफलं च भविष्यति प्रमाणात्सर्वथा भिन्नं च भविष्यति । यथोपादानबुद्ध्यादिकमिति न परामर्शनीयं यौगैरित्यर्थः ॥ ७ ॥

कुत इत्याह—

**तस्यैकप्रमातृतादात्म्येन प्रमाणाभेदव्यवस्थितेरिति ८**

तस्योपादानबुद्ध्यादेर्व्यवहितफलस्यैकप्रमातृतादात्म्येनैकेन प्रमात्रा सह तादात्म्यमविष्वग्भावस्तेन कृत्वा किमित्याह—प्रमाणात्सकाशादभेदव्यवस्थितेः प्रमाणेन सह तादात्म्योपपत्तेर्हेतोर्व्यभिचार इति न विभावनीयमिति प्राक्तनेन योगः ॥ ८ ॥

एकप्रमातृतादात्म्यमपि तस्य कुतः सिद्धमित्याह—

**प्रमाणतया परिणतस्यैवात्मनः फलतया परिणतिप्रतीतेरिति ॥ ९ ॥**

---

१ 'प्रमाणस्य प्रमाणत्वं तस्मादभ्युपगच्छताम् ।
भिन्नं फलमुपेतव्यमेकत्वे तदसम्भवात् ॥' इति न्या. मं पृ ७१ ।

२ 'विषयाधिगतिश्चात्र प्रमाणफलमिष्यते । स्ववित्तिर्वा प्रमाणं तु सारूप्यं योग्यतापि वा ॥ १३४४ ॥' इति तत्त्वसंग्रहे ।

यस्यैवात्मन प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेद ॥ ९ ॥

एतदेव भावयन्नाह—

**यः प्रमिमीते स एवोपादत्ते परित्यजत्युपेक्षते चेति सर्वसंव्यवहारिभिरस्खलितमनुभवादिति ॥ १० ॥**

न खलु अन्य प्रमाता प्रमाणपर्यायतया परिणमतेऽन्यश्चोपादानहानोपेक्षाबुद्धिपर्यायस्वभावतयेति कस्यापि सचेतसोऽनुभव समस्तीत्यर्थ ॥ १० ॥

यथोक्तार्थानभ्युपगमे दूषणमाह—

**इतरथा स्वपरयोः प्रमाणफलव्यवस्था विप्लवः प्रसज्येतेति ॥ ११ ॥**

इतरथेत्येकस्येव प्रमातु प्रमाणफलसम्बन्धित्वानङ्गीकारे इमे प्रमाणफले स्वकीये इमे च परकीये इति नैयत्य न स्यादिति भाव । तदित्थमुपादानबुद्ध्यादेर्व्यवहितफले प्रमाणादभेदस्यापि प्रसिद्धेन तेन प्रकृतहेतोर्व्यभिचार इति सिद्धम् ॥ ११ ॥

अथ व्यभिचारान्तरं निराचिकीर्षुराह—

**अज्ञाननिवृत्तिस्वरूपेण प्रमाणादभिन्नेन साक्षात्फलेन साधनस्यानेकान्त इति नाशङ्कनीयमिति ॥ १२ ॥**

प्रमाणफलं च स्यात्प्रमाणात्, सर्वथाप्यभिन्नं च स्याद्यथाऽज्ञाननिवृत्तिरित्यनयानेकान्तिकत्व प्रकृतिहेतोरिति न शङ्कनीय शास्त्रशिष्यै ॥ १२ ॥

( कुत इत्याह—

---

1 एतच्चिह्नान्तर्गतं रत्नाकरे त्रुटितं रत्नाकरावतारिकाया पूरितम्।

**कथंचित्तस्यापि प्रमाणाद्भेदेन व्यवस्थानादिति ॥ १३ ॥**

कथंचिदिति वक्ष्यमाणेन प्रकारेण ) .... रूपस्य साक्षात्फलस्य न केवलमुपादानबुद्ध्यादेर्व्यवहितफलस्येत्यपिशब्दार्थः ॥ १३ ॥

एवं व्यवस्थानमपि कुतः सिद्धमित्याह—

**साध्यसाधनभावेन प्रमाणफलयोः प्रतीयमानत्वादिति ॥ १४ ॥**

ये हि साध्यसाधनभावेन प्रतीयेते परस्परं भिद्येते यथा कुठारच्छिदे । साध्यसाधनभावेन प्रतीयेते च प्रमाणाज्ञाननिवृत्त्याख्यफले ॥ १४ ॥

अस्यैव हेतोरसिद्धतां पराजिहीर्षुः प्रमाणस्य साधनत्वं तावत्समर्थयमान आह—

**प्रमाणं हि करणाख्यं साधनं स्वपरव्यवसितौ साधकतमत्वादिति ॥ १५ ॥**

यत्खलु क्रियायां साधकतमं तत्करणाख्यं साधनं, यथा परश्वधः साधकतमं च परव्यवसितौ प्रमाणमिति ॥ १५ ॥

अथ फलस्य साध्यत्वं समर्थयन्ते—

**स्वपरव्यवसितिक्रियारूपाज्ञाननिवृत्त्याख्यं फलं तु साध्यं प्रमाणनिष्पाद्यत्वादिति ॥ १६ ॥**

यत्प्रमाणनिष्पाद्यं तत्साध्यं यथोपादानबुद्ध्यादिकं प्रमाणनिष्पाद्यं च प्रकृतं फलमिति । तन्न प्रमाणादेकान्तेन फलस्याभेदः साधीयान् । सर्वथा तादात्म्ये हि प्रमाणफलयोर्न व्यवस्था तद्भावविरोधात् । न हि सारूप्यमस्य प्रमाणमधिगतिः फलमिति सर्वथा

तान्म्ये भि यन्यतिप्रसक्ते । ( ननु प्रमाणस्यासारूप्य )व्यावृत्ति सारूप्यमनधिगतिव्यावृत्तिरिति व्यावृत्तिभेदादेकस्यापि प्रमाणफलव्यवस्थेति चेत् । नैवम् । स्वभावभेदमन्तरेणान्यव्यावृत्तिभेदस्याप्यनुपपत्ते । कथ च दर्शनस्याप्रमाणफलव्यावृत्त्या प्रमाणफलव्यवस्थावत् प्रमाणान्तरफलान्तरव्यावृत्त्याऽप्रमाणत्वस्याफलत्वस्य च व्यवस्था न स्यादिति॥ १६॥

अथ प्रसगत कर्तुरपि सकाशात्प्रकृतफलस्य भेद समर्थयमान प्राह—

## प्रमातुरपि स्वपरव्यवसितिक्रियाया. कथञ्चिद्भेद इति ॥ १७ ॥

प्रमातुरात्मन किं पुन प्रमाणादित्यपिशब्दार्थ ॥ १७ ॥

स्वपरव्यवसितिक्रियाया अज्ञाननिवृत्त्याख्यफलस्वभावाया कथञ्चिद्वक्ष्यमाण .. ( अत्र हेतुमाहु —

## कर्तृक्रिययो. साध्यसाधकभावेनोपलम्भादिति ।१८।

ये साध्यसाधकभावेनोपलभ्येते ते अन्योन्य भिन्ने । यथा देवदत्तदारुच्छिदिक्रिये साध्यसाधकभावेनोपलभ्येते च प्रमातृस्वपरव्यवसितिक्रिये इत्यर्थ ॥ १८ ॥

हेतुसिद्धिपरिहारार्थमाह—

## कर्ता हि साधक. स्वतन्त्रत्वात्, क्रिया तु साध्या कर्तृनिर्वर्त्यत्वादिति ॥ १९ ॥

स्वम( मा ) तन्त्र प्रधानमस्येति स्वतन्त्रो य क्रियाया स्वतन्त्र स साधको यथा वृक्षच्छेदक्रियाया व्रश्चन । स्वतन्त्रश्च स्वपरव्यवसितिक्रियाया प्रमातेति स्वतन्त्र( त्व कर्तु कुत सिद्धमिति चेत् । क्रियासिद्धावपरायत्ततया प्राधान्येन विवक्षितत्वात । स्वपरव्यवसितिल) क्षणा क्रिया पुन साध्या कर्तृनिर्वर्त्यत्वात । या खलु कर्तृनिर्वर्त्या क्रिया सा साध्येति व्यवहार ।

एवमेकान्ततो भेदं प्रमाणफलयोर्जगुः ॥
योगास्तमथ सन्न्यायाद्दूषयन्ते मनीषिणः ॥ ७०१ ॥

तथा हि यत्तावत्प्रमाणमित्याद्यवादि तत्र प्रत्यभिज्ञानबाधः पक्षस्य प्रमाणात्कथंचिदभिन्नस्य तत्फलस्याज्ञाननिवृत्त्यादेः प्रत्यभिज्ञानेन प्रतीयमानत्वात् । योऽहं पदार्थं प्रमिणोमि स एव निवृत्ताज्ञानस्तमुपाददे परित्यजाम्युपेक्षे चेति हि प्रतिप्राणि प्रतीयते । अनुमानबाधश्च । तथा हि–फलं प्रमाणात्कथंचिदेव भिन्नं तत्कार्यत्वान्यथानुपपत्तेः । ज्ञानं हि स्वकारणकलापादुपजायमानं स्वार्थग्रहणव्यापारलक्षणोपयोगरूपं सदज्ञाननिवृत्त्यादिरूपतया परिणमत इतीत्थं कथंचिदेव भेदे प्रमाणफलयोः कार्यकारणभावो घटते । कारकत्वाख्यो हेतुश्च प्रदीपात्मना व्यभिचारी । प्रदीपः स्वात्मनात्मानं प्रकाशयतीत्यत्र प्रदीपात्मनः कारकत्वेऽपि प्रकाशरूपाभिन्नफलकारित्वप्रतीतेः । न खलु प्रदीपात्मनः प्रकाशो भिन्नस्तस्याप्रकाशत्वप्रसङ्गात्, पटवत् । प्रदीपात्मनो भिन्नस्यापि प्रकाशस्य प्रदीपात्मनि समवायात्प्रकाशतासिद्धिरिति चेत् । मैवम् । अप्रदीपात्मन्यपि घटादौ तत्समवायानुपङ्गात् । प्रत्यासत्तिविशेषात्प्रकाशस्य प्रदीपात्मन्येव समवायो नान्यत्रेति चेत् । स कोऽन्योऽन्यत्र कथंचित्तादात्म्यात् । दृष्टान्तस्य च साध्यविकलत्वं कुठारादेरप्येकान्तव्यतिरिक्तक्रियाकारित्वासिद्धेः । कुठारादिना हि काष्ठादेश्छिदा निरूप्यमाणा छेद्यप्रदेशानुप्रवेशलक्षणैवावतिष्ठते । स चानुप्रवेशः कुठारादेरात्मगतधर्मोऽनर्थान्तरम् । एवं करणत्वानुमानेऽपि पक्षहेतुदृष्टान्तदोषा वाच्याः । यच्चोक्तम्—'न ह्येकस्यैकदा स्वात्मापेक्षया करणरूपता फलरूपता च श्रेयसी' इत्यादि । तदप्यसत्यम् । एकस्याप्यपेक्षाभेदादनेककारकरूपतोपपत्तेर्यथा वृक्षस्तिष्ठति वृक्षेण कृतं वृक्षादपेतं वृक्षं पश्येत्यादौ । एवं प्रमाणस्यैकस्यापि साधकतमत्वापेक्षयाऽज्ञाननिवृत्त्यादिस्वभावापेक्षया च प्रमाणरूपता फलरूपता च न विरोधमध्यास्ते । ननु चाज्ञान-

निवृत्तिर्ज्ञानमेव न च तस्यैव तस्यैव कार्यं युक्तं विरोधादतः कथमस्याः प्रमाणफलत्वं स्यादिति चेत् । तदपि स्याद्वादन्यायानभिज्ञभाषितम् । अज्ञाननिवृत्तेः स्वार्थव्यवसायपरिणतिलक्षणाया स्वार्थग्रहणव्यापारलक्षणोपयोगरूपप्रमाणेन कार्यत्वाविरोधात्, साधकतमासाधकतमेतरांशात्, कथञ्चिद्भेदप्रतिपादनात् । किं च धर्मरूपता धर्मिरूपता वा प्रतिज्ञायामज्ञाननिवृत्तिर्ज्ञानमेवेति प्रतिज्ञायेत । यदि धर्मरूपता तदज्ञाननिवृत्तेर्धर्मत्वमभावयोः स्वधर्मिणो ज्ञानात्कथञ्चिद्भेदो दुष्प्रतिषेधः । न हि सर्वथाप्यभेदे धर्मधर्मिभावः सङ्गच्छते । तस्मादज्ञाननिवृत्तिर्ज्ञानमेवेति प्रतिज्ञा क्षीणा । अथ धर्मिरूपता तत्रापि किमेतदज्ञाननिवृत्तेर्धर्मित्वं परिकल्प्येत ज्ञानापेक्षया धर्मान्तरापेक्षया वा । प्रथमपक्षे तन्निवृत्तेर्धर्मित्वम् । ज्ञानस्य तु धर्मत्वमिति विपर्ययमायातम् । न चैतद्युक्तम् । तस्याज्ञानाश्रितत्वात् । यदाश्रितं न तस्य स्वाश्रयापेक्षया धर्मित्वं यथा रूपादेः । ज्ञानाश्रिता चाज्ञाननिवृत्तिरिति । अथ धर्मान्तरापेक्षया तदाज्ञानापेक्षया किमस्याः स्यात् । धर्मरूपता चेत्, कथमेवं ज्ञानमेवाज्ञाननिवृत्तिरित्यभेदाभिधानं युज्यते । ज्ञानस्याज्ञाननिवृत्तिधर्म इति भेदाभिधानस्योपपन्नत्वात् । तथा च ज्ञानमेवाज्ञाननिवृत्तिरिति दुर्घटम् । यदप्यभिहितं विशेषणज्ञानं फलमित्यादि तदप्यपेशलम् । विशेषणविशेष्ययोर्विभिन्नज्ञानालम्बनत्वाभावात् । एकमेव हि ज्ञानं तदालम्बनम् । न हि शुक्लः पटो दण्डी पुरुष इत्यादौ विशेषणविशेष्ययोर्ज्ञानभेदो न श्रूयते । न च विषयभेदादस्य ज्ञानभेदः पञ्चाङ्गुलादेर्विषयस्य समानेन्द्रियग्राह्यस्य योग्यदेशावस्थितस्यानेकस्याप्येकज्ञानालम्बनत्वात् । कथमन्यथा सन्दिग्धधर्म कस्यचिदेकज्ञानालम्बनमनेकत्वात्, पञ्चाङ्गुलवत्, इत्यत्र प्रयोगे पञ्चाङ्गुलस्य दृष्टान्तत्वेनोपादानं स्यात् । कथं चावयविनः सिद्धिरूर्ध्वाधोमध्यभागानामप्येकज्ञानालम्बनत्वाभावप्रसङ्गतस्तद्ग्राहिज्ञानस्य सिद्ध्यनुपपत्तेः । यदपि विशेषणाक्षसन्निकर्षादिलक्षण-

विभिन्ना सामग्री प्रतिपादिता साप्यनुपपन्ना । सन्निकर्षस्य प्रागेव प्रतिक्षिप्तत्वात् । सति च कार्यभेदे कारणभेदः कल्पयितुं युक्तः । न चात्र तद्भेदोऽस्ति विशेषणविशेष्यालम्बनस्यैकस्यैव ज्ञानस्य समर्थितत्वादिति ।

भिन्नाभिन्नं तदिदमियता विस्तरेण प्रसिद्धं
प्रत्यक्षादेरधिगमगणात्तत्फलं सर्वमेव ।
यस्त्वेकान्तः कुमतमतिभिस्तीर्थिकैः कीर्तितोऽसौ
दोपव्याघ्रग्रसनवशतो न स्वरूपं विभर्ति ॥७०२॥२०॥

कश्चिदाह—“ कल्पनाशिल्पिनिर्मिता सर्वापि प्रमाणफलहृतिरिति विफल एवायं प्रमाणफलालम्बनः स्याद्वादिनां भेदाभेदप्रतिष्ठोपक्रमः’ इति । तन्मतमिदानीमपाकर्तुमाह—

**संवृत्त्या प्रमाणफलता व्यवहार इत्यप्रामाणिकप्रलापः, परमार्थतः स्वाभिमतसिद्धिविरोधादिति ॥२१॥**

संवृत्त्याऽविचारितरम्यप्रतीत्या कल्पनापराभिधानया, इयमत्रोपनिपत् । सांवृतप्रमाणफलव्यवहारवादिनापि सांवृतत्वं प्रमाणफलयोः परमार्थवृत्त्या तावदेष्टव्यम् । तच्चासौ प्रमाणादभिमन्यतेऽप्रमाणाद्वा । न तावदप्रमाणात्तस्याकिंचित्करत्वात् । अथ प्रमाणात्तन्न । यतः सावृतत्वग्राहक प्रमाणं सांवृतमसावृतं वा स्यात् । यदि सावृतं, कथं तस्मादपारमार्थिकस्य सकलप्रमाणफलव्यवहारसांवृतस्य सिद्धिः । तथा च पारमार्थिक एव समस्तोऽपि प्रमाणफलव्यवहारः प्राप्त इति । अथ प्रमाणफलसावृतत्वग्राहकं प्रमाणं स्वयमसावृतमिष्यते तर्हि क्षीणा सकलप्रपाणफलव्यवहारसावृतत्वप्रतिज्ञा । अनेनैव व्यभिचारात् । तदेवं सांवृतसकलप्रमाणफलव्यवहारवादिनो व्यक्त एव परमार्थतः स्वाभिमतसिद्धिविरोध इति ॥ २१ ॥

प्रस्तुतमेवार्थं निगमयन्नाह—

**ततः पारमार्थिक एव प्रमाणफलव्यवहारः सकल-पुरुषार्थसिद्धिहेतु. स्वीकर्तव्य इति ॥ २२ ॥**

अयमभिसन्धि —सर्वापि पुरुषार्थसिद्धि प्रमाणनिबन्धनात्। ततस्ता तात्त्विकीमभिलषता तन्मूलभूत प्रमाण तात्त्विकमङ्गीकर्तव्यम्। प्रमाणस्य च तात्त्विकत्वे सिद्धे तत्फलस्य तज्जन्यतया तात्त्विकत्वमयत्नोपनतमिति। तन्नित्थ प्रमाणफलव्यवहारस्य पारमार्थिकत्व प्रसिद्धे सफल एवाय प्रमाणफलयोर्भेदाभेदप्रतिष्ठानारम्भ स्याद्वादपीयूषपानलम्पटानामिति।

क शक्तश्चरम तरीतुमुदधि बाहोर्नलम्नानन
क पाणौ त्रिदिवाधिपक्षितिधर धर्तुं पटीयानिह।
क शेषाहिफणाविभूषणमणीनाप्तुमभ्युद्यत
को वा मानफल कृती जिनमते सम्यक्क्षमो जल्पितुम्। ७०३।२२

एव प्रमाणस्य विस्तरत स्वरूपसख्याविषयफलान्यभिधायेदानीं हेयज्ञाने सति तद्धानादुपादेय सम्यगुपादातु पार्यतेऽतस्तत्स्वरूपाद्याभासमप्याह—

**प्रमाणस्य स्वरूपादिचतुष्टयाद्विपरीत तदाभास-मिति ॥ २३ ॥**

पूर्वप्रतिपादितात्प्रमाणस्य सम्बन्धिन स्वरूपादिचतुष्टयात्स्वरूप सख्या विषयफललक्षणा सकाशाद्विपरीतमपर स्वरूपादिचतुष्टय यत्तत्तदाभास स्वरूपादिचतुष्टयाभास स्वरूपाभास सख्याभास विषयाभास फलाभास चेत्यर्थ ॥ २३ ॥

तद्व्दाभासत इति कृत्वा, तत्र स्वरूपाभास तावदाह—

**अज्ञानात्मकानात्मप्रकाशकस्वमात्रावभासकनिर्विकल्पकसमारोपा. प्रमाणस्य स्वरूपाभासा इति २४**

अज्ञानात्मकं चानात्मप्रकाशकं च स्वमात्रावभासकं च निर्विकल्पकं च समारोपश्चेति सर्वेषां द्वन्द्वः । ते किमित्याह—प्रमाणस्य सम्बन्धिनः स्वरूपाभासाः प्रमाणाभासाः प्रत्येतव्याः ॥ २४ ॥

अत्र यथाक्रमं दृष्टान्तानाह—

**यथा सन्निकर्षाद्यस्वसंविदितपरानवभासकज्ञानदर्शनविपर्ययसंशयानध्यवसाया इति ॥ २५ ॥**

सन्निकर्ष आदिर्यस्य कारकसाकल्यादेः परैः प्रमाणतया प्रतिपन्नस्य स्वाभिप्रेतचक्षुरादिदर्शनचतुष्कस्य[1] च तत्सन्निकर्षादिज्ञानशब्दस्य प्रत्येकं पदद्वयेनाभिसम्बन्धात् । अस्वसंविदितं ज्ञानं नैयायिकाद्युपकल्पितं परानवभासकं बाह्यार्थापलापि परिकल्पितं ज्ञानं दर्शनं सौगतानां चतुर्विधप्रत्यक्षतया संमतं विपर्ययसंशयानध्यवसायाश्चोपवर्णितस्वरूपास्ततः सर्वेषां द्वन्द्वः । तत्र सन्निकर्षादिकमज्ञानात्मकस्य दृष्टान्तः । अस्वसंविदितं ज्ञानमनात्मप्रकाशकस्य परानवभासकं स्वमात्रावभासकस्य दर्शनं निर्विकल्पकस्य विपर्ययादयस्तु समारोपस्येति ॥ २५ ॥

कथमेषां तत्स्वरूपावभासतेत्यत्र हेतुमाह—

**तेभ्यः स्वपरव्यवसायस्यानुपपत्तेरिति ॥ २६ ॥**

न खल्वज्ञानस्वभावं सन्निकर्षादिकं वाऽनात्मप्रकाशकमस्वसंविदितं वा स्वमात्रावभासकं परानवभासकं वा सर्वथा निर्णयशून्यं दर्शनं वा विपर्ययादिस्वरूपः समारोपो वा स्वपरयोर्निर्णयं कर्तुं पर्याप्नोतीति तेषां प्रमाणस्वरूपाभासत्वमुपपन्नम् । यत्पुनः प्रमाणस्वरूपाभासस्वभावं न भवति तत्स्वपरयोर्निर्णयं कर्तुं पर्याप्तमेव । यथा ज्ञानात्मकं स्वप्रकाशकं परावभासकं सविकल्पकं विपर्ययादिविकलं च प्रमाणमिति । एतच्च सर्वं प्रागेव प्रतिष्ठितमित्यलमिहातिप्रसङ्गेन ॥ २६ ॥

---

1 चक्षुरचक्षुरवधिकेवलेति दर्शनचतुष्टयम् ।

इत्थं सामान्यतः प्रमाणस्वरूपाभासमभिधाय विशेषतस्तदभिधित्सुः सांव्यवहारिकप्रत्यक्षाभासं तावदाह—

**सांव्यवहारिकप्रत्यक्षमिव यदा भासते तत्तदाभासमिति ॥ २७ ॥**

सांव्यवहारिकप्रत्यक्षमिन्द्रियानिन्द्रियनिबन्धनतया द्विप्रकारं प्रागुपवर्णितस्वरूपं प्रतिपत्तव्यम् ॥ २७ ॥

उदाहरणमाह—

**यथाम्बुधरेषु गन्धर्वनगरज्ञानं दुःखे सुखज्ञानं चेति ॥ २८ ॥**

अत्राद्यं निदर्शनमिन्द्रियनिबन्धनाभासस्य द्वितीयं पुनरिन्द्रियनिबन्धनाभासस्य। अवग्रहाभासादयस्तु तद्भेदाः स्वयमेव प्राज्ञैर्विवेचनीयाः ॥ २८ ॥

पारमार्थिकप्रत्यक्षाभासमिदानीमावेदयन्नाह—

**पारमार्थिकप्रत्यक्षमिव यदाभासते तत्तदाभासमिति ॥ २९ ॥**

पारमार्थिकप्रत्यक्षं विकलसकलस्वरूपतया द्विभेदं यथोक्तमवधार्यम् ॥ २९ ॥

निदर्शनमाह—

**यथा शिवाख्यस्य राजर्षेरसङ्ख्यातद्वीपसमुद्रेषु सप्तद्वीपसमुद्रज्ञानमिति ॥ ३० ॥**

शिवाख्यो राजर्षिः स्वसमयप्रसिद्धः, तस्य किल विभङ्गापरपर्यायमवध्याभासं तादृशमेवाविरभूदित्याहुः सैद्धान्ताः। मनःपर्यायकेवलज्ञानयोस्तु विपर्ययः कदाचिन्न सम्भवति। एकस्य संयमविशुद्धि-

---

१ शिवराजर्षिचरितं भ० सू० श० ११ उ० ९ सू० ४१८ तो ज्ञेयम्।

प्रादुर्भूतत्वादन्यस्य समस्तावरणस्य क्षयसमुत्थत्वात् । ततश्च नात्र तदाभासचिन्तावकाशः ॥ ३० ॥

अथ परोक्षाभासं विवक्षुः स्मरणाभासं तावदाह—

**अननुभूते वस्तुनि तदिति ज्ञानं स्मरणाभासमिति ॥ ३१ ॥**

अननुभूते कदाचिदप्यनुपलब्धे ॥ ३१ ॥

उदाहरणमाह—

**अननुभूते मुनिमण्डले तन्मुनिमण्डलमिति यथेति ॥ ३२ ॥**

सुगमम् ॥ ३२ ॥

प्रत्यभिज्ञानाभासमाह—

**तुल्ये पदार्थे स एवायमित्येकस्मिंश्च तेन तुल्य इत्यादिज्ञानं प्रत्यभिज्ञानाभासमिति ॥ ३३ ॥**

प्रत्यभिज्ञान हि तिर्यगूर्ध्वतासामान्यादिगोचरमुपवर्णितं, तत्र तिर्यक्सामान्यालिङ्गिते भावे स एवायमिति ज्ञानम् । ऊर्ध्वतासामान्यस्वभावे चैकस्मिन्द्रव्ये तेन तुल्य इति ज्ञानम् । आदिशब्दादेवंजातीयकमन्यदपि ज्ञानं प्रत्यभिज्ञानाभासमिति ॥ ३३ ॥

तत्रोदाहरणमाह—

**यमलकजातवदिति ॥ ३४ ॥**

एकस्याः स्त्रिय एकदिनोत्पन्नमपत्ययुगल यमलकमिति कीर्त्यते । ततश्च यमलकजातयोर्मध्यादेकत्र द्वितीयेन तुल्योऽयमिति जिज्ञासिते स एवायमिति ज्ञानम् । अपरत्र स एवायमिति बुभुत्सिते तेन तुल्योऽयमिति ज्ञानं च प्रत्यभिज्ञानाभासमित्यर्थः ॥ ३४ ॥

